KĀVYAMĀLĀ 12.

# THE RASAGANGĀDHARA

BY

JAGANNĀTH PAṆḌIT

With the Commentary of Nages'a Bhatt

AND

SARALĀ COMMENTARY

OF

MATHURANĀTH S'ĀSTRĪ

PROFESSOR, MAHARAJA SANSKRIT COLLEGE, JAIPUR

Sixth Edition (Revised)

PUBLISHED BY

SATYABHĀMĀBĀĪ PĀṆḌURAṄG,

FOR THE 'NIRṆAYA SĀGAR' PRESS,

BOMBAY.

1947.

काव्यमाला १२.

महाकविश्रीजगन्नाथपण्डितराजविरचितो
नागेशभट्टकृतटीकया च संहितो

# रसगङ्गाधरः ।

महाराजसंस्कृतकॉलेज-साहित्यमहाध्यापक-साहित्याचार्य-
साहित्यवारिधि-मञ्जुनाथोपाह्व-कविशिरोमणि-
देवर्षिभट्टश्रीमथुरानाथशास्त्रिणा

आमूलचूलं सम्यक्संस्कृत्य
सरलाख्यया टीकया समलंकृत्य च संशोधितः ।

षष्ठं संस्करणम् ।

तच्च

मुम्बय्याम्
सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,
निर्णयसागरमुद्रणयन्त्रालयकृते तत्रैव मुद्रापयित्वा प्रकाशितम् ।

१९४७

श्रीः ।

# प्रारम्भिकं वक्तव्यम् ।

गङ्गाधरो दिविपत्स्विव रसगङ्गाधरोऽयमलङ्कारशास्त्रग्रन्थेष्वद्वितीयः कमपि महिमानमाविष्करोतीति मन्ये नात्र कश्चिदपि विवेकशीलो विद्वान् विवदेत। न्यायमीमांसादिशास्त्रसरणिमनुसरन्ती येयं विवेचनापद्धतिः श्रीमदभिनवगुप्तपादाचार्यैरलङ्कारशास्त्रेऽङ्कुरिता, वाग्देवतापरावतारैः श्रीमम्मटभट्टैः कन्दलिता, श्रीमदप्पय्यदीक्षितप्रभृतिभिः पुष्पिता, सेयं पण्डितराजेतियथार्थबिरुदेन श्रीजगन्नाथत्रिशूलिना[1] फलवत्तामापादितेति नास्त्यत्र संशयावसरः ।

'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले—
तर्के वा मयि संविधातरि समं लीलायते भारती'

इति तत्रभवतः कवितार्किकशिरोमणेः श्रीहर्षस्य गर्वोक्तिः पण्डितराजेनाप्यक्षरशः कृतार्थतां नीता । अयं तु विशेषः—श्रीहर्षस्य काव्यानामिव विवेचनावचसामपि ग्रन्थग्रन्थिभेदो विदुषामपि दुष्करप्रायः, पण्डितराजस्य तूभयत्रापि प्रसन्नगम्भीरा सरस्वती सुरस्रोतस्विनीमनुक्षणमनुस्मारयति । नाप्ययं महोदारो मम्मटभट्ट इव संक्षिप्तवाक्, न वा विश्वनाथ इव विवेचनादरिद्राणां दर्पणदर्शकः, न च दीक्षितस्येवैकदेशितास्य वचःसु । सर्वशास्त्रसारः साहित्यमिति स्फुटमुपदर्शयतानेन रसनिरूपणे दार्शनिकाः सिद्धान्ता यथा प्रौढ्या विवेचिताः, तथैवालङ्कारनिरूपणे शब्दखण्डविचारा अपि कणेहत्य प्रतिपादिताः । मम्मटस्याभिमतं सर्वथा निर्दोषं काव्यमपि च यद्युपलभ्यते, तर्हि पण्डितराजस्य कृतिष्वेवेत्यपि सम्यगनुभूतम् । मधुररसव्यञ्जकेष्वपि पद्येषु माधुर्यप्रतिकूलतया सर्वैरालङ्कारिकैरभिमतानां वर्णानां नितान्तमभावो यत्र भवेत्, तादृशानि पद्यानि संस्कृतभाषायां सन्ति न वेत्यस्मन्मित्रगोष्ठ्यामेकदा विचारः प्रावर्तत । तदा-क्रियमाणेऽन्वेषणे महाकवीनामपि सुवर्णमस्मिन्निकषे न किट्टकालिमादिशून्यमवातरत्, पण्डितराजस्य तु सन्ति तथाविधानि पद्यानि येषां रेखाऽत्रापि न मनागपि मलिनायते । अलङ्कारशास्त्रस्य मार्मिको विद्वान् यदि कविर्भवेत्, कीदृशः स भवेदिति पण्डितराजनिदर्शनेनैवानुमातुं शक्यते । अस्मद्गुरुचरणैर्भारततिनृत्तिसारे प्रतिपादितम्—यत् पण्डित-

---

१ यत्तु कैश्चित् त्रिशूली जगन्नाथोऽपर एव, पण्डितराजस्तु न त्रिशूलीति समूहितम्, न तदुचितम् । आस्तां कश्चिदपरोऽपि त्रिशूली जगन्नाथः, परं पण्डितराजोऽपि त्रिशूलीत्युपनाम दधारेति साहित्याचार्यश्रीपुरुषोत्तमचतुर्वेदमहाशयेन स्वीयहिन्दीरसगङ्गाधरभूमिकायां दृढं प्रमाणमवलम्ब्य सुनिर्णीतम् ।

राजादनन्तरं न तथाविधः संस्कृतकविः प्रादुरभूत् । अस्माभिस्तु इदमपि वक्तुं साहसमवलम्ब्यते यदेवंविधोऽलङ्कारशास्त्रविवेचको न ततः प्राङ्, न चानन्तरमुदपद्यत जगतीतले । यद्ययं ग्रन्थो नाभविष्यत्, नूनं साहित्यपदार्थानां मार्मिकः परिचयो नैव पदमलप्स्यतेति नात्र कश्चिदप्युक्तिलेशः ।

यथानेन रसझरी प्रवाहिता, तथैवालंकारा अपि निर्मलीकृत्य कामपि श्रुतिमारोपिताः । रसगङ्गाधरमनधीत्य 'कस्तावद् रसपदार्थः' "कथं तत्र गुणसमावेशः" 'के वा इमे स्थायिव्यभिचारिभावाः' इति यथा स्पष्टा प्रतिपत्तिर्न जायते, पारिभाषिका इवेमे शब्दाः प्रतीयन्ते, परोक्ष इव चैषामर्थो निध्यायते तथैवालङ्कारपदार्थोऽपि न स्पष्टं प्रतिभासते । विवेचकप्रवरैरप्यलंकारसामान्यविशेषलक्षणेषु व्यङ्ग्यभिन्नत्वं निवेश्य कथं भ्रमचक्रमारोपिता जिज्ञासव इति रसगङ्गाधरमधीत्यैव करतलामलकायते ।

आस्ताम्-ग्रन्थाध्ययनेन सर्वमिदं विज्ञायत एव विद्वद्भिः । तत एव चालंकारशास्त्रस्योच्चशिक्षायां सर्वत्रैव ग्रन्थरत्नस्यास्य परमः समादरः । परमेवंविधस्य ग्रन्थस्य मुद्रणाशुद्धिबाहुल्यं चन्द्रस्य कलङ्क इव, पारावारस्य क्षारतेव, तरुणीपुष्पस्य कण्टकित्वमिव चात्यर्थमुद्वेजकमासीत् सहृदयानाम् । 'भारतीया विद्वांसः प्राथमिकमुद्रितपत्र( प्रूफ )शोधने न पटवो भवन्ति' इति युरोपीयैर्विद्वद्भिरारोप्यमाणः कलङ्कः क्वचित् क्वचिदत्यर्थं स्फुटीभवति, यत्र त्वरापरवशानां यन्त्रालयाध्यक्षाणामनुवर्तनमसहमाना महान्तो विद्वांसः शोधकत्वेन स्वीयं नाम तु निर्दिशन्ति, परं कार्यं कस्यचिदनतिप्रौढस्य शिष्यस्य भृत्या स्वीकृतस्य वा शिरसि निक्षिपन्ति ।

शुद्धसंस्करणप्रकाशने निर्णयसागरः प्राप्तयशस्कः, परं रसगङ्गाधरस्य तु तस्मिन् यन्त्रालये मुद्रितस्यापि विचित्रैवाभवद्दशा । काश्यामपि मर्मज्ञानां महापण्डितानां संशोधकत्वमुद्घोष्य मुद्रितोऽयम्, परं तत्राप्यशुद्धिपरिमार्जनस्य तु का कथा, अशुद्धिबाहुल्यमेव दुर्भाग्यादनेन लब्धम् । क्वचित् सर्वथा विपरीतार्थबोधकाः पाठा वैचित्रीमुद्भावयन्ति स्म-क्वचित्पाठनिर्धारणमेवातिदुःशकमासीत् । विरामचिह्नवाक्यभेदादिभिश्चापरैव विशृङ्खला समुद्भाविता । दिङ्मात्रमुदाह्रियते—

## निर्णयसागरस्य पूर्वसंस्करणे—

पृष्ठ १४-'एकत्रानैकान्तिकत्वमस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वाद् व्यक्तिप्रतिकूलत्वाच्च' । उचितं तु 'एकत्रानैकान्तिकत्वस्येव ..............अनुमितिप्रतिकूलत्वाद् व्यक्त्यप्रतिकूलत्वाच्च' इति । दृश्यतां मनाग् विद्वद्भिः-'दिवसस्य रात्रिरेव' जाता न वा ?

पृष्ठ १५०-'लक्ष्यतया च प्रस्तुता प्रतिपादकत्वस्य प्रतिपत्तिहेतुत्वरूपस्य' अत्र 'लक्ष्यतया च प्रस्तुतप्रतिपादकत्वस्य' इत्याद्युचितम् ।

पृष्ठ १४६–'मुख्यार्थान्वयानुपपत्तेः । तत्रत्वे तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यादि । उचितं तु 'मुख्यार्थान्वयानुपपत्तेस्तत्रत्वे तु 'काकेभ्यो' इत्यादि ।

तत्रैवाग्रे 'तत्र निरूढलक्षणाया अनुकूलप्रतिकूलानुलोमप्रतिलोमादय उदाहरणम् । नीलादयश्च धर्मस्य । "अयमनुकूलः" इत्यादौ' अत्र धर्मस्येति पदं कुत्रान्वेतीति जगदीश्वर एव विजानीयात् । वस्तुतस्तु "तत्र निरूढलक्षणाया अनुकूल ....................उदाहरणं नीलादयश्च । 'धर्मस्यायमनुकूलः' इत्यादौ"–एवमुचितं स्यात् ।

पृष्ठ १५९–'इत्यादौ धर्मान्तरस्यापि प्रतिभानादसुन्दरत्वाच्च' । अत्र–धर्मान्तरस्याप्रतिभानादसुन्दरत्वाच्च' । इत्युचितम् ।

पृष्ठ २०१–'तृतीयसदृशव्यवच्छेदापत्तेः' अत्र 'तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः' इत्युचितम् । १०६ पृष्ठे 'सोऽयं निगदितः सर्वोऽपि रत्यादिलक्षणो व्यङ्ग्यप्रपञ्चः' अत्र न वाक्यसमाप्तिरेव, किन्तु प्रकरणसमाप्तिरपि कृता । परं विचार्यमाणेऽत्र वाक्यसमाप्तिरपि नास्ति, 'स्फुटे प्रकरणे झगिति प्रतीतेषु' इत्यादिना सहास्यैकवाक्यताया एव प्रतिपद्यमानत्वात् ।

एवम् १२६ पृ. आरम्भे–'तदा प्रायशो लिङ्गभेद एव । एतेन सर्वथैव ततः स्वतन्त्र इति बोध्यम्' । अस्य पाठस्य कोऽप्यर्थं प्रतिपत्तुमसमर्थः स्यात् । उचितं तु 'तदा प्रायशो लिङ्गभेदा एव एते । न तु सर्वथैव ततः स्वतन्त्रा इति बोध्यम्" अवगते शुद्धपाठे नात्र किमपि काठिन्यम् ।

पृष्ठ १८८–'धात्वर्थनिवृत्त्यादेर्व्यभिचारः' इति सर्वथा दुरवगमः पाठः, 'धात्वर्थनिष्ठत्यादेर्व्यभिचारः' इति मुख्ये पाठे तु सर्वथा सुलभो ग्रन्थः ।

पृष्ठ ३१३–'तेनैवानुपूर्वी । अस्य च निगरणे' । उचितं तु 'तेनैवानुपूर्व्यस्य निगरणे' । मन्ये संशोधकेन विच्छिद्य सरलत्वमापादयता वञ्चिताः सरलबुद्धयः । कियद्वोदाहरामः–संख्यातिगा अशुद्धयो विदुषोऽपि भ्रमिचक्रमारोपयन्ति ।

काशीमुद्रितेऽपि—

पृष्ठ ४९१–'न विषयभिन्नत्वेन' इत्यस्य स्थाने 'विषयिभिन्नत्वेन' इति । 'विषयभेदः' इत्यस्य स्थाने 'विषयभेदो' भासते ।

पृष्ठ ४९२–'इदन्त्वादेः' इत्यस्य स्थाने 'इन्दुत्वादेः' । [ अतिशयोक्तिस्थलमियदशुद्धं यच्छोधनमकृत्वा ग्रन्थसंगतिरसंभवप्रायैव ]

'विषयतावच्छेदकाऽनवगाहिनि' इत्यस्य स्थाने–'विषयतावच्छेदकावगाहिनि- इति ( पृष्ठ ४२४ ) ।

'सतिसप्तमी नानुरूपा' इत्यस्य स्थाने 'इति सप्तमी नानुरूपा' । नागेशटीकायामपि 'सत्सप्तमीत्यर्थः' इत्यस्य स्थाने 'इति सप्तमीत्यर्थः' इति ( पृष्ठ ५३१ )

'अथ लुब्धकधीवर०' इत्यस्य स्थाने आद्ये लुब्धकधीवर० इति । अन्यत्र बहुत्र आवश्यकतायामपि पदपार्थक्यं न कृतम् । किंतु–'ज्ञानादपिशब्दसाचिव्यात्' इति एकपदतायामपि 'ज्ञानादपि शब्दसाचिव्यात्' इति पृथक् पृथक् पदद्वयं स्थापितं येन पण्डितस्यापि ग्रन्थभ्रंशो भवेत् । इत्यादि । उदाहरणमात्रमेतद्, ग्रन्थपाठादेवाशुद्धिबाहुल्यं यथावदवभासेत विदुषाम् ।

सत्यप्यशुद्धिबाहुल्ये यदि ग्रन्थाक्षरसमुद्भासिनी सुस्पष्टा काचन टीका भवेत्, तर्हि न दुष्करमशुद्धिशोधनम् । इह तु महानयं खेदः, यदेवंविधस्य गम्भीरतमस्यास्य ग्रन्थस्य टीकापि नैकाप्युपलभ्यते सर्वाङ्गपूर्णा । काव्यप्रकाशव्याख्याने यदा व्याख्यातॄणां संप्लव ( बाढ ) एव लक्ष्यते—तदा रसगङ्गाधरव्याख्याने नैकस्यापि लेखनी फुरफुरायितेति महदाश्चर्यम् ।

नागेशभट्टस्य तूपलभ्यमानं यत्र क्वचन व्याख्यानं टिप्पणपदेनाभिलप्यम्–टीकापदेन वेति संशयास्पदमेव । तत्रापि स महानुभावः स्वप्रकृतिमनुसरन् ग्रन्थप्रतिक्षेपे यथा बद्धपरिकरस्तथा न ग्रन्थलापने । नास्ति च साहित्यविषयाणां मार्मिकता नागेशभाषितार्थविचक्षणस्य नागेशस्येति–ग्रन्थसम्पादकेन भट्टमहाशयेनैतत् स्पष्टीकृतम् । तदित्थं ग्रन्थरत्नस्यास्य प्रभा मलिनवस्त्रनिबद्धस्य रत्नस्येव नाखिलजननयनानन्दकरी समभूत् ।

पण्डितराजस्य जीवनकाले तत्प्रतिभाप्रसारे जयपुरराष्ट्रमेव हेतुतामासादितवदित्यस्ति किंवदन्ती [1] । तथैवेदानीमप्यशुद्ध्यापत्पतितस्य पण्डितराजयशसः समुद्धारे जयपुरेणैव पराक्रान्तम् । प्रथमं–साहित्याचार्यश्रीपुरुषोत्तमशास्त्रिणा ( इदानीमजयमेरुस्थ 'मेयो कॉलेज' धर्मशिक्षकेण ) भाषानुवादं प्रकाश्य ग्रन्थग्रन्थिभेदनस्याध्वा विशदीकृतः । परं तत्र पुस्तके मूलपाठाप्रदानात् प्रतिपदमनुवादाभावाच्च सर्वविधाधिकारिणां मूलपाठशोधनं न सौकर्यमवागाहत । तत एव तामेतामनुपपत्तिं सर्वथा परिहर्तुं जयपुरमहाराजसंस्कृतकॉलेजस्य साहित्यशास्त्रप्रधानाध्यापकः साहित्या-

१ 'न सन्तीदानीं क्षत्रियाः, परशुरामेण एकविंशतिवारं निःशेषितत्वात्', 'नास्ति संस्कृतभारती सर्वादिभूता, अपि तु अरबीभाषातः सा समुत्पन्ना इति दिल्लीन्द्रस्य ( शाहजहांपातशाहस्य ) परिषदि प्रश्नद्वयं प्राचलत् । तत्समाधित्सुरामेराधिपतिः ( इदानीं यद्राज्यं जयपुरराज्यमुच्यते ) प्रथमः श्रीजयसिंहः ( मिरजाराजेत्युपपदः ) काश्यां विद्वांसमन्विष्यन् जगन्नाथमाससाद । तमेनं प्रतिभाशालिनमभिज्ञायानीतवात् । तस्मिन्नेवावसरे जगन्नाथेनागरानगरेऽप्यरबीभाषाशिक्षार्थं कियन्तंचित्कालमुषितम् । आमेरप्रान्तेऽपि च महाराजेन सह कियन्तंचित्कालं स्थितः । तदनु श्रीजयसिंहमहाराज एव जगन्नाथपण्डितं दिल्लीन्द्रस्य सभायां नीतवान् । तत्रानेन पूर्वोक्तं वादद्वयं सम्यक् प्रतिक्षिप्तम् । निराकृताश्च यवनपण्डिताः । तत एव पातशाहस्य कृपाभाजनतां पण्डितराजपदं चासाद्यायं दिल्लीनगरे स्थित इति प्राचीनपण्डितेभ्यः श्रूयते । श्रीपुरुषोत्तमसाहित्याचार्यमहाशयेन हिन्दीरसगङ्गाधरभूमिकायामियं प्रसिद्धिर्विस्तरेण निरूपिता ।

चार्यश्रीमथुरानाथभट्टमहाशयः ससन्नाहं प्रवृत्तः । महाभागेनानेन सुबहु परिश्रम्य पाठशोधनं तथा विहितम्, यदवलोक्य सहृदयाः प्रसीदेयुरिति दृढो मे विश्वासः । कियत्कष्टं महत्यस्मिन्कर्मण्यनेन सोढमित्यंशतोऽहमस्मि साक्षी । सहृदयाश्चानुमानेनैवावगच्छेयुः । एवंविधेषु जटिलेषु विषयेषु निरवलम्बं प्रवर्तमानस्य स्वतन्त्रलेखापेक्षयापि ग्रन्थकृदभिमताक्षरोहः कठिनो भवति–इति नैतत्परोक्षमेतस्मिन्नङ्गने कदाचिदवतीर्णानाम् । तत्रानेन महाशयेन सर्वथा साफल्यमासादितमिति ग्रन्थं पर्यालोच्य प्राचीनसंस्करणेन तुलनां च कृत्वा विद्वांस एव साक्षिणः स्युः । नैतावदेवात्र भट्टमहोदयेन विहितम्, अपि तु 'सरला' टीकाप्यत्र निबद्धा ।

सेयं सरला जटिलमपि ग्रन्थं विद्यार्थिनामवबोधाय सरलीकर्तुं चेष्टते । लेखे मा भूद्विस्तर इति पुस्तकोद्घाटने स्वत एवोपस्थितं निदर्शनमिदमुपस्थापयामि–पृष्ठ २५२ "अरविन्दवत्सौन्दर्यमस्येत्यत्रारविन्दशब्दस्यारविन्दसौन्दर्यलाक्षणिकतयाऽरविन्दसौन्दर्यनिरूपितसादृश्याधिकरणमेतत्संबन्धिसौन्दर्यमिति मुखारविन्दसौन्दर्ययोः सादृश्यबोधे शाब्दे, तयोरभेदाध्यवसायादभिन्नधर्ममूला पश्चान्मुखारविन्दयोरपि सादृश्यधीः" [इति मूलग्रन्थः] । टीका—'अर्थात् अरविन्दपदस्य अरविन्दसौन्दर्यार्थे लक्षणा, ततश्च अरविन्दपदस्य अरविन्दसौन्दर्यमित्यर्थः । सौन्दर्यं च सादृश्यस्य निरूपकम् (प्रयोजकम्) । तथा च अरविन्दसौन्दर्यनिरूपितं (प्रयोज्यम्) यत्सादृश्यं तदधिकरणम् (तदाधारः, आश्रयः) अस्य सौन्दर्यम् अर्थात् एतत्संबन्धि (मुखसंबन्धि) सौन्दर्यमित्याशयः । अस्मिन् शाब्दबोधे सौन्दर्यरूपसाधारणधर्मस्य 'अस्य' इत्युपमेये, 'अरविन्दे' इत्युपमाने च संबन्धः सुस्पष्टं प्रतीयते ।'

क्षोदक्षमेपि प्रवर्तते सरला । अत्र हि–"तत्र तस्येवेति वतेरिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणयाऽरविन्दसादृश्यप्रयोजकमेतत्संबन्धि सौन्दर्यमिति बोधे उपपन्ने अरविन्दपदस्य अरविन्दसौन्दर्यलक्षणा किंफला किंप्रमाणा चेति चिन्त्यमिदम्" इति नागेशो मूलं खण्डयति । सरलाऽत्र साधु समाधत्ते—

"अरविन्दसादृश्यप्रयोजकम् एतत्संबन्धि सौन्दर्यमिति नागेशेनोपपादिते शाब्दबोधे तु उपमेयमात्रे सौन्दर्यस्यान्वयः प्रतीयते । अरविन्दवत्सौन्दर्यमस्येत्युक्तौ स्वारसिकश्च सौन्दर्यस्योभयत्र संबन्धः । एवं सत्यपि 'अरविन्दसौन्दर्यलक्षणा किंफला' इत्यादिना मुधैव खण्डयन् नागेशमहोदयस्तु स्थूलदृश्यैव ।" इति ।

तयोरभेदाध्यवसायादभिन्नधर्ममूलेत्यादिग्रन्थं विशदीकरोति–"तयोः उभयसंबन्धिसौन्दर्ययोः सादृश्यमूलकस्य अभेदस्य निश्चयात् अभिन्नधर्म(सौन्दय)मूला, मुखस्य अरविन्दस्य चापि सादृश्यबुद्धिः सिध्यति ।" इति ।

यद्यपि यादृशी विस्तृता टीका सर्वविधविवेचनापूर्णस्य ग्रन्थस्यास्यापेक्ष्यते, न तथाविधेयम्, संक्षिप्तत्वात् । अथापि ग्रन्थग्रन्थिभेदनेऽवश्यं विदुषां साहाय्यमा-

चरिष्यतीति मे विश्वासः । तदेवंविधविद्वज्जनोपकारकविद्वदुचितकार्यसंपादने लब्ध-साफल्यं पण्डितप्रकाण्डं भट्टमहाशयमहं धन्यवादैरभिनन्दामि । सफलयन्तु चास्य परिश्रमं दृष्टिपातेन विद्वांस इत्याशासे ।

१४।४।३९. गिरिधरशर्मा चतुर्वेदी.

[ महामहोपाध्यायाद्यनेकबिरुदालंकृतो
भारतसुप्रसिद्धः सनातनधर्मनेता वाग्मितावाचस्पतिः
जयपुर'महाराजसंस्कृतकालेजस्य' अध्यक्षः ]

श्रीः

समुल्लसत्सूरिसदुक्तिसौष्ठवा स्फुरत्सुधासारसहोदरोत्सवा।
सुरैः सदा सूरिवरैश्च सेविता सुसंनिधत्तां सरसा सरस्वती॥

# उपोद्घातः

साहित्ये उत्तरोत्तरविकासः

संगीतमथ साहित्यं सरस्वत्याः स्तनद्वयम्।
एकमापातमधुरमन्यदालोचनाऽमृतम्।

साहित्यशास्त्रे यावदेव गभीरतरमालोचनं क्रियते तावदेव तस्मिन्नुत्तरोत्तरं मर्मस्पर्शिता, तत्फलभूते काव्ये चाधिकाधिकमुपादेयता संपद्यते। यावद्भाषासाहित्यानामुद्गमस्रोतस्वत्याः संस्कृतसरस्वत्याः साहित्यमिदमनादिकालादुद्भूतम्, उत्तरोत्तरमन्तस्तलस्पर्शिनां साहित्यकाराणां गभीरतरैर्विचारैश्च क्रमशो मार्मिकतायाश्चरमसीमानमधिगतमिति सर्वैरेवालोचकैरनुमोदितम्। 'रुचिरार्थानां शब्दानामुचितः संनिवेशः काव्यमिदम्' कैः कैः साधनैर्लोकानां हृदयावर्जनाय प्रचुरं प्रभवतीति प्राचीनकालादारभ्याद्यावधि सर्व एव साहित्यकाराः स्वीयनिबन्धेषु यथामति मर्मतो व्यमृशन्। विमर्शोऽयं स्थूलतया त्रिस्वरूपोऽवतिष्ठते—

१—एकः स काल आसीद्यत्र काव्यशरीरभूतयोः शब्दार्थयोः प्रस्फुटमुत्स्फुरन्नलंकाराख्योऽतिशय एव काव्ये चमत्कारकारणं पर्यगण्यत। यतो हि विच्छित्तिविशेषशालिनी पदरचनैव तत्सामयिकैरालंकारिकैः काव्यस्यात्मभूता निरदिश्यत ['रीतिरात्मा काव्यस्य']। भामहोद्भटभट्टादीनां वाच्यादग्रिमस्य व्यङ्ग्यार्थस्य प्रतिभासोऽवश्यमभूत्परं सोऽप्यर्थो वाच्यार्थस्योपस्कारक एव तैः प्रत्यपाद्यतेति अलंकारसंकरे एवासौ संनिविशते। रुद्रटादयः प्राञ्चो रसभावादिकमभिचिन्वन्तोऽपि वाच्यार्थस्यैवोपस्कारकमिमं निरदिशन्। अत एव हि ते रसवत्प्रेयआदीनलंकारानेव तात्पर्यंगणयन्।

२—द्वितीयः स समयोऽभूद्यत्र अभिधालक्षणादिभ्यः परां व्यञ्जनावृत्तिं परिसाधयद्भिर्ध्वनिकारादिभिर्वाच्य-लक्ष्यतो विलक्षणो ध्वनन-व्यञ्जनादिव्यपदेश्येन विशिष्टेन व्यापारेण गम्यो व्यङ्ग्योऽर्थः परेण प्रतिवादसंघर्षेण सुस्फुटं साधितोऽभूत्। विश्रान्तिधामतया सोऽयमेवार्थः प्रधानीभवन् ध्वनिकाव्यमुत्तममापादयति [अस्मिन्मध्यकाले श्रीमान् मम्मटभट्टो वस्तु-अलंकार-रसेति त्रिविधमपि ध्वनिं काव्यस्यात्मत्वेन साधयामास]।

३—एतदनन्तरं स समयः समुपतिष्ठते यत्र हि त्रिविधेष्वपि व्यङ्ग्येषु रस एव काव्यस्यात्मतया संमन्यते। अर्थात् उत्तरोत्तरमन्तस्तलं गवेषयत् साहित्यकाराणां हृदयं चरमविश्रान्तिधाम रसमासाद्यैव सुप्रसीदति।

प्रघट्टकेनानेन स्फुटमवबुध्येरन्मार्मिका यद्विश्वसाहित्यजन्मदातॄणां संस्कृतसाहित्यकाराणां मर्मगवेषिणी दृष्टिरुत्तरोत्तरं तत्त्वालोचनप्रवणैवाऽभूत्, यद्धि सहित्यस्य चरमं ध्येयम्। एतैर्हि महाभागैः सूच्यग्रेपि शैलमवस्थापयन्ती मर्मणोऽपि मर्मस्पर्शिनी तादृशी सूक्ष्मतमा समालोचनपद्धतिरुद्भाविता यस्याः प्रभावेण कवीनां प्रतिभालोकतो बहूँचरुदगच्छत्। सोयमुत्कर्षः शनैः शनैरेतावद्ववृधे येन साधारणलोकानां कवीनां च विचारेषु भूयान् विप्रकर्षः समपद्यत। कवीनामियं साधारणी दृष्टिरभूद्यया हि ते भूतलगतैर्हरितैर्मणिकिरणैर्दिव्यलोकस्थामपि देवगवीं हरितघासग्रासिनीं ददृशुः। मध्यन्दिने मध्यगगनारोहेण शिथिलीभवतो रवितुरगान् राजसौधशिखरगता मध्याह्नमरुता प्रस्फुरन्ती सेयं भवनपताकेव कशारूपेणोत्तेजयतीति ते विस्पष्टं विलोकयामासुः। तेषां हृदयमेतावन्मर्मस्पर्शमभवत् यत् मधुररसलीनतासमये मधुरेतराण्यक्षराणि तेषां कर्णयोः कटुकतामसृजन्।

साहित्यशास्त्राभिधाना सेयमौचित्योपनिषत् [ मार्मिकालोचनपद्धतिः ] पण्डितराजं जगन्नाथमासाद्य विश्राम्यतीव। नेतः परं समग्रस्यापि काव्यसाम्राज्यस्यानुशासको विश्वजनीनः साहित्यनिबन्धो जनिं लेभे। यद्यपि अमरभारत्याः संस्कृतसरस्वत्याः साहित्य[ अलंकारशास्त्र ]विभागो नाद्यावध्यपि नवीनतया नितान्तं प्रहीणस्तथापि रसगङ्गाधरस्य समक्षमुत्कर्षे साम्यसंघर्षेऽपि वा साफल्यमासादयेदीदृशः सर्वमान्यः साहित्यशास्त्रनिबन्धो न पुनराविरभूदिति मनाङ् मान्यमेव भवेत्सर्वैः सर्वथापि।

## रसगङ्गाधरः

मुखबन्धस्य मुखभाग एवोद्धृते पद्ये [ 'संगीतमथ साहित्यम्' अत्र ] साहित्यशास्त्रस्य यद् आलोचनाप्राणत्वमुद्घुष्यते, रसगङ्गाधराख्येस्मिन्निबन्धनायके तदेतत्प्रतिपदं प्रस्फुरति। रसगङ्गाधरस्य यावान् भाग उपलब्धस्तस्मिन् साहित्यशास्त्रस्य ये ये विषयाः प्रतिपादितास्ते ते पूर्वनिबन्धानामपेक्षया अतीव विशदाः, अव्याप्त्यतिव्याप्तिरहितेन सुदृढेन प्रतिपादनप्रकारेण स्थिरीकृताः, पूर्वनिबन्धप्रतिपादितान्विषयान् पूर्वपक्षविधयाऽवलम्ब्य मर्मस्पर्शिना विचारसंरम्भेण परतः सिद्धान्तिताः, यावत्सं-

१—'वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स॥' नैषधीयचरितम्।

भवं सर्वमप्यानुषङ्गिकं परिकरविषयमप्युपादाय साकल्येन समुपबृंहिताः, वादयुगकालिक्या नव्यन्यायानुगतया प्रौढतावच्छेदकतावच्छिन्नया भाषया चोपपादिताः, यद्वशाल्ललितलुलिताकीर्णमिति कृत्वा साहित्यक्षेत्रेऽस्मिन् न यस्य कस्यचिद्बुद्धिः क्षोभमुत्पादयितुं प्रभवेत् । सर्वतोऽतिशायी विशेषश्चायमेवाऽस्य ग्रन्थस्य यदस्मिन् सर्वेष्वपि विषयेषु अन्तस्तलस्पर्शी विमर्शः कृतः । पूर्वाचार्यनिबन्धेषु नाभूत्सुविधाऽप्येतस्मै विषयाय, यतो हि ते प्रायः पद्यनिबद्धाः । अतितमां समर्थोऽपि पद्यनिबन्धा नियतेष्वक्षरेषु सर्वमपि तत्तच्छास्त्रीयमतिशयं साकल्येन समावेशयितुं प्रभवेदिति घोरतरं कठिनमेव किं प्रायः असंभवमिव । काव्यप्रकाशे याः कारिकाः सन्ति ताः स्वयं ग्रन्थकारस्य स्युः, भरतादेरन्यस्य वा, परं किं ताभिः सर्वोऽपि प्रतिपादयितुमिष्टो विषयो निर्भ्रमं बुद्धिगम्यो भवति ? यद्येवं तर्हि संक्षेपवादिनां शिरोमणिः श्रीमान् मम्मटभट्ट एव वृत्तौ किमिति तं विषयं विशदीकर्तुं चेष्टते ?

किञ्च—साहित्यशास्त्रस्य केचिद्विषयाः प्राचीनतमसाहित्यकाराणां समये पूर्णपरिणतिं लभमाना लप्स्यमाना वा आसन्, यथा वामनादीनां समये ध्वनिप्रपञ्चः । एवंविधेषु विषयेषु चूडान्तविचारः कथं वा तेषु निबन्धेषु संभवेत् ? बहवो विषया एवंविधा भवन्ति ये विकासवादस्य सिद्धान्तानुसारं क्रमिकविपरिवर्तनेन बहुविधाः परिस्थितीरनुभूय क्रमश एव परिनिष्ठिता भवन्ति । यथा संस्कृतसाहित्ये काव्यानां वर्णगुम्फननियमस्तत्कालप्रचलितानां भाषाणां सहयोगेनैव निजशैथिल्यं तत्याज [ अयं विषयः परस्ताद्विस्तार्येत ] ।

साहित्ये यावन्त्यत्र काव्यानि जनिं लभन्ते साहित्यशास्त्रे काव्यानां गुणदोषगवेषणा तावदेव मर्माभिमुखी संपद्यते, नानाविधानां काव्योदाहरणानां प्रत्यक्षोपलम्भात् । शब्दसाधुत्वानुशासके व्याकरणशास्त्रेऽपि सेयमेव परिस्थितिरनुसंधेया । अत एव हि सोऽयमनुगम एव तत्र निष्पन्नः–'उत्तरोत्तरं मुनीनां प्रामाण्यम्' इति ।

रसगङ्गाधरे सेयं सर्वविधापि सुविधा स्वतः संघटिता । भरतमारभ्य श्रीमदानन्दवर्धनाचार्याभिनवगुप्तपादादिभिर्यानि किल काव्यस्य जीवभूतानि तत्त्वानि गवेषितानि, वादिप्रतिवादिसंघर्षोत्तरं सिद्धान्ततया निश्चितानि च, तानि पण्डितराजाज्जगन्नाथात्पूर्वभाविनां सर्वेषामेव साहित्यकाराणां निबन्धेषु पूर्णां परिनिष्ठां प्रापुः । अत एव तेषां स्थापनाय प्रयासो नाऽऽवश्यकोऽभूत्पण्डितराजस्य । अपि तु सिद्धेषु तेषु उत्तरोत्तरं मर्मस्पर्शी परिष्कार एव तस्य कृतित्वख्यातयेऽवाशिष्यत । पण्डितराजात्पूर्वकाल एव संस्कृतवाङ्मये तादृशाः सर्वसमर्थाः कवयोऽभवन् येषां काव्यानि सर्वस्मिन् भूमण्डले ख्यातिमवापुः । अत एव नानाविधानामादर्शानां पुरःस्फुरितत्वात्काव्यगुम्फेषु अनालक्षितपूर्वा सूक्ष्मेक्षिका पण्डितराजस्यासाधारणायां बुद्धौ प्रास्फुरत् । एष हि मान्यतमं श्रीहर्षस्य नैषधीयचरितकाव्यमेव मर्मालोचनायाः पात्रीकरोति । सूक्ष्मदर्शिनामपि दृष्टौ निर्दोष एवैकस्मिन् पद्ये स हि

वाक्यार्थस्य सामान्यदोषम् 'असंष्टुलता'ख्यमाह । पण्डितराजस्य गभीरतमे औचित्यविचारे एतत्पद्यनिर्मातरि व्युत्पत्तिशैथिल्यं भासते । श्रूयन्तां पण्डितराजाक्षराणि—'वाक्यार्थो हि गाढतरव्युत्पत्तिनिपुणीकृतान्तःकरणैर्नानाविधपदार्थरचनापरिवृत्तिसमर्थैरेव कविभी रचितः कामपि कमनीयतामाधत्ते, नेतरः । तथा हि—

'उपासनामेत्य पितुः स रज्यते दिने दिने साऽवसरेषु बन्दिनाम् ।
पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाऽजनि शृण्वती नलम् ॥'

अस्मिन्नैषधीयपद्ये द्वयोः क्रिययोरुद्देश्यविधेयभावेन गुणप्रधानभावमकुर्वता बन्दिनः षष्ठ्यन्ततया सप्तम्यन्ततया च द्विः परामृशता कविना वाक्यार्थः क्रमेलकवदसंष्टुलतां प्रापितः (पृ. ४५१)

न केवलमालोचनाकरण एव पण्डितः पण्डितराजः । स हि पद्येऽस्मिन् संशोधनं प्रदर्श्य स्वस्यासाधारणम् 'गाढतरव्युत्पत्तिनिपुणीकृतान्तःकरणत्वं पदार्थरचनापरिवृत्तिसमर्थत्वं च' प्रत्यक्षतः प्रकटयति । कथयत्ययम्—'यदि स एव वाक्यार्थः प्रकारान्तरेण निर्मीयते—

'उपासनार्थं पितुरागतापि सा निविष्टचित्ता वचनेषु बन्दिनाम् ।
प्रशंसतां द्वारि महीपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥'

इति, तदा ललनाङ्गसंनिवेश इव कीदृशीं कमनीयतामावहेदिति सहृदयैराकलनीयम् ।'

द्वयोरपि कवयित्रोः पदरचनासु किमन्तरं संघटितमिति स्पष्टबोधनाय तत्स्थानीयां मम टीकामविकलमुद्धरामि—'निविष्टचित्ता० इत्यादिपाठे–पितुरुपासनार्थमागतानां द्वारि राजसामान्यं प्रशंसतां बन्दितां वचस्सु निविष्टचित्तां (दमयन्तीम्) उद्दिश्य विनिद्ररोमत्वं वर्णितमिति द्वयोः क्रिययोरुद्देश्यविधेयतया गुणप्रधानभावः संपन्न इति वाक्यार्थस्य न विसंष्टुलता । नैषधीयपाठे तु 'सा बन्दिनामवसरेषु रज्यते' 'नलं शृण्वती विनिद्ररोमाऽजनि' इति द्वयोर्वाक्ययोः स्वतन्त्रत्वान्न गौणमुख्यभाव इत्याशयः ।'

## विषयप्रतिपादनशैली

रसगङ्गाधरस्य विषयप्रतिपादनशैली अतितमां स्फीता । यत्किल वक्तव्यं तत्तादृशैरन्यूनातिरिक्तैः प्रौढैर्मधुरैश्चाक्षरैरुपपादयति यत्र न स्वल्पोपि संदेहस्य अर्थान्तरकल्पनस्य वाऽवकाशः । पद्यबद्धेषु प्रमेयलक्षणेषु यथा स्वप्रतिपाद्योपपादनाय विवशतया संकोचः कर्तव्यो भवति, अन्वयद्वारा अर्थान्तरकल्पनस्याप्यवकाशो यथा मुक्तद्वारो भवति, न तथाऽत्र ग्रन्थे । संक्षेपेच्छया वा, प्रमेयप्रतिपादनप्रकारस्य प्रौढताप्रकटनाय वा, दैवदत्तात् अस्पष्टभाषितायाः स्वभावाद्वा, प्रामाणिकतया

१ अत एव हि मया प्रोक्तमन्ते—'यत्र प्रसङ्गपतितान्यपि मान्यकाव्यान्यालोचनानिकषमाप्य भवन्त्यसन्ति । न ज्ञायते यदिह दोषनिरूपणे तु काः काः कवीन्द्रकृतयोऽक्षुतयोऽभविष्यन् ॥'

प्रणम्येष्वपि प्राचीनग्रन्थेषु विषयप्रतिपादनशैल्यां हन्त हन्त खेदजनिकैवाऽस्पष्टता प्राप्यते । लेखनाय पत्राणां दौर्लभ्यादिव ते ग्रन्थलेखे ह्यत्संक्षेपमिच्छन्ति यत् अतिसमर्थत्वेपि तेषां वक्तव्यविषयो भृशमस्पष्टः परिणमति । कारिकायां कतिपयानामेवाक्षराणां संक्षेपरक्षणाय वृत्तौ तैरेव भूयस्यः पङ्क्तयो लेखितव्या भवन्ति. वराकैष्टीकाकारैस्तु कतिपयानि पत्राण्येव मषीभिरुपरज्यन्ते, परं तथापि स विषयः प्रत्यूषान्धकारे दृष्टः पदार्थ इव न तथा स्पष्टो भवति । प्रत्युत टीकाकाराणां स्वस्वमत्यनुसारं ग्रन्थलापनभेदेन परस्परं विसंवादस्य मतभेदस्य च तथा सृष्टिर्भवति येन मूलग्रन्थस्य वास्तवं तत्त्वं सपत्नीमध्यपतितो बहुपत्नीकः प्रेयानिव दैवरक्षणीयतामेवापद्यते ।

## दृष्टान्ताय काव्यप्रकाशशैली

आलोचनाक्षेत्रे पूज्यपुरुषाणामवतारणं यदि न महदतिलंघनपातकेषु परिगण्यते तर्हि श्रीमन्मम्मटभट्टस्य लेखो भूयस्स्वंशेष्वस्योदाहरणं स्यात् । काव्यप्रकाशस्य स्थाने स्थाने मूलकर्तुस्तथाऽक्षराणि सन्ति यानि वृत्तौ विशदीकरणेऽपि, टीकासु बहुधा व्याख्यानेपि, न वास्तवं स्वारस्यं निर्भ्रममङ्कयन्ति हृदयपटे । प्रत्युत नानाविधानां मतानां नानाविधा मार्गा इतस्ततो भिद्यमाना इव दृश्यन्ते । पूर्वत एव जानन्तो विवेचकमहाभागा एकद्वाभ्यामेव निदर्शनाभ्यां स्पष्टं प्रतिपद्येरन् । लक्षणालक्षणमाह—'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥'

मुख्यार्थस्य बाधे सति, तद्योगे (तस्य मुख्यार्थस्य योगे), रूढेः (प्रसिद्धेः) प्रयोजनात् (शैत्यपावनत्वादिरूपात्फलात्) वा, शब्देन कर्त्रा, (उपरित आक्षिप्यते इदम्) यत् अन्योऽर्थो लक्ष्यते सा लक्षणा । अत्र 'यत्' इत्यस्पष्टार्थपदनिवेशेनैव विवादबीजवापो जातः । एके कथयन्ति 'यत्' इति लक्षणरूपक्रियाविशेषणम् 'अन्योऽर्थो यत् लक्ष्यते यत् प्रतिपाद्यते सा लक्षणा' । लक्ष्यते इति णिजन्तादाख्यातम् । णिजर्थो हेतोः (प्रयोजककर्तुः) व्यापारः । हेतुः (प्रयोजककर्ता) च शब्दः । तथा च अन्यार्थप्रतिपत्तिहेतुः शब्दव्यापारो लक्षणा ।

अपरे कथयन्ति—'यत्' इति 'यया' इत्यर्थे लुप्तकरणतृतीयान्तमव्ययम् । यया वृत्त्या अन्योऽर्थः (मुख्यार्थाद् भिन्नोऽर्थः लक्ष्यः तटादिरूपः) लक्ष्यते प्रतिपाद्यते सा (वृत्तिः) लक्षणा, इति । एते साधयन्ति यदियं ग्रन्थकारस्यास्य शैल्येव, अन्यत्राप्येवमेव 'यत्' इति प्रयुक्तमनेन । क्वचित् 'यस्मात्' इत्यर्थे यथा ३४ तमकारिकायाम् ''यत्सोऽर्थान्तरयुक् तथा'' इति । क्वचित् 'यत्' इत्यव्ययं प्रयुयोज, न विशेषणम् । यथा १६० तमकारिकायाम् 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति ।

अस्याऽस्पष्टलेखस्यायं परिणामोऽभवद् यदेका टीका प्रतिपक्षिसंक्षोभाय भुजदण्डमास्फोटयति—''यत्त्वत्र यदिति क्रियाविशेषणम् । तथा च यत् लक्ष्यते यत्प्रतिपाद्यते सा प्रतिपत्तिरेव (ज्ञानमेव) लक्षणेति कैश्चिद्व्याख्यातम्, तदज्ञान-

विजृम्भितम् । लक्षणाया अभिधाव्यञ्जनयोरिव वृत्तिरूपतया वृत्तिजन्यायाः प्रतिपत्तेर्लक्षणात्वाऽसंभवात्" इत्यादि ।

द्वितीयपक्षवादिनः कथयन्ति यत् 'ज्ञानमेव लक्षणा' इत्येव मम्मटस्य हृदयम् । अत एव 'प्रयोजनेन सहितं लक्षणीयं न युज्यते' इत्यस्य समर्थनाय प्रोक्तम्—'ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्' इति स्वरसतः संगच्छते ।

खेदस्त्वयमेव यत्कारिकाविशदीकरणेच्छया स्वयं निर्मितायां वृत्तावपि ग्रन्थकारस्तदेव संदेहात्मकमाह—'मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा' इति । दृश्यताम्, मुख्योर्थः इति पुमान्, सा लक्षणेति स्त्री । अत्र द्वयोरनयोर्विशेषणीभावस्यापेक्षायामपि विलक्षणं 'यत्' इति तृतीयं क्लीबं निक्षिपन् मम्मटमहाभागः त्रिलिङ्गानां त्रिदोषं तथा ससर्ज येन मूर्तिमती अस्पष्टता जनिं लेभे ।

श्रीमतो मम्मटभट्टस्याक्षराण्येव तथा भवन्ति येषामिदंतया निश्चितोर्थो न केनचिदवबोद्धुं शक्यते । एकस्तत्र यमर्थमवबुध्यते, अपरस्तैरेवाक्षरैरन्यमर्थं समर्थयते—

'मित्रे क्वापि गते, सरोरुहवने बद्धानने ताम्यति,
क्रन्दत्सु भ्रमरेषु, वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥'

इति पद्यमुदाहृत्योच्यते—'इत्यादौ वाच्यमेव, न तु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमा, इति प्रकृताननुगुणोपमा' । ( वामनटीका पृ. ५६७ )

अस्यार्थमेके कुर्वन्ति—'अत्र एतादृशविप्रलम्भावस्थायाम् बिसलता जीवं रोद्धुं जीवनिरोधाय न क्षमा नाऽर्पयितुं योग्या । जीवनिरोधनिमित्तं कण्ठे बिसलतार्पणमनुचितमित्यर्थः । 'विप्रलम्भोत्कर्षे जीवनिर्गमोपाय एवावलम्ब्यते न तु निरोधोपाय इति तेषामाशयः ।

अन्ये कथयन्ति यत्—'अत्र बिसलता जीवं निरोद्धुं न क्षमा न शक्ता', इति प्रकृताननुगुणा उपमा । अयमाशयः—उपमायां हि द्वयोः सादृश्यमनुगुणं भवेत्तदैव सा शोभते । अर्गला मनुष्यादेर्गमनागमनादिकं रोद्धुं शक्नोति । किन्तु बिसलता निर्गच्छन्तं प्राणवायुं न निरोद्धुं शक्ता अतः अर्गलया सह सादृश्यस्य स्वतोऽनुगुणत्वाभावादत्र उपमा नाऽलंकारः, अपितु अर्गलेवेत्युत्प्रेक्षालंकार इति ।

द्वावपि पक्षौ स्वस्वयुक्तिप्रदर्शनाय महता संरम्भेण ग्रन्थविस्तरमापादयतः । इह हि भवेदपि यथाकथंचिन्निर्वाहः—उपमा स्यादुत्प्रेक्षा वा । अलंकारो रसस्य नानुगुणः, अपि तु वाच्यस्यैवानुगुण इति येन केनापि पक्षेण विवक्षितस्यार्थस्य निर्वाहः शक्नोति भवितुम् । परमेवं द्विमुखेन लेखेन परस्परविरुद्धार्थस्य साधनेन विवक्षित एवार्थो यदि कुत्रचिद् भ्रश्येत तर्हि ?

अन्यद् दृश्यताम्—'अभिलाष-विरह-ईर्ष्या-प्रवास-शाप-हेतुकः पञ्चविधो विप्रलम्भः' इत्युक्त्वा तानुदाहरति । तत्र 'प्रेमार्द्राः प्रणयस्पृशः' इत्यादिना अभि-

लाप( पूर्वानुराग )हेतुको विप्रलम्भ उदाहृतः । एतदनन्तरम्—'अन्यत्र व्रजतीति का खलु कथा०' इत्यादिकं पद्यमुदाहृत्य प्रोच्यते—'एषा विरहोत्कण्ठिता' इति (पृ. १२३) । अभिलापविरहेर्ष्यादीनां (धर्माणाम्) उदाहरणस्य यत्र प्रसङ्ग आसीत्तत्र 'एषा विरहोत्कण्ठिता' इति धर्मिण उदाहरणस्याऽकस्मात् कः प्रसङ्गः समापतितः? विरहमात्रस्य प्रसङ्गे उत्कण्ठायाः किमत्र निर्देशेन येन हि 'विरहोत्कण्ठिता' इत्युच्यते तत्रभवता? एवं स्पष्टं बोद्धुर्व्यामोह उदेति ।

तत्र गुरुमहाभागाः परमानुग्रहेण बोधयन्ति यत्—विप्रलम्भभेदेषु विरहः किमिति पृथग् गणनीयः, प्रवासेन तत्सिद्धेः । इति शङ्कायामुच्यते—यद्यनयोरैक्यं स्यात्तर्हि विरहोत्कण्ठिता प्रोषितभर्तृका चेति पार्थक्यं न स्यात् । ननु मास्तु पार्थक्यम् । का हानिरिति तु न शक्यते वक्तुम् । भरतमुनिना स्वाधीनभर्तृकादयः षोडश नायिकाया भेदाः स्वीकृताः । ततश्चानयोर्द्वयोरैक्ये स्वीकृते षोडशभेदेषु न्यूनता स्यादिति शङ्कासमाधाने मनसिकृत्याह—'एषा विरहोत्कण्ठिता' इति । अर्थात् प्रोषितभर्तृकात इयं भिन्ना । अत एव विरहः पृथगेव परिगणनीयो न प्रवासेऽन्तर्भाव्य इति ।

किन्तु—'एषा विरहोत्कण्ठिता' इत्यक्षरैरेव सोयं शङ्कासमाधानप्रपञ्चः कया वा अदृष्टशक्त्या बुद्धिगम्यो भवेत्? भरतमुनिनैव वा विरहिणी प्रोषितपतिका चेति कया उपपत्त्या पृथग्गणिते इति निसर्गतः समुद्भूतं जिज्ञासितं न ग्रन्थकारः स्वैरक्षरैर्बोधयितुमावश्यकं मनुते । 'ग्रन्थकारेण यत्किञ्चिदुच्यताम्, अन्यैस्तु तस्य बलात् संगतिः कर्तव्या' इति मन्ये महतामेव पक्षे शोभाजनकं स्यात् । प्रत्येकसाहित्यनिबन्ध इव अस्मिन्नपि ग्रन्थे महता संदर्भेण संदिग्धत्वं दोषेषु परिगणितमुदाहृतं च । किन्त्वेवंविधेषु बहुषु संदेहस्थलेषु किं प्रतिपद्यतां बोद्धृभिः? कदाचित्कदाचित्त्वेवं बुद्धावाभाति यत्तत्तच्छास्त्राणां नियमा न खलु तद्ग्रन्थप्रणेतृणामाचार्याणां कृते । तत्रभवान्पाणिनिः शब्दसाधुत्वनियमानाह । परं स्वयमेव स्वसूत्रेषु तान्नियमानुपेक्षते—'ह्रस्वनद्यापो नुट्' 'एङ्ह्रस्वात्संबुद्धेः' 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इत्यादिषु द्वयोर्बहूनां च समुच्चये कुतो न द्वि-बहु-वचने, समाहारे वा कुतो न नपुंसकत्वम्? 'बन्धुनि बहुव्रीहौ' इत्यत्र नित्यपुंलिङ्गस्य बन्धुशब्दस्य सप्तम्येकवचने 'बन्धुनि' इति कथं निष्पन्नम्? इत्यादिनियोगावकाशो न तत्र । समाधीयतेपि तत्र तत्र 'छन्दोवत्सूत्राणि' इति ।

'रतिः संभोगशृङ्गाराख्या उत्तमदेवताविषया न वर्णनीया, तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्' इति स्वग्रन्थेऽनुशासदपि प्रकाशकारः—'प्रतीयमानोऽर्थः संबद्धसंबन्धोपि भवती'त्यत्र—

'विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं ।

हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥' (पृ. ३०२)

इत्युदाहरणं स्वयमाह । यस्य हि 'विपरीतरतप्रसक्ता लक्ष्मी रसाकुला सुरताऽऽवे-

शेनाकुला सुरतान्निवर्तितुमक्षमा हरेर्विष्णोः दक्षिणनयनं स्थगयति' इति निरर्गलं व्याख्यानं टीकाकृद्भिः कर्तव्यं भवति । किमेतत् ?

समासोक्तिस्थले अप्रकृतार्थस्य व्यञ्जनया प्रतीतिरिति सर्वेषां प्राचां मतम् । स्वयं प्रकाशकारोऽपि स्वयमेतत्स्वीकरोति, किन्तु 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति लक्षणे, तद्व्याख्यायां च–'श्लिष्टविशेषणमाहात्म्यात्, न तु विशेष्यस्य सामर्थ्यादपि यत् अप्रकृतार्थस्याऽभिधानम् सा समासोक्तिः' । अत्र 'अभिधानम्' इति लेखनं कियदुचितमिति निराग्रहमालोकनीयं मार्मिकैः । मूलकारो यत्किञ्चिदाह । किन्तु वराकैष्टीककारैस्तत्पक्षनिर्वहणं कर्तव्यं भवति—"अभिधानम् अप्रकृतगतव्यवहार-रूपस्यार्थस्य व्यञ्जनया बोधनम् इत्यर्थः ।" अभिधानमिति पदेन व्यञ्जनया बोधन-मित्यर्थं, विना पक्षपोषकैः कश्चिद्बोद्धुं शक्नुयात् ? ( पृ. ७४१ ) ।

## रसगङ्गाधरशैली

रसगङ्गाधरे नैवंविधा क्लिष्टता । तत्र हि यावदपेक्षितानि पदान्युपादाय स्ववक्तव्ये तादृशी दृढता संपाद्यते यत्रैकमपि पदं न संदिग्धम्, नाधिकम्, न न्यूनम्, न परसहायतयाऽर्थबोधकम् । संस्कृतसाहित्ये तदेतद्द्वादयुगमासीत् । अत्र हि नव्यन्यायसंपुटेन तादृशी सुनिबद्धा भाषा संघटिता यत्र न तिलमात्रस्यापि इतस्ततः संभवः । अन्यथा तु श्वासप्रश्वासवत्पदे पदे संनिहितः प्रतिवादी त्वरितमेव निर्दयतया मर्दयेत् । ग्रन्थशीर्षके प्रतिज्ञैव पण्डितराजेन कृता—"मया सर्वानपि पूर्वान्निबन्धानन्तस्तलं विचार्य तादृशेन सुदृढेन मननेन सोयं ग्रन्थो रचितो येन न कोऽप्यत्र दोषं गवेषयितुमवकाशो लभ्येत, प्रत्युत अस्याग्रे पुरातनाः सर्वेऽपि निबन्धा निष्प्रभाः ( दुष्टा इत्यर्थः ) प्रतीयेरन् ।" सोल्लासमाह सः—

'निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः ।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवता-
मलंकारान्सर्वानपि गलितगर्वान् रचयतु ॥'

ग्रन्थस्वरूपजिज्ञासूनां कृते एकमात्रमुदाहरणं पर्याप्तं स्यात् । उपमालंकारस्य स्वतः पूर्वाणि सर्वाण्यपि लक्षणानि आलोचनानिकषे कषितानि पण्डितराजेन—

'उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमदुष्टमव्यङ्ग्यमुपमालंकारः' इति महता दार्ढ्येन घटितमप्पयदीक्षितलक्षणमेवं खण्डितं यत्—'उपमा अर्थालंकारः । अत एव शब्दवाच्यता अपेक्षिता । वर्णनस्य यद्यलंकारत्वं तर्हि स्वयं शब्दरूपं वर्णनं शब्दवाच्यं कथं स्यात् ? अव्यङ्ग्यत्वादिपददानमपि व्यर्थम्, व्यङ्ग्यत्वाऽलंकारत्वयोरविरोधात् । इत्यादि ।'

'स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा ॥' इति विद्यानाथेन ( प्रतापरुद्रीये ) प्रोक्तं लक्षणं निरस्तम्—'यत्र सादृ-

द्वयस्य निषेधे पर्यवसानं भवति तस्मिन्व्यतिरेकालंकारेऽपि तादृशं साम्यमस्त्येव । अतः अतिव्याप्तं लक्षणमिदम् ।'

'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः । हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः ॥' इत्यन्यदपि प्राचीनानां लक्षणं दूषितम्—'हृद्यपददानेनैव विवक्षितार्थलाभे पदान्तरदानं व्यर्थम् ।'

तत्रभवता मम्मटेन काव्यप्रकाशे प्रोक्तं लक्षणम्—'साधर्म्यमुपमाभेदे' इत्यपि न रमणीयम्, पूर्ववद् व्यतिरेकेऽतिव्याप्तिप्रसङ्गात् । किञ्चायं प्रसङ्गः काव्योपस्कारकस्याऽलंकारस्य । अत्र 'साधर्म्यम् उपमा' इति सामान्यलक्षणे उपस्कार्या (व्यङ्ग्या) वाच्या लौकिकी अलौकिकी सर्वाप्युपमा अन्तर्भवति । अतः असमर्पकमिदं लक्षणम् ।'

एवमेव 'भेदाभेदतुल्यत्वे साधर्म्यमुपमा' इति सामान्यतः प्रोक्तम् 'अलंकारसर्वस्व'कारस्य लक्षणमपि निरस्तम्, अत्रापि सर्वविधानामप्युपमानां बोधसंदेहात् ।

इत्थमेव—'प्रसिद्धगुणेनोपमानेन, अप्रसिद्धगुणस्योपमेयस्य सादृश्यमुपमा' इत्यलंकाररत्नाकरोक्तं लक्षणमपि दूषितम्—'श्लेषमूलिकायामुपमायां श्लिष्टशब्दरूपो धर्मः कविनैव कल्प्यते, न पूर्वतः प्रसिद्धो भवति । अत एव तस्यासंग्रहः स्यात् ।'

एवं सर्वाणि लक्षणानि निरस्य—'चमत्कृत्याधायकं वाक्यार्थोपस्कारकं सादृश्यमुपमा' इति स्वलक्षणं तथा दृढैरक्षरैः संघटयति येन स्वल्पमपि शैथिल्यं न प्रसजितुं शक्नुयात् ।

शीर्षकप्रतिज्ञानुसारमयं प्रबन्धः सर्वातिशायी । अत एवास्मिन् कस्यापि स्थलस्यानुषङ्गिकोऽपि विषयो नाऽवशिष्येत तथा व्यापिनी दृष्टिर्ग्रन्थकारस्य । उपमायाः प्राचीनान् भेदान्साकल्येन प्रतिपाद्य, उदाहृत्य, 'इहान्यानपि भेदान्ये निगदन्ति' इति पुनर्भेदान्वर्णयित्वा द्वात्रिंशद्भेदा उपमा संपादिता । एतावद्भेदवत्यपि सेयमुपमा वस्त्वलंकाररसरूपाणां प्रधानव्यङ्ग्यानाम्, वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारिका भवतीति उपस्कार्यभेदेन प्रत्येकं पञ्चभिर्भेदैः [ ३२×५=१६० ] षष्ट्युत्तरं शतं भेदा जाताः ।

इतोऽप्यग्रे भेदानाह—'इतश्चान्येऽपि प्रभेदाः कुशाग्रीयधिषणैः स्वयमुद्भावनीयाः । क्वचिदनुगाम्येव धर्मः, क्वचित्केवलं बिम्बप्रतिबिम्बभावापन्नः, क्वचिदुभयम् । क्वचिद्वस्तुप्रतिवस्तुभावेन करम्बितं बिम्बप्रतिबिम्बभावम् (आपन्नः) । क्वचिदुपचरितः । क्वचित्केवलशब्दात्मकः ।' एवमुपमाघटकस्य सामान्यधर्मस्याऽतिसूक्ष्मरूपेणानुसंधानं विधाय उपमायामतीव सूक्ष्मतमं विचारं संचारयति ।

पुनरप्यसंतोषः । पुनः प्राह—'इतोऽप्यधिकं प्रकारान्तरं च लक्ष्यानुसारेण सुधीभिः स्वयमुन्नेयम् । यथा—

'यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समासि ।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि ॥' (पृ. २३३)

अत्र हि सूक्ष्मातिसूक्ष्मविचारस्याप्यतिशयं दर्शयति । इह हि पद्ये तिस्र उपमाः सन्ति । यथातथाप्रतिपाद्या एका प्रधानम् । 'समास्ति' 'सदृशी अस्ति' इतिरूपेण प्रतिपाद्ये द्वे उपमे तु प्रधानभूतायास्तस्याः समानधर्मभूते । उपमायाः साधारणधर्मो गुणक्रियादिस्तु सर्वैरन्विष्ट एव, परम् उपमायाः साधारणधर्मः स्वयमुपमैव भवतीति चमत्कारः पण्डितराजेन प्रत्यक्षं दर्शितः । सोयं चमत्कारः सहृदयानां तदैव प्रत्यक्षीभूतो यदा ह्येतादृश्या विलक्षणोपमाया उदाहरणमपि किञ्चित्संमुखस्थमभूत् । इतो वाग्देवतावतारभूता अपि श्रीमन्मम्मटभट्टसदृशाः परकीयानां पद्यानामेव मुखमवेक्षन्ते, येन यस्य स्वलस्योदाहरणमुपलब्धं तदेव तैर्निदर्शितम् । उदाहरणेष्वपि यदि किञ्चिद्विगुणम्, अनुचितं च, अत एव स्वस्याऽसंमतं तथापि परवशतया तद् ग्राह्यमेवाऽभूत्, उदाहरणान्तराऽलाभात् । [ यथा संबद्धसंबन्धस्य व्यङ्ग्यस्य देवतारतिरूपमनुचितं पूर्वोक्तमुदाहरणम् ]

किन्तु सर्वविषयेषु समर्थः अद्वितीयः कविः पण्डितराजस्तु उपस्थितविषयस्य तदैव अक्लिष्टं मधुरं चोदाहरणं स्वयं निर्माति । अनेन हि वादसंघर्षेऽप्यसाधारणो लाभः सोयं भवति यद् वादी मुद्रितमुखः सन् भूमिमेवालिखति, नान्य उपायः । दृश्यताम्—

अप्पयदीक्षितकृतानां प्रतीपालंकारभेदानां खण्डनेऽयमाह—

'उपमानस्याऽद्वितीयतागर्वं परिहर्तुं तत्समानस्य द्वितीयस्य प्रदर्शनेन तत्तिरस्कारो यदि द्वितीयं प्रतीपं तर्हि तिरस्कारवत् पुरस्कारेऽपि कश्चिन्नवीनोऽलंकारः कल्पनीयः स्यात् ।' परम् उदाहरणं विना अन्यः साहित्यकारो नेमामापत्तिं यथावत्साधयितुमशक्यत् । किन्तु पण्डितराजः स्वयमुदाहरणं निर्माति—

'एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-
मित्येवं परिचिन्त्य मा स्म मनसि व्याधाऽनुतापं कृथाः ।
भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्ष्याः खलाः ॥' (पृ. ६७०)

किमिदानीं प्रतिविधानम् ? तस्मात्संप्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ।

समासोक्तौ प्रकृतेऽप्रकृतव्यवहारसमारोप एव मन्यते दीक्षितेन, न रूपसमारोपः । किन्तु पण्डितराजस्तदेतत्खण्डयंस्तादृशमुदाहरणं सद्यो निर्माति यत्र रूपसमारोपं विना नान्य उपायः—

'निर्लक्ष्मीकाऽभवत्प्राची प्रतीचीं याति भास्करे ।
प्रिये विपक्षरमणीरक्ते का मुदमञ्चति ॥'

अत्र पूर्वार्धगतायां समासोक्तौ भास्करादीनां नायकत्वं यावन्न प्रतीयेत तावत् उत्तरार्धे 'प्रिय'पदेन समर्थनरूपोऽर्थान्तरन्यासः कथं सिध्येत् ? नायकत्वारोपश्च रूपसमारोप एव । उच्यतां किमत्रोत्तरम् ? (पृ. ५०५)

मिथ्याध्यवसित्यलंकारं खण्डयन्नाह—'यदि मिथ्याध्यवसितिरलंकारस्तर्हि सत्याध्यवसितिरप्यलंकारः स्वीकार्यः स्यात् । किन्त्वन्यः साहित्यनिबन्धकारः कुत्रोदाहरणं प्राप्नुयात् । पण्डितराजस्तु तत्कालं स्वयं निर्माति—

'हरिश्चन्द्रेण संज्ञप्ताः प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥' (पृ. ६७२)

एवं किल सद्यः स्वयमुदाहरणसामर्थ्येन स्थाने स्थाने विजितं पण्डितराजेन । अयमप्यस्य ग्रन्थस्य सर्वातिशायी विशेषः ।

## प्रौढतया ग्रन्थस्य दुष्प्रधर्ष्यता

नवीनन्यायशैलीपरिग्रहणेन ग्रन्थो दुष्प्रवेशोऽवश्यमभूत् किन्तु अव्याप्त्यतिव्याप्तिरहिततया निश्छिद्र–प्रमेयनिरूपणार्थं तमिमं प्रकारं विहाय नासीदन्य उपायः । किञ्च वादयुगे संस्कृतवाङ्मयमात्रे सेयं शैली पाण्डित्यप्रतिष्ठानुकूला पर्यगण्यत । एतस्मिन् प्रशान्तविवादव्यतिकरे भगवत्याः सुरसरस्वत्या विश्रान्तिमयेऽपि समये कतिचित्पण्डितमहाभागाः सांप्रतमपि तादृशीमेव भाषां प्रौढपाण्डित्यपिशुनां मन्यन्ते यां हि न कोपि संस्कृतज्ञः कोषादिदर्शनं विना सहसा बोद्धुं प्रभवेत्, तर्हि तस्मिन् प्रज्वलत्परस्परपाण्डित्यसंघर्षानले काले निच्छिद्रप्रमेयप्रतिपादनपरः पण्डितराजस्तां शैलीमादातुं परवशः स्यात्तर्हि किमाश्चर्यम् ?

किञ्च—कोमलकान्तपदावलीकलितकाव्यकलापोपकारकतया साहित्यं सुप्रधर्षमिति कृत्वा मास्मिन्नन्यशास्त्रज्ञाः खलतया खेलन्त्विति बुद्धिपूर्वकमेव पण्डितराजेन सुप्रौढा प्रतिपादनशैली पर्यगृह्यत । व्याकरणादिषु प्रौढपण्डितः उपनिषदादिषु संप्रविष्ट एव चाऽत्राधिकारीति सूचयन् प्राय उदाहरणान्यपि (पूर्वपक्षार्थम्) तादृशानि ददाति यत्र सामान्यानां तु चञ्चुप्रवेश एव न सुसंभवः । योगशक्त्या न सर्वत्राऽर्थः, अस्मिन्नुदाहरति—'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' (पृ. ३४६), 'शब्दादेव प्रमितः' (ब्रह्मसूत्रम्) । सादृश्यमात्रं यद्युपमा तर्हि यत्र परस्परसाम्यम्, तत्रोपमा स्यात् । अत्रोदाहरणम्—'कालोपसर्जने च तुल्यम्' (पाणिनीयसूत्रम्) (पृ. २१०) । स्थाने स्थाने धात्वर्थ-प्रत्ययार्थविचारसदृशा व्याकरणशास्त्रस्य प्रौढा विषया विस्तरेणालोचिताः । 'भावप्रधानमाख्यातम्' इति यास्कवाक्यस्य वैयाकरणानुसारं विस्तृत्य विचार उत्प्रेक्षायाम् (पृ. ३९४) कृतः । अन्ते च 'प्रत्ययार्थे प्रकृत्यर्थो विशेषणम्' इति सर्वत्र स्वीकृतस्योत्सर्गस्य विरोधं प्रदर्श्य वैयाकरणानां मतं स्वतन्त्रतया तिरस्कृतम्—"न च वैयाकरणविरोधो दूषणमिति वाच्यम्, स्वतन्त्रत्वेनाऽऽलंकारिकतन्त्रस्य तद्विरोधस्याऽदूषणत्वात्" (पृ. ३९६) ।

अलंकारेषु शाब्दबोधस्य मार्मिकतया विचारः कृतो यत्र हि आख्यातवादशिरोमणिव्याख्यातृसदृशा अपि प्रत्याख्यायन्ते (पृ. २४८) । साहित्यशास्त्रस्याऽ-

क्षोभ्यताप्रदर्शनायैव बहुत्र दार्शनिकपदार्थानां विस्तृत्य विचारः । यथा विभावनायां कार्यकारणभावस्य ( पृ. ५७९–५८६ ) । व्याप्यत्व–पक्षधर्मतयोः काव्यलिङ्गे ( पृ. ६३० ) । योग्यताज्ञानस्य कारणत्वं यथासंख्ये ( पृ. ६४३ ) । कुत्रचित्तु प्रसक्तानुप्रसक्तेनापि शास्त्रीयविचारः परिगृहीतः । यथा हि प्रश्न उत्तरं चेति सर्वेषामेव परिज्ञाते । ततश्चोत्तरालंकारे तस्य भेदादिकमेव वर्णनीयमासीत्, किन्तु 'इष्टसाधनताज्ञाने जाते जिज्ञासैव नोदेति' इति सुप्रौढं निगूढार्थं चोपन्यस्यति ( पृ. ७०० ) । एतत्सर्वमभिसंधायैव मया स्वटीकासमासौ प्रोक्तम्—

'पुरा प्रविश्यात्र निजप्रसङ्गादन्ये व्यजृम्भन्त बुधाः कदाचित् ।
अद्यानया पण्डितराजशक्त्या स्वसाधि साहित्यमभेद्यदुर्गम् ॥'

## रसगङ्गाधरस्य वर्ण्यविषयक्रमो विशेषश्च

प्रथमानने—पूर्वैः साहित्यकारैः काव्यस्य त्रयो भेदाः स्वीकृताः, पण्डितराजेन तु चत्वारस्ते, मार्मिकतया समर्थिताश्च । काव्यस्यैकमात्रं कारणं प्रतिभा स्वीकृता । रसस्य स्वरूपं दार्शनिकविधया विस्तृत्य विवेचितम् । मम्मटादीनां ग्रन्थे लोल्लटादीनां चत्वार्येव मतानि वर्णितानि, अत्र तु एकादश । तेषु षट् स्फुटरूपाणि । अन्यानि तु स्वल्पभेदादेव पृथग् व्यपदेश्यानि । करुण–बीभत्सादीनां रसत्वं विमर्शपूर्वकं रुचिरतया समर्थितम् । वीरस्य भेदविषये रुचिरो मार्मिकश्च विमर्शः । प्राचीनैः स्वीकृतानां दशगुणानामिह विशदं विवेचनम् । तत्तद्गुणानुगुणरचनायां वर्जनीयवर्णादीनां सूक्ष्मो रोचकश्च विचारः । भावध्वनेर्लक्षणविचारो मार्मिकः । संचारिभावानां लक्षणोदाहरणादिना विस्तृत्य विवेचनमस्मिन्नेव ग्रन्थे । रस–भावादयः पूर्वैरसंलक्ष्यक्रमा एव स्वीकृताः, अत्र तु ध्वनिकाराकूतेन संलक्ष्यक्रमा अपीमे साधिताः ।

द्वितीयानने—अभिधानियामकानां संयोगादीनां विस्तृतो मार्मिकश्च विचारः । ध्वनिप्राधान्यविषये मर्मस्पर्शी विमर्शः । शक्ति–लक्षणादीनां प्रौढया प्रणाल्या स्वरूपादिकमुपपादितम् । रूपके लक्षणया, अथवा अभेदान्वयेनैवोपपत्तिरिति प्राचीन–नवीनमतविषयो मार्मिकविधया सुरुचिरमुपपादितः । लक्षणाप्रसङ्गेनैव च अलंकाराणां निरूपणम् । अलंकाराणां विषये तु सर्वापेक्षयाऽप्यपूर्वो मार्मिकश्च विमर्शः । तत्र उपमारूपकपरिणामोत्प्रेक्षातिशयोक्तिप्रतिवस्तूपमानिदर्शनासमासोक्त्यप्रस्तुतप्रशंसाविभावनाश्टङ्खलातद्गुणोत्तरादयः के के वर्ण्यन्ताम्? सर्व एव रुचिरया सरण्या निरूपिताः । उत्तरालंकार एव चाऽपूर्णतया ग्रन्थस्य परिसमाप्तिः ।

## अतिमार्मिकमालोचनम्

एकस्यालंकारस्याऽपरस्मिन्नन्तर्भावविचारो बहुत्र अप्पयदीक्षितादिप्रतिस्पर्धावशात्कृत इव प्रतीयेत यथा पूर्वरूप–ललित–विकस्वरादिषु । किन्तु कुत्रचित्कुत्रचित् तथा मार्मिक्यालोचनाऽस्ति या ह्यालोचनाचतुराणामपि चमत्कारोति चेतः । आह सः—

'गुणग्रहणहेतौ उत्कृष्टगुणवस्तुसंनिधाने सत्यपि तद्गुणग्रहणरूपकार्याऽभावोऽयमतद्गुणो विशेषोक्तेरवान्तरभेद एव न त्वलंकारान्तरम् । ननु कार्यकारणभावो नात्र विवक्षितः, किं तु संनिधानेपि तद्गुणग्रहणाभाव इत्येतावन्मात्रम्। अतो विशेषोक्तेरतद्गुणो भिन्न एव । इति तु न युक्तम् । 'संनिधानेपि' इत्यपिना विरोधोपि विवक्षित इति गम्यते [ अर्थात् उत्कृष्टगुणवस्त्वन्तरसंनिधाने न्यूनगुणेन वस्तुना तदीयगुणोऽवश्यं ग्राह्य आसीत्तथापि न गृहीत इत्याकारः ] । विरोधो नास्तीति तु न शक्यतेऽपि केनचिद्वक्तुम्। यतो ह्ययमलंकारो विरोधमूलकेष्वन्यतमः। अत्र यदि विरोधव्यामिश्रणं न स्यात्तर्हि चमत्कार एव किं कृतः स्याद्येनायमलंकारकोटिभुक्तो भवेत्। विरोधे तु स्वीकृते कार्यकारणभावोऽपि विवक्षित एव [ कारणसत्तायां कार्योत्पत्तिसंभवेऽपि कार्यं न जातमिति ] ( पृ. ६९३-९४ ) ।

पद्यरचनायाः प्रतिपदसमालोचनायां कीदृशी मर्मस्पर्शिनी पण्डितराजदृष्टिरिति स्थालीपुलाकन्यायेन परीक्षेरन्विचक्षणा इति पद्यस्यैकस्याऽऽलोचनाऽविकलमुद्भियते—( भ्रान्तिमदलंकारेऽप्पयदीक्षितैरुदाहृतम्— )

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
तल्लोपायाऽऽलपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥'

तत्र विचार्यते—स्तनकलशयुगे हि न तावन्मञ्जरीसादृश्यं कविसमयसिद्धम्, येन तन्मूला चञ्चरीकाणां भ्रान्तिरुपनिबध्येत । दोषान्तरमूला तु सा नालंकार[1] इत्यनुपदमेव निरूपितम्। अपि च धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलंकारान्तरमुपनिबध्यमानमुद्वेजकमेव सहृदयानाम्। नहि सादृश्यमूलैकालंकारावच्छिन्ने सादृश्यमूलमलंकारान्तरं शोभते । यथा 'मुखकमलं तव चन्द्रवत्प्रतीमः' इति प्रागेव निवेदनात्। प्रत्युत कलशरूपकेण मञ्जरीसादृश्यतिरस्काराच्च । 'तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः' इत्यत्र विधेयाविमर्शाद्विधेयान्तरमाकाङ्क्षितम्। 'कीरैर्दष्टाः' इति भाव्यम् । जाता इत्यध्याहारेपि विवक्षितस्याविधेयत्वमविवक्षितस्य च विधेयत्वं प्रसज्येत । एवं 'तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः' इत्यत्र न तावत्पिकनिनदास्ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताड्येरन्। नापि पिकनिनदभ्रम आलपन्तीषु संभवति[2] । संभवन्वा न सादृश्यमूलः । पिकनिकरधियेति तु भाव्यम् । अथ तदालापेषु पिकनिनदबुद्धेरपि तासु पिकबुद्ध्युत्पादनद्वारा संभवत्येव ताडनोपयोग इति प्रयोज्यत्वार्थक-

1 उन्माद-प्रमादादिना या भ्रान्तिः सा नालंकार इति पूर्वं साधितं ग्रन्थकृता ।

2 आलपन्तीषु ( धर्मिषु ) निनदस्य ( धर्मस्य ) भ्रमः कथं स्यादितिभावः ।

तृतीयया पिकनिनदधीप्रयोज्यकाककर्तृकताडनकर्मत्वमालपन्तीनां सुप्रतिपादमेवेति चेत्, नैवम् । तथाप्रतीतेरसिद्धेः । 'चोरबुद्ध्या हतः साधुः' इत्यादौ चोरबुद्धि-हननयोः सामानाधिकरण्येन हेतुहेतुमद्भावावगमकत्वव्युत्पत्तेः । एवं 'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः' इत्यत्रापि विशेष्यतया वराहवृत्तेर्दन्तिबुद्धेर्वराहवृत्तिहननहेतु-भावावगमः । त्वदुक्तरीत्या दन्तिबुद्ध्येति कृते बोधकदर्थनैव । किंच पिकानां हि कूजितादिशब्दैरेव शब्दो वर्ण्यते, न तु निनदादिशब्दैः सिंहदुन्दुभ्यादिशब्दप्रयोग-योग्यैः । तथा प्रथमद्वितीयचरणस्थयोः स्तनपाण्योर्यथाकथंचिद्व्यवहितमपि जाता-न्वयमपि त्वदरिमृगदृशामिति षष्ठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे आल-पन्त्य इत्यस्मिन्विशेषणे विशेष्यभावेनेति ताटस्थ्यमेव स्यात् । विभक्तिविपरिणतावपि प्रक्रमभङ्गाऽसंष्ठुलत्वाभ्यां स्थितमेवेति पद्यमव्युत्पन्ननिर्मितमेव ।'

## मार्मिकस्तत्त्वविमर्शः

आमुखे निवेदितवानस्मि यत्संस्कृतसाहित्य(अलंकारशास्त्र)काराणां विचार-पद्धतिरुत्तरोत्तरं सूक्ष्मताऽभिमुखी । तैर्हि काव्यानां कृते उत्तरोत्तरं तथा सूक्ष्म अतिशया आविष्कृता यैरयमपारः काव्यसंसारो लोकतो बहूत्कृष्टः समजनि । यावत्किल लोकापेक्षया कश्चिदतिशयो न भवेन्न तावत्काव्ये चमत्कारकारणमुत्पद्यते । अत एव लोकतो नवीनमेव कञ्चिदर्थं घटयन्ती कविप्रतिभा अलंकाराणां जीवातुर्जायत इति प्राञ्चः प्रोचुः । सूचितं चैतत् 'नियतिकृतनियमरहिताम्' इत्यादिना तत्रभवन्मम्मट-भट्टादिभिः । पीयूषवर्ष–अप्पयदीक्षितादिभिः–सोयमर्थो विशदीकृतः । अत एव सहोक्ति–विनोक्त्यादिषु 'जनरञ्जनः' इति विशेषणेन 'लोकविलक्षणतया कविप्रतिभा-कल्पितत्वाच्चमत्कृतिजनकं साहित्यं सहोक्तिः' इत्यादिरर्थस्तत्र तत्रालंकारे सूचितस्तैः । मननजलधेरन्तस्तलं प्रविष्टेन पण्डितराजेन तु साहित्यकारैर्गवेषितः सोयमतिशय उत्तरोत्तरं चरमसीमानमारोपितः । अत एव प्रायः सर्वेष्वेवालंकारेषु सुरुचिरपदगु-म्फेन प्रकटितोऽप्यर्थो यदि वास्तव एव (न लोकविलक्षणः) तर्हि न तत्रालंकार-त्वस्य स्वीकारः । किमधिकम्, अलंकारसर्वस्वकारादिसदृशैः प्रामाणिकैरलंकारत्वेन निरूपितोऽप्यर्थः स्पष्टैरक्षरैर्निरस्तः । यथा 'पद्मानां विजेता चन्द्रोपि येन विजित-स्तेन मुखेन पद्मानि विजितानीति किमु वक्तव्यम्' इत्येवं कैमुत्येन यत्रापरार्थस्य सिद्धिः साऽर्थापत्तिरिति सर्वैः प्राग्भिरभ्युपगतम् । अत्राह पण्डितराजः—"अस्या चार्थान्तरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तदाऽलंकारत्वम् ।

---

१ अर्थात् पूर्वं तदालापेषु पिकनिनदबुद्धिः । तादृशबुद्ध्या च तास्वपि पिकबुद्धिः । पिकबुद्ध्या च तासु ताडनमिति प्रयोज्यार्थकतृतीयया सोयमर्थः सुप्रतिपाद इति शङ्का ।

२ वराहे वर्तमाना दन्तिबुद्धिर्वराहवृत्तिहननस्य हेतुरित्याशयः ।

यथा 'फणिनां शकुन्तशिशवः' इत्यादौ । अन्यथा तु कैमुतिकन्यायमात्रम् । एवं च—'कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः' 'अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी' इत्यादि सर्वस्वकृता यदुदाहृतं तन्नातीवहृदयंगमम्'' ।

एवं परिसंख्यायाम्—'सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिरेव न परिसंख्या । किन्तु कविप्रतिभानिर्मिता या व्यावृत्तिः सा । यथा—'यस्मिन् शासति वसुमतीपाकशासने महानसेषु संतापः, शरधिहृदयेषु सशल्यता, मञ्जीरेषु मौखर्यम्······इत्यादौ' ।

एवं काव्यलिङ्गे—काव्यलिङ्गं नालंकारः । वैचित्र्यात्मनो विच्छित्तिविशेषस्याभावात् । इत्यादि ( पृ. ६६३ ) ।

एवं विषमे—ननु 'क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम् । क्व मृगाः क्व च कस्तूरी धिग्विधातुर्विदग्धताम् ॥' इत्यादौ वस्तुकथनमात्रे विषमालंकारप्रसङ्गः ? न चेष्टापत्तिः, वस्तुवृत्तस्य लोकसिद्धत्वेनालंकारत्वायोगात् । यतो बहिरसन्तः कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलंकारपदास्पदम् । ······तेन 'अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः' इत्याद्यलंकारसर्वस्वकृतोदाहृतमपि प्रत्युक्तम् ।

एवं परिवृत्तौ—दानादानव्यवहारः कविकल्पित एव विच्छित्तये, न वास्तवः । यत्र वास्तवस्तत्र नालंकारः । यथा 'क्रीणन्ति प्रविकचलोचनाः समन्तान्मुक्ताभिर्बदरफलानि यत्र बालाः' इत्यादि ।

एवमुल्लासे—'अन्यदीयगुणदोषाभ्यामन्यस्य गुणदोषयोराधानरूप उल्लासः' । 'लौकिकार्थमयत्वादनलंकार एव' इत्यपरे, इत्यादि ।

किमेवंविधया उत्तरोत्तरमर्मप्रवणतया पण्डितराजविमर्शस्य मार्मिकत्वं न शक्यते स्पष्टमभ्युपगन्तुम् ?

## पदरचना [ अनुपमो मर्मविचारः ]

काव्यजीवभूतस्य व्यङ्ग्यार्थस्याधारतया शरीरस्थानीयायाः पदरचनायाः ( शब्दस्य ) काव्ये महन्महत्त्वम् । काव्यकृतकान्तासंमितोपदेशाय विनेयानभिमुखीकर्तुं प्रथमतः सोयं शब्द एवोपतिष्ठते । यदि पदरचनैव पूर्वतः श्रोतुर्मानसमाक्रष्टुं न प्रभवेत्तर्हि अर्थोपरि विचारमेव कः कुर्यात् ? अत एव पदरचनायां महत्पाटवम-

---

१ 'लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्यामराः ।
अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥''

पेक्ष्यते कवयितुः । उक्तमाकरग्रन्थेषु—'रूपकादिमलंकारं बाह्यमाचक्षते परे । सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् । तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ॥' । प्राचीनतरैस्तु पदरचनाया एतावत्पर्यन्तं गौरवमुद्घोषितं येन हि सा काव्यस्यात्मरूपापि स्वीकृता [रीतिरात्मा काव्यस्य], किन्तु मध्यकालिका अपि तस्या महत्त्वमुत्तरोत्तरं पर्यसाधयन् । एतन्मूलका एव त इमे प्रशंसावादाः—

'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि च हरति दृशं मालतीमाला ॥'

किन्तु व्याकरणनियमैः सुशृङ्खलितायामेतस्यां संस्कृतभारत्यां मधुररसानुकूलं केवलं मधुराणामेव पदानां गुम्फो न कठिन एव, अपि तु किञ्चिदसंभव इव । एतत्कथनेन न सहसैवोत्ताम्येयुः साहित्यौजस्विनः, मन्निवेदनं सूक्ष्मतयाऽऽलोचनीयम् । टवर्गम्, झय्संयोगम्, झय्घटितसंयोगपरह्रस्वादिकं च परिहृत्य, करुण-विप्रलम्भादिषु केवलकोमलपदरचना कियत्कठिनेति त एव ज्ञातुं शक्नुयुर्यैरेवं व्यवसितं स्यात् । दृश्यताम्, पूर्वकालिकोऽर्थः पदे पदे उपतिष्ठत्येव । तत्र हि संयोगवाही 'त्वा' प्रत्ययोयं मधुराक्षरघटितमपि हलन्तधातुं 'दृष्ट्वा' 'ऊढ्वा' इत्यादिरूपे परिणमयति । उपसर्गयोगं कृत्वा 'य' (ल्यप्) रूपे आनीयते चेद्यथापि हलन्तधातोर्योगे एकसंयुक्ताक्षरं त्वनिवार्यमेव । एवं हलन्तधातोः 'क्त,'तुमुन्नादिप्रत्ययेष्वपि कष्टाक्षरत्वमभिमुखमेति । अस्तु. मुधैव विस्तरो भवेत्, परं संस्कृतभाषायां केवलमधुरवर्णसंघटना न सामान्यकवेः कार्यम् । अमरुकसमः कविः, यस्यैकैकं पद्यं प्रबन्धशततत्संमानमुपयाति सोऽप्यस्मिन्विषये स्थाने स्थाने निराधारमधोमुखः पतति । तत्रभवान् मम्मटोपि च शृङ्गारे तानीमान्युदाहरन् पदरचनापरीक्षायामप्रौढ इव परिगण्यते ।

तथाहि—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

इत्यस्मिन्पद्ये—उत्थाय, किञ्चिच्छनैः, शनैर्निद्रा, निर्वर्ण्य पत्युर्मुखम् । विस्रब्धम्, परिचुम्ब्य, लज्जानम्र इत्यादीनि बहूनि माधुर्योद्दिप्रतीपानि पदानि । सत्या वार्तेयम्—यत्साहित्यकारैर्माधुर्यगुणार्थम्—'अटवर्गाः संयुक्ताक्षरपररहिताः' इत्यादिरूपेण वर्णाः कामं परिगणिताः, किन्तु प्रयोगे तदिदं न यथावन्निर्वोढुमशक्यत । अत एव हि यस्मिन्काले प्राकृतभाषा पूर्णं प्रकर्षमधिगतवती तस्मिन्काले सेयं संस्कृतपदरचना क्लिष्टाक्षरा पर्यगण्यत ।

---

१ 'अमरुककवेरेकं पद्यं प्रबन्धशतायते' ।

उक्तं हि प्राकृतकविभिः—

'ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे ।
संते पाइअकव्वे को सक्कइ सक्कअं पढिउं ॥'

प्राकृतभाषाकवय एव केवलमात्मप्रशंसामिमामकुर्वन्नित्येव न । संस्कृतकवयः, तेष्वपि मूर्द्धन्यतमाः श्रीमन्तो राजशेखरसदृशा अपि प्राकृतमाधुर्यमुग्धाः संस्कृतपदबन्धमिमं कठिनमुद्घोषयन्ति स्म । आह स कर्पूरमञ्जर्याम्—

'परुसा सक्कअबंधा पाउअबंधो वि होइ सुउमारो ।
पुरुसमहिलाणँ जेत्तिअमिहंतरं तेत्तियमिमाणं ॥'

किमधिकविस्तरेण, साहित्यशास्त्रस्य यत्किञ्चिदनुशासकपुस्तकं गृह्यतां तस्मिन् मधुररसस्योदाहरणीभूतानि कतिचिदेवेदृशानि पद्यानि भवेयुर्यानि निषिद्धान् संयुक्ताक्षरप्राचुर्यसमासबाहुल्यादीन् सर्वथा विरहय्य परीक्षानिकषे निष्टङ्कं निर्दोषाणि सिध्येयुः ।

प्राकृतसाहित्यस्य सहयोगेन यदा सेयं मार्मिकता संस्कृतकविभिरपि हृदयतोऽभिमताऽभूत्तदा हि पदरचनायां भूयस्तरामेव समवधानमदीयत तैः । मार्मिकैरालोच्यताम्—मम्मटभट्टस्य समये संस्कृतभाषाया मधुररचनाविषये यावान्विचारोऽक्रियत तदपेक्षया साहित्यदर्पणस्य निर्माणकाले किञ्चिदधिको विचारः प्राचलत्, येन हि स्वयं विश्वनाथरचितान्यन्यानि वा तत्सामयिकानि पद्यानि पूर्वेषामपेक्षया भूयस्तरां लालित्यमभिस्पृशन्ति । श्रीमतः पण्डितराजस्य तु स समयो यस्मिन्हि संस्कृतसाहित्यात्सुन्दरसुन्दरमंशमादाय समृध्यन्ती सेयं व्रजभाषा ( हिन्दी ) पूर्णमुत्कर्षमविन्दत् । सूरदासतुलसीदासाभ्यां व्रजभाषासाहित्यस्य यद् गौरवमाविष्कृतं, 'सतसई'निर्मात्रा बिहारीलालेन तद्भूयस्तरां संवर्धितम् । समग्रं मोगलसाम्राज्यं करे कुर्वन्नाम्बेरधरणीशो बिहारिणे प्रतिपद्यमेकां स्वर्णमुद्रामदिशदिति तु नाधिकं महत्त्वम्, किन्तु सूरतुलसीरसज्ञानामपि हृदि बिहारिणः प्रत्येकं पद्यं बाण इव गंभीरमर्मस्पृगभूदिति सत्यं महते गौरवाय । अनेन हि दोहासदृशे लघुकाये छन्दसि वर्ण्यार्थविस्तारः, व्यङ्ग्यचमत्कारः, तत्तदलंकारझाङ्कारः, वर्णगुम्फपरिष्कारश्च स दर्शितो यमास्वाद्य राजानमारभ्य रङ्कपर्यन्तः सर्वोऽपि सहृदयसमाजोऽस्य वशीभूतोऽभवत् । व्रजभाषायामपभ्रंशद्वारा वर्णानां लघुगुरूकरणादिविषये बहुतरं स्वातन्त्र्यमासीद्येन हि रचनायां बिहारिणा महत्सौकर्य-

१ 'ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे ।
सति प्राकृतकाव्ये कः शक्नोति संस्कृतं पठितुम् ॥'

२ 'परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः ।
पुरुषमहिलानां यावदिहान्तरं तावदेतेषाम् ॥'

३ 'सतसइयाको दोहरा ज्यों नावकको तीर ।'

मुपलब्धम् । विहारिणः प्रायः प्रत्येकमेव पद्यमस्योदाहरणमिति केवलमेकेनैवोदाहरणेन परीक्षेरन्प्रामाणिकाः । आह बिहारी—

'दीठि[1] न परत समानदुति कनक, कनकसे गात ।
भूषन कर करकस लगत परस पिछाने जात ॥'

अत्र हि दृष्टि, द्युति, गात्र, कर्कश, स्पर्शशब्दा यदि साक्षात्संस्कृतरूपेणैव प्रयुज्येरंस्तर्हि माधुर्यमवश्यं हीयेतेति को वा न मार्मिको मन्येत । अस्तु, एवं किल हिन्दीसाहित्यस्य, तेन सहैव च कवेर्विहारिकालस्यापि महती प्रतिष्ठा सर्वस्मिन्नपि सहृदयसमाजे देशमात्रव्यापाऽभूत्तस्मिन्समये । जयपुरराजधान्याम्, देहलीनगरे चेत्युत्तरभारते एव स्वकविताप्रसारं कुर्वन् पण्डितराजसदृशः सर्वतोमुखः कविर्व्रजभाषायास्तादृशं प्रभावं नाऽवेदीदिति को वा मन्येत? विशेषतः किल विहारिमहाकवेर्भागिनेयः कुलपतिमिश्रः श्रीमतः पण्डितराजस्य साहित्ये शिष्य[2] एवासीत् । अत एव पूर्वं यथा प्राकृतस्य सहयोगेन संस्कृतपदरचनायामधिकावधानं प्रारभ्यत तथा पण्डितराजस्य समये हिन्दीसाहित्यस्यापि भूयान्प्रभावः संस्कृतपदरचनायामपतदिति वक्तव्यं भवेत् । यदा हि व्रजभाषाकवयः शृङ्गार-करुणादिरसेषु तदनुकूलां मधुरवर्णसंघटनां यथावन्निर्वाहयन्ति तद्द्वारा च रसपरिपोषं परितः प्रसारयन्ति तदा देवभाषायामेवायं नियमः शिथिलः स्यात् (केवलं साहित्यपुस्तकेष्वेव निबद्धः स्यात्) इति नाभवत्सह्यं मानिनः पण्डितराजस्य ।

अत एव संस्कृतसाहित्यस्य पुरातनं सर्वमपि विषयजातं विमर्शनिकषेण प्रस्फुटं परिष्कुर्वता पण्डितराजेन रसगङ्गाधरे पदरचनाविषये बहवो नियमा दृढीकृताः । शृङ्गारादिषु संयुक्तवर्णविषयका बहवश्च नवीना योजिताः । (पृ. ८०) । पण्डितराजो हि प्रतिभावतां चूडामणिरासीत् । अत एव पदरचनाविषये संस्कृतसाहित्ये तादृशो मार्मिकविचारः प्रवर्तितो यस्याग्रे व्रजभाषापक्षपोषका अपि (ये हि मधुररचनायां संस्कृतात् स्वस्य गौरवमघोषयन्) निष्प्रभा अभवन् । वर्णानां स्थानन्तर्यादिविषये (पृ. ८३) तादृशो मार्मिको विचारः प्रास्तूयत यो हि नासीत्कस्याश्चिदपि भाषायाः साहित्ये । न केवलं नियमनिर्माणमेव, प्रत्युत तेषामनुवर्तनमपि पण्डितराजेन प्रत्यक्षतो दर्शितम् । वाग्देवताऽवतारभूता अपि स्वग्रन्थेषु मधुररचनायां केवलं नियममात्रमलिखन्, स्वयं तादृशोदाहरणनिर्माणस्य का कथा, परकीयोदाहरणान्यपि मधुरसंघटनायामविकलमनुकूलानि नाऽलभन्त । किन्तु पण्डितराजेन मधुरसंघटनाया उदाहरणानि तादृशान्यदीयन्त येषु प्रतिपक्षी न कथंचिदपि दोषमाविष्कर्तुं प्रभवेत् । यथा हि—

---

१ 'दृशमुपैति कनकं न वपुराप्य कनकसमकान्ति ।
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति ॥' इति विहारिणोनुवादः । 'साहित्यवैभवे' द्रष्टव्यः । पुस्तकमिदम्—'भट्टश्रीमथुरानाथशास्त्री नागरपाडा जयपुर' इति स्थानात्प्राप्यम् ।

२ 'हिन्दीरसगङ्गाधर'स्य भूमिका द्रष्टव्या । विस्तरभयान्नात्रोद्ध्रियते ।

'लोलालकावलिवलन्नयनारविन्द-
लीलावशंवदितलोकविलोचनायाः ।
सायाह्नि प्रणयिनो भवनं व्रजन्त्या-
श्चेतो न कस्य हरते गतिरङ्गनायाः ॥' (पृ. ८६)

'कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि ॥' (पृ. ९०) इत्यादि

एतादृशो मार्मिकविचारः पण्डितराजस्य तद्ग्रन्थस्य वा न किं विशेषः परिगण्येत ?

## अनुप्रासः ( पदान्तानुप्रासः )

अनुप्रास-यमकादयः शब्दालंकारा अनुशिष्टा एव संस्कृतसाहित्यकारैः । प्रयुक्ता-श्चापि तैस्तैः संस्कृतकविभिरिति को वा न जानाति । किन्तु जगन्नाथपण्डितराजस्य समयपर्यन्तं व्रजभाषाकविभिः प्रयुक्तः पदान्तानुप्रासः स्थानविशेषमहिम्ना तथा माधुर्यमलभत येन समग्रस्यापि तस्य पद्यस्य शोभैवाऽन्यादृशी समभवत् । विशेषतो हि 'घनाक्षरी'छन्दस्सु । यथा 'तुलसी बिलोकि अनुलानी जातुधानी कहैं, चित्र हूके कपिसों निसाचर न लागि हैं' । 'बीती औधि आवनकी लाल मनभावनकी डग भई बाँवनकी सावनकी रतियाँ' ( सेनापतिः ) । विहारिणो दोहाछन्दस्सु यथा—

'टटकी धोई धोवती चटकीली मुख जोति ।
लसति रसोई के बगर जगरमगर दुति होति ॥'
'नभ लाली चाली निसा चटकाली धुनि कीन ।
रति पाली आली अनत आये बनमाली न ॥'
'छिनक चलति ठिठकति छनक भुज प्रीतम गलडारि ।
चढी अटा देखति घटा बिज्जुछटासी नारि ॥'

परस्ताद्भाविनां पद्माकरादीनां तु सुप्रसिद्धा एव पदान्तानुप्रासाः । यथा—'कढि-गो अबीर पै अहीरको कढ्यो नहीं' । 'इन्दीवरनैनी तू कलिन्दीतीर जैयो ना ।' इत्यादि । 'आने परतापके सुहाने जगजाने आज, जयके निसाने फहराने माधवे-सके ।' [ अस्मत्पूर्वजाः सरस्वत्युपनामकाः श्रीद्वारकानाथकवयः ]

---

१ 'रुचिरा मुखरुचिरालसति विशदा शाटी भाति ।
महाकान्तिराभाऽऽवहा महानसे प्रतिभाति ॥'
'खमरुणमालीना निशा चटकालीध्वनिरेति ।
रतिपाली परया समं वनमाली न समेति ॥'
'क्षणं चलेत्तिष्ठेत्क्षणं बाह्वौ प्रियमासाद्य ।
हर्म्यतटात् पश्यति घटामबला तडिच्छटाऽद्य ॥' 'साहित्यवैभवे' विहार्यनुवादः । वैभवेस्मिन् टीकया पद्यचमत्कारो द्रष्टव्यः ।

अयं किलाऽन्तानुप्रासः प्राचीनसंस्कृतकविभिर्नोपात्त इति न । बहुत्रोपात्तः, सफलतया चोपात्तः । किन्तु पण्डितराजपद्येषु पदान्तानुप्रासस्यापूर्वैव छटा, विशेषतश्च मालभारिणीछन्दस्सु । सेयं व्रजभाषाकवीनां तामिमां सरणिमाश्रित्य प्ररूढापि पण्डितराजस्य प्रतिभापाटवेन ततोऽप्यतिशयं लेभे इति मार्मिका एव परिचिनुयुः । यथा—

'नितरां हितयाऽद्य निद्रया मे बत यामे चरमे निवेदितायाः ।
सुदृशो वचनं शृणोमि यावन्मयि तावत्प्रचुकोप वारिवाहः ॥' (पृ. १०७)
'प्रणिपत्य विधे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे ।
जनुरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभाजाम् ॥' (पृ. ६८७)
'कुसुमानि शरा मृणालजालान्यपि कालायसकर्कशान्यभूवन् ।
सुदृशो दहनायते स्म राका भवनाकाशमथाऽभवत्पयोधिः ॥' (पृ. ५७२)

शिखरिण्यां सोयमनुप्रासः शंकराचार्य-भवभूतिप्रभृतिभिरपि प्रायुज्यतैव । यथा—

'तवोत्सङ्गे गङ्गे यदि पतति कायस्तनुभृतां
तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥' (शङ्करा.)
'तथाप्येषा तन्वी रमयति च संतापयति च' । (भवभूतिः)

किन्तु पण्डितराजस्य शिखरिणीष्वपूर्वैवानुप्रासच्छटेति किं वोदाहरणदानेन । सोयं परिपाको व्रजभाषाकवीनामपि पदान्तानुप्रासान्बहुधा विभावयता श्रीमता पण्डितराजेन परिनिष्ठापित इति मार्मिका जानीयुः । अश्वधाटीछन्दसोऽनुप्रासं बहुधा भाषाकवयः अमृतध्वनिच्छन्दस्सु घनाक्षरी (कवित्त) चतुर्थचरणेषु चोपजीव्य शनैः शनैस्तस्मिन् भूयसीमुन्नतिमदर्शयन् । किन्तु स्थाने स्थाने स एव परिपाकः प्रदर्शितः पण्डितराजेन । यथा—

---

१ 'किं गाढरागपरिषङ्गादनारतमनङ्गाकुलोभिरमसे
शृङ्गारवीथिनवभृङ्गायितो रतितरङ्गान्तरापनसि किम् ।
गङ्गामवाप्य भृशमङ्गान्युदस्य हृदि रङ्गान्तराहितनमं
त्वं गाय भूरिभयभङ्गाय तोषिततुरङ्गाननाङ्घ्रिकमलम् ॥'
(साहित्यवैभवे मम)

२ 'तरलित होत भुजंगवर, परत गंग उत इत्त ।
जटाजूट छूटत जबहिं, नृत्तत्तत हर नित्त ॥
नृत्तरातहर नित्तत्तवहि दुचित्त त्तिभुवन ।
धित्तत्तत धुनि तित्तत्तजहिं न मित्तत्तसु गन ॥
सित्तत्ततगुन गित्तत्रिदसपवित्तत्तरनित ।
जित्तत्तयससिमित्तत्तकहिं चकित्तत्तरलित ॥'
(असत्पूर्वजाः श्रीकृष्णभट्टकविकलानिधयः)

'वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥' (पृ.२८६)

मार्मिकाः पण्डितराजकवितां सूक्ष्मेक्षिकया विविच्य निश्चिनुयुर्यत्तस्य पदरचनायां कश्चन चमत्कारकोऽनुप्रासः अन्यो वा कश्चन शब्दकृतो विशेषो वाऽवश्यं प्राप्येत । तच्छून्यं प्रायो नैकमपि पद्यं भवेत् । व्यङ्ग्यादिकृतचमत्कारसत्तायामपि शब्दकृतः कश्चिदतिशयः कवितायामवश्यं स्यात् । यतो हि तद्द्वारैव विनेयानां प्रथममाकर्षणम् । शब्द एव प्रधानतः कविप्रतिभाया आधारभूतः । अत एव हि काव्यलक्षणेपि 'शब्दः काव्यम्' इत्यस्योपरि पण्डितराजस्य भूयानाग्रहः । ये त्वालोचकम्मन्याः शब्दकृतातिशयेन कञ्चित्कविं 'शब्दकवि' नाम्ना व्यपदेष्टुं धार्ष्ट्यमाचरन्ति ते स्खलन्ति। अर्थचातुर्येण सह शब्दकृतोऽतिशयोऽपि यस्य कवेः, स एव प्रशंसनीयः । अस्तु. सोयमतिशयः पण्डितराजे पूर्णरूपेण प्रतिभासत इति विवेचनीयं मार्मिकैः ।

## सामयिकः प्रभावः

पण्डितराजस्य विचारशैल्यपि तत्सामयिकैरन्यभाषासेविभिः सह भूयस्तरां संवदते । यथा हि—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया ।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः ॥' (पृ. ३२२)

इति वयःसन्धिः—

'छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग ।
दीपति देह दुहून मिलि दिपति ताफ़तारङ्ग ॥'
'अपने अँगके जानिकैं जोबन-नृपति प्रबीन ।
स्तनमननैननितम्बको बडो इज़ाफ़ा कीन ॥'
'नवनागरितन-मुलक लहि जोबन-आमिल जोर ।
घटि बढितैं बढि घटि रकम करी औरकी ओर ॥'

इत्यादीनि विहारिपद्यानि स्मारयति ।

---

१ 'छुटी न सिसुताकी०' इत्यादीनां त्रयाणां विहारिपद्यानामयं 'साहित्यवैभवे'ऽनुवादः—
'गता न शिशुताद्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ॥'
'निजाङ्गानि मत्वाऽभिनवयौवननृपतिवरेण ।
स्तननितम्बदृक्चेतसां रचितोन्नतिरचिरेण ॥'
'नवललनातनुजनपदे यौवनसामन्तेन ।
कृतं वस्तु लघु गुरुतरम्, गुरु लघु कृतं बलेन ॥'

श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथामृतं च ।
नो चेत्कथं निपतनादनयोस्तदेव
मोहं मुदं च नितरां दधते युवानः ॥' (पृ. ३६६) इति पद्यम्
'अमीहलाहलमदभरे स्वेत स्याम रतनार ।
जियत मरत झुकिझुकि परत जिहिं चितवत इकबार ॥'

इति प्राचीनतमं भाषापद्यमुपजीवति ।

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥' (पृ. २५९)

इति पद्यम्—

'छिप्यो छबीलो मुँह लसै नीले आँचलचीर ।
मनों कलानिधि झलमलै कालिन्दीके नीर ॥'

इति विहारिपद्येनाऽविकलं संवदते । समसामयिकयोरनयोः केन क उपजीवित इत्यत्र तु गवेषकमहोदया एव हस्तलाघवं दर्शयेयुः ।

विलासमयमोगलराजधान्या अपि तत्सामयिकान् विलासानविकलमयं चित्रयतीति पण्डितराजाक्षरैरेव प्रत्यक्षीक्रियताम्—

"कुतश्चिदागच्छन्त्याः पथि तदीयरूपयौवनगृहीतमानसैर्युवभिरनुगम्यमानायाः कस्याश्चिद्भवनप्रवेशसमये निजसेवासार्थक्यविज्ञानाय गमनाज्ञापनरूपलाभलालसेषु तेषु परमपरिश्रमस्मरणसंजातकरुणाया गमनाज्ञादाननिवेदकस्य विलोचनाम्बुजमालापरिक्षेपस्यानुभावस्य वर्णनादभिव्यज्यमाना रतिर्बहुवचनेन बहुविषया गम्यते"। तथा हि पद्यम्—

'भवनं करुणावती विशन्ती गमनाज्ञालवलाभलालसेषु ।
तरुणेषु विलोचनाब्जमालामथ बाला पथि पातयांबभूव ॥'
(पृ. १२१)

गृहे कपोतमिथुनानां पालनं तत्सामयिकानां मोगलविलासिनां विनोदेषु पर्यगण्यत, यं हि शिष्टाचारमिव तत्संप्रदायाभिमानिनः साम्प्रतमपि निर्वाहयन्त्येव । अस्तु, उक्तं पण्डितराजेन—

'निरुध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो ददाने ।
मयि स्मितार्द्रं वदनारविन्दं सा मन्दमन्दं नमयांबभूव ॥ (पृ. ९८)

## पण्डितराजोक्तौ काश्चिद्विप्रतिपत्तयः

ग्रन्थस्यास्य विशेषा विस्तरभयाद्दिङ्मात्रतो दर्शिता एव । किन्तु पण्डितराजविचा-

---

१ 'राजति नीलपटान्तरितमेतन्मुखमवधेहि ।
ध्रुवं कलानिधिरुल्लसति कालिन्दीसलिले हि ॥' (साहित्यवैभवे)

रेषु याः काश्चिद्विप्रतिपत्तयो मम प्रतिभातास्ता अपि सरलायां यथास्थलं सूचिताः । यथा—

'आज्ञा सुमेषोरविलङ्घनीया किं वा तदीया नवचापयष्टिः ।

वनस्थिता किं वनदेवता वा शकुन्तला वा मुनिकन्यकेयम् ॥' (पृ. ३४६)

अत्र किंपदसत्त्वेपि वाच्यं ससंदेहालंकारं नाङ्गीकरोति पण्डितराजः । किन्तु 'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी' इत्यादिषु किंशब्दस्य ससंदेहवाचकत्वं प्रसिद्धं सर्वत्र । अन्यभाषासाहित्यकारा अपि 'कैधों ये उजागर प्रभाकरस्वरूप राजै' इत्यादिषु किंशब्दार्थकानां पदानां संदेहवाचकत्वमाहुः । 'संशय'-'संदेह' प्रभृतिपदानामेव सत्तायां संशयस्य वाच्यत्वमिति तु केवलमाग्रहः स्यात् । स्वयं पण्डितराजेनापि 'अस्याः सर्गविधौ प्रजापतिरभूत्' इत्यादिपद्ये मम्मटप्रोक्तः संदेहोऽनुमतः [ संशयादिपदाभावेऽपि ] ।

'वर्णानां स्थानन्तर्यं सकृदेकपदत्वे किञ्चिदश्रव्यम्, यथा 'पललमिवाभाति' इत्यादि । असकृच्चेदधिकम् । असकृद्भिन्नपदत्वे ततोऽप्यधिकम्' । इत्याह पण्डितराजः (पृ. ८३) । किन्तु 'मुदितं च सकलललनाचूडामणिशासनेन मदनेन' (पृ. १७१) इति स्वयं प्रयुज्यते पण्डितराजेन । मधुररसेषु 'झय्'('य र ल व श ष स ह' एतान्विहाय व्यञ्जनवर्णाः)घटितसंयोगपरह्रस्वं सवर्णझय्द्वयघटितसंयोगं रेफघटितसंयोगपरह्रस्वं च विशेषतो वर्जनीयमाह( पृ. ८५,८६ ) । किन्तु सोयं पण्डितराजोक्तावपि दृष्टः । यथा—'तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पन्नाऽकरोज्जगत्' (पृ. ४६६) । अस्तु. एवमादिकं पौरोभाग्यायितमपि विमर्शानुरोधेन कृतं तत्तत्स्थल एव मम टीकायां द्रश्येतेत्यलमेतेन ।

## पण्डितराजस्येतिवृत्तविषये—

नाहं प्रवर्तितुमिच्छामि । सोयं विषयः प्राक्संस्करणप्रस्तावनया, हिन्दीरसगङ्गाधरभूमिकया च परिचीयेतैवेति पिष्टपेषणं नाहमभिरोचयामि । किन्तु जगन्नाथस्य यवनसंसर्गापवादे कारणमिदमनुमीयते यत् आचाररक्षायामतितमामवहितेन तैलङ्गसमाजेन सर्वतः प्रथमं तु यवनसेवास्वीकारः । ते हि असूयया जातिद्वेषेण वा अस्य पाण्डित्यादप्रभवन्तो जातिस्वभावानुसारं निन्दां चक्रुः । अन्यथा न किञ्चित्प्रमाणमुपलब्धमस्मिन् । (संस्कृतचन्द्रिकासंपादक)अप्पाशास्त्रिप्रभृतिभिरपि खण्डितमिदम् । किञ्च स्वयमिदं पङ्क्तीनां लेखको जात्या दाक्षिणात्यः, तैलङ्गः । अयं समयस्तु जातीनां वराकीणां मोक्षकाल एव । सुधारकसमाजेन किम्, भगवता कालेनैव संप्रति सर्वासामपि जातीनां बन्धनानि न केवलं शिथिलितान्येव, अपि तु भग्नान्येव । किं तु त्रिंशच्चत्वारिंशद्वर्षेभ्यः पूर्वं यैर्भारतवर्षीयो जातिविभागश्चक्षुर्भ्यां च बुद्ध्या चालोचितस्ते जानन्ति यत् तत्तज्जातिसमाजे रूढिरक्षायां कीदृशी सुदृढता वज्रघटिताऽऽसीद्या हि साम्प्रतिकैः 'संकीर्णता'नाम्ना व्यपदिश्यते ।

नाधिकमनुधावनस्यापेक्षा । प्रत्यक्षीकृतमावेद्यते—चत्वारिंशद्वर्षेभ्यः पूर्वं यदाऽस्मत्पितृव्या राजकीयाङ्ग्लविद्याशालायामाङ्ग्लभाषाध्ययनाय प्रविष्टवन्तस्तदा नियमरक्षापरैर्जातीयैरनाचार इति कृत्वा तत्कुटुम्बीया बहुतरमधिक्षिप्ताः, यमदण्डसब्रह्मचारी जातिदण्डश्च निचिक्षिपिषितः । यदा पञ्चाशद्वर्षेभ्यः पूर्वमेव तैलङ्गद्विजपुङ्गवानां सेयं जाति'कट्टर'ताऽभूत्तदा सार्धद्विशतवर्षेभ्यः पूर्वमदृष्टवैदेशिकसभ्यताकस्य, अस्पृष्टजात्यौदार्यस्य तैलङ्गसमाजस्य का वा परिस्थितिः स्यादिति स्वयमिदमनुभविभिरनुमातव्यं स्यात् । भाषाध्ययनप्रवृत्तिमात्र एव यदा सेयमारूढता, तदा यवनराजानामाश्रयणमेव किम्, 'दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान्पूरयितुं समर्थः' इत्याकारकमाग्रहम्, वादानुशीलनप्रसङ्गेन वा, राजपरिवारकृतस्नेहेन वा, पण्डितराजोचितमर्यादया वा, ख्यात्यादिलाभलोभेनैव वा, रात्रिंदिवं यवनराजसहवासं च निसर्गत एव परोत्कर्षाऽसहिष्णु जातीयरक्तं मुद्रितमुखं सत्किं सोढुं शक्नुयात् ? तस्मादस्मादृशैस्तु निर्भ्रममेवानुमीयते यद्भारतीयानां राज्ञामाश्रयमेव दृष्ट्वा आहिताग्नयस्तैलङ्गपुङ्गवा अस्मत्पूर्वजान् अन्ययैव दृशा यदा ददृशुस्तर्हि—यवनसम्राज एतादृशं संसर्गम् इयत्प्राचीनस्तैलङ्गसमाजः कया दृशा पश्येदिति ।

विशेषतो हि जयपुरमहाराजानां सातिशयगौरवमाश्रयं चिरादनुवर्तमानानामस्मत्पूर्वजानां पण्डितराजेन सह संबन्धोऽपि कश्चिदासीत् । पण्डितराजो यदा जयपुरमाजगाम तदा समभूदस्मत्पूर्वजैः सह सख्यं वा स्नेहो वा जातिगतसमवायो वा । एतदुत्तरमप्यस्याऽनुवृत्तिर्न निरुद्धा । अस्मत्पूर्वजेषु नारायणभट्टो जगन्नाथपण्डितराजस्य सविधे अधिजगे । ( सप्तदश ) शतके लिखिते 'कुलप्रबन्धे' लिखितम्—

'लब्ध्वा विद्या निखिलाः पण्डितराजाज्जगन्नाथात् ।
नारायणस्तु दैवादल्पायुः स्वःपुरीमगमत् ॥' इति ।

यत्किञ्चिदस्तु, ये किल महोदयाः पण्डितराजस्य तामेतामपवादकथां परमाग्रहेणोद्घोषयन्ति ते हि प्राचीनमिदं मनोरञ्जकमितिवृत्तमिति वृत्तमिदं हृदयमञ्जूषायां निभृतं निदधतु । अस्ति च कचिद्भूमिकासु तदिदमुद्धृतमपि । वयं तु महारत्नस्यासाधारणीं प्रभाम्, लोचनरोचकं वर्णम्, अनितरसामान्यां महामूल्यताम्, अनुपमं माङ्गल्यं च वर्तमानमभिनन्दामः । न तस्य कृपणात्पुरातनीमनभिज्ञकृतामवहेलाम् ।

अस्तु. दर्शनव्याकरणन्यायादीनां प्रगाढपण्डितोऽसौ परममार्मिकेऽस्मिन्विमर्शग्रन्थे यान्निबन्धान् प्रमाणरूपेण खण्डनविधया वा जग्राह तेषां परिज्ञानम् 'रसगङ्गाधरे प्रमापकाः' इति शीर्षकेण पृथक्संगृहीतात्पत्राद्भवेत् ।

## नागेशभट्टस्तट्टीका च

टीकाकारस्य नागेशभट्टस्य विषये ज्ञातव्यो भूयानंशः प्राचीनसंस्करणस्थात्तद्विवर-

१ साहित्यवैभवस्य 'वंशवीथ्याम्' द्रष्टव्यमिदं काव्यम् । साहित्यवैभवं 'भट्टमथुरानाथशास्त्री, भट्टगार्डन रेजिडेन्सीरोड, जयपुर ( राजपुताना )' इति स्थानात्प्राप्यम् ।

२–इदं वृत्तं मनोरञ्जकम् इतिवृत्तम् ( इतिहासः ) इति कृत्वा ।

णादवगम्यैतैव । वृत्तं हि 'नागेशभट्टः' इति शीर्षकेण न केवलं तन्मात्रस्यैव विवरणम्, अपितु 'जगन्नाथपण्डितराजः' इति शीर्षकेण मूलग्रन्थकर्तुर्जगन्नाथस्यापि वृत्तं भूमिकावसाने । किन्तु नागेशटीकायाः स्वरूपमिह बोधनीयमत्यावश्यकं मन्ये । टीका हि ग्रन्थस्य सर्वांशतस्तत्त्वबोधनाय भवति । टीकते सह गच्छतीति टीकापदेन, ग्रन्थस्य प्रत्येकमर्मविषये तस्याः साहाय्यं भवतीति महद् गौरवं टीकायाः । यत्र ह्यन्यान्यैरास्तैरपि ग्रन्थस्य मर्म अन्यथा योज्यते तत्र हि सिद्धान्तस्य स्थिरीकरणाय टीकामुखमेवावेक्षन्ते प्रामाणिकाः । अत एव सर्वतः प्रसिद्धं 'टीका गुरूणां गुरुः' । यस्य निदर्शनभूता याज्ञवल्क्यस्मृतेर्मिताक्षरा; मनुस्मृतेः कुल्लूकभट्टीयटीकादयः । एता हि मूलस्य सुविशदमर्थमादौ बोधयित्वा ततस्तत्संबद्धमपेक्षितं ज्ञातव्यप्रपञ्चम्, अन्ते च परमतक्षोदक्षेममारभन्ते ।

## नागेशभट्टस्य समये संस्कृतवाङ्मयस्य परिस्थितिः

किन्तु भगवत्याः संस्कृतभारत्या इतिहासे विलक्षणविकाससमयः सोऽपि समयः समभवद्यत्र हि नवीनन्यायस्य व्याकरणस्य च परिष्कारपरिजृम्भणेन पण्डितानां परिसरे (वि)वादवात्येव वेगतः प्रावहत् । पदार्थपरिष्कारे पण्डितानां प्रतिभा तादृशविकासोन्मुखी समभवद्येनैकवाक्यस्य का कथा, एकैकशब्दस्य एकैकवर्णस्य एकैकमात्रापर्यन्तस्यापि विषये तेषां गभीरतमो विचारसंघर्षः समघटत । विचारपर्यवसाने जाते विवादविषयीभूतायाः पूर्णाया एकस्या मात्राया अलाभावस्थायाम्, अर्धमात्राया अपि लाघवलाभो जातस्तर्ह्यस्मिन् लोके तु तेषां कृते नातः परो लाभः । यतो 'ह्यर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।'

आर्यविचारानुसारं पुरुषस्य कृते परमार्थबोधकानां वेदानामङ्गभूतमिदं व्याकरणम् । एतस्य संक्षेपाय तत्रभवान्पाणिनिः सूत्राणि, तेष्वावश्यकविस्तराय वृत्तिकारो वृत्तीः, श्रीमान् भाष्यकारश्च भाष्यं प्रणिनाय । एतत्त्रयीपरिष्कृतस्य व्याकरणस्य विशदीकरणाय व्याडिप्रभृतीनां संग्रहादयो ग्रन्थाः, माधव-जयन्तादीनां काशिकादयो वृत्तयश्च प्राचीनकाले प्रादुर्बभूवुः । एतदुत्तरं पूर्वसूचितस्य विवादयुगस्य मध्यकाले शास्त्रार्थसंघर्षेण प्राचीनान्वैयाकरणान्निरस्यन् भट्टोजिदीक्षितः कौमुदीं कौस्तुभादींश्च निबबन्ध । अनेनैव महाभागेन व्याकरणे वादसंघर्षस्य बीजवापः कृतः । यतो ह्यनेन तादृशानां पण्डितानां मतनिरासः कृतोऽभूद्ये हि तस्मिन्समये परमां प्रतिष्ठामधिजग्मुः । अस्तु. तस्मिन्काले पण्डितानां वादोन्मुखी विकासशक्तिरासीदेव, अत एवैते परमोत्तेजनोज्ज्वलिताः सर्वरूपेण प्रतिभाया अस्मिन्नेवोपयोगमकार्षुः । नवीनन्यायस्य पुटं प्रदाय व्याकरणपारदस्य तथा संस्कारा अक्रियन्त यथा तत्सेवनेन पण्डितमल्लानां शक्तिर्निःसीममुदजृम्भत । सीमातिशायित्वादेवैतेषु परस्परं मल्लव्यायोगा इव शास्त्रविचाराः प्राचरन् । प्रकृततत्त्वविचारमुपसर्जनीकृत्य (उपेक्ष्येत्यर्थः) परस्परस्य शब्दसंनिवेश एव प्रायो भूयान् संरम्भोऽभवत् । अस्तु. श्रीमतः पण्डितराजस्य प्रतिभोज्जृम्भणं तदा भवति यदा हि वयसः परिपाकमुपगच्छन् भट्टोजिदीक्षितः स्वग्रन्थान् प्रणीय लोकेषु ख्यातिभरमिव जरसमप्यधिगच्छति । पण्डित-

राजः स्वगुरुकुलनिकारमसहमानः कविजनोचितनाम्ना[1] ग्रन्थेन भट्टोजिदीक्षितमतं खण्डयन् विवादक्षेत्रेऽवतरति ।

## गुरुमर्मप्रकाशस्य समयः

श्रीमतो नागेशभट्टस्य प्रतिभोज्जृम्भणसमयस्तु वादप्रणाल्याः पक्षे पूर्णोल्लासमयः । तस्मिन् समये हि संस्कृतभारत्याः साहित्याऽवनौ प्ररूढो वादप्रणालीपादपः शाखाप्रशाखाभिः पूर्णोज्जृम्भणमगमत् । न केवलं न्याये व्याकरण एव वा, संस्कृतवाङ्मयस्याऽन्यान्येष्वपि विभागेषु ये ये ग्रन्थास्तस्मिन्काले प्राणीयन्त प्रायः सर्वेष्वेव तेषु सेयं प्रणाली प्रचुरं प्राचरत् । नवीनग्रन्थप्रणेतुः कृतित्वमियतैव परीक्ष्यते स्म यदनेन सुपरिष्कृतभाषया तथा विषयविचारः कृतोस्ति यस्मिन् क्षोदक्षेमस्य भूयान्विस्तरः । श्रद्धया मृदुलहृदयेषु धार्मिकेषु धर्मतत्त्वबोधनाय प्रवृत्ततया सरलसुबोधभाषोचिता धर्मशास्त्रनिबन्धा अपि तस्मिन्नेव रागे रञ्जिताः प्रादुरासन् । भगवद्भावनामयेषु सरसहृदयेषु भक्तेषु भगवत्तत्त्वप्रकटनाय सरसभाषानिबन्धनीयाः सांप्रदायिकनिबन्धा अपि तमेव वीरवेषं वहन्तोऽदृश्यन्त । किमधिकम्, तस्य पण्डितस्य व्युत्पत्तिरेव सुदृढा नागण्यत येन हि स्वग्रन्थे नेयं प्रणाली परिगृहीता । किं बहुना, प्रसादमाधुर्ययोर्गुणगीतीर्गौरवेण गायन्तः साहित्यनिबन्धकारा अपि तदा ग्रन्थप्रणयनविषये एतस्या एव शैल्याः संमुखे निजमस्तकं नमयामासुः । एतस्य हि प्रत्यक्षं प्रमाणं वपुष्मानयं रसगङ्गाधरः ।

परमितोऽप्यधिकोज्जृम्भणस्य समयो नागेशभट्टस्य ग्रन्थप्रणयनकालः । भट्टोजिदीक्षितस्य समये योऽसौ वादभानुरुदगान्नागेशभट्टस्य समये तस्य पूर्णो मध्याह्नकाल आसीदिति मन्ये नाऽत्युक्तये । यतो हि मध्यमध्या सूर्यस्योत्तापस्तावतीं पराकाष्ठामारोहति यस्या अग्रे पुनः सोयं क्रमेणावसादमेवाधिगच्छति । मोगलसम्राट्सु औरङ्गजेबस्य शासनकालः प्रतापस्य चरमसीमानमधिरूढः ख्याप्यते, यतो हि तदधिको नाभवत्प्रतापः । प्रत्युत शनैः शनैरवरोह एव प्रारभ्यत । एवमेव एतत्प्रथावलम्बिषु सर्वसंभावितग्रन्थकारेषु श्रीमान्नागेशोऽन्तिमः । एतस्मादग्रे तु वादरङ्गभूमिरियं कदाचित् कदाचित् समरभूमावपि परिणमन्ती दृष्टा, यत्र हि परेषां कृते विषदिग्धैरिव नव्यन्यायघटितैः कूटशस्त्रैर्बहुधा मर्मघात एवाक्रियत, न तु मर्मविचारः । प्रावृट्सरितां पूरोपप्लव इव ('बाढ') सोयं वादविप्लवस्तादृशीं परिस्थितिमवाप यत् जलोपप्लवस्याऽपगमोत्तरं यथा तद्भूमिभागस्य विरूपा दशाऽवलोक्यते तथा वादयुगस्य व्यतिक्रमेऽस्माकं वाङ्मयस्यापि । सामयिकी आवश्यकताऽस्मान् जनप्रवाहाभिमुखं नेतुमिच्छति, वादयुगीयाः पाठ्यग्रन्थास्तु शब्दजालमये निर्जने प्राचीनविपिने । अत एव समयपरिवर्तनहतकमिदमेतदपि श्रावयति—'घनाक्षरी'—

१ 'मनोरमाकुचमर्दन' ।

'शब्दशास्त्रशेवधि'खिडक्किकामवीक्ष्य मनाङ्
　　नव्यतर्कफक्किकासु झम्पाः प्रतिदीयन्ते
वाङ्मज्ञानसंपादकसामयिकचर्चा नास्ति
　　व्युत्पादककाव्यकथाः कर्णे नोपनीयन्ते ।
अश्रुतान्यवाक्यं घोरनिर्घोषाः क्रियन्ते तमां
　　मञ्जुनाथ सत्यं वच्मि, चेन्मे क्षमा दीयन्ते
विषमविवादोदर्कदृशास्तर्कमात्रपराः
　　केवलमलर्कसमाः साम्प्रतं प्रतीयन्ते ॥'

विज्ञानभाषायां 'क्षितिजं' तद्भवति दृष्टिप्रसारे कृते यत्र हि स्थाने गगनं च भूतलं च मिलितमिवालोक्यते । मन्मत्यनुसारं श्रीमतो नागेशभट्टस्य कालो वादशैल्योः 'क्षितिज'स्थानीयः । यतो ह्यस्मिन्नेव समये कूटप्रथाया अप्यारम्भोऽभूत् । यद्यप्येतस्याः प्रथायाः सूत्रपातो बहोः कालादेवासीत्परं सुस्फुटरूपे दर्शनं निदर्शनं चास्यैव समये प्राप्यते । विचारशीला विद्वांसः आलोचनाप्रवणं हृदयमादाय धैर्येण चेन्मन्निवेदनं शृणुयुः, सर्वमहं विज्ञापयेयम् ।

## टीकानां वास्तवं स्वरूपम्

गुरूणामपि गुरुभूतायाष्टीकाया ग्रन्थयोजनाविषये कियद्वा महत्त्वपूर्णं स्थानमिति नागेशभट्टप्रघट्टकारम्भ एव निवेदितवानस्मि । ग्रन्थपारगामितायै इमाष्टीका एव नौका इव परमं साहाय्यमारचयन्ति । इमा ग्रन्थस्य तथा सहगामिन्यो भवन्ति यथा विभ्रष्टो मूलग्रन्थ एतासां साहाय्येन गवेषकैः पुनः समीकृत इति श्रूयते । अस्मदादीनां गुरुवरैर्विद्यावाचस्पतिश्रीमधुसूदनशर्ममैथिलमहाभागैरेव टीकाद्वारा जानकीपरिणयनाटकं साङ्गीकृत्य तात्कालिकशिक्षाविभागाध्यक्षाय प्रत्तम् । किन्तु मूलकारो यया दिशा प्रचलति टीकाकारस्ततो विपरीतयैव दिशा गच्छेच्चेत् ग्रन्थतत्त्वजिज्ञासूनां का स्याद्दशा ? किञ्च टीकाकारस्यासनं मूलकारस्य परिचर्यानुगुणम् । अग्रगामिना मूलकारेण यो मार्गः परिगृहीतष्टीकाकारस्तं सर्वेभ्यो जिज्ञासुभ्यः सुस्पष्टीकुर्वन् तत्कण्टकाऽवकरादीन् दूरे करोति । यदि टीकाकारस्तं मार्गमबोधयित्वा सर्वत्र विपरीतमेव ब्रूयात्, मार्गेऽधिकाधिकं कण्टकानेव किरेत्तर्हि किं टीकाकारेणानेन कृतं स्वासनोचितं कर्तव्यम् ?

अपि च—मूलकारष्टीकाकारश्चेति द्वावपि संभूय साहित्यसेवामारचयतः । सेयं च सेवा परमार्थतः सहृदयानां सेवा । यदि टीकाकरणसमये द्वयोस्तुमुलं संघटते तर्हि

---

१ व्याकरणशास्त्ररूपस्य निधेः खिडक्किकां लघुद्वारम् । निधेर्गुप्तीकरणाय यथा लघु द्वारं निर्मीयते तथा विस्तृते संस्कृतवाङ्मये प्रवेशाय संक्षिप्ततममिदं व्याकरणम् । २ क्षमाः (प्रकारबहुत्वाद्बहुवचनम्) । ३ विषमो विवाद एव उदर्कः (परिणामः) येषां तादृशाश्च, ते दृशाश्च ।

विषयजिज्ञासोन्मुखानां सहृदयानां का दशा स्यात्? मृदङ्गवादनगुणो न सामान्यः। एतस्मिन्पारगामी संगीतसमाजे महान्तमादरं लभते। गायकापेक्षयापि मृदङ्गवादकस्तालविषये प्रधानभूतः। किन्तु गानसमये स गायकस्यानुचर एव शोभते, न स्वतन्त्रः। तौ यदि संगीतगोष्ठ्यां परस्परसंघर्षमवलम्बेते तदा रसलोलुपानां संगीतश्रोतॄणां का दशा भवेत्?

## कूटप्रयोगः

वादयुगे—पण्डितमण्डले खण्डनमण्डनयोः काण्डमेवाखण्डं यदा प्राचरत्तदा परमतखण्डनस्य प्रकारा जनतायां तत्प्रचारोपायाश्चापि विविधा आविर्भूताः। लोकसंमानितस्य कस्यचिद् ग्रन्थस्य निकाराय कूटप्रयोगोऽयमवलम्बितः पण्डितैर्यत् टीकाया व्याजं कृत्वा तत्खण्डनस्य प्रचारः प्रक्रान्तः। ग्रन्थस्य स्वारस्यमवगन्तुं लोकाष्टीकामुपाददत परं मूलकारस्य तत्पक्षीयाणां च खण्डनमेव बहुधा तत्राऽलभ्यत तैः। साधारणतया खण्डन-मण्डनयोः श्रवणानिच्छवस्तटस्थाः पण्डिताः खण्डनमण्डनमयान् ग्रन्थान् श्रोतुमपि कामं नैच्छन् किन्तु टीकाव्याजेन निबद्धा अमी बलादेव पण्डितगोष्ठ्यां प्रावर्तन्त। मूलग्रन्थं योजयितुं श्रद्धया समवालम्ब्यत जिज्ञासुवराकैष्टीका, किन्त्वन्ते मूलस्य मुखध्वंस एव तैः पर्यलोक्यत। श्रूयते यत्केनचिद्विज्ञापनव्यापारिणा 'जीर्णमिमं ग्रन्थमहमेव मुद्रापयित्वा समर्पयिष्यामि' इति कृत्वा उपासनासमये पठनीयः स्तोत्र ग्रन्थः समार्प्यत कस्मिंश्चित् खिष्टोपासनागृहे (गिरजा)। आसीदेकदा मन्दिरे संप्रवृत्तोपासना। पुस्तकमादाय सर्वेप्यासन् सभक्ति 'भजनानि' गायन्तः। यथैव सा गीतिरपूर्यत तथैव तन्निबद्धः सर्वोपि स्तुतिवादो 'बीचमगोलिका'( Beechams pills )सु पर्यणमत्। सर्वेप्युपासकाश्चकितमतिष्ठन्। एतादृश एव प्रकारः खण्डनप्रख्यापकैः पण्डितैरप्यवालम्ब्यत। प्रकृतविषयं परित्यज्य येन केनापि प्रकारेण पराभिमतधर्म-संप्रदायादेस्तिरस्कारधीकया पर्यसाध्यत पण्डितपुङ्गवैः। दृश्यताम्, अमरकोषेणानेन व्युत्पत्त्यर्थे क्रियानुपकारः कृतः क्रियते चेति नाऽविदितं कस्यापि। न चायं ग्रन्थो धर्मसंप्रदायविषयक एव। किन्तु विवादयुगे टीकाव्याजेन पण्डितपुङ्गवैरस्यायपि प्रसादः प्रत्त एव। शाक्यमुनेर्नामटीकायां प्रोक्तम्—'यद्यपि वेदविरुद्धार्थानुष्ठातृत्वाजिनशाक्यौ नरकवर्गे वक्तुमुचितौ। तथापि देवविरोधित्वेन बुद्ध्यारोहादत्रैवोक्तौ।' [ व्याख्यासुधा पृ. ९ ]

इदं स्यान्मार्मिकैः—भाड्या एककर्शकटिचालकेषु[1] यदा कदाचिन्मिथः स्पर्धा संभवति तदा हि स्पर्धमानाविमौ द्वावपि चालकौ पुनःपुनः कशाप्रहारवर्षया घोटकं तथा प्रवाहयतो यथा शकटिस्थिता यात्रिणः पतनोन्मुखा एव भवन्ति। अभीष्टस्थानप्राप्तेः का कथा, प्राणभिक्षामीश्वराद्याचन्ते वराकाः। एवमेव यत्र मूलग्रन्थ एव दुरूहः विषयोपि जटिलतमस्तत्र परमया प्रत्याशया वराको जिज्ञासुर्नौ टीकोपरि

१ इक्का, ताँगा।

दीनां दृष्टिं ददाति । किन्तु टीकायां दृश्यते—ग्रन्थयोजनस्य का कथा, जिज्ञासुना स्वप्रतिभया यावान् विषयो बुद्धौ उपारोहितः सोपि टीकयाऽन्यथा कृतः ।

अयमेव कूटप्रयोगः श्रीमता नागेशभट्टेन रसगङ्गाधरटीकायां व्यवहृतः । आलंकारिकं विषयमादाय काव्यप्रकाशादिसदृशदुरूहग्रन्थानां विमर्शात्मको विषय एव पूर्वं कठिनः । ततो वादयुगीया प्रणाली । तदुपर्यपि–बुद्धिपूर्वकमेव तादृशी दृढप्रौढा सरणिर्ग्रन्थकारेणोपात्ता येन साधारणबुद्ध्या नास्मिन् ग्रन्थे यः कश्चन प्रतिवादी प्रवेशमर्हेत् । एतदुपर्यपि कुष्ठे खर्जूरिव सोयं संकटो यन्मुद्रितो ग्रन्थः स्थाने स्थाने तथाऽशुद्धो यथा ग्रन्थाशयो न कथंचिद्बुद्धिगम्यो भवेत् । अतएव सर्वतः काठिन्ये पतितो जिज्ञासुरुपततः सन् नागेशटीकायां दृष्टिं ददाति । किन्त्वितो नागेशस्याभिसन्धिरेवाऽन्यादृशः । स हि ग्रन्थयोजनाय न प्रवृत्तः अपि तु जगन्नाथस्याभिभवं कर्तुम् । अत एव तत्त्वजिज्ञासाव्याकुलैरस्माभिर्नीचैर्दृष्टौ दत्तायां बहुत्र 'चिन्त्यमिदम्' इति खण्डनमुपलभ्यते । यदि कुत्रचिद्ग्रन्थो लाप्यतेऽपि, तर्हि मूलाद्विपरीतपथेनैव, येन हि खण्डनाय तन्मार्गः प्रशस्तो भवेत् । बहुधा तु अतीव दुरूहैरक्षरैष्टिप्पणीमात्रं क्रियते । समग्रोयं ग्रन्थः कष्टं सोढ्वा यैरवधानेन योजितस्ते तदेतदवगन्तुं शक्नुयुः । पण्डितराजेनापि विमर्शविधया परपक्षनिरासः कृत एव, परं स्पष्टरूपेण । व्याकरणादिविषयेपि यत्र परपक्षखण्डनमावश्यकमासीत्तत्र डिण्डिमघोषपूर्वकं स्वतन्त्रो ग्रन्थ एवारब्धो न तु टीकारूपः कूटप्रयोगोऽवलम्बितः । 'तस्मिन् समये खण्डनमण्डनादेः सैषा सरणिरेवासीदिति' वक्तुं शक्येत, किन्तु टीकामिषमवलम्ब्य ग्रन्थयोजनस्थाने ग्रन्थभ्रंशो न न्यायदृष्ट्या समाधातुं पार्येत ।

अस्तु. रसगङ्गाधरे—यस्य पण्डितराजस्य संमुखे साहित्यसौधे बलात्प्रवेशायैव न, तन्मतखण्डनायापि चेष्टते श्रीमान् नागेशभट्टः सोयं साहित्यमर्मसु कियन्निपुण इति नातिसूक्ष्मस्य विचारस्य विषयः । स्थूलदृष्ट्यापि टीकादर्शनेन प्रतीयेत यत्काव्यसाहित्यविषये नागेशमहाभागस्य प्रौढिरत्यन्तं परिमितैव ।

## नागेशटीकायास्तत्त्वविमर्शनम्

नागेशः स्वटीकायां बहुशः शब्दविषयकं विचारमेव व्याख्यातुं समाधातुं च चेष्टते । अलंकारविषये तु यत्र यत्र कुवलयानन्दकारस्य पक्षपरिपुष्टिं करोति भूयस्स्वंशेषु तत्र तत्रालंकारचन्द्रिकायाः ( कुवलयानन्दटीकायाः ) विचारा एवाऽऽधाराः । यथा—चिकीर्षायाः कार्यमात्रं प्रति हेतुत्वं यदयं खण्डयति तदेतदसंगत्यलंकारस्थालंकारचन्द्रिकास्थमखिलम् । पङ्क्तयोऽप्यविकलास्ता एव ( पृ. ५९५ ) ।

खिन्नोसि मुञ्चेत्यादिपद्ये पण्डितराजेन साधितताया अनिष्टप्राप्तेर्निरासः अलंकारचन्द्रिकास्थ एव । किन्त्वलंकारचन्द्रिकोपजीवनेपि तस्या यथा मर्मस्पर्शीन्यक्षराणि न तथा नागेशस्य । केवलं विषयमात्रमपहृत्योज्जगार । ( पृ. ६०२ ) ।

एवमेव अनिष्टस्याऽप्यवाप्तिश्चेत्यत्र अपिना इष्टानवाप्तेः संग्रहोऽभ्युपपत्त्या दूषिता पण्डितराजेन । एतस्य समाधानमप्यत्र अलंकारचन्द्रिकास्थमेव ( पृ. ६०१ )। एवमेव 'भक्ष्याशयाहिमञ्जूषाम्' इति पद्यस्थन्यूनपदत्वदोषसमाधानमप्यलंकारचन्द्रिकास्थमेव ( पृ. ६०२ )। एवं स्थाने स्थानेऽलंकारचन्द्रिकाऽऽचमनेपि न कुत्रचित्तस्या नामोल्लेखः। किन्तु पर्यायोक्तप्रकरणे प्रत्येतुं शक्येत यन्नागेशमहोदयः कुवलयानन्दपक्षपरिपुष्टिं किमाधारेण करोतीति । यतो हि तत्राकस्माल्लेखनीतो निर्गतम्— "अन्वेष्टव्या इत्यन्तो ग्रन्थश्चिन्त्य इति कुवलयानन्दे ध्वनितं तट्टीकायां स्पष्टं, तत एव बोध्यमिति दिक्" । ( पृ. ५५७ )।

'उन्मूलितः सह मदेन बलाद्बलारेरुत्थापितो बलभृतां सह विस्मयेन ।
नीलातपत्रमणिदण्डरुचा सहैव पाणौ धृतो गिरिधरेण गिरिः पुनातु ॥'

अत्र गिरिधरेण मणिदण्डकान्त्या सह गिरिः पाणौ धृतः । मणिदण्डकान्तिर्मणिदण्डे तिष्ठेत् सा कथं पाणौ प्राप्नुयात् । अत एव अन्य( उपमान )धर्मस्य अन्यत्र ( उपमेये ) आरोपात्पदार्थनिदर्शनेति स्पष्टं सर्वेषाम् । किन्तु नागेशो व्याख्याति 'सदृशवाक्यार्थयोरैक्यारोपान्निदर्शना ।' अर्थात् वाक्यार्थनिदर्शना । को वाऽऽलंकारिको नोपहसेदिदम् ? अत्रैव उन्मूलितः इत्यस्य व्याख्यां करोति 'समूलं खण्डितः' । किन्तु गोविन्देन गोवर्धनः खण्डित इति नाद्यावधि क्वापि पुराणे श्रुतम् ( पृ. ४९० )। मद्बुद्ध्यनुसारम् 'उन्मूलितः' इत्यस्य 'समूलमुत्खातः' [ उत् ( उत्खात ) मूलं करोतीत्युन्मूलयति ( णिच् ) ततो भूते क्तः ] इति व्याख्यानमुचितम् ।

'प्राची सन्ध्या०' इति पद्यस्थपरम्परितरूपके नयनशोणिम्नि ज्वालात्वारोपस्तदैव भवेद्यदा क्रोधे कालानलत्वारोपो भवेत् । किन्तु राज्ञां हितैष्यपि नागेशः 'राज्ञि अनलसमारोपम्' करोति ! धन्यः । ( पृ. ३१० )।

'निर्भिद्य क्ष्मारुहाणा'मितिपद्यस्थभ्रान्तिमद्ध्वनौ 'भ्रान्तिमतां तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते' इत्यनेन तिरश्चामेव भ्रमं स्पष्टमाह पण्डितराजः । किन्तु 'स्वर्णदण्डभ्रमेण भृतं पोषितं मनो येषां ते जनाः पादान् किरणान् धित्सन्ति धर्तुमिच्छन्ति' इति जनानां भ्रममाह नागेशः । स्थापनार्थकस्य 'धा'धातोर्ग्रहणे न क्वचित्प्रयोगः । अत्र हि वास्तवोऽयमर्थः—'वृक्षाणामतिगहनं मध्यं निर्भिद्य गोत्राम् ( पृथ्वीम् ) गतेषु येषु ( प्रातःकालिककिरणेषु ) स्वर्णदण्डभ्रमेण संभृतमानसाः शुकशिशवः पादान् स्वचरणान् धित्सन्ति स्थापयितुमिच्छन्ति, तिर्यक्प्रसृतशाखासु स्थित्यभ्यासित्वात् । विविच्यतामिदानीं साहित्यमार्मिकत्वं नागेशमहोदयस्य । शुकशावका इत्यादिप्रयोक्तव्ये 'शुकबालकाः' इति प्रयोग एव साहित्याक्रमणपराक्रमं सूचयेत् । ( पृ. १७० )।

'निजसेविजाड्यनाशनचतुरो हरिर्भूतयेस्तु' अत्र हरिपदं सूर्ये विष्णौ च श्लिष्टम् । जाड्यस्य अज्ञानस्य नाशने चतुरो विष्णुः, जाड्यस्य हिमकृतगात्रपिण्डीभावस्य नाशे

चतुरः सूर्यं इति प्रसङ्गे नागेशकृतोऽर्थः—'जाड्यमज्ञानं मूर्खत्वं च'। अन्विष्यन्तु तत्त्वमस्य वैज्ञानिकाः। (पृ. ५२४)।

'पुरः पुरस्तादरिभूपतीनाम्०' अत्र अरिभूपतीनां पुरः (नगर्यः) भस्मावशेषा भवन्तीत्यादिः स्पष्टोऽर्थः। किन्तु नागेशः 'पुरःपुरस्तात् पूर्वं पूर्व'मिति वैयाकरणानामतीव हास्यास्पदं द्विर्भावं प्रयुज्य श्लोकमेवाऽसंगतं चकार। तथा हि 'भस्मशेषाः' इति बहुव्रीहिसमासाश्रयणे 'अरिभूपतीनाम्' इति षष्ठीविभक्तेरनन्वयः। तदा हि 'अरिभूपतयः' इति प्रथमा योग्या। शत्रुरूपाणां राज्ञां भस्मरूपाः शेषा भवन्ति इति तत्कृतव्याख्यानेऽपि राज्ञामिति षष्ठ्याः शेषा इत्यत्रान्वये, शेषा इत्यस्य चोद्देश्यसमर्पकत्वे 'राज्ञां शेषाः' कीदृशा भवन्तीति विधेयसमर्पकपदाभावात् वाक्यार्थोऽनिष्पत्तिः। 'भस्मशेषाः' इत्यस्य विधेयसमर्पकत्वे, 'के भस्मशेषा जायन्ते' इत्याकाङ्क्षा जायते, न तु केषामिति। किञ्च 'सर्वस्य द्वे' इति सूत्रेण 'पुरःपुरः' पुरस्तात् पुरास्तात्' इति वा द्विर्भावो युक्तः, न तु असुप्रत्ययान्त-अस्तातिप्रत्ययान्तपदयोः, असांप्रदायिकत्वात्। (पृ. ४१७)।

'वचने तव यत्र माधुरी सा हृदि पूर्णा करुणा च कोमलेऽभू'दित्यत्र यस्मिन्कोमले हृदि पुरा पूर्णा करुणाभूत् तत्र कठोरताविरासीदिति सर्वस्य स्पष्टोर्थः, किन्तु नागेशो व्याख्याति–'हे कोमले' पृ. (८७)।

'सरसि प्लवदाभाति जम्बीरं सुपचेलिमम्' अत्र सुपक्वतया सुवर्णवत्पीतवर्णं जलोपरि प्लवत् (तरत्) जम्बीरमुपमेयम्। तोयौघोपरि भासमानं सुवर्णमयं ब्रह्माण्डं चोपमानम्। अत्र हि जम्बीरस्योपमेयस्य ब्रह्माण्डमुपमानं प्रमाणतो नानुरूपम् (अत्यधिकविस्तीर्णत्वात्), इति ग्रन्थाशयेऽपि नागेशो व्याख्याति—'प्लवत्' 'चञ्चलम्'। किन्तु ब्रह्माण्डमण्डले चञ्चलमिति विशेषणं कियदुचितमिति सुधिय एव विभावयन्तु। पुनः स्वारस्यं दृश्यताम्। नागेशमहोदयो व्याख्याति—"अत्र प्रमाणत आननुरूप्यम्, तयोरत्यन्तवैलक्षण्यात्। एतत्पोषकमपि 'सुपचेलिमम्' इति विशेषणम्। पक्वस्य अत्यन्तसूक्ष्मत्वात्"। आननुरूप्यस्य पचेलिममिति कथं पोषकम्? पक्वे हि जम्बीरे पीतवर्णेन ब्रह्माण्डेन सह आनुरूप्यमुदेति, अथवा अननुरूपत्वम्? नागेशमहोदयः प्राह—'पक्वं जम्बीरमतिसूक्ष्मं भवति, अत एव तत् अननुरूपम्।' पक्वं जम्बीरं रसाधिक्येन परिमाणाधिक्यं लभते, उत सूक्ष्मत्वम्? अस्तु, यदि सुपचेलिमम् इति विशेषणं नाऽदास्यत तर्हि किं ब्रह्माण्डेन सह उपमायामानुरूप्यमभविष्यत्? अत एव न तत्त्वं ज्ञायते, किमुच्यते नागेशेन। यदि पक्वपदेन शुष्कत्वं स्वीक्रियते तर्हि न पक्वशब्दस्य तादृशोऽर्थः। तदर्थस्वीकारेपि शुष्कस्य तस्य धूसरवर्णत्वं निम्नोन्नतत्वं च जायते। कविर्वर्तुलेन पीतवर्णेन च ब्रह्माण्डेन कथं तस्य सादृश्यं निबध्नीयात्? (पृ. २५६)।

'निदर्शनं पारदोऽत्र रसः' 'दृष्टान्तो वा' । इति पण्डितराजाक्षराणि । अर्थात् 'निदर्शनं पारदोऽत्र रसः' 'दृष्टान्तः पारदोऽत्र रसः' इत्युभयमपि उदाहरणस्योदाहरणं भवति । किन्तु नागेशमहोदयष्टीकयति—'वाशब्द एवार्थे' । स्वयमवतरणिकां पूर्वमकरोत्—'निदर्शनपदस्थाने पाठान्तरमाह—दृष्टान्तो वेति' । ( पृ. २८३ )

'शरदिन्दुरिवाऽऽह्लादजनको रघुनन्दनः ।
वनस्रजा विभाति स सेन्द्रचाप इवाम्बुदः ॥'

अत्र शरदिन्दुरित्यादिपूर्वार्धे आह्लादजनक इति धर्मः सकृन्निर्देशात् रामे मेघे चानुगामी । द्वितीयार्धे ( वनस्रजेत्यत्र ) तूभयम् । अर्थात् 'विभाति सेति' मेघरामयोरनुगामी, वनमाला-इन्द्रधनुषोश्चाभेदाध्यवसानेन बिम्बप्रतिबिम्बभावापन्न इत्युभयविधः । इति पण्डितराजाशयः । किन्तु नागेशो व्याख्याति—'द्वितीयार्धे काषायवसनो यानीत्यादौ' । अत्र हि कुङ्कुमालेपादेर्यतिमात्रविशेषणतया साधारणधर्मत्वाभावेन उपमैव न संभवतीति न ज्ञातं नागेशेन । ( पृ. २३० ) ।

इदानीं पदार्थज्ञानविषये काचिद्वर्णिका ( 'बानगी' ) दृश्यताम्—

'अत्रानुगोदं मृगयानिवृत्तः०' अत्र 'वानीर'पदस्य तृणधान्यतृणेत्यर्थमाह । विचार्यतामिदं मार्मिकैः ( पृ. २९१ ) ।

'वल्मीकोदरसंभूतकपिकच्छूमहोदराः' । अत्र कपिकच्छूः 'कौंछ' इति भाषाख्यातौषधिः सर्वत्र प्रसिद्धा । किन्तु नागेशमहोदयः प्राह—कपिकच्छूर्वृश्चिकः । ( पृ. ६७१ ) ।

एवमेव 'लवली' 'रायआँवळे' इत्याह ( पृ. ६७२ ) ।

'साम्राज्यलक्ष्मीरियमृष्यकेतोः' इत्यत्र 'ब्रह्मसूर्ऋष्यकेतुः स्यात्' इति कामदेवार्थबोधकोऽमरकोषः सुप्रसिद्धः । किन्तु नागेशो व्याख्याति—'ऋष्यकेतोश्चन्द्रस्य' । 'ऋष्य'पदस्य कोषान्तरात्कुरङ्गरूपार्थस्य साधनेऽपि स्पष्टमस्वारस्यम् । सहृदयसंप्रदाये स्मर एव कामिनां सम्राट् समीर्यते । सुरभि-सुधाकरयोस्तु सचिवतैव साहित्ये समीक्षिता, समुचिता च । ( पृ. ३४५ ) ।

इदानीं भक्ति-पुराणयोपि नागेशसंबन्धी परिचयः प्राप्यताम्—अजामिलस्योद्धारो भगवत्कथासु सर्वत्र सुप्रसिद्ध इति सर्वेपि जानन्त्येव यदजामिलः क आसीदिति । किन्तु नागेशमहोदयो व्याख्याति—'अजमिलो राजा ! !' । नेदमेतावदेव, किन्तु स्वस्य पुराणपरिचयं प्रख्यापयन्प्राह—'भागवते प्रसिद्धोऽयमर्थः ! !' । कथामात्रेण भागवतं श्रुतवन्तस्तु जानन्ति—'कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः' ( पृ. ७७ ) ।

काव्यादिषु कियत्परिचय इत्यपि परिचीयताम्—'अस्याः सर्गविधौ प्रजापतिरभूत्' इति सुप्रसिद्धं कालिदासस्य विक्रमोर्वशीयं पद्यं यद्धि काव्यप्रकाशे दर्पणे चाप्युदा-

हृतम् । किन्तु नागेश एतद्व्याख्यायामाह—'मालतीमाधवे मालतीवर्णनमिदम्' । इत्यादि (पृ. ३४४) ।

लघुनि मुखे महती वार्तेति न ममोपरि कुप्यन्त्वार्यमिश्राः । किन्तु नव्यन्यायपण्डिताः केवलवैयाकरणा वा स्वस्वविषयस्य संबन्धमात्रेण ये सरलतममिति वराकेऽस्मिन् साहित्ये 'दीनस्य योषिज्जगतः प्रजावती[1]'ति हठात्प्रगल्भन्ते, अन्तस्तलपरीक्षायां तेषां सर्वेषामियमेव दशा विलोक्येतेति कृतं कोपाविष्कारेण हृदयदाहेन वा । अस्तु. भूमिकायां मुधा विस्तरः स्यादतो नागेशमहाभागस्य विषये या विप्रतिपत्तयो मया स्वटीकायां दत्तास्तासु काश्चित्पृष्ठाङ्कं प्रदाय सूच्यन्ते । सहृदयास्तत्र तत्र निरीक्षितुं प्रभवेयुः ।

'रतिं तदीयामपि' अत्र अप्यर्थविषये (पृ. १२१) कष्टत्वविषये (पृ. ७९) । बन्धशैथिल्ये (पृ. ७३) । 'गाढरक्ताः' इति विशेषणविषये (पृ. ६२) । 'गामवतीर्णा' अत्र व्याजोक्तिविषये (पृ. १४४) । अभिधया प्रतिपादकत्वमित्यस्य समाधाने (पृ. १७८) । अरविन्दवत्सौन्दर्यमस्येत्यस्य शाब्दबोधे (पृ. २५२) । आरोप्यमाणस्य प्रकृतोपयोग इत्यत्र (पृ. ३३३) । 'नरसिंह धरानाथ' अत्र (पृ. ३३७) । सुधांशुः प्रेयसीमुखमित्यस्य समाधाने (पृ. ३६९) । द्विनेत्र इव वासव इत्यस्यार्थे (पृ. ३८३) । नासत्ययोग इत्यस्यार्थे (पृ. ४०७) । 'पिबतामनल्पसुखदा' अत्र (पृ. ४०८) । 'न मनागपि निश्चिन्ते' इत्यत्र समाधाने (पृ. ४२६) । वासयति हीनसत्त्वानित्यत्र (पृ. ४३३) । दिवि भाति यथा भानुरित्यत्र (पृ. ४४२) । ईश्वरेण समो ब्रह्मा इति व्यतिरेकोदाहरणे (पृ. ४८०) । उन्मीलन्तो निमीलन्तः' अत्र (पृ. ४८३) । आबध्नासीति पद्ये (पृ. ४९४) । श्लेषप्रकरणे 'तत्र' इत्यस्यार्थे (पृ. ५२३) । रूपकदाक्षिण्यकौपीनमित्यस्यार्थे (पृ. ३००) । 'अनन्वयप्रकारस्य न व्यङ्ग्यता' इत्यस्यार्थे (पृ. २७७) इत्यादि ।

सत्यं त्विदम्—अर्थबोधाय कीदृशी टीकाऽपेक्षितेति विचारो नागेशमहाभागस्य नाभूदावश्यकः, खण्डनमात्राय टीकायां प्रवृत्तत्वात् । न चास्य विषयस्य सर्वथाऽनुभव एव । यतो हि टीकासापेक्षाणि कठिनस्थलानि सर्वथा परित्यजतीति तु स्पष्टमेव । किन्त्वाश्चर्यमिदं यत् अतिप्रसिद्धान्पदार्थान् यान् बालकोऽपि जानाति तान् स्थाने स्थाने व्याख्याति । यथा–'कीर्णं व्याप्तम् । तन्वी कृशा । श्रियं शोभाम् ।' (पृ. ९०) ।

'कलितकुलिशघाताः०' (पृ. ८७) एवंविधपद्यानां प्रतिपदव्याख्यां करोति । 'स्वाभाव्यादच्छमुक्ताफल०' (पृ.६६१) टीकासापेक्षाण्येवंविधपद्यानि तु स्पृशत्यपि न ।

१ 'प्रजावती भ्रातृजाया' ।

टीकायां लेखनक्रमोऽत्यन्तं भ्रामकः । बहुलानुसंधानेन बहुसमयव्ययेन च कथंचिदर्थस्य प्रतीतिः स्यात्सापि फल्गुः । यथा—'परस्पराध्यापनस्य बाधान्माधुर्यसंक्रान्तिविशेषस्य लक्षणया' इति मूलं व्याख्यातुं टीकाऽस्ति—'लक्षणयेत्यस्याध्यापयितुमिति पदेत्यादिः' । कोऽर्थ इति मीमांस्यतां प्रहेलिकेयम् । अस्तु. श्रूयतां नागेशमहोदयेनोच्यते 'माधुर्यसंक्रान्तिविशेषस्य अध्यापयितुं पदलक्षणया' । अर्थात् अध्यापयितुं पदस्य माधुर्यसंक्रान्तिविशेषरूपे लक्षणां कृत्वा । इदानीं विचार्यताम्—कियन्तो बुध्येरन्ननया टीकया? (पृ. २६९)।

'अत्रेत्यस्य इतीत्यादिः' । अर्थात् 'अहं लतायाः०' इत्यनन्तरं केवलम् 'अत्र' इति न वक्तव्यम् । किन्तु 'इत्यत्र' इति वक्तव्यम् । किमनेन खण्डनाभासेन निष्पन्नमिति मार्मिका बुध्येरन् (पृ. २६६)। एवं प्रायः स्थाने स्थाने ।

प्रतीकदानप्रकारोऽत्यन्तं भ्रामकः । 'विभेति० । प्रवदिति०' प्रतीकैः 'विभावादीनां बोधे' 'प्रवत्स्यत्पतिका' इत्यादिपदं बोधयितुमिच्छति । किमेतत्सरलतया बुध्येत ? व्याकरणे 'लशकु' 'अट्कु' इत्यादिना 'लशकतद्धिते' 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति यथा बुबोधयिषति तथाऽत्रापि 'मन्नीति०' इत्येतावन्मात्रं लिखति । अनेन 'मन्निर्मिताः पञ्च लहर्यः' इति प्रतीकं कथं वा झटिति बुध्येत? (पृ. १३४)।

किञ्च—'अनुत्थानात्' इति पदं सूचयितुम् 'उदिति' पदं कथमिव बोधकं भवत्विति श्रीमान्नागेश एव जानीयात् (पृ. १७४)।

एवं सत्यपि मर्मस्पर्शिनो विद्वांसष्टीकयाऽनया, संकेतेनापि सूचितं तत्त्वमवगम्य ग्रन्थयोजने साहाय्यमुपलभन्त एवेति को वा न वदेत् ?

## पूर्वसंस्करणम्

ग्रन्थस्यास्य दुरूहत्वाच्छुद्धपुस्तकानां चाऽलाभात्पूर्वेषु संस्करणेष्वपरिज्ञाता अशुद्धयस्तथाऽवाशिष्यन्त याभिर्वास्तवतत्त्वावधारणं विवेकिनामपि कठिनतममेवाभूत् । बुद्धिपूर्वकं सुदृढ-प्रौढभाषया निबद्धत्वात्प्रथमतो ग्रन्थ एवायं दुष्प्रवेशः । ततोपि मार्मिकतमानां निगूढसाहित्यविषयाणां गभीरतमो विमर्शः, यद्विषयको नान्यो ग्रन्थः संस्कृतसाहित्ये । तत्रापि चान्यैरालंकारिकैः सह संघर्षविषय इत्युत्तरोत्तरं काठिन्यपरम्परैव । यद्यपि नव्यन्यायादिपण्डिताः प्रकटं प्रगल्भन्ते किन्तु तेषां कृते यावत्साहित्यग्रन्थानां मर्मपरिज्ञानमनिवार्यमेव, यतो हि त एवाऽत्रालोचनाविषयाः । एवं सत्यपि ये महानुभावाः प्रतिपदपाण्डित्यमुचा न केवलं वाचा, अपि तु पाठनाडम्बरेणापि सर्वतो डिण्डिमं घोषयन्त्येतद्ग्रन्थगतविशेषाभिज्ञताया आत्मनः, ते न कथं धन्याः? तैरेतद्विषयको विशेषो यथावाचमवश्यावश्यं प्रकाश्य एव । बहवः खलु मुखतो घोषयन्त एव वराकाः परलोकपथिका बभूवुः । कार्ययुगमिदम्, न केवलं विकत्थनेन प्रतिष्ठाडम्बरं तिष्ठेत् । प्रकाण्डपण्डितस्वभावानुसारं लेखनादिषु न प्रवृत्तिश्चेन्मादृशः सेवको नियोज्यो येन तत्त्वविलोपस्तु न भवेत् । निश्छलनिवेदनं हि मम 'साहित्यवैभवे'—

'कवित्त'

'वाचां मर्म विज्ञायैव वाचीं विसृजन्ति सदा
ये केचिद्, वयं वै तेषां गृह्यका गुणज्ञानाम्
सुहृदां सहायाः, पुनः प्रणताः प्रसन्नहृदां,
चाराश्चतुराणां, वयं बन्धवो बहुज्ञानाम्।
मञ्जुनाथ मिथ्यैवाऽभिमानभरात्फुल्लमुखाः
केचिद्दुर्मुखा ये, तेषां भेत्तारोऽनभिज्ञानाम्
अज्ञानां सपत्नाः, शास्त्रविज्ञानां कृतज्ञाः, पुन-
र्निश्छलप्रतिज्ञा वयं सेवका रसज्ञानाम् ॥,

मार्मिकाणामपि मार्गे भ्रममुत्पादयन्त्यः कियत्यः कीदृश्यश्चाशुद्धय आसन्निति तु न संप्रति मुखतो वक्तव्यस्याऽऽवश्यकता । एतत्संस्करणेन निष्पक्षा विद्वांसः स्वयमेवावगच्छेयुः, म. म. पं. गिरिधरशर्मणां प्रारम्भिकवक्तव्याच्चापि किञ्चित्परिचिनुयुः । •

## काशीसंस्करणम्

आश्चर्यमिदं यद्विश्वविदितकीर्तीनां सुप्रसिद्धविद्वन्महाभागानां नाम्ना यत् पुस्तकं काश्यां मुद्रितं तदपि इयदशुद्धं यत्तेन पुस्तकेन यथार्थज्ञानं खपुष्पायितमेव । प्रक्रमविच्छेदो विरामचिह्नादिपरिष्कारस्तु संस्कृतपण्डितानां कृते विमार्ग्य एव, मुद्रणस्खलितान्यपि सोढव्यान्येव । किन्तु मार्मिकस्थलेषु मूलशुद्धिं तु सुप्रसिद्धपण्डितेभ्य आशासीरन्नेव जिज्ञासुवराकाः । विद्वन्महाभागैर्भूमिकायां काव्यमालातः पूर्वमेव वा, समकालमेव वा काश्यामेतन्मुद्रणं सूचितम्, किन्तु तैरेव लिखितं यत् 'यावद्वयं संपूर्णरसगङ्गाधरस्यान्वेषणं कुर्मस्ततः पूर्वमेव काव्यमालायां प्राकाश्यत तदिदम् । लाभोपि मुंबईमुद्रितपुस्तकेनैव, तथापि जनैरनुरुद्धा वयमेतत्प्रकाशयामः' । स्पष्टमस्य प्रकाशने शास्त्रिमहाभागानामरुचिरभिव्यज्यते । भूमिकायां श्रीमन्तो लिखन्ति— 'यथाशक्तिशोधने यतितम्, परमव्यक्ताः काश्चिद्विहाय व्यक्ताः शोधिताः' । एवं सत्यपि प्रतिस्थलं सुव्यक्ततमानामशुद्धीनां बाहुल्यं श्रीमताममनोयोगं स्फुटमभिव्यनक्ति । श्रीमद्भिः स्वयमकृत्वा, एतस्य शोधनमभ्युत्पन्नस्य फक्किकापण्डितस्य कस्यचिद्धस्ते दत्तम् । फलमस्येदमभूत यत् श्रीमतां नाममुद्रया स्थाने स्थाने सत्यमार्गाद्वयावर्तिता वराकाः ।

दृष्टान्तविधया वच्मि, न मे दुरभिसन्धिः । साहित्याचार्येण श्रीमता पुरुषोत्तमशर्मचतुर्वेदमहाभागेन रसगङ्गाधरे कियान्परिश्रमः कृत इति त एव तत्त्वतो जानीयुर्यैस्तदनूदितो हिन्दीरसगङ्गाधरस्याद्यावधि मुद्रितो भागो मनोयोगेन पौरोभाग्येनापि वा दृष्टः स्यात् । मूलशोधनं कृत्वा, एवंविधभाषायां लिखितस्य पुस्तकस्य हिन्दीभा-

---

१ वाचां वाणीं, भागुरेराप् । २ वश्याः । ३ प्रेष्याः ।

षायामर्थविशदीकरणं न यस्य कस्यचित्कार्यम्। सोपि यद् यत्र कुत्रचिन्मार्गं परित्य-जति तत्र सेयं काशीनाममुद्रैवापराध्यतीति जाने। भावोदयध्वनौ—वीक्ष्य वक्षसि० इति पद्ये ( प्राची० सं०१९४ ) 'हारलक्ष्मदर्शनं विभावः। बाहुलताकर्षणमनुभावः। रोषोदयो व्यङ्ग्यः' इति सुस्पष्टोयं ग्रन्थः ( यतो हि भावोदयध्वनिरुदाह्रियते )। किन्तु मुंबईपुस्तके मुद्रितमस्ति 'रोषादयो व्यङ्ग्याः'। शाब्दिनाममुद्रावाहिनि काशी-पुस्तकेपि तथैव। अत एवाहं तु सुदृढं विश्वसिमि यच्चतुर्वेदमहाभागो 'रोषादयो व्यङ्ग्याः' इत्यत्र पुस्तकद्वयसंवादं दृष्ट्वैव 'इनसे रोषादिक व्यङ्ग्य हैं' इति हिन्दीमक-रोत्। ( पृ. २८२ )।

अतिशयोक्त्यादीनि कानिचित्स्थलानि तु काशीपुस्तके तथाऽशुद्धानि सन्ति यानि दृष्ट्वा प्रत्येकमनसि भवेत् 'वाचाल( बहुगर्ह्यवाक् )तापेक्षया वराकस्य मूकस्य यथा मूकतैव वरं तथा ईदृशमुद्रणाऽपेक्षयाऽमुद्रणमेव श्रेयस्करम्' इति।

अस्तु. यथामति विहितमिदं मे शोधनं संमुखस्थमेव। मम नितान्तं मन्दप्रज्ञतया भूयांसि स्खलितानि संभाव्यन्तेऽस्मिन्सांप्रतमपि। अक्षरयोजककृता दृष्टिदोषनिमित्ता अशुद्धयस्त्वनिवार्या एव। किन्तु ग्रन्थयोजने वैपरीत्यमुपतिष्ठेत्तादृगशुद्धयो न कथंचित्स्युरिति मे विश्वासः।

## लघुटीका सरला

साहित्यशास्त्रे विमर्शविषय एकमात्रोयं ग्रन्थ इति सर्वेषामेव साहित्यमार्मिकाणाम-वश्यानुशीलनीयत्वेपि सांप्रतमाचार्यपरीक्षायां पाठ्यतया नियत इति यथा कथंचि-त्पाठनोपयोगमयमर्हति। किन्तु पूर्वोक्तकारणैर्विद्यार्थिनां क्लेशमुपतर्कयता मया वर्षद्व-यात्प्रागेव पञ्चदशवर्षैर्निजानुभवानुसारमध्यर्धग्रन्थस्य विस्तृतैका टीका शनैः शनैः प्राणीयत। किन्तु पञ्चमेऽस्मिन्संस्करणे लघुटीकासंयोजनमेवान्वमन्यत 'निर्णयसा-गरा'धिपतिभिः। अत एव प्रथमानने केवलमत्यावश्यकमंशं विशदयन्ती लघुटीका सेयं 'सरला' समारभ्यत पुरा, किन्तु भिक्षुपादप्रसारणन्यायेन शनैः शनैरग्रेऽस्याः स्वरूपं विस्तृतमेवाऽभवत्। प्रथमानने हि न तादृशः क्लिष्टो विषयः, भाषानूदित-ग्रन्थोपि च विद्यार्थिनां बहुत्रोपकरोतीति तर्कयन् द्वितीयानन एव यथाऽपेक्षम-कल्पयं विस्तरम्। गुणग्राहिणो मुद्रणालयाधिकृता अपि तमिममभ्यनन्दन्।

अत्र हि तर्कशैलीपरिष्कृताः पदार्था यावच्छक्यं विशदीकृताः। प्रतियोगि–अनु-योगि–अवच्छेदकादीनां प्रतिशब्दाभावेपि तत्संनिहितार्थवाहिभिरेव शब्दैरेषामर्थ-स्तथा विशदीकृतो येन जिज्ञासूनां तात्पर्यबोधे न बाधो भवेत्, कामं रूढिभक्ता विरक्ता भवेयुः। एवं मूलपङ्क्तीनामर्थविशदीकरणेप्यतिसरला भाषा व्यवहृता। अर्थ-बोधे भ्रमो मा भूदित्यभिसंधिना व्याकरणसन्धिरपि न कृत इति न कुर्वन्तु विग्रहं पण्डितपुंगवा इत्यर्थये। प्रारम्भे प्रकाशकानां संकोचेन कतिचित्पद्येष्वतिम्यूनैव

टीकास्ति, यत्र जटिलार्थानां वाक्यानां पदानां च अवयवविश्लेषणेन सह तात्पर्यावबोधाय यतितम्। द्वितीयानने तु—पङ्क्तीनां दुरूहतायां प्रतिपदव्याख्या, संपूर्णप्रघट्टकस्यैव काठिन्ये 'प्रघट्टकस्यास्येदं विशदीकरणम्' इत्यादिशीर्षकेण संदर्भबद्धं तस्य स्पष्टीकरणम्, इत्यादिबहुभिः-प्रकारैर्ग्रन्थसारल्याय चेष्टितम्। उत्प्रेक्षातोऽग्रे यथोत्तरं संकुचन्ती नागेशव्याख्या केवलं नाममात्रायैव। आवश्यकता च तत्र पूर्वतोऽप्यधिका। तत्र हि सेयं सरलैव मूलविशदीकरणाय प्रयतत इति स्पष्टमेव भवेत्पाठकानाम्।

## उपकारः

अस्य ग्रन्थस्य संपादने—प्राक्कथनलेखनेन, पाठसंशोधनानुमननेन, ग्रन्थग्रन्थिशिथिलीकरणेन च जयपुरराजकीयसंस्कृतकालेजाध्यक्षपदमधितिष्ठद्भिर्महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदमहोदयैर्महत् साहाय्यं मे व्यधायीति हृदयतस्तेषां कृतज्ञतामावहामि। दर्शनादिशास्त्रपाण्डित्येऽलंकारसाहित्ये कविताललित्ये धर्मोपदेशने नीतिनैपुण्येऽधिकारोचितप्रबन्धपाटवे वाग्मितायां च श्रीमन्तः सर्वत्रापि लब्धयशस इति महद्गौरवं संस्कृतपण्डितसमाजस्य। एवमेव परममार्मिकस्य साहित्याचार्यपं० श्रीपुरुषोत्तमचतुर्वेदमहाभागस्याप्युपकारभारमहमनल्पं धारयामि यतो हिन्दीरसगङ्गाधरावलोकनमपि मे शोधने सहायकमासीत्। श्रीमन्नाल्वडिकृष्णभूपास्थानविदुषा साहित्यालंकारसांख्ययोगवेदान्तविदुषा जग्गूवेङ्कटाचार्येण सप्तदशपृष्ठात्मिकायां लघुतमायां पुस्तिकायां रसगङ्गाधरपूर्वसंस्करणगत-१३५, १७४, १९१, ३१३, पृष्ठेषु या नागेशस्य टीका तस्याः सम्यक्खण्डनं कृतम्। अग्रेपि यदि वेंकटाचार्यमहोदयः प्रेक्षिष्यत तर्हि नागेशस्य रहस्यान्युपालप्स्यत। महाभागमिसमभिनन्दन्नहं नागेशरहस्याऽवगतये सरलामिमामेकवारं द्रष्टुमनुरुन्धे। अस्तु, अस्मिन्नध्यवसाये यः कश्चन गुणलेशः स एतदादीनामनुग्रहजन्यः[1]। पदे पदे संभाव्यमाना दोषास्तु ममैव मन्दस्य मतिवैभवमिति सविनयं विज्ञान् विज्ञापयामि—

दुर्दैवादसमस्तोपि प्रशस्तोयं प्रबन्धराट्।
एषोऽणुमात्रशेषोऽपि राकेशो रमयेन्मनः॥

श्रीकाशीनाथशास्त्रिप्रवरकरुणया प्रापितो वाक्प्रवेशं
श्रीलक्ष्मीनाथशास्त्रिप्रपदपरिचयाच्छास्त्रपाण्डित्यमाप्तः।
साहित्यं कृष्णशास्त्रिप्रणिहितदयया लब्धवान्, मातुलैः स्वैर्वाग्गुम्फं लम्भितोऽसाविति विनयभराद्वन्दते मञ्जुनाथः॥

विदुषामनुचरो

फाल्गु. शु. ४
सं. १९९५.

मञ्जुनाथोपनामा भट्टश्रीमथुरानाथशास्त्री

१ एतदादीनां परिचयस्तु 'जयपुरवैभव'तः प्राप्यः। प्राप्तिस्थानम्-'भट्टश्रीमथुरानाथ शास्त्री, नागरपाडा जयपुर' इति।

श्रीः

## [ षष्ठं संस्करणम् ]

गुणग्राहिणां संस्कृतसेविनां भूरि किल कृतज्ञो निर्णयसागराधिनेता सरलाप्रणेता चायं यत्स्वल्पतमेऽपि पूर्वसंस्करणावधौ तथा समाद्रियत सोयं निबन्धो यथा प्रतिबन्धोच्छ्रायमयेऽप्यस्मिन् महासमरसमये षष्ठमिदं संस्करणमञ्जसा संघटनीयमेवाऽभूत् । वारेऽस्मिन्नध्येतृणां बोधसौकर्याय स्थाने स्थाने परिवर्धिता सेयं सरला, परिवर्धितानि परिवर्तितानि चाक्षराणि स्थले स्थल एव सौकर्याय तेषाम् । समेधितो भूमिकायामपि भूयान् भागः, प्रयतितमधिकाधिकं च शोधनमार्मिकतायामित्यादिना किं वा निवेदितेन । स्वयमिदमवगतं स्यात्सूक्ष्मदृशाम् । अस्तु.

अधिकद्विसहस्रतमे ( २००२ ) मनोरमे वैक्रमे वर्षे ।
विद्वत्कृपया प्रष्ठं व्यधायि षष्ठं परिष्करणम् ॥
गुणज्ञानां कृतज्ञात्मा विज्ञान्विज्ञापयत्ययम् ।

भट्टश्रीमथुरानाथशास्त्री जयपुरालयः ॥



# रसगङ्गाधरे प्रमापकाः ।

# जगन्नाथपण्डितराजः।

"जगन्नाथपण्डितस्तैलङ्गदेशाज्जयपुरे[1] समागत्य पाठशालां स्थापितवान्, पराजितवांश्च विवादे तत्र दिल्लीनगरादागतं 'काजी'ति प्रसिद्धं कंचन यवनपण्डितं सत्वरमेव तन्मतग्रन्थानधीत्य. ततश्च 'काजी'मुखात्तद्विद्याबुद्धिचमत्कारमाकर्ण्य परितुष्यता दिल्लीनरेन्द्रेण पण्डितो जयपुरात्समाहूतः, सभाजितश्च. तत्र च कस्यांचन यवनकन्यायामासक्तो[2] बादशाहानुग्रहेण तां परिणीय तया सह सुखेनातिवाहितवान्यौवनं बादशाहसमाश्रय एव. वार्धके च वाराणस्यां गतो 'यवनीसंसर्गदूषितोऽयम्' इत्यप्पयदीक्षितादिपण्डितैस्तिरस्कृतो ज्ञातिबहिष्कृतश्च गङ्गातटे गत्वा सोपानपङ्क्तिशिखरे समुपविष्टस्तत्क्षणनिर्मितैर्भक्तिभरितैः पद्यैर्गङ्गां स्तोतुमुपचक्रमे[3]. भक्तवत्सला गङ्गापि प्रतिश्लोकमेकैकं सोपानमधिरोहन्ती द्वापञ्चाशन्मिते श्लोके प्रणीते प्राप्तवती पण्डितराजोपकण्ठम्, प्लावितवती च सत्वरमेव यवनीसमेतमेनम्. ततश्चासूयामत्सराभ्यां दूषिता वाराणसेयाः पण्डितास्तादृशं पण्डितराजप्रभावमालोक्यातीव विलक्षा बभूवुः" इत्येके वदन्ति. अपरे त्वेवं कथयन्ति—"दिल्लीनरेन्द्रकृपापात्रतां प्राप्तस्य तत्प्रसादालब्धश्रियस्तारुण्यतिमिरतिरस्कृतविवेकालोकस्य जगन्नाथपण्डितस्य बभूव कस्यांचन यवनयुवत्यामासक्तिः सा च कियत्कालानन्तरं पञ्चत्वं गता. ततस्तद्विरहातुरः पण्डितोऽपि दिल्लीं परित्यज्य वाराणस्यामागतस्तदाचरणमाकर्णितवद्भिस्तत्रत्यैः पण्डितैर-

---

१ जयपुरे तु महाराष्ट्रदेशस्थब्राह्मणः सम्राड्जगन्नाथपण्डितो भिन्न एवासीत्, यत्संततिरद्यापि जयपुरसमीपे ब्रह्मपुर्यां वर्तते, यश्च महाराजसवाईजयसिंहाज्ञया १७३१ खिस्ताब्दे सिद्धान्तसम्राजम्, सिद्धान्तकौस्तुभम्, पञ्चदशाध्यायात्मकस्य 'ग्रीक'भाषानिबद्धस्य 'यूक्लीड्'प्रणीतस्य ग्रन्थस्य रेखागणितनामकं संस्कृतानुवादं च विरचितवान्. महाराजसवाईजयसिंहस्तु १६८८ खिस्ताब्दे जन्म लेभे, १७०० खिस्ताब्दे राज्यसिंहासनमधिरूढः, १७१४ खिस्ताब्देऽश्वमेधयागं कृतवान्, १७२८ खिस्ताब्दे च परलोकं जगामेति जयपुरेतिहासे समुपलभ्यते. २ 'यवनीरमणी विपदः शमनी कमनीयतमा नवनीतसमा। उहिऊहिवचोऽमृतपूर्णमुखी स सुखी जगतीह यदङ्कगता॥', 'यवनी नवनीतकोमलाङ्गी शयनीये यदि नीयते कदाचित्। अवनीतलमेव साधु मन्ये न वनी माघवनी विनोदहेतुः॥,' 'न याचे गजालिं न वा वाजिराजिं न वित्तेषु चित्तं मदीयं कदापि। इयं सुस्तनी मस्तकन्यस्तहस्ता लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥' इत्याद्याः पण्डितराजप्रणीता यवन्यासक्त्यनुमापकाः श्लोकाः सन्तीति केचिद्वदन्ति, परमेते पण्डितराजग्रन्थेष्वस्मद्दृष्टेषु नोपलभ्यन्ते. ३ सैव स्तुतिरधुना 'गङ्गालहरी'नाम्ना प्रसिद्धा सर्वत्र भागीरथीभक्तैः पठ्यते. ४ अत्र भामिनीविलासस्य तृतीयो विलासः प्रमाणमिति वदन्ति, तैस्तु रसगङ्गाधरे करुणप्रकरणे समुदाहृतात् 'अपहाय सकलबान्धवचिन्तामुद्वास्य गुरुकुलप्रणयम्। हा तनय विनयशालिन्कथमिव परलोकपथिकोऽभूः॥' इत्यस्मात्पद्यात्पण्डित(राज)स्य पुत्रमरणमपि कुतो नानुमीयते ?

नाद्दतो दुराचरणानुशयेन तिरस्कारेण प्रियतमाविरहानलेन च दूयमानमनाः कुत्रापि निर्वृतिमलभमानः स्वकृतां गङ्गालहरीं पठन्प्रावृषि प्रवृद्धे गङ्गाप्रवाहे झम्पामदत्त, निममज्ज च तत्रैव." एवमन्या अपि नानाविधाः पण्डितराजविषयिण्यो जनश्रुतयः श्रूयन्ते. एताः सर्वा अपि प्रमाणशून्या इत्युपेक्ष्य पण्डितराजप्रणीतग्रन्थेभ्यो यदवगतं यच्चानुमितं तदेवात्र सप्रमाणमस्माभिः पुरस्क्रियते—

आसीत्तैलङ्गाभिजनो वेगिनाडकुलोत्पन्नः पेरुभट्टाख्यो महीसुरसत्तमः, यो वाराणस्यां ज्ञानेन्द्रभिक्षोर्वेदान्तशास्त्रम्, महेन्द्रपण्डिताद्न्यायवैशेषिकदर्शने, खण्डदेवात्पूर्वमीमांसाम्, शेषोपाह्ववीरेश्वरपण्डिताच्च महाभाष्यमधीतवान्. तस्माल्लक्ष्मीनामिकायां तद्धर्मपत्न्यां जगन्नाथो जन्म लेभे, पठितवांश्च निखिलानि शास्त्राणि प्रायः स्वपितुरेव. प्राप्तयौवनश्चाश्रयेच्छया दिल्लीनगरे समागत्य शक्रोपमवैभवस्य शाहजहानाभिधयवनसार्वभौमस्य संसदि प्रवेशं लब्धवान्. अधिगतवांश्च निजविद्याचमत्कारपरितोषितात्तस्मादेव पण्डितराजपदवीम्. स्थितश्च मध्यमे वयसि प्रायस्तत्रैव तत्समीपे तत्सूनोर्दाराशिकोहस्य समीपे च. शाहजहानमहीपतिस्तु १६२८ खिस्ताब्दे राजसिंहासनमधिरूढः, १६५८ खिस्ताब्दे औरङ्गजेबनाम्ना स्वपुत्रेण कारागारे निवेशितः, १६६६ खिस्ताब्दे च पञ्चत्वं गतः. दाराशाहस्तु प्रागेव दुर्दशामनुभाव्य औरङ्गजेबेन घातितः. पण्डितराजोऽपि वार्धके काश्यां मथुरायां वा गत्वा परमेश्वराराधनेन वयःशेषं नीतवान्. तस्मात्खिस्ताब्दीयसप्तदशशतकमध्यभागे पण्डितराज आसीदिति सुव्यक्तमेव.

१ 'तैलङ्गान्वयमङ्गलालय-' इत्यादि प्राणाभरणसमाप्तिस्थे पद्ये, अग्रे समुद्धृते आसफविलासारम्भस्थे गद्ये च स्फुटमस्य तैलङ्गत्वम्. २ केषुचिद्भामिनीविलासपुस्तकेषु समाप्तौ 'इति श्रीमदखिलान्ध्रवेगिनाडिकुलावतंस-' इत्यादि समुपलभ्यते. ३ पेरुभट्टस्य पेरमभट्ट इत्यपि नामान्तरं प्राणाभरणान्ते समुपलभ्यते. ४ सिद्धान्तकौमुदीटीकातत्त्वबोधिन्याः कर्तायं ज्ञानेन्द्रभिक्षुः स्यात्. ५ स्वपितुर्गुरोः शेषोपाह्ववीरेश्वरपण्डितादपि किंचिदधीतवानिति मनोरमाकुचमर्दनारम्भे समुपलभ्यते. ६ 'अथ सकललोकविस्तारविस्तारितमहोपकारपरम्पराभिरामानन्देन प्रतिदिनमुद्यदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविभिरुपास्यमानेन कृतयुगीकृतकलिकालेन पुनीतितृणजालसमाच्छादितेश्वरमार्गावलोकनाय समुद्दीपितसुकविदहनज्वालाजालेन मूर्तिमतेव नव्यावासफखानमनःप्रसादेन द्विजकुलसेवाहेवाकिना मनःपातेन मातुलकुलस्तुतेनुना शाहशुजादेवादिष्टेन सार्वभौमश्रीशाहजहांप्रसादाधिगतपण्डितराजपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत। सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात्।' एतद्गगासफविलासप्रारम्भे समुपलभ्यते. ७ 'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः' इति भामिनीविलासान्ते वर्तते. ८ जगदाभरणे दाराशाहस्यैव वर्णनं कृतमस्ति. ९ भामिनीविलासान्ते 'संप्रत्यन्धकशासनस्य नगरे तत्त्वं परं चिन्त्यते' इत्यस्ति. केषुचित्पुस्तकेषु 'संप्रत्युज्झितवासनं मधुपुरीमध्ये हरिः सेव्यते' इत्यपि पाठः समुपलभ्यते. तत्रान्धकशासनस्य नगरं काशी, मधुपुरी च मथुरेति ज्ञेयम्.

अद्यावधि ज्ञाताः पण्डितराजप्रणीता ग्रन्थास्त्वेते—

(१) अमृतलहरी—यमुनास्तुतिरूपोऽयं ग्रन्थः काव्यमालायां मुद्रितः.

(२) आसफविलासः—अत्र नव्वाबासफखानस्य वर्णनमस्ति. रसगङ्गाधरेऽपि पद्यद्वयमासफनामाङ्कितं समुपलभ्यते, तच्चास्मादेव समुद्धृतं स्यात्. ग्रन्थोऽयमद्यापि नास्माभिरुपलब्धः. केवलं पूर्वं टिप्पण्यामुद्धृतं गद्यमलवरमहाराजाश्रितपण्डितभवानन्दोदयानन्दरामचन्द्रशर्मभिर्लिखित्वा पूर्वतरे वर्षे प्रहितमासीत्. अस्मत्समीपेऽप्ययं ग्रन्थः संपूर्णो नास्तीत्यपि तैरुक्तम्.

(३) करुणालहरी—विष्णुस्तुतिरूपा काव्यमालायां मुद्रिता.

(४) चित्रमीमांसाखण्डनम्—अत्राप्पयदीक्षितकृतचित्रमीमांसाया दूषणानि संकलितानि सन्ति. काव्यमालायां मुद्रितम्.

(५) जगदाभरणम्—अत्र शहाजहानसूनोर्दाराशिकोहस्य स्तुतिरस्ति. किंतु प्राणाभरणसमानमेवैतत्काव्यम्. प्रायः प्राणनारायणनामस्थले दाराशाहस्य नाम न्यस्तमस्ति. अस्यैकं पुस्तकं कोटानगरनरेन्द्राश्रितकैलासवासिगङ्गावल्लभपण्डितसमीपे दृष्टमासीत्.

(६) पीयूषलहरी—इयं गङ्गालहरीनाम्ना सुप्रसिद्धा सदाशिवचतुर्भुजरामचन्द्रादिकृतकतिपयटीकासमेता सुलभा मुद्रिता च.

(७) प्राणाभरणम्—अत्र कामरूपदेशाधिपतेः प्राणनारायणमहीभृतो वर्णनमस्ति. मुद्रितं चैतत्काव्यमालायाम्. एतट्टिप्पणमपि पण्डितराजकृतमेवास्ति.

(८) भामिनीविलासः—अयं पण्डितराजप्रणीतपद्यसंग्रहरूपो ग्रन्थः सर्वत्र सुलभ एव, मुद्रितश्च बहुवारम्. मोडकोपाह्वपण्डिताच्युतरायप्रणीता भामिनीविलासटीका समूला निर्णयसागरयन्त्रालये मुद्रिता.

(९) मनोरमाकुचमर्दनम्—अयं ग्रन्थो भट्टोजिदीक्षितप्रणीताया मनोरमायाः खण्डनरूपो विरलप्रचार एव. तत्रास्माभिरुपलब्धस्य पुस्तकस्य प्रारम्भे—"लक्ष्मीकान्तपदाम्भोजमानम्य श्रेयसां पदम् । पण्डितेन्द्रो जगन्नाथः स्यति गर्वं गुरुद्रुहाम्[1] ॥' इह केचि[2]न्निखिलविद्वन्मुकुटमयूखमालालालितचरणकमलानां गीर्वाणगणगौरवग्राममांसलमहिममण्डिताखण्डमहीमण्डलानां शेषवंशावतंसानां श्रीकृष्ण[3]पण्डितानां चिरायार्चितयोः पादुकयोः प्रसादासादितशब्दानुशासनास्तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवशंवदीभवन्तस्तत्र[4]भवद्भिरुल्लासितं [5]प्रक्रियाप्रकाशमाशयानवबोधनिबन्धनैः (नवबोधनिबन्धनैः) दूषणैः स्वयं निर्मितायां मनोरमायामाकुल्यकार्षुः

१ भट्टोजिदीक्षितानाम्. २ भट्टोजिदीक्षिताः. ३ अयमेव शेषश्रीकृष्णपण्डितः कंसवधपारिजातहरणयोः कर्तेति भाति, यतः कंसवधप्रस्तावनायामप्यात्मनो वैयाकरणतां प्रकटयति, अथ च समयेऽपि साम्यमस्तीति सुधीभिर्विचारणीयम्. ४ शेषश्रीकृष्णैः. ५ प्रक्रियाप्रकाशः प्रक्रियाकौमुदीटीका.

सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुपण्डितवीरेश्वराणां तनयैर्दूषितापि स्वमतिपरीक्षार्थं पुनरस्माभिर्निरीक्ष्यते। तत्र तावत्सार्वधातुकमपिदिति सूत्रगतकौस्तुभे—इत्यादिना संख्यावद्भिरुपहसनीयमर्थं निरूपयताम्, तथाणुदित्सूत्रगतकौस्तुभे—इत्यर्थस्य निर्णयेन विलक्षणं स्वव्युत्पत्तिपाटवमुद्गिरताम्, भवते इति सूत्रगतमनोरमायां—शपः प्रवृत्तिं समर्थयमानानां गुरुद्वेषदूषितमतीनां यद्यपि पुरुषायुषेणापि न शक्यन्ते गणयितुं प्रमादास्तथापि दिङ्मात्रेण कानपि कुशाग्रीयधिषणेषु निरूपयामः।" इत्यादि वर्तते.

(१०) यमुनावर्णनम्—गद्यनिबद्धोऽयं ग्रन्थो नाद्याप्युपलब्धः रसगङ्गाधर उदाहृतानि द्वित्राणि गद्यान्यस्य समुपलभ्यन्ते.

(११) लक्ष्मीलहरी—काव्यमालायां मुद्रितैव.

(१२) सुधालहरी—काव्यमालायां मुद्रितैव.

(१३) रसगङ्गाधरः—अयं पण्डितजगन्नाथस्य मुख्यो ग्रन्थः, किंतु सर्वत्रासमाप्त एव लभ्यते. अद्यावधि दृष्टेष्वस्माभिर्नवसु पुस्तकेष्वेकमप्युत्तरालंकारप्रकरणं नातिक्रामति. पण्डितराजात्स्वल्पकालानन्तरं समुत्पन्नेन नागेशभट्टेनाप्ययं ग्रन्थ उत्तरालंकारप्रकरणान्तमेव प्राप्तः, यतस्तत्प्रणीता रसगङ्गाधरटीकाप्युत्तरालंकारप्रकरणपर्यन्तमेवास्ति. अतः पञ्चाननात्मकः संपूर्णोऽयं ग्रन्थः कदाचिदुपलप्स्यत इति दुराशामात्रम्. ग्रन्थसमाप्तिं कर्तुमपारयन्मध्य एव पण्डितराजः परलोकं गत इत्यपि वक्तुं न युज्यते. यतश्चित्रमीमांसाखण्डनमनेन रसगङ्गाधरानन्तरं प्रणीतमिति तत्प्रारम्भे स्फुटमस्ति. केवलमेतावदनुमीयते—अप्पयदीक्षितद्वेषेण चित्रमीमांसानुकरणप्रवृत्तः पण्डितराजोऽपि स्वग्रन्थं चित्रमीमांसावदसमाप्तमेव स्थापितवान्. चित्रमीमांसा तु बुद्धिपूर्वमेवाप्पयदीक्षितेन समाप्तिं न नीतेति तत्समाप्तिस्थश्लोकतो ज्ञायते.

एवं त्रयोदशग्रन्थाः पण्डितराजप्रणीता ज्ञायन्ते. शशिसेना, पण्डितराजशतकं चेत्यन्यदपि ग्रन्थद्वयं पण्डितराजप्रणीतमस्तीति कैश्चिदुच्यते.

(१) अश्वधाटी-रतिमन्मथ-वसुमतीपरिणयकर्ता तञ्जौरनगरवासी जगन्नाथः, (२)

---

१ मनोरमा, २ पुराकृपश्रकमम्माभिः साक्षाद्दृष्टम्, पुस्तकचतुष्टयस्य त्वन्तिमा पङ्क्तिरस्मन्मित्रैः काश्यादिनगरेभ्यो लिखित्वा प्रहिता दृष्टा. ३ 'नामंनामं घनश्यामं धाम तामरसेक्षणम्। पण्डितेन्द्रो जगन्नाथशर्मा निर्माति कौतुकम्॥,' 'रसगङ्गाधरे चित्रमीमांसायां मयोदिताः। ये दोषास्तेऽत्र संक्षिप्य कथ्यन्ते विदुषां मुदे॥,' 'सूक्ष्मं विभाव्य मयका समुदीरितानामप्पय्यदीक्षितकृताविह दूषणानाम्। निर्मत्सरो यदि समुद्धरणं विदध्यादस्याहमुज्ज्वलमतेश्चरणौ वहामि॥' इति चित्रमीमांसाखण्डनप्रारम्भश्लोकाः. ४ 'अप्यर्धचित्रमीमांसा न मुदे कस्य मांसला। अनूरुरिव तीक्ष्णांशोरर्धेन्दुरिव धूर्जटेः॥' अयं चित्रमीमांसासमाप्तौ श्लोकः. ५ काव्यमालाया द्वितीयेऽङ्के प्राणाभरणप्रारम्भटिप्पणेऽश्वधाटी रतिमन्मथं वसुमतीपरिणयं चेति ग्रन्थत्रयं पण्डितराजप्रणीतग्रन्थनाममालायां भ्रमेण लिखितमासीदिति ज्ञेयम्.

रेखागणितादिकर्ता सम्राड्जगन्नाथः, ( ३ ) विवादभङ्गार्णवकर्ता जगन्नाथतर्कपञ्चाननः, ( ४ ) अतन्द्रचन्द्रिकनाटककर्ता जगन्नाथमैथिलः, ( ५ ) अनङ्गविजयभाणकर्ता श्रीनिवाससूनुर्जगन्नाथपण्डितः, ( ६ ) सभातरङ्गकर्ता जगन्नाथमिश्रः, ( ७ ) अद्वैतामृतकर्ता जगन्नाथसरस्वती, ( ८ ) समुदायप्रकरणकर्ता जगन्नाथसूरिः, ( ९ ) शरभराजविलासकर्ता जगन्नाथः, ( १० ) ज्ञानविलासकाव्यकर्ता नारायणदैवज्ञसूनुर्जगन्नाथः, ( ११ ) अनुभोगकल्पतरुकर्ता जगन्नाथः, इत्याद्या बहवो जगन्नाथनामानः पण्डिताः समभूवन्, ते सर्वेऽपि पण्डितराजाद्भिन्ना इति ज्ञेयम्.

१. अयं जगन्नाथोऽपि तञ्जोरनगरवास्तव्य आसीदिति रतिमन्मथादिप्रणेतुर्न भिन्न इति भाति.

# नागेशभट्टः।

अयं रसगङ्गाधरटीकाप्रणेता कालोपनामकदेशस्थमहाराष्ट्रब्राह्मणशिवभट्टसतीदेव्योः सूनुर्नागेशभट्टः काश्यां कस्मिन्समय आसीदिति विचारे मनोरमाकुचमर्दन-शब्दरत्न-मञ्जूषादिग्रन्थविलोकनेनेत्थं पुरुषपरम्परावगता—

शेषश्रीकृष्णः




अत्र पण्डितराजाद्द्वितीयः पुरुषो नागेश आसीदिति ज्ञायते. पूर्वनिर्णीते आसन्ने जगन्नाथपण्डितराजसमये १६६६ खिस्ताब्दे पुरुषद्वयपर्याप्तानि चत्वारिंशद्वर्षाणि योज्यन्ते चेत्तदा १७०६ खिस्ताब्दोऽयमासन्नो नागेशसमयः समायाति. अथ च "जयपुरमहाराजाः श्रीसवाईजयसिंहवर्माणोऽश्वमेधप्रसङ्गे नागेशभट्टाय निमन्त्रणपत्रं प्रहितवन्तः. तदा नागेशेन 'अहं क्षेत्रसंन्यासं गृहीत्वा काश्यां स्थितोऽस्मि, अतस्तां परित्यज्यान्यत्र गन्तुं न शक्नोमि' इत्युत्तरं प्रहितम्" एषा किंवदन्ती जयपुरेऽधुनापि प्रसिद्धास्ति. श्रीजयसिंहमहाराजाश्च १७१४ खिस्ताब्देऽश्वमेधं कृतवन्त इत्युक्तमेव प्राक्, अयमश्वमेधसंवत्सरोऽपि पूर्वलिखित १७०६ खिस्तसंवत्सरासन्न एवेति खिस्ताब्दीयाष्टादशशतकप्रथमतुरीयांशे नागेशभट्ट आसीदिति व्यक्तमेव. केचित्तु खिस्ताब्दीयाष्टादशशतकपूर्वार्धानन्तरं नागेशसत्तां कथयन्ति.

हरिदीक्षितशिष्योऽयं नागेशभट्टः स्वशिष्याच्छृङ्गवेरपुराधीशबिसेनवंशसमुद्भूतरा-

१. 'अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात्। न्यायतन्त्रं रामरामाद्वादिरक्षोघ्नरामतः॥ याचकानां कल्पतरोररिकक्षहुताशनात्। शृङ्गवेरपुराधीशरामतो लब्धजीविकः॥ वैयाकरणनागेशः स्फोटायनऋषेर्मतम्। परिष्कृत्योक्तवांस्तेन प्रीयतामुमया शिवः॥ हठस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः। दृषदोऽपि हि संतीर्णाः पयोधौ रामयोगतः॥' एते श्लोका मञ्जूषादिसमाप्तौ वर्तन्ते. २. बिसेनवंशजलधौ पूर्णः शीतकरोऽपरः। ······नाम्ना हिम्मतिवर्माभूद्धैर्येण हिमवानिव। ······तस्माज्जातो रामदत्तश्चन्द्राच्चान्द्रिरिवापरः।······तेन श्रीरामभक्तेन सर्वा विद्याः प्रजानता। शृङ्गवेरपुरेशेन रिपुकक्षदवाग्निना॥ अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा।

मनृपाल्लब्धजीविको बहून्ग्रन्थान्प्रणीतवान्, तत्राद्यावधि ज्ञाता ग्रन्थास्त्वेते—( १ ) काव्यप्रदीपोद्द्योतः, ( २ ) परमलघुमञ्जूषा, ( ३ ) परमार्थसारविवरणम्, ( ४ ) परिभाषेन्दुशेखरः, ( ५ ) प्रायश्चित्तेन्दुशेखरः, ( ६ ) बृहच्छब्देन्दुशेखरः, ( ७ ) बृहन्मञ्जूषा, ( ८ ) भाष्यप्रदीपोद्द्योतः, ( ९ ) योगसूत्रवृत्तिः, ( १० ) रसगङ्गाधरमर्मप्रकाशः, ( ११ ) रसतरङ्गिणीटीका, ( १२ ) रसमञ्जरीटीका, ( १३ ) लघुमञ्जूषा, ( १४ ) लघुशब्देन्दुशेखरः, ( १५ ) वृत्तिसंग्रहः, ( १६ ) वेदान्तसूत्रवृत्तिः, ( १७ ) सप्तशतीस्तोत्रटीका, ( १८ ) सांख्यसूत्रवृत्तिः, ( १९ ) सापिण्ड्यनिर्णयः.

काव्यप्रकाशोद्द्योतः, न्यायसूत्रवृत्तिः, मीमांसासूत्रवृत्तिः, वैशेषिकसूत्रवृत्तिः, एतद्ग्रन्थचतुष्टयमन्यदपि नागेशप्रणीतमस्तीति केचिद्वदन्ति. स्वगुरोर्हरिदीक्षितस्य नाम्ना शब्दरत्नम्[1], स्वप्रभोः शृङ्गवेरपुराधीशरामस्य नाम्नाध्यात्मवाल्मीकीयरामायणयोष्टीकाद्वयं च नागेशभट्टेनैव प्रणीतमित्यपि प्रसिद्धिरस्ति.

भट्टनागेशशिष्येण बध्यते रामवर्मणा ॥ सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ ।' एते श्लोका अध्यात्मरामायणटीकाप्रारम्भे सन्ति. २. शृङ्गवेरपुरं गङ्गातीरे वर्तत इति वाल्मीकिरामायणेऽयोध्याकाण्डे पञ्चाशत्तमे सर्गेऽस्ति. अध्यात्मरामायणेऽयोध्याकाण्डे पञ्चमे सर्गे च 'गङ्गातीरं समागच्छच्छृङ्गिवेराविदूरत ।' इत्यादि ( ६० ) श्लोकटीकायां 'शृङ्गिवेरं शृङ्गिऋष्याश्रमः । तदविदूरतस्तत्पूर्वभागे' इत्यस्ति. कोलब्रुक् ( H. T. Colebrooke ) पण्डितोऽपि 'मिस्सेलेनिअस् एस्सेस ( Miscellaneous Essays ) नामकग्रन्थे ( द्वितीयभागे १३ पृष्ठे टिप्पणे ) 'शृङ्गवेरपुरं गङ्गातटोपरि सिंघोरनाम्ना ख्यातं प्रयागादुपरिभागे वर्तते' इति वदति.

१. शब्दरत्ने नागेशस्य तत्कृतशेखरमञ्जूषयोश्च नाम समुपलभ्यते.

# रसगङ्गाधरायाविषयानुक्रमः।

**द्वितीयमाननम्**

पण्डितराजश्रीजगन्नाथविरचितो

# रसगङ्गाधरः।

## नागेशभट्टकृतया गुरुमर्मप्रकाशाख्यव्याख्यया मञ्जुनाथकृतया सरलया च समेतः।

### प्रथममाननम्।

स्मृतापि तरुणा[1]तपं करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी॥

---

नत्वा गङ्गाधरं मर्मप्रकाशं तनुते गुरुम्।
रसगङ्गाधरमणेरतिगूढार्थसंविदे॥
याचकानां कल्पतरोररिकक्षहुताशनात्।
नागेशः शृङ्गवेरेशरामतो लब्धजीविकः॥

प्रारिप्सितप्रतिबन्धकदुरितशमनाय शृङ्गारालम्बनादिविभावतया तद्देवतात्वेन च समुचितस्वेष्टदेवतावस्तुनिर्देशरूपं मङ्गलमाचरञ्शिष्यशिक्षायै व्याख्यातृश्रोतृणामनुषङ्गतो मङ्गलाय च निबध्नाति—**स्मृतापीति**। कादम्बिनी मेघपङ्क्तित्वेनाध्यवसिता कृष्णमूर्तिः। विलक्षणश्यामत्वात्सकलमेघकार्यकरत्वाच्च। अत एव मेघत्वेनाध्यासः। कापीत्यनेनात्र तद्धर्मसत्त्वेऽपि ततोऽधिककार्यकारित्वेन प्रसिद्धकादम्बिनीतो व्यतिरेकस्तत्र बोध्यते। मतिचुम्बिनी मतिविषयः। भवत्विति प्रार्थने लोट्। व्यतिरेकपोषकं विशेषणत्रयम्। प्रसिद्धा सा तु दृष्टा वर्षणद्वारा स्पृष्टा वा स्वाभाव्याद्वृषस्थभान्वातपान्यतापं केषांचित्त तु सर्वेषां भूतभविष्यद्वर्तमानभेदेन हृतवती। इयं तु स्मृतापि। दृष्टादिसमुच्चायकोऽपिः। तरुणातपम्। तमपि करुणया न तु यथाकथंचित्। नृणां सर्वेषां न तु केषांचित्। हरन्ती न तु जहार हरिष्यति वा। किं च सा भङ्गशीलतनुकान्तिविद्युता वलयिता वेष्टिता।

---

गणनाथे नतिमयता मथुरानाथेन मञ्जुनाथेन।
गङ्गाधराध्वतरला सरला परिलाप्यते सेयम्॥

---

१ तरुणं प्रचण्डम् आतपम्।

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ॥

पाषाणादपि पीयूषं स्यन्दते यस्य लीलया ।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥

निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः ।

---

इयं तु चिरकालस्थायिशरीरकान्तीनां विद्युतां तत्त्वेनाध्यवसितानां गोपाङ्गनानां शतैर्न लेकद्विश्यादिभिर्वलयिता वेष्टिता । यद्वा 'धान्येन धनवान्' इतिवत्तृतीया । तदभिन्नसंजातवलया । कलिन्दाख्यमहीधरोत्पन्नयमुनातीरे सुरद्रुमा नीपाः । तेषां तत्त्वं तु हरिप्रियत्वात् । 'मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे' इति लिङ्गाच्च बोध्यम् । यद्वा तीरमेव सुरद्रुमास्तत्त्वेन प्रसिद्धाः पञ्च, तदाश्रयिका । सा तु वियत्सरण्याश्रयिकेति भावः । यद्वा कादम्बिनीत्वेनाध्यवसिता काली । सा च कृष्णमूर्तिः, वृन्दावनाधिष्ठात्री देवता राधा वा । विद्युत्त्वेनाध्यवसितास्तत्परिचारकदेव्यः । तृतीयविशेषणार्थस्तु स्पष्ट एवेति बोध्यम् । अत्र व्यतिरेकरूपकातिशयोक्त्योरङ्गाङ्गिभावाख्यः संकरः ॥

स्वोक्तेः कल्पितत्वनिरासाय स्वविद्यायाः सांप्रदायिकत्वसूचनाय च गुरुनतिं द्वाभ्यामाह—**श्रीमदिति** । श्रीः सरस्वती ब्रह्मवर्चसं वा । ज्ञानेन्द्राख्ययतेः सकाशादित्यर्थः । पूर्वार्धे य इत्युभयत्रान्वेति । उत्तरार्धे य इति त्रिषु । प्रपञ्चे निखिलत्वोक्त्या लेशतोऽपि तदत्यागः सूचितः । कणादाक्षपादाभ्यां प्रोक्ता गम्भीरवाण्यः । न्यायवैशेषिकशास्त्राणीति यावत् । देवादेव । एवः प्रसिद्धौ । खण्डदेवादेवेत्यर्थः । स्मरेति । काश्यां जैमिनिप्रोक्तं शास्त्रम् । शेष इत्यङ्क उपनाम यस्य तस्माद्वीरेश्वरपण्डितात्प्राप्ता शेषस्य पतञ्जलेरमला भणितिर्महाभाष्यरूपा येन तादृशः । उपसंहरति—**सर्वेति** । एतेन तदितरशास्त्रवेदादिज्ञातृत्वं सूचितम् । अत्र य इत्यस्य तमित्युत्तरश्लोकेनान्वयः ॥

**पाषाणादपीति** । यच्चेष्टाविशेषेण जडादप्यमृतस्रावश्चेतनादिति तु किमु वाच्यम् । इत्यनेन महामहिमशालिता वर्णिता । तेन तन्मुखश्रवणमात्रेण पाषाणतुल्यस्य स्वस्य सकलविद्याविर्भावोऽनायासेन सूचितः । लक्ष्मीति तत्पत्नीनाम । यद्वा लक्ष्मीकान्तं विष्णुस्वरूपम् । सर्वविद्यानामेकस्मादेव लाभात्तत्र महत्त्वम् ॥

ततः किमत आह—**निमग्नेनेति** । युक्तिहेतुकानुचिन्तनरूपोदध्युदरमध्ये न तु यत्र क्वचित् । क्लेशैर्न तु क्लेशेन । नितरां न तु यथाकथंचित् । मग्नेन मया जगन्नाथेन लोके भूलोक उन्नीत आनीतो ललितो रमणीयो रसगङ्गाधर एव मणिर्गुणवताम् । अनेन

हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवता-
मलंकारान्सर्वानपि गलितगर्वान्रचयतु ॥
परिष्कुर्वन्त्वर्थान्सहृदयधुरीणाः कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता ।
तिमीन्द्राः संक्षोभं विदधतु पयोधेः पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरेः ॥
निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किंचित् ।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण ॥

---

तदहितानामनादरेऽपि न क्षतिरिति सूचितम् । हृदयमधिरूढः स्वान्तं प्रविष्टः । असाधारणधर्ममाह—अन्तरिति । ग्रन्थपक्षे साहित्यविषयमज्ञानम् । मणिपक्षे तु स्पष्टमेव । अलंकारान्भूषणानि तच्छास्त्राणि वा । सर्वानपि न तु कांश्चित् । गलितः स्वयमेव च्युतो नष्टो गर्वो येषां तान्रचयतु । करोत्वित्यर्थः ॥

ननु तादृशार्षग्रन्थैरेव निर्वाहे किमित्यपूर्वोऽयं ग्रन्थोऽत आह—**परीति** । केचन काव्यवासनावासितान्तःकरणश्रेष्ठा अर्थानार्थानलंकारादीन्परिष्कुर्वन्तु, तथापि तैस्तथा कृतेऽपि मे क्लेशो रसगङ्गाधररचनरूपः कथमपि स्वल्पतोऽपि गतार्थश्चरितार्थो न भविता । भविष्यतीति वाच्ये भवितेत्यनेनेदं सूचितम्—स्वग्रन्थकरणकाले स्वतुल्यपण्डितासत्त्वेन तेषां गतार्थत्वेऽप्यग्रिमाणामल्पबुद्धीनां न गतार्थत्वम् । अत एव केचन सहृदयधुरीणा इत्युक्तमिति । उक्तमर्थमर्थान्तरोपन्यासेन द्रढयति—तिमीन्द्रा मत्स्यविशेषश्रेष्ठाः पुनर्भूयः सम्यङ् न तु यथाकथंचित्क्षोभमालोडनं कुर्वन्तु । एतेन तत्कर्तृकेन तेन मन्दराचलप्रयासो विफलो निष्फलः किं भवति । अपि तु नेति । तिमीन्द्राणां तत्रत्यरत्नालाभेऽपि देवानां तल्लाभात्तत्कारणेन साफल्यमिति भावः ॥

इतरग्रन्थतो विशेषान्तरमाह—**निर्मायेति** । उदेति । तत्तदलंकारादिलक्ष्यत्वयोग्यं काव्यं भामिनीविलासाख्यम् । अत्र रसगङ्गाधरग्रन्थे । लेशतोऽपि परकीयत्वाभावायाह—न परस्येति । निहितमित्यस्यानुषङ्गः । पूर्ववदाह—किमिति । सुमनसां पुष्पाणाम् । गन्धः आमोदः । कस्तूरिकावतेति वाच्ये जननशक्तीत्यनेन सूचितम्—कदापि परकीयग्रहणं न, तज्जननशक्तिसत्त्वेन यावदपेक्षितोत्पादनसंभवादिति ॥

---

१ स्थूला बुद्धिरियम् । काव्यपदेन रमणीयार्थप्रतिपादकं मुक्तकपद्यमेवात्र विवक्षितम्, न प्रबन्धात्मकमिदम् । एतदन्तर्निधाने तस्य तन्नाम्ना व्यपदेशासंभवात् । उपशतश्लोकात्मकेन तेन प्रायो नवशतश्लोकात्मकस्यास्य पूर्तेरसंभवाच्च ।

मननतरितीर्णविद्यार्णवो जगन्नाथपण्डितनरेन्द्रः ।
रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्यमीमांसाम् ॥
रसगङ्गाधरनामा संदर्भोऽयं चिरं जयतु ।
किं च कुलानि कवीनां निसर्गसम्यञ्चि रञ्जयतु ॥

तत्र कीर्ति-परमाह्लाद-गुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य काव्यस्य व्युत्पत्तेः कविसहृदययोरावश्यकतया गुणालंकारादिभिर्निरूपणीये तस्मिन्विशेष्यतावच्छेदकं तदितरभेदबुद्धौ साधनं च तल्लक्षणं तावन्निरूप्यते—

**रमणीयार्थप्रतिपादकः शब्दः काव्यम् ॥**

**रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । लोकोत्तरत्वं चा-**

प्रतिजानीते—**मननेति** । मननरूपनौकापारंगतविद्यारूपोदधिर्जगन्नाथाख्यपण्डितश्रेष्ठः, पण्डितो नरेन्द्रः पृथ्वीशो येन वा । नरेन्द्रस्य पण्डित इति वा । पण्डितश्चासौ नरेन्द्रश्च तत्तुल्यत्वादिति वा । वस्तुतस्तु जगन्नाथपण्डितराज इति पृथ्वीपतिदत्तनामाभिलापोऽयम् । कुतुकेनेत्यनेन स्वस्य ग्रन्थकरणे क्लेशाभावः सूचितः । मीमांसा विचारः ॥

प्रार्थयते—**रसेति** । अयं बुद्धिस्थः संदर्भः पञ्चाङ्गकं वाक्यं चिरं चिरकालं जयतु सर्वोत्कर्षेण वर्तताम् । किं च स एव निसर्गसम्यञ्चि स्वभावरमणीयानि । एतेन कृत्रिमरमणीयनिरासः । कवीनां कुलानि वंशान्समूहान्वा रञ्जयत्वनुरक्तान्करोतु ॥

तत्र करणीये ग्रन्थे । परमाह्लादो विगलितवेद्यान्तरानन्दः । आदिना द्रव्यलाभादिः । कविः काव्यकर्ता । सहृदयस्तदनुभववान् । कवेरनुभवश्चेत्सहृदयत्वेनैव न तु कवित्वेन । गुणेति । विशेषणैरित्यर्थः । आदिना रसादिपरिग्रहः । तस्मिन्काव्ये । निष्ठत्वं सप्तम्यर्थः । तस्य विशेष्यतायामन्वयः । तल्लक्षणं काव्यलक्षणम् । इष्टतावच्छेदकं च तदेव । तत्प्रकारकज्ञानस्य प्रवर्तकत्वादिति बोध्यम् । तावदादौ । **रमणीयेति** । कटाक्षादिवारणाय शब्द इति । व्यञ्जकादिसंग्रहाय वाचक इत्यनुक्त्वा प्रतिपादक इत्युक्तम् । रमणीयशब्दप्रतिपादके व्याकरणादिरूपेऽतिव्याप्तिवारणायार्थेति । 'घटमानय' इत्यादिवाक्यवारणाय रमणीयेति । ननु रमणीयस्याननुगतत्वात्तत्रापि तत्त्वमस्त्येवेत्यत आह—**रमणीयता चेति** । ननु लोकोत्तरत्वं यथाकथंचिच्चेदुक्तदोषः, आत्यन्तिकं चेद्ब्रह्मानन्द एवात आह—**लोकोत्तरत्वं चेति** । अनुभवसाक्षिक इत्यनेन तदन्यप्रमाणनिरासः । स

१ काव्यं हि गुणालंकाररसादिभिर्विशिष्टं भवति । ततश्च गुणालंकारादिभिर्विशेषणैर्विशेष्यतया बोधनीये तस्मिन् ( काव्ये ) विशेष्यतावच्छेदकम् ( गुणालंकारादिविशेषणानां विशेष्यं यत्काव्यं तस्य विशेष्यतावच्छेदकम् ) अर्थात्काव्यत्वम् तदेव तदितरस्मात् काव्येतरस्मात् ( अर्थात् अकाव्यात् ) काव्यस्य भेदबोधने साधनं भवतीति काव्यलक्षणं निरूप्यत इत्याशयः ।

२ लोकोत्तरो य आह्लादस्तज्जनकं यज् ज्ञानम् ( भावना ) तद्गोचरता तद्विषयीभूतत्वेत्यर्थः ।

ह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः । कारणं च तदवच्छिन्ने भावनाविशेषः पुनःपुनरनुसंधानात्मा । 'पुत्रस्ते जातः,' 'धनं ते दास्यामि' इति वाक्यार्थधीजन्यस्याह्लादस्य न लोकोत्तरत्वम् । अतो न तस्मिन्वाक्ये काव्यत्वप्रसक्तिः । इत्थं च चमत्कारजनकभावनाविषयार्थ-प्रतिपादकशब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनक-तावच्छेदकं तत्त्वम्, स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण

चानुभवः सहृदयानामेव । एवं च नोक्तदोष इति भावः । ज्ञानं च भावनारूपमेव नान्य-दित्याह—**कारणं चेति** । तदवच्छिन्ने चमत्कारत्वापरपर्यायलोकोत्तरत्वरूपजा-त्यवच्छिन्ने । विशेषो न तु सामान्यम् । अत एव तत्स्वरूपमाह—**पुनरिति** । लोकोत्तरेति विशेषणकृत्यमाह—**पुत्रस्ते इत्यादि** । अत्र वाक्यार्थद्वयम् । तथा सति परिष्कृतं लक्षणमाह—**इत्थं चेति** । उक्तार्थसिद्धौ चेत्यर्थः । फलितमित्यत्रान्वयः । यत्किंचि-च्चमत्कारजनकज्ञाने समूहालम्बनविधया भासमानान्यार्थप्रतिपादकशब्दे काव्यत्ववार-णाय ज्ञानेत्यपहाय भावनेत्युक्तम् । शब्दत्वमित्यस्य काव्यत्वमित्यत्रान्वयः । धारावा-हिकसकलज्ञानविषयतादृशार्थप्रतिपादके वाक्येऽतिव्याप्तेराह—**यत्प्रतिपादितेति** । यादृशानुपूर्वीप्रतिपादितार्थविषयकत्वविशिष्टभावनात्वं तज्जनकतावच्छेदकं तादृशानुपूर्वी-मत्त्वमित्यर्थः । तेन नोक्तदोषः । लाघवादाह—**स्वेति** । स्वं चमत्कारत्वम् । **जनकता-वच्छेदकार्थेति** । अर्थे भावनानिष्ठजनकतावच्छेदकता विषयतासंबन्धेन बोध्या । लक्ष्य-तावच्छेदकं चैतत्समानाधिकरणं काव्यमित्याद्यनुगतव्यवहारेणास्वादजनकतया च सिद्ध-जातिविशेषरूपमुपाधिरूपं वा काव्यत्वं बोध्यम् । प्राञ्चः प्रकाशकृदादयः । नन्वास्वाद-

---

१ चमत्कारजनिका या भावना तादृशभावनाया विषयीभूतो योऽर्थः तत्प्रतिपादकः शब्दः काव्यम्, तत्त्वं च काव्यत्वम् ।

२ येन यैर्वा शब्दैरुपस्थापितस्य (अर्थात् यादृशानुपूर्वीप्रतिपादितस्य) अर्थस्य भावनया (पुनःपुनरनुसंधानेन) चेतसि चमत्कारजननं भवति तादृशचमत्कारजनकताया अवच्छेदकं तादृशशब्दानुपूर्वीमत्त्वमेव काव्यत्वं भवतीत्याशयः । एवं सति सकलया आनुपूर्व्या यत्र चमत्कारो नोत्पद्यते किन्तु धारावाहिकरूपेणाऽन्यदपि (अचमत्कारोऽपि) प्रतीयते तत्स्थलस्य निरासः ।

३ एतल्लक्षणस्य हि लक्ष्यं काव्यम्, लक्ष्यतावच्छेदकं च काव्यत्वम् । तद्धि किंरूपमिति जिज्ञासायां सर्वेषु काव्येषु 'इदं काव्यम् इदं काव्यम्' इत्याद्यनुगतव्यवहारेण आस्वादोद्बोधक-तया च काव्यत्वं जातिविशेषरूपमुपाधिरूपं वा सिध्यतीति नागेशाशयः ।

चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्। यत्तु प्राञ्चः 'अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम्' इत्याहुः, तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः। विमतवाक्यं त्वश्रद्धेयमेव। इत्थं चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ताद्व्यवहारतः शब्दविशेषे सिद्ध्यन्तीं शक्तिं को नाम निवारयितुमीष्टे। एतेन विनिगमनाभावादुभयत्र शक्तिरिति प्रत्युक्तम्। तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्य। एषैव च वेदपुराणादिलक्षणेष्वपि गतिः। अन्यथा तत्रापीयं दुरवस्था स्यात्। यत्त्वास्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकं तच्च शब्दे चार्थे चाविशिष्टमित्याहुः, तन्न। रागस्यापि रसव्यञ्जकताया ध्वनि-

व्यञ्जकत्वस्योभयत्राविशेष एव मानमत आह—**काव्यमिति**। प्रत्युत वैपरीत्येन। आदिना काव्यं पठितमित्यादिसंग्रहः। **इत्यादीति**। इत्यादिसार्वजनीनव्यवहारात्। सार्वविभक्तिकस्तसिः। विशेषपदेन प्रागुक्तार्थकत्वसूचनम्। एवमग्रेऽपि। एवेनार्थनिरासः। प्रतिपत्तेश्च निर्णयाच्चेत्यन्वयार्थौ। **परेति**। प्रकाशकृदादीत्यर्थः। प्रत्यायकं निश्चायकम्। **विमतेति**। प्रकाशकृदित्यर्थः। उपसंहरति—**इत्थं चेति**। तस्याश्रद्धेयत्वे चेत्यर्थः। शब्दस्येत्यस्योभयत्र शक्तावन्वयः। एतेन व्यवहाररूपविनिगमकसत्त्वेन। प्रकरणार्थमुपसंहरति—**तदेवमिति**। एवमुक्तप्रकारेण। तस्यैव शब्दविशेषरूपस्यैव। प्रासङ्गिकमाह—**एषैव चेति**। अन्यथा वेदत्वादेरुभयत्राङ्गीकारे। दुरवस्था व्यवहारोच्छेदापत्तिरूपा। **लक्षणीयत्वेति**। तथा च तत्रातिव्याप्तिरिति भावः। सर्वेषामपि चेष्टादी-

१ लघुभूतं लक्षणमाह—स्वविशिष्टजनकतेति०। अयं भावः—चमत्कारत्ववत्त्वमेव काव्यत्वम्। चमत्कारत्ववत्त्वं च स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण ग्राह्यम्। अत्र स्वं चमत्कारत्वं तादृशचमत्कारत्वविशिष्टा विषयतासंबन्धावच्छिन्ना अर्थनिष्ठा या भावनानिष्ठजनकताऽवच्छेदकता तद्रूपेण संसर्गेणेत्याशयः। सर्वस्य लक्षणस्यायं निष्कर्षः—यादृशशब्दानुपूर्व्याः (शब्दपरम्परायाः) पुनःपुनरनुसंधानात्मकेन भावनाविशेषेण चमत्कारापरपर्यायस्य अलौकिकानन्दस्य जननं भवति तादृशशब्दानुपूर्वीमत्त्वं काव्यत्वमिति।

कारादिसकलालंकारिकसंमतत्वेन प्रकृते लक्षणीयत्वापत्तेः । किं बहुना नाट्याङ्गानां सर्वेषामपि प्रायशस्तथात्वेन तत्त्वापत्तिर्दुर्वारैव । एतेन रसोद्बोधसमर्थस्यैवात्र लक्ष्यत्वमित्यपि परास्तम् । अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्, प्रत्येकपर्याप्तं वा ? नाद्यः । एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः । न द्वितीयः । एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः । तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता ।

लक्षणे गुणालंकारादिनिवेशोऽपि न युक्तः । 'उदितं मण्डलं विधोः' इति काव्ये दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणविधिनिषेधजीवनाभावादिपरे 'गतोऽस्तमर्कः' इत्यादौ चाव्याप्त्यापत्तेः । न चेदमकाव्यमिति शक्यं वदितुम् । काव्यतया पराभिमतस्यापि तथा वक्तुं शक्यत्वात् । काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव । गुणत्वालंकारत्वा-

---

नामपि । क्वचित्तदभावादाह—**प्रायश इति** । तथात्वेन रसव्यञ्जकत्वेन । तत्त्वापत्तिः काव्यत्वापत्तिः । मतत्रयसाधारणं दोषमाह—**अपि चेति** । व्यासक्तं व्यासज्यवृत्ति । **उचितेति** । यदि त्वास्वादव्यञ्जकत्वस्योभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञानविषयतावच्छेदकधर्मवत्त्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशाद्युक्तलक्ष्यतावच्छेदकस्योभयवृत्तित्वाच्च काव्यं पठितम्, श्रुतं काव्यम्, बुद्धं काव्यमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । अत एव वेदत्वादेरुभयवृत्तित्वप्रतिपादकः 'तदधीते' इत्यादिसूत्रस्थो भगवान्पतञ्जलिः संगच्छते । लक्षणयान्यतरस्मिन्नपि तत्त्वादेको न द्वावितिवन्न तदापत्तिः । तेनानुपहसनीयकाव्यलक्षणं प्रकाशोक्तं निर्बाधम् । **एवमा**स्वादादौ वैलक्षण्यनिवेशादुक्तलक्षणद्वयमपि निर्बाधमिति नान्यमतमपि दुष्टमित्युच्यते तर्ह्यस्तु तथा । सामान्यलक्षणं त्वदोषादिपदाघटितमेव तेषामपि मते । एवं च न कोऽपि दोष इति बोध्यम् । तदाह—**लक्षण इति** । काव्यसामान्यलक्षण इत्यर्थः । आदिना संख्यादिपरिग्रहः । यथासंख्यमन्वयः । आदिना पतिप्राप्त्यादिपरिग्रहः । इदं च मध्यमणिन्यायेनोभयान्वयि । **अव्याप्त्यापत्तेरिति** । गुणालंकारयोरभावादिति भावः । तथा **अकाव्यमितीति** । ननु काव्यजीवितं चमत्कारित्वं तत्रास्तीत्यत आह—**काव्येति** ।

---

१ आस्वादोद्बोधककाव्यत्वरूपम् ।

२ अभिसरणविधिर्दूत्याः, अभिसरणनिषेधोऽभिसारिकायाः, जीवनाभावो विरहिण्या इति बोध्यम् ।

३ शब्दार्थयुगले काव्यशब्दशक्तेर्दृढतरप्रमापकाभावान्न लक्षणेति स्पष्टं प्रत्याख्याता लक्षणा । आस्वादे वैलक्षण्यनिवेशोपि [ अर्थात् शब्दार्थबोधजनितो यो विलक्षण आस्वादस्तस्योद्बोधकस्यैव काव्यत्वम्, न रागादिजनितस्येति ] भेदकाभावाद् ग्रन्थकर्तुरननुमतः । एवं स्थितेपि 'अस्तु तथा' [ अर्थात् अदुष्टत्वमस्तु ] इति टीकारूपेण ग्रन्थकर्तुर्मुखान्निःसार्यते इति धन्या सेयं वादशैली ।

देरननुगमाच्च । दुष्टं काव्यमिति व्यवहारस्य बाधकं विना लाक्षणिकत्वा-योगाच्च । न च संयोगाभाववान्वृक्षः संयोगीतिवदंशभेदेन * दोषरहितं दुष्टमिति व्यवहारे बाधकं नास्तीति वाच्यम् । 'मूले महीरुहो विहंगमसं-योगी, न शाखायाम्' इति प्रतीतेरिवेदं पद्यं पूर्वार्धे काव्यमुत्तरार्धे तु न काव्यमिति स्वरसवाहिनो विश्वजनीनानुभवस्य विरहादव्याप्यवृत्तिताया अपि तस्यायोगात् । शौर्यादिवदात्मधर्माणां गुणानाम्, हारादिवदुपस्कार-काणामलंकाराणां च शरीरघटकत्वानुपपत्तेश्च । यत्तु 'रसवदेव काव्यम्'

---

ननु विलक्षणचमत्कारित्वं तत्रैवेति नोक्तदोषोऽत आह—**गुणत्वेति** । ननु काव्यध-र्मत्वं रसधर्मत्वं वा गुणत्वम्, काव्यशोभाधायकत्वं काव्यधर्मत्वं वालंकारत्वमित्यनुगम एवेति चेत्सत्यम् । तथापि गुणालंकारादीत्यादिपदेनादोषाविति विशेषणमयुक्तमित्यभिम-तम् । युक्तं चैतत् । दोषसामान्याभावनिवेशे काव्यव्यवहारस्य विरलविषयतापत्तेः । इदं काव्यं दुष्टमिति व्यवहारानापत्तेश्च । न चादोषपदेन स्फुटदोषराहित्यं विवक्षितम् । स्फुटत्वं च शाब्दबोधप्रतिबन्धकत्वम् । तेन निराकाङ्क्षत्वानासत्त्वे गृह्येते । अन्यथा रसादिदोषाणां त्यागे बीजानापत्तिः । न त्वदोषौ शब्दार्थावित्युक्ते रसादिदोषाभावः प्रतीयत इति वाच्यम् । अर्थशब्देन रसस्यापि ग्रहादिति भावः । तदाह—**दुष्टं काव्यमितीति** । एवं च तेषामपि मते तादृशकाव्यलक्षणेऽदोषाविति मात्रस्यानि-वेश इति बोध्यम् । **स्वरसेति** । स्वारसिकस्येत्यर्थः । **विश्वेति** । सर्वजनीनेत्यर्थः । अपिः प्रागुक्तरीतिसमुच्चायकः । ननु सामान्यलक्षणस्यादोषपदाघटितत्वात्तथा व्यवहा-रोपपत्तिरत आह—**शौर्यादीति** । उत्कर्षाधायकत्वेन साम्यम् । एवं च विशेषल-

---

१ इमे इयन्तश्चेति स्वरूपसंख्यादेरनिश्चयादित्याशयः ।

२ अलक्ष्ये लक्षणगमनस्याऽभावो नास्ति, अपि तु अलक्ष्ये ( दुष्टेऽपि ) काव्यत्वं प्रसक्तम् ।

३ काशीस्था म. म. पं. गङ्गाधरशास्त्रिणस्त्वाहुः—प्रकाशादिकाव्यलक्षणेषु दोषाभाव-गुणालंकाराणां काव्यलक्षणोद्देश्यतावच्छेदककोटिप्रवेशो नास्ति । उद्देश्यता हि शब्दार्थयोर्द्वयोः, न पुनः केवले शब्दे, द्वयोरेव कविसंरम्भगोचरत्वात् । शब्दार्थानुगतकाव्यलक्षणं तु—कवि-कर्तृकरसविषयज्ञानौपयिकसामग्रीसंघटनविषयकज्ञानविषयत्वम्, अत एव च लास्याङ्गानां न काव्यत्वापत्तिः, तेषां कविकर्तृकनिरुक्तज्ञानविषयताया अभावात् । शब्दमात्रस्य काव्यत्वे तु तन्मात्रगतानां दोषगुणालंकारध्वनीनां निरूपणौचित्येन अर्थगतानां तेषां निरूपणस्योन्मत्त-प्रलापत्वापत्तिः । ननु रसोपयोगितामात्रेण तेषामपि निबन्धनमुपपद्यत एवेति चेत्, काव्याङ्ग-निरूपणं प्रतिज्ञाय तेषां निरूपणस्याऽसंगतत्वात् इति तदुक्तिसारः । विस्तरस्तु काशीमुदित-पुस्तकाज्ज्ञेयः ।

इति साहित्यदर्पणे निर्णीतम्, तन्न । वस्त्वलंकारप्रधानानां काव्यानामकाव्यत्वापत्तेः । न चेष्टापत्तिः, महाकविसंप्रदायस्याकुलीभावप्रसङ्गात् । तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि कपिबालादिविलसितानि च । न च तत्रापि यथाकथंचित्परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम् । ईदृशरसस्पर्शस्य 'गौश्चलति', 'मृगो धावति' इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात् । अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमत्वादिति दिक् ।

तस्य च कारणं कविगता केवला प्रतिभा । सा च काव्यघटनानुकूलशब्दार्थोपस्थितिः । तद्गतं च प्रतिभात्वं काव्यकारणतावच्छेदकतया सिद्धो जातिविशेष उपाधिरूपं वाखण्डम् । तस्याश्च हेतुः क्वचिद्देवतामहापुरुषप्रसादादिजन्यमदृष्टम् । क्वचिच्च विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ । न तु त्रयमेव । बालादेस्तौ विनापि केवलान्महापुरुषप्रसादादपि

क्षणे तेषां निवेशेऽपि सामान्यलक्षणे तेषां न निवेश इति न कोऽपि दोष इति भावः । **वस्त्विति** । प्रधानपदस्योभयत्रान्वयः । **आकुलीति** । उच्छेदेत्यर्थः । संप्रदायमेवाह—**तथा चेति** । विलसितानि चेति वर्णितानीत्यस्यानुषङ्गः । न च तत्र रसोऽस्तीति भावः । यथाकथंचिदित्यस्यैव व्याख्या परम्परयेति । परम्परामेवाह—**अर्थेति** । सर्वस्यार्थस्येत्यर्थः ॥

तस्य च काव्यस्य । केवलेत्यनेन निपुणतादिव्यावृत्तिः । **शब्दार्थोपेति** । शब्दार्थोभयेत्यर्थः । **उपाधिर्वेति** । उपाधित्वपरित्यागेन तत्त्वाङ्गीकारे बीजमित्यर्थः । नीलघटत्वादिवत्सखण्डोपाधिरेवेति वार्थः । 'अखण्डम्' इति पाठस्तु चिन्त्य एव । तस्याः प्रतिभायाः । आदिना तपआदिपरिग्रहः । **व्युत्पत्तीति** । लोकशास्त्रादिविषयेत्यर्थः । **न तु त्रयमेवेति** । प्रतिभात्वावच्छिन्नं प्रति मिलितं त्रितयमेव कारणमिति नेत्यर्थः । एवकारेण क्वचित्त्रितयस्यापि कारणत्वमिति ध्वनयति । विलक्षणत्रितयजन्यप्रतिभा

---

१ प्रकृतरसरूपेण परिणंस्यमानरत्यादिविषयकसंस्कारोद्बोधकताया असार्वत्रिकत्वादियं प्रौढिः । विशिष्टवाक्यार्थानां रसतात्पर्यकत्वाभावे तत्सामग्रीघटकोद्बोधकताया अभावात् । यत्र त्वस्ति तत्तात्पर्यकत्वं तत्राक्षेपादिष्यत एव विशिष्टबोधजननमुखेन चमत्कारित्वम् । यथाह—'सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् । झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ॥' एवं च जलप्रवाहादिवर्णनेऽप्युक्तरीत्या महावाक्यार्थधीद्वारा रसोद्बोधकत्वात्काव्यत्वस्य न क्षतिः । इति म. म. गङ्गाधरशास्त्रिणः ।

प्रतिभोत्पत्तेः । न च तत्र तयोर्जन्मान्तरीययोः कल्पनं वाच्यम् । गौरवान्मानाभावात्कार्यस्यान्यथाप्युपपत्तेश्च । लोके हि बलवता प्रमाणेनाऽऽगमादिना सति कारणतानिर्णये पश्चादुपस्थितस्य व्यभिचारस्य वारणाय जन्मान्तरीयमन्यथानुपपत्त्या कारणं धर्माधर्मादि कल्प्यते । अन्यथा तु व्यभिचारोपस्थित्या पूर्ववृत्तकारणतानिर्णये भ्रमत्वप्रतिपत्तिरेव जायते । नापि केवलमदृष्टमेव कारणमित्यपि शक्यं वदितुम् । कियन्तंचित्कालं काव्यं कर्तुमशक्नुवतः कथमपि संजातयोर्व्युत्पत्त्यभ्यासयोः प्रतिभायाः प्रादुर्भावस्य दर्शनात् । तत्राप्यदृष्टस्याङ्गीकारे प्रागपि ताभ्यां तस्याः प्रसक्तेः । न च तत्र प्रतिभायाः प्रतिबन्धकमदृष्टान्तरं कल्प्यमिति वाच्यम् । तादृशानेकस्थलगतादृष्टद्वयकल्पनापेक्षया कॢप्तव्युत्पत्त्यभ्यासयोरेव प्रतिभाहेतुत्वकल्पने लाघवात् । अतः प्रागुक्तसरणिरेव ज्यायसी । तादृशादृष्टस्य तादृशव्युत्पत्त्यभ्यासयोश्च प्रतिभागतं वैलक्षण्यं कार्यतावच्छेदकम्, अतो न व्यभिचारः । प्रतिभात्वं च कवितायाः कारणतावच्छेदकम्, प्रतिभागतवैलक्षण्यमेव वा विलक्षणकाव्यं प्रतीति नात्रापि सः । न च

चातिविलक्षणा । तज्जन्यं काव्यं चातिविलक्षणमेवेति न दोष इति दिक् । दोषान्तरमाह—**मानेति** । ननु कार्यान्यथानुपपत्तिरेव मानमत आह—**कार्येति** । केवलादृष्टादपीत्यर्थः । तदेव विशदयति—**लोके हीति** । लोकशब्दः प्रकृतेतरपरः । आगमः श्रुतिः । आदिना स्मृत्यादिपरिग्रहः । अत एव बलवत्त्वम् । अन्यथा तु बलवतागमादिना तदनिर्णये तु । एवेन प्रमात्वव्यावृत्त्या कार्यासाधकत्वं सूचितम् । केवलपदं स्पष्टार्थम् । प्रतिभां प्रतीति शेषः । कथमपि केनापि प्रकारेण । व्युत्पत्त्यभ्यासयोः सतोरिति शेषः । ताभ्यां व्युत्पत्त्यभ्यासाभ्याम् । तस्याः प्रतिभायाः । तत्र व्युत्पत्त्यभ्यासप्राक्कालिकादृष्टविषये । एवं च तदानीं सा न । अनन्तरं कथमपि प्रतिबन्धकनाशे सा भवत्येवेति भावः । **कॢप्तेति** । प्रतिबन्धकादृष्टादिनाशकतयेति भावः । एतेनोक्तद्वयव्यावृत्तिः । नन्वेवं प्रतिभाकार्यककार्यकारणभावे व्यभिचारोऽत आह—**तादृशेति** । केवलेत्यर्थः । तथा च विजातीयप्रतिभां प्रति तत्कारणं विजातीयप्रतिभां प्रति ताविति न दोष इति भावः । नन्वेवमपि प्रतिभाकारणककार्यकारणभावे व्यभिचार एवात आह—**प्रतिभात्वं चेति** । प्रागुक्तं सामान्यरूपमित्यर्थः । नन्वेवमप्येकप्रतिभातोऽपरमपि काव्यं स्यादत आह—**प्रतिभागतेति** । **अत्रापीति** । द्वितीयकार्यकारणभावेऽपि न व्यभिचार इत्यर्थः । ननु वैलक्षण्यमदृष्टासहकृतत्वरूपमेवोक्तं तच्च तत्रास्त्येवेत्यत

सतोरपि व्युत्पत्त्यभ्यासयोर्यत्र न प्रतिभोत्पत्तिस्तत्रान्वयव्यभिचार इति वाच्यम् । तत्र तयोस्तादृशवैलक्षण्ये मानाभावेन कारणतावच्छेदकानवच्छिन्नत्वात् । पापविशेषस्य तत्र प्रतिबन्धकत्वकल्पनाद्वा न दोषः । प्रतिबन्धकाभावस्य च कारणता समुदितशक्त्यादित्रयहेतुतावादिनः शक्तिमात्रहेतुतावादिनश्चाविशिष्टा । प्रतिवादिना मन्त्रादिभिः कृते कतिपयदिवसव्यापिनि वाक्स्तम्भे विहितानेकप्रबन्धस्यापि कवेः काव्यानुदयस्य दर्शनात् ।

तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा ।
शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम् ॥

आह—**पापेति** । नन्वेवमिदमेव गौरवमत आह—**प्रतीति** । एवं च कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणतायाः क्लृप्तत्वेन काव्यं प्रति यथोभाभ्यां स्वीक्रियते तथात्रापीति न मेऽधिककल्पनजगौरवमिति भावः । समुदितहेतुवादिमते तत्स्वीकार आवश्यक इत्याह— **प्रतिवादीति** । **विहितेति** । कृतानेककाव्यस्यापीत्यर्थः ॥

**तच्चेति** । काव्यं चेत्यर्थः । **शब्दार्थाविति** । गुणीभावितात्मानौ शब्दार्थौ यत्र कमप्यर्थमभिव्यङ्क्त इत्यन्वयः । भूमिं निदानम् । व्यङ्ग्यपदस्योभयत्र संबन्धः । एवमग्रे-

---

१ विशिष्टकाव्यं प्रति प्रतिभादित्रितयस्यैव कारणत्वमुपपद्यते । शक्तिर्हि द्विविधा, उत्पादिका व्युत्पादिका च । आद्यया पदसंघातस्य योजनेऽपि द्वितीयस्या अभावे विनेयसमवेतविलक्षणवाक्यार्थधियोऽसंभवेन लोकोत्तरवर्णनानैपुण्यस्य कविगतस्याभावाद्विशिष्टकविकर्मतायास्तासत्त्व एव संभवात् । तत्र द्वितीयैव निपुणता नाम । अभ्यासो लोकोत्तरत्वं प्रत्येवोपयुज्यते । तथा च लोकोत्तरवर्णनानिपुणताविशिष्टकविकर्मरूपकाव्यं प्रति त्रितयस्यैव कारणत्वमुचितम् **इति म. म. गङ्गाधरशास्त्रिणः ।**

एतदुपरि हिन्दीरसगङ्गाधरनिर्मातुः साहित्याचार्यपुरुषोत्तमचतुर्वेदस्य टिप्पणीसारः— सर्वेषामेव मतेन अलौकिकचमत्कारिण एव गुम्फनस्य नाम काव्यं न पुनश्छन्दोलयनिबन्धनमात्रस्य । अर्थात् भवन्मते यद्विशिष्टं काव्यं तदेव हि सामान्यतः काव्यम् । या व्युत्पादिका शक्तिरभ्युपेयते सा हि काव्यस्योत्पादिका तदैव भवेद् यदा सा विशिष्टकविकर्मोत्पादिका सिध्येत् । अत एव प्रकाशकारोऽपि अनुपहसनीयकाव्यनिर्माणशक्तिं प्रतिभामाह । अत एव विशिष्टकाव्यशक्तिरेव प्रतिभेति काव्यं प्रति तस्या एव कारणत्वम्, प्रतिभाविकासं प्रति च व्युत्पत्त्यभ्यासयोरिति ।

कमपीति चमत्कृतिभूमिम् । तेनातिगूढस्फुटव्यङ्ग्ययोर्निरासः । अपराङ्गवाच्यसिद्ध्यङ्गव्यङ्ग्यस्यापि चमत्कारितया तद्वारणाय गुणीभावितात्मानाविति स्वापेक्षया व्यङ्ग्यप्राधान्याभिप्रायकम् ।

उदाहरणम्—

'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥'

अत्रालम्बनस्य नायकस्य, सविधशयनाक्षिप्तस्य रहःस्थानादेरुद्दीपनस्य च विभावस्य, तादृशनिरीक्षणादेरनुभावस्य, त्रपौत्सुक्यादेश्च व्यभिचारिणः, संयोगाद्रतिरभिव्यज्यते । आलम्बनादीनां स्वरूपं वक्ष्यते । न च यद्ययं शयितः स्यात्तदास्याननाम्बुजं चुम्बेयमिति नायिकेच्छाया एव व्यङ्ग्यत्वमत्रेति वाच्यम् । मनोरथान्सफलीकर्तुमसमर्थेत्यनेन मनोरथाः सर्वेऽस्या हृदि तिष्ठन्तीति प्रतीतेः स्वशब्देन मनोरथपदेन सामान्याकारेण तादृशेच्छाया अपि निवेदनात् । न च मनोरथपदेन मनोरथत्वाकारेण सामान्येच्छाया अभिधानेऽपि चुम्बेयमिति विषयविशेषविशिष्टेच्छात्वेन व्यङ्ग्यत्वे किं बाधकमिति वाच्यम् । चमत्कारो न स्यादित्यस्यैव बाधकत्वात् । न हि विशेषाकारेण व्यङ्ग्योऽपि सामान्याकारेणाभिहितोऽर्थः सहृदयानां चमत्कृतिमुत्पादयितुमीष्टे । कथमपि वाच्यवृत्त्य-

ऽपि । **निरास इति** । असुन्दरस्येत्यपि बोध्यम् । गुणीभावितात्मानावित्यनेनाप्यस्य निरास इति ध्वनयितुं द्वयोरेवोक्तिः । एवं संदिग्धप्राधान्यतुल्यप्राधान्यकाक्वाक्षिप्तानामपि बोध्यम् । स्वापेक्षया शब्दार्थापेक्षया । सविधेऽर्थाद्दयितस्य । कारणसत्त्वेऽपि कार्याभावादहो इत्याश्चर्ये । रह एकान्तम् । **त्रपौत्सुक्यादेरिति** । दरेत्यनेन त्रपा व्यङ्ग्या, निरीक्षणेन चौत्सुक्यमिति बोध्यम् । संयोगात्संबन्धात् । **रतिरिति** । नायिकाया इति शेषः । **शयित इति** । कर्तरि भूते क्तः । 'तदास्याननाम्बुजम्' इति पाठः । एव इत्यवच्छेदे । स्वशब्देनेत्यस्य व्याख्या मनोरथेति । **सामान्येति** । मनोरथत्वेत्यर्थः । तथा च वाच्यस्याव्यङ्ग्यत्वमिति भावः । सामान्येत्यस्य व्याख्या मनोरथेति । यद्वा सामान्येनेच्छात्वेन । अवच्छिन्नत्वं तृतीयार्थः । चमत्काराभावे हेतुमाह—**न हीति**। तत्र हेतुमाह—**कथमपीति** । सामान्यरूपेण विशेषरूपेण चेत्यर्थः । एवं च ध्वनिविशेष एवैतद्बोध्यम् । स्पष्टश्चायमर्थो गूढाख्यगुणीभूतव्यङ्ग्यनिरूपणे पञ्चमोल्लासे रसदो-

नालिङ्गितस्यैव व्यङ्ग्यस्य चमत्कारित्वेनालंकारिकैः स्वीकारात् । चुम्बनेच्छाया रत्यनुभावतयैव सुन्दरत्वेन तद्व्यञ्जने चुम्बामीति शब्दबलाचुम्बनेच्छावद्चमत्कारित्वाच्च । एवं त्रपाया अपि न प्राधान्येन व्यङ्ग्यत्वम् । अनुवाद्यतावच्छेदकतया प्रतीतायां तस्यां मुख्यवाक्यार्थत्वायोगात् । न च दरमीलन्नयनात्वविशिष्टनिरीक्षणं विधेयमिति नानुवाद्यतावच्छेदकत्वं तस्या इति वाच्यम् । एवमपि नयनगतदरमीलनस्य तत्कार्यत्वेऽपि दरमीलन्नयनात्वविशिष्टनिरीक्षणस्य रतिमात्रकार्यत्वात् । त्रपाया एव मुख्यत्वेन व्यङ्ग्यत्वे निरीक्षणोक्तेरनतिप्रयोजनकत्वापत्तेः । वाच्यवृत्त्या रतेरनुभावे निरीक्षणे त्रपाया अनुभावस्य दरमीलनस्येव व्यञ्जनया तस्यां तस्या अपि गुणीभावप्रत्ययौचित्यात् ।

यथा वा—

'गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् ।
दरकुण्डलताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत् ॥'

---

षनिरूपणे सप्तमोल्लासे च । व्यङ्ग्यस्य वाच्यीकरणे वमनाख्यदोष इति प्राञ्चः । नन्वत्र पक्षे यदेवोच्यते तदेव व्यङ्ग्यं यथा तु व्यङ्ग्यं न तथोच्यत इत्यादिपर्यायोक्तप्रकरणस्थमूलग्रन्थविरोधोऽत आह—**चुम्बनेच्छाया इति** । संशयालंकारनिरूपणे च स्फुटतरं निरूपयिष्यत एव ग्रन्थकृता । एवस्तदन्यथात्वेन तत्त्वव्यवच्छेदे । तद्व्यञ्जने रत्यव्यञ्जने । एवमिच्छाया इव यथाकथंचित्तत्त्वसत्त्वादाह—**प्राधान्येनेति** । तस्यां त्रपायाम् । एवमग्रेऽपि । **मुख्येति** । मुख्यतया वाक्यतात्पर्यविषयत्वायोगादित्यर्थः । **तत्कार्येति** । त्रपाकार्येत्यर्थः । मात्रपदेन तदन्यव्यवच्छेदः । ननु मीलन्नयनात्वमेव विधेयमास्तामत आह—**त्रपाया इति** । त्रपाजनकतया निरीक्षणस्योपयोगादाह—**अनतीति** । ननु वैपरीत्येन निरीक्षणविशिष्टदरमीलन्नयनात्वमेव विधेयमास्तामत आह—**वाच्येति** । 'भावप्रधानमाख्यात'मिति सिद्धान्तादिति भावः । तस्यां रतौ । तस्यास्त्रपायाः । **गुरुमध्येति** । श्वश्र्वादिसर्गापप्रदेशोपविष्टा । कमलमुकुलेन मन्दं नितरां हता । अत एव

---

१ दरमीलन्नयनेति विशेषणेन त्रपाभिव्यज्यते । विशेषणेन चानेन पूर्वसिद्धस्यार्थस्याऽनुवाद्यतैव प्रत्याय्यते, न त्वत्र विधानम् । ततश्च तादृशविशेषणोपस्थापिता त्रपाऽत्र प्रधानमिति न शक्यते वक्तुमित्याशयः ।

२ रतेरनुभावं निरीक्षणं प्रति त्रपाया अनुभावो दरमीलनं वाच्यवृत्त्या यथा गुणीभूतं स्वीक्रियते तथा व्यञ्जनावृत्त्या रतिं प्रति त्रपाया अपि गुणीभाव एवोचितः, न तु प्राधान्येन व्यङ्ग्यत्वमित्याशयः ।

अत्र घूर्णितासीदित्यनेनासमीक्ष्यकारिन्किमिदमनुचितं कृतवानसीत्यर्थसंवलितोऽमर्षश्चर्वणाविश्रान्तिधामत्वात्प्राधान्येन व्यज्यते। तत्र शब्दोऽर्थश्च गुणः।

यथा वा—

'तल्पगतापि च सुतनुः श्वासासङ्गं न या सेहे।
संप्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति॥'

इदं च पद्यं सन्निर्भितप्रबन्धगतत्वेन पूर्वसाकाङ्क्षमिति दिङ्मात्रेण व्याख्यायते—या नववधूः पल्यङ्कशयिता श्वासस्यासङ्गमात्रेणापि संकुचदङ्गलतिकाभूत्सा संप्रति प्रस्थानपूर्वरजन्यां प्रवत्स्यत्पतिका प्रियेण सशङ्केन समर्पितं हृदि पाणिं नववधूजातिस्वाभाव्यादाक्षिपति, परं तु मन्दम्। अत्र शनैः स्वस्थानप्रापणात्मना मन्दाक्षेपेण रत्याख्यः स्थायी संलक्ष्यक्रमतया व्यज्यते। उपपादयिष्यते च स्थाय्यादीनामपि संलक्ष्यक्रमव्यङ्ग्यत्वम्[१]। अमुमेव च प्रभेदं ध्वनिमामनन्ति। यत्तु चित्रमीमांसायामप्पय्यदीक्षितैः 'निःशेषच्युतचन्दनम्' इति पद्यं ध्वन्युदाहरणप्रसङ्गे व्याख्या-

घूर्णनं भ्रमणम्। तादृशी सा मामवलोक्य दरेति नतेति च यथा स्यात्तथा घूर्णितासीदित्यन्वयः। मन्दत्वफलं दरेति। गुरुमध्यगतत्वान्नतेति। नायकोक्तिरियं सखायं प्रति। **कृतवानसीत्यर्थेति**। अस्याप्यमर्षं प्रति गुणतैव। तत्कार्यत्वात्। संवलितो विशिष्टः। **चर्वणेति**। पार्यन्तिकास्वादाश्रयत्वादित्यर्थः। तत्रामर्षे। अयमेव पूर्वोदाहरणाद्विशेषः। तल्पं शय्या। असहने हेतुगर्भं विशेषणं सुतनुरिति। स्वहृदयस्थितं शनैः स्वस्थानं प्रापयतीत्यर्थः। प्रबन्धो भामिनीविलासाख्यः। नवोढाप्रकरणादाह—**नवेति**। आङ् ईषदर्थे। संप्रतीत्यस्यार्थमाह—**प्रस्थानेति**। प्रकरणादाह—**प्रवदिति**। **सशङ्केनेति**। सुतनुत्वान्नाशशङ्केति भावः। **मन्दमिति**। भाविविरहशङ्कयेति भावः। **संलक्ष्येति**। व्यङ्ग्यव्यञ्ज-

१ स्फुटे प्रकरणे, झटिति प्रतीतेषु विभावानुभावव्यभिचारिषु, मार्मिकतमेन प्रमात्रा रसतया व्यपदेश्यः सोऽयं रत्यादिः सूक्ष्मतमेनैव समयेन प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यक्रमस्याऽलक्ष्यत्वादलक्ष्यक्रम इति व्यपदेशः। यत्र तु विचारवेद्यं प्रकरणम्, न तु स्फुटम्। विभावादयोऽपि बुध्या उन्नेयास्तत्र रसाभिव्यक्तिसामग्रीविलम्बात् चमत्कृतेर्मान्थर्यम्। अत एव झगिति चमत्कारानुदयेन क्रमस्य संलक्ष्यतापि भवति। अस्मिन्पद्ये च 'संप्रति' इति पदेन "पूर्वं तस्या नववधूत्वे अन्यैव संकोचपरिस्थितिरासीत्, अधुना तु संकोचस्यापि क्रमिकः संकोच इति" पूर्वापरानुसंधानादर्थावगतिर्विलम्बेन। ततश्च क्रमस्य संलक्ष्यतेत्याशयः।

तम्—'उत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय निःशेषग्रहणम् । ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनाय तटग्रहणम् । स्नाने हि सर्वत्र चन्दनच्युतिः स्यात्, तव तु स्तनयोस्तट उपरिभाग एव दृश्यते । इयमाश्लेषकृतैव । तथा निर्मृष्टरागोऽधर इत्यत्र ताम्बूलग्रहणविलम्बात्प्राचीनरागस्य किंचिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय निर्मृष्टराग इति रागस्य निःशेषमृष्टतोक्ता । पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनायाधर इति विशिष्य ग्रहणम् । उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य निर्मृष्टरागता चुम्बनकृतैव' इत्यादिना, 'इदमपि ध्वनेरुदाहरणम्' इत्यन्तेन संदर्भेण । 'तटादिघटिता वाक्यार्थाः स्नानव्यावृत्तिद्वारा संभोगाङ्गानामाश्लेषचुम्बनादीनां प्रतिपादनेन प्रधानव्यङ्ग्यव्यञ्जने साहायकमाचरन्ति' इति, तदेतदलंकारशास्त्रतत्त्वानवबोधनिबन्धनम् । प्राचीनसकलग्रन्थविरुद्धत्वादुपपत्तिविरोधाच्च । तथा हि पञ्चमोल्लासशेषे 'निःशेषेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति । यतश्चात्रैव स्नानकार्यत्वेनोपात्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि' इति काव्यप्रकाशकृतोक्तम् । तथा तत्रैव तेन—

'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मालिदो तेण ।
गोलाणइकच्छनिकुडंगवासिणा दरिअसीहेण ॥'

---

कयोः क्रमः संलक्ष्यो यत्र तयेत्यर्थः । अयमेव पूर्वतो विशेषः । ननु स्थाय्यादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वमेव प्राचीनैरुक्तमत आह—**उपेति** । अमुमुत्तमोत्तमम् । व्याख्यानमेवाह—**उत्तरीयेत्याद्याचरन्तीत्यन्तेन** । इत्यादीत्यादिना प्रातर्दत्तमञ्जनं कालविलम्बेन किंचिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमिति । अत्यर्थमित्यापाततोऽर्थः । एतेन कालान्यथासिद्धिनिरासः । पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनाय दूरे प्रान्त इति हृदयस्थितोऽर्थः । कालतः स्नानेन सर्वतोऽञ्जनलोपः स्यात्तव तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वमिदं चुम्बनकृतमेवेत्यादिपरिग्रहः । वाक्यार्था विशेषणवाक्यार्थाः । प्रधानव्यङ्ग्यं संभोगः । तत्र ग्रन्थविरोधमाह—**पञ्चमोल्लासेति** । अस्योक्तमित्यत्रान्वयः । **गमकेति** । संभोगेत्यादिः । अत्रैव निःशेषेत्यादावेव । प्रतिबद्धानि अन्यतया न तत्रैव संबद्धानि । अनैकान्तिकानि साधारणानि । तत्रैव पञ्चमोल्लास एव । तेन प्रकाशकृता । अभ्युपगतमित्यत्रान्वयः । **भ्रमेति** । 'भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन ।

इत्यादौ लिङ्गजलिङ्गिज्ञानरूपेणानुमानेन व्यक्तिं गतार्थयतो व्यक्तिविवेककृतो मतं प्रत्याचक्षाणेन व्यभिचारित्वेनासिद्धत्वेन च संदिह्यमानादपि लिङ्गाद्व्यञ्जनमभ्युपगतम्। इत्थमेव च ध्वनिकृतापि प्रथमोद्द्योते। एवं च व्यञ्जकानां साधारण्यं प्रतिपादयतां प्रामाणिकानां ग्रन्थैः सहासाधारण्यं प्रतिपादयतस्तव ग्रन्थस्य विरोधः स्फुटः। किं च यदिदं निःशेषेत्याद्यवान्तरवाक्यार्थानां वापीस्नानव्यावृत्तिद्वारेण व्यङ्ग्यासाधारण्यं संपाद्यते तत्किमर्थमिति पृच्छामः? व्यङ्ग्यस्य व्यञ्जनार्थमिति चेन्न। व्यञ्जकगतासाधारण्यस्य व्यञ्जनानुपायत्वात्।

'औण्णिद्दं दोब्बल्लं चिंता अलसंतणं सणीससिअम्।
मह मंदभाइणीए केरं सहि तुह वि परिभवइ॥'

इत्यादौ साधारणानामेवौन्निद्र्यादीनां वक्त्रादिवैशिष्ट्यवशादर्थविशेषव्यञ्जकताया अभ्युपगतेः। प्रत्युतासाधारण्यस्य व्याप्यपरपर्यायस्यानुमानानुकूलतया व्यक्तिप्रतिकूलत्वाच्च। अथ तटादिघटितत्वेऽपि न निःशेषेत्यादिवाक्यार्थानामसाधारण्यम्। सलिलार्द्रवसनकरणकप्रोञ्छनादिनापि तत्संभ-

गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥' कुसुमावचयार्थं कुञ्जे धार्मिकपरिभ्रमणेन खण्डितसंकेतायास्तन्निवारणोक्तिरियम्। अत्र वाच्येन भीरुस्वभावस्य गृहे श्वनिवृत्त्या भ्रमणेन निकुञ्जे सिंहोपलब्ध्या भ्रमणनिषेधो व्यङ्ग्यः। **इत्थमेवेति**। उक्तं स्वीकृतं चेत्यर्थः। ननु तैः साधारण्ये व्यञ्जने स्वीकृतेऽसाधारण्ये सुतरामङ्गीकृतम्, प्रकृते च तथा संभवान्मयोपपादितमिति कस्तैर्विरोध इति चेत्सत्यम्, अत एवोपपत्तिविरोधोऽपरो दोषोऽभिहितस्तमुपपादयति—**किं चेत्यादि**। **व्यङ्ग्येति**। व्यङ्ग्यसंभोगं प्रत्यसाधारण्यमित्यर्थः। अनुपायत्वे हेतुमाह—**औण्णिद्दमिति**। 'औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्। मम मन्दभागिन्याः कृते सखि त्वामपि परिभवति॥' कृतकामुकसंभोगां दूतीं प्रत्युपभोगचिह्नैस्तं ज्ञातवत्या नायिकाया इयमुक्तिः। साधारणानां रोगादितोऽपि तत्संभवात्। यथात्रैव नायिकायास्तद्वियोगतः। **वक्त्रादीति**। आदिना बोद्धव्यपरिग्रहः। ननु तस्य तदनुपायत्वेऽपि सति संभवे तत्प्रतिपादनमित्युक्तमेवात आह—**प्रत्युतेति**। **व्यक्तीति**। व्यञ्जनेत्यर्थः। **एवमग्रेऽपि**। एवं च व्यञ्जनासिद्धिरेव न स्यादिति भावः। तटादीत्यस्य वापीस्नानव्यावर्तनायेत्यादिः। आदिना जलबिन्दुपातादिपरिग्रहः। 'जातायाः' इति पाठः। नन्वत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यत इति प्रका-

वादिति चेत्तर्हि वापीस्नानव्यावर्तनेन कः पुरुषार्थः । एकत्रानैकान्तिकत्वस्येव बहुष्वनैकान्तिकताया अपि ज्ञाताया अनुमितिप्रतिकूलत्वाद्व्यञ्जनप्रतिकूलत्वाच्च । अपि चात्र हि तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्यशरीरे तदन्तिकगमनं रमणरूपफलांशश्चेति द्वयं घटकम् । तत्र तावत्तदन्तिकं गतासीत्यंशस्य त्वन्मते व्यङ्ग्यत्वं दुरुपपादम् । त्वदुक्तरीत्या विशेषणवाक्यार्थानां निःशेषेत्यादिप्रतिपाद्यानां वाच्यार्थे वापीस्नाने बाधितत्वाद्वाच्य[1]कक्षागतप्रधानवाक्यार्थीभूतविधिनिषेधप्रतिपादकाभ्यां गता न गतेति शब्दाभ्यां विरोधिलक्षणया निषेधस्य विधेश्च प्रतीतेरुपपत्तेः । नहि मुख्यार्थबाधेनोन्मीलितेऽर्थे व्यक्तिवेद्यतोचिता । यथा 'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः' इत्यत्र कर्तृविशेषणानुपपत्त्यधीनोल्लासे[2] पूर्णत्वाभावे ।

अथ तदन्तिकगमनस्य लक्षणावेद्यत्वेऽपि रमणस्य फलांशस्य[3] लक्ष्यशक्तिमूलध्वननवेद्यत्वमव्याहतमेवेति चेन्, 'अधमत्वमप्रकृष्टत्वं तच्च जात्या कर्मणा वा भवति । तत्र जात्यापकर्षं नोत्तमनायिका नायकस्य वक्ति' इत्यादिना संदर्भेण भवतैवार्थापत्तिवेद्यतायाः स्फुटं वचनात् । अन्यलभ्यस्य

शकाराद्युक्तत्वात्स्नानव्यावृत्तिर्मया कृतात आह—**अपि चेति** । त्वन्मत इत्यनेन तेषां मते तत्सूपपादमिति सूचितम् । **त्वदुक्तेति** । तटादिघटितत्वरूपयेत्यर्थः । **निषेधस्येति** । यथाक्रममन्वयः । उन्मीलिते प्रकटिते । कर्तृविशेषणं लुठन्त इति । तदनुपपत्त्यधीन उल्लासो यस्य विरोधिलक्षणया पूर्णत्वाभावस्य तत्र यथा न व्यञ्जनावेद्यतेत्यर्थः । **लक्ष्येति** । लक्ष्यं तदन्तिकगमनं तस्य या शक्तिः सामर्थ्यं तन्मूलं यद्व्यञ्जनं तद्वेद्यत्वमित्यर्थः । आदिना 'नापि स्वापराधपर्यवसायिदूतीसंभोगादिहीनकर्मातिरिक्तेन

१ वाच्यकोटौ—वाक्यार्थे प्रधानीभूताभ्यां 'वापीं स्नातुमितो गताऽसि' इति विधेः 'तस्य अधमस्य अन्तिकं न' इति निषेधस्य च प्रतिपादकाभ्यां 'गता' 'न गता' इति शब्दाभ्यां विपरीतलक्षणया 'गता' इति विधिस्थाने निषेधस्य 'न गता' इति निषेधस्य स्थाने च विधेश्च प्रतीत्या अर्थस्योपपादनं भवेत् । मुख्यार्थबाधे सति तु लक्षणा भवति, न व्यञ्जनेति प्रसिद्धम् । ततश्च तदन्तिकगमनरूपे व्यङ्ग्यस्य प्रथमांशेऽस्मिन् का वा व्यङ्ग्यतायाः प्रत्याशेत्याशयः ।

२ स्नानकर्तॄणां मानवानां 'लुठन्तः' इति विशेषणस्य सरःपूर्णत्वे अनुपपत्तिः । ततश्च विपरीतलक्षणया पूर्णत्वाऽभावे साधिते व्यक्तिवेद्यता यथा नोचिता भवति तथात्रेति संबन्धः ।

३ अर्थाद् व्यङ्ग्यशरीरघटकद्वितीयांशस्य ।

च शब्दार्थताया अस्वीकृतेः। अन्यच्च यथाकथंचिदङ्गीकुरु वात्र व्यञ्जनाव्यापारं तथापि न तवेष्टसिद्धिः। वाच्यानां निःशेषच्युतचन्दनस्तनतटत्वादीनामधमत्वस्य च त्वदुक्तरीत्या प्रकारान्तरेणानुपपद्यमानतया दूतीसंभोगमात्रनिष्पाद्यत्वेन गुणीभूतव्यङ्ग्यत्वप्रसङ्गात्। एवं चोपपत्तिविरोधोऽपि स्फुटतर एव। तस्माद्वाच्यार्थसाधारण्यमेवोचितमतिविदग्धनायिकानिरूपितानां विशेषणवाक्यार्थानाम्। तथा हि—'अयि बान्धवजनस्याज्ञातपीडागमे स्वार्थपरायणे स्नानकालातिक्रमभयवशेन नदीमदीयप्रिययोरन्तिकमगत्वैव वापीं स्नातुमितो ममान्तिकाद्गतासि, न पुनस्तस्य परवेदनानभिज्ञतया दुःखदातृत्वेनाधमस्यान्तिकम्। यतो निःशेषच्युतचन्दनं स्तनयोस्तटमेव नोरःस्थलम्, वापीगतबहुलयुवजनत्रपापारवश्यादंसद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोन्नततया मुहुरामर्शात्। एवं त्वरया सम्यगक्षालनेनोत्तरोष्ठो न निर्मृष्टरागोऽधरस्तु तदपेक्षया गण्डूषजल-रदनशोधनाङ्गुल्यादीनामधिकसंमर्दमावहतीति तथा। किं च सम्यगक्षालनेन नेत्रे जलमात्रसंसर्गाद्दूरमुपरिभाग एवानञ्जने। शीतवशात्तानवाच्च तव तनुः पुलकितेति। एवं तस्या विदग्धाया गूढता-

कर्मणा, तादृशं हि दूतीप्रेषणात्प्राचीनं सर्वं सोढमेवेति नोद्घाटनार्हम्, अन्यथा स्वयं दूतीसंप्रेषणानुपपत्तेः' इत्यादिपरिग्रहः। तस्यापि रमणस्यापि। ननु तद्व्यंग्यत्वेऽपि व्यञ्जना कुतो नात आह—**अन्येति**। 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादिति भावः। **यथाकथंचिदिति**। अर्थापत्तिप्रमाणस्यातिरिक्तस्याभावादिति भावः। अत्र रमणे। **संभोगमात्रेति**। तदन्येन वाच्यस्य सिद्धेरेवाभावादिति भावः। उपसंहरति—**एवं चेति**। उक्तरीत्या गुणीभूतव्यङ्ग्यत्वप्रसङ्गे चेत्यर्थः। एवं चात्र तदनुरोधेन तथोक्तावुपपत्तिविरोधवत्तत्र तदनुरोधत्यागेनासाधारण्यप्रतिपादनं तद्विरुद्धमेव तदाह—**अपीति**। कथं तर्हि तस्य व्यङ्ग्यत्वं प्रकाशाद्युक्तमाह—**तस्माद्वाच्यार्थेति**। वापीस्नानेत्यर्थः। **निरूपितेति**। बोधितेत्यर्थः। गमे इत्यन्तव्याख्या स्वार्थेति। अन्तिकमित्यत्र गतासीत्यनुषङ्गः। एवं त्रपापारवश्यात्। तथा निर्मृष्टरागः। तन्वीत्यस्यार्थमाह—**तानवाच्चेति**। कृशत्वा-

---

१ तदन्तिकं रन्तुमेव गतासीति व्यङ्ग्यार्थेनैव अधमत्वरूपवाच्यार्थस्योपपादनात्।

२ ध्वनेरिदमुदाहरणमिति स्वोपपादनस्य विरोधः। किंवा—उपपत्ति—(युक्ति—)द्वारापि भवत्कथने विरोधः इत्यर्थः।

त्पर्यैवोक्तिरुचिता, अन्यथा वैदग्ध्यभङ्गापत्तेः । एवं साधारणेष्वेषु वाक्यार्थेषु मुख्यार्थे बाधाभावात्तात्पर्यार्थस्य[1] झटित्यनाकलनात्कुतोऽत्र लक्षणावकाशः । अनन्तरं च वाच्यार्थप्रतिपत्तेर्वक्तृबोद्धव्यनायकादीनां वैशिष्ट्यस्य प्रतीतौ सत्यामधमपदेन स्वप्रवृत्तिप्रयोजको दुःखदातृत्वरूपो धर्मः साधारणात्मा वाच्यार्थदशायामपराधान्तरनिमित्तकदुःखदातृत्वरूपेण स्थितो व्यञ्जनाव्यापारेण दूतीसंभोगनिमित्तकदुःखदातृत्वाकारेण पर्यवस्यतीत्यालंकारिकसिद्धान्तनिष्कर्षः । एतेन 'अधमत्वमपकृष्टत्वं तच्च जात्या कर्मणा वा भवति । तत्र जात्याऽपकर्षं नोत्तमनायिका नायकस्य वक्ति । नापि स्वापराधपर्यवसायिदूतीसंभोगादिहीनकर्मातिरिक्तेन कर्मणा । तादृशं च दूतीसंप्रेषणात्प्राचीनं सोढमेवेति नोद्धाटनार्हमितीतरव्यावृत्त्या संभोगरूपमेव पर्यवस्यति' इति यदुक्तम्, तदपि निरस्तम् । विदग्धोत्तमनायिकायाः सखीसमक्षं तदुपभोगरूपस्य स्वनायकापराधस्य स्फुटं प्रकाशयितुमतितमामनौचित्येन प्राचीनानामेव सोढानामप्यपराधानामसह्यतया दूतीं प्रति प्रतिपिपादयिषितत्वादिति दिक् ।

---

चेत्यर्थः । उपसंहरति—**एवमिति** । उक्तप्रकारेत्यर्थः । प्रागुक्तलक्षणापत्तिदोष इह नेत्याह—**एवमिति** । मुख्यार्थे वापीस्नाने । **अनन्तेति** । वाच्यार्थप्रतिपत्तेरनन्तरं चेत्यर्थः । वक्त्री विदग्धोत्तमनायिका । बोद्धव्या दुःशीला दूती । नायकस्तादृशः । आदिना काक्वादिपरिग्रहः । **अधमपदेनेति** । बोधिन इति शेषः । **स्वेति** । अधमपदप्रवृत्तिनिमित्तमित्यर्थः । **साधारणेति** । तादृशकर्मान्तरसाधारणेत्यर्थः । **दातृत्वरूपेण स्थित इति** । अधमपदप्रवृत्तिनिमित्तस्य सकलाधमसाधारणस्यैकस्याभावात्तत्तद्धर्मास्तत्र तत्र प्रवृत्तिनिमित्ततया स्वीकार्याः । प्रकृते तु दुःखदातृत्वरूपो धर्मः । तत्र च वाच्यकक्षायां दुःखत्वेन रूपेणापराधान्तरनिमित्तं दुःखं प्रकरणादिवशाद्धटकीभूय भासते । व्यङ्ग्यकक्षायां तु दूतीसंभोगनिमित्तदुःखत्वेन दूतीसंभोगनिमित्तकं दुःखमिति भावः । तदभिप्रायेणोच्यते—स्थितः पर्यवस्यतीति चेति । **स्वापेति** । स्वं नायिका । दूतीसंभोगादिरूपं यद्धीनकर्मेत्यर्थः । एतेनेत्यस्यार्थमाह—**विदेति** । **तदुपेति** । दूत्युपेत्यर्थः । अतितमामत्यन्तम् । **प्राचीति** । दूतीसंप्रेषणादित्यादिः । अन्यथा वैदग्ध्यादिभङ्गापत्तिः । दोषान्तरमपि प्रागुक्तं तदाह—**दिगिति** ।

---

१ विदग्धायास्तस्याः सेयमुक्तिर्गूढतात्पर्या । ततश्च तात्पर्यार्थस्य सहसैव भानाभावात्तात्पर्यानुपपत्तिमाश्रित्याऽवतरन्ती लक्षणा कथं संभवेदित्याशयः ।

**यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद्द्वितीयम् ॥**

वाच्यापेक्षया प्रधानीभूतं व्यङ्ग्यान्तरमादाय गुणीभूतं व्यङ्ग्यमादायातिव्याप्तिवारणायावधारणम्[1]। तेन तस्य ध्वनित्वमेव। लीनव्यङ्ग्यवाच्य[2]चित्रातिप्रसङ्गवारणाय चमत्कारेत्यादि। यत्तु 'अतादृशि गुणीभूतव्यङ्ग्यम्' इत्यादिकाव्यप्रकाशगतलक्षणे चित्रान्यत्वं[3] टीकाकारैर्दत्तम्, तन्न। पर्यायोक्तसमासोक्त्यादिप्रधानकाव्येष्वव्याप्त्यापत्तेः। तेषां गुणीभूतव्यङ्ग्यतायाश्चित्रतायाश्च सर्वालंकारिकसंमतत्वात्।

उदाहरणम्—

'राघवविरहज्वालासंतापितसह्यशैलशिखरेषु।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ॥' इति।

अत्र जानकीकुशलावेदनेन राघवः शिशिरीकृत इति व्यङ्ग्यमाकस्मिक-

द्वितीयमुत्तमम्। **वाच्येति**। वाच्यार्थतः प्रधानमन्यव्यङ्ग्यादप्रधानं यद्व्यङ्ग्यं तदादायेत्यर्थः। अपराङ्गोदाहरणे 'अयं स रशनोत्कर्षी' इत्यत्रापि वाच्यापेक्षया शृङ्गारस्य न प्राधान्यम्। शोकोत्कर्षकतया शृङ्गाररूपव्यङ्ग्यापेक्षया वाच्यस्यैव चमत्कारकारित्वात्। एवं सर्वत्रापराङ्गोदाहरणेषूह्यम्। अवधारणे एवः। तस्य सांप्रतमुक्तस्य। लीनव्यङ्ग्येति बहुव्रीहिः। शब्दचित्रे तदभावादाह—**वाच्येति**। तत्रोत्तमत्वादिप्रसङ्गेत्यर्थः। **उदेति**। लक्षितद्वितीयकाव्योदाहरणमित्यर्थः। **राघवविरहेति**। सीतावियोगकृत-

१ अर्थात् 'एव'कारनिवेशः। अयं भावः—यद्यत्र 'व्यङ्ग्यमप्रधानमेव सत्' इत्यवधारणं न दीयेत तर्हि 'व्यङ्ग्यमप्रधानं सत् चमत्कारकम्' इत्यर्थो भवेत्। ततश्च 'अयं स रशनोत्कर्षी'त्याद्यपराङ्गोदाहरणेषु करुणापेक्षया अप्रधानं शृङ्गारश्चमत्कारकारणमस्तीति ध्वनित्वस्थाने अस्याप्युत्तमकाव्यत्वं प्रसज्येत। एवकारनिवेशे तु—यद् व्यङ्ग्यमप्रधानमेव सदित्युक्त्या करुणापेक्षया गुणत्वेपि वाच्यार्थापेक्षया शृङ्गारस्य प्राधान्यमस्तीति ध्वनिकाव्यत्वमस्याऽव्याहतम्। अत्र 'अयं स रशनोत्कर्षी'त्यत्र वाच्यापेक्षया शृङ्गारस्य न प्राधान्यम्, वाच्यस्यैव शोकोत्कर्षकतया चमत्कारित्वात्' इति नागेशोक्तिस्तु मूलविरुद्धा केवलं भ्रमापादिकैव। पूर्ववृत्तशृङ्गारस्य करुणप्रसङ्गे शोकोत्कर्षकतया चमत्कारित्वस्य प्रदीपाद्यङ्गीकृतत्वात्।

२ वाच्य-चित्रकाव्येषु व्यङ्ग्यं लीनं भवति, न तत्कृतश्चमत्कारः। तेष्वतिप्रसक्तिवारणाय चमत्कारकमित्युक्तम्।

३ चित्रान्यत्वं वाच्यचित्रादि—अलंकारप्रधानककाव्यभिन्नत्वम्।

४ राघवप्रीतिभाजने हनूमति 'जानकीकुशलसूचनेन रामः शिशिरीकृतः' इति व्यङ्ग्यं विना कपीनामकस्मात्कोपो नोपपद्यते। अतो वाच्यकोपोपपादकतया व्यङ्ग्यं गुणीभूतमित्याशयः।

कपिकर्तृक-हनूमद्विषयककोपोपपादकतया गुणीभूतमपि दुर्दैववशतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति। नन्वेवं प्रागुक्तमाक्षेपगतं मान्द्यमपि नववधूप्रकृतिविरोधादनुपपद्यमानं व्यङ्ग्येनैवोपपाद्यत इति कथमुत्तमोत्तमता तस्य काव्यस्येति चेत्, न। यतो ह्यनुदिनसख्युपदेशादिभिरनतिचमत्कारिभिरप्युपपद्यमानं मान्द्यमिदं प्रथमचित्तचुम्बिनीं विप्रलम्भरतिमप्रकाशयच्च प्रभवति स्वातन्त्र्येण परनिर्वृतिचर्वणागोचरतामाधातुम्। इत्थमेव निःशेषच्युतचन्दनमित्यादिपद्येष्वधमत्वादीनि वाक्यानि व्यङ्ग्यातिरिक्तेनार्थेनापाततो निष्पन्नशरीराणि[1] व्यञ्जकानीति न तत्रापि गुणीभावः शङ्कनीयः। अनयोर्भेदयोरनपह्नवनीयचमत्कारयोरपि प्राधान्याप्राधान्याभ्यामस्ति कश्चित्सहृदयवेद्यो[2] विशेषः। यत्तु चित्रमीमांसाकृतोक्तम्—

'प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेण वा
किमुत सकले याते वाऽह्नि प्रिय त्वमिहैष्यसि।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालाऽऽलापैः सबाष्पगलज्जलैः॥'

इत्यत्र सकलमह्नः परमावधिस्ततः परं प्राणान्धारयितुं न शक्नोमीति व्यङ्ग्यं प्रियगमननिवारणरूपवाच्यसिद्ध्यङ्गमतो गुणीभूतव्यङ्ग्यम्' इति। तन्न। सबाष्पगलज्जलानां प्रहरविरतावित्याद्यालापानामेव प्रियगमननिवा-

रामविरहानलज्वालासंतापितसह्यनामकाद्रिशिखरेषु शिशिरतौ सुखं यथा तथा शयाना इत्यादिरर्थः। कोपो वाच्यः। प्रागुक्तं ध्वनितृतीयलक्ष्ये 'तल्पगतापि च' इति पद्ये उक्तम्। व्यङ्ग्येनैव रत्याख्यस्थायिनैव। एवोऽन्यव्यवच्छेदे। प्रथममेव। चित्तारूढामित्यर्थः। **अप्रेति**। अव्यञ्जयन्। **स्वेति**। मन्दत्वमात्रेणेत्यर्थः। **परेति**। परमसुखास्वादविषयतामित्यर्थः। अर्थेनापराधान्तरनिमित्तकदुःखदातृत्वरूपेण; तत्र तात्पर्याभावादाह—**आपातत इति**। ननूक्तभेदयोश्चमत्कृतेस्तौल्यादैक्यमेवास्तामत आह—**अनयोरिति**। **प्रहरविरताविति**। हे प्रिय, त्वं किं प्रहरसमाप्तौ दिनमध्ये याते

१ अधमत्वादीनि केवलं दूतीसंभोगकारित्वमात्रेणैव न निष्पद्यन्ते, अपराधान्तरकृतदुःखदातृत्वेनापि संभवन्तीति व्यङ्ग्यमात्रोपपाद्यत्वं वाच्यस्य नास्तीत्याशयः।

२ व्यङ्ग्यकृतचमत्कारो ह्युभयत्राऽप्यनपह्नवनीयः (न निगूहनीयः) तथापि उत्तमोत्तमे ध्वनिकाव्ये (प्रथमे) व्यङ्ग्यस्य प्राधान्यम्, उत्तमे गुणीभूतव्यङ्ग्ये (द्वितीये) च तस्याऽप्राधान्यमिति द्वयोर्विशेषः सहृदयैरेव बुध्यत इत्यर्थः।

रणरूपवाच्यसिद्ध्यङ्गतया व्यङ्ग्यस्य गुणीभावाभावात्। आलापैरिति तृतीयया प्रकृत्यर्थस्य हरणक्रियाकरणतायाः स्फुटं प्रतिपत्तेः। न च व्यङ्ग्यस्यापि वाच्यसिद्ध्यङ्गतात्र संभवतीति तथोक्तमिति वाच्यम्। निःशेषच्युतचन्दनमित्यादाविवाधमत्वरूपवाच्यसिद्ध्यङ्गताया दूतीसंभोगादौ संभवाद्गुणीभावापत्तेः। अस्तु वा ततः परं प्राणान्धारयितुं न शक्नोमीति व्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभावस्तथापि नायकादेर्विभावस्य बाष्पादेरनुभावस्य चिन्तावेगादेश्च संचारिणः संयोगादभिव्यज्यमानेन विप्रलम्भेन ध्वनित्वं को निवारयेत्।

यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो[1] वाच्यचमत्कारस्तत्तृतीयम्॥

यथा यमुनावर्णने—'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति। अत्रोत्प्रेक्षा वाच्यैव चमत्कृतिहेतुः। श्वैत्यपातालतलचुम्बित्वादीनां चमत्कारो

---

वा मध्याह्नादपि परेण तृतीयप्रहरेण यातेन वा सर्वदिने गते वेह मत्समीपे उत निश्चयेनैष्यस्यागमिष्यसीत्येवं प्रकारेण। आलापेऽस्यान्वयः। अग्रे स्पष्टम्। शतशब्दोऽनियतसंख्यावाची। एवमुक्तव्यङ्ग्यव्यवच्छेदे। व्यङ्ग्यस्य शक्नोमीत्यन्तस्य। ननु विनिगमनाविरहोऽत आह—**आलापैरिति**। प्रकृत्यर्थस्य तादृशालापस्य। अपिरुक्तसमुच्चये। ननु सबाष्पगलज्जलत्तदुक्तालापानां गमनोत्तरचिरकालावस्थितिनिवारकतयाप्युपपत्तेर्व्यङ्ग्यसहितानामेव गमननिवारणसामर्थ्यमत आह—**अस्तु वेति**। आन्तरालिकव्यङ्ग्यमादायैव ध्वनिगुणीभूतव्यङ्ग्यादिव्यवहारस्योपपद्यमानतया विप्रलम्भेन ध्वनित्वं को निवारयेदिति चिन्त्यम्। अन्यथा 'ग्रामतरुणम्' इत्यादिगुणीभूतव्यङ्ग्यीयप्रकाशाद्युक्तोदाहरणानामप्यसंगत्यापत्तौ व्याकुली स्यात्। तत्रापि व्यङ्ग्यसंकेतभङ्गेन वाच्यैमुखमालिन्यातिशयरूपानुभावमुखेनैव विप्रलम्भाभासपोषणं न केवलेन संकेतभङ्गेन। तस्याकर्तव्यत्वतुल्यापि संभवादिति बोध्यम्[2]।

**व्यङ्ग्येति**। तदसमानाधिकरणत्वं चास्फुटतया बोध्यम्। हिमाचलस्य मैनाकः पुत्रः। लम्बीकृतत्वप्रविष्टत्वे भुजविशेषणे। तद्वदाचरिता। 'उपमानादाचारे' इति क्यङ्। सखी यमुना वाच्यैव। तदर्थे क्यङः सत्त्वात्। अत्र श्वेतपातालतलगामिनी भागीरथी तादृशविशिष्टभुजत्वेनोत्प्रेक्ष्यते। एवव्यावर्त्यं व्यङ्ग्यमाह—**श्वैत्येति**। व्यङ्ग्यानामिति

---

१ व्यङ्ग्यकृतचमत्कारस्य असमानाऽधिकरणः (असहवासी), व्यङ्ग्यचमत्काराऽपेक्षया वाच्यचमत्कारः स्पष्ट उत्कृष्टश्च यत्र स्यात् इत्याशयः।

२ व्यङ्ग्यद्वारा वाच्यस्य (मुखमालिन्यस्य) अतिशयः स्वयं श्रीमतैव स्वीक्रियते अत एव नात्र ध्वनित्वम्। चरमं विप्रलम्भाभासमादाय तु ध्वनित्वमनुमतमेव तत्रापि।

लेशतया सन्नप्युत्प्रेक्षाचमत्कृतिजठरनिलीनो नागरिकेतरनायिकाकल्पितकाश्मीरद्रवाङ्गरागनिगीर्णो निजाङ्गगौरिमेव प्रतीयते । न तादृशोऽस्ति कोऽपि वाच्यार्थो यो मनागनास्पृष्टप्रतीयमान एव स्वतो रमणीयतामाधातुं प्रभवति । अनयोरेव द्वितीयतृतीयभेदयोर्जागरूकाजागरूकगुणीभूतव्यङ्ग्ययोः[1] प्रविष्टं निखिलमलंकारप्रधानं काव्यम् ।

**यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम् ॥**

**यथा—**

'मित्रात्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे ।
गोत्रारिगोत्रजत्राय गोत्रात्रे ते नमो नमः ॥' इति ।

अत्रार्थचमत्कृतिः शब्दचमत्कृतौ लीना । यद्यपि यत्रार्थचमत्कृतिसामान्यशून्या शब्दचमत्कृतिस्तत्पञ्चममधमाधममपि काव्यविधासु गणयितुमुचितम् । यथैकाक्षरपद्मार्धावृत्तियमकपद्मबन्धादि । तथापि रमणीयार्थप्रतिपादकशब्दतारूपकाव्यसामान्यलक्षणानाक्रान्ततया वस्तुतः

शेषः । **नागेति** । ग्रामीणेत्यर्थः । अत एव सम्यग्लेपनात्स्वाङ्गगौरत्वनिगरणम् । काश्मीरद्रवः केसररसः । सन्नपीत्यनेन व्यङ्ग्यासमानाधिकरणत्वमित्यत्र कुतो नोक्तमित्यस्य निरासः । तदाह—**न तादृश इति । मनागिति** । ईषदस्पृष्टव्यङ्ग्य एवेत्यर्थः । उपस्कृतत्वं पोषितत्वम् । अत एव तस्याः प्राधान्यम् । **मित्रेति** । गोत्रात्र इति तृजन्तस्य चतुर्थ्यन्तम् । शिवाय विष्णवे वा । सूर्याचन्द्रनेत्राय । त्रयी वेदत्रयी तत्र शात्रवं शत्रुत्वं यस्य मदनस्य, येषां वा दैत्यानाम्, तच्छत्रवे । गोत्रारिरिन्द्रस्तद्गोत्रजा देवास्तद्रक्षकायेत्यर्थः । **लीनेति** । अप्रधानत्वेनास्फुटत्वादिति भावः । न्यूनतां परिहरति—**यद्यपीति** । विधासु भेदेषु । महत्त्वेन तथानिबन्धे योग्यता सूचिता । परम्परामित्यनेनान्धपरम्परावदविचारः सूचितः । काव्येषु तत्र तत्र स्थलविशेषे । प्राचीनोक्तेः सूचितासांगत्यहेतुमाह—**वस्तुत इति** । केचित् प्रकाशकारादयः । एवं तारतम्यज्ञत्वेन । 'विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् । ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥' इति प्रकाशाद्युक्तम् । 'स च्छिन्न-

[1] जागरूकः चमत्कृतिशाली गुणीभूतो व्यङ्ग्यो यस्मिन् स च, अजागरूको मन्दायमानः गुणीभूतो व्यङ्ग्यो यस्मिन्स चेति तयोः ।

काव्यत्वाभावेन महाकविभिः प्राचीनपरम्परामनुरुन्धानैस्तत्र तत्र काव्येषु निबद्धमपि नास्माभिर्गणितम्, वस्तुस्थितेरेवानुरोध्यत्वात् । केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचक्षते । तत्रार्थचित्र-शब्दचित्रयोरविशेषेणाधमत्वमयुक्तं वक्तुम्, तारतम्यस्य स्फुटमुपलब्धेः । को ह्येवं सहृदयः सन् 'विनिर्गतं मानदमात्ममन्दिरात्', 'स च्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिः काव्यैः 'स्वच्छन्दोच्छलद्' इत्यादीनां पामरश्लाघ्यानामविशेषं ब्रूयात् । सत्यपि तारतम्ये यद्येकभेदत्वं कस्तर्हि ध्वनिगुणीभूतव्यङ्ग्ययोरीषदन्तरयोर्विभिन्नभेदत्वे दुराग्रहः । यत्र च शब्दार्थचमत्कृत्योरैकाधिकरण्यं तत्र तयोर्गुणप्रधानभावं पर्यालोच्य यथा[1]लक्षणं व्यवहर्तव्यम् । समप्राधान्ये तु मध्यमतैव ।

यथा—

'उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पंधयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
संघातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥'

मूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥' इत्यप्पयदीक्षितोक्तम् । काव्यैः, अर्थचित्रैरिति शेषः । 'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदैर्घ्यादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥' इति प्रकाशायुक्तम् । **पामरेति** । शब्दचित्रत्वादिति भावः । **ईषदन्तरेति** । प्राधान्याप्राधान्यकृतेत्यर्थः । **उल्लास इति** । रविवर्णनम् । उदयाचलप्रान्तभागादयं कोऽपि विलक्षणो धाम्नां तेजसां समूहः प्रादुर्भवति । तत्र रूपकं चतुर्धा । विकसितकमलसमूहमध्यावधिकान्तःसरणयुतरसपानजोन्मादवद्भ्रमराणामुल्लासः । तादृशकोकीनां निस्तारो दुःखोद्धर्ता । नाशिततेजसां तामसानां तमःसमूहानामुत्पातो नाशकः । नेत्राणां पक्षपातः सहकारी । 'आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः । ओजः स्यात्प्रौढिरर्थस्य संक्षेपो वाति-

१ लक्षणानुसारम् । अर्थचमत्कृतिप्राधान्ये मध्यमत्वम्, शब्दचमत्कृतिप्राधान्ये चाऽधमत्वं व्यपदेश्यमित्याशयः ।

अत्र वृत्त्यनुप्रासप्राचुर्यादोजोगुणप्रकाशकत्वाच्च शब्दस्य, प्रसादगुणयोगादनन्तरमेवाधिगतस्य रूपकस्य हेत्वलंकारस्य वा वाच्यस्य, चमत्कृत्योस्तुल्यस्कन्धत्वात्सममेव प्राधान्यम् ।

तत्र ध्वनेरुत्तमोत्तमस्यासंख्यभेदस्यापि सामान्यतः केऽपि भेदा निरूप्यन्ते—द्विविधो ध्वनिः, अभिधामूलो लक्षणामूलश्च । तत्राद्यस्त्रिविधः । रसवस्त्वलंकारध्वनिभेदात् । रसध्वनिरित्यलक्ष्यक्रमोपलक्षणाद्रसभावतदाभासभावशान्तिभावोदयभावसंधिभावशबलत्वानां ग्रहणम् । द्वितीयश्च द्विविधः । अर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च । एवं पञ्चात्मके ध्वनौ परमरमणीयतया रसध्वनेस्तदात्मा रसस्तावदभिधीयते—

समुचितललितसंनिवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः, चन्द्रिकादिभिरुद्दीपनकारणैः, अश्रुपातादिभिः कार्यैः, चिन्तादिभिः सहकारिभिश्च, संभूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्तितानन्दांशावरणाज्ञानेनात एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन

भूयसः ॥ यस्मादन्तःस्थितः सर्वः स्पष्टमर्थोऽवभासते । सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥' इति तल्लक्षणानि बोध्यानि । रूपकस्योल्लासाद्यभेदरूपकस्य । ननूल्लासादीनां तत्कार्यत्वात्कथं रूपकमत आह—**हेत्वलमिति** । 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति तल्लक्षणम् । तत्र चतुर्णां मध्ये । त्रैविध्योपपत्तये आह—**रसेति** । एतेनाधिक्यात्त्रैविध्यमनुपपन्नमित्यपास्तम् । **तदाभासेति** । रसाभासभावाभासेत्यर्थः । एतेषां स्वरूपाण्यग्रे स्फुटीभविष्यन्ति । एवमुक्तप्रकारेण । घटकत्वं सप्तम्यर्थः । रसध्वनेः परमरमणीयतयेत्यर्थः । तदात्मा ध्वन्यात्मा । **समुचितेति** । तत्तद्रससमुचितेत्यर्थः । अत एव ललित इति बोध्यम् । सहकारिभिश्चेत्यस्य चर्व्यमाणैरिति शेषः । **आनन्दांशेति** । आनन्दांशस्यावरणरूपमज्ञानं यस्येति बहुव्रीहिः । प्रमातृविशेषणमिदम् । अत

**निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः ॥**

( १ ) तथा चाहुः—'व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः' इति । व्यक्तो व्यक्तिविषयीकृतः । व्यक्तिश्च भग्नावरणा चित् । यथा हि शरावादिना पिहितो दीपस्तन्निवृत्तौ संनिहितान्पदार्थान्प्रकाशयति, स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान्रत्यादीन् । अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगतेः[2] । विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव साक्षिभास्यत्वमविरुद्धम्[3] । व्यञ्जकविभावादिचर्वणाया आवरणभङ्गस्य वोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ रसे उपचर्येते, वर्णनित्यतायामिव

---

एव । आवरणनिवृत्तेरेवेत्यर्थः । सकलविषयज्ञानसंभवादिति भावः । प्रमात्रेत्यस्य गोचरीक्रियमाण इत्यत्रान्वयः । आहुर्मम्मटभट्टाः । रत्यादीनित्यत्र प्रकाशयति स्वयं च प्रकाशत इत्यस्यानुषङ्गः । ननु वासनारूपरत्यादीनां तद्भास्यत्वेऽपि विभावादीनां कथं तद्भास्यत्वम्, असाहित्येनासंबन्धादत आह—**अन्तःकरणेति** । तथा च परम्परासंबन्ध इति भावः । हेतोरविरुद्धमित्यत्रान्वयः । स्वप्नदृष्टान्तमुक्त्वा जाग्रद्दृष्टान्तमाह—**रङ्गेति** । नन्वेवमुत्पन्नो नष्टो रस इति व्यवहारो न स्यात्, चैतन्यरूपत्वात्, अत आह—**व्यञ्जकेति** । बहुपरम्पराभयादाह—**आवरणेति** । **उत्पत्तीति** । हेतौ पञ्चमी । उत्पत्तिवि-

---

१ कारणकार्यसहकारिभिः ( विभावानुभावसंचारिपदव्यपदेश्यैः ) सर्वैः संभूय ( व्यञ्जनाख्यस्यालौकिकव्यापारस्य प्रादुर्भावकार्यं संगत्य ) अलौकिको व्यापारः ( व्यञ्जनाख्यः ) प्रादुर्भाव्यते ( प्रकटीक्रियते ) । तेन च व्यापारेण आनन्दांशस्याऽऽवरणमज्ञानं निवर्त्यते । ततश्च निवृत्तमज्ञानं यस्य ईदृशेन, अत एव परिमितप्रमातृभावं त्यक्त्वा अपरिमितप्रमातृभावविशिष्टेन प्रमात्रा ( रसानुभवकर्त्रा, सामाजिकेन कर्तृभूतेन ) स्वस्वरूपम् ( प्रमातुः वास्तवं स्वं रूपम् ) य आनन्दः [ यतो हि आत्मा सत् चित् आनन्दस्वरूपः ] तेन सह गोचरीक्रियमाणो रत्यादिः । अर्थात् यस्मिन्काले रत्यादिर्गोचरीक्रियते तस्मिन्काले आत्मस्वरूपभूत आनन्दोऽपि गोचरीक्रियते । एवं च आनन्देन सह गोचरीक्रियमाणो रत्यादिरेव रस इति लक्षणस्याशयः ।

२ साक्षादात्मना भास्यत्वम् । अयं भावः—आन्तरिकधर्मेतरान् घटपटादिपदार्थान् अन्तःकरणसंयोगेनाऽयमात्मा प्रकाशयति । रत्युत्साहादीनन्तःकरणधर्मांस्तु साक्षादयमात्मैव भासयतीति 'साक्षिभास्य'त्वव्यपदेशः ।

३ ननु वासनारूपतया अन्तःकरणधर्माणां रत्यादीनामस्तु साक्षिभास्यत्वम् । शकुन्तलादिभौतिकपदार्थानां विभावादीनां तु कथं साक्षिभास्यत्वम्? इत्याह—स्वप्ने तुरगादीनाम्, तथा जाग्रदवस्थायां रङ्गे रजतादीनां च केवलकाल्पनिकत्वात्साक्षिभास्यत्वं यथा स्वीक्रियते तथा भावनामयानां विभावादीनामपि साक्षिभास्यत्वे न विरोध इति ग्रन्थाशयः ।

व्यञ्जकताल्वादिव्यापारस्य गकारादौ । विभावादिचर्वणावधित्वादावरणभङ्गस्य, निवृत्तायां तस्यां प्रकाशस्याऽऽवृतत्वाद्विद्यमानोऽपि स्थायी न प्रकाशते ।

यद्वा विभावादिचर्वणामहिम्ना सहृदयस्य निजसहृदयतावशोन्मिषितेन तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारा समाधाविव योगिनश्चित्तवृत्तिरुपजायते, तन्मयीभवनमिति यावत् । आनन्दो ह्ययं न लौकिकसुखान्तरसाधारणः, अनन्तःकरणवृत्तिरूपत्वात् । इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायी भावो रस इति स्थितम् ।

वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः । सर्वथैव चास्या विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वं च सिद्धम् । रत्याद्यंशमादाय त्वनित्यत्वमितरभास्यत्वं च । चर्वणा चास्य चिद्गतावरणभङ्ग एव प्रागुक्ता, तदाकारान्तःकरणवृत्तिर्वा । इयं च परब्रह्मास्वादात्समाधेर्विलक्षणा, विभावादिविषयसंवलि-

नाशयोः सत्त्वादित्यर्थः । व्यापारस्योत्पत्त्यादेः । ननु विभावादिचर्वणानाशेऽपि स्थायिप्रकाशः कुतो नात आह—**विभेति** । तस्यां तच्चर्वणायाम् । **विद्येति** । सूक्ष्मरूपतयेति भावः । मध्ये व्यापारकल्पनजलाघवायाह—**यद्वेति** । सहृदयस्येत्यस्य चित्तवृत्तिरित्यत्रान्वयः । आनन्दाकारा तद्विषया । समाधौ सविकल्पकसमाधौ । निर्विकल्पके तदनङ्गीकारादिति बोध्यम् । **चित्तवृत्तिरिति** । सा च काव्यव्यञ्जनामूलेति बोध्यम् । **तन्मयीति** । आनन्दविषयतया तत्प्रचुरेत्यर्थः । अस्य लौकिकत्वादाह—**सुखान्तरेति** । **अनन्तःकरणेति** । अन्तःकरणवृत्त्यवच्छिन्न[^1]चैतन्यरूपत्वादित्यर्थः । अस्या वृत्तेर्निरवच्छिन्नविषयकत्वादिति भावः । उपसंहरति—**इत्थं चेति** । स्थितमित्यनेन सूचितश्रुतिविरोधरूपारुचिसिद्धान्तमाह—**वस्त्विति** । **वक्ष्येति** । 'रसो वै सः' इत्यादीति भावः । **सर्वथैव चेति** । उभयथापीत्यर्थः । मतक्रमादाह—**विशेषेति** । चर्व्यमाणो रस इति प्राचीनव्यवहारोपपत्तये आह—**चर्वणा चास्येति** । यद्वेति मतेनाह—**प्रागुक्तेति** । **इयं चेति** । रसचर्वणा चेत्यर्थः । परेति बहुव्रीहिः । समाधेः सविकल्पकात् । **विषयेति** । सा च विषयासंवलितशुद्धब्रह्मालम्बनेति भावः । काव्यव्यापारो व्यञ्जना ।

---

[^1]: १ अन्यानि सुखानि अन्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपाणि । रसस्तु अन्तःकरणवृत्त्यवच्छिन्नचैतन्यात्मको न, अपि तु शुद्धचैतन्यात्मकः । अस्यानुभवे हि चित्तवृत्तिरानन्दमयी भवति । अयं चानन्दोऽनवच्छिन्नः, अन्तःकरणवृत्त्यवच्छेदराहित्यात् ।

त्त्विदानन्दालम्बनत्वात् । भाव्या च काव्यव्यापारमात्रात् । अथास्यां सुखांशभाने किं मानमिति चेत्समाधावपि तद्भाने किं मानमिति पर्यनुयोगस्य तुल्यत्वात् । 'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्' इत्यादिः शब्दोऽस्ति तत्र मानमिति चेत्, अस्त्यत्रापि 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति' इति श्रुतिः, सकलसहृदयप्रत्यक्षं चेति प्रमाणद्वयम् । येयं द्वितीयपक्षे तदाकारचित्तवृत्त्यात्मिका रसचर्वणोपन्यस्ता सा शब्दव्यापारभाव्यत्वाच्छाब्दी । अपरोक्षसुखालम्बनत्वाच्चापरोक्षात्मिका । तत्त्वंवाक्यजबुद्धिवत्[1] । इत्याहुरभिनवगुप्ताचार्यपादाः ।

(२) भट्टनायकास्तु "ताटस्थ्येन रसप्रतीतावनास्वाद्यत्वम् । आत्मगतत्वेन तु प्रत्ययो दुर्घटः । शकुन्तलादीनां सामाजिकान्प्रत्यविभावत्वात् । विना विभावमनालम्बनस्य रसादेरप्रतिपत्तेः । न च कान्तात्वं साधारणविभावतावच्छेदकमत्राप्यस्तीति वाच्यम् । अप्रामाण्यनिश्चयानालिङ्गिताऽगम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य विभावतावच्छेदककोटावश्यं निवेश्यत्वात्[2] । अन्यथा स्वस्रादेरपि कान्तात्वादिना तत्त्वापत्तेः । एवमशोच्यत्वकापुरुषत्वादिज्ञानविरहस्य तथाविधस्य करुणरसादौ । तादृशज्ञानानुत्पादस्तु[3] तत्प्रतिबन्धकान्तरनिर्वचनमन्तरेण दुरुपपादः । स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरेव तथेति चेत्, न । नायके धराधौरे-

मात्रपदेन तत्कारणश्रवणादिनिरासः । शाब्दत्वापरोक्षत्वयोर्न विरोध इत्याह—**तत्त्वेति** । **ताटस्थ्येन रसेति** । स्वसंबन्धराहित्येनेत्यर्थः । विभावं विनैवास्तामत आह—**विनेति** । अनालम्बनस्य निराधारस्य । अत्रापि वेषेऽपि । अनालिङ्गितत्वं ज्ञानविशेषः । विशेष्यतासंबन्धः समवायः । आवश्यकत्वमुक्तं द्रढयितुं विपक्षे बाधकमाह—**अन्यथेति** । एवमुक्तरीत्या । तथाविधस्य विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य । रसादावित्यस्य विभावतावच्छेदककोटावश्यनिवेश्यत्वमिति शेषः ॥ **तादृशेति** । अप्रामाण्यनिश्चयानालिङ्गितेत्यर्थः । 'धराधौरेय' इति पाठः । विशिष्टोऽत्र धर्मे उभयत्र ।

१ 'तत्त्वमसि' इति वाक्यजब्रह्मज्ञानवत् ।

२ शृङ्गारे कान्तादेर्विभावताऽवच्छेदककोटौ (अर्थाद् विभावत्वनिर्धारणे) समवायसंबन्धावच्छिन्ना प्रतियोगिता यस्य ईदृशस्य, अप्रामाण्यनिश्चयेनाऽस्पृष्टस्य, 'इयमगम्याऽस्ति' इत्याकारकज्ञानस्याऽभावोऽवश्यं निवेश्यः । अयं भावः—कान्तायाः शृङ्गाररसे विभावत्वं तदैव भवेत् यदा इयमगम्या नास्तीति प्रामाणिको निश्चयः स्यात् ।

३ अप्रामाण्येतिप्रकारकस्य 'इयमगम्या' इति ज्ञानस्याऽनुत्पत्तिः ।

यत्वधीरत्वादेरात्मनि चाधुनिकत्वकापुरुषत्वादेर्वैधर्म्यस्य स्फुटं प्रतिपत्तेरभेदबोधस्यैव दुर्लभत्वात् । किं च केयं प्रतीतिः ? प्रमाणान्तरानुपस्थानाच्छाब्दीति चेत्, न । व्यावहारिकशब्दान्तर[1]जन्यनायकमिथुनवृत्तान्तवित्तीनामिवास्या अप्यहृद्यत्वापत्तेः । नापि मानसी । चिन्तोपनीतानां तेषामेव पदार्थानां मानस्याः प्रतीतेरस्या वैलक्षण्योपलम्भात् । न च स्मृतिः । तथा प्रागननुभवात् । तस्मादभिधया निवेदिताः पदार्था भावकत्वव्यापारेणाऽगम्यत्वादिरसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते । एवं साधारणीकृतेषु दुष्यन्तशकुन्तलादेशकालवयोवस्थादिषु, पङ्गौ पूर्वव्यापारमहिमनि, तृतीयस्य भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयो रजस्तमसोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायी रसः । तत्र भुज्यमानो रत्यादिः, रत्यादिभोगो वेत्युभयमेव रसः । सोऽयं भोगो विषयसंवलनाद्ब्रह्मास्वाद[2]सविधवर्तीत्युच्यते । एवं च त्रयोंऽशाः काव्यस्य—"अभिधा भावना चैव तद्भोगीकृतिरेव च"

**प्रमेति** । प्रत्यक्षादीत्यर्थः । **शब्दान्तरेति** । काव्यान्यव्यवहारसाधकशब्देत्यर्थः । **वृत्तान्तेति** । वृत्तान्तज्ञानानामित्यर्थः । अस्या अपि । उक्तशब्दाप्रतीतेरित्यर्थः । **अगम्यत्वादीति** । तत्प्रकारकं रसविरोधि यज्ज्ञानं तत्प्रतीत्यर्थः । **कान्तेति** । कान्तात्वादी रसानुकूलो यो धर्मस्तद्वैशिष्ट्येनेत्यर्थः । एवमुक्तव्यापारेण । तावतैव साफल्येनाह— **पङ्गाविति** । सतिसप्तमी । तमसोरित्यत्राप्येवम् । उद्रेकश्च स्वेतरावभिभूयावस्थानम् । **साधारणेति** । संबन्धिविशेषानवच्छिन्नेत्यर्थः । विनिगमनाविरहादाह—**तत्रेति** । विशिष्ट इत्यर्थः । भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपानन्यालम्बना या संवित्तत्स्वरूपो लौकिकसुखानुभवविलक्षणः । सत्त्वरजस्तमसां गुणानामुद्रेकेण क्रमात्सुखदुःखमोहाः प्रकाश्यन्ते । **सविधेति** । न तु स एवेति भावः । अंशा व्यापाराः ।

१ व्यावहारिकैरन्यान्यैः शब्दैर्जातानां नायक-नायिकयोर्वृत्तान्तज्ञानानां यथा अहृद्यत्वं तथैषामपीत्याशयः ॥

२ तत्सदृशः, नतु स एव । ब्रह्मानन्दे विषयाणामसंवलनात् ।

इत्याहुः । मतस्यैतस्य पूर्वस्मान्मताद्भावकत्वव्यापारान्तरस्वीकार एव विशेषः । भोगस्तु व्यक्तिः । भोगकृत्त्वं तु व्यञ्जनादविशिष्टम् । अन्या तु सैव सरणिः ।

(३) नव्यास्तु 'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः । अयं च कार्यो दोषविशेषस्य । नाश्यश्च तन्नाशस्य । स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाऽग्रहात्सुखपदव्यपदेश्यो भवति । स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात्तद्वतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते । अवच्छादकं दुष्यन्तत्वमप्यनिर्वचनीयमेव । अवच्छादकत्वं च रत्यादिविशिष्टबोधे विशेष्यतावच्छेदकत्वम् । एतेन—"दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वाद्यत्वान्न रसत्वम् । स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सं-

---

सैवेति । प्रागुक्त एव मार्ग इत्यर्थः । तन्नाशेति । दोषविशेषनाशेत्यर्थः । स्वपूर्वोपेति । दुष्यन्तादौ गृहीतशकुन्तलारत्यादिनेत्यर्थः । तदग्रहादिति । भेदाग्रहादित्यर्थः । नन्वेवमपि कथं तद्धर्मलाभोऽत आह—तद्वतीति । एतेनेति । उक्तरीत्या सर्वोपपाद-

---

१ पूर्वस्मान्मतात् ( अभिनवगुप्तादेः ) भावकत्वव्यापारस्य नवीनस्य स्वीकार एव विशेषः । भोगस्तु व्यञ्जना । व्यञ्जनया अज्ञानावरणमपसार्य सत्वोद्रेकाद्भग्नावरणचिद्विशिष्टो रत्यादिः, भग्नावरणा चिदेव वा, यथा रसत्वेनास्वादविषयीक्रियते तथा भोजकत्वव्यापारेण सत्ववृद्धौ सत्यां निजचित्स्वभावनिर्वृति( चैतन्यावरणभङ्ग )लक्षणेन साक्षात्कारेण विषयीकृतो रत्यादिरेव रसत्वेनाभ्युपेयते । ततश्च भोजकत्वं व्यञ्जनाभ्यार्नायम् । केवलं विभावादिसाधारणीकारको भावनाव्यापार एव नवीन इत्याशयः ।

२ सदसद्विलक्षणतया निर्वचनानर्हः ।

३ रसोत्पत्तेः पूर्वं शकुन्तलादिषु दुष्यन्तादेर्या रतिर्व्यञ्जनया गृह्यते तया साकं स्वात्मनि कल्पितायाः रतेः ( प्रेम्णः ) अभेदो भवतीति अयमपि ( रसः ) व्यङ्ग्यो वर्ण्यश्च प्रतीयत इत्याशयः ।

४ रत्यादिविशेषणकशाब्दबोधे विशेष्यतावच्छेदकत्वम् । अर्थात् मत्संबन्धिन एव रत्यादयः सन्तीति आत्मनि रत्यादीनां विशेष्यताकल्पनमेव अवच्छादकत्वमित्याशयः ।

बन्धिभिः कथमभिव्यक्तिः। स्वस्मिन्दुष्यन्ताद्यभेदबुद्धिस्तु बाधबुद्धि-पराहता" इत्यादिकमपास्तम्। यदपि विभावादीनां साधारण्यं प्राचीनैरुक्तं तदपि काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम्। अतोऽवश्यकल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा।

नन्वेवमपि रतेरस्तु नाम दुष्यन्त इव सहृदयेऽपि सुखविशेषजनकता, करुणरसादिषु तु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य कथमिव सहृदयाह्लादहेतुत्वम्। प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैवौचित्यात्। न च सत्यस्य शोकादेर्दुःखजनकत्वं कॢप्तं न कल्पितस्येति नायकानामेव दुःखम्, न सहृदयस्येति वाच्यम्। रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेः। सहृदये रतेरपि कल्पितत्वेन सुखजनकतानुपपत्तेश्चेति चेत्। सत्यम्। शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदयहृदयप्रमाणकस्तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम्। अथ यद्याह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम्। स्वस्वकारणवशाच्चोभयमपि भविष्यति। अथ तत्र कवीनां कर्तुम्, सहृदयानां च श्रोतुम्, कथं प्रवृत्तिः? अनिष्टसाधनत्वेन निवृत्तेरुचितत्वात्। इति चेत्। इष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चन्दनद्रवलेपनादाविव प्रवृत्तेरुपपत्तेः। केवलाह्लादवादिनां तु प्रवृत्तिरप्रत्यू-

नेनेत्यर्थः। तस्य रत्यादेः। **रज्जुसर्पादेरिति**। तद्रूपसर्पादेरित्यर्थः। **केवलेति**। दुःखामिश्रेत्यर्थः। **दुःखप्रतिबन्धेति**। सुरतकालिकदन्ताद्याघातस्येवेत्यर्थः। प्रमाणेत्यस्य सहृदयेत्यादिः। तत्र करुणप्रधानकाव्ये। द्वितीयमतेनेदमुक्तं नाद्यमतेनेत्याह—**केव-**

१ भावनाविशेषमहिम्ना कल्पितदुष्यन्तत्वावच्छादिते आत्मनि शकुन्तलाविषयकरतेः परिगृहीतत्वात् 'दुष्यन्तादिनिष्ठा रतिर्नास्वाद्या, दुष्यन्ताद्यभेदबोधश्च पराहतः' इत्यादिप्रतिवादिशङ्कानामनवसर एवेत्याशयः।

२ चन्दनद्रवलेपे—यथा घर्षणजन्यः श्रमः, लेपशोषोत्तरं शुष्कपर्पटिकाच्युतिरित्यादिकमनिष्टं न्यूनम्। इष्टं शैत्यजन्या निर्वृतिरत्वधिका तथाऽत्रापीत्याशयः।

ह्येव। अश्रुपातादयोऽपि तत्तदानन्दानुभवस्वाभाव्यात्, न तु दुःखात्। अत एव भगवद्भक्तानां भगवद्वर्णनाकर्णनादश्रुपातादय उपपद्यन्ते। न हि तत्र जात्वपि दुःखानुभवोऽस्ति। न च करुणरसादौ—स्वात्मनि शोकादिमद्दशरथादितादात्म्यारोपे यद्याह्लादस्तदा स्वप्नादौ संनिपातादौ वा स्वात्मनि तदारोपेऽपि स स्यात्, आनुभविकं च तत्र केवलं दुःखमितीहापि तदेव युक्तमिति वाच्यम्। अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा, यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति। विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात्। जन्यत्वं च स्वजन्य[1]भावनाजन्यरत्यादिविषयकत्वम्। तेन रसास्वादस्य काव्यव्यापाराजन्यत्वेऽपि न क्षतिः। शकुन्तलादावगम्यात्वज्ञानोत्पादस्तु स्वात्मनि दुष्यन्ताद्यभेदबुद्ध्या प्रतिबध्यते' इत्याहुः।

(४) परे तु 'व्यञ्जनव्यापारस्यानिर्वचनीय[2]ख्यातेश्चानभ्युपगमेऽपि प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदबोधो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसः। स्वाप्नादिस्तु तादृशबोधो न काव्यार्थचिन्तनजन्मेति न रसः। तेन तत्र न तादृशाह्लादापत्तिः। एवमपि स्वस्मिन्नविद्यमानस्य रत्यादेरनुभवः कथं नाम स्यात्। मैवम्। न ह्ययं लौकिकसाक्षात्कारो

---

लेति। न चाद्यमतेऽश्रुपातादयो न स्युः, तेषां दुःखकार्यत्वादत आह—**अश्रुपातादयोऽपीति**। नेदं क्वचिद्दृष्टमत आह—**अत एवेति**। जात्वपीषदपि। तदारोपेऽपि शोकादिमद्दशरथादितादात्म्यारोपेऽपि। स आह्लादः। तत्र स्वप्नादौ। इहापि करुणरसादावपि। तदेव दुःखमेव। यत्प्रयोज्याः काव्यव्यापारप्रयोज्याः। प्राचीनोक्तदोषमुद्धरति—**शकुन्तलादाविति**। प्रागुक्तदोषमुद्धरति—**स्वाप्नादिस्त्विति**। नन्वेवं

---

१ स्वं काव्यं तज्जन्या या भावना तज्जन्यो रत्यादिविषयक आस्वाद एव काव्यव्यापारज आस्वाद इत्यभिधीयत इति भावः।

२ 'अनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः' इति रसानुभवे अनिर्वचनीयता (सदसद्विलक्षणतयाऽनिर्वाच्यता) पूर्वमते स्वीक्रियत इति तात्पर्यम्।

रत्यादेः, येनावश्यं विषयसद्भावोऽपेक्षणीयः स्यात् । अपि तु भ्रमः । आस्वादनस्य रसविषयकत्वव्यवहारस्तु रत्यादिविषयकत्वालम्बनः' इत्यपि वदन्ति । एतैश्च स्वात्मनि दुष्यन्तत्वधर्मितावच्छेदकशकुन्तलादिविषयकरतिवैशिष्ट्यावगाही, स्वात्मत्वविशिष्टे शकुन्तलादिविषयकरतिविशिष्टदुष्यन्ततादात्म्यावगाही, स्वात्मत्वविशिष्टे दुष्यन्तत्वशकुन्तलाविषयकरत्योर्वैशिष्ट्यावगाही, वा त्रिविधोऽपि बोधो रसपदार्थतयाभ्युपेयः । तत्र रतेर्विशेषणीभूतायाः शब्दादप्रतीतत्वाद्व्यञ्जनायाश्च तत्प्रत्यायिकाया अनभ्युपगमाच्चेष्टादिलिङ्गकमादौ विशेषणज्ञानार्थमनुमानमभ्युपेयम्।

(५) 'मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य साक्षात्क्रियते'

---

बोधस्यैव सत्त्वेन कथमास्वादे रसविषयकत्वव्यवहारोऽत आह—**आस्वादेति** । **एतैश्च** 'परेतु' इति वादिभिश्च । **अभ्युपेय इति** । विनिगमनाविरहादिति भावः । **रस इति** । रत्यादिरूपो रस इत्यन्वयः । **दुष्यन्ताद्यनुकर्तरीति** । श्रव्यकाव्ये तु काव्यपाठक इति

---

१ भ्रमस्य ज्ञानरूपत्वात्तदास्वादः कथं घटेतेति शङ्कायाम्—'शकुन्तलादिरतेरात्मनि भ्रमो भवति । रतेरास्वादश्चानुभवसिद्धः । ततश्च रतिविषयकास्वादव्यवहारमवलम्ब्य रसस्याप्यास्वादो व्यवह्रियते' इत्युत्तरम् ।

२ सहृदयस्य निजात्मनि—दुष्यन्तत्वं धर्मितावच्छेदकं यस्मिन् (अर्थात् यस्मिन् रतिवैशिष्ट्ये दुष्यन्तो धर्मी भवति) ईदृशं यत् शकुन्तलाविषयकरतिवैशिष्ट्यं तत्प्रतिपादकः अर्थात् 'शकुन्तलादिविषयिका या रतिस्तद्युक्तः अहं दुष्यन्तोऽस्मि' इति मानसः प्रथमो बोधः ।

स्वात्मत्वविशिष्टे (स्वात्मनि) शकुन्तलादिविषयिका या रतिस्तद्विशिष्टो यो दुष्यन्तः तस्य तादात्म्यावगाही (अभेदबोधकः) अर्थात् 'शकुन्तलादिविषयकरतिविशिष्टो दुष्यन्तः अहमस्मि' इति द्वितीयः ।

स्वात्मनि दुष्यन्तत्वस्य शकुन्तलाविषयकरतेश्च वैशिष्ट्यप्रतिपादकः अर्थात् 'अहं दुष्यन्तत्वेन शकुन्तलाविषयकरत्या च विशिष्टः अस्मि' इति तृतीयः ।

त्रिष्वपि तात्पर्यमेकमेव, किन्तु प्रथमे 'अहं दुष्यन्तः' इति अहमित्युद्दिश्य दुष्यन्तत्वं विधीयते । द्वितीये 'दुष्यन्तः अहमस्मि' दुष्यन्तत्वमाधारीकृत्य अहंत्वं विधीयते । तृतीये आत्मनि दुष्यन्तत्वं रतिश्च विशेष्यते ।

३ त्रिष्वपि बोधेषु रतिविशेषणतया प्रविष्टा । सा शब्दैस्तु न प्रतिपादयितुं शक्या । व्यञ्जना चास्मिन्मते नाङ्गीकृता । ततश्च—नटादीनां चेष्टारूपेण हेतुना विशेषणभूतायास्तस्या ज्ञानार्थमनुमानं स्वीकार्यमिति तात्पर्यम् । अनुमानेन शकुन्तलादिरतिर्दुष्यन्ते साधनीया । ततश्च दोषविशेषमाहात्म्याद्भेदप्रतीतिस्थगनं विधाय तादृशरतिमता दुष्यन्तेन सह आत्मनोऽपि ऐकात्म्यं साधयित्वा 'मानसो रतिमदभेदबोध एव रसः' इति 'परे तु' इति मतम् ।

इत्येके । मतेऽस्मिन्साक्षात्कारो दुष्यन्तोऽयं शकुन्तलादिविषयकरतिमानि-त्यादिः प्राग्वद्धर्म्यंशे लौकिक आरोप्यांशे त्वलौकिकः ।

(६) 'दुष्यन्तादिगतो रत्यादिर्नटे पक्षे दुष्यन्तत्वेन गृहीते विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैर्भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वादनु-मीयमानो रसः' इत्यपरे ।

(७) 'विभावादयस्त्रयः समुदिता रसाः' इति कतिपये । (८) 'त्रिषु य एव चमत्कारी स एव रसोऽन्यथा तु त्रयोऽपि न' इति बहवः । (९) 'भाव्य-मानो विभाव एव रसः' इत्यन्ये । (१०) 'अनुभावस्तथा' इतीतरे । (११) 'व्यभिचार्येव तथा तथा परिणमति' इति केचित् ।

तत्र 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रं तत्तन्म-तपरतया व्याख्यायते—'विभावानुभावव्यभिचारिभिः संयोगाद्व्यञ्जना-द्रसस्य चिदानन्दविशिष्टस्थाय्यात्मनः स्थाय्युपहितचिदानन्दात्मनो वा निष्पत्तिः स्वरूपेण प्रकाशनम्' इत्याद्ये । 'विभावानुभावव्यभिचारिणां

---

बोध्यम् । **मतेऽस्मिन्निति** । अस्मिन्मते इत्यादिः । साक्षात्कारस्तत्र लौकिकोऽन्यत्रा-लौकिक इत्यन्वयः । मतान्तरमाह—**दुष्यन्तादीति** । कतिपये केचन । त्रिषु विभा-वादिषु । तथा भाव्यमानोऽनुभावस्तथा रस इतीतरे इत्यर्थः । तथा भाव्यमानो व्यभि-चारिभाव एव तथा रसरूपतया परिणमतीत्यर्थः । उक्तार्थानां समूलत्वमाह—**तत्रेति** । उक्तपक्षसिद्ध्यर्थमित्यर्थः । संयोगादित्यस्य व्याख्या व्यञ्जनादिति । विनिगमनाविरहा-दाह—**स्थाय्युपेति** । निष्पत्तिरित्यस्य व्याख्या स्वरूपेणेत्यादि । आद्येऽभिनवगुप्तमते ।

---

१ अयं ( नटः ) शकुन्तलादिविषयकरतिमान् दुष्यन्तः । इति सोयं साक्षात्कारः प्राग्वत् पूर्वमतवत् त्रिभिः प्रकारैः [ अयं दुष्यन्तः, दुष्यन्तः अयम्, अयं दुष्यन्तः शकुन्तलादिरतिमांश्च ] भवति । अयं तत्र धर्म्यंशे अर्थात् 'अयम्' इति नटविषये, धर्मिणः प्रत्यक्षोपस्थितत्वात् सोयं साक्षात्कारो लौकिकः । आरोप्यांशे ( दुष्यन्तपक्षे ) अतथात्वादलौकिकः ।

लोल्लटादिमतेऽस्मिन्—चेष्टादिभिर्दुष्यन्ते रतिमनुमाय, तदनुकर्तरि नटे चाभिनयपाट-वाद्दुष्यन्तस्यारोपं कृत्वा, आरोपवतस्तस्य ( नटस्य ) ऐकात्म्यं दोषविशेषमाहात्म्याद्यथाकथं-चिदात्मनि कृत्वा सहृदयेनास्वाद्यमानस्य रत्यादेः परिणतिः रसो भवतीति बोध्यम् । अत एव काव्यप्रकाशे-एतन्मते सामाजिकस्य रसानुदयरूपया अरुच्या मतान्तरस्यावतरणम् ।

२ सम्यक् भोगक्षमत्कारः, तच्छाली ।

३ भावनायाः ( पुनः पुनरनुसंधानस्य ) विषयीकृतः ।

सम्यक्साधारणात्मतया योगाद्भावकत्वव्यापारेण भावनाद्रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशितस्वात्मानन्दरूपस्य निष्पत्तिर्भोगाख्येन साक्षात्कारेण विषयीकृतिः' इति द्वितीये । 'विभावानुभावव्यभिचारिणां संयोगाद्भावनाविशेषरूपाद्दोषाद्रसस्यानिर्वचनीयदुष्यन्तरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः' इति तृतीये । 'विभावादीनां संयोगाज्ज्ञानाद्रसस्य ज्ञानविशेषात्मनो निष्पत्तिरुत्पत्तिः' इति चतुर्थे । 'विभावादीनां संबन्धाद्रसस्य रत्यादेर्निष्पत्तिरारोपः' इति पञ्चमे । 'विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः संयोगादनुमानाद्रसस्य रत्यादेर्निष्पत्तिरनुमितिः, नटादौ पक्ष इति शेषः' इति षष्ठे । 'विभावादीनां त्रयाणां संयोगात्समुदायाद्रसनिष्पत्तौ रसपदव्यवहारः' इति सप्तमे । 'विभावादिषु सम्यग्योगाच्चमत्कारात्' इत्यष्टमे । तदेवं पर्यवसितस्त्रिषु मतेषु सूत्रविरोधः । विभावानुभावव्यभिचारिणामेकस्य तु रसान्तरसाधारणतया नियतरसव्यञ्जकतानुपपत्तेः सूत्रे मिलितानामुपादानम् । एवं च प्रामाणिके मिलितानां व्यञ्जकत्वे यत्र क्वचिदेकस्मादेवासाधारणाद्रसोद्बोधस्तत्रेतरद्वयमाक्षेप्यम् । अतो नानैकान्तिकत्वम् । इत्थं नानाजातीयाभिः शेमुषीभिर्नानारूपतयावसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानः प्रपञ्चेऽस्मिन्रसो रमणीयतामावहतीति निर्विवादम् ।

---

संयोगादित्यस्य विच्छित्त्यर्थमाह—**सम्यगिति** । द्वितीये भट्टनायकमते । तृतीये नव्यमते । चतुर्थे परे त्विति मते । पञ्चमे इत्येके इति मते । अनुमितिरित्यन्तोऽर्थः । अग्रे शेषपूरणम् । षष्ठे इत्यपरे इति मते । सप्तमे इति कतिपये इति मते । अष्टमे इति बहव इति मते । उपसंहरति—**तदेवमिति** । त्रिषु मतेषु भाव्यमान इत्यादिष्वग्रिमेषु । ननु तत्रैव त्रयाणां किमित्युपादानं येन मतत्रये सूत्रविरोधोऽत आह—**विभावेति** । निर्धारणषष्ठीयम् । **रसान्तरेति** । तदुक्तम्—'व्याघ्रादयो विभावा भयानकस्येव रौद्राद्भुतवीराणाम् । अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव करुणवीरभयानकानाम्' इति । एवं च उक्तहेतोरसदनुपपत्तौ च । **यत्र क्वचिदिति** । 'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥' इत्यादावित्यर्थः । परमप्रकृतमुपसंहरति—**इत्थमिति** । उक्तप्रकारैरित्यर्थः । शेमुषीभिर्मतिभिः । **अविनेति** । तन्नियतसंबन्धित-

स च—

'शृङ्गारः करुणः शान्तो रौद्रो वीरोऽद्भुतस्तथा ।
हास्यो भयानकश्चैव बीभत्सश्चेति ते नव ॥'

इत्युक्तेर्नवधा । मुनिवचनं चात्र मानम् ।

'शान्तस्य शमसाध्यत्वान्नटे च तदसंभवात् ।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥'

इत्याहुः । तत्रापरे न क्षमन्ते । तथा हि—नटे शमाभावादिति हेतुरसंगतः, नटे रसाभिव्यक्तेरस्वीकारात् । सामाजिकानां शमवत्त्वेन तत्र रसोद्बोधे बाधकाभावात् । न च नटस्य शमाभावात्तदभिनयप्रकाशकत्वानुपपत्तिरिति वाच्यम् । तस्य भयक्रोधादेरप्यभावेन तदभिनयप्रकाशकताया अप्यसंगत्यापत्तेः । यदि च नटस्य क्रोधादेरभावेन वास्तवतत्कार्याणां[1] वधबन्धादीनामुत्पत्त्यसंभवेऽपि कृत्रिमतत्कार्याणां शिक्षाभ्यासादित उत्पत्तौ नास्ति बाधकमिति निरीक्ष्यते, तदा प्रकृतेऽपि तुल्यम् । अथ नाट्ये गीतवाद्यादीनां विरोधिनां सत्त्वात्सामाजिकेष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमुद्रेक इति चेत्, नाट्ये शान्तरसमभ्युपगच्छद्भिः फलबलात्तद्गीतवाद्यादेस्तस्मिन्विरोधिताया[2] अकल्पनात् । विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनस्य

---

येत्यर्थः । तद्भेदमाह—**स चेति** । अत्राप्रामाण्यशङ्कां निराचष्टे—**मुनीति** । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः ॥' इतीत्यर्थः । शमसाध्यत्वाच्छमस्थायिकत्वात् । नाट्ये इत्यस्येतीति शेषः । **प्रकृतेऽपि तुल्यमिति** । न च शान्तस्य रोमाञ्चादिराहित्येनानभिनेयत्वात्कथं नाट्ये स इति वाच्यम् । सर्वचेष्टाराहित्यरूपेणैव तदभिनयसंभवादित्याहुः । अत एव च उक्तरीत्या

---

१ वास्तवे तत्कार्याणां ( क्रोधकार्याणाम् ) वधस्य बन्धनादेश्च उत्पत्तिरसंभवा तथापि कृत्रिमाणां क्रोधकार्याणां वधबन्धनादीनां शिक्षया अभ्यासादिना च उत्पत्तौ बाधो नास्तीत्याशयः ।

२ शान्तोद्दीपनार्थं गृहीतस्य तस्य ( तादृशस्य ) गीतवादित्रादेः तस्मिन् ( शान्ते ) विरोधिता न कल्प्यते शान्तपोषणरूपफलजननात्, यथा देवविषयकभावे विषयवैमुख्येऽपि तदनुकूलगीतवाद्यादेः ।

पुराणश्रवण-सत्सङ्ग-पुण्यवन-तीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः । अत एव च चरमाध्याये संगीतरत्नाकरे—

'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ।
तदचारु, यतः कंचिन्न रसं स्वदते नटः ॥'

इत्यादिना नाट्येऽपि शान्तो रसोऽस्तीति व्यवस्थापितम् । यैरपि नाट्ये शान्तो रसो नास्तीत्यभ्युपगम्यते तैरपि बाधकाभावान्महाभारतादिप्रबन्धानां शान्तरसप्रधानताया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः । अत एव 'अष्टौ नाट्ये रसाः स्मृताः' इत्युपक्रम्य 'शान्तोऽपि नवमो रसः' इति मम्मटभट्टा अप्युपसमहार्षुः ।

अमीषां च—

'रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः ।
हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी ॥'

रसेभ्यः स्थायिभावानां घटादेर्घटाद्यवच्छिन्नाकाशादिव प्रथमद्वितीययोर्मतयोः; सत्यरजतस्यानिर्वचनीयरजतादिव तृतीये, विषयस्य (रजतादेः) ज्ञानादिव चतुर्थे भेदो बोध्यः । तत्र आ प्रबन्धं स्थिरत्वादमीषां भावानां स्थायित्वम् । न च चित्तवृत्तिरूपाणामेषामाशुविनाशित्वेन स्थिरत्वं दुर्लभम्, वासनारूपतया स्थिरत्वं तु व्यभिचारिष्वतिप्रसक्तमिति वाच्यम् । वासनारूपाणाममीषां मुहुर्मुहुरभिव्यक्तेरेव स्थिरपदार्थत्वात् । व्यभिचारिणां तु नैव, तदभिव्यक्तेर्विद्युद्द्योतप्रायत्वात् ।

---

तत्र तस्य रसत्वादेव च । व्यवस्थापितमित्यत्रान्वयः । कंचित्कंचिदपि । **नाट्येऽपि शान्तो रस इति** । अत एव प्रबोधचन्द्रोदयस्य नाटकत्वं स्वीकृतं सर्वैः । अभ्युपेत्याह—**यैरपीति** । अत एव काव्ये आवश्यकत्वादेव । उपसमहार्षुरुपसंहारं कृतवन्तः । तथा च तेषां नवत्वे न विवाद इति भावः । अमीषां च शृङ्गारादीनां च । मतयोरभिनवगुप्तभट्टनायकोक्तयोः । तृतीये नव्यमते । चतुर्थे परे त्विति मते । ननु पारमार्थिकस्थिरत्वाभावात्कथं स्थायित्वमत आह—**तत्रेति** । काव्यादावित्यर्थः । नयतीत्यत्र

---

१ व्यभिचारिणां मुहुर्मुहुरभिव्यक्तिर्नैव, इत्यर्थः ।

यदाहुः—

'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्याशु स स्थायी लवणाकरः ॥
चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥'

चिरमिति व्यभिचारिवारणाय । अनुबन्धिभिर्विभावाद्यैः ।

तथा—

'सजातीयविजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ॥' इति ।

केचित्तु रत्याद्यन्यतमत्वं स्थायित्वमाहुः । तन्न । रत्यादीनामेकस्मिन्प्ररूढेऽन्यस्याप्ररूढस्य व्यभिचारित्वोपगमात् । प्ररूढत्वाप्ररूढत्वे बह्वल्पविभावजत्वे ।

तदुक्तं रत्नाकरे—

'रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः ।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः ॥' इति ।

एवं च वीररसे प्रधाने क्रोधः, रौद्रे चोत्साहः, शृङ्गारे हासः, व्यभिचारी भवति, नान्तरीयकश्च । यदा तु प्रधानपरिपोषार्थं सोऽपि बहुविभावजः क्रियते तदा तु रसालंकार इत्यादि बोध्यम् ।

तत्र

**स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः स्थायिभावः ॥**

गुरुदेवतापुत्राद्यालम्बनस्तु व्यभिचारी ।

विभावादीनिति शेषः । **लवणेति** । लवणाकर इवेत्यर्थः । **बह्वल्पविभावजत्वे इति** । बहु विपुलम् । विभावशब्दो वा साहचर्याद्विभावानुभावव्यभिचारिपरः । अत एव रत्नाकरे बहुवचनम् । एवं च एकस्य प्ररूढत्वेऽन्यस्य तत्त्वाङ्गीकारे च । **नान्तरीयेति** । क्रोधादिं विना तदसंभवादिति भावः । सोऽपि क्रोधादिरपि । **रसालंकार इति** । रसवदलंकार इत्यर्थः । तान्क्रमेण लक्षयति—**तत्र तेषां मध्ये** । आदिना नृपादिपरिग्रहः । शोकं लक्षयति—**पुत्रादीति** । पुत्रादीत्युक्तिफलमाह—**स्त्रीपुंसेति** । वियोग उक्त्वा

१ बहुविभावजन्यत्वं प्ररूढत्वम् । अल्पविभावजन्यत्वं चाऽप्ररूढत्वमित्याशयः ।

**पुत्रादिवियोगमरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोकः ॥**

स्त्रीपुंसयोस्तु वियोगे जीवितत्वज्ञानदशायां वैक्लव्यपोषिताया रतेरेव प्राधान्याच्छृङ्गारो विप्रलम्भाख्यो रसः । वैक्लव्यं तु संचारिमात्रम् । मृतत्वज्ञानदशायां तु रतिपोषितस्य वैक्लव्यस्येति करुण एव । यदा तु सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनज्ञानं कथंचित्स्यात्, तदालम्बनस्यात्यन्तिकनिरासाभावाच्चिरप्रवास इव विप्रलम्भ एव, न स करुणः । यथा चन्द्रापीडं प्रति महाश्वेतावाक्येषु । केचित्तु रसान्तरमेवात्र करुणविप्रलम्भाख्यमिच्छन्ति ।

**नित्यानित्यवस्तुविचारजन्मा विषयविरागाख्यो निर्वेदः ॥**

गृहकलहादिजस्तु व्यभिचारी ।

**गुरुबन्धुवधादिपरमापराधजन्मा प्रज्वलनाख्यः क्रोधः ॥**

अयं च परविनाशादिहेतुः[1] । क्षुद्रापराधजन्मा तु परुषवचनासंभाषणादिहेतुः । अयमेवामर्षाख्यो व्यभिचारीति विवेकः ।

**परपराक्रम-दानादिस्मृतिजन्मा औन्नत्याख्य उत्साहः ॥**

**अलौकिकवस्तुदर्शनादिजन्मा विकासाख्यो विस्मयः ॥**

**वागङ्गादिविकारदर्शनजन्मा विकासाख्यो हासः ॥**

**व्याघ्रदर्शनादिजन्मा परमानर्थविषयको वैक्लव्याख्यः स भयम् ॥**

परमानर्थविषयकत्वाभावे तु स एव त्रासो व्यभिचारी । अपरे तु औत्पातिकप्रभवस्त्रासः, स्वापराधद्वारोत्थं भयमिति भयत्रासयोर्भेदमाहुः ।

---

मरण आह—**मृतत्वेति** । **वैक्लव्यस्येति** । प्राधान्यमिति शेषः । एवादावादिनेत्यस्य पुनरुज्जीवनेत्यन्वयः । कथंचित्केनापि प्रकारेण । **एव न स इति** । विप्रलम्भ एव सः, न करुण इत्यर्थः । अत्र पुनरुज्जीवनस्थले । उक्तरीत्यैव निर्वाहेऽधिकतत्स्वीकारो वृथेत्यरुचिः केचिदित्यनेन सूचिता । **वधादिति** । वधादिरूपो यः परमापराधस्तज्ज इत्यर्थः । **परमानर्थेति** । मरणादिसंपादकेत्यर्थः । स चित्तवृत्तिविशेषः । त्रासस्तदाख्यः । विभावादी-

१ परस्य ( शत्रोः ) विनाशादेः कारणम् । क्षुद्रापराधजन्यस्तु कठोरवचनस्य, असंभाषणादेश्च हेतुः ।

**कदर्यवस्तुविलोकनजन्मा विचिकित्साख्यश्चित्तवृत्तिविशेषो जुगुप्सा ॥**

**एवमेषां स्थायिभावानां लोके तत्तन्नायकगतानां यान्यालम्बनतयोद्दीपनतया वा कारणत्वेन प्रसिद्धानि तान्येषु काव्यनाट्ययोर्व्यज्यमानेषु विभावशब्देन व्यपदिश्यन्ते ॥**

विभावयन्तीति व्युत्पत्तेः ।

**यानि च कार्यतया तान्यनुभावशब्देन ॥**

अनु पश्चाद्भाव उत्पत्तिर्येषाम् । अनुभावयन्तीति वा व्युत्पत्तेः ।

**यानि सह चरन्ति तानि व्यभिचारिशब्देन ॥**

तत्र शृङ्गारस्य स्त्रीपुंसावालम्बने । चन्द्रिकावसन्तविविधोपवनरहःस्थानादय उद्दीपनविभावाः । तन्मुखावलोकनतद्गुणश्रवणकीर्तनादयोऽन्ये सात्त्विकभावाश्चानुभावाः । स्मृतिचिन्तादयो व्यभिचारिणः ।

करुणस्य बन्धुनाशादय आलम्बनानि । तत्संबन्धिगृहतुरगाभरणदर्शनादयस्तत्कथाश्रवणादयश्चोद्दीपकाः । गात्रक्षेपाश्रुपातादयोऽनुभावाः । ग्लानिक्षयमोहविषादचिन्तौत्सुक्यदीनताजडतादयो व्यभिचारिणः ।

शान्तस्यानित्यत्वेन ज्ञातं जगदालम्बनम् । वेदान्तश्रवण-तपोवन-तापसदर्शनाद्युद्दीपनम् । विषयारुचिशत्रुमित्राद्यौदासीन्यचेष्टाहानिनासाग्रदृष्ट्यादयोऽनुभावाः । हर्षोन्मादस्मृतिमत्यादयो व्यभिचारिणः ।

रौद्रस्यागस्कृत्पुरुषादिरालम्बनम् । तत्कृतोऽपराधादिरुद्दीपकः । वधबन्धादिफलको नेत्रारुण्यदन्तपीडनपरुषभाषणशस्त्रग्रहणादिरनुभावः अमर्षवेगौग्र्यचापलादयः संचारिणः ।

---

लक्षयति—**एवमिति** । स्थायिभाववदित्यर्थः । एषु स्थायिभावेषु । कार्यतया स्थायिभावानां प्रसिद्धानीत्यस्यानुषङ्गः । शब्देन, व्यपदिश्यन्त इत्यनुषङ्गः । एवमग्रेऽपि । लाघवादाह—**अनुभावयन्तीति** । तत्र तेषां मध्ये । **तन्मुखेति** । अन्योन्यमुखेत्यर्थः एवमग्रेऽपि । **अन्ये सात्त्विकेति** । क्षेपस्त्यागः । चेष्टाहानिर्निश्चेष्टत्वम् । आगस्कृदप-

१ सांसारिकविषयेषु अरुचिः, शत्रु-मित्रादिषु औदासीन्यम् ( ताटस्थ्यं समानतया वर्तनमित्यर्थः ), चेष्टाहानिर्निःस्पृहतया सर्वकार्येषु निश्चेष्टत्वम् ।

एवं यस्याश्चित्तवृत्तेर्यो विषयः स तस्या आलम्बनम् । निमित्तानि चोद्दीपकानीति बोध्यम् ।

तत्र शृङ्गारो द्विविधः । संयोगो विप्रलम्भश्च । रतेः संयोगकाला[1]वच्छिन्नत्वे प्रथमः । वियोगकालावच्छिन्नत्वे द्वितीयः । संयोगश्च न दंपत्योः सामानाधिकरण्यम्, एकतल्पशयनेऽपीर्ष्यादिसद्भावे विप्रलम्भस्यैव वर्णनात् । एवं वियोगोऽपि न वैयधिकरण्यम्, दोपस्यो[2]क्तत्वात् । तस्माद्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ । यत्संयु[3]क्तो वियुक्तश्चास्मीति धीः । तत्राद्यो यथा—'शयिता सविधेऽप्यनीश्वरा' ( १२ पृष्ठे ) इत्यत्र निरूपितः ।

यत्तु चित्रमीमांसायाम्—'वागर्थाविव संपृक्तौ इत्यत्र रसध्वनिः । निरतिशयप्रेमशालिताव्यञ्जनात्' इति, तद्ध्वनिमार्गानाकलननिबन्धनम् । पार्वतीपरमेश्वरविषयककविरतौ प्र[4]धाने निरतिशयप्रेम्णो गुणीभावात् । न हि गुणीभूतस्य रत्यादे रसध्वनिव्यपदेशहेतुत्वं युक्तम् । 'भिन्नो र[5]साद्यलंकारादलंकार्यतया स्थितः' इति सिद्धान्तात् ।

---

राधकृत् । उक्तन्यायेन वीरादिष्वपि बोध्यमित्याह—**एवमिति** । **एकतल्पेति** । एकखट्वायां निद्रायामपीत्यर्थः । एवमित्यस्यार्थमाह—**दोषेति** । ईर्ष्याद्यभावे वैयधिकरण्येऽपि संभोगस्यैत्र वर्णनादित्यर्थः । यद्यस्मात् । तत्राद्यः शयितेति पाठः । यथेति पाठे तथेति

---

१ संयोगकालव्याप्तत्वे इत्यर्थः । परस्परसंयोगसमये यत्र रतेः स्थितिरित्याशयः । एवं विप्रलम्भेपि बोध्यम् ।

२ पृथक्स्थानस्थितावपि मनसि रतेः सत्त्वे, ईर्ष्यादीनां चाऽसत्त्वे, वियोगो नाऽख्यायते, अपि तु संभोग एवेति, वैयधिकरण्यस्य विप्रयोगलक्षणत्वे दोष एवेत्याशयः ।

३ 'संयुक्तः अस्मि' इति धीः मनोभावः संयोगः, 'वियुक्तः अस्मि' इति मनोभावश्च वियोग इति तात्पर्यम् ।

४ अजहल्लिङ्गः प्रधानशब्दः, प्रधानभूतां कविरतिं प्रति निरतिशयप्रेम्णो गुणीभावादिति तात्पर्यम् ।

५ अलंकार्यतया अलंकारादिभिः उपस्कार्यतया शोभनीयतया स्थितो रसभावादिः ( ध्वनित्वव्यपदेशहेतुः शृङ्गारादिरसादिः ), रसाद्यलंकारात् अन्यं प्रति गुणीभूतात् रसभावादेः ( रसवदाद्यलंकारात् ) भिन्नः ।

द्वितीयो यथा—

'वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा ।
निःश्वासग्लपिताधरोपरि पतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव शिव प्राणेशमालोकते ॥'

अत्राप्यालम्बनस्य नायकस्य, निःश्वासाश्रुपातादेरनुभावस्य, विषादचिन्तावेगादेश्च व्यभिचारिणः, संयोगाद्रतिरभिव्यज्यमाना वियोगकालावच्छिन्नत्वाद्विप्रलम्भरसव्यपदेशहेतुः ।

यथा वा—

'आविर्भूता यदवधि मधुस्यन्दिनी नन्दसूनोः
कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा ।
श्वासो दीर्घस्तदवधि मुखे पाण्डिमा गण्डयुग्मे
शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत् ॥'

यथा वा—

'नयनाञ्चलावमर्शं या न कदाचित्पुरा सेहे ।
आलिङ्गितापि जोषं तस्थौ सा गन्तुकेन दयितेन ॥'

इहापि सहजचाञ्चल्यनिवृत्तिर्जडता चानुभावव्यभिचारिणौ । इमं च पञ्चविधं प्राञ्चः प्रवासादिभिरुपाधिभिरामनन्ति । ते च प्रवासाभिलापविरहेर्ष्याशापानां विशेषानुपलम्भान्नास्माभिः प्रपञ्चिताः ।

---

शेषः । माङ्गलिकीर्मङ्गलफलकाः । मारुतेति । गवाक्षविवर इत्यर्थः । निःश्वासैर्ग्लपितो ग्लापितोऽधरोष्ठो यस्य प्राणेशस्य तत्र । शिव शिवेति खेदातिशये । यदवधि यद्दिनादारभ्य । मधुस्यन्दिनी मधुस्राविणी । तदाकर्षणविषयकं यत्कार्मणं मन्त्रतन्त्रादि तज्ज्ञा । नयनेति । लोचनपक्ष्मस्पर्शमित्यर्थः । जोषं तूष्णीम् । गन्तुकेन गन्तुकामेन । इमं च विप्रलम्भं च । ते च प्रवासाद्युपाधयः । षष्ठ्यन्तपाठे चैवम् । अग्रे प्रथमान्तपाठे उपाधय इत्येवार्थः । प्रवासाभिलापेति । प्रवासः प्रसिद्धः । अनादिसङ्गाभावेऽपि गुणश्रवणादिजन्याभिलाषे इच्छारूपे सति तदप्राप्तौ यः सोऽभिलाषहेतुक उच्यते । गुरुजनादिल-

---

१ कार्मणं तन्त्रमन्त्रादिना वशीकरणादि, तज्ज्ञा ।

२ परस्परं विशिष्य भेदाऽप्रतीतेरिति तात्पर्यम् ।

करुणो यथा—

'अपहाय सकलबान्धवचिन्तामुद्वास्य गुरुकुलप्रणयम् ।
हा तनय विनयशालिन्कथमिव परलोकपथिकोऽभूः ॥'

अत्र प्रमीततनय आलम्बनम् । तत्कालावच्छिन्नबान्धवदर्शनाद्युद्दीपनम् । रोदनमनुभावः । दैन्यादयः संचारिणः ।

शान्तो यथा—

'मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः ।
श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः ॥'

अत्र प्रपञ्चः सर्वोऽप्यालम्बनम् । सर्वत्र साम्यमनुभावः । मत्यादयः संचारिणः । यद्यपि प्रथमार्धे उत्तमाधमयोरुपक्रमाद्द्वितीयार्धेऽधमोत्तमवचनं क्रमभङ्गमावहति, तथापि वक्तुर्ब्रह्मात्मकतयोत्तमाधमज्ञानवैकल्यं संपन्नमिति द्योतनाय क्रमभङ्गो गुण एव ।

इदं पुनर्नोदाहार्यम्—

'सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयो-
र्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् ।
विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा
निमग्नः स्यां कस्यांचन नवनभस्याम्बुदरुचि ॥'

---

ज्ञादितः संगमप्रतिबन्धो विरहः । ईर्ष्या असूयादिशब्देन मानहेतुक उच्यते । प्रिये सपत्नीरते कोप ईर्ष्या । तत्कृतो गुणेषु दोषारोपोऽसूया । शापाद्यथा शकुन्तलादेर्दुर्वासस इति प्राचामाशयः । प्रमीतो मृतः । **तत्कालेति** । मृतिकालेत्यर्थः । भोगिभोगः सर्पफणा । **श्वपचेति** । चण्डालज्ञानिनोरित्यर्थः । निरन्तरा तारतम्यशून्या । **प्रपञ्च इति** । अनित्यत्वेन ज्ञात इत्यर्थः । **क्रमभङ्गमिति** । तथा चाक्रमत्वदोषाद्दुष्टं काव्यमिति भावः । **गुण एवेति** । तथा चादुष्टमिति भावः । **पुलिनमिति** । 'अधिशीङ्—' इति

---

१ पूर्वार्धे—मलयानिलश्च कालकूटश्च, रमणीकुन्तलश्च भोगिभोगश्च, इति पूर्वमुत्तमस्ततोऽधम इत्युपक्रमः कृतः । उत्तरार्धे तु—श्वपचश्च आत्मभूः (ब्रह्मा) चेति पूर्वमधमस्तत उत्तम उक्त इति प्रक्रमभङ्गदोषमावहतीति शङ्का ।

२ अतिमधुरायां नवनभस्याम्बुदरुचि भाद्रपदीयनवमेघकान्तौ कस्यांचन (अनिर्वचनीयायाम्) चिति चैतन्ये (श्रीकृष्णे) कदा निमग्नः स्याम् ।

अत्रापि यद्यपि विषयगणालम्बनः सुरस्रोतस्विनीतटागुहीपितो नयननिमीलनादिभिरनुभावितः स्थायी निर्वेदः प्रतीयते, तथापि भगवद्वासुदेवालम्बनायां कविरतौ गुणीभूत इति न शान्तरसध्वनिव्यपदेशहेतुः । इदं च पद्यं मन्निर्मितायां भगवद्भक्तिप्रधानायां करुणालहर्यामुपनिबद्धमिति तत्प्र[1]धानभावप्राधान्यमेवार्हति । शान्तरसाननुगुणश्चायमोजस्वी गुम्फ इति चानुदाहार्यमेवैतत् । पूर्वपद्ये तु 'परमात्मनि स्थितिः' इत्यनेन तत्ताद्रूप्यावगमाद्रतेरप्रतिपत्तिः ।

रौद्रो यथा—

'नवोच्छ[2]लितयौवनस्फुरदखर्वगर्वज्वरे
मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति ।
अयं पततु निर्दयं दलितद[3]प्तभूभृद्गल-
स्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥'

अत्र तदानीं रामत्वेनाऽज्ञातो गुरुकार्मुकभञ्जक आलम्बनम् । अत एव विशेष्यानुपादानम्, गुरुद्रुहो नामग्रहणानौचित्यात्, क्रोधाविष्काराद्वा । ध्वनिविशेषानुमितो निःशङ्कधनुर्भङ्ग उद्दीपकः । परुषोक्तिरनुभावः । गर्वामर्षादयः संचारिणः । एषा च धनुर्भङ्गध्वनिभग्नसमाधेर्भार्गवस्योक्तिः । वृत्तिरप्यत्र महोद्धता रौद्रस्य परमौजस्वितां परिपुष्णाति । अन्यत्र गुरुस्मरणे सत्यहंभावविगमस्यावश्यकतया प्रकृते चाजहत्स्वा[4]र्थलक्षणामूलध्व-

---

कर्म । सपदि तत्कालम् । गुम्फो रचनाविशेषः । इति च इत्यतोऽपि । नन्वेवमुदाहृतपद्येऽप्येवं स्यादत आह—**पूर्वेति** । तदानीं क्रोधसमये । गुरुः शिवः । अत एवेत्यस्या-

---

१ तस्यां प्रधानभूतो यो भावः ( देवविषयको रतिभावः ) तत्प्राधान्यमेवार्हतीत्यर्थः ।

२ नवोच्छलितयौवनेन स्फुरन् ( विजृम्भमाणः ) अखर्वो गर्वज्वरो यस्य, तस्मिन् ।

३ दलितेभ्यो दृप्तानां भूभृतां ( राज्ञाम् ) गलेभ्यः स्खलद् यद्रुधिरं तस्य घस्मरः पाता ।

४ सा हि प्राचामुपादानलक्षणा । एतन्मूलध्वननेन—असच्छब्दः स्वार्थमपि सूचयंल्लक्ष्यार्थं बोधयति—'अहमेकविंशतिवारान् वसुधां निःक्षत्रियामकरवम्, पित्राज्ञया मातुर्वधेऽपि न समकुचम्' इत्यादि । एतल्लक्ष्यार्थस्य—गर्वोत्कर्षप्रकाशनपूर्वक—विवेकशून्यतया क्रोधातिशयो व्यङ्ग्यः ।

ननेन मदीयेत्यनेन गर्वोत्कर्षस्यैव प्रकाशनात्स्फुटं गम्यमानेन विवेकशून्यत्वेन क्रोधस्याधिक्यं गम्यते ।

इदं तु नोदाहार्यम्—

'धनुर्विदलनध्वनिश्रवणतत्क्षणाविर्भव-
न्महागुरुवधस्मृतिः[1] श्वसनवेगधूताधरः ।
विलोचनविनिःसरद्बहुल[2]विस्फुलिङ्गव्रजो
रघुप्रवरमाक्षिपञ्जयति[3] जामदग्न्यो मुनिः ॥'

अत्राप्यपराधास्पदेन रघुनन्दनेनालम्बितो धनुर्विदलनध्वनिश्रवणेनोद्दीपितो निश्वासनेत्रज्वलनादिभिरनुभावितो महागुरुवधस्मृतिगर्वोग्रत्वादिभिश्च संचारितः क्रोधो यद्यपि व्यज्यते, तथाप्यसौ तत्प्रभाववर्णनबीजभूतायां कविरतौ[4] गुणीभूत इति न रौद्ररसध्वनिव्यपदेशहेतुः । काव्यप्रकाशगतरौद्ररसोदाहरणे तु 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्' इति पद्ये रौद्ररसव्यञ्जनक्षमा नास्ति वृत्तिः, अतस्तत्कवेरशक्तिरेव ।

वीरश्चतुर्धा । दानदयायुद्धधर्मैस्तदुपाधेरुत्साहस्य चतुर्विधत्वात् ।

तत्राद्यो यथा—

'कियदिदमधिकं मे यद्द्विजायार्थयित्रे
कवचमरमणीयं कुण्डले चार्पयामि ।
अकरुणमवकृत्त्य द्राक्कृपाणेन निर्य-
द्बहुलरुधिरधारं मौलिमावेदयामि ॥'

र्थमाह—**गुर्विति** । धनुरित्यस्य श्रीरामकृतशिवेत्यादिः । अन्यत्र क्रोधाभावे । **लक्षणेति** । लक्ष्यतावच्छेदकं चैकविंशतिवारनिःक्षत्रियवसुमतीकारकत्वम्, पित्राज्ञया मातृवधकारित्वं वा । **तत्प्रभावेति** । जामदग्न्यप्रभावेत्यर्थः । निर्यन्निःसरत् ।

१ आविर्भवन्ती महागुरोः (जमदग्नेः) वधस्मृतिर्यस्य सः ।

२ विलोचनाभ्यां विनिःसरन् भूयान् अग्निकणसमूहो यस्य सः ।

३ 'आक्षिपन् (क्रोधोक्तिभिस्तिरस्कुर्वन्) मुनिर्जयति' अत्र कविनिष्ठा मुन्यालम्बना रतिः प्रधानतया प्रतीयते, क्रोधस्थायिको रौद्रस्तु तत्परिपोषकतया गुणीभूत इति तात्पर्यम् ।

४ तस्य कवेः ।

एषा द्विजवेषायेन्द्राय कवचकुण्डलदानोद्यतस्य कर्णस्य तद्दानविस्मितान्सभ्यान्प्रत्युक्तिः। अत्र याचमान आलम्बनम्। तदुदीरिता स्तुतिरुद्दीपिका। कवचादिवितरणं तत्र लघुत्वबुद्ध्यादिकं चानुभावः। मे[1] इत्यर्थान्तरसंक्रमितवाच्यध्वन्युत्थापितो गर्वः स्वकीयलोकोत्तरपितृजन्यत्वादिस्मृतिश्च संचारिणौ। वृत्तिरप्यत्र तत्तदर्थानुरूपोद्गमविरामशालितया सहृदयैकचमत्कारिणी। तथा हि—उत्साहपोषकं कवचकुण्डलार्पणयोर्लघुत्वनिरूपणं विधातुं पूर्वार्धे तदनुकूलशिथिलबन्धात्मिका। उत्तरार्धे तु मौलितः प्राग्वक्तृगतगर्वोत्साहपरिपोषणायोद्धता। ततः परं ब्राह्मणे सविनयत्वं प्रकाशयितुं तन्मूलीभूतं गर्वराहित्यं ध्वनयितुं पुनः शिथिलैव। अत एवावेदयामीत्युक्तम्। न तु ददामि वितरामीति वा।

इदं तु नोदाहरणीयम्—

'यस्योद्दाममदिवानिशार्थिविलसद्दानप्रवाहप्रथा-
माकर्ण्यावनिमण्डलागतवियद्बन्दीन्द्रवृन्दाननात्।
ईर्ष्यानिर्भरफुल्लरोमनिकरव्यावल्गदूधःस्रव-
त्पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट्पयोदायते॥'

याचमान इन्द्रः। अरमणीयपदार्थमाह—**तत्र लघुत्वेति। मे इत्यर्थान्तरेति।** अनेकशो रणेषु क्षतजर्जरीभूतकलेवरत्वं लक्ष्यतावच्छेदकम्, सकलराज्यकोषादिदातृत्वं वा, रविकुन्तीसुतत्वं वा। **स्वकीयलोकोत्तरेति।** इदमेव च शक्यतावच्छेदकम्। **तत्तदिति।** तत्तदर्थानुरूपौ यावुद्गमविरामौ प्रारम्भसमाप्ती तच्छालितयेत्यर्थः। मौलितो मौलिमित्यतः। वक्ता कर्णः। ब्राह्मणे तद्वेष इन्द्रे। तन्मूलीभूतं सविनयत्वमूलीभूतम्। सुरेन्द्रसुरभिः कामधेनुः। यस्य राज्ञः स्तुतिस्तामाकर्ण्य तैः प्रावृट्पयोदायते

१ मे इत्यस्य निःसंकोचं सकलराज्यकोषादीनां दातुर्जगत्प्रसिद्धदानवीरस्य मे इति लक्ष्योऽर्थः। अत्र वाच्योऽर्थोऽस्मासमानदानशौण्डादिरूपेऽर्थान्तरे संक्रमितः। एवंभूतलक्षणामूलध्वन्युत्थापितो गर्वः।

२ कामधेनुः उद्दाम (अतिशयितं यथा स्यात्तथा) दिवानिशम् अर्थिषु विलसन्तीं यस्य (राज्ञः) दानप्रवाहकीर्तिम् अवनिमण्डलात् आगतानां स्वर्गीयस्तुतिपाठकश्रेष्ठवृन्दानां मुखात् आकर्ण्य, ईर्ष्यया (हन्त मदपेक्षयापि मोऽयमधिकः कामपूरकः इति) निर्भरं फुल्लो रोमनिकरो यस्य, अत एव व्यावल्गत् स्फुरत् यत् ऊधः (स्तनभारः), तस्मात्स्रवद्भिः पीयूष(नव्यदुग्ध)समूहैः (हेतुभिः) प्रावृट्पयोदायते।

अत्रेन्द्रसभामध्यगतसकलनिरीक्षकालम्बनः अवनिमण्डलागतविग्रुद्ध-न्दीन्द्रवदनविनिर्गतराजदानवर्णनोद्दीपितः, ऊधःप्रस्रुतपीयूषप्रकरैरनुभावितः, असूयादिभिः संचारिभिः परिपोषितोऽपि कामगवीगत उत्साहो राजस्तुतिगुणीभूत[1] इति न रसव्यपदेशहेतुः ।

अत एवेदमपि नोदाहरणम्—

'साब्धिद्वीपकुलाचलां वसुमतीमाक्रम्य सप्तान्तरां
सर्वां द्यामपि[2] सस्मितेन हरिणा मन्दं समालोकितः ।
प्रादुर्भूतपरप्रमोदविदलद्रोमाञ्चितस्तत्क्षणं[3]
व्यानम्रीकृतकंधरोऽसुरवरो मौलिं पुरो न्यस्तवान् ॥'

इह च भगवद्वामनालम्बनः, तत्कर्तृकमन्दनिरीक्षणोद्दीपितः, रोमाञ्चादिभिरनुभावितः, हर्षादिभिः पोषितः, उत्साहो व्यज्यमानोऽपि गुणः । प्रागन्यगतस्येव[4] प्रकृते राजगतस्यापि तस्य राजस्तुत्युत्कर्षकत्वात् । एतेन 'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः' इति [5]श्रीवत्सलाञ्छनोक्त-

वर्पामिघायते । बन्दीन्द्राः स्तुतिपाठकेन्द्राः । व्यावल्गन्मधु(न्थ)रम् । कोपोऽमर्ष इत्यनर्थान्तरम् । ईर्ष्याऽक्षमा, गुणेषु दोषारोपोऽसूयेति भेदः । **असूयादिभिरिति** । ईर्ष्याजनिका चासूयेति व्यङ्ग्यत्वमेवास्या इति भावः । कामगवी कामधेनुः । अत एव गुणीभूतत्वादेव । सप्तान्तरां सप्तप्राकाराम् । अत एव सर्वां द्याम् । छलेन द्वाभ्यां सर्वग्रहणान्मन्दत्वम् । पर उत्कृष्टः । असुरवरो बलिर्दैत्यः । **हर्षादिभिरिति** । प्रमोदः सुखं तदंशावरणभङ्गकश्चित्तवृत्तिविशेषो हर्षः । अतो न वाच्यता व्यभिचारिण इत्यवधेयम् । **प्रागन्येति** । सामानाधिकरण्यवैयधिकरण्यप्रयुक्तभेदेऽप्युपकारकत्वं तस्य समानमिति भावः । **त्यागः सप्तेति** । 'उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुर्वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः । त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ॥' इतीत्यर्थः । एतेनेत्यस्यार्थ-

१ स्तुतौ गुणीभूतः ।

२ वसुमतीमाक्रम्य, सप्तान्तरां द्यां ( स्वर्गम् ) अपि आक्रम्य सस्मितेन ।

३ प्रादुर्भूतेन पर-प्रमोदेन विदलन् ( फुल्लन् ) यो रोमाञ्चः स संजातो यस्याः । इतच् ।

४ पूर्वं कामगवीगत उत्साहो राजस्तुतौ गुणीभूतः । इह तु राजा ( बलिः ) तद्गत उत्साहस्तद्गतस्तुतेरेव परिपोषकतयाऽङ्गम्, न तूत्साहः प्रधानमित्याशयः ।

५ काव्यप्रकाशटीकायाः सारबोधिन्याः कर्ता श्रीव

मुदाहरणं परास्तम्। तस्य गुणीभूतव्यङ्ग्यत्वेन रसध्वनिप्रसङ्गेऽनुदाहरणीयत्वात्। ननु 'अकरुणमवकृत्य—' इत्यत्रापि प्रतीयमानस्य दानवीरस्य कर्णस्तुत्यङ्गत्वात्कथं ध्वनित्वमिति चेत्, सत्यम्। अत्र कवेः कर्णवचनानुवादमात्रतात्पर्यकत्वेन कर्णस्तुतौ तात्पर्यविरहात्, कर्णस्य च महाशयत्वेनात्मस्तुतौ तात्पर्यानुपपत्तेः स्तुतिरवाक्यार्थ एव। परं तु वीररसप्रत्ययानन्तरं तादृशोत्साहेन लिङ्गेन स्वाधिकरणे सानुमीयते। राजवर्णनपद्ये तु राजस्तुतौ तात्पर्याद्वाक्यार्थतैव तस्याः।

द्वितीयो यथा—

'न कपोत भवन्तमण्वपि स्पृशतु श्येनसमुद्भवं भयम्।
इदमद्य मया तृणीकृतं भवदायुःकुशलं कलेवरम्॥'

अथवैवं विन्यासः—

'न कपोतकपोतकं तव स्पृशतु श्येन मनागपि स्पृहा।
इदमद्य मया समर्पितं भवते चारुतरं कलेवरम्॥'

एषा शिबेः कपोतं श्येनं प्रति चोक्तिः। अत्र कपोत आलम्बनम्। तद्गतं व्याकुलीभवनमुद्दीपनम्। तस्य कृते स्वकलेवरार्पणमनुभावः। न

माह—**तस्येति**। ननु स्वकर्तृकैव स्तुतिरास्तामत आह—**कर्णस्येति**। तादृशोत्साहे-

१ अत्र परशुरामालम्बनो दानवीरो व्यङ्ग्योऽपि कविनिष्ठतत्स्तुतौ गुणीभूत इति न ध्वनिरित्याशयः।

२ स्तुतिः अवाक्यार्थः वाक्यप्रतिपाद्या नास्ति। अयं भावः—स्तुतौ न कवेस्तात्पर्यं न चोदाराशयस्य कर्णस्य। ततश्च अतात्पर्यभूतां स्तुतिं प्रति कथं वा वीररसः (उत्साहः) अङ्गं स्यात्? ननु कियदिदमधिकं मे इत्यादिपद्ये कर्णस्य महाशयत्वनिबन्धना स्तुतिस्त्ववश्यं प्रतीयत इति कथमियमवाक्यार्थ इति चेत्, सा हि उत्साहेन लिङ्गेन (हेतुना) स्वाधिकरणे (स्वे अधिकरणे, श्रोतुर्हृदये) अनुमीयते [कर्णोऽयं स्तुतिपात्रं तादृशोत्साहशालित्वात् इति] न शब्दैः प्रतिपाद्यते। राजवर्णनपद्ये (यस्योद्दामदिवानिशम्० साक्षिद्वीपकुला० इत्यादौ) तु वर्णनीयैव राजस्तुतिरिति प्रधानभूतायां तस्यामुत्साहादेर्गुणीभूतत्वेति तात्पर्यं प्रघट्टकस्य।

३ भवदायुषः क्षेमस्वरूपम्।

चात्र शरीरदानप्रत्ययाद्दानवीरध्वनित्वापत्तिरिति वाच्यम् । श्येनकपोतयो-र्भक्ष्यभक्षकभावापन्नत्वेन शिबिशरीरस्यार्थिनोऽभावात्तदप्रतिपत्तेः[1]। श्येन-शरीरनिवेदनस्य कपोतशरीरत्राणोपाधिकतया विनिमयपदवाच्यत्वात् ।

तृतीयो यथा—

'रणे दीनान्देवान्दशवदन विद्राव्य[2] वहति
प्रभावप्रागल्भ्यं त्वयि तु मम कोऽयं परिकरः ।
ललाटोद्यञ्ज्वालाकवलितजगज्जालविभवो[3]
भवो मे कोदण्डच्युतविशिखवेगं कलयतु ॥'

एषा दशवदनं प्रति भगवतो रामस्योक्तिः । इह भव आलम्बनम् । रणदर्शनमुद्दीपनम् । दशवदनावज्ञानुभावः । गर्वः संचारी । वृत्तिरत्र देवानां प्रस्तावे तद्गतकातर्यप्रकाशनद्वारा वीररसानालम्बनत्वावगतयेऽनुद्धतैव । दशवदनप्रस्तावे तु देवदर्पदमनवीरत्वप्रतिपादनायोद्धतापि तस्यावज्ञया रामगतोत्साहानालम्बनत्वेन तदालम्बनस्य रसस्याप्रत्ययान्न[4] प्रकर्षवती । भगवतो भवस्य तु परमोत्तमालम्बनविभावत्वात्तत्प्रस्तावे तदालम्बनस्यौ-जस्विनो वीररसस्य निष्पत्तेः प्रकृष्टोद्धता ।

नेति । विभावाद्यभिव्यक्तोत्साहेनेत्यर्थः । सा स्तुतिः । अर्थिनस्तद्विषयकार्थित्ववतः । **तद-प्रतिपत्तेरिति** । शरीरदानाप्रतिपत्तेरित्यर्थः । नन्वेवं किमित्यर्पितमत आह—**श्येन इति** । निरुपाधिकस्थल एव दानप्रतीतिरिति भावः । परिकरो गात्रबन्ध आरम्भो वा । कलयतु जानात्वङ्गीकरोतु वा । **तद्गतेति** । देवगतेत्यर्थः । **देवदर्पेति** । तद्दर्पदमनं यद्वी-रत्वं तदग्रेत्यर्थः । तस्य रावणस्य । तत्प्रस्तावे भवप्रस्तावे । तदालम्बनस्य भवाश्रयकस्य ।

१ श्येनस्य कपोतो भक्ष्यः, अत एव स कपोतशरीरस्यार्थी, न तु शिबिशरीरस्य । ततश्च शिबिशरीरस्य श्येनप्रार्थितत्वाभावात्तद्दानेन न दानवीरत्वव्यपदेशः । शिबिना हि कपोतशरीर-रक्षायै तत्परिवर्ते स्वशरीरं निवेदितमिति सोऽयं द्रव्यविनिमयो न दानमित्याशयः ।

२ देवान् विद्राव्य प्रभावप्रागल्भ्यं (प्रभुत्वधृष्टताम्) वहति त्वयीति योजना ।

३ ललाटात् उद्यन्ती या ज्वाला तया कवलितो जगज्जालस्य विभवो येन, ईदृशप्रभाव-शालितया शिवस्य युद्धयोग्यता सूच्यते ।

४ रामगतस्योत्साहस्य दशवदनो नालम्बनम् (अवज्ञया), अत एव रावणालंबनस्य रसस्या-ऽप्रतीत्या 'प्रभावप्रागल्भ्यम्' इत्यादिद्वितीयचरणे उद्धतापि वृत्तिर्न प्रकर्षवतीत्याशयः ।

चतुर्थो यथा—

'सपदि विलयमेतु राज्यलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः।
अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैति धर्मात्॥'

एषाऽधर्मेणापि रिपुर्जेतव्य इति वदन्तं प्रति युधिष्ठिरस्योक्तिः। अत्र धर्मविषय आलम्बनम्। 'न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः' इत्यादिवाक्यालोचनमुद्दीपनम्। शिरश्छेदाद्यङ्गीकारोऽनुभावः। धृतिः संचारिणी। इत्थं वीररसस्य चातुर्विध्यं प्रपञ्चितं प्राचामनुरोधात्।

वस्तुतस्तु बहवो वीररसस्य शृङ्गारस्येव प्रकारा निरूपयितुं शक्यन्ते। तथा हि—प्राचीनै एव 'सपदि विलयमेतु' इत्यादिपद्ये 'मम तु मतिर्न मनागपैतु सत्यात्' इति चरमपादव्यत्यासेन पद्यान्तरतां प्रापिते सत्यवीरस्यापि संभवात्। न च सत्यस्यापि धर्मान्तर्गततया धर्मवीररस एव तद्वीरस्याप्यन्तर्भाव इति वाच्यम्। दानदययोरपि तदन्तर्गततया तद्वीरयोरपि धर्मवीरात्पृथग्गणनानौचित्यात्।

एवं पाण्डित्यवीरोऽपि प्रतीयते।

यथा—

'अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवतापि वा।
अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः॥'

अत्र बृहस्पत्याद्यालम्बनः सभादिदर्शनोद्दीपितो निखिलविद्वत्तिरस्कारानुभावितो गर्वेण संचारिणा पोषित उत्साहो वक्तुः प्रतीयते। ननु चात्र युद्धवीरत्वम्, युद्धत्वस्य वादसाधारणस्य वाच्यत्वात्। इति चेत्, क्षमावीरे किं ब्रूयाः?

---

**तदन्तरिति**। धर्मान्तर्गततयेत्यर्थः। **तद्वीरेति**। दानदयावीरयोरपीत्यर्थः। **तासामधीति**। गिरामधिष्ठात्री देवता। सरस्वतीत्यर्थः। हयाननो हयग्रीवः। तां धराम्। हे

१ पूर्वोक्त।

यथा—

'अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु[1] ।
पातयतु वाऽसिधारामहमणुमात्रं[2] न किंचिदाभाषे ॥'

क्षमावत उक्तिरियम् ।

बलवीरे वा किं समादध्याः ?

यथा—

'परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय ।
अहमिह पुरुहूत पक्षकोणे निखिलमिदं जगदक्षमं वहामि ॥'

पुरुहूतं प्रत्येषा गरुत्मत उक्तिः । ननु 'अपि बक्ति–'[3] 'परिहरतु धराम्–' इति पद्यद्वये गर्व एव नोत्साहः । मध्यस्थपद्ये तु धृतिरेव ध्वन्यते इति भावध्वनय एवैते न रसध्वनय इति चेत्, तर्हि युद्धवीरादिष्वपि गर्वादिध्वनितामेव किं न ब्रूयाः ? रसध्वनिसामान्यमेव वा किं न तद्व्यभिचारध्वननेन गतार्थयेः[4] ? स्थायिप्रतीतिर्दुरपह्नवा चेत्तुल्यं[5] प्रकृतेऽपि । अनन्तरोक्तपद्ये तु नोत्साहः प्रतीयते, दयावीरादिषु प्रतीयत इति तु राज्ञामा(राजा)ज्ञामात्रम्[6] ।

पुरुहूत, स्वपक्षैकदेशे । 'निखिलमिदं जगदण्डकं वहामि' इति पाठः । वीररसध्वन्युच्छेदमुक्त्वा तुल्ययुक्त्या सामान्योच्छेदमाह—**रसेति** । स्थायीत्यस्य तत्रेत्यादिः । दया-

१ वायुसंयोगेन वर्धयतु ।

२ अणुमात्रं स्वल्पमपि किञ्चिद् वाक्यम् ।

३ अपि बहल० इत्यत्र ।

४ तद्गतो यो व्यभिचारस्तद्ध्वननेन रसध्वनिसामान्यमेव किं न गतार्थयेः ? अर्थात् रसध्वनिस्थले सर्वत्र व्यभिचारिध्वनिमेव साधयित्वा, सर्वानेव रसध्वनीन् किं न गतार्थान् करोषीति तात्पर्यम् ।

५ ननु रसध्वनिस्थले व्यभिचारिणामपेक्षया स्थायिभावस्य प्रतीतिः प्रबलास्तीति तत्कृतो रसध्वनिव्यवहार एव स्यादिति चेत्, प्रकृतेऽपि (सत्य–बलवीरादिष्वपि) स्थायिनः प्रबलतया वीररसध्वनिव्यवहारः केन प्रतिबन्धनीयः स्यात् ? ।

६ ततश्च दया–दानेत्यादिचतुःप्रकारगणना प्राचामपर्यालोचितेति पण्डितराजस्याशयः ।

अद्भुतो यथा—

'चराचरजगज्जालसदनं वदनं तव।
गलद्[1]गगनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना॥'

कदाचिद्भगवतो वासुदेवस्य वदनमालोकितवत्या यशोदाया इयमुक्तिः। अत्र वदनमालम्बनम्। अन्तर्गतचराचरजगज्जालदर्शनमुद्दीपनम्। हृतचेतनत्वम्, तेन गम्यं रोमाञ्चनेत्रस्फारणादि चानुभावः। त्रासादयो व्यभिचारिणः। नैवात्र विद्यमानापि पुत्रगता प्रीतिः प्रतीयते, व्यञ्जकाभावात्। प्रतीतायां वा तस्यां विस्म[2]यस्य गुणत्वं न युज्यते। एवं कश्चिन्महापुरुषोऽयमिति भक्तिरपि[3] तस्याः पुत्रो मयायं बाल इति निश्चयेन प्रतिबन्धादुत्पत्तुमेव नेष्टे। अतस्तस्यामपि विस्मयस्य गुणीभावो न शङ्क्यः।

यच्च सहृदयशिरोमणिभिः प्राचीनैरुदाहृतम्—

'चित्रं महानेष नवावतारः क्व कान्तिरेषाभिनवैव भङ्गिः।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥' इति,

तत्रेदं वक्तव्यम्—प्रतीयतां नामात्र विस्मयः, परं त्वसौ कथंकारं [अद्भुतरस] ध्वनिव्यपदेशहेतुः? प्रतिपाद्यमहापुरुषविशेषविषयायाः

वीरादिषु प्राचीनोदाहृतेषु। गलन्नष्टम्। **तेन गम्यमिति**। तद्बोधकशब्दाभावादिति भावः। अत्र भावध्वनित्वं निराचष्टे—**नैवेति**। **प्रतीतायां वेति**। प्रकरणादिपर्यालोचनयेति भावः। **विस्मयस्य गुणत्वमिति**। विस्मयस्योत्कटत्वेन तस्या एव गुणत्वमनुत्कटत्वात्। हृतचेतनेत्यनेन तस्यैव प्राधान्यप्रकटनादिति भावः। अन्यथापि संभावितत्वं निराचष्टे—**एवमिति**। तस्या इत्यस्य मध्यमणिन्यायेनान्वयः। अत उपपत्त्यभावादेव। तस्यामपि भक्तावपि। कथंकारं कथं कृत्वा। अस्य विस्मयस्य। तत्र दृष्टान्त-

१ गलत् नश्यत् गगनस्यापि गाम्भीर्यं यत्र तादृशं वदनम्।

२ प्रकरणपर्यालोचनया यदि पुत्रगता प्रीतिः प्रतीयेतापि, किन्तु हृतचेतनत्वोक्त्या विस्मयस्यैव प्राबल्येन तस्यां (प्रीतौ) विस्मयस्य गुणीभूतत्वं न युज्यते इत्याशयः।

३ 'अयं बालो मम पुत्रः' इति निश्चयेन प्रतिबन्धात् 'अयं कश्चिन्महापुरुषः' इति तस्याः (यशोदायाः) कृष्णविषया भक्तिरपि उत्पत्तुमेव न शक्नोतीति तात्पर्यम्।

प्रधानीभूतायाः स्तोतृगतभक्तेः प्रकर्षकत्वेनास्य गुणीभूतत्वात् । यथा महाभारते गीतासु विश्वरूपं दृष्टवतः पार्थस्य 'पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान्' इत्यादौ वाक्यसंदर्भे । इत्थं चास्य रसालंकारत्वमुचितम् । भक्तिर्नैवात्र प्रतीयत इति चेदरमुकुलितलोचनं विदांकुर्वन्तु सहृदयाः ।

हास्यो यथा—

'श्रीतातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा ।
अङ्गं गवां पूर्वमहो पवित्रं न वा कथं रासभधर्मपत्न्याः ॥'

तार्किकपुत्रोऽत्रालम्बनम् । तदीया निःशङ्कोक्तिरुद्दीपिका । रदनप्रकाशादिरुद्वेगादयश्चानुभावव्यभिचारिणः ।

माह—**यथेति** । पार्थस्यार्जुनस्य । इत्यादिरूपवाक्यसंदर्भे । तस्य तत्र त्वंप्रथेत्यर्थः । अस्य प्राचोक्तपद्यस्य । एवमग्रेऽपि ईषन्मुकुलितलोचनमिति क्रियाविशेषणम् । विहिते कृते । गौर्गर्दभी च तुल्येति भावः । **रदनेति** । दन्तेत्यर्थः । यथासंख्यमन्वयः । अत्र

१ अस्य ( विस्मयस्य ) स्तोतृनिष्ठभक्तेः प्रकर्षकत्वेन ( पोषकत्वेन ) अस्य विस्मयस्य ( तां भक्तिं प्रति ) गुणीभूतत्वात् ।

२ एतदादौ वाक्यसंदर्भेऽपि पार्थगता भक्तिरेव प्रधानं, विश्वरूपदर्शनजो विस्मयश्च तदुत्कर्षकः, तद्वदत्रापि भक्तेरेव प्राधान्यमुचितमित्याशयः ।

३ पश्यामि देवांस्तव देवेत्यादितः पूर्वं 'हृष्टरोमा धनंजयः । प्रणम्य शिरसा देवं कृताञ्जलिरभाषते'त्यादिना भगवद्भक्तिः स्फुटा । विराड्रूपदर्शनान्तेऽपि—'सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेती'त्यादिना भगवदालम्बनोऽनुरागः प्रसभमुल्लसितः । ततः कथं वा भक्तिप्रतीतिरियमपह्नूयताम् ? किं बहुना, स्वयं भगवानेवाह—एवंविधस्य मम दर्शने भक्तिरेव प्रभवति—'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥' इति । एवं स्पष्टं दृष्टौ स्फुरन्तीमपि भक्तिमूर्तिं चेन्नावलोकयितुं शक्नुथ, तर्हि ईषन्मुकुलितलोचनं विचारयतेति ग्रन्थकर्तुराशयः ।

४ धर्मशास्त्रे गवां पश्चार्धमेव विशिष्य पवित्रम् । किन्तु तातपादमहाशयानां युक्तिः सर्वथा नवीना । अत एव तदिदमप्यभिनवं निवेदितमिति परिहासः ।

अत्राहुः—

'आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम्।
आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः॥
हसन्तमपरं दृष्ट्वा विभावश्चोपजायते[1]।
योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः॥
उत्तमानां मध्यमानां नीचानामप्यसौ भवेत्।
त्र्यवस्थः कथितस्तस्य षड्भेदाः सन्ति चापरे॥
स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः।
भवेद्विहसितं चोपहसितं मध्यमे नरे॥
नीचेऽपहसितं चातिहसितं परिकीर्तितम्।
ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्बणैः[2]॥
अदृश्यदशनो हासो मधुरः स्मितमुच्यते।
वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः॥
किंचिल्लक्षितदन्तश्च तदा हसितमिष्यते।
सशब्दं मधुरं कायगतं[3] वदनरागवत्॥
आकुञ्चिताक्षि मन्द्रं च विदुर्विहसितं बुधाः।
निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः॥
उत्फुल्लनासिको हासो नाम्नोपहसितं मतम्।
अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः॥

हास्यविषये। आहुः प्राञ्चः। तदेवाह—**आत्मेत्यादिमतमितीत्यन्तेन**। अस्य हास्यस्य। त्र्यवस्थ उक्तप्रकारेण त्रिधावस्थः। तस्योक्तविधस्य। षण्णां क्रमेण लक्षणान्याह—**ईषदिति**। अनुल्बणैरनुद्भटैः। दशना दन्ताः। 'कालगतम्' इत्यपाठः 'कायगतम्' इति पाठः। **वदनेति**। तल्लौहित्यविशिष्टम्। **जिह्मेति**। व्यधिकरणपदबहुव्रीहिः। आकम्पौ कम्प-

१ अपरं हसन्तं दृष्ट्वा योऽसौ हास्यरसः स परस्थः। अस्य हास्यरसस्य विभावश्चापि अपरं हसन्तं दृष्ट्वा उपजायते। अर्थात् अपरस्य हास्यं दृष्ट्वैव अयं हास्यरसो जातस्तथा चास्य कारणमपि हास्य एवेति।

२ ईषत्संकुचितैर्नेत्रप्रान्तैरुपलक्षित इत्यर्थः।

३ कायस्य उदराद्यन्यावयवेष्वपि यस्य प्रभावः प्रतीयेतेत्याशयः।

शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः ।
स्थूलकर्णकटुध्वानो बाष्पपूरप्लुतेक्षणः ॥
करोपगूढपार्श्वश्च[1] हासोऽतिहसितं मतम् ॥' इति ।

भयानको यथा—

'श्येनमम्बरतलादुपागतं शुष्यदाननबिलो विलोकयन् ।
कम्पमानतनुराकुलेक्षणः स्पन्दितुं नहि शशाक लावकः ॥'

अत्र श्येन आलम्बनम् । सवेगापतनमुद्दीपनम् । आननशोषादयोऽनुभावाः । दैन्यादयः संचारिणः ।

बीभत्सो यथा—

'नखैर्विदारितान्त्राणां शवानां पूयशोणितम् ।
आननेष्वनुलिम्पन्ति हृष्टा वेतालयोषितः ॥'

शवा इहालम्बनम् । अन्त्रविदारणाद्युद्दीपनम् । आक्षिप्ता रोमाञ्चनेत्रनिमीलनादयोऽनुभावाः । आवेगादयः संचारिणः । ननु रतिक्रोधोत्साहभयशोकविस्मयनिर्वेदेषु प्रागुदाहृतेषु यथालम्बनाश्रययोः संप्रत्ययः, न तथा हासे जुगुप्सायां च । तत्रालम्बनस्यैव[2] प्रतीतेः । पद्यश्रोतुश्च रसा-

मानौ स्कन्धमूर्धजौ यस्मिन् । स्थूलः कर्णकटुर्ध्वानः शब्दो यत्र । कराभ्यामुपगूढे व्याप्ते पार्श्वे यत्र । शुष्यदाननमेव बिलं यस्य । लावकः पक्षिविशेषः । **सवेगेति** । वेगसहितमापतनमित्यर्थः । पूयेति समाहारद्वन्द्वः । आननेत्यस्य खेत्यादिः । तत्र तयोः । ननु पद्यश्रोतैवाश्रयोऽत आह—**पद्येति** । रसस्त्वलौकिक इति भावः ।

१ हास्यवेगधारणार्थं कराभ्यां पार्श्वयोरुपगूहनम् (अवलम्बनम्) यत्र कर्तव्यतामावहति तादृशः ।

२ आलम्बनं विरूपो घृणितश्च पुरुषः, यमालम्ब्य हास-जुगुप्सोदयः । आश्रयो बोद्धा, यस्य हृदये रसोद्बोधः । किन्तु हास्य-बीभत्सरसाश्रयेषु पद्येषु केवलमालम्बनस्यैव प्रतीतिर्भवति, नाश्रयस्य । पद्यश्रोता तु आश्रयो न भवितुमर्हति । स हि अलौकिकस्य रसास्वादस्याधारः । एष लौकिकयोर्हास-जुगुप्सयोराश्रयो न स्यादिति शङ्कायामाह—हास्य-बीभत्सस्थले द्रष्टुः कस्यचित्पुरुषस्याऽऽक्षेपेण आश्रयस्य पूर्तिः करणीया । आक्षेपाभावेऽपि स्वकान्तावर्णनपद्यश्रोता यथा शृङ्गाररसानुभवं करोति—अर्थात् लौकिकरतेर्य आश्रयः श्रोता, स एवालौकिकरसानुभविताऽपि संभवति, एवमत्रापि लौकिक-भावस्य अलौकिकरसस्य चाश्रयैक्ये न विरोध इति सर्वस्याशयः ।

स्वादाधिकरणत्वेन लौकिकहासजुगुप्साश्रयत्वानुपपत्तेरिति चेत्। सत्यम्। तदाश्रयस्य द्रष्टृपुरुषविशेषस्य तत्राक्षेप्यत्वात् । तदनाक्षेपे तु श्रोतुः स्वीयकान्तावर्णनपद्यादिव रसोद्बोधे बाधकाभावात् ।

एवं च संक्षेपेण निरूपिता रसाः । एषां प्राधान्ये ध्वनिव्यपदेशहेतुत्वम् , गुणीभावे तु रसालंकारत्वम्। केचित्तु 'प्राधान्य एवैषां रसत्वमन्यथालंकारत्वमेव । रसालंकारव्यपदेशस्त्वलंकारध्वनिव्यपदेशवत्[1], ब्राह्मणश्रमणन्यायात् । एवमसंलक्ष्यक्रमतायामेव । अन्यथा तु वस्तुमात्रम्' इत्याहुः । एते चासंलक्ष्यक्रमव्यङ्ग्याः, सहृदयेन रसव्यक्तौ झगिति जायमानायां विभावानुभावव्यभिचारिविमर्शक्रमस्य सतोऽपि सूचीशतपत्रपत्रशतवेधक्रमस्येवालक्षणात् । न त्वक्रमव्यङ्ग्याः, व्यक्तेस्तद्धेतूनां च हेतुहेतुमद्भावासंगत्यापत्तेः ।

अथ कथमेत एव रसाः, भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात् । भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः । न चासौ शान्तरसेऽन्तर्भावमर्हति अनुरागस्य वैराग्यविरुद्धत्वात् । उच्यते—भक्तेर्देवादिविषयरतित्वेन भावान्तर्गततया रसत्वानुपपत्तेः ।

---

**तदेति** । हासाश्रयस्येत्यर्थः । तत्र हासजुगुप्सयोः । तुरप्यर्थे । **पद्यादिवेति** । तत इति शेषः । एवं चेत्यस्य हेतुत्वादावन्वयः । एतेन रसत्वव्यवच्छेदः । प्राचोक्तिविरोधं परिहरति— **रसालंकारेति**। भूतपूर्वगत्येति भावः। प्रकारान्तरेणाह—**एवमिति** । **असंलक्ष्यतायामेवेति** । रसत्वमेषामिति शेषः । अन्यथा तु संलक्ष्यक्रमतायां तु । केचिदित्यरुचिबीजं तूक्तरीत्यैवोपपत्तौ भूतपूर्वगत्याद्याश्रयणमयुक्तमिति । एते च रसाः । सहृदयेनेत्यस्यालक्षणादित्यत्रान्वयः । रसव्यक्तौ । रसाभिव्यक्तौ अक्रमेति बहुव्रीहिः । विभावादिविशेषणापत्तेरिति । हेतुहेतुमद्भावस्य क्रमनियतत्वादिति भावः । भगेति बहुव्रीहिः । **अनुभूयेति** ।

---

१ अलंकारध्वनिस्थले उपमादिः सर्वैरुपकरणैः प्रधानतया भूषणीयो भवतीति सोऽलंकार्य एव न तु अपरेषामलंकरणकर्ताऽलंकारः । परंतु पूर्वप्रसिद्धिमादाय यथा तस्य अलंकारत्वव्यपदेशस्तथा रसस्यापि अलंकारत्वव्यवहार इत्याशयः ।

'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तस्तदाभासा ह्यनौचित्यप्रवर्तिताः ॥'

इति हि प्राचां सिद्धान्तात् । न च तर्हि कामिनीविषयाया अपि रतेर्भावत्वमस्तु, रतित्वाविशेषात् । अस्तु वा भगवद्भक्तेरेव स्थायित्वम्, कामिन्यादिरतीनां च भावत्वम्, विनिगमकाभावात्, इति वाच्यम् । भरतादिमुनिवचनानामेवात्र रसभावत्वादिव्यवस्थापकत्वेन स्वातन्त्र्ययोगात्[1] । अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात् । न स्याद्वा कुतः शुद्धभावत्वं जुगुप्साशोकादीनाम्, इत्यखिलदर्शनेवैयाकुली[2] स्यात् । रसानां नवत्वगणना च मुनिवचननियन्त्रिता भज्येत, इति यथाशास्त्रमेव ज्यायः ।

एतेषां परस्परं कैरपि सहाविरोधः कैरपि विरोधः । तत्र वीरशृङ्गारयोः, शृङ्गारहास्ययोः, वीराद्भुतयोः, वीररौद्रयोः, शृङ्गाराद्भुतयोश्चाविरोधः । शृङ्गारबीभत्सयोः, शृङ्गारकरुणयोः, वीरभयानकयोः, शान्तरौद्रयोः, शान्तशृङ्गारयोश्च विरोधः । तत्र कविना प्रकृतरसं परिपोष्टुकामेन तदभिव्यञ्जके काव्ये तद्विरुद्धरसाङ्गानां निबन्धनं न कार्यम् । तथा हि सति तदभिव्यक्तौ विरुद्धः प्रकृतं बाधेत । सुन्दोपसुन्दन्यायेन वोभयो-

---

तथा चानुभवापलापः कर्तुमशक्य इति भावः । नन्वेवमपि स्थायिभावाभावान्नाधिक्यमत आह—**भगेति** । अञ्जितोऽभिव्यक्तो व्यभिचारिभावः । तथाशब्दश्चार्थे । प्राचां प्रकाशकृताम् । अतिप्रसङ्गं दत्त्वा वैपरीत्यमाह—**अस्तु वेति** । अत्र शास्त्रे । अन्यथा तद्वचनानामव्यवस्थापकत्वे । **शुद्धेति** । स्थायिभावत्वानालिङ्गितव्यभिचारिभावत्वमित्यर्थः । दर्शनं शास्त्रम् । भक्तिररसातिरिक्तत्वाङ्गीकारे दोषान्तरमाह—**रसानामिति** । नियन्त्रिता नियमिता । एतेषां रसानाम् । **विरोध इति** । अन्ये तूदासीनाः । यथा शान्ताद्भुतौ, वीरबीभत्सावित्यादीति बोध्यम् । **तदभीति** । विरुद्धरसाङ्गानामीत्यर्थः । तस्य बाधकत्वे नियामकाभावादाह—**सुन्दोपेति** । एकत्र काव्ये । तत्र तयोर्मध्ये । विरो-

---

१ रस-भावत्वादिव्यवस्थापने भरतादिवचनानामेव स्वातन्त्र्ययोगोऽस्ति, नान्यवचनानामित्याशयः । 'स्वातन्त्र्याऽयोगात्' इति पाठे तु-भरतादिवचनानामेव व्यवस्थापकत्वेन अन्यसंबन्धिवचनानां व्यवस्थापने स्वातन्त्र्यस्याऽयोगात् ( अनवसरात् ) इत्यर्थः ।

२ व्याकुलता, भावेऽञ्प्रत्ययः ।

रुपहतिः स्यात्। यदि तु विरुद्धयोरपि रसयोरेकत्र समावेश इष्यते तदा विरोधं परिहृत्य विधेयः। तथा हि—विरोधस्तावद्द्विविधः स्थितिविरोधो ज्ञानविरोधश्च। आद्यस्तदधिकरणावृत्तितारूपः[1]। द्वितीयस्तज्ज्ञानप्रतिबध्य-ज्ञानकत्वलक्षणः[2]। तत्राधिकरणान्तरे विरोधिनः स्थापने प्रथमो निवर्तते। यथा नायकगतत्वेन वीररसे वर्णनीये प्रतिनायके भयानकस्य। रसपदेनात्र प्रकरणे तदुपाधिः स्थायिभावो गृह्यते। रसस्य सामाजिकवृत्तित्वेन नायका-द्यवृत्तित्वात्, अद्वितीयानन्दमयत्वेन[3] विरोधासंभवाच्च।

उदाहरणम्[4]—

'कुण्डलीकृतकोदण्डदोर्दण्डस्य[5] पुरस्तव।
मृगारातेरिव मृगाः परे नैवावतस्थिरे॥'

रसान्तरस्याविरोधिनः संधिकर्तुरिवान्तरालेऽवस्थापने द्वितीयोऽपि निवर्तते। यथा मन्त्रिनिर्मितायामाख्यायिकायां कण्वाश्रमगतस्य श्वेतकेतोर्म-हर्षेः शान्तरसप्रधाने वर्णने प्रस्तुते 'किमिदमनाकलितपूर्वं रूपम्, कोऽयमनिर्वाच्यो वचनरचनाया मधुरिमा' इत्यद्भुतस्यान्तरवस्थापनेन वरवर्णिनीं प्रत्यनुरागवर्णने।

धिनः। रसस्येति शेषः। प्रथमः स्थितिविरोधः। भयानकस्य। स्थापने इति शेषः। रसस्य मुख्यरसस्य। अत एवाह-**अद्वितीयेति**। **उदेति**। उक्तरीत्या आद्यविरोधाभा-वोदाहरणमित्यर्थः। **कुण्डलीति**। बहुव्रीहिद्वयम्। मृगारातेः सिंहस्य। परे शत्रवः। अन्तराले विरुद्धरसयोर्मध्ये। वरवर्णिनीं तदाख्यनायिकाम्। व्योम्नि विमानगा इत्यन्वयः।

१ यस्मिन्नधिकरणे बाधको विरोधी रसो भवति तत्र बाध्यस्य अवृत्तिता अस्थितिः।

२ तस्य (विरोधिरसस्य) ज्ञानेन बाध्यं ज्ञानं यस्य तत्त्वम्। अर्थात् द्वयोरपि रसयोर्ज्ञानं परस्परं प्रतिद्वन्द्वि भवेत्। 'प्रतिबद्धे'तिपाठे विरोधि-ज्ञानेन प्रतिबद्धं बाधितं ज्ञानं यस्य तत्त्वमित्यर्थः। 'प्रतिबद्धज्ञानजनकत्व'मिति काशीपाठस्तु स्थूल एव।

३ रसस्याऽऽनन्दस्फूर्तौ द्वितीयस्य वेद्यस्य प्रतीतिरेव न भवतीति केनचित्सह विरोधप्रतीतेः का कथेत्याशयः।

४ विरोधनिवृत्तेः प्रथमप्रकारस्योदाहरणम्। भञ्जितकोदण्डे नायके वीरः, परेषु (शत्रुषु) भयानक इति।

५ कुण्डलीकृतः कोदण्डो याभ्यामिति बहुव्रीह्युत्तरं कुण्डलीकृतकोदण्डौ दोर्दण्डौ यस्येति पुनर्बहुव्रीहिः।

यथा वा—

'सुराङ्गनाभिराश्लिष्टा व्योम्नि वीरा विमानगाः ।
विलोकन्ते निजान्देहान्फेरुनारीभिरावृतान् ॥'

अत्र सुराङ्गनामृतशरीरालम्बनयोः शृङ्गारबीभत्सयोरन्तः स्वर्गलाभाक्षिप्तो वीररसो निवेशितः । अन्तर्निवेशश्च तदुभयचर्वणाकालान्तर्वर्तिकालगतचर्वणाकत्वम्[1] । तच्च प्रकृतपद्ये प्रथमार्ध एव शृङ्गारचर्वणोत्तरं वीरस्य चर्वणादनन्तरं च द्वितीयार्धे बीभत्सस्येति स्फुटमेव । 'भूरेणुदिग्धान्' इत्यादिकाव्यप्रकाशगतपद्यकदम्बे तु प्रथमश्रुतबीभत्ससामग्रीवशाद्बीभत्सचर्वणोत्तरं तत्सामग्र्याक्षिप्तनिःशङ्कप्राणत्यागादिरूपसामग्रीकस्य[2] वीरस्य चर्वणे शृङ्गारचर्वणेति विवेकः[3] । इत्थं चोदासीनचर्वणेन प्रतिबन्धकज्ञाननिवृत्तौ निष्प्रत्यूहः प्रतिबध्यचर्वणोदय इति फलितोऽर्थः । अङ्गाङ्गिनोः[4], अङ्गिन्यन्यस्मिन्नङ्गयोर्वा[5] न विरोधः, अङ्गत्वानुपपत्तिप्रसङ्गात् ।

फेरुनारीभिर्जम्बुकस्त्रीभिः । **अत्र सुराङ्गेति** । यथासंख्यमन्वयः । स्वर्गलाभश्च पूर्वार्धेन प्रतिपादितः । **तदुभयेति** । विरुद्धरसद्वयेत्यर्थः । चर्वणात् क्रमेण पाददृयेनेति भावः । बीभत्सस्य चर्वणादित्यस्यानुषङ्गः । तच्चेत्यस्य स्फुटमेवेत्यत्रान्वयः । **चर्वणे** । सतीति शेषः । विवेको भेदः । द्वितीयविषयमुपसंहरति—**इत्थं चेति** । उक्तप्रकारेण चेत्यर्थः । उदेति मध्ये इत्यादिः । निवृत्तौ । ज्ञानस्य त्रिक्षणावस्थायित्वादिति भावः । प्रकारान्तरेण विरोधं परिहरति—**अङ्गाङ्गिनोरिति** । पुनरन्यथा तं परिहरति—**अङ्गिनीति** । **अङ्गत्वेति** । एकाङ्गिनिरूपितेत्यादिः । तत्राद्योदाहरणमाह—

१ तयोरुभयोः (बाध्यबाधकरसयोः) चर्वणाकालान्तर्वर्तिनि काले गता चर्वणा यस्य तत्त्वम् ।

२ तस्य (बीभत्सस्य) सामग्र्या आक्षिप्ता निःशङ्कप्राणत्यागादिरूपा सामग्री यस्य (वीरस्य) ।

३ पण्डितराजपद्ये (सुराङ्गनाभिरित्यादिनि) पूर्वं शृङ्गारस्ततो वीरः (उदासीनरसः) ततो विरोधी बीभत्सः, इति क्रमः । प्रकाशे तु पूर्वं बीभत्सस्ततो वीरस्ततश्च शृङ्गार इति क्रमः । अयमेव भेदः ।

४ यौ रसौ परस्परमङ्गाङ्गिनौ (अर्थात् एको रसः अङ्गम्, अन्यश्चाङ्गी) तयोर्न मिथो विरोधः । यथा-प्रत्युद्गनेत्यग्रिमपद्ये; यया सामग्र्या शृङ्गारो व्यज्यते तयैव प्रकरणवशात्करुण इति विरुद्धयोरप्यनयोः, करुणरसप्रकर्षकतया शृङ्गारस्याङ्गत्वात् अङ्गिना करुणेन सह न विरोधः ।

५ अङ्गिनि अन्यस्मिन् रसे, अङ्गभूतयोरपि विरुद्धरसयोर्न विरोधः । एकस्मिन्नङ्गत्वं हि अविरुद्धयोरेवोपपद्यते न विरुद्धयोरिति उपपत्तेः । उदाहरणम् 'उत्क्षिप्ताः' इत्यादि ।

यथा—

'प्रत्युद्गता सविनयं सहसा सखीभिः
स्मेरैः स्मरस्य सचिवैः सरसावलोकैः।
मामद्य मञ्जुरचनैर्वचनैश्च बाले
हा लेशतोऽपि न कथं वद सत्करोषि॥'

इयं च पुरो निपतितां प्रमीतां नायिकां प्रति नायकस्योक्तिः। इह नायिकालम्बना, अश्रुपातादिभिरनुभावैरावेगविषादादिभिः संचारिभिश्च व्यज्यमाना नायकगता रतिस्तुल्यसामग्र्यभिव्यक्ते प्रकृतत्वात्प्रधानीभूते तद्गत एव शोके प्रकर्षकत्वादङ्गम्। यदि तु नायकगता रतिर्नात्र प्रतीयते किं तु निरुक्तसामग्र्या शोक एव प्रकृतत्वादित्याग्रह्यते, तदा नायकालम्बना प्रत्युद्गमाद्यनुभाविता हर्षादिभिः पोषिता नायिकाश्रया रतिरेव तत्राङ्गमस्तु। नायिकागतरतेर्नायकशोकप्रकर्षहेतुतायाः सर्वसंमतत्वात्। न च नायिकाया नाशात्तद्गताया रतेरसंनिधानात्कथमङ्गतेति वाच्यम्। संनिधानस्याङ्गतायामतन्त्रत्वेन स्मर्यमाणायास्तस्या अङ्गत्वोपपत्तेः।

अङ्ग्योर्यथा—

'उत्क्षिप्ताः कबरीभरं विवलिताः पार्श्वद्वयं न्यक्कृताः
पादाम्भोजयुगं रुषा परिहृता दूरेण चेलाञ्चलम्।

**प्रत्युद्गतेति**। प्रमीतां मृताम्। **तुल्यसामग्रीति**। उक्तसामग्रीसजातीयेत्यर्थः। तद्गत एव नायकगत एव। **नात्रेति**। नैवात्रेत्यर्थः। **निरुक्तेति**। नायिकालम्बनेत्यादिनेति भावः। आगृह्यते आग्रहः क्रियते। तत्र शोके **नायकशोकेति**। नायकनिष्ठशोकेत्यर्थः। अतन्त्रत्वेनाकारणत्वेन। **अङ्ग्योरित्यस्यैकस्मिन्नङ्गिनीत्यादिः**। उत्क्षिप्ता उन्नतीकृताः।

१ प्रकृतत्वात् (प्रकरणात्) शोक एव प्रतीयते इत्यन्वयः।

२ अङ्ग्या रसयोरविरोधविचारं प्रतिज्ञाय रतेरङ्गता न वक्तव्या, अपि तु 'करुणरसं प्रति नायिकानिष्ठः शृङ्गार एवाङ्गमस्तु' इति शृङ्गाररसस्याङ्गता वाच्या। इति तु न शङ्कितव्यम् 'गुणीभूतस्य रत्यादेर्न रसध्वनिव्यपदेश्यत्वम्' इति (पृ. ४१) पूर्वोक्ताऽनुगमानुसारमेव स्थायिनाम्ना व्यपदेशात्। एवमन्यत्राप्येवंविधे स्थले बोद्धव्यम्।

गृह्णन्ति त्वरया भवत्प्रतिभटक्ष्मापालवामभ्रुवां
यान्तीनां गहनेषु कण्टकचिताः के के न भूमीरुहाः ॥'

अत्र समासोक्त्यवयवाभ्यां तरुकामिकर्तृकरिपुकामिनीकबर्यादिग्रहणरूपाभ्यां प्रकृताप्रकृतव्यवहाराभ्यां व्यक्तयोः करुणशृङ्गारयो राजविषयकरतिभावाङ्गत्वम् । किं च प्रकृतरसपरिपुष्टिमिच्छता विरोधिनोऽपि रसस्य बाध्यत्वेन निबन्धनं कार्यमेव । तथा हि सति वैरिविजयकृता वर्ण्यस्य कापि शोभा संपद्यते । बाध्यत्वं च रसस्य, प्रबलैर्विरोधिनो रसस्याङ्गैर्विद्यमानेष्वपि स्वाङ्गेषु निष्पत्तेः प्रतिबन्धः । व्यभिचारिणो बाध्यत्वं तु तदीयरसनिष्पत्तिप्रतिबन्धमात्रात्, न त्वनभिव्यक्त्या, अभिव्यक्तौ बाधकाभावात् । न च विरोध्यङ्गाभिव्यक्त्या प्रतिबन्धान्नाभिव्यक्तिरिति

---

विवलिता वक्रीकृताः । न्यक्कृता अधःकृताः । ग्रहणे हेतुगर्भं विशेषणं कण्टकचिता इति । कण्टकव्याप्ता इत्यर्थः । **तरुकामीति** । एतदुभयकर्तृकेत्यर्थः । **रतिभावेति** । कविनिष्ठेत्यादिः । एकत्र काव्ये । पुनः प्रकारान्तरेण विरुद्धत्वाभिमतयोर्निबन्धे न दोष इत्याह— **किं चेति** । **इच्छतेति** । कविनेति शेषः । काप्यनिर्वचनीया । रसस्येत्यस्य पूर्वत्रेव निष्पत्तेरित्यत्राप्यन्वयः । **तदीयेति** । व्यभिचारभावीयेत्यर्थः । अनभीत्यस्य व्यभिचारिभावस्येत्यादिः । एवमग्रेऽपि । **विरोध्यङ्गेति** । विरोधिनो रसस्याङ्गेत्यर्थः ।

१ के के भूमीरुहाः उत्क्षिप्ताः सन्तो वामभ्रुवां कबरीभरम्, विवलिताः (वक्रीकृताः) पार्श्वद्वयम्, न्यक्कृताः पादाम्भोजयुगम्, दूरेण परिहृताश्लेषाञ्चलम् त्वरया न गृह्णन्ति, अपि तु सर्व एव गृह्णन्तीत्यन्वयः ।

२ तरुकर्तृको रिपुकामिनीकबर्यादिग्रहः प्रकृतो व्यवहारः, कामिकर्तृको व्यञ्जनया भासमानश्च सोऽप्रकृतव्यवहारः । समासोक्तिनिष्पादकाभ्यामाभ्यां यथासंख्यं करुणः शृङ्गारश्चाभिव्यज्येते । मिथो विरोधिनावपीमौ रसौ पद्य प्रधानभूताया राजविषयकरतेरङ्गभूतौ (परिपोषकौ), ततश्चाङ्गयोरनयोर्न विरोध इति भावः ।

३ स्वस्य अङ्गेषु (अभिव्यञ्जनोपकरणेषु) विद्यमानेष्वपि, विरोधिरसस्य प्रबलैरङ्गैः (अर्थात्तेषां प्राबल्यात्) कस्यचित् (बाध्यस्य) रसस्य अनभिव्यक्तिरेव बाध्यत्वमिति भावः ।

४ अर्थात् यस्य रसस्य संचरणम् (पोषणम्) अयं संचारी करोति तस्य रसस्य प्रतिबन्धे सति अस्य व्यभिचारिणो बाध्यत्वं जायते, न त्वस्य व्यभिचारिण एवाऽनभिव्यक्त्या ।

५ ननु विरोधिनो रसस्य अङ्गभूता ये व्यभिचारिणस्तेषामभिव्यक्त्या प्रकृतस्य व्यभिचारिणोऽनभिव्यक्तिरिति—शङ्का ।

वाच्यम् । तद्व्यञ्जकशब्दार्थज्ञानसमये विरोध्यङ्गाभिव्यञ्जकशब्दार्थज्ञानस्यासंनिधानात्[१] प्रतिबध्यप्रतिबन्धकभावकल्पने मानाभावात्, भावशबलताया उच्छेदापत्तेश्च । रसनिष्पत्तेः प्रतिबन्धस्त्वनुभवसिद्ध इति तां प्रत्येव विरोध्यङ्गानां बलवतामभिव्यक्तेः प्रतिबन्धकत्वं न्याय्यम् । अपि च यत्र साधारणविशेषणमहिम्ना विरुद्धयोरभिव्यक्तिस्तत्रापि विरोधो निवर्तते ।

यथा—

'नितान्तं यौवनोन्मत्ता गाढरक्ताः सदाहवे ।
वसुन्धरां समालिङ्ग्य शेरते वीर तेऽरयः ॥'[२]

इत्थमविरोधसंपादनेनापि निबध्यमानो रसो रसशब्देन शृङ्गारादिशब्दैर्वा नाभिधातुमुचितः, अनास्वाद्यतापत्तेः । तदास्वादश्च व्यञ्जनमात्रनिष्पाद्य इत्युक्तत्वात् । यत्र विभावादिभिरभिव्यक्तस्य रसस्य स्वशब्देनाभिधानं तत्र को दोष इति चेत्, व्यङ्ग्यस्य वाच्यीकरणे सामान्यतो वमनाख्यदोषस्य वक्ष्यमाणत्वात् । आस्वाद्यतावच्छेदकरूपेण[३] प्रत्ययाजनकतया रसस्थले वाच्यवृत्तेः कापेयकल्पत्वेन विशेषदोषत्वाच्च । एवं स्थायि-

**तद्व्यञ्जकेति** । व्यभिचारिभावव्यञ्जकेत्यर्थः । असंनिधानान्नष्टत्वात् । ननु संस्कारस्यैव तत्त्वमास्तामत आह—**भावेति** । नन्वेवं रसनिष्पत्तिप्रतिबन्धोऽपि न स्यादत आह—**रसेति** । पुनरन्यथा तं परिहरति—**अपि चेति** । अत्र रक्तं रुधिरम्, अनुरागश्च, इति साधारणत्वं विशेषणस्य । तद्बलात्करुणशृङ्गारयोरभिव्यक्तिः । एवमविरोधानुक्त्वा दोषानाह—**इत्थमिति** । उक्तप्रकारैरित्यर्थः । शङ्कते—**यत्रेति** । सामान्यदोषमुक्त्वा विशेषदोषमाह—**आस्वाद्येति** । **कापेयेति** । वानरचेष्टिततुल्यत्वेनेत्यर्थः । एवं रसवत् दोषा-

१ यस्मिन्काले प्रस्तुतस्य व्यभिचारिणः शब्दार्थाभ्यामभिव्यञ्जनं तस्मिन्समये ( अर्थात् युगपत् ) विरोधिरसाङ्गानां भावानामभिव्यञ्जका ये शब्दार्थाः तेषां ज्ञानं न भवितुमर्हति इति द्वयोर्व्यभिचारिणोर्मिथो बाध्यबाधक एव नास्तीति समाधानम् ।

२ यौवनोन्मत्ताः, गाढरक्ताः, वसुन्धरां समालिङ्ग्य, इति त्रिभिरप्यरिविशेषणैस्तेषां मृतौ करुणस्तु प्रतीयत एव । एवं यौवनोन्माद-गाढानुरागालिङ्गनादिभिः शृङ्गारोऽप्यभिव्यज्यते इति त्रयाणामेव साधारणता । गाढरक्ता इत्यस्यैव साधारणत्वं वदन्नागेशस्तु विचार्य एव ।

३ येन रूपेण रसस्य आस्वाद्यता भवेत्तेन रूपेण वाच्यवृत्तिः प्रत्ययाऽजनिका ( बोधस्याऽसंपादयित्री ) अत एव रसस्थले वाच्यवृत्तिः ( रसशब्देन शृङ्गारादिशब्दैर्वाऽभिधानम् ) कापेयकल्पा । कपिर्यथा अस्थाने चेष्टां करोति तथैव मोघं व्यवसाय इत्याशयः ।

व्यभिचारिणामपि शब्दवाच्यत्वं दोषः । एवं विभावानुभावयोरसम्यक्प्रत्यये विलम्बेन प्रत्यये वा न रसास्वाद इति तयोर्दोषत्वम् । समबलप्रबलप्र[1]तिकूलरसाङ्गानां निबन्धनं तु प्रकृतरसपोषप्रातीपिकमिति दोषः । प्रबन्धे प्रकृतस्य रसस्य प्रसङ्गान्तरेण विच्छिन्नस्य पुनर्दीपने सामाजिकानां न सामग्र्येण रसास्वाद इति विच्छिन्नदीपनं दोषः । तथा तत्तद्रसप्रस्तावनानर्हेऽवसरे प्रस्तावः, विच्छेदानर्हे च विच्छेदः[2] । यथा संध्यावन्दनदेवयजनादिधर्मवर्णने प्रसक्ते कयापि कामिन्या सह कस्यचित्कामुकस्यानुरागवर्णने[3] । यथा च समुपस्थितेषु महाहवदुर्मदेषु प्रतिभटेषु मर्मभिन्दि वचनान्युद्गिरत्सु नायकस्य संध्यावन्दनादिवर्णने[4] चेत्युभयमनुचितम् । एवमप्रधानस्य प्रतिनायकादेर्नानाविधानां चरितानामनेकविधायाश्च संपदो नायकसंबन्धिभ्यस्तेभ्यो नातिशयो वर्णनीयः । तथा सति वर्णयितुमिष्टो नायकस्योत्कर्षो न सिद्ध्येत् । तत्प्रयुक्तो रसपोषश्च न स्यात् । न च प्रतिनायकोत्कर्षस्य तदभिभावकनायकोत्कर्षाङ्गत्वात्कथमवर्णनीयत्वमिति वाच्यम् । यादृशस्य प्रतिनायकोत्कर्षवर्णनस्य तदभिभावकनायकोत्कर्षाङ्गतासंपादकत्वं तादृशस्येष्टत्वात् । तद्विरोधिन एव निषेध्यत्वात् । न च प्रतिपक्षस्य प्रकृता[5]पेक्षया वर्ण्यमानोऽप्युत्कर्षः स्वाश्रयहन्तृ[6]तामात्रादेव

न्तरमाह—**एवमिति** । उक्तदोषवदित्यर्थः । **तयोर्दोषत्वमिति** । तद्विषयकासम्यक्प्रत्ययविलम्बप्रत्यययोरित्यर्थः । दोषान्तरमाह—**समबलेति** । रसाङ्गविशेषणम् । प्रातीपिकं प्रतिकूलतासंपादकम् । विरुद्धमिति यावत् । **दोष इति** । तदेव दोष इत्यर्थः । दोषान्तरमाह—**प्रबन्ध इति** । सामग्र्येण साकल्येन । दोषान्तरद्वयमाह—**तथेति** । द्वितीयमुदाहरति—**समुपेति** । इतः प्राग्यथा वेत्यपपाठः । दोषान्तरमाह—**एवमिति** । तेभ्यो नानाचरितादिभ्यः । तत्प्रयुक्त उत्कर्षप्रयुक्तः । **तदभीति** । तत्तिरस्कारकारीत्यर्थः । ननु सर्वत्रोत्कर्षसंपादकत्वं नोक्तवैषम्यमित्याशयेन शङ्कते—**न चेति** । **स्वाश्र-**

१ समानबलानां प्रबलानां वा विरोधिरसस्याङ्गानाम् ।

२ दोषोऽस्तीति पूर्वेण संबन्धः ।

३ अत्र अनवसरे शृङ्गारस्यावतारः ।

४ विच्छेदानर्हे समये वीरस्य ( रौद्रस्य वा ) विच्छेद इति दोषः ।

५ प्रकृतस्य नायकस्यापेक्षया ।

६ स्वम् उत्कर्षः, तदाश्रयः प्रतिनायकः, तस्य हननमात्रादेव । अर्थात् उत्कर्षाश्रयस्य प्रतिनायकस्यायं हन्ता, अत एव प्रकृतनायकस्योत्कर्षम् अतिशाययेत् अतिशयितं कुर्यात् ।

प्रकृतगतमुत्कर्षमतिशाययेत्, अतो न दोषावह इति वाच्यम्। एवं हि सति महाराजं कमपि विषशरक्षेपमात्रेण व्यापादितवतो वराकस्य शबरस्येव प्रकृतस्य नायकस्य न कोऽप्युत्कर्षः स्यादिति। तथा रसालम्बनाश्रययोरनुसंधानमन्तरान्तरा न चेद्दोषः। तदनुसंधानाधीना हि रसप्रतिपत्तिधारा तदननुसंधाने विरता स्यात्। एवं प्रकृतरसानुपकारकस्य वस्तुनो वर्णनमपि प्रकृतरसविरामहेतुत्वाद्दोष एव।

अनौचित्यं तु रसभङ्गहेतुत्वात्परिहरणीयम्। भङ्गश्च पानकादिरसादौ सिकतादिनिपातजनितेवारुन्तुदता। तत्र जातिदेशकालवर्णाश्रमवयोवस्थाप्रकृतिव्यवहारादेः प्रपञ्च[1]जातस्य तस्य तस्य यल्लोकशास्त्रसिद्धमुचितद्रव्यगुणक्रियादि त[2]द्भेदः। जात्यादेरनुचितं यथा—गवादेस्तेजोबलकार्याणि पराक्रमादीनि, सिंहादेश्च साधुभावादीनि। स्वर्गे जराव्याध्यादि, भूलोके सुधासेवनादि। शिशिरे जलविहारादीनि, ग्रीष्मे वह्निसेवा। ब्राह्मणस्य मृगया, बाहुजस्य प्रतिग्रहः, शूद्रस्य निगमाध्ययनम्। ब्रह्मचारिणो यतेश्च ताम्बूलचर्वणम्, दारोपसंग्रहः। बालवृद्धयोः स्त्रीसेवनम्, यूनश्च विरागः। दरिद्राणामाढ्याचरणम्, आढ्यानां च दरिद्राचारः। प्रकृतयो दिव्याः, अदिव्याः, दिव्यादिव्याश्च। धीरोदात्तधीरोद्धतधीरललितधीरशान्ता उत्साहक्रोधकामिनीरतिनिर्वेदप्रधाना उत्तममध्यमाधमाश्च। तत्र र[3]त्यादीनां भयातिरिक्तस्थायिभावानां सर्वत्र समत्वेऽपि, रतेः संभोगरूपाया मनुष्ये-

**येति**। उत्कर्षाश्रयप्रतिपक्षकर्मकहननकर्तृत्वमात्रादेवेत्यर्थः। मात्रपदेनोक्तवैषम्यव्यावृत्तिः। **विषेति**। तत्संबद्धबाणेत्यर्थः। वराकस्य दीनस्य। दोषान्तरमाह—**तथेति**। रसस्यालम्बनाश्रययोरित्यर्थः। अन्तरान्तरा मध्ये मध्ये। तदुपपादयति—**तदन्विति**। तयोस्तादृशान्वित्यर्थः। दोषान्तरमाह—**एवमिति**। दोषान्तरमाह—**अनौचीति**। तुरुक्तप्रकारव्यवच्छेदाय। तदाह—**रसेति**। अत एवाह—**भङ्गश्चेति**। अरुन्तुदता मर्मच्छेदिता। तच्चानौचित्यं च। प्रपञ्चजातस्य प्रपञ्चसमूहस्य। बाहुजस्य क्षत्रियस्य। निगमो वेदः। संग्रहः संग्रहश्च। प्रकृत्यन्तरमाह—**धीरोदात्तेति**। धीरोदात्तादीनां चतुर्णां चत्वारि यथासंख्येनाह—**उत्साहेति**। प्रकृत्यन्तरमाह—**उत्तमेति**। तत्र तासां मध्ये। सर्वत्र

१ तस्य तस्य सांसारिकपदार्थसमूहस्य (जाति-देश-कालादेः)।

२ तस्मात् (उचितद्रव्यगुणक्रियादेः) भेदो भिन्नता।

३ भयातिरिक्तानां रत्यादीनां स्थायिभावानामित्याशयः

ष्विवोत्तमदेवतासु स्फुटीकृतसकलानुभाववर्णनमनुचितम् । क्रोधस्य च लोकभस्मीकरणपटोर्दिनरात्रिव्यत्ययाद्यनेकाश्चर्यकारिणो[1] दिव्येष्विवादिव्येषु । आलम्बनगताराध्यत्वस्यानुभावगतमिथ्यात्वस्य[2] च प्रतीत्या रसानुल्लासापत्तेः । न च साधारणीकरणादाराध्यत्वज्ञानानुत्पत्तिरिति[3] वाच्यम् । यत्र सहृदयानां रसोद्बोधः प्रमाणसिद्धस्तत्रैव साधारणीकरणस्य कल्पनात् । अन्यथा स्वमातृविषयकस्वपितृरतिवर्णनेऽपि सहृदयस्य रसोद्बोधापत्तेः । जयदेवादिभिस्तु गीतगोविन्दादिप्रबन्धेषु सकलसहृदयसंमतोऽयं समयो मदोन्मत्तमतङ्गजैरिव भिन्न इति न तन्निदर्शनेनेदानींतनेन तथा वर्णयितुं सांप्रतम् । तथा विद्यावयोवर्णाश्रमतपोभिरुत्कृष्टैः स्वतोऽपकृष्टेषु न सबहुमानेन वचसा व्यवहर्तव्यम् । व्यवहर्तव्यं चापकृष्टैरुत्कृष्टेषु । तत्रापि तत्रभवन्भगवन्नित्यादिभिः संबोधनैर्मुनिगुरुदेवताप्रभृतय एव न राजादयः, जात्योत्तमैर्द्विजैरेव नाधमैः शूद्रादिभिः, परमेश्वरेत्यादिसंबोधनैश्चक्रवर्तिन एव न मुनिप्रभृतयः संबोध्याः ।

सर्वासु प्रकृतिषु । **स्फुटीकृतेति** । स्फुटीकृताः सकलानुभावा यस्मिन्कर्मणि यथा तथेति क्रियाविशेषणमेतत् । अदिव्येषु वर्णनमनुचितमित्यस्यानुषङ्गः । **साधारणीति** । यथा चैतत्तथा प्राक्प्रतिपादितम् । अन्यथा सर्वत्र साधारणीकरणे । समयः संकेतः । तन्निदर्शनेन तद्दृष्टान्तेन । **मदोन्मत्तेति** । दृष्टान्तोल्लेखेन भेदने उन्माद एव कारणम्, न तु युक्तिरिति सूचितम् । अत एव सांप्रतं तदनाश्रयणमिति भावः । एवं प्रकृत्यन्तानौचित्यमुक्त्वा व्यवहारानौचित्यमाह—**तथेति** । स्वतः स्वेन रूपेणैवेत्यर्थः । **सबह्विति** । तत्सहितेनेत्यर्थः । 'संबहु' इति पाठे सम्यग्बहुमानो यत्र वचसि तेनेत्यर्थः । **व्यवेति** । तादृशेन वचसेति भावः । व्यवहर्तृनियममाह—**जात्योत्तमैरिति** । ब्राह्मणक्षत्रियवैश्यै-

१ लोकभस्मीकरणपटोः, दिनस्थाने रात्रिः रात्रिस्थाने दिनमिति परिवर्तनकारिणः क्रोधस्य अदिव्येषु वर्णनम् इति योजना ।

२ दिव्येष्वालम्बनेषु आराध्यत्वस्य, अदिव्येषु पूर्वोक्तानामनुभावानाम् (असामान्यक्रोधादेः) मिथ्यात्वस्य च प्रतीत्या अभीष्टो रसोल्लासो न भवेदिति तात्पर्यम् ।

३ भट्टनायकमते भावकत्वव्यापारेण, नव्यरीत्या च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना (पृ. ३०–३१) साधारणीकरणं प्रतिपादितम् ।

तथा चाहुः—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु[1] रसस्योपनिषत्परा॥' इति।

यावता त्वनौचित्येन रसस्य पुष्टिस्तावत्तु न वार्यते, रसप्रतिकूलस्यैव तस्य निषेध्यत्वात्। अत एव

'ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बुरो
सीतारल्लक[2]भल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः॥'

इति कस्यचिन्नाटकस्य पद्ये विप्रलम्भशृङ्गाराङ्गीभूतवीररसाक्षेपकपरमैश्वर्यपरिपोषकतया स्थितदौवारिकवचनस्य ब्रह्माद्यधिक्षेपपरस्यानौचित्यं न दोषः। एवमेव 'अले ले सद्दःसमुप्पाडिअहरियकुसग्गंथिमयाच्छमालापइवित्तिविस्संभिअबालविहवंदःकअणा बम्हणा' इत्यादिविदूषकवचनेऽपि रेशब्दादिप्रयोगस्य तत्तथा, हास्यानुगुणत्वात्। एषा हि दिगुपदर्शिता। अनया सुधीभिरन्यदप्यूह्यम्।

रित्यर्थः। अनौचित्यं त्वित्याद्युक्तेऽर्थे संमतिमाह—**तथा चाहुरिति**। परोत्कृष्टा। उपनिषदिव, यथा सा ब्रह्मणः प्रतिपादिका तथायं रसस्येति भावः। तत्र विशेषमाह—**यावतेति**। तस्यानौचित्यस्य। अत एव पोषकस्य तस्यावार्यत्वादेव। न दोष इत्यत्रास्यान्वयः। **ब्रह्मन्निति**। रावणद्वारि समागतान्ब्रह्मादीन्प्रति दौवारिकस्येयमुक्तिः। बहिस्तूष्णीं स्थीयताम्। बहुभाषित्वादेव जडमतित्वम्। स्तुतीत्याद्युत्तरान्वयि। सीताया रल्लकः सीमन्तसरणिरेव भल्लो बाणस्तेन भग्नं हृदयं यस्य सः। 'शिरःसिन्दूरसरणिः स्त्रीणामारल्लकं स्मृतम्' इति हलायुधः। **विप्रलम्भेति**। सीताविषयेत्यादिः। उदाहरणान्तरमाह—**एवमेवेति**। तत्तथेत्यत्रान्वयः। **अले ले इति**। 'अरे रे सद्यःसमुत्पाटितहरितकुशग्रन्थिमयाक्षमालापरिवृत्तिविस्रम्भितबालविधवान्तःकरणा ब्राह्मणाः' इत्यादि प्राकृतार्थः। तदनौचित्यं तथा न दुष्टम्। **हास्यान्वितेति**। तत्पोषकत्वादित्यर्थः। नेदं परिगणनम्, किं तूपलक्षणमित्याह—**एषेति**। दिक् रीतिः। अनया दिशा। **निरतीति**।

१ 'औचित्योपनिबन्धस्तु' इति ध्वन्यालोकदृष्टः पाठः।

२ रल्लको नेत्रपक्ष्मपङ्क्तिरिति स्थानान्तरे व्याख्या।

रसेषु चैतेषु निगदितेषु माधुर्यौजःप्रसादाख्यांस्त्रीन्गुणानाहुः । तत्र 'शृङ्गारे संयोगाख्ये यन्माधुर्यं ततोऽतिशयितं करुणे, ताभ्यां विप्रलम्भे, तेभ्योऽपि शान्ते । उत्तरोत्तरमतिशयितायाश्चित्तद्रुतेर्जननात्' इति केचित् । 'संयोगशृङ्गारात्करुणशान्तयोस्ताभ्यामपि विप्रलम्भे' इत्यपरे । 'संयोगशृङ्गारात्करुणविप्रलम्भशान्तेष्वतिशयितमेव न पुनस्तत्रापि तारतम्यम्' इत्यन्ये । तत्र प्रथमचरमयोर्मतयोः 'करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्' इति प्राचां सूत्रमनुकूलम् । तस्योत्तरसूत्रगतस्य क्रमेणेति पदस्यापकर्षानपकर्षाभ्यां व्याख्याद्वयस्य संभवात् । मध्यस्थे तु मते करुणशान्ताभ्यां विप्रलम्भस्य माधुर्यातिशये यदि सहृदयानामनुभवोऽस्ति साक्षी, तदा स प्रमाणम् । वीरबीभत्सरौद्रेष्वोजसो यथोत्तरमतिशयः, उत्तरोत्तरमतिशयितायाश्चित्तदीप्तेर्जननात् । अद्भुतहास्यभयानकानां गुणद्वययोगित्वं केचिदिच्छन्ति, अपरे तु प्रसादमात्रम् । प्रसादस्तु सर्वेषु रसेषु सर्वासु रचनासु च साधारणः ।

गुणानां चैषां द्रुतिदीप्तिविकासाख्यास्तिस्रश्चित्तवृत्तयः क्रमेण प्रयोज्याः । तत्तद्गुणविशिष्टरसचर्वणाजन्या इति यावत् । एवमेतेषु गुणेषु रसमात्रधर्मेषु व्यवसितेषु मधुरा रचना, ओजस्वी बन्ध इत्यादयो व्यवहारा आकारोऽस्य-

नितरामतिशयितमित्यर्थः । तत्रापि करुणविप्रलम्भशान्तेष्वपि । तन्माधुर्यम् । नन्वेकतोऽर्थद्वयप्रतीत्यभावेन कथं तयोस्ततो लाभोऽत आह—**तस्योत्तरेति** । 'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति । बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु ॥' इत्युत्तरसूत्रेत्यर्थः । यदीत्यनेन तदभावः सूचितः । एवं त्रयाणां रसानां माधुर्यमुक्त्वा त्रयाणामोजोगुणमाह—**वीरेति** । मात्रपदेनान्यगुणव्यावृत्तिः । एवं सति प्रसादोऽन्ययोर्नेति भ्रमनिवारणायाह—**प्रसादस्त्विति** । **रचनासु चेति** । एताः स्फुटीभविष्यन्ति । प्रयोज्याः, न तु जन्याः । तदेवाह—**तत्तदिति** । चर्वणास्वादः । **व्यवेति** । निश्चितेष्वि-

१ ताभ्यां संयोगशृङ्गार-करुणाभ्यामतिशयितमिति पूर्वेण संबन्धः । एवं 'तेभ्योऽपि' अत्रापि बोद्धव्यम् ।

२ संयोगशृङ्गारे यन्माधुर्यं ततोऽतिशयितं करुणे, ताभ्यां विप्रलम्भे इत्यादिकं प्रथममतम् संयोगशृङ्गारात्करुणविप्रलम्भशान्तेष्वतिशयितमेवेत्यादिकं चरममतम् ।

३ 'संयोगशृङ्गारात्करुणशान्तयोस्ताभ्यामपि विप्रलम्भे' इति ।

४ माधुर्यौजःप्रसादा ये गुणास्तद्विशिष्टा ये शृङ्गारवीराद्या रसास्तेषां चर्वणया जन्या इमा द्रुतिदीप्त्यादय इत्याशयः ।

शूर इत्यादिव्यवहारवदौपचारिका इति मम्मटभट्टादयः। येऽमी माधुर्यौजः-प्रसादा रसमात्रधर्मतयोक्तास्तेषां रसधर्मत्वे किं मानम्? प्रत्यक्षमेवेति चेत्, न। दाहादेः कार्यादनलगतस्योष्णस्पर्शस्य यथा भिन्नतयानुभवस्तथा[1] द्रुत्यादिचित्तवृत्तिभ्यो रसकार्येभ्योऽन्येषां रसगतगुणानामननुभवात्। तादृशगुणविशिष्टरसानां द्रुत्यादिकारणत्वात्कारणतावच्छेदकतया[2] गुणानामनुमानमिति चेत्, प्रातिस्विकरूपेणैव रसानां कारणतोपपत्तौ गुणकल्पने गौरवात्। शृङ्गारकरुणशान्तानां माधुर्यवत्त्वेन द्रुतिकारणत्वं प्रातिस्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूतमिति तु न वाच्यम्। परेण मधुरतरादिगुणानां[3] पृथग्द्रुततरत्वादिकार्यतारतम्यप्रयोजकतयाभ्युपगमेन

---

त्यर्थः। उक्तमतं दूषयन्स्वमतमाह—**येऽमीत्यादि माहशाः** इत्यन्तेन। तादृशेत्यस्य नेत्यादिः। 'इति चेत्, न' इति पाठः। **प्रातिस्विकेति**। शृङ्गारत्वादिनेति भावः। **गुणेति**। उक्तरीत्या तदन्यगुणकल्पन इत्यर्थः। शङ्कते—**शृङ्गारेति**। **लघुभूतमिति**। एककार्यकारणभावात्। तत्र तु त्रयमिति भावः। परेण मम्मटभट्टादिना। पृथक्पार्थक्येन। एवं च विशिष्य प्रयोज्यप्रयोजकभावेनैव निर्वाहे सामान्यकार्यकारणभावस्तुरीयो निष्फ-

---

१ अग्निजन्यकार्यदाहो यथा अग्नौ उष्णस्पर्शरूपाद् गुणात्पृथगनुभूयते, तथा रसेषु (शृङ्गारवीरादिषु) रसकार्याणि द्रुतिदीप्त्यादय एव केवलमनुभूयन्ते, न ततः पृथङ् माधुर्यादयः केचिद्गुणाः प्रतीयन्ते। ततश्च माधुर्यादयो रसस्य गुणा इति कथं प्रतीयतामित्याशयः।

२ माधुर्यादिगुणविशिष्टा एव रसा द्रुत्यादीनां कारणानि (अर्थाद् गुणसहकारादेव द्रुत्यादिप्रयोजकत्वं तेषाम्) ततश्च कारणताऽवच्छेदकतया (कारणानि रसास्तेषां विशिष्टधर्मतया) गुणानामनुमानं स्यादिति पूर्वपक्षः। शृङ्गारत्वादिना केवलानां रसानामेव कारणतास्वीकारे लाघवमित्युत्तरः पक्षः।

३ ननु प्रातिस्विकरूपेण (शृङ्गारो द्रुतेः कारणम्, शान्तो द्रुतेः कारणम्, करुणो द्रुतेः कारणम्) इति त्रयः कार्यकारणभावाः कल्पनीयाः स्युरिति गौरवम्। 'शृङ्गारकरुणशान्ताः माधुर्यवत्त्वेन द्रुतेः कारणानि' इति गुणद्वाराऽनुगमे तु एक एव कार्यकारणभाव इति लाघवमिति शङ्कायाम्-मम्मटभट्टादिभिः—'मधुरो रसः (शृङ्गारः) द्रुतेः कारणम्, मधुरतरो रसः (करुणः) अतिद्रुतेः कारणम्, मधुरतमो रसः (विप्रलम्भशृङ्गारः) अतितमां द्रुतेः कारणम्' इति पृथक्पृथक्कारणता स्वीकर्तव्या। तथा च पूर्वोक्तकार्यकारणभावत्रयादधिकः सामान्योयं चतुर्थः कार्यकारणभावः (शृङ्गारादयो द्रुतिकारणानि, माधुर्यवत्त्वात्) तवैव 'गड्डु'-(मेद-येघा इत्यादि भाषायाम्)-स्थानीयत्वाद्भाराधिक इत्युत्तरम्।

माधुर्यवत्त्वेन कारणताया गडुभूतत्वात् । इत्थं च प्रातिस्विकरूपेणैव कारणत्वे लाघवम् । किं चात्मनो निर्गुणतयात्मरूपरसगुणत्वं माधुर्यादीनामनुपपन्नम् । एवं तदुपाधिरत्यादिगुणत्वमपि, मानाभावात्, पररीत्या गुणे गुणान्तरस्यानौचित्याच्च । अथ शृङ्गारो मधुर इत्यादिव्यवहारः कथमिति चेत्, एवं तर्हि द्रुत्यादिचित्तवृत्तिप्रयोजकत्वम्, प्रयोजकतासंबन्धेन द्रुत्यादिकमेव वा माधुर्यादिकमस्तु । व्यवहारस्तु वाजिगन्धोष्णेतिव्यवहारवदक्षतः । प्रयोजकत्वं चादृष्टादिविलक्षणं शब्दार्थरसरचनागतमेव ग्राह्यम् । अतो न व्यवहारातिप्रसक्तिः । तथा च शब्दार्थयोरपि माधुर्यादेरीदृशस्य सत्त्वादुपचारो नैव कल्प्य इति तु मादृशाः ।

जरत्तरास्तु—

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥'

---

त्वाद्गडुस्थानापन्न इति तदङ्गीकारे विपरीतं गौरवमिति भावः । तदाह—**इत्थं चेति** । तुरीयकार्यकारणभावाङ्गीकारे चेत्यर्थः । नन्वेवं तथैवास्तां तावतापि गुणसिद्धिरत आह—**किं चेति** । एवं रसवत् । गुणत्वमप्यनुपपन्नमित्यस्यानुषङ्गः । **अथेति** । तेषां तदुभयगुणत्वाभावे इति भावः । लाघवादाह—**प्रयोजकेति** । ननु प्रयोजकत्वस्यादृष्टादिसाधारण्यात्तत्रापि माधुर्यादिव्यवहारापत्तिरत आह—**प्रयोजकत्वं चेति** । आदिना कालादिपरिग्रहः । शब्दार्थेति चतुर्णां द्वन्द्वः । **अतो न व्यवेति** । इदमपरमत्र बोध्यम् । आह्लादकत्वरूपमाधुर्यस्याह्लादकरूपे रसे स्थितिः कथं वक्तुं युक्ता । शब्दव्रनितानये गुणालंकारयोर्भेदस्त्वेवम्—काव्यशोभाकारिणो गुणाः, तदतिशयहेतवोऽलंकारा इति । अत एव वामनः—'युवतेरिव सर्वमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव । विहितप्रणयं निरन्तराभिः सदलंकारविकल्पकल्पनाभिः ॥' इति । तथा सति फलितमाह—**तथा**

---

१ तेषां रसानामुपाधयो ये रत्यादिस्थायिभावाः तेषां गुणत्वमपि माधुर्यादीनामनुपपन्नम्, प्रमाणाभावात् । रसस्य गुणा रत्यादयः ( मम्मटादिरीत्या सुखरूपत्वात्तेषाम् ), रत्यादीनां गुणाश्च माधुर्यादय इति गुणे गुणान्तरस्वीकारानौचित्यमित्याशयः ।

२ अदृष्ट-( धर्माधर्मादि )-कालादीनामपि द्रुत्यादिचित्तवृत्तिप्रयोजकत्वात्तेषामपि मधुरत्वादि प्रसज्येतेति शङ्कायाम्, अदृष्टादिभिन्नमेवात्र प्रयोजकत्वं स्वीकार्यमिति समाधानम् ।

३ द्रुत्यादिचित्तवृत्तिप्रयोजकत्वरूपं माधुर्यादिकं ( द्रुतिप्रयोजकं माधुर्यम्, दीप्तिप्रयोजकमोजः, विकासप्रयोजकः प्रसादः ) शब्दार्थादीनामपि स्वतःसिद्धमिति तदर्थम् 'आकारोऽस्य शूरः' । इतिवदुपचारो न कल्प्यः स्यादित्याशयः ।

इति दश शब्दगुणान्, दशैव चार्थगुणानामनन्ति । नामानि पुनस्तान्येव, लक्षणं तु भिन्नम् ।

तथा हि—

**शब्दानां भिन्नानामप्येकत्वप्रतिभानप्रयोजकः संहितयैकजातीयवर्णविन्यासविशेषो गाढत्वापरपर्यायः श्लेषः ॥**

यदाहुः—'श्लिष्टमस्पष्टशैथिल्यम्' इति । यथा—'अनवरतविद्वद्द्रुमद्रोहिदारिद्र्यमाद्यद्द्विपोद्दामदर्पौघविद्रावणप्रौढपञ्चाननः' इति ।

**गाढत्वशैथिल्याभ्यां व्युत्क्रमेण मिश्रणं बन्धस्य प्रसादः ॥**

यथा—

'किं ब्रूमस्तव वीरतां वयममी यस्मिन्धराखण्डल
क्रीडाकुण्डलितभ्रुशोणनयने दोर्मण्डलं पश्यति ।
माणिक्यावलिकान्तिदन्तुरतरैर्भूपासहस्रोत्करैर्-
विन्ध्यारण्यगुहागृहावनिरुहास्तत्कालमुल्लासिताः ॥'

अत्र यस्मिन्नित्यन्तं शैथिल्यम्, भ्रूशब्दान्तं गाढत्वम्, पुनर्नयनेत्यन्तं प्रथममित्यादि बोध्यम् ।

**चेति** । जरन्तराग्स्त्विलत्यम्याहुरित्यत्रेतनेनाप्यन्वयः । **लक्षणं त्विति** । प्रत्येकाभिप्रायमेकवचनम् । तत्रादौ शब्दगुणलक्षणानि सोदाहरणान्याह—**शब्दानामित्यादि** । सहितया परसंनिकर्षेण । श्लिष्टं श्लेषः । न स्पष्टं शैथिल्यं भेदो यत्रेत्यर्थः । विद्वांस एव द्रुमास्तेषां निरन्तरं द्रोहकारिणो ये दारिद्र्यरूपा माद्यन्तो द्विपा गजास्तेषामुत्कृष्टदर्पसमूहनाशने समर्थः सिंहस्त्वमिति राजवर्णनम् । व्युत्क्रमेणादौ शैथिल्यमग्रे गाढत्वम् । हे पृथ्वीन्द्र, यस्मिंस्त्वयि क्रीडया तस्यां वा कुण्डलिते भ्रुवौ शोणनयने च यस्य तस्मिन्सति । दोर्मण्डलं दोर्युग्मं पश्यति च सति । तत्कालं तस्मिन्नेव समये । रक्तमणिसमूहकान्तिमिश्रितैर्भूषणानन्तसमूहैर्विन्ध्याद्रेर्वनगुहागृहवृक्षाश्चत्वार उल्लासिताः । अतस्तव वीरताममी वयं किं ब्रूम इत्यर्थः । क्रीडायां तथाकृतं श्रुत्वा शत्रवः पलाय्य

१ विपर्ययक्रमेण । समाधौ हि क्रमेण गाढत्व-शैथिल्ययोः संनिवेशः, अत्र तु व्युत्क्रमेणेत्ययमेव भेदः ।

२ माणिक्यावलिकान्तिभिः दन्तुरतरैः उन्नतदन्तशुक्लैरिव (नतोन्नतैः सुन्दरैर्वा) ।

३ शैथिल्यम् ।

**उपक्रमादासमाप्ते रीत्यभेदः समता ॥**

यथा वक्ष्यमाणमाधुर्योदाहरणे । तत्र ह्युपनागरिकयैवोपक्रमसंहारौ ।

**संयोगपरह्रस्वातिरिक्तवर्णघटितत्वे सति पृथक्पदत्वं माधुर्यम् ॥**

यथा—

'नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम् ॥'

**अपरुषवर्णघटितत्वं सुकुमारता ॥**

यथा—

'स्वेदाम्बुसान्द्रकणशालिकपोलपालि-
दोलायितश्रवणकुण्डलवन्दनीया ।
आनन्दमङ्कुरयति स्मरणेन कापि
रम्या दशा मनसि मे मदिरेक्षणायाः ॥'

विन्यप्रदेशे संगता इति भावः । आ समाप्तेः समाप्तिपर्यन्तम् । **रीत्यभेद इति** । रीतयश्चोपनागरिका परुषा कोमला च । एता एव क्रमेण वैदर्भीगौडीपाञ्चाल्य उच्यन्ते । माधुर्यव्यञ्जकवर्णयुताद्या । ओजोव्यञ्जकवर्णयुता द्वितीया । माधुर्यौजोव्यञ्जकवर्णातिरिक्तकेवलप्रसादयुक्ताक्षरान्त्येति विवेकः । अन्त्याया एव ग्राम्येति संज्ञा केषांचित् । वक्ष्यमाणेत्यस्यानुपदमित्यादिः । **संयोगपरेति** । संयोगश्चात्र परसवर्णानिष्पन्नहलघटित एव ग्राह्यः । स्पष्टं चेदमत्रैवाग्रे । पृथक्पदत्वम् । पदानि भिन्नान्यपेक्षितानि, न तु श्लेषवत् । **विचारेति** । अङ्गवन्मृणालानि न चेति विचारेऽपि समर्थानि नेत्यर्थः । अङ्गकानामित्यत्रानुकम्पायां कन् । इष्यति शेषः । नायिकां प्रति नायकोक्तिः । **स्वेदेति** । नायकोक्तिः । श्रवणकुण्डलं कर्णताटङ्कः । अत्र स्मृत्युपष्टम्भश्शृङ्गारः पूर्वार्धे । अपरुषवर्णघटितत्वरूपा सुकुमारतेति शेषः । अपिनाऽस्या अपि समुच्चयः । झगिति द्राक् । प्रतीयमानत्वमन्वय-

१ संयोगः परो येभ्यः तादृशा ये ह्रस्ववर्णाः तदतिरिक्तवर्णघटितत्वे । अर्थात् संयोगपरत्वेन ह्रस्वानां गुरुत्वं यत्र न स्यात् ।

२ विचारेऽपि मञ्जूलानि । 'चारौ दक्षे च पेशलः' इत्यमरः । 'विचारेऽपि समर्थानीति' नागेशस्तु स्थूल एव ।

३ स्वेदाम्बुनः सान्द्रा ये कणास्तच्छालिनी या कपोलपालिस्तत्र दोलायिते ये श्रवणकुण्डले ताभ्यां वन्दनीया श्लाघनीयेति यावत् ।

४ 'पल्लवानाम्' इति हि लद्वयसंयोगो न परसवर्णनिष्पन्न इति न दोषः ।

५ 'उत्तरार्द्धे तु माधुर्यमपीति' अपिना अस्याः सुकुमारताया अपि समुच्चय इत्यर्थः ।

अत्र पूर्वार्धे । उत्तरार्धे तु माधुर्यमपि ।

**झगिति प्रतीयमानार्थान्वयकत्वमर्थव्यक्तिः ॥**

यथा 'नितराम्' इत्यादौ ।

**कठिनवर्णघटनारूपविकटत्वलक्षणोदारता ॥**

यथा—

'प्रमोदभरतुन्दिलप्रमथदत्ततालावली-[1]
विनोदिनि विनायके डमरुडिण्डिमध्वानिनि[2] ।
ललाटतटविस्फुरन्नवकृपीटयोनिच्छटो[3]
हठोद्धतजटोद्भटो[4] गतपटो नटो नृत्यति ॥'

'पदानां नृत्यत्प्रायत्वं विकटता' इति काव्यप्रकाशटीकाकारा व्याचक्षते । उदाहरन्ति च 'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झटिति रणितमासीत्' इत्यादि । तत्र तेषामेतादृशीं विकटत्वलक्षणामुदारतामोजस्यन्तर्भावयन्काव्यप्रकाशकारः कथमनुकूल इति त एव जानन्ति । न ह्यत्रौजसो वैपुल्येन प्रतिभानमस्ति । 'विनिविष्टैर्नूपुरैर्नर्त—'[5] इत्यत्र सन्नप्योजसो लवो न चमत्कारी । नापि तत्र नृत्यत्प्रायत्वं वर्णानामनुभवन्ति सहृदयाः । अंशान्तरे तु माधुर्यमेव ।

**संयोगपरह्रस्वप्राचुर्यरूपं गाढत्वमोजः ॥**

विशेषणम् । आकाङ्क्षादिसकलकारणसामग्रीसत्त्वादिति भावः । प्रमथा गणाः । **डमरुडिण्डिमेति** । डमरुडांकृतिं तन्वतीत्यर्थः । गतपटो दिगम्बरः । तत्रोक्तेऽर्थे । तेषां टीकाकाराणाम् । अनुकूलत्वाभावमेवाह—**न हीति** । अत्र स्वचरणेति पद्ये वैपुल्येन

1 तालावलीभिर्विनोदशालिनि ।

2 डमरु डिन् डिम् इति ध्वनयति तच्छीले, डमरु डिण्डिमं च ध्वनयतीति वा ।

3 ललाटतटात् विस्फुरन्ती ( निःसरन्तीति यावत् ) कृपीटयोनेः ( अग्नेः ) छटा यस्य ।

4 जटाभिः उद्भटः विकटः ।

5 निविष्टैर्नूपुरैरित्याद्यंशादन्यस्मिन्नंशे 'झटिति रणितमासी'दित्यत्र ।

यथा—

'साहंकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर[1]-
क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वंकषाः[2] ।
तृष्णाताम्यदमन्दतापसकुलैः[3] सानन्दमालोकिता
भूमीभूषण भूषयन्ति भुवनाभोगं भवत्कीर्तयः ॥'

यथा वा 'अयं पततु निर्दयम्' इत्यादिप्रागुदाहृते ।

**अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयुज्यमानेषु पदेषु लोकोत्तरशोभारूपमौज्वल्यं कान्तिः ॥**

यथा 'नितराम्' इत्यादि प्रागुदाहृते ।

**बन्धगाढत्वशिथिलत्वयोः क्रमेणावस्थापनं समाधिः ॥**

अनयोरेव प्राचीनैरारोहावरोहव्यपदेशः कृतः । क्रम एव हि तयोः प्रसादादस्य भेदकः । तत्र हि तयोर्व्युत्क्रमेण वृत्तेः ।

यथा—

'स्वर्गनिर्गतनिरर्गलगङ्गातुङ्गभङ्गुर[4]तरङ्गसखानाम् ।
केवलामृतमुचां वचनानां यस्य लास्यगृहमास्यसरोजम् ॥'

अत्रारोहः प्रथमेऽर्धे । तृतीयचरणे[5] त्ववरोहः । गङ्गेत्यादौ माधुर्यस्य व्यञ्जकेषु वर्णेषु सत्स्वपि दीर्घसमासान्तःपातितया न तस्य प्ररोहः । उत्तरार्धे तु सोऽपि । एते दश शब्दगुणाः ।

---

सर्वांशेन । लवो लेशः । अत एव न चमत्कारित्वम् । तत्रौजसो लवांशे । **साहमिति ।** हे भूमीभूषण । आभोगो विस्तारः । अनयोर्गाढत्वशिथिलत्वयोः । प्रसादात्समाधेर्भेदमाह— **क्रम एवेति ।** तयोर्गाढत्वशिथिलत्वयोः क्रम एव हीत्यर्थः । वृत्तेः प्रवृत्तेः । **स्वर्गेति ।** यस्यास्यसरोजं तेषां लास्यगृहं भवतीत्यर्थः । तृतीयचरणे इति बहुव्रीहिः । द्वितीयेऽर्धे

---

१ आकृष्टः अत एव भ्रमन् यो मन्दरस्तेन क्षुभ्यन् विलोड्यमान इति भावः ।

२ सर्वंकषाः सर्वथा हारिकाः ।

३ तृष्णया ताम्यन्ति व्याकुलानि यानि तापसकुलानि तानि शीत-स्वच्छ-श्वेतत्वात्पीयूषादि तृषाशान्तिसाधनं मत्वा कीर्तिमवलोकयन्तीत्याशयः ।

४ भङ्गुरा भङ्गीशालिनः (वक्रा इति यावत्) ये तरङ्गाः ।

५ तृतीयश्चरणो यस्मिन्, उत्तरार्धे इत्यर्थः । विचार्योऽत्र नागेशभट्टोदयः, यस्य लास्येत्यादौ (चतुर्थचरणे) बन्धशैथिल्यस्याप्रतीतेः ।

**एवं क्रियापरम्परया विदग्धचेष्टितस्य तदस्फुटत्वस्य तदुपपादकयुक्तेश्च सामानाधिकरण्यरूपः संसर्गः श्लेषः ॥**[1]

**यावदर्थकपदत्वरूपमर्थवैमल्यं प्रसादः ॥**[2]

यथा—'कमलानुकारि वदनं किल तस्याः' इत्यादि। प्रत्युदाहरणं तु 'कमलकान्त्यनुकारि वक्त्रम्' इत्यादि।

**प्रक्रमाऽभङ्गेनार्थघटनात्मकमवैषम्यं समता ॥**

यथा—

'हरिः पिता हरिर्माता हरिर्भ्राता हरिः सुहृत्।
हरिं सर्वत्र पश्यामि हरेरन्यन्न भाति मे ॥'

---

इत्यर्थः। तस्य माधुर्यस्य। पृथक्पदत्वस्य तत्र निविष्टत्वेन तदभावादिति भावः। सोऽपि माधुर्यप्ररोहोऽपि। तथा च सांकर्यमिति भावः। एवं शब्दगुणानां प्रपञ्चमुक्त्वार्थगुणानां तमाह—**एवमिति**। उक्तवदित्यर्थः। **विदग्धचेष्टितस्येति**। यथा 'दृष्ट्वैकासेनसंस्थिते प्रियतमे' इत्याद्यमरुकपद्यादौ। अत्रैकामतिक्रम्यान्याचुम्बनं विदग्धचेष्टितम्। तस्यास्फुटत्वमन्यया तदज्ञानात्। तत्रोपपत्तिश्च नयनपिधानपूर्वकं क्रीडानुबन्धः। एषां च पश्चादागमननयनपिधानक्रीडाकरणादिक्रियापरम्परया सामानाधिकरण्यं काव्ये निबद्धम्। इदं च 'क्रियापरम्परया' इति तृतीयान्तपाठे बोध्यम्। पष्ठ्यन्तपाठे तु तस्य(स्याः) तेषां च सामेल्याद्यर्थः। **यावदिति**। अर्थाऽन्यूनाधिकपदत्व-

---

१ विदग्ध-(चतुर-)-चेष्टितस्य, तदस्फुटत्वस्य (तच्चेष्टिताऽस्फुटत्वस्य अप्रकटनस्य) तदुपपादकयुक्तेः (तच्चेष्टितसाधिकाया युक्तेः) च क्रियापरम्परया (पश्चादागमन-नयनपिधान-क्रीडानुबन्धादिक्रियाणां शृङ्खलया) सामानाधिकरण्यरूपः एकस्मिन्नधिकरणे (स्थले) युगपद्दर्शनरूपः संसर्गः। षष्ठ्यन्तपाठे तु क्रियापरम्परायाः विदग्धचेष्टितादीनां च सर्वेषां सामानाधिकरण्यमित्यर्थः। अयं भावः—चातुर्येण कार्यानुष्ठानम् तद्गोपनम्, तत्साधकयुक्तिश्च एतेषां क्रमिकक्रियाद्वारा एकस्मिन्नेव स्थले तथा वर्णनं यथा तेषां परस्परं संबन्धो विच्छिन्नो न भवेत्, एतादृशी अर्थसंघटनैव श्लेषः।

२ यावान् अर्थस्तावन्त्येव पदानि, अर्थापेक्षया न न्यूनानि न चाधिकानि पदानि यत्र, इत्याशयः।

३ 'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्याऽऽदरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥'

अत्र विष्णुर्भ्रातेत्यादिनिर्माणे प्रक्रमभङ्गात्मकं वैषम्यम् ।

**एकस्या एवोक्तेर्भङ्ग्यन्तरेण पुनः कथनात्मकमुक्तिवैचित्र्यं माधुर्यम् ॥**

यथा—

'विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ॥'

अत्र विध्यादिभिर्नास्ति किमपि प्रयोजनमित्येषोऽर्थः समाधिविधानादिप्रेरणारूपेणोक्तिवैचित्र्येणाभिहितः । अन्यथाऽनवीकृतत्वापत्तेः ।

**अकाण्डे शोकदायित्वाभावरूपमपारुष्यं सुकुमारता ॥**

यथा—'त्वरया याति पान्थोऽयं प्रियाविरहकातरः' ।

'प्रियामरणकातरः' इत्यत्र शोकदायिनो मरणशब्दस्य सत्त्वात्पारुष्यम् । इदं चाश्लीलतादोषव्याप्यम्[1] ।

**वस्तुनो वर्णनीयस्यासाधारणक्रियारूपयोर्वर्णनमर्थव्यक्तिः ॥**

यथा—

'गुरुमध्ये कमलाक्षी कमलाक्षेण प्रहर्तुकामं माम् ।
रदयन्त्रितर[2]सनाग्रं तरलितनयनं निवारयांचक्रे ॥'

---

रत्नेत्यर्थः । प्रत्युदाहरणे कान्तीत्यधिकम् । **प्रक्रमेति** । उपक्रमाभङ्गेनेत्यर्थः । शाब्दबोधे शब्दस्यापि प्रकारतया भानस्य 'न सोऽस्ति' इत्यादिना हरिणा प्रतिपादितत्वादिति भावः । भङ्ग्यन्तरेण रीत्यन्तरेण । **विधत्तामिति** । देवीं[3] प्रति भक्तोक्तिः । कामानां मनोरथानां सवित्री निष्पादिका एषोऽर्थ इत्यस्यैक एवेति शेषः । अन्यथा तथैव प्रत्येकमुक्तौ । **अनवीति** । दोषोऽयम् । अकाण्डेऽनवसरे । मार्गे विवक्षितदेशप्राप्तेरुद्देश्यत्वे नावसर इति शोकस्यानवसरः । प्रत्युदाहरणमाह—**प्रियेति** । ननु शोकदायित्वरूपं पारुष्यं न दोषेषु गणितमत आह—**इदं चेति** । तदन्तःपात्यमङ्गलरूपत्वादिति भावः । रूपं स्वरूपम् । कमलाक्षीति स्वरूपम् । रदेत्यादि क्रिया । अयमेव अर्थव्यक्त्याख्यगुण एव ।

---

१ अश्लीलतादोषो व्यापकः जुगुप्सादायित्वाद्यधिकदेशव्यापित्वात् । इदं तु शोकदायि-(अमङ्गल—)-मात्रसंबद्धतया न्यूनदेशव्यापितया व्याप्यम् । अश्लीलतादोषान्तर्गतमित्यर्थः ।

२ रदैः यन्त्रितम् (आपीडितम्) रसनाग्रं यथा भवति तथा ।

३ गङ्गां प्रतीति मन्ये नागेशाशयः । अहो विस्पष्टार्थता टीकायाः ।

अयमेवेदानींतनैः स्वभावोक्त्यलंकार इति व्यपदिश्यते ।

**'चुम्बनं देहि मे भार्ये कामचाण्डालतृप्तये' इत्यादिग्राम्यार्थपरिहार उदारता ॥**

**एकस्य पदार्थस्य बहुभिः पदैरभिधानम्, बहूनां चैकेन, तथैकस्य वाक्यार्थस्य बहुभिर्वाक्यैः, बहुवाक्यार्थस्यैकवाक्येनाभिधानम्, विशेषणानां साभिप्रायत्वं चेति पञ्चविधमोजः ॥**

यदाहुः—

'पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्यासस[1]मासौ च साभिप्रायत्वमस्य च ॥' इति ।

पूर्वार्धप्रतिपाद्यं द्वयं व्याससमासौ चेति चतुष्प्रकारा प्रौढिः, साभिप्रायत्वं चेति पञ्चप्रकारमोज इत्यर्थः । प्रौढिः प्रतिपादनवैचित्र्यम् ।

यथा—

'सरसिजवनबन्धुश्रीसमारम्भकाले
रजनि[2]रमणराज्ये नाशमाशु प्रया[3]ति ।
परमपुरुषवक्त्रादुद्गतानां नराणां
मधुमधुरगिरां च प्रादुरासीद्विनोदः ॥'

अत्रोपसीत्येकपदार्थस्याभिधानाय प्रथमचरणः । इत्याद्यग्रेऽपि बोध्यम् ।

'खण्डितानेत्रकञ्जालिमञ्जुरञ्जनपण्डिताः ।
मण्डिताखिलदिक्प्रान्ताश्चण्डांशोर्भान्ति भानवः ॥'

---

उक्तक्रमेणैवाह—**पदार्थ इति । व्यासेति ।** तथेत्यादिनोक्तौ । अस्य विशेषणस्य । प्रौढिपदार्थमाह—**प्रतीति ।** क्रमेणोदाहरणान्याह—**यथेत्यादिना । इत्याद्यग्रेऽपीति ।** द्वितीयचरणोऽपि तदर्थे । तृतीयचरणेन ब्राह्मणानामित्यर्थलाभः । ईशमुखजत्वात्तेषाम् । उद्गतानामित्यस्य गिरां चेत्यत्रापि संबन्धः । अत एव च वेदानामित्यर्थलाभः । द्वितीयो-

---

१ एकेन वाक्येन वर्णनीयस्यार्थस्य बहुभिर्वाक्यैर्वर्णनमिति विस्तरो व्यासः, अनेकैर्वाक्यैर्वर्ण्यस्यार्थस्य एकेन वाक्येन वर्णनमित्यर्थसंक्षेपः समासः ।

२ चन्द्रः, तस्य राज्ये ।

३ सतिसप्तमी ।

अत्र 'यस्याः[1] पराङ्गनागेहात्पतिः प्रातर्गृहेऽञ्चति' इति वाक्यार्थे खण्डितापदाभिधानम् ।

'अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥'

अत्र दैवाधीनं सर्वमित्येकस्मिन्वाक्यार्थे नानावाक्यरचनात्मको व्यासपदवाच्यो विस्तरः ।

'तपस्यतो मुनेर्वक्त्राद्वेदार्थमधिगत्य सः ।
वासुदेवनिविष्टात्मा विवेश परमं पदम् ॥'

अत्र मुनिस्तपस्यति, तद्वक्त्रात्स वेदार्थमधिगतवान्, तदनन्तरं वासुदेवे परब्रह्मणि मनः प्रावेशयत्, ततश्च मुक्तोऽभूदिति वाक्यार्थकलापः शतृ[2]-क्त्वा-बहुव्रीहिभिस्तिङन्तेन चानुवाद्यविधेयभावेनैकवाक्यार्थीकृतः ।

साभिप्रायत्वं च प्रकृतार्थपोषकता ।

यथा—

'गणिकाजामिलमुख्यानवता भवता बताहमपि ।
सीदन्भवमरुगर्ते करुणामूर्ते न सर्वथोपेक्ष्यः ॥'

अत्रोपेक्षाभावे करुणामूर्तित्वं पोषकम् । पापिष्ठत्वात्करुणाया अभावे प्रकृतेऽस्याः[3] संपादनाय गणिकेत्यादि सीदन्निति च ।

---

दाहरणमाह—**खण्डीति** । कञ्जं कमलम् । भानवः सूर्यस्य किरणाः । खण्डितानेत्ररञ्जकत्वं तु तदा प्रियदर्शनेनेति बोध्यम् । अञ्चति गच्छति । तृतीयोदाहरणमाह—**अयाचीति** । उच्छृङ्खलो निर्मर्यादः । तुर्योदाहरणमाह—**तपेति** । स परमभक्तः कश्चित् । अत्रेत्यस्यादाविति शेषः । तद्वक्त्रादित्यस्य तत इत्यादिः । आत्मशब्दार्थमाह—**मन इति** । **तथेति** । गणिका चाजामिलश्च तौ मुख्यौ येषां तान् । गणिका पिङ्गला । अजामिलो राजा । भागवते प्रसिद्धोयमर्थः । बतेति खेदे । भव एव मरुगर्तस्तत्र सीदन्दुःखी ।

---

१ यस्याः पतिरित्यन्वयः ।

२ शतृ-क्त्वा-'वासुदेवे निविष्टः आत्मा यस्येति' बहुव्रीहिभिरनुवाद्यभावेन, विवेशेति तिङन्तेन च विधेयभावेन सोयमर्थकलाप एकवाक्यार्थीकृत इत्याशयः ।

३ करुणायाः संपादनाय गणिकादिदृष्टान्तगर्भं भगवद्विशेषणं सीदन्नित्यात्मविशेषणं च साकूतं दत्तमित्याशयः ।

४ अहह वादयुगे कोटित्रोटिघटकानां दिग्गजपण्डितानां साहित्यज्ञानस्य निरुपमनिदर्शनमिदम् । कथास्वपि भागवतं श्रुतवन्तस्तु जानन्ति-'कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः' इत्यादि ।

**दीप्तरसत्वं कान्तिः ॥**

तच्च स्फुटप्रतीयमानरसत्वम् । उदाहरणं च वर्णितमेव । रसप्रकरणे वर्णयिष्यते च ।

**अवर्णितपूर्वोऽयमर्थः पूर्ववर्णितच्छायो वेति कवेरालोचनं समाधिः ॥**

ज्ञानस्य विषयतासंबन्धेनार्थनिष्ठत्वादर्थगुणता ।

आद्यो यथा—'तनयमैनाकगवेषण-' (२२ पृष्ठे) इत्यादौ । द्वितीयस्तु प्रायशः सर्वत्रैवेत्याहुः । अपरे त्वेषु गुणेषु कतिपयान्प्रागुक्तैस्त्रिभिर्गुणैर्वक्ष्यमाणदोषाभावालंकारैश्च गतार्थयन्तः, कांश्चिद्वैचित्र्यमात्ररूपतया कांश्चिद्दोषतया च मन्यमाना न तावतः स्वीकुर्वन्ति । तथा हि—श्लेषोदारताप्रसादसमाधीनामोजोव्यञ्जकघटनायामन्तर्भावः । न च श्लेषोदारतयोः सर्वांशे गाढबन्धात्मनोरोजोव्यञ्जकघटनान्तर्भावोऽस्तु नाम, प्रसादसमाध्योस्तु गाढशिथिलात्मनोरंशेनौजोव्यञ्जकान्तर्भावेऽप्यंशान्तरेण कुत्रान्तर्भाव इति वाच्यम् । माधुर्याभिव्यञ्जके प्रसादाभिव्यञ्जके वेति सुवचत्वात् । माधुर्यं[1] तु परेषामस्मदभ्युपगतमाधुर्यव्यञ्जकमेव । एवं च सर्वत्र व्यञ्जके व्यङ्ग्यशब्दप्रयोगो[2] भाक्तः । समता तु सर्वत्रानुचितैव । प्रति-

प्रकृते मयि । मुख्यदीप्तत्वाभावादाह—**तच्चेति** । रसेत्यस्य पूर्वान्वयः । छायस्तत्सदृशः । नन्वालोचनं ज्ञानं तच्चात्मगुणो नार्थगुण इत्यत आह—**ज्ञानस्येति** । स्वोक्तौ तथाभावादाह—**प्रायश इति** । **दोषाभावेति** । द्वयोर्बहुवचनान्तानां द्वन्द्वः । तावतो दश । तत्रादौ शब्दगुणानां तेषामन्तर्भावायाह—**श्लेषोदेति** । घटनायां वर्णरचनायाम् । तदंशे सर्वत्र माधुर्यसत्त्वे मानाभावात् । प्रसादस्य सर्वरससाधारण्याच्चाह—**प्रसादाभीति** । **प्रतिपाद्येति** । प्रतिपाद्यस्य यदुद्भटत्वमनुद्भटत्वं च ताभ्यामित्यर्थः । ग्राम्य-

१ पृथक्पदत्वं माधुर्यम्, अर्थात् असमस्ताऽसन्धिकानां पदानां पृथक्पृथग्रूपेण संनिवेश एव माधुर्यमिति वर्णरचनासु व्यवहृतं वामनादिसंमतं माधुर्यं मम्मटानुसारं माधुर्यगुणस्य व्यञ्जकं शब्दसंघटनारूपमेव ।

२ अयं भावः—मम्मटादीनां मते रसधर्मा अमी माधुर्यादिगुणाः शब्दार्थाभ्यामभिव्यज्यन्ते, ततश्च व्यङ्ग्येष्वेषु (गुणेषु) माधुर्यादिशब्दप्रयोगः । वामनादिरीत्या तु—'एकजातीयवर्णविन्यासः श्लेषः, पृथक्पदत्वं माधुर्यम्, संयोगपरह्रस्वबाहुल्यमोजः' इत्यादिना शब्दार्थसंघटनैव माधुर्यादिनाम्ना व्यपदिश्यते । तथा च मम्मटमतानुसारं व्यञ्जके (शब्दार्थगुम्फे) व्यङ्ग्यवाचकानां माधुर्यादिशब्दानामुपचारेण प्रयोगः क्रियत इति ।

पाद्योद्धतत्वानुद्धतत्वाभ्यामेकस्मिन्नेव पद्ये मार्गभेदस्येष्टत्वात् ।

यथा—

'निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रव-
न्मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ।
काव्यं तर्हि सखे सुखेन कथय त्वं संमुखे मादृशां
नो चेद्दुष्कृतमात्मना कृतमिव स्वान्ताद्बहिर्मा कृथाः ॥'

अत्र पूर्वार्धे तृतीयचरणे च लोकोत्तरनिर्माणप्रतिपादके यो मार्गो न स चतुर्थचरणे कदर्यकाव्यप्रतिपादक इति वैपम्यमेव गुणः । ग्राम्यत्वकष्टत्वयोस्त्यागात्कान्तिसौकुमार्ययोर्गतार्थता, प्रसादेन चार्थव्यक्तेरिति ।

अर्थगुणेष्वपि—श्लेषः, ओजस आद्याश्चत्वारो भेदाश्च, वैचित्र्यमात्ररूपा न गुणान्तर्भावमर्हन्ति, अन्यथा प्रतिश्लोकमर्थवैचित्र्यवैलक्षण्याद्गुणभेदापत्तेः । अनधिकपदत्वात्मा प्रसादः, उक्तिवैचित्र्यवपुर्माधुर्यम्, अपारुष्यशरीरं सौकुमार्यम्, अग्राम्यरूपोदारता, वैपम्याभावलक्षणा

---

त्वकष्टत्वयोस्त्यागादिति । अत्रेदं चिन्त्यम्—कष्टत्वमोजोव्यञ्जकवर्णत्वम्, सुकुमारत्वं माधुर्यव्यञ्जकवर्णत्वम् । तथा चानयोः परस्पराभावत्वाभावात्कथं तेनान्यस्यान्यथा सिद्धिरिति । अर्थव्यक्तेरित्यस्य गतार्थतेत्यस्यानुषङ्गः । इतिः शब्दगुणान्तर्भावादिसमाप्तौ । अन्यथा वैचित्र्यमात्ररूपत्वेऽपि गुणान्तर्भावे गुणभेदापत्तेरिति । एतेन चमत्कारानुगुणत्वरूपस्य वैचित्र्यस्य गुणत्वसाधकतेत्यपास्तम् । कान्तिश्चेत्यस्यैतानीति शेषः । अनधिकपदेत्यार-

---

१ कष्टत्वं श्रुतिकटुत्वमिति सर्वविदितः काव्यप्रकाशाशयः । श्रुतिकटुत्वं च श्रुत्युद्वेजकवर्णघटितत्वम् । ततश्च परुषवर्णसंघटनया श्रुत्युद्वेजकं कष्टमित्यर्थः पर्यवसितः । एतद्विपरीता सुकुमारता च अपरुषवर्णघटितत्वम् । एवं च अकाण्डे परुषवर्णघटितत्वरूपकष्टत्वाभाव एव सौकुमार्यमिति स्पष्टमेव । ततश्च न मम्मटाद्युक्तौ दोषावकाशः ।

२ नागेशस्तु—'ओजोव्यञ्जकवर्णत्वं कष्टत्वम्' इति व्याख्याय स्वेच्छयैव काव्यप्रकाशाशयमपकर्षन्–'अपरुषवर्णघटितत्वं सुकुमारत्वम्' इति प्राक्संमतलक्षणस्थाने 'माधुर्यव्यञ्जकवर्णत्वं सुकुमारत्वमिति' स्वैरकल्पनया प्राचामप्याशयं कलुषयन् येन केनापि प्रकारेण मूलखण्डनपाण्डित्यं प्रकटयितुमभिनिविशते । किन्तु माधुर्यसौकुमार्ययोः स्फुटपार्थक्यं स्वीकुर्वतां प्राचामनुसारमिदं न घटेत । स्वेदाम्बुसान्द्रकणेत्याद्येकत्रैव स्थले माधुर्यसौकुमार्ययोः पृथङ् निदर्शनात् । मम्मटाद्यनुसारं तु परस्पराभावत्वमेनयोरुपरि साधितमेवेति विदो विदांकुर्वन्तु ।

समता, साभिप्रायत्वात्मकः पञ्चम ओजसः प्रकारः, स्वभावस्फुटत्वात्मिकाऽर्थव्यक्तिः, स्फुटरसत्वरूपा कान्तिश्च, अधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्यभग्नप्रक्रमापुष्टार्थरूपाणां दोषाणां निराकरणेन स्वभावोक्त्यलंकारस्य रसध्वनिरसवदलंकारयोश्च स्वीकरणेन च गतार्थानि । समाधिस्तु कविगतः काव्यस्य कारणं न तु गुणः । प्रतिभाया अपि काव्यगुणत्वापत्तेः । अतस्त्रय एव गुणा इति मम्मटभट्टादयः ।

तत्र टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तस्थैश्च घटिता, नैकट्येन प्रयुक्तैरनुस्वारपरसवर्णैः शुद्धानुनासिकैश्च शोभिता, वक्ष्यमाणैः सामान्यतो विशेषतश्च निषिद्धैः संयोगाद्यैरचुम्बिता, अवृत्तिर्मृदुवृत्तिर्वा रचनानुपूर्व्यात्मिका माधुर्यस्य व्यञ्जिका । द्वितीयचतुर्थास्तु वर्ग्या गुणस्यास्य नानुकूलाः, नापि प्रतिकूलाः, दूरतया संनिवेशिताश्चेत् । नैकट्येन तु प्रतिकूला अपि भवन्ति, यदि तदायत्तोऽनुप्रासः । अन्ये तु वर्गस्थानां पञ्चानामप्यविशेषेण माधुर्यव्यञ्जकतामाहुः ।

उदाहरणम्—

'तां तमालतरुकान्तिलङ्घिनीं किंकरीकृतनवाम्बुदत्विषम् ।
स्वान्त मे कलय शान्तये चिरं नैचिकीनयनचुम्बितां श्रियम् ॥'

---

थोक्तानीति तदर्थः । क्रमेणाह—**अधिकेति** । अर्थव्यक्तेः संग्रहायाह—**स्वभाविति** । कान्तेराह—**रसेति** । प्राधान्ये रसत्वमन्यथा रसवदलंकारत्वमिति भावः । **समाधिस्त्विति** । ज्ञानरूप इत्यर्थः । तस्यात्मगुणत्वादिति भावः । तदाह—**कवीति** । **न तु गुण इति** । अर्थस्य तत्कारणमिति शेषः । **प्रतीति** । तस्या अपि विषयतासंबन्धेन तद्वदर्थवृत्तित्वादिति भावः । उपसंहरति—**अत इति** । अथ यासु रचनास्वन्तर्भाव उक्तास्ता रचना आह—**तत्रेत्यादिना** । तत्र तासां मध्ये । शर्भिः शषसैः । 'अन्तःस्थाभिश्च' इति पाठः । यरलवैरिति तदर्थः । वक्ष्यमाणैरित्यस्यानुपदमित्यादि । अवृत्तिर्वृत्तिसामान्याभाववती । बाधादाह—**मृदुवृत्तिर्वेति** । गुणस्यास्य माधुर्यस्य । नैकट्येन संनिवेशिताश्चेदित्यस्यानुषङ्गः । अपिनानुकूलत्वसमुच्चयः । तदेवाह—**यदीति** । तदायत्तस्तदधीनः । वर्गेत्यस्य टवर्गान्येत्यादिः । अत्रारुचिबीजमुक्तमेव । **उदेति** । उदाहरणमित्यर्थः । **तामिति** । हे स्वान्त मनः, तां श्रियं कृष्णमूर्तिशोभां शान्तये मे

---

१ प्रसाद. अधिकपदत्वरूपदोषाभावः, माधुर्यमनवीकृतत्वदोषाभावः, सौकुमार्यममङ्गलाश्लीलाभावः, उदारता ग्राम्यत्वाभावः, समता भग्नप्रक्रमतादोषाभावः, साभिप्रायत्वात्मकमोजश्च अपुष्टार्थत्वाभावरूपमिति फलितम् । एवम्-अर्थव्यक्तिः स्वभावोक्त्यलंकारः, कान्तिश्च रसस्य प्राधान्ये रसध्वनिः, गुणीभावे च रसवदलंकाररूप इत्याशयः ।

२ वर्णानुपूर्व्यात्मिका रचना इत्यन्वयः ।

यथा वा—

'स्वेदाम्बुसान्द्रकणशालिकपोलपालि-
रन्तःस्मितालसविलोकनवन्दनीया ।
आनन्दमङ्कुरयति स्मरणेन कापि
रम्या दशा मनसि मे मदिरेक्षणायाः ॥'

प्रथमे पद्येऽतिशयोक्त्यलंकृतस्य भगवद्ध्यानौत्सुक्यस्य भगवद्विषयकरतेर्वा ध्वन्यमानायाः शान्त एव पर्यवसानात्तद्गतमाधुर्यस्याभिव्यञ्जिका रचनेयम् । द्वितीये तु स्मृत्युपष्टब्धशृङ्गारगतस्य ।

नैकट्येन द्वितीयचतुर्थवर्गवर्ण-टवर्गजिह्वामूलीयोपध्मानीयविसर्गसकारबहुलैर्वर्णैर्घटितो झयरेफान्यतरघटितसंयोगपरह्रस्वैश्च[1] नैकट्येन प्रयुक्तैरालिङ्गितो दीर्घवृत्त्यात्मा गुम्फ ओजसः । अस्मिन्पतिताः प्रथमतृतीयवर्ग्या गुणस्यास्य नानुकूला नापि प्रतिकूलाः संयोगाघटकाश्चेत् । तद्घटकास्त्वनुकूला एव । एवमनुस्वारपरसवर्णा अपि । यथा—'अयं पततु निर्दयं दलितदृप्त—' ( ४४ पृष्ठे ) इत्यादौ प्रागुदाहृते ।

श्रुतमात्रा वाक्यार्थं करतलबदरमिव निवेदयन्ती घटना प्रसादस्य ।

---

चिरं कल्येत्यर्थः । नैचिक्यो गावस्तन्नेत्रचुम्बितामित्यर्थः । **स्वेदाम्ब्विति** । गतोऽयं श्लोकः ( ७० पृष्ठे ) यद्यपि पाल्यग्रे 'दोलायितश्रवणकुण्डल' इति तत्र पाठः, तथापि टवर्गस्य वर्ज्यत्वादाह—'अन्तः स्मितालसविलोकन' इति । अत एवानयोर्मध्ये 'यथा वा—स्मृतापि' इति काचित्कोऽपपाठ इति बोध्यम् । अत एवाह—**प्रथमे इति** । तामित्यत्रेत्यर्थः । विनिगमनाविरहादाह—**भगवदिति** । **तद्गतेति** । शान्तगतेत्यर्थः । द्वितीये स्वेदाम्ब्विति पद्ये । **स्मृत्युपेति** । तद्विषयेत्यर्थः । गतस्येत्यस्य माधुर्येत्यादनुषङ्गः । प्रसादस्थल आह—**नैकट्येनेति** । 'टवर्गजिह्वः' इति पाठः । 'टवर्गझय्' इत्यपपाठः । गुम्फो रचनाविशेषः । व्यञ्जक इति शेषः । बहुलैरित्यनेनान्येषामपि सत्ता सूचिता । तदाह—**अस्मिन्निति** । वर्ग्या वर्गसंबन्धिवर्णाः । अस्य ओजसः । चेदन्तं पूर्वान्वयि । **सवर्णा अपीति** । गुणस्येत्यादेः सर्वस्यानुषङ्गः । ओजसो लक्षणमाह—**यथेति** । मात्रपदेन

---

१ 'झभञ् घढधष् जबगडदश् खफछठथचटतव् कपय्' इति पाणिनीयव्याकरणप्रसिद्धः । वर्गाणामादिमाश्चत्वारो वर्णा इत्यर्थः । एभिर्वर्णै रेफेण वा संपन्नो यः संयोगस्तत्परैर्नैकटनिकटं प्रयुक्तैः अ-इ-इत्यादिह्रस्वाक्षरैर्मिलितः ।

अयं च सर्वसाधारणो गुणः। उदाहरणान्यत्र प्रायशो मदीयानि सर्वाण्येव पद्यानि।

तथापि यथा—

'चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः
प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा।
एतत्त्वां विनिवेदयामि मम चेदुक्तिं हितां मन्यसे
मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति॥'

अत्र सर्वावच्छेदेन प्रसादाभिव्यञ्जकत्वमंशभेदेन तु माधुर्यौजोभिव्यञ्जकत्वमपि, मनसिजान्तस्य माकुर्वादेश्च माधुर्याभिव्यक्तिहेतुत्वात्, सख्य इत्यादेरोजोगमकत्वात्। नन्वत्र शृङ्गाराश्रयस्य माधुर्यस्याभिव्यक्तये तदनुकूलास्तु नाम रचना, ओजसस्तु कः प्रसङ्गो यदर्थं तदनुकूलवर्णविन्यास इति चेत्। नायिकामानोपशान्तये कृतानेकयत्नायास्तदीयं हितमुपदिशन्त्याः सख्याः सक्रोधत्वस्य व्यञ्जनीयतया तथाविन्यासस्य साफल्यात्। किं बहुना रसस्यौजस्विनोऽमर्षादेर्भावस्य चाविवक्षायामपि वक्तरि क्रुद्धतया प्रसिद्धे, वाच्ये वा क्रूरतरे, आख्यायिकादौ प्रबन्धे वा, परुषवर्णघटनेष्यते। यथा वा—

'वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदा-
स्तां स्वप्नेऽपि न संस्पृशाम्यहमहंभावावृतो निस्त्रपः।
इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः॥'

अत्र गुणान्तरासमानाधिकरणः[1] प्रसादः।

---

वर्णविशेषनियमादिव्यवच्छेदः। घटना रचना। व्यञ्जकेति शेषः। उदेत्यस्य यद्यपीत्यादिः। अत्र प्रसादे। **तथापि यथेति**। विशिष्योदाहरणमित्यर्थः। **चिन्तेति**। 'एतत्त्वां विनि-' इति पाठः। जेष्यति पीडादानेन। मानमलीमसत्वन्मुखसादृश्यस्य स्वस्मिन्संपादनेन वा। अत एव राकापतिरित्युक्तम्। राका पूर्णिमा। अन्यदा तु चन्द्रे सर्वथा साम्याप्रसिद्धिरिति भावः। तथा ओजोनुकूलवर्णेत्यर्थः। रसस्य वीररौद्रबीभत्सात्मकस्य। भावस्य च व्यभिचारिभावस्य च। प्रसादस्योदाहरणान्तरमाह— **यथा वेति**। उदाहरणान्तरदाने बीजमाह—**अत्रेति**। स्वानन्तर्यं स्वाव्यवहितोत्तर-

1 केवलः प्रसादगुण एवेत्यर्थः।

इदानीं तत्तद्गुणव्यञ्जनक्षमाया निर्मितेः परिचयाय सामान्यतो विशेषतश्च वर्जनीयं किंचिन्निरूप्यते—वर्णानां स्वानन्तर्यं सकृदेकपदगतत्वे किंचिदश्रव्यम्। यथा—'ककुभसुरभिः, विततगात्रः, पललमिवाभाति' इत्यादौ। असकृच्चेदधिकम्। यथा—'विततततरुस्तरुरेष भाति भूमौ।' एवं भिन्नपदगतत्वेऽपि। यथा—'शुक करोषि कथं विजने रुचिम्' इत्यादौ। असकृद्भिन्नपदगतत्वे ततोऽप्यधिकम्। यथा—'पिक ककुभो मुखरीकुरु प्रकामम्'। एवं स्वसमानवर्ग्यानन्तर्यं सकृदेकपदगतत्वे किंचिदश्रव्यम्। यथा—'वितथस्ते मनोरथः'। असकृच्चेदधिकम्। यथा—'वितथतरं वचनं तव प्रतीमः'। एवं भिन्नपदगतत्वे। यथा 'अथ तस्य वचः श्रुत्वा' इत्यादौ। असकृद्भिन्नपदगतत्वे तु ततोऽप्यधिकम्। 'अथ तथा कुरु येन सुखं लभे'। एतच्च वर्गाणां प्रथमद्वितीययोस्तृतीयचतुर्थयोरानन्तर्यम्। प्रथमतृतीययोर्द्वितीयतृतीययोर्वाऽऽनन्तर्यं तु तथा नाश्राव्यम्। किंत्वीषत्, निर्माणमार्मिकैकवेद्यम्। एतदप्यसकृच्चेत्ततोऽधिकत्वात्साधारणैरपि वेद्यम्। यथा—'खग कलानिधिरेष विजृम्भते'। 'इति वदति दिवानिशं स धन्यः'। पञ्चमानां मधुरत्वेन स्ववर्ग्यानन्तर्यं न तथा। यथा—'तनुते तनुतां तनौ'। स्वानन्तर्यं त्वश्रव्यमेव। यथा—'मम महती मनसि व्यथाविरासीत्'। एतानि चाश्रव्यत्वानि गुरुव्यवायेनापोद्यन्ते[1]। 'संजायतां कथंकारं काके केकाकलस्वनः'।

यथा वा—

'यथा यथा तामरसायतेक्षणा मया सरागं नितरां निषेविता।
तथा तथा तत्त्वकथेव सर्वतो विकृष्य मामेकरसं चकार सा।

त्वम्। किंचिदीषत्। एवं वर्णानां स्वानन्तर्यं सकृत्किंचिच्छ्रव्यमित्यर्थः। एवमग्रेऽपि। अत एवाग्रे ततोऽप्यधिकमित्युक्तम्। **एतच्चेति**। स्वसमानवर्ग्यानन्तर्यं चेत्यर्थः। तेषां तयोरानन्तर्यं बोध्यमित्यन्वयः। ईषत्पदार्थमाह—**निर्माणेति**। साधारणैरपि निर्माणमार्मिकभिन्नैरपि। आद्योदाहरणमाह—**खगेति**। द्वितीयोदाहरणमाह—**इतीति**। चतुर्णां गतिमुक्त्वा पञ्चमानामाह—**पञ्चेति**। न तथा नाश्रव्यम्। **स्वानन्तर्यमिति** पञ्चमानामित्यस्यानुषङ्गः। एतेषामपवादमाह—**एतानिति**। **गुर्विति**। गुरुवर्णव्यवधानेनेत्यर्थः। 'काक' इति पाठे संबोधनम्। तं प्रत्युक्तिः। युक्तस्तु सप्तम्यन्तपाठः।

१ अपवादतया निरस्यन्ते, अर्थात् गुरुवर्णव्यवधाने अश्रव्यत्वानि न भवन्तीत्याशयः।

इदं तु दीर्घव्यवाये । संयोगपरव्यवाये तु—

'सदा जयानुषङ्गाणामङ्गानां संगरस्थलम् ।
रङ्गाङ्गणमिवाभाति तत्तत्तुरगताण्डवैः ॥'

इदं तु बोध्यम्—गुरुर्ययोर्व्यवधायकस्तयोरेव वर्णयोरानन्तर्यकृतमश्रव्यत्वमपवदति । तेनात्र थकारतकारानन्तर्यकृतदोषापवादेऽपि तकार[3]थकारानन्तर्यकृतमश्रव्यत्वमनपोदितमेव । एवं ञ्यादीनां संयोगोऽपि प्रायेणाश्रव्यः । 'राष्ट्रे तवोष्ट्र्यः परितश्चरन्ति' इत्येवमादयः श्रुतिकाटवभेदा अन्येऽप्यनुभवानुसारेण बोध्याः । अथ दीर्घानन्तर्यं संयोगस्य भिन्नपदगतस्य सकृदप्यश्रव्यम्, असकृत्तु सुतराम् ।

'हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते ।
सेवितं सर्वसंपद्भिरपि तद्भवनं वनम् ॥'

एकपदगतस्य तु तथा नाश्रव्यम् । यथा—'जाग्रता विचितः पन्थाः शात्रवाणां वृथोद्यमः' । परसवर्णकृतस्य तु संयोगस्य सर्वथा दीर्घाद्भिन्नपदगतत्वाभावान्मधुरत्वाच्चानन्तर्यं न मनागप्यश्रव्यम् । यथा—'तां तमालतरुकान्ति-' इत्यादिपद्ये ( ७९ पृष्ठे ) । अत्र तामित्यत्र नीमित्यत्र च परसवर्णस्य पूर्वपदभक्तर्तया[4] न संयोगो भिन्नपदगतः । प्रत्येकं संयोगसंज्ञेति पक्षेऽपि भिन्नपदगतः संयोगो न दीर्घादव्यवहितपरः । नवाम्बुदेत्यत्र त्वेकादेशस्य पदद्वयभक्ततया दीर्घाद्भिन्नपदगतत्वे[5] सत्यव्यवहितोत्तरत्वं यद्यपि

तत्त्वकथा ब्रह्मकथा । सर्वस्माद्विषयादाकृष्य । एकरसं स्वमयं ब्रह्ममयं च । गुरुर्द्वेधा, दीर्घः संयोगपरश्च । तत्राद्योदाहरणमुक्तम्, अन्त्यस्योच्यत इत्याह—**इदं न्वित्यादि** । गुरुव्यवायेन तदंशे दोषाभावो न सर्वांशे इत्याह—**इदं त्विति** । **प्रायेणेति** । श्रुत्यकटुत्वे तु न तथेति भावः । उपसंहरति—**एवमादय इति** । आद्योदाहरणं हरिणीत्यभिप्रायम् । गतस्येत्यस्य संयोगस्य दीर्घानन्तर्यमिति शेषः । **न दीर्घादव्यवेति** । परसवर्णेनैव व्यवधानादिति भावः । समस्ते पदे विशेषमाह—**नवाम्बुदेति** । **अदोष इति** ।

१ देशविशेषाणाम् ।

२ 'यथा नाम', तथा तथा तस्व इति ।

३ तथा तथेति नकारानन्तरस्थकारः ।

४ पूर्वपदावयवतयेत्याशयः । एवमग्रेपि बोद्धव्यम् ।

५ नव–अम्बुदेत्यत्र दीर्घादेशः पदद्वयस्यापि संबन्धी गणयितुं शक्यते । ततश्च तस्य पूर्वपदभक्ततायां, नवाम्बुदेत्यत्र 'म्बु' इति संयोगो दीर्घात्परो भिन्नपदगतश्च गणयितुं शक्य इति पूर्वोक्तदोषः प्रसज्येतेति शङ्का । समाधानं स्पष्टम् ।

परसवर्णकृतसंयोगस्य भवति तथाप्यत्र भिन्नपदगतत्वमेकपदगतभिन्नत्वं विवक्षितमित्यदोषः । असकृत्तु सुतराम् । यथा—'एषा प्रिया मे क गता त्रपाकुला' । इदं चाश्रव्यत्वं काव्यस्य पङ्गुत्वमिव प्रतीयते । अथ स्वेच्छया संध्यकरणं सकृदप्यश्रव्यम् । यथा—'रम्याणि इन्दुमुखि ते किलकिञ्चितानि' । प्रगृह्यताप्रयुक्तं त्वसकृदेव । 'अहो अमी इन्दुमुखीविलासाः' एवमेव च य-व-लोपप्रयुक्तम् । 'अपर इषव एते कामिनीनां दृगन्ताः' ।

कथं तर्हि—

'भुजगाहितप्रकृतयो गारुडमन्त्रा इवावनीरमण ।
तारा इव तुरगा इव सुखलीना मन्त्रिणो भवतः ॥'

इति भवदीयं काव्यमिति चेदकृत्वैव यलोपं पाठान्न दोषः । एवं रोरुत्वस्य हलि लोपस्य यण्गुणवृद्धिसवर्णदीर्घपूर्वरूपादीनां नैकट्येन बाहुल्यमश्रव्यताहेतुः । एवमिमे सर्वेऽप्यश्रव्यभेदाः काव्यसामान्ये वर्जनीयाः ।

अथ विशेषतो वर्जनीयाः । तत्र मधुररसेषु ये विशेषतो वर्जनीया अनुपदं वक्ष्यन्ते त एवौजस्विष्वनुकूलाः, ये चानुकूलतयोक्तास्ते प्रतिकूला इति सामान्यतो निर्णयः । मधुररसेषु दीर्घसमासं झय्घटितसंयोगपरह्रस्वस्य विसर्जनीयादेशसकारजिह्वामूलीयोपध्मानीयानां टवर्गझयां रेफह्-

वस्तुत एकपदगतत्वेन तत्त्वाभावादिति भावः । **असकृत्तु सुतरामिति** । भिन्नपदगतस्य संयोगस्य दीर्घानन्तर्यमसकृच्चेत्तर्हि सुतरामश्रव्यमित्यर्थः । अश्रव्यत्वमंशे इति शेषः । काव्यस्य पङ्गुत्वमिवेत्यन्वयः । रसाद्यप्रतीतेस्तत्त्वमिति भावः । किलकिञ्चितानि हावविशेषा इत्यर्थः । प्रयुक्तं तु संध्यकरणमित्यनुषङ्गः । एवमग्रेऽपि । **असकृदेवेति** । अन्यथा शास्त्रानर्थक्यं स्यादिति भावः । यवलोपे 'लोपः शाकल्यस्य' इति । तत्र यलोपोदाहरणमाह—**अपर इति** । इषव इति 'इव त' इति पाठान्तरम् । **भुजगेति** । हे पृथ्वीनाथ, तवामात्याः गारुडमन्त्रा इव भुजगाहितप्रकृतयः, तारा इव तुरगा इव सुखलीना इत्यन्वयः । भुजगानां सर्पाणां विटानां चाहिता प्रकृतिर्येषाम् । सुखेष्वासक्ताः । सुष्ठु खे आकाशे लीनाः । सुष्ठु खलीनं येषां ते तादृशाश्चेत्यर्थः । उपसंहरति—**एवमिति** । उक्तप्रकारेणेत्यर्थः । सर्वेऽपि वर्णानां स्वानन्तर्यमित्यादिनोक्ताः । तत्र तेषां मध्ये । ये चेत्यादौ यथाक्रमं सप्तम्यन्तद्वयानुषङ्गः । समासमित्यस्य वर्जयेदित्यत्रान्वयः । अग्रिमसर्वषष्ठ्यन्तानामसकृत्प्रयोगमित्यत्रान्वयः । **सवर्णेति** । 'तुल्यास्य'मिति

१ मन्त्रायिव तारायिवेत्यादि पठनीयमिति भावः ।

कारान्यतरघटितसंयोगस्य हलां ल-म-न-भिन्नानां स्वात्मना संयोगस्य झयूद्वयघटितसंयोगस्य चासकृत्प्रयोगं नैकट्येन वर्जयेत्। सवर्णझयूद्वय-घटितसंयोगस्य शर्भिन्नमहाप्राणघटितसंयोगस्य सकृदपीति संक्षेपः।

दीर्घसमासो यथा—

'लीलालकावलिर्विलन्नयनारविन्द-
लीलावशंवदितलोकविलोचनायाः।
सायाह्नि प्रणयिनो भवनं व्रजन्त्या-
श्चेतो न कस्य हरते गतिरङ्गनायाः॥'

झयूघटितसंयोगपरह्रस्वानां प्राचुर्यं नैकट्येन यथा—

'हीरस्फुरद्रदनशुभ्रिमशोभि किं च
सान्द्रामृतं वदनमेणविलोचनायाः।
वेधा विधाय पुनरुक्तमिवेन्दुबिम्बं
दूरीकरोति न कथं विदुषां वरेण्यः॥'

अत्र भ्रिशब्दपर्यन्तं शृङ्गाराननुगुणम्। शिष्टं तु रमणीयम्। उत्त-रार्धे ककारतकाररूपझयूद्वयसंयोगस्य सत्त्वेऽपि प्राचुर्याभावान्न दोषः। यदि तु 'दन्तांशुकान्तमरविन्दरमापहारि सान्द्रामृतं' इत्यादि क्रियते तदा सर्वमेव रमणीयम्।

विसर्गप्राचुर्यं यथा—

'सानुरागाः सानुकम्पाश्चतुराश्शीलशीतलाः।
हरन्ति हृदयं हन्त कान्तायाः स्वान्तवृत्तयः॥'

अत्र शकारद्वयसंयोगान्तं पूर्वार्धं माधुर्याननुगुणम्।

सवर्णसंज्ञकेत्यर्थः। अपिना सकृत्समुच्चयः। नैकट्येन प्रयोगं वर्जयेदित्यस्यानुषङ्गः। 'चलन्' इति पाठेऽपि स एवार्थः। वशंवदितानि स्वाधीनीकृतानि। सायाह्नि सायंकाले। **हीरेति**। हीरैर्हीरवद्वा स्फुरन्तो ये रदना दन्तास्तेषां शुभ्रिम्णा शुभ्रत्वेन शोभते तच्छीलम्। सान्द्रं घनममृतं यस्मिंस्तत्। यद्वा नञ् काक्वाम्। अपि तु दूरीकरोत्येव। परिवेषच्छलेनेति भावः। **यदि त्विति**। दन्तकिरणरम्यं कमलशोभापहारीत्यर्थः। हरन्ति। ममेति शेषः। नायकोक्तिरियम्। पूर्वार्धं तदवयवभूतम्। जिह्वेत्यस्य विसर्गादेशेत्यादिः। एवमग्रेऽपि।

१ अलकावलिश्च नयनारविन्दे च एषां लीलया वशंवदितानि लोकलोचनानि यया।

२ पूर्वार्धावयवभूतमिति व्याख्यया किं बुबोधयिषितं नागेशमहोदयस्य? शकारद्वयसंयोगान्तं पूर्वार्धं माधुर्याननुगुणमिति मूले सोयमर्थोऽस्पष्टः किम्?।

जिह्वामूलीयप्राचुर्यं यथा—

'कलितकुलिशघाताᳵ केऽपि खेलन्ति वाताᳵ
कुशलमिह कथं वा जायतां जीविते मे ।
अयमपि बत गुञ्जन्नालि माकन्दमौलौ
चुलुकयति मदीयां चेतनां चञ्चरीकः ॥'

अत्र द्वितीयजिह्वामूलीयपर्यन्तमननुगुणं माधुर्यस्य । यदि च 'कथय कथमिवाशा जायतां जीविते मे मलयभुजगवान्ता वान्ति वाताः कृतान्ताः' इति विधीयते, तदा नायं दोषः ।

उपध्मानीयप्राचुर्यं यथा—

'अलकाᳶ फणिशावतुल्यशीला नयनान्ताᳶ परिपुङ्खितेषुलीलाः ।
चपलोपमिता खलु स्वयं या बत लोके सुखसाधनं कथं सा ॥'

अत्र द्वावुपध्मानीयावेव न शान्तानुगुणौ ।

टवर्गझयां प्राचुर्यं यथा—

'वचने तव यत्र माधुरी सा हृदि पूर्णा करुणा च कोमलेऽभूत् ।
अधुना हरिणाक्षि हा कथं वा कटुता तत्र कठोरताविरासीत् ॥'

---

**कलितेति** । नायिकोक्तिः सखीं प्रति । कलितः कृतः कुलिशवद्वज्रवद्घातो यैस्तादृशाः केऽपि विलक्षणा वाताः खेलन्ति क्रीडां कुर्वन्ति । अत इह देशे मम जीविते कुशलं कथं जायताम् । वाशब्दः पादपूरण इवार्थे वा । कारणान्तरमाह—**अयमिति** । हे आलि, माकन्दतरुमौलावाम्रतरुमस्तके गुञ्जन्नयमपि चञ्चरीको भ्रमरः । बतेति खेदे । मदीयां चेतनां चुलुकयति । चुलुकवदापिबतीत्यर्थः । मलयाचलस्थतरुस्थितसर्पमुखनिःसृता इत्यर्थः । अत एव कृतान्ताः । अत्र सकृत्सत्त्वेऽपि प्राचुर्याभावः । **अलका इति** । यस्या इति शेषः । पुङ्खयुक्तबाणसदृशलीलाः । चपला विद्युत् । एतेनान्यत्सर्वं रमणीयमिति सूचितम् । **वचन इति** । हे कोमले, तव यत्र वचने सा माधुरी, स्वान्ते पूर्णा करुणा चाभूत् । हे हरिणाक्षि,

---

१ इदं संबोधनं वा, हृदीत्यस्य विशेषणं वेति सहृदयैर्विचारणीयम् ।

'अधुना सखि तत्र हा कथं वा गतिरन्यैव विलोक्यते गुणानाम्' इति त्वनुगुणम्।

रेफघटितसंयोगस्यासकृत्प्रयोगो यथा—

'तुलामनालोक्य निजामखर्वं गौराङ्गि गर्वं न कदापि कुर्याः।
लसन्ति नानाफलभारवत्यो लताः कियत्यो गहनान्तरेषु॥'

यदि तु 'तुलामनालोक्य महीतलेऽस्मिन्' इति निर्मीयते तदा साधु।

हलां ल-म-न-भिन्नानां स्वात्मना संयोगस्यासकृत्प्रयोगो यथा—'विगणय्य मे निकाय्यं तामनुयातोऽसि नैव तद्वयाय्यम्।' ल-म-नानां स्वात्मना संयोगस्तु न तथा पारुष्यमावहति। यथा—

'इयमुल्लसिता मुखस्य शोभा परिफुल्लं नयनाम्बुजद्वयं ते।
जलदालिमयं जगद्वितन्वन्कलितः क्वापि किमालि [1]नीलमेघः॥

झयुद्वयघटितसंयोगस्य यथा—

'आ सायं सलिलभरे सवितारमुपास्य सादरं तपसा।
अधुनाब्जेन मनाक् तव मानिनि तुलना मुखस्याप्ता॥'

अत्र द्वितीयार्धमरम्यम्। 'सरसिजकुलेन संप्रति भामिनि ते मुखतुलाधिगता' इति तु साधु।

सवर्णझयुद्वयघटितसंयोगस्य सकृत्प्रयोगो यथा—

'अयि मन्दस्मितमधुरं वदनं तन्वङ्गि यदि मनाक्कुरुषे।
अधुनैव कलय शमितं राकारमणस्य हन्त साम्राज्यम्॥'

अधुना। हा इति खेदे। कथमिव तत्र यथाक्रमं कटुता कठोरता चाविरासीदित्यर्थः। अत्रोत्तरार्धे टवर्गझयां नैकट्येन प्राचुर्यं बोध्यम्। अत एवाह—**अधुनेति**। अखर्वं गर्वमित्यन्वयः। गहनं काननम्। **साध्वति**। एकत्र सत्त्वेऽपि प्राचुर्याभावः। हकारघटितसंयोगस्यासकृत्प्रयोगोदाहरणं त्रुटितमत्र। निकाय्यं निवासम्। तां सपत्नीम्। नायिकोक्तिर्नायकं प्रति। **वहतीति**। अतस्तदन्यलं निवेशितमिति भावः। **इयमिति**। अधुना द्वितीयेऽह्नि। **अयीति**। अयि तन्वङ्गि, यदि वदनं मनाक् मन्दस्मि-

[1] हे आलि! किं नीलमेघः (मेघत्वेनाध्यवसितः श्रीकृष्णः) कलितो मिलितः? 'कल' कामधेनुः। लक्षिता नायिका।

नन्वत्र ककारद्वयसंयोगस्य हल्घटितस्वात्मसंयोगत्वेनैव निषेधात्क-खसंयोगस्य महाप्राणसंयोगनिषेधविषयत्वात्तृतीयसंयोगस्य चासंभवात्स-वर्णझयृद्वयसंयोगनिषेधो निरवकाश इति चेत्, न । सकृत्प्रयोगविषयत्वे-नास्य पार्थक्यात् । अन्यथा मनाक्कुरुष इति निर्दोषं स्यात् ।

महाप्राणघटितसंयोगो यथा—

'अयि मृगमदबिन्दुं चेद्भाले बाले समातनुषे ।'

उत्तरार्धं तु प्राचीनमेव ।

एवं त्वप्रत्ययं यङन्तानि यङ्लुगन्तान्यन्यानि च शाब्दिकप्रिया-ण्यपि मधुररसे न प्रयुञ्जीत । एवं व्यङ्ग्यचर्वणातिरिक्तयोजनाविशेषापेक्षा-नापाततोऽधिकचमत्कारिणोऽनुप्रासनिचयान् यमकादींश्च संभवतोऽपि कविर्न निबध्नीयात् । यतो हि ते रसचर्वणायामनन्तर्भवन्तः सहृदयहृदयं स्वाभिमुखं विदधाना रसपराङ्मुखं विदधीरन्, विप्रलम्भे तु सुतराम् । यतो मधुरतमत्वेनास्य निर्मलसितानिर्मितपानकरसस्येव तनीयानपि स्वातन्त्र्यमा-वहन्पदार्थः सहृदयहृदयारुंतुदतया न सर्वथैव सामानाधिकरण्यमर्हति ।

यदाहुः—

'ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥'

---

तमधुरं कुरुषे तर्हि अधुनैव । न तु कालान्तरे । हन्तेति हर्षे । चन्द्रस्य साम्राज्यं शमितं कलय । जानीहीत्यर्थः । **कखेति** । खादिधातुपाठे इति भावः । **व्यङ्ग्येति** । व्यङ्ग्यास्वादान्यो यो योजनाविशेषः पदार्थानां तदपेक्षा नेत्यर्थः । **यतो हीति** । निपातसमुदायो हेतौ । **सुतरामिति** । पूर्वोक्तसर्वानुषङ्गः । तनीयानपि पदार्थो रजःकणः पदार्थैकदेशश्च स्वातन्त्र्यं स्वाभिमुखत्वं कुर्वन्नित्यर्थः । निबन्धनं शक्तावपि प्रमादित्वरूपं

---

१ सवर्णझयृघटितसंयोगो यो यः संभवति तस्य प्रकरणेऽस्मिन्निषेधसमावेशप्रकारं निर्दिश्य— 'किमित्ययं ( सवर्णझयृसंयोगः ) निषेध्येषु गणित इति' शङ्का । अन्येषामसकृत्प्रयोगो निषिद्धः, अस्य तु सकृदपीति पार्थक्यार्थं गणनमिति समाधानम् ।

२ व्यङ्ग्यास्वादं विहाय येषां योजनायां विशेषप्रकारस्य यत्नस्यापेक्षा एतादृशान् ।

३ सह संनिवेशम् ।

ये तु पुनरक्लिष्टतयानुन्नतस्कन्धतया च न पृथग्भावनामपेक्षन्ते, किं तु रसचर्वणायामेव सुसुखं गोचरीकर्तुं शक्याः, न तेषामनुप्रासादीनां त्यागो युक्तः ।

यथा—

'कस्तूरिकातिलकमालि विधाय सायं
स्मेराननना सपदि शीलय सौधमौलिम् ।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि ॥'

इत्थमेते प्रसङ्गतो मधुररसाभिव्यञ्जिकायां रचनायां संक्षेपेण निरूपिता दोषाः ।

'एभिर्विशेषविषयैः सामान्यैरपि च दूषणै रहिता ।
माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा ॥
व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता ।
तां विबुधा वैदर्भीं वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥'

अस्यामुदाहृतान्येव कियन्त्यपि पद्यानि ।

यथा वा—

'आयातैव निशा निशापतिकरैः कीर्णं दिशामन्तरं
भामिन्यो भवनेषु भूषणगणैरुल्लासयन्ति श्रियम् ।
वामे मानमपाकरोषि न मनागद्यापि, रोषेण ते
हा हा बालमृणालतोऽप्यतितमां तन्वी तनुस्ताम्यति ॥'

---

भवतीत्यर्थः । **अनुन्नतेति** । अनुन्नतविस्तारतया चेत्यर्थः । सुसुखमत्यन्तसुखं यथा तथा । क्वचित् 'सुखम्' इत्येव पाठः । सौधमौलिं सुधानिर्मितप्राकारोर्ध्वप्रदेशम् । मुदां प्रौढिमित्यन्वयः । उपसंहरति—**इत्थमिति** । प्रसङ्गाद्वृत्तिं निरूपयति—**एभिरिति** । माधुर्यभारेण भङ्गुरोऽत एव सुन्दरः पदानां वर्णानां च विन्यासो रचना यस्यां सा । निर्मातुर्व्युत्पत्तिमुद्गिरन्तीत्यन्वयः । प्रसादगुणेन युता । गृहीतः परिपाको रसचर्वणा यस्यां सा । कीर्णं व्याप्तम् । श्रियं शोभाम् । तन्वी कृशा । अस्या वैदर्भ्याः । भङ्गमुदा-

१ अनेन हि शशाङ्कगतमेचकचिह्नसंपत्त्या कुमुदादीनामुल्लासनाय पूर्णचन्द्रत्वं ध्वन्यते ।

२ अनेन हि ज्योत्स्नाजालविच्छुरणं ध्वन्यते ।

३ हरितः ( दिशः ) स्वमुखानि उल्लासयन्तु इत्यन्वयः ।

अस्याश्च रीतेर्निर्माणे कविना नितरामवहितेन भाव्यम् । अन्यथा तु परिपाकभङ्गः स्यात् ।

यथामरुककविपद्ये—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

अत्रोत्थाय किंचिच्छनैरित्यत्र सवर्णझयूद्वयसंयोगस्तत्रापि नैकट्येनेति सुतरामश्रव्यः । एवं झयूघटितसंयोगपरह्रस्वस्यापि । तथा शनैर्निद्रेत्यत्र, निर्वर्ण्य पत्युर्मुखमित्यत्र च रेफघटितसंयोगस्य, झयूघटितसंयोगपरह्रस्वस्य च प्राचुर्यम् । विस्रब्धमित्यत्र महाप्राणघटितस्य, लज्जेत्यत्र स्वात्मसवर्णझयूद्वयघटितस्य, मुखी प्रियेणेत्यत्र भिन्नपदगतदीर्घानन्तरस्य संयोगस्य, तथा क्त्वाप्रत्ययस्य पञ्चकृत्वः, लोकतेश्च धातोर्द्विः प्रयोगः कवेर्निर्माणसामग्रीदारिद्र्यं प्रकाशयति । इत्यलं परकीयकाव्यविमर्शनेन । इति संक्षेपेण निरूपिता रसाः ।

अथ भावध्वनिर्निरूप्यते—

अथ किं भावत्वम् ? विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसकाव्यवाक्येऽतिव्याप्त्यापत्तेः । अर्थद्वारा शब्दस्यापि व्यञ्जकत्वात् । द्वारान्तरनिरपेक्षत्वेन व्यञ्जकत्वे विशेषिते त्वसंभवः प्रसज्येत । भावस्यापि भावनाद्वारैव व्यञ्जकत्वात्, भावनायामतिव्याप्त्यापत्तेश्च[1] ।

हरति—**यथेति** । अत्र लज्जेति पृथक्पदम् । तेन समानकर्तृकत्वोपपत्तिः । **एवमिति** । उक्तस्थल एवेत्यर्थः । नैकट्येनासकृत्प्रयोगोऽश्रव्य इति भावः । **प्राचुर्यमिति** । तथा चाश्रव्यमिति भावः । **स्वात्मेति** । स्वात्मघटितः सवर्णझयूद्वयघटितश्चेति दोषद्वयम् । **घटितस्येति** । द्वयस्य संयोगस्येत्यत्रान्वयः । सकृदिति तस्य शेषः । तस्य च प्रयोग इत्यत्रान्वयः । एवमग्रेऽपि । तस्य प्रकाशने कर्तृत्वम् । निर्माणेत्यस्य काव्येत्यादिः । अथ रसनिरूपणानन्तरम् । भावना पुनः पुनरनुसंधानम् । अत एव च भावनायामति-

१ भावना हि द्वारान्तरमनपेक्ष्य रसं व्यनक्ति । ततश्च तस्यामपि 'विभावानुभावभिन्नत्वे सति द्वारान्तरनिरपेक्षं रसव्यञ्जकत्वं—भावत्व'मतिप्रसक्तमिति भावः ।

अत एव च विभावानुभावभिन्नत्वस्येव शब्दभिन्नत्वस्यापि[1] तद्विशेषणत्वे न निस्तारः। प्रधानध्वन्यमानभावे[2] रसव्यञ्जकताभावादव्याप्त्यापत्तेश्च। न च तत्रापि प्रान्ते रसोऽभिव्यज्यत एवेति वाच्यम्। भावध्वनिविलोपप्रसङ्गात्[3]। भावचमत्कारप्रकर्षाद्भावध्वनित्वम्[4]। रसस्तु तत्र व्यज्यमानोऽप्यचमत्कारित्वान्न ध्वनिव्यपदेशहेतुरित्यपि न शक्यं वदितुम्। चमत्काररहितरसव्यक्तौ मानाभावात्। रसे हि धर्मिग्राहकमानेनानन्दांशाऽविनाभावस्य[5] प्रागेवावेदनात्।

अस्तु वा प्राधान्येन ध्वन्यमानस्यापि भावस्य प्रान्ते रसाभिव्यञ्जकत्वम्। तथापि[6] देशकालवयोवस्थादिनानापदार्थघटिते पद्यवाक्यार्थे तथा-

---

व्याप्तेरेव च। तद्विशेषणत्वे व्यञ्जकत्वविशेषणत्वे। **अस्तु वा प्राधान्येनेति**। रसं प्रति गुणीभूतत्वेऽपि वाच्यातिशायित्वात्तद्ध्वनित्वं राजानुगम्यमानविवहनप्रवृत्तभृत्यस्येव रसापेक्षयापि हि अस्य प्राधान्यमस्ति। अत एव न भावध्वनिविलोप इति भावः। तथापि उक्तस्थलेऽव्याप्त्यापत्त्यभावेऽपि। तथापि विभावानुभावभिन्नत्वे सति [शब्दभिन्नत्वे सति] रसव्यञ्जकत्वमित्युक्तावपि। भिन्नत्वे सतीत्युपलक्षणं शब्दभिन्नत्वे सती-

१ भावना हि शब्दाद् भिन्ना सत्येव द्वारान्तरनिरपेक्षा रसं व्यञ्जयतीति।

२ तत्र हि स भाव एव विभावादिसामग्र्या व्यङ्ग्यो भवति, न स रसव्यञ्जकस्तत्र भावत्वं न सिध्येदित्याशयः।

३ चरमा रसाभिव्यक्तिरेव चेत्परिगण्येत तर्हि भावध्वनिस्थलेपि चरमां रसप्रतीतिमालभ्य रसत्वव्यपदेशः स्यादिति भावध्वनिव्यपदेशस्य लोप एव स्यादित्याशयः।

४ ननु भावध्वनिस्थले रससत्तायामपि भावकृतश्चमत्कार एव तत्र प्रकृष्टो न रसस्य चमत्कार इति विभावानुभावभिन्नत्वे सति शब्दभिन्नो रसाभिव्यञ्जको भाव इति लक्षणे न दोषः स्यादिति चेत्, न। अभिव्यक्तो रसश्चमत्काररहितो भवेदत्र न किञ्चिन्मानम्?

५ धर्मिणो रसस्य ग्राहकं प्रत्यायकं यन्मानं प्रमाणं तेनैव रसस्य आनन्दांशाऽविनाभावित्वस्य प्रतिपादनात्। अयं भावः—विभावादिव्यञ्जनया यया सामग्र्या रसाभिव्यक्तिः साधिता तयैव हि रसोद्बोधे सति आनन्दस्यावश्यंभावित्वमप्यावेदितम्। भग्नावरणस्य चिदानन्दस्यैव रसत्वव्यपदेशात्।

६ ननु भावध्वनिस्थले चरमचमत्कारिरसाभिव्यक्तौ स्वीकृतायामपि विभावानुभावभिन्नत्वे सति शब्दभिन्न-रसाभिव्यञ्जकत्वरूपे भावत्वे भावध्वनित्वविलोपो न स्यात्। रसं प्रति गुणीभावेऽपि वाच्यातिशायित्वाद्भावध्वनित्वाऽक्षतेः, रसचमत्कारेऽपि राजानुगतस्य विवाहप्रवृत्तभृत्यस्येव ध्वन्यमानभावस्य प्राधान्याद्वा। इति पूर्वपक्षिण उक्तौ तथापि देशकालेत्यादिना दोषान्तरदानम्।

प्यतिव्याप्तिः । तस्य विभावानुभावभिन्नत्वे सति रसाभिव्यञ्जकत्वात् । नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वं तत्त्वम् । भावादिचर्वणायामतिप्रसङ्गवारणाय चर्वणाविषयेति चित्तवृत्तिविशेषणमिति वाच्यम् ।

'कालागुरुद्रवं सा हालाहलवद्विजानती नितराम् ।
अपि नीलोत्पलमालां बाला व्यालावलिं किलामनुते ॥'

इत्यत्र हालाहलसदृशत्वप्रकारज्ञाने अतिव्याप्तेः । तस्य विप्रलम्भानुभावत्वेन रसाभिव्यञ्जकचर्वणाविषयत्वात्, चित्तवृत्तित्वाच्च । नाप्यखण्डम्[1] । तत्त्वे मानाभावात् । अत्रोच्यते—

**विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम् ॥**

यदाहुः—'व्यभिचार्यञ्जितो भावः' इति । हर्षादीनां च सामाजिकगतानामेव स्थायिभावन्यायेनाभिव्यक्तिः[2] । सापि रसन्यायेनेति केचित् ।
व्यङ्ग्यान्तरन्यायेनेत्यपरे मन्यन्ते ।

---

त्वस्यापि । नापीत्यस्य वाच्यमित्यत्रान्वयः । चर्वणा आस्वादः । **चर्वणायामतीति** । रसाभिव्यञ्जकचित्तवृत्तित्वस्य तस्यां सत्त्वादिति भावः । कालागुरुद्रवं नितरां हालाहलवद्विजानती सा बाला नीलोत्पलमालामपि व्यालावलिं किलामनुत इत्यन्वयः । तस्य ज्ञानस्य । **चित्तवृत्तित्वाच्चेति** । अत्रैवानुभावभिन्नत्वे सतीति विशेषणदाने को दोष इति चिन्त्यम् । अखण्डं भावत्वमिति शेषः । तत्त्वे अखण्डत्वे । विशेष्यमात्रोक्तौ तेषां शब्दवाच्यत्वे तत्त्वापत्तिः । अतः **विभावादीति** । तावन्मात्रोक्तौ रसेऽतिप्रसङ्ग इति समुदितमुपात्तम् । अञ्जितोऽभिव्यक्तो व्यभिचारी भाव इत्यर्थः । **स्थायिभावेति** । प्रतिपादितमेतदधस्ताद्ग्रन्थकृता । सापि तद्गतानां तेषां तथाभिव्यक्तिरपि । **व्यङ्ग्यान्तरेति** । रसापेक्षया भिन्नं यद्व्यङ्ग्यं वस्त्वलंकारादि तद्रीत्येत्यर्थः । तथा च रसापे-

---

१ भावत्वमखण्डोपाधिः । एतस्मिन् हि लक्षणनिर्देशो नावश्यकः ।

२ मतत्रयमेवम्—वासनारूपेण सामाजिकानां हृदि स्थिताः स्थायिभावा नाटककाव्यादिषूपस्थितैर्विरुद्धाऽविरुद्धभावैरनभिभूततया तत्तदभिव्यक्तिसामग्र्या यथा स्थिरामभिव्यक्तिं लभन्ते तथा इमे हर्षादयोपीति सिद्धान्तभूतः प्रथमः पक्षः ।

सामाजिकानां हृदि निसर्गेण वर्तमानोऽपि विभावानुभावाद्यभिव्यक्तिसामग्र्या सत्त्वोद्रेकेण पिधाननिवृत्तौ स्थायिभावोपहितो भग्नावरणश्चिदानन्द एव यथा रसत्वेनाभिव्यज्यते तथा विभावाद्यभिव्यक्तिसामग्र्या उद्रिक्तसत्त्वतया भग्नावरणचिद्विशिष्टा भावा अपि सामाजिकानां हृद्यभिव्यज्यन्ते इति केचित्पदसंदृब्धो द्वितीयः कल्पः ।

वाचक-लक्षकादिशब्दद्वारा वाच्य-लक्ष्याद्यर्थोपस्थितावपि वक्तृबोद्धव्यादिवैशिष्ट्ये सत्यनुरणनन्यायेन वस्त्वलंकारात्मको व्यङ्ग्यो यथा श्रोतॄणां हृद्यभिव्यज्यते तथा विभावादिवाचकतत्तच्छब्दप्रत्ययानन्तरमनुरणनन्यायेन भावा अपीमे सामाजिकानां हृद्यभिव्यज्यन्त इत्यपरे पदघटितं तृतीयं मतम् ।

विभावानुभावौ चात्र व्यञ्जकौ । न त्वेकस्मिन्व्यभिचारिणि ध्वन्यमाने व्यभिचार्यन्तरं व्यञ्जकतयावश्यमपेक्ष्यते, तस्यैव प्राधान्यापत्तेः। वस्तुतस्तु प्रकरणादिवशात्प्राधान्यमनुभवति कस्मिंश्चिद्भावे तदीयसामग्रीव्यङ्ग्यत्वेन नान्तरीयकतया तन्निमानमावहतो व्यभिचार्यन्तरस्याङ्गत्वेऽपि न क्षतिः । यथा गर्वादावमर्षस्य, अमर्षादौ वा गर्वस्य। न चैवं सति गुणीभूतव्यङ्ग्यत्वापत्तिः। पृथग्विभावानुभावाभिव्यक्तस्यैव (भावस्य), गुणीभूतव्यङ्ग्यव्यपदेशहेतुत्वात्। अत एव नान्तरीयकस्य भावस्य ध्वननं भवति। अन्यथा गर्वादिध्वनेरुच्छेद एव भवेत् । विभावस्त्वत्र व्यभिचारिणो निमित्तकारणसामान्यम्। न तु रसस्येव सर्वथैवालम्बनोद्दीपने अपेक्षिते। यदि तु क्वचित्संभवतस्तदा न वार्येते। हर्षादयस्तु—

हर्षस्मृतिव्रीडामोहधृतिशङ्काग्लानिदैन्यचिन्तामदश्रमगर्वनिद्रामतिव्याधित्राससुप्तविबोधामर्षावहित्थोग्रतोन्मादमरणवितर्कविषादौत्सुक्यावेगजडतालस्यासूयापस्मारचपलताः । प्रतिपक्षकृतधिक्कारादि-

क्षयापकर्षः सूचितः। अत्र भावे। तस्यैव व्यभिचार्यन्तरस्य । प्रकरणादीनां तात्पर्यं नियामकत्वेन न तदापत्तिरित्याशयेन सिद्धान्तमाह—**वस्तुतस्त्वति**। **तदीयेति**। प्रधानभावीयेत्यर्थः। नान्तरीयकत्वे **हेतुरयम्**। अत एवाग्रे 'अत एव नान्तरीयकस्य' इति वक्ष्यति। **तन्निमानमिति** । कश्चिमानमित्यर्थः। विनिगमनाविरहादाह—**अमर्षादौ वेति**। एवं सति व्यभिचार्यन्तरस्य प्रधानभावेऽङ्गत्वे सति । भावशरीरनिविष्टहर्षादीनाह—**हर्षादय इति**। एतेन पुत्रादिविषयरतेर्मुनिना भावत्वगणनेनेत्यर्थः ।

१ नित्यसंबद्धतया। अयं संदर्भस्याशयः—प्रकरणवशात्प्रधाने कस्मिंश्चिद्भावे तेन भावेन सह नित्यसंबद्धः, तन्निमानमावहन् (स्तोकं प्रकाशमानः) अन्योपि कश्चिद्भावः प्रधानाभिव्यक्तिसामग्र्यैव यद्यङ्गतयाऽभिव्यज्यते, यथा गर्वादावमर्षः, तत एकस्मिन् भावे न केवलं विभावानुभावयोरेव, अपि तु भावान्तरस्यापि व्यञ्जकत्वे न दोषः। ननु भावं प्रति भावोऽत्र गुणीभूत इति गुणीभूतव्यङ्ग्यत्वस्य व्यपदेशो भवेन्न ध्वनित्वस्य। इति तु न शङ्कितव्यम्, यत्राङ्गभूतो भावः पृथग् विभावानुभावाभ्यामेवाभिव्यज्यते न तु प्रधानभावाभिव्यक्तिसामग्र्या, तत्रैव गुणीभूतव्यङ्ग्यत्वव्यवहारात् । अन्यथा गर्वादिस्थले अमर्षादेर्नान्तरीयकतया गर्वादिध्वनेरुच्छेद एव स्यात्।

२ पृथग्विभावानुभावाभिव्यक्तस्य अत एवाऽनान्तरीयकस्य भावस्य भावान्तरगुणीभूतव्यङ्ग्यव्यपदेशहेतुत्वात्। इति काशीमुद्रितपुस्तकपाठः।

जन्मा निर्वेदश्चेति त्रयस्त्रिंशद्व्यभिचारिणः । गुरुदेवनृपपुत्रादिविषया रतिश्चेति चतुस्त्रिंशत् ।

एतेन वात्सल्याख्यं पुत्राद्यालम्बनं रसान्तरमिति परास्तम् । उच्छृङ्खलताया मुनिवचनपराहतत्वात् ।

तत्र

**इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः ॥**

तदुक्तम्—

'देवभर्तृगुरुस्वामिप्रसादः प्रियसंगमः ।
मनोरथाप्तिरप्राप्यमनोहरधनागमः ॥
तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ।
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥' इति ।

उदाहरणम्—

'अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना ।
अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥'

अत्रावधिकाले प्रियागमनं विभावः । मुखविकासोऽनुभावः ।

**संस्कारजन्यं[1] ज्ञानं स्मृतिः ॥**

यथा—

'तन्मञ्जु मन्दहसितं श्वसितानि तानि
सा वै कलङ्कविधुरा मधुराननश्रीः ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त
सायंतना[2]म्बुजसहोदरलोचनायाः ॥'

तदाह—**उच्छृङ्खलेति** । तत्र हर्षादीनां मध्ये । देवेत्यादि उत्पत्त्यन्तो विभावो यत्र जायते, नेत्रेत्याद्युक्ता अनुभावा यत्र जायन्ते तं हर्षमादिशेदित्यर्थः । तदा अवधिकाले । अथ हर्षानन्तरम् । श्रीरित्यग्रे चेति शेषः । तद्ध्वनित्वं भावध्वनित्वम् । पूर्वमते स्मृति-

१ वस्तुनो दर्शनश्रवणादिना हृदये योऽयं संस्कारः संचीयते तज्जन्यं ज्ञानमित्यर्थः ।

२ उत्तरोत्तरं निमीलनोन्मुख-नयनाया इत्याशयः ।

चिन्ताविशेषोऽत्र विभावः। भ्रून्नतिगात्रनिश्चलत्वादय आक्षेपगम्या अनुभावाः। यद्यप्यत्रास्या एव स्मृतेः संचारिण्याः, नायिकारूपस्य विभावस्य, हन्तपदगम्यस्य हृदयवैकल्यरूपानुभावस्य, संयोगाद्विप्रलम्भरसाभिव्यक्ते रसध्वनित्वं शक्यते वक्तुम्, तथापि स्मृतेरेवात्र पुरःस्फूर्तिकत्वाच्चमत्कारित्वाच्च तद्ध्वनित्वमुक्तम्। तदादेर्बुद्धिस्थप्रकारावच्छिन्ने शक्तिरिति नये बुद्धेः शक्यतावच्छेदकानुगमकतया न वाच्यतासंस्पर्शः। बुद्धिस्थत्वं शक्यतावच्छेदकमिति नयेऽपि स्मृतित्वेन स्मृतेर्व्यक्तिवेद्यतैव।

---

त्वेन स्मृतेर्वाच्यत्वात्कथं भावध्वनित्वमत आह—**बुद्धेरिति**। शक्यतावच्छेदकतावच्छेदकस्येत्यर्थः। द्वितीयमते बुद्धिस्थत्वस्य वाच्यत्वेऽपि न स्मृतित्वस्य तत्त्वमित्याह—**स्मृतित्वेन स्मृतेरिति**। व्यक्तिर्व्यञ्जना। 'व्यङ्ग्यस्य कथमपि वाच्यवृत्त्यनालिङ्गितस्यैव

---

१ अस्य शङ्कासमाधानप्रघट्टकस्य सर्वस्यापि निगलितः सारांशो निर्दिश्यते—'तत्'पदस्यार्थविषये नैयायिकानां मतद्वयम्। तत्पदेन हि बुद्धिस्थत्वेनाऽनुगतीकृतः असाधारणपदार्थो बोध्य इति प्रथमम्। बुद्धिस्थत्वरूपेण अनुगमकधर्मेण व्यवस्थितानां नानार्थानां बोधनादेव 'तत्'पदं सर्वार्थबोधकं सदपि अनेकार्थं न परिगण्यते। तदादिस्थले इदं बुद्धिस्थत्वमेव (धर्मः) सकलानां शक्यतावच्छेदकानाम् (शक्यविशेषणानाम्) अनुगमकं स्वीक्रियते। अयं चानुगमकः कस्यापि पदस्य शक्यो न परिगण्यते इति प्रथममतस्य सारः। 'तत्'पदेन पदार्थस्य असाधारणरूपेण बोधो न भवति, किन्तु बुद्धिस्थत्वेन। बुद्धिस्थत्वं च शक्यतावच्छेदकमिति द्वितीयम्। बुद्धिस्थत्वेनानुगतीकृतः असाधारणः पदार्थो बोध्यत इति प्रथमं, बुद्धिस्थरूपोऽर्थो बोध्यत इति द्वितीये। उभयत्रापि तत्पदेन बुद्धिस्थं परामृश्यते। बुद्धिर्ज्ञानं चैकमेव। स्मृतिर्ज्ञानरूपा। अत एव 'तत्'पदेन यदा बुद्धिस्थं परामृश्यते तदा तेन (तत्पदेन) ज्ञानरूपायाः स्मृतेरपि परामर्शात् तन्वङ्ग० इत्यादिपद्यं स्मृतिध्वनेरुदाहरणं न संभवेत्। अत्र हि तत्पदेन ज्ञानरूपायाः स्मृतेः परामर्शात् स्मृत्या सह वाच्यतायाः संबन्धो जातः। ध्वनिश्च तत्रैव भवति यत्र हि व्यङ्ग्यार्थस्य वाच्यतावृत्तेः कथमपि संस्पर्शो न भवेदिति शङ्का। प्रथममतानुसारमस्मिन्पद्ये तत्पदस्य शक्यः असाधारणसौन्दर्यविशिष्टं हसितादि। बुद्धिस्तु शक्यतावच्छेदकस्य अनुगममात्रं कारयति। सा वाच्या (शक्यः) न भवितुमर्हति। द्वितीयनयेऽपि—तत्पदस्य शक्यतावच्छेदकं बुद्धिस्थत्वं भवति। ततश्च 'बुद्धिस्थघटितबुद्धेः सामान्यज्ञानरूपेण प्रतिपादनेऽपि स्मृतित्वेन विशेषरूपेण स्मृतिर्व्यञ्जनयैव बोध्या, न शक्त्या। तथा च मतद्वयेऽपि स्मृतेर्वाच्यत्वाभावात्स्मृतिध्वनित्वमव्याहतमिति समाधानम्।

तस्याश्चात्र वाक्यवेद्यत्वेऽपि पदस्यैव कुर्वद्रूपत्वात्पदध्वनिविषयत्वम् । एतेन भावानां पदव्यङ्ग्यत्वे न वैचित्र्यमिति परास्तम् । सायंतनाम्बुजोपमेनेन नयनयोरुत्तरोत्तराधिकनिमीलनोन्मुखत्वध्वननद्वारा तस्या आनन्दमग्नताप्रकाशः ।

'दरानमत्कंधरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिःश्वासभरालसाङ्गं स्मरामि सङ्गं चिरमङ्गनायाः ॥'

इत्यत्र स्मृतिर्न भावः, स्वशब्देन निवेदनादव्यङ्ग्यत्वात् । नापि स्मरणालंकारः, सादृश्यामूलकत्वात् । सादृश्यमूलकस्यैव स्मरणस्यालंकारत्वम्, अन्यस्य तु व्यञ्जितस्य भावत्वमिति सिद्धान्तात् । किं तु विभावैं एव सुन्दरत्वात्कथंचिद्रसपर्यवसायी ।

**स्त्रीणां पुरुषमुखावलोकनादेः, पुंसां च प्रतिज्ञाभङ्गपराभवादेरुत्पन्नो वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा ॥**

---

चमत्कारित्वमित्यालंकारिकसमयः' इति पूर्वतनग्रन्थेन विरोधाच्चिन्त्यमेतत् । व्यङ्ग्यतावच्छेदकतया भासमानजात्यादिरूपेण यत्र वाच्यता तत्रैवाचमत्कारिता । पूर्वोदाहरणे हि मनोरथत्वेच्छात्वयोर्घटत्वकलशत्ववदेकतया तेन रूपेणैव वाच्यतास्तीति न दोष इत्यपि कश्चित् । तस्या नायिकायाः । विभाव एव नायिकारूप एव । कथंचित्साम-

---

१ सर्वेण वाक्येन स्मृतिभावो यद्यपि बोध्यते तथापि 'तत्'पदमेव प्राधान्येन स्मृत्यभिव्यञ्जने स्फुरत्सामर्थ्यमिति पदप्रकाश्यध्वनित्वव्यपदेश इत्याशयः ।

२ उपमया ।

३ नायिकैव चमत्कारितया ईषत्कन्धराऽऽनमनादिकमनुभावम्, आक्षिप्तान् व्रीडादींश्च संचारिणः, समुपस्थाप्य रसमभिव्यनक्तीत्याशयः । एवमाक्षेपे परम्पराश्रयणमित्येव क्लेश इति कथंचित्पदस्याकूतम् ।

४ शयिता सविधे इत्युदाहरणे वाच्यवृत्तेः कथमपि स्पर्शे—ध्वनित्वविघातक इत्युक्तम् । अत्र च बुद्धिस्थत्वघटितबुद्धित्वरूपेण स्मृतेरपि सामान्यतया वाच्यतास्पर्श इति कथमयं ध्वनिः पूर्वग्रन्थविरोधात् । इति केषांचिदाक्षेपः ।

व्यङ्ग्यतावच्छेदकतया भासमाना या जातिस्तज्जात्यादिरूपेण यत्र वाच्यता तत्रैव अचमत्कारकृतो ध्वनित्वनिरासः । शयिता सविधे इत्युदाहरणे घटत्व—कलशत्ववत् मनोरथत्वेच्छात्वयोरेकतया तेनैव रूपेण वाच्यतास्पर्शो भवतीति तत्र ध्वनित्वं निरस्यते । अत्र तु तथा नेति पण्डितराजोक्तौ न दोषः इति समाधानम् ।

यथा—

'कुचकलशयुगान्तर्मामकीनं नखाङ्कं
सपुलकतनु मन्दं मन्दमालोकमाना ।
विनिहितवदनं मां वीक्ष्य बाला गवाक्षे
चकितनर्तनताङ्गी[1] सद्म सद्यो विवेश ॥'

अत्र प्रियस्य दर्शनं तेन[2] नायिकाकर्तृकतत्कुचान्तर्वर्तिप्रियनखक्षतावलोकनजन्यहर्षावेदकतत्पुलकादेर्दर्शनं च विभावः । सद्यः सदनप्रवेशोऽनुभावः ।

यथा वा—

'निरुध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो ददाने ।
मयि स्मितार्द्रं वदनारविन्दं सा मन्दमन्दं नमयांबभूव ॥'

पूर्वत्र त्रास इवात्रापि हर्षो लेशतया सन्नपि व्रीडाया अनुगुण एव । प्रियकर्तृकं कपोतस्याग्रे कपोत्याः समर्पणं विभावः । वदननमनमनुभावः ।

**भयवियोगादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः ।**

'अवस्थान्तरशबलिता सा[3] तथा' इति तु नव्याः ।

उदाहरणम्—

'विरहेण विकलहृदया विलपन्ती दयित दयितेति ।
आगतमपि तं सविधे परिचयहीनेव वीक्षते बाला ॥'

अत्र कान्तवियोगो विभावः । इन्द्रियवैकल्यं लज्जाद्यभावश्चानुभावः ।

यथा वा—

'शुण्डादण्डं कुण्डलीकृत्य कूले कल्लोलिन्याः किंचिदाकुञ्चिताक्षः ।
नैवाकर्षत्यम्बु नैवाम्बुजालिं कान्तापेतः कृत्यशून्यो गजेन्द्रः ॥'

ष्यन्तराभावकृतः क्लेशः । सपुलकतन्विति क्रियाविशेषणम् । गवाक्षे विनिहितवदनमित्यन्वयः । चकितेत्यत्र कर्मधारयद्वयम् । **तेनेति** । प्रियेणेत्यर्थः । तत्कर्तृकमिति यावत् । पुलकादेर्दर्शनमित्यत्रान्वयः । **तत्कुचेति** । नायिकाकुचेत्यर्थः । एवमग्रेऽपि । सद्यश्शब्दार्थमाह—**सदनेति** । तरसा शीघ्रम् । स्मितेनार्द्रमिव नमयांबभूव नमयांचकार ।

१ चकिता नता च सा नताङ्गी ।

२ तेन प्रियेण अर्थात् प्रियद्वारा ।

३ वस्तुतत्त्वानवधारणरूपमवस्थान्तरं प्राप्ता सा चिन्ताख्यचित्तवृत्तिरेव तथा अर्थात् मोहः ।

**लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः ॥**

उदाहरणम्—

'संतापयामि हृदयं धावं धावं धरातले किमहम् ।
अस्ति मम शिरसि सततं नन्दकुमारः प्रभुः परमः ॥'

अत्र विवेकश्रुतसंपत्त्यादिर्विभावः । चापलाद्युपशमोऽनुभावः । ननु चोत्तरार्धे चिन्ता नास्तीति वस्तुनोऽभिव्यक्तेः कथमस्य धृतिभावध्वनित्वमिति चेत्, तस्य धृत्युपयोगितयैवाभिव्यक्तेः ।

**किमनिष्टं मम भविष्यतीत्याकारश्चित्तवृत्तिविशेषः शङ्का ॥**

उदाहरणम्—

'विधिवञ्चितया मया न यातं सखि संकेतनिकेतनं प्रियस्य ।
अधुना बत किं विधातुकामो मयि कामो नृपतिः पुनर्न जाने ॥'

अत्र राजापराधो विभावः । मुखवैवर्ण्यादय आक्षेप्या अनुभावाः । इयं तु भयाद्युत्पादनेन कम्पादिकारिणी, न तु चिन्ता ।

**आधिव्याधिजन्यबलहानिप्रभवो वैवर्ण्यशिथिलाङ्गत्वदृग्भ्रमणादिहेतुर्दुःखविशेषो ग्लानिः ॥**

यथा—

'शयिता शैवलशयने सुषमाशेषा नवेन्दुलेखेव ।
प्रियमागतमपि सविधे सत्कुरुते मधुरवीक्षणैरेव ॥'

अत्र प्रियविरहो विभावः । मधुरवीक्षणैरेवेत्येवकारेण बोध्यमाना प्रत्युद्गमचरणनिपतनाश्लेषादीनां निवृत्तिरनुभावः । न चात्र श्रमः शङ्क्यः । कारणाभावात् । केचित्तु व्याध्यादिप्रभवबलनाशं ग्लानिमाहुः । तेषां मते

अम्बुजालिं कमलपङ्क्तिम् । जनितश्चासावुपप्लवश्च । उपद्रवश्चेत्यर्थः । धावं धावं धावित्वा धावित्वा । **कथमिति** । वस्तुध्वनित्वस्यैवौचित्यादिति भावः । तस्य चिन्ताभावरूपवस्तुनः । उपयोगिता पोषकता । विधिर्दैवम् । इयं तु शङ्का । तुरेवार्थे । सुषमा शोभाविशेषः । श्रमस्तदाख्यो भावः । **कारणेति** । तच्च स्फुटीभविष्यति । **लक्षणेति** ।

१ ननु चिन्ता मे नास्तीति वस्तु ध्वन्यते, ततो वस्तुध्वनिः सोयमिति शङ्का । सोयं ध्वनिर्धृतिभावं पोषयतीति धृतिध्वनित्वेनैव व्यपदेश इति समाधानम् ।

चित्तवृत्त्यात्मकेषु भावेषु नाशरूपाया ग्लानेः कथं समावेश इति ध्येयम् । यद्यपि 'बलस्यापचयो ग्लानिराधिव्याधिसमुद्भवः ।' इति लक्षणवाक्यादपचयशब्देन नाश एव प्रतीयते, तथापि प्रागुक्तानुपपत्त्या बलनाशजन्यं दुःखमेव बलापचयशब्देन विवक्षितम् ।

दुःखदारिद्र्यापराधादिजनितः स्वापकर्षभाषणादिहेतुश्चित्तवृत्तिविशेषो दैन्यम् ॥

उदाहरणम्—

'हतकेन मया वनान्तरे वनजाक्षी सहसा विवासिता ।
अधुना मम कुत्र सा सती पतितस्येव परा सरस्वती ॥'

सीतां परित्यक्तवतो भगवतः श्रीरामभद्रस्येयमुक्तिः । अत्र सीतापरित्यागरूपोऽपराधस्तज्जन्यं दुःखं वा विभावः । पतितसाम्यरूपस्वापकर्षभाषणमनुभावः ।

यदाहुः—

'चित्तौत्सुक्यान्मनस्तापाद्दौर्गत्याच्च विभावतः ।
अनुभावात्तु शिरसोऽभ्यावृत्तेर्गात्रगौरवात् ॥
देहोपस्करणत्यागाद्दैन्यं भावं विभावयेत् ॥' इति ।
'दौर्गत्यादेरनौजस्यं दैन्यं मलिनतादिकृत् ।' इति च ।

अत्र हतकेन मया विवासिता न तु विधिनेत्येतस्यार्थस्य पतितोपमयैव परिपोषः, न तु शूद्राद्युपमया । यतः शूद्रस्य जात्यैव श्रुतिदौर्लभ्यं विधिना कृतम् । पतितस्य तु ब्राह्मणादेर्विधिना श्रुतिसुलभत्वे स्वभावेन

मन्युक्तेत्यादिः । अनुपपत्तिरसमावेशरूपा । **विवक्षितमिति** । एवं तु क्वचिद्ग्रन्थोऽपि सुयोज इति भावः । हतकेन हतसदृशेन । भाग्यरहितेनेति यावत् । वनजाक्षी जलजाक्षी । सहसा कारणं विनैव । परा उत्कृष्टा सरस्वती । श्रुतिरित्यर्थः । विनिगमकाभावादाह—**तज्जन्यमिति** । चित्तौत्सुक्यादिरूपविभावत्रयतः, शिरसोऽभ्या(भ्या)वृत्त्यादिरूपानुभावत्रयतो दैन्यं भावं जानीयादित्यर्थः । वचनान्तरमाह—**दौर्गत्यादेरिति** । अनौजस्यमोजोगुणाभावः । सर्वं वाक्यं सावधारणमिति न्यायलभ्यमर्थमाह—**न तु विधिनेति** । जात्यैव स्वभावेनैव । तेनैव पतितेनैव । तथाविधं पातित्यजनकम् ।

१ अर्थात् अभावरूपायाः ।

२ अभ्यावृत्तिर्भ्रमणम् ।

कृतेऽपि तेनैव तथाविधं पापमाचरता स्वतः श्रुतिर्दूरीकृतेति तस्य पतितेन साम्यम्, तस्याश्च श्रुत्येत्युपमालंकारो दैन्यमेवालंकुरुते । तथा मयेति सेति चोपादानलक्षणामूलध्वनिभ्यां कृतघ्नत्वकृतज्ञात्वनिर्दयत्वदयावतीत्वाद्यनेकधर्मप्रकाशनद्वारा तदेव परिपोष्यते, सेति स्मृत्या च लेशतः प्रतीयमानया ।

**इष्टाप्राप्त्यनिष्टप्राप्त्यादिजनिता ध्यानापरपर्याया वैवर्ण्यभूलेखनाधोमुखत्वादिहेतुश्चित्तवृत्तिविशेषश्चिन्ता ॥**

यदाहुः—

'विभावा यत्र दारिद्र्यमैश्वर्यभ्रंशनं तथा ।
इष्टार्थापहृतिः शश्वच्छ्वासोच्छ्वासावधोमुखम् ॥
संतापः स्मरणं चैव कार्श्यं देहानुपस्कृतिः ।
अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्तिता ॥
वितर्कोऽस्याः क्षणे पूर्वे पाश्चात्त्ये वोपजायते ॥' इति ।
'ध्यानं चिन्ता हितानाप्तेः संतापादिकरी मता ।' इति च ।

उदाहरणम्—

'अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी ।
अकृत[1]प्रतिमा तनुः कृता विधिना कस्य कृते मृगीदृशः ॥'

---

तस्य रामस्य । तस्याः सीतायाः । साम्यमित्यस्यानुषङ्गः । **एवालमिति** । अलंकुरुत एवेत्यर्थः । न तु स्वयं प्रधानं येन गुणीभूतव्यङ्ग्यत्वापत्तिरिति भावः । **उपादानलक्षणामूलध्वनिभ्यामिति** । स्वार्थमुपादायेतरार्थलक्षणमुपादानलक्षणा । लक्ष्यतावच्छेदकं चातिक्लेशे तदत्यक्तत्वं मत्पदस्य । वनवाससखीत्वमित्यादि च तत्पदस्य । व्यङ्ग्यार्थमाह— **कृतघ्नत्वेत्यादि** । यथाक्रममन्वयः । **तदेवेति** । दैन्यं परिपोष्यत एवेत्यर्थः । न तु प्राधान्यं येन दैन्यध्वनित्वोच्छेद इति भावः । **सेतीति** । यतस्तेन तद्धर्मप्रकाशोऽतो लेशतोऽशतः प्रतीयमानया सेति स्मृत्या च दैन्यं परिपोष्यत एवेत्यस्यानुषङ्गः । न तु प्राधान्यं येन स्मृतिध्वनित्वं स्यात्, न दैन्यध्वनित्वमिति भावः । यत्र चिन्तायाम् । अथ विभावकथनानन्तरम् । 'अस्याः' इति पाठे चिन्ताया इत्यर्थः । एवमग्रेऽपि । तथा चेतः प्राक्तनाविर्भावः । अस्या इत्यस्यानुभावा इत्यनेनान्वयात् । देहानुपस्कृतिर्देहाप्रसाधनम् । वितर्को वक्ष्यमाणस्वरूपः । अस्तपल्लवेति पञ्चम्यर्थे बहुव्रीहिः । पल्लवपदेन तच्छोभा । **अकृतप्रतिमेति** । उपमानमित्यर्थः । कृता मृगीदृश इत्यनयोः सर्वत्र

---

१ न कृता प्रतिमा ( उपमानम् ) यस्याः । निरुपमा ।

अत्र तदप्राप्तिर्विभावः। अनुतापादय आक्षेप्या अनुभावाः। न चात्रौत्सुक्यध्वनिरिति वाच्यम्। कस्य कृत इत्यनिर्धारितधर्म्यालम्बनायाश्चिन्ताया एव प्रतीयमानतया सतोऽप्यौत्सुक्यस्यैतद्वाक्येन प्राधान्येनाऽबोधनात्।

**मद्याद्युपयोगजन्मा उल्लासाख्यः शयनहसितादिहेतुश्चित्तवृत्तिविशेषो मदः ॥**

यदाहुः—'संमोहानन्दसंदोहो मदो मद्योपयोगजः।' इति। तत्रोत्तमे पुरुषे स्वापोऽनुभावः। मध्यमे हसितगाने। नीचे तु रोदनपरुषोक्त्यादि। अयं च मदस्त्रिविधः, तरुणमध्यमाधमभेदात्। अव्यक्तासंगतवाक्यैः सुकुमारस्खलद्गत्या च योऽभिनीयते स आद्यः। भुजाक्षेपस्खलितघूर्णितादिभिर्मध्यमः। गतिभङ्गस्मृतिनाशहिक्काच्छर्द्यादिभिरधमः।

उदाहरणम्—

'मधुरतरं स्मयमानः स्वस्मिन्नेवालपञ्शनैः किमपि।
कोकनदयंस्त्रिलोकीमालम्बनशून्यमीक्षते क्षीवः ॥'

अत्र मादकद्रव्यसेवनं विभावः। अव्यक्तालापाद्यनुभावः। अत्र मत्तस्वभाववर्णनस्य तन्निष्ठमदव्यञ्जनार्थत्वान्मदभाव एव प्रधानमिति न स्वभावोक्त्यलंकारस्य प्राधान्यम्, अपि तु तद्ध्वन्युपस्कारकत्वमेव।

संबन्धः। तदप्राप्तिस्तादृशनायिकाऽप्राप्तिः। प्रतीयेत्यस्य द्राक्प्राधान्येनेत्यादिः। उपयोगः प्राशनम्। **संमोहेति**। अनयोः समूहो यत्रेत्यर्थः। तत्र शयनादीनां मध्ये। **उत्तमे पुरुषे इति**। 'उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः। परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥' इति प्रदीपविरुद्धमेतत्। **अव्यक्तेति**। अस्पष्टाक्षरासंबद्धवाक्यैरित्यर्थः। सुकुमारेति कर्मधारयद्वयम्। शनैरित्यनेनाव्यक्तत्वम्, किमपीत्यनेनासंगतत्वम्। त्रिलोकीं कोकनदयन्। आलम्बनेति क्रियाविशेषणम्। **तन्निष्ठेति**। मत्तनिष्ठेत्यर्थः। **तद्ध्वन्युपेति**। मदभावध्वन्युपेत्यर्थः। ननु क्षीवपदेन विशेषणविधया वाच्यस्य मदस्य कथं ध्वनितास्पदत्वम्, कथमपि वाच्यवृत्त्यनालिङ्गितस्यैव व्यङ्ग्यस्य चमत्कारित्वमिति स्वयमेव प्रागावेदनात्। एवं च स्वभावोक्त्यलंकार एवायमत आह—

१ रक्तकमलायिताम् (अरुणनेत्रकान्त्यारक्ताम्) कुर्वन्।

इदं वा पुनरुदाहरणम्—

'मधुर[1]सान्मधुरं हि तवाधरं तरुणि मद्वदने विनिवेशय ।
मम गृहाण करेण कराम्बुजं पपपतामि हहा भभभूतले ॥'

अत्रापि स एव विभावः । अधिकवर्णोच्चारणादिरनुभावः । पूर्वार्धगता ग्राम्योक्तिरुत्तरार्धे च तरुणीकरेऽम्बुजोपमेयतया निरूपणीये स्वकरस्य तदुपमेयतया निरूपणं च मदमेव पोषयतः ।

**बहुतरशारीरव्यापारजन्मा निःश्वासाङ्गसंमर्दनिद्रादिकारणीभूतः खेदविशेषः श्रमः ॥**

यदाहुः

'अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः
गात्रसंवाहनैरास्यसंकोचैरङ्गमोटनैः ॥
निःश्वासैर्जृम्भितैर्मन्दैः पादोत्क्षेपैः श्रमो मतः ॥' इति ।
'श्रमः खेदोऽध्वगत्यादेर्निद्राश्वासादिकृन्मतः ।' इति च ।

अयं च सत्यपि बले जायते, शारीरव्यापारादेव च जायते, न तु ग्लानिः । अतो ग्लानेः श्रमस्य भेदः ।

उदाहरणम्—

'विधाय सा मद्वदनानुकूलं कपोलमूलं हृदये शयाना ।
चिराय चित्रे लिखितेव तन्वी न स्पन्दितुं मन्दमपि क्षमासीत् ॥'

अत्र विपरीतसुरतरूपः शारीरव्यापारो विभावः । स्पन्दराहित्यशयनादयोऽनुभावाः । न चात्र निद्राभावध्वननेन गतार्थतेति शङ्क्यम् । सुषुप्तौ हि ज्ञानराहित्येनैव यत्नराहित्यान्मन्दमपि स्पन्दितुं न क्षमासीदित्य-

**इदं वा पुनरिति** । हि यतो मधुरसान्मधुरं तव स्वस्य । स एव मादकद्रव्यसेवनरूपः प्रागुक्त एवेत्यर्थः । **अधिकेति** । पपहहाभमेत्यर्थः । निरूपणं चेत्यस्योभे इति शेषः । अध्वेति त्रयाणां द्वन्द्वगर्भो बहुव्रीहिः । अनुभावकैरित्यस्याग्रेतनैरन्वयः । संवाहनं सेवनम् । मोटनं मोडनमिति भाषाप्रसिद्धम् । मन्दैरित्युत्तरान्वयि । **अतो ग्लानेरिति** । उक्तहेतुद्वयाद्ग्लानेः सकाशादित्यर्थः । दृष्टान्तेन सुषुप्तेरेव लाभः, न तु स्वप्नस्येत्याशयेनाह— **सुषुप्तौ हीति** । **नैवेति** । यत्नं प्रति तस्य कारणत्वादिति भावः । ननु स्पष्टार्थमेव

१ मधुनो रसात् ।

स्यानतिप्रयोजनकत्वापत्तेः, शीङाभिहिततया तस्या व्यङ्ग्यत्वानुपपत्तेश्च । श्रमे त्वानुगुण्यमुचितम् ।

**रूपधनविद्यादिप्रयुक्तात्मोत्कर्षज्ञानाधीनपरावहेलनं गर्वः ॥**

उदाहरणम्—

'आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ॥'

अत्र स्वकीयकविताया अनन्यसाधारणताज्ञानं विभावः । पराधिक्षेपपरैतादृशवाक्यप्रयोगोऽनुभावः । इमं चासूयापि लेशतः पुष्णाति । उत्साहप्रधानो गूढगर्वो हि वीररसध्वनिः, अयं तु गर्वप्रधान इति तस्मादस्य विशेषः । तथा हि वीररसप्रसङ्गे प्रागुदाहृते 'यदि वक्ति—' इत्यादि पद्ये गीष्पतिना गिरामधिदेवतयापि साकमहं वदिष्यामीति वचनेनाभिव्यक्तस्योत्साहस्य परिपोषकतया स्थितः सर्वेभ्यः पण्डितेभ्योऽहमधिक इति गर्वः, न तु प्रकृतपद्य इव नास्त्येव महीतले मदन्य इति स्फुटोदितेन सोल्लुण्ठवचनेनानुभावेन प्राधान्येन प्रतीयमानः ।

**श्रमादिप्रयोज्यं चेतःसंमीलनं निद्रा ॥**

नेत्रनिमीलनगात्रनिष्क्रियत्वादयोऽस्या अनुभावाः ।

उदाहरणम्—

'सा मदागमनबृंहिततोषा जागरेण गमिताखिलदोषा ।
बोधितापि बुबुधे मधुपैर्न प्रातराननजसौरभलुब्धैः ॥'

रात्रिजागरणश्रमोऽत्र विभावः । मधुपैर्बोधाभावोऽनुभावः ।

**शास्त्रादिविचारजन्यमर्थनिर्धारणं मतिः ॥**

अत्र निःशङ्कतदर्थानुष्ठानसंशयोच्छेदादयोऽनुभावाः ।

---

तदस्तु अत आह—**शीङेति** । प्रकारतयेति भावः । तस्या निद्रायाः । रत्नसानुः सुमेरुः । मृद्वीका द्राक्षा । निर्यन्निःसरन् । झरी प्रवाहः । तस्माद्वीररसध्वनेः । मदन्य इतीति गर्वाकारः । सोल्लुण्ठं साभिप्रायम् । वचनेन आ मूलादित्यादि मदन्य इत्यन्तेन ।

---

१ 'यदि वक्ति' इत्यादिपद्ये उत्साहस्य परिपोषकतया अङ्गभावेन स्थितो गर्वः 'आमूलात्' इति पद्यवत् प्राधान्येन प्रतीयमानो नास्तीति भावः ।

उदाहरणम्—

'निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् ।
अथ तस्य कृते कियानयं क्रियते हन्त मया परिश्रमः ॥'

'शरीरमेतज्जलबुद्बुदोपमं—' इत्यादिशास्त्रपर्यालोचनमत्र विभावः । हन्तपदगम्या स्वनिन्दा राजसेवादिविरतिर्वितृष्णता चानुभावः । झगिति मतेरेव चमत्काराद्ध्वनिव्यपदेशहेतुता, न शान्तस्य । विलम्बेन प्रतीतेः ।

**रोगविरहादिप्रभवो मनस्तापो व्याधिः ॥**

गात्रशैथिल्यश्वासादयोऽत्रानुभावाः ।

यदाहुः—

'एकैकशो द्वन्द्वशो वा त्रयाणां वा प्रकोपतः ।
वातपित्तकफानां स्युर्व्याधयो ये ज्वरादयः ।
इह तत्प्रभवो भावो व्याधिरित्यभिधीयते ॥'

उदाहरणम्—

'हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती ।
तदुदन्तपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥'

विरहोऽत्र विभावः । अङ्गक्षेपादिरनुभावः ।

**भीरोर्घोरसत्त्वदर्शनस्फूर्जथुश्रवणादिजन्मा चित्तवृत्तिविशेषस्त्रासः ॥**

अनुभावाश्चास्य रोमाञ्चकम्पस्तम्भभ्रमादयः ।

यदाहुः—

'औत्पातिकैर्मनःक्षेपस्त्रासः कम्पादिकारकः ।'

उदाहरणम्—

'आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती ।
आरादुपाकर्ण्य गिरं मदीयां सौदामिनीयां सुषमामयासीत् ॥

---

दोषा रात्रिः । **ये ज्वरादय इति** । लोके इति शेषः । इह शास्त्रे । तत्प्रभवो ज्वरादिप्रभवः । **तदुदन्तेति** । नायकोदन्तेत्यर्थः । मुखे इत्येकवचनेनैकवार्तैव सर्वाभिरुच्यत इति ध्वनितम् । तदलाभाद्दैन्यं दृष्टौ । भीरोर्भयशीलस्य । सत्त्वं प्राणी । स्फूर्जथुर्वज्रनिर्घोषः । औत्पातिकैरुत्पातसूचकैर्घोरसत्त्वदर्शनादिभिः । मनःक्षेपश्चित्तवृत्तिविशेषः । केलीरभसेन क्रीडारभस्येन । नायकोक्तिरियम् । आराद्दूरम् । ततोऽचिरस्थायित्वेन विद्युच्छो-

अत्र पत्या स्ववचनाकर्णनं विभावः। पलायनमनुभावः। न चात्र लज्जाया व्यङ्ग्यत्वमाशङ्कनीयम्। शैशवेनैव तस्या निरासात्।

इदं वा विविक्तमुदाहरणम्—

'मा कुरु कशां कराब्जे करुणावति कम्पते मम स्वान्तम्।
खेलन्न जातु गोपैरम्ब विलम्बं करिष्यामि॥'

एषा भगवतो लीलागोपकिशोरस्योक्तिः।

**निद्राविभावोत्थज्ञानं सुप्तम्॥**

स्वप्न इति यावत्। अस्यानुभावः प्रलापादिः। नेत्रनिमीलनादयस्तु निद्राया एवानुभावा न त्वस्य, अनिदंजन्यत्वात्। यत्तु प्राचीनैः 'अस्यानुभावा निभृतगात्रनेत्रनिमीलनं—' इत्याद्युक्तं तदन्यथासिद्धानामपि तेषामेतद्भावव्यापकत्वादिति ध्येयम्।

उदाहरणम्—

'अकरुण मृषाभाषासिन्धो विमुञ्च ममाञ्चलं
तव परिचितः स्नेहः सम्यङ्मयेत्यनुभाषिणीम्।
अविरलगलद्बाष्पां तन्वीं निरस्तविभूषणां
क इह भवतीं भद्रे निद्रे विना विनिवेदयेत्॥'

एषा प्रवासगतस्य स्वप्नेऽपि प्रियामेवंभाषिणीं दृष्टवतो निद्रां प्रति कस्यचिदुक्तिः। यद्यप्येवंभूतायाः प्रियतमावस्थाया निवेदनेन निद्रे मम भवत्या महानुपकारः कृत इति वस्तु, विप्रलम्भशृङ्गारश्चात्र प्रतीतिपथ-

भालाभः। पत्या तत्कर्तृकम्। 'शब्दानुशासनमाचार्येण' इतिवत्प्रयोगः। **शैशवेनैवेति**। बालपदबोध्येनेत्यर्थः। तस्या लज्जायाः। एवं च मूले कुठाराघ तदाशङ्केति भावः। ननु बालपदं न शैशवबोधकम्, किं तु विशेषबोधकमत आह—**इदं वेति**। कशां ताडनरज्जुम्। वस्तुतस्तत्त्वाभावादाह—**लीलेति**। **अनिदंजन्यत्वादिति**। एतज्जन्यत्वाभावादित्यर्थः। स्वप्नजन्यत्वाभावादिति यावत्। **अन्यथेति**। निद्रयेत्यर्थः। **एतदिति**। स्वप्नेत्यर्थः। **मृषेति**। मिथ्याभाषिन्। इह प्रवासे। **प्रियतमेति**। नायि-

१ शिशुतया लज्जा स्वतो निरस्ता, अतो लज्जाया व्यङ्ग्यत्वं नाशङ्कनीयम्। शिशूनामेवंविधे स्थले त्रासो भवति न लज्जेत्याशयः।

२ निद्रायां संभवन्तस्ते सुप्तमपि व्याप्नुवन्ति (स्वप्नमप्यधिकुर्वन्ति) इति सुप्त-भावेऽपि नेत्रनिमीलनादयः प्रोक्ता इत्याशयः।

मवतरति, तथापि पुरःस्फूर्तिकतया स्वप्नध्वननमत्रोदाहृतं न प्रान्ते तयोर्ध्वननं निरोद्धुमीष्टे ।

**निद्रानाशोत्तरं जायमानो बोधो विबोधः ॥**

निद्रानाशश्च तत्पूर्ति-स्वप्नान्त-बलवच्छब्द-स्पर्शादिभिर्जायत इति त एवात्र विभावाः । अक्षिमर्दनगात्रमर्दनादयोऽनुभावाः ।

तत्र संक्षेपेणोदाहृणम्—

'नितरां हितयाद्य निद्रया मे बत यामे चरमे निवेदितायाः ।
सुदृशो वचनं शृणोमि यावन्मयि तावत्प्रचुकोप वारिवाहः ॥'

अत्र गर्जितश्रवणं विभावः । प्रियावचनश्रवणोल्लासनाशोऽनुभावस्तून्नेयः । केचिदविद्याध्वंसजन्यमप्यमुमामनन्ति । तेषां मते

'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥'

इति गीतापद्यमुदाहार्यम् । न तु वारिवाहविषयाया असूयाया एवात्र वाक्यार्थतेति शङ्क्यम् । विबोधप्रतीतौ हि सत्यां तस्मिन्ननौचित्यावगमे सत्यनुचितविबोधजनकत्वेन वारिवाहेऽसूयाया विलम्बेन प्रतीतेः, परमुखनिरीक्षकत्वात् । स्यादपि तस्या अपि प्राधान्यम्, यदि वारिवाहे निष्करुणत्वादिबोधकं किंचिदपि स्यात् । नापि स्वप्नस्य, वारिवाहनादेन तन्नाशस्यैव प्रतिपत्तेः । अस्तु वा स्वप्नभावप्रशमेनासूयया च सहास्य संकरः ।

केत्यर्थः । **अत्रोदाहृतमिति** । अस्यापि वाच्यातिशायित्वादेतद्ध्वनिव्यवहारोऽपि । तथ च सांकर्यमिति भावः । तत्पूर्तिर्निद्रापूर्तिः । वारिवाहो मेघः । अमुं विबोधम् । सिंहावलोकनन्यायेनासूयाध्वनित्वं निराचष्टे—**न त्विति** । हि यतः । तस्मिन्विबोधे । तस्या अप्यसूयाया अपि । स्वप्नस्य वाक्यार्थतेति शङ्क्यमित्यस्यानुषङ्गः । जलाहरणकर्तृत्वेन बोधकवारिवाहशब्दस्य सत्त्वात्, अत आह—**अस्तु वा स्वप्नभावेति** । इदं वक्ष्यमाणम् । सकलां यामिनीमभिव्याप्य सहस्थितवर्तीं निद्रां गाढमालिङ्ग्याथ च प्रातस्तां विहाय स

१ पर्यन्ते यदि वस्तु-विप्रलम्भध्वनी अपि स्फुरतश्चेत्तावपि भवत एवेत्याशयः ।

२ विबोधोत्तरं जायमानतया तदधीनत्वमित्याशयः ।

इदं तु नोदाहार्यम्—

'गाढमालिङ्ग्य सकलां यामिनीं सह तस्थुषीम्।
निद्रां विहाय स प्रातरालिलिङ्गाथ चेतनाम्॥'

विबोधस्य चेतनापदवाच्यत्वात्। यथा कश्चित्सत्यप्रतिज्ञो द्वाभ्यां नायिकाभ्यां द्वौ कालावुपभोगार्थं दत्त्वा यथोचिते काल एकामुपभुज्य कालान्तरे प्रवृत्ते तां विहायापरां भुङ्क्ते, तथैवायं रात्रौ निद्राम्, प्रातश्चेतनामिति समासोक्तेरेवेह प्रकाशनात्।

**परकृतावज्ञादिनानापराधजन्यो मौनवाक्पारुष्यादिकारणीभूतश्चित्तवृत्तिविशेषोऽमर्षः॥**

प्राग्वत्कारणानां कार्याणां च क्रमेण विभावानुभावत्वम्।

उदाहरणम्—

'वक्षोजाग्रं पाणिनामृश्य दूरे यातस्य द्रागाननाब्जं प्रियस्य।
शोणाग्राभ्यां भामिनी लोचनाभ्यां जोषं जोषं जोषमेवावतस्थे॥'

इह त्वाकस्मिकस्तनाग्रस्पर्शो विभावः। नयनारुण्यनिर्निमेषनिरीक्षणे अनुभावौ। ननु क्रोधामर्षयोः स्थायिसंचारिणोर्भावयोः किं भेदकमिति चेत्, विषयतावैलक्षण्यमेवेति गृहाण। तत्र तु गमकं झटिति परविनाशादौ प्रवृत्तिर्वचनवैमुख्यादिकं चेति कार्यवैलक्षण्यम्।

---

चेतनामालिलिङ्गेत्यन्वयः। नन्वेवं विबोधभावध्वनिलाभावेऽपि कस्येदमुदाहरणम्, अत आह—**यथेत्यादि**। प्राग्वद्विबोधवत्। कारणानां परकृतावज्ञादीनाम्। कार्याणां मौनादीनाम्। आमृश्य संस्पृश्य। **जोषं जोषमिति**। निर्निमेषं दृष्ट्वा दृष्ट्वेत्यर्थः। जोषमेव तूष्णीमेव। भामिनी कर्त्री। अत्रादिसंप्राह्यविभावानुभावयोः सत्त्वमित्याह—**इहेति**। इदं च निर्निमेषनिरीक्षणं सेवार्थकजुषा णमुला च गम्यं तदाह—**निर्निमेषेति**। इदमुपलक्षणम्। मौनमप्यनुभावो बोध्यः। **किं भेदकमिति**। उक्तकारणकार्ययोस्त्वैक्यमेवेति भावः। तत्र तु विषयतावैलक्षण्ये तु। **कार्येति**। क्रोधामर्षयोर्य-

---

१ द्वयोरन्यथा भिन्ना भवन्तीति।

२ उत्कटावस्थापन्नो भावः क्रोधः, कोमलावस्थापन्नोऽमर्ष इति तात्पर्यम्।

**व्रीडादिभिर्निमित्तैर्हर्षाद्यनुभावानां गोपनाय जनितो भावविशेषोऽवहित्थम् ॥**

तदुक्तम्—

'अनुभावपिधानार्थेऽवहित्थं भाव उच्यते ।
तद्विभाव्यं भयव्रीडाधार्ष्ट्यकौटिल्यगौरवैः ॥'

यथा—

'प्रसङ्गे गोपानां गुरुषु महिमानं यदुपते-
रुपाकर्ण्य स्विद्यत्पुलकितकपोला कुलवधूः ।
विषज्वालाजालं झगिति वमतः पन्नगपतेः
फणायां साश्चर्यं कथयतितरां ताण्डवविधिम् ॥'

अत्र व्रीडा विभावः । तादृशकालियकथाप्रसङ्गोऽनुभावः । एवं भयादिप्रयोज्यमप्युदाहार्यम् ।

**अधिक्षेपापमानादिप्रभवा किमस्य करोमीत्याद्याकारा चित्तवृत्तिरुग्रता ॥**

यदाहुः—

'नृपापराधोऽसद्दोषकीर्तनं चोरधारणम् ।
विभावाः स्युरथो बन्धो वधस्ताडनभर्त्सने ॥
एते यत्रानुभावास्तदौग्र्यं निर्दयतात्मकम् ॥' इति ।

यथा—

'अवाप्य भङ्गं खलु सङ्गराङ्गणे नितान्तमङ्गाधिपतेरमङ्गलम् ।
परप्रभावं मम गाण्डिवं धनुर्विनिन्दतस्ते हृदयं न कम्पते ॥'

---

धाक्रममित्यादिः । **हर्षाद्यनुभावानामिति** । हर्षादिजन्यानुभावानामित्यर्थः । भावविशेषोऽभिप्रायविशेषः । अनुभावेत्यस्य हर्षादिजन्येत्यादिः । तदवहित्थम् । भयादिभिर्विभाव्यं जन्यमित्यर्थः । गुरुषु तत्समीपे । गोपानां प्रसङ्गे इत्याद्यन्वयः । पन्नगपतेः कालियस्य । साश्चर्यमाश्चर्येण सहितम् । ताण्डवविधिं यदुपतेरिति भावः । **तादृशेति** । विषवमनकर्त्रित्यर्थः । **असदिति** । अविद्यमानदोषकथनमित्यर्थः । अङ्गाधिपतेः कर्णात् ।

१ पूर्वार्धोक्तौ स्वेद-रोमाञ्चौ प्रेमजनितौ न, अपि तु पराक्रमवर्णनजन्याविति प्रकटनेन भावगुप्तिः ।

२ अङ्गाधिपतेः सकाशात् अमङ्गलं भङ्गमवाप्येत्यन्वयः ।

एषा कर्णेन पराभूतं गाण्डिवं निन्दन्तं युधिष्ठिरं प्रति धनंजयस्योक्तिः। युधिष्ठिरकर्तृका गाण्डिवनिन्दात्र विभावः। वधेच्छानुभावः। न चामर्षोग्रतयोर्नास्ति भेद इति वाच्यम्। प्रागुदाहृतेऽमर्षध्वनावुग्रताया अप्रतीतेः। नाप्यसौ क्रोधः। तस्य स्थायित्वेनास्याः संचारिणीत्वेनैव भेदात्।

**विप्रलम्भमहापत्तिपरमानन्दादिजन्माऽन्यस्मिन्नन्यावभास उन्मादः॥**

शुक्तिरजतादिज्ञानव्यावृत्तये जन्मान्तम्।

उदाहरणम्—

'अकरुणहृदय प्रियतम मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥'

एषा प्रवासगतं स्वनायिकावृत्तान्तं पृच्छन्तं नायकं प्रति कस्याश्चित्संदेशहारिण्या उक्तिः। प्रियविरहोऽत्र विभावः। असंबद्धोक्तिरनुभावः। उन्मादस्य व्याधावन्तर्भावे संभवत्यपि पृथगुपादानं व्याध्यन्तरापेक्षया वैचित्र्यविशेषस्फोरणाय।

**रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम्॥**

न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुम्। चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः। भावेषु च सर्वेषु कार्यसहवर्तितया शरीरप्राणसंयोगस्य हेतुत्वात्।

उदाहरणम्—

'दयितस्य गुणाननुस्मरन्ती शयने संप्रति या विलोकितासीत्।
अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषितापि॥'

प्रियविरहोऽत्र विभावः। वचनविरामोऽनुभावः। हन्तपदस्यात्रात्य-

---

**परेति**। उत्कृष्टेत्यर्थः। पराभूतमिति युधिष्ठिरविशेषणम्। **न चामर्षोग्रेति**। कारणाधिक्यादिति भावः। **अप्रतीतेरिति**। अस्यां वधादीच्छापि न तस्मिन्नित्यनुभावभेदादिति भावः। असावुग्रता। **भेदादिति**। गुरुबन्धुवधादिजन्यः, स्थायी, वागपराधादिजन्यः संचारीति भेद इत्यपरे। **व्यावृत्तय इति**। ज्ञानस्योन्मादत्वव्यावृत्तय इत्यर्थः। **तस्याप्रसक्तेरिति**। मुख्यमरणस्यान्तर्भावासंभवादित्यर्थः। तत्र हेतुमाह—**भावेषु चेति**। अङ्गीकुरुते न। न प्रतिवदतीत्यर्थः। अत्र मरणे हन्तपदस्य दुःखातिशयबोध-

न्तमुपकारकत्वाद्वाक्यव्यङ्ग्योऽप्ययं भावः पदव्यङ्ग्यतामावहति । एतेन भावस्य पदव्यङ्ग्यतायां नात्यन्तं वैचित्र्यमिति परास्तम् । दयितस्य गुणाननुस्मरन्तीत्यनेन व्यज्यमानं 'चरमावस्थायामपि तस्या दयितगुणविस्मरणं नाभूदिति' वस्तु विप्रलम्भस्य शोकस्य वा चरममभिव्यक्तस्य पोषकम् । अयं च भावः स्वव्यञ्जकवाक्योत्तरवर्तिना वाक्यान्तरेण संदर्भघटकेन नायिकादेः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति विवेकः । कवयः पुनरमुं प्राधान्येन न वर्णयन्ति, अमङ्गलप्रायत्वात् ।

**संदेहाद्यनन्तरं जायमान ऊहो वितर्कः ॥**

स च निश्चयानुकूलः ।

'यदि सा मिथिलेन्द्रनन्दिनी नितरामेव न विद्यते भुवि ।
अथ मे कथमस्ति जीवितं न विनालम्बनमाश्रितस्थितिः ॥'

स्वात्मनि भगवतो रामस्यैषोक्तिः । भुवि सीतास्ति न वेति संदेहोऽत्र विभावः । भ्रूक्षेपशिरोङ्गुलिनर्तनमाक्षिप्तमनुभावः । न चासौ चिन्तेति शक्यं वदितुम्, चिन्ताया नियमेन निश्चयं प्रत्यप्रयोजकत्वात्[1] । किं भविष्यति कथं भविष्यतीत्याद्याकारायाश्चिन्तायाः, इदमित्थं भवितुमर्हति प्रायश इत्याकारस्य वितर्कस्य, विषयवैलक्षण्योपलम्भाच्च । न विनेत्यादिनोक्तोऽर्थान्तरन्यासोऽप्यस्मिन्नेवानुकूले[2] ।

---

कलादिति भावः । प्रकृतेऽनुपदं वक्ष्यमाणरीत्या विप्रलम्भासंभवादाह—**शोकेति** । करुणस्थायिभावस्येत्यर्थः । अस्य पुरोऽनभिव्यक्तेराह—**चरममिति** । अत एवैतद्ध्वनित्वम् । तदेवाह—**अयं चेति** । नन्वस्य प्रधानोदाहरणं कुतो न दत्तमत आह—**कवय इति** । पुनःशब्दो हिशब्दार्थे । आदिना विपर्ययपरिग्रहः । आलम्बनमाधारभूतम् । ननु नियमे तदभावेऽपि लक्षणे तदनिवेशात्प्रकृते तत्संभव एवात आह—**किं भविष्यतीति** । ननु न विनेत्यादिनार्थान्तरन्यासस्य प्रतीतेः कथं ध्वनित्वमत आह—**न विने-**

---

१ चिन्तायामन्ते नियमेन निश्चयः स्यादिति नास्ति । अयं तु निश्चयानुकूलः ।

२ अर्थान्तरन्यासः ( आधारं विना आधेयस्थितिर्नेति ) निश्चयानुकूलस्य वितर्कस्यैव अनुरूपो न तु चिन्तायाः । तथा च सोयं भावपोषकतया अङ्गं न तु प्रधानमिति नालंकारप्राधान्यम् ।

**इष्टासिद्धिराजगुर्वाद्यपराधादिजन्योऽनुतापो विषादः ॥**

उदाहरणम्—

'भास्करसूनावस्तं याते जाते च पाण्डवोत्कर्षे।
दुर्योधनस्य जीवित कथमिव नाद्यापि निर्यासि ॥'

अत्र स्वापकर्षपरोत्कर्षयोर्दर्शनं विभावः। जीवितनिर्याणाशंसा, तदाक्षिप्तं वदननमनादि चानुभावः। अस्मिन्नेव च विषादध्वनौ दुर्योधनस्येत्यर्थान्तरसंक्रमितवाच्यध्वनिरनुग्राहकः। न चात्र त्रासभावध्वनित्वं शङ्क्यम्, परवीरस्य दुर्योधनस्य त्रासलेशस्याप्ययोगात्। नापि चिन्ताध्वनित्वम्, युद्धा मरिष्यामीति तस्य व्यवसायात्। नापि दैन्यध्वनित्वम्, सकलसैन्यक्षयेऽपि विपदस्तेनागणनात्। न वा वीररसध्वनित्वम्, मरणस्य शरणीकरणे परापकर्षजीवितस्योत्साहस्याभावात्।

इदं पुनरत्र नोदाहार्यम्—

'अयि पवनरयाणां निर्दयानां हयानां
श्लथय गतिमहं नो संगरं द्रष्टुमीहे।
श्रुतिविवरममी मे दारयन्ति प्रकुप्य-
द्भुजगनिभभुजानां बाहुजानां निनादाः ॥'

अत्र त्रासस्यैव प्रतीयमानत्वेन विषादस्याप्रतीतेः। लेशतया प्रतीतौ वा त्रास एवानुगुण्यौचित्येन ध्वनिव्यपदेशायोग्यत्वात्।

**अधुनैवास्य लाभो ममास्त्वितीच्छा औत्सुक्यम् ॥**

---

**स्यादीति**। सामान्येन विशेषसमर्थनमत्र बोध्यम्। भास्करसूनौ कर्णे। दुर्योधनस्य जीवितेति संबुद्धिः। हे वीरेत्यर्थः। इवशब्दो वाक्यालंकारे। निर्यासि गच्छसि। विषादध्वनित्वं द्रढयति—**अस्मिन्नेवेति**। **वाच्यध्वनिरिति**। लक्ष्यतावच्छेदकं च कर्णदर्शनावधिजीवितम्, एकादशाक्षौहिणीपतिवन्त्यत्वम्, प्रतापेनागणितपाण्डवतेजस्त्वम्, पाण्डवानां वनवासादिदातृत्वं वा, अतिदुःखितं व्यङ्ग्यम्। **परेति**। उत्कृष्टेत्यर्थः। **युद्धेति**। तथा च किं भविष्यतीत्याद्याकारायास्तस्या असंभव इति भावः। **तेनागेति**। तथा च तद्विभावस्याभाव इति भावः। **उत्साहस्येति**। तत्स्थायिभावः। अयीति कोमलामन्त्रणे। 'अमी मे' इति पाठः। बाहुजानां क्षत्रियाणाम्। अस्य पदार्थस्य।

---

१ परापकर्षो जीवितं यस्य। उत्साहे हि परस्यापकर्ष एव प्रधानम्, अत्र तु स्वापकर्षो बोध्यत इत्यर्थः।

इष्टविरहादिरत्र विभावः । त्वराचिन्तादयोऽनुभावाः ।

यदाहुः—

'संजातमिष्टविरहादुद्दीप्तं प्रियसंस्मृतेः ।
निद्रया तन्द्रया गात्रगौरवेण च चिन्तया ॥
अनुभावितमाख्यातमौत्सुक्यं भावकोविदैः ॥' इति ।

उदाहरणम्—

'निपतद्बाष्पसंरोधमुक्तचाञ्चल्यतारकम् ।
कदा नयननीलाब्जमालोकेय मृगीदृशः ॥'

**अनर्थातिशयजनिता चित्तस्य संभ्रमाख्या वृत्तिरावेगः ॥**

उदाहरणम्—

'लीलया विहितसिन्धुबन्धनः सोऽयमेति रघुवंशनन्दनः ।
दर्पदुर्विलसितो दशाननः कुत्र यामि निकटे कुलक्षयः ॥'

एषा स्वात्मनि मन्दोदर्या उक्तिः । रघुनन्दनागमनमत्र विभावः । कुत्र यामीत्येतद्व्यङ्ग्यः स्थैर्याभावोऽनुभावः । न चात्र चिन्ता प्राधान्येन व्यज्यत इति शक्यते वक्तुम्, कुत्र यामीति स्फुटं प्रतीतेन स्थैर्याभावेनोद्वेगस्यैव चिन्ताया अप्रत्यायनात् । परं त्वावेगचर्वणायां तत्परिपोषकतया गुणत्वेन चिन्तापि विषयीभवति ।

**चिन्तोत्कण्ठाभयविरहेष्टानिष्टदर्शनश्रवणादिजन्यावश्यकर्तव्यार्थप्रतिसंधानविकला चित्तवृत्तिर्जडता ॥**

इयं च मोहात्पूर्वतः परतश्च जायते ।

यदाहुः—

'कार्याविवेको जडता पश्यतः शृण्वतोऽपि वा ।
तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥

---

**निपतदिति** । निपतद्बाष्पसंरोधेन मुक्तचाञ्चल्या[1] तारका यस्येत्यर्थः । आलोकेय । लिङो रूपम् । **उद्वेगस्यैवेति** । उद्वेगावेगौ पर्यायौ । **चिन्तोत्कण्ठेति** । 'चिन्तोत्कर्ष' इति पाठान्तरम् । **इष्टानिष्टेति** । प्रियानिष्टेत्यर्थः । **तद्विभेति** । जडताविभावा इत्यर्थः । रुजा रोगश्चेत्यर्थः । वाशब्दः समुच्चये । विदामर्थाद्रसज्ञानां मतमिष्टम् । दूरतो दूरे ।

१ यदि लेखकाऽशुद्धिर्न, तर्हि बहुवचनमिदं व्याख्यातुर्बहुज्ञत्वं दर्शयति ।

अनुभावास्त्वमी तूष्णींभावविस्मरणादयः।
सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम्॥'

उदाहरणम्—

'यदवधि दयितो विलोचनाभ्यां सहचरि दैववशेन दूरतोऽभूत्।
तदवधि शिथिलीकृतो मदीयैरथ करणैः प्रणयो निजक्रियासु॥'

प्रियविरहोऽत्र विभावः। करणैश्चक्षुःश्रवणादिभिः क्रियासु तत्तत्प्रमितिषु प्रणयस्य शिथिलीकरणमनुभावः। मोहे चक्षुरादिभिश्चाक्षुषादेरजननम्, इह तु प्रकारविशेषवैशिष्ट्येन बाहुल्येनाजननमिति तस्मादस्य विशेषः। अत एवोदाहरणे शिथिलीकृत इत्युक्तम्, न तु त्यक्त इति।

**अतितृप्तिगर्भव्याधिश्रमादिजन्या चेतसः क्रियानुन्मुखताऽऽलस्यम्।**

अत्र च नासामर्थ्यम्। नापि कार्याकार्यविवेकशून्यत्वम्। तेन कार्याकरणरूपस्यानुभावस्य तुल्यत्वेऽपि ग्लानेर्जडतायाश्चास्य भेदः।

उदाहरणम्—

'निखिलां रजनीं प्रियेण दूरादुपयातेन विबोधिता[3] कथाभिः।
अधिकं नहि पारयामि वक्तुं सखि मा जल्प तवायसी रसज्ञा॥'

एषा हि प्रियागमनद्वितीयदिवसे मुहुर्निशावृत्तान्तं पृच्छन्तीं सखीं प्रति रजनिजागरणजनितालस्यायाः कस्याश्चिदुक्तिः। अत्र रजनिजागरणं विभावः। अधिकसंभाषणाभावोऽनुभावः। जडतायां मोहात्पूर्ववर्तित्वमुत्तरवर्तित्वं वा नियतम्, न त्वत्रेत्यपरो विशेषः। गोपनीयविषयत्वाद्यदि कथाभिरित्यविवक्षितवाच्यं तदा श्रमोऽस्तु परिपोषकः। श्रमजन्ये

करणैरिन्द्रियैः प्रणयः स्नेहः। अन्यासामसंभवादाह—**तत्तत्प्रेति**। चाक्षुषादिरूपास्वित्यर्थः। **चाक्षुषादेरिति**। सामान्येनेति भावः। **प्रकारेति**। तत्तत्प्रकारेणेत्यर्थः। अत एव बाहुल्येन। अत एव सर्वथाऽत्यागादेव। अस्यालस्यस्य तुल्यत्वेऽपि ग्लान्यादाविति शेषः। यथासंख्यमन्वयः। पारयामि शक्नोमि। आयसी लोहमयी। रसज्ञा जिह्वा। **प्रियेति**। प्रियस्यागमनं यस्मिन्दिने ततो द्वितीयेत्यर्थः। जडतातो भेदान्तरमाह—**जडेति**। वाशब्दश्चार्थे। अत्रालस्ये। **कथाभिरित्यविवक्षितेति**। कथाभिरिति

१ येन प्रकारेण यच्चाक्षुषादिप्रत्यक्षं भवति तेन प्रकारविशेषेण न भवति। सम्यग्रूपेणाजननमित्याशयः।

२ ग्लानौ असामर्थ्यम्, जडतायां च कर्तव्यप्रतिसन्धानाभावः, अतएव द्वयोरपेक्षया आलस्ये भेद इत्यर्थः।

३ कथाहेतुना जागरिता। कथाद्वारा शिक्षिता वा।

ह्यालस्ये श्रमस्य पोषकताया अवार्यत्वात् । अतितृप्त्यादिजनिते त्वालस्ये श्रमाद्विविक्तविषयत्वं बोध्यम् ।

**परोत्कर्षदर्शनादिजन्यः परनिन्दादिकारणीभूतश्चित्तवृत्तिविशेषोऽसूया ॥**

इमामेवासहनादिशब्दैर्व्यवहरन्ति ।

यथा—

'कुत्र शैवं धनुरिदं क्व चायं प्राकृतः शिशुः ।
भङ्गस्तु सर्वसंहर्त्रा कालेनैव विनिर्मितः ॥'

एषा भग्नहरकार्मुकस्य भगवतो रामस्य पराक्रममसहमानानां तत्रत्यानां राज्ञामुक्तिः । अत्र च श्रीमद्दाशरथिबलस्य सर्वोत्कृष्टताया दर्शनं विभावः । प्राकृतशिशुपदगम्या निन्दानुभावः ।

'तृष्णालोलविलोचने कलयति प्राचीं चकोरव्रजे
मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति ।
माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना
धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ? ॥'

अत्रापि यद्यपि तदीयोच्छृङ्खलतादिदर्शनजन्या अनुचितकारित्वरूपनिन्दाप्रकाशानुभाविता कविगता विधात्रालम्बनाऽसूया व्यज्यत इति शक्यते वक्तुम्, तथापि कार्यकारणयोस्तुल्यत्वादभिव्यक्तेनामर्षेण शबलि-

---

सुरतपरं तत्त्वमेव लक्ष्यतावच्छेदकम् । अतिश्रमयुक्तत्वं व्यङ्ग्यम् । श्रम इत्यस्य व्यङ्ग्ये-त्यादिः । परिपोषक इत्यनेन श्रमध्वनित्वं निरस्तम् । ननु तस्य तत्त्वे प्रकृते गौरवमत आह—**श्रमेति** । नन्वेवं सर्वत्र तत्सत्त्वेन विभावभेदोक्तिरयुक्तात आह —**अतीति** । **प्राकृत इति** । क्षत्रियोद्भव इत्यर्थः । तत्रत्यानां सीतापरिणयनार्थं जनकगृहे समागतानां सदस्युपविष्टानाम् । **शिशुपदेति** । एतदुभयपदेत्यर्थः । तृष्णालोलेत्युदाहरणदाने बीजं कथयितुमाह—**तृष्णेति** । कलयतीत्यादि सतिसप्तम्यन्तम् । कलयति चन्द्रिकापानार्थं स्वीकुर्वति । चकोरव्रजे तत्समूहे । कुलं समूहः । धुन्वति टंकारयति । विधौ चन्द्रे । **धाराधरेति** । मेघाच्छादनमित्यर्थः । **तदीयेति** । धात्रीयेत्यर्थः । प्रकाशेत्यनेन तस्या वाच्यत्वं सूचितम् । **वक्तुमिति** । तथा चेदमप्यस्या उदाहरणमिति भावः । **कार्यकारणयोस्तुल्यत्वादिति** । असूयाकार्यकारणयोरिवामर्षकार्यकारणयोरपि विद्यमानत्वा-

तैवासौ न विविक्ततया प्रतीयते। नहि विधातुरपराध इव भगवतो रामस्यापराधोऽस्ति येन कवेरिव वीराणामप्यमर्षोऽभिव्यज्येत[1]। स्वभावो हि महोन्नतक्रियानिष्पादनं वीराणाम्। अत्राप्रस्तुतचन्द्रवृत्तान्तेन प्रस्तुतराजकुमारादिवृत्तान्तस्य ध्वनननान्नास्त्यसूयाध्वनित्वमिति तु न वाच्यम्। एकध्वनेर्ध्वन्यन्तराविरोधित्वात्[2]। अन्यथा महावाक्यध्वनेरवान्तरवाक्यध्वनिभिः, तेषां च पदध्वनिभिः सह सामानाधिकरण्यं कुत्रापि न स्यात्।

**वियोगशोकभयजुगुप्सादीनामतिशयाद्ग्रहावेशादेश्चोत्पन्नो व्याधिविशेषोऽपस्मारः॥**

व्याधित्वेनास्य कथनेऽपि विशेषाकारेण पुनः कथनं बीभत्सभयानकयोरस्यैव व्याधेरङ्गत्वं नान्यस्येति स्फोरणाय। विप्रलम्भे तु व्याध्यन्तरस्यापि च।

उदाहरणम्—

'हरिमागतमाकर्ण्य मथुरामन्तकान्तकम्।
कम्पमानः श्वसन्कंसो निपपात महीतले॥'

अत्र भयं विभावः। कम्पनिःश्वासपतनादयोऽनुभावाः।

**अमर्षादिजन्यवाक्पारुष्यादिकारणीभूता चित्तवृत्तिश्चपलता॥**

दित्यर्थः। असौ असूया प्रतीयत इत्यत्रान्वयः। एवव्यवच्छेद्यमाह—**नेति**। भेदेन नेत्यर्थः। अत इदं नोदाहृतमिति भावः। ननु पूर्वोदाहरणेऽपि शबलितत्वमत आह—**नहीति**। ननु रामस्य कुतो नापराधोऽत आह—**स्वभावो हीति**। अप्रस्तुतप्रशंसैवात्रेति मतं निराचष्टे—**अत्राप्रेति**। तेषां च अवान्तरवाक्यध्वनीनां च। अस्य अपस्मारस्य। **विशेषेति**। अपस्मारत्वेनेत्यर्थः। बीभत्सेत्याद्युक्तिस्वारस्यमाह—**विप्रेति**। अस्यापि च अपस्मारस्यापि। अङ्गत्वमित्यस्यानुषङ्गः। कम्पमानः श्वसन्निति।

---

१ पूर्वोदाहरणे (कुत्र शैवम्०) रामस्यापराधो नास्तीति वीरकृतेन अमर्षेण अमिश्रिताऽसूया। तृष्णेन्दुदाहरणे तु धातुरपराधेन कवेरमर्ष इति अमर्षशबलिताऽसूयेति द्वयोर्भेदः।

२ द्वयोर्ध्वन्योः संकर इति भावः।

यदाहुः—

'अमर्षप्रातिकूल्येर्ष्यारागद्वेषाश्च मत्सरः ।
इति यत्र विभावाः स्युरनुभावस्तु भर्त्सनम् ॥
वाक्पारुष्यं प्रहारश्च ताडनं वधबन्धने ।
तच्चापलमनालोच्य कार्यकारित्वमिष्यते ॥' इति ।

उदाहरणम्—

'अहितव्रत पापात्मन्मैवं मे दर्शयाननम् ।
आत्मानं हन्तुमिच्छामि येन त्वमसि भावितः ॥'

एषा भगवदनुरक्तिविघटनोपायमपश्यतः प्रह्लादं प्रति हिरण्यकशिपोरुक्तिः । भगवद्द्वेषोत्थापितः पुत्रद्वेषोऽत्र विभावः । आत्मवधेच्छा परुषवचनं चानुभावः । न चामर्ष एवात्र व्यज्यत इति वाच्यम् । सदैव भगवदनुरागिणि प्रह्लादे हिरण्यकशिपोरमर्षस्य चिरकालसंभृतत्वेनात्मवधेच्छाया इदंप्रथमतानुपपत्तेः । इदंप्रथमकार्यस्य चेदंप्रथमकारणप्रयोज्यतया प्राचीनचित्तवृत्तिविलक्षणाया एव चपलताख्यचित्तवृत्तेः सिद्धेः । न चामर्षप्रकर्ष एवात्मवधेच्छादिकारणमभिव्यज्यतामिति वाच्यम् । प्रकर्षस्यापि स्वाभाविकविलक्षणलक्षणताया[1] आवश्यकतया तस्यैव चपलतापदार्थत्वात् ।

**नीचपुरुषेष्वाक्रोशनाधिक्षेपव्याधिताडनदारिद्र्येष्टविरहपरसंपद्दर्शनादिभिः, उत्तमेषु त्ववज्ञादिभिर्जनिता विषयद्वेषाख्या रोदन-दीर्घश्वासदीनमुखतादिकारिणी चित्तवृत्तिर्निर्वेदः ॥**

श्वासजन्यकम्पवानित्यर्थः । **च मत्सर इति** । मत्सरश्चेत्यर्थः । **अहितेति** । न हितं व्रतं भगवदनुरक्तिरूपं यस्य तत्संबुद्धिः । अत एव पापात्मन्प्रह्लाद । **भावित इति** । उत्पादित इत्यर्थः । **अवज्ञादिभिरिति** । आदिना विरहादयः ।

---

१ स्वाभाविकरूपाद्विलक्षणं लक्षणं यस्य तत्ता । प्रकर्षे सति वस्तुनः पूर्वसिद्धाद्रूपाद्वैचित्र्यमवश्यं भवत्येव । ततश्च अमर्षाद्भिन्नो यः प्रकृष्टामर्षस्तस्यैव नाम चपलतेत्याशयः ।

उदाहरणम्—

'यदि लक्ष्मण सा मृगेक्षणा न मदीक्षासरणिं समेष्यति ।
अमुना जडजीवितेन मे जगता वा विफलेन किं फलम् ॥'

नित्यानित्यवस्तुविवेकजन्यत्वाभावान्नासौ रसव्यपदेशहेतुः ।

**देवादिविषया रतिर्यथा—**

'भवद्वारि क्रुध्यज्जयविजयदण्डाहतिदल-
त्किरीटास्ते कीटा इव विधिमहेन्द्रप्रभृतयः ।
वितिष्ठन्ते युष्मन्नयनपरिपातोत्कलिकया
वराकाः के तत्र क्षपितमुर नाकाधिपतयः ॥'

अत्रापमानसहनभगवद्वारनिषेवणभगवत्कटाक्षपाताभिलाषादिभिर्ब्रह्मादिगता भगवदालम्बना रतिर्नाभिव्यज्यते, अपि तु भगवदैश्वर्यमवाङ्मनसगोचर इति चेत्तथापि तादृशभगवदैश्वर्यवर्णनानुभावितया कविगतभगवदालम्बनरत्या ध्वनित्वमक्षतमेव ।

इदं वोदाहरणम्—

'न धनं न च राज्यसंपदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥'

**यदीति** । भगवतो रामस्येयमुक्तिः । सा सीता । **जडेति** । अचेतनजीवितेनेत्यर्थः । विफलेन विरुद्धफलेन । नन्वत्र निर्वेदस्थायिकशान्तरसध्वनित्वमेवात आह—**नित्येति** । असौ निर्वेदः । **भवदिति** । विष्णुं प्रति भक्तोक्तिः । हे क्षपितमुर मुरजित्, जयविजयौ द्वारपालौ । ते अनिर्वचनीयप्रभावास्ते भवद्वारि भवन्नेत्रपातोत्कण्ठया कीटा इव वितिष्ठन्त इत्यन्वयः । वराका दीनाः । **नाभिव्यज्यत इति** । धनाद्यभिलाषेणापि तदुपपत्तेरिति भावः । इतीत्यस्याभिव्यज्यत इत्यत्रानुषङ्गः । चेत् यद्यपि । नन्वस्या अप्राधान्येन कथं तत्त्वमत आह—**इदं वेति** । अस्य भावस्य । अन्तर्भावे हेतुमाह—

१ नयनयोर्यः परितः पातः, सम्यङ्निरीक्षणमित्यर्थः, तदुत्कलिकया तल्लालसारामस्येन । वितिष्ठन्ते, अर्थित्वादन्यापेक्षया विशिष्टप्रकारेण तिष्ठन्ति ।

२ महेन्द्रस्य पूर्वमुक्तत्वादत्र नाकभागस्याधिपतयः कुबेरादयोऽन्ये ग्राह्याः ।

३ इति नस्त्वभिव्यज्यते । ततश्च नासौ भावध्वनिरिति शङ्का । ऐश्वर्यवर्णनानुभावेन कविगता भगवद्रतिरभिव्यज्यत इति समाधानम् ।

४ ननु रतिरप्रधानम् । ऐश्वर्यवर्णनमेव प्रधानम्, अत एव रतिभावस्योदाहरणान्तरं दत्तमित्याशयः ।

अत्र धनाद्यपेक्षाशून्यस्य भगवद्दृगन्तपाताभिलाषो हि भगवत्यत्यन्तानुरक्तिं व्यनक्ति । एवं संक्षेपेण निरूपिता भावाः ॥

अथ कथमस्य संख्यानियमः । मात्सर्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैब्यक्षमाकुतुकोत्कण्ठाविनयसंशयधार्ष्ट्यादीनामपि तत्र तत्र लक्ष्येषु दर्शनात् इति चेत्, न । उक्तेष्वेवैषामन्तर्भावेन संख्यान्तरानुपपत्तेः । असूयातो मात्सर्यस्य, त्रासादुद्वेगस्य, अवहित्थाख्याद्भावाद्दम्भस्य, अमर्षादीर्ष्यायाः, मतेर्विवेकनिर्णययोः, दैन्यात्क्लैब्यस्य, धृतेः क्षमायाः, औत्सुक्यात्कुतुकोत्कण्ठयोः, लज्जाया विनयस्य, तर्कात्संशयस्य, चापलाद्धार्ष्ट्यस्य च वस्तुतः सूक्ष्मे भेदेऽपि नान्तरीयकतया[१] तदनतिरिक्तस्यैवाध्यवसायात् । मुनिवचनानुपालनस्य संभव उच्छृङ्खलताया अनौचित्यात् । एषु च संचारिभावेषु मध्ये केचन केषांचन विभावा अनुभावाश्च भवन्ति । तथा हि—ईर्ष्याया निर्वेदं प्रति विभावत्वम्, असूयां प्रति चानुभावत्वम् । चिन्ताया निद्रां प्रति विभावत्वम्, औत्सुक्यं प्रति चानुभावतेत्यादि स्वयमूह्यम् ।

अथ रसाभासः—तत्र

**अनुचितविभावालम्बनत्वं रसाभासत्वम् ॥**

विभावादावनौचित्यं पुनर्लोकानां व्यवहारतो विज्ञेयम् । यत्र तेषामयुक्तमिति धीरिति केचिदाहुः । तदपरे न क्षमन्ते । मुनिपत्न्यादिविषयकरत्यादेः संग्रहेऽपि बहुनायकविषयाया अनुभयनिष्ठायाश्च रतेरसंग्रहात् । तत्र विभावगतस्यानौचित्यस्याभावात् । तस्मादनौचित्येन रत्यादिर्विशेषणीयः । इत्थं चानुचितविभावालम्बनाया[२] बहुनायकविषयाया अनुभयनिष्ठायाश्च संग्रह इति । अनौचित्यं च प्राग्वदेव । तत्र रसाद्याभासत्वं रसत्वा-

---

**असूयात इति** । ननु सूक्ष्मभेदप्रयुक्तभेदः कुतो नात आह—**मुनीति** । संचारीति षष्ठ्यर्थे सप्तमी । तत्र निरूपणीये रसाभासे । यत्र विभावादौ । तेषां लोकानाम् । आदिना गुरुपत्न्यादिसंग्रहः । तत्र तयोः । **तस्मादिति** । तथा चानुचितविभावालम्बनकेरतित्वं तत्त्वं ज्ञेयम् । आदिना हासादिपरिग्रहः । इत्थं च तथाविशेषणे च । इतिरपरमतसमाप्तौ

---

१ नित्यसंबद्धतया तदभिन्नस्वरूपस्यैव (भावस्य) निश्चयात् । अर्थाद् यत्र मात्सर्यं भवेत्तत्राऽसूयाऽप्यवश्यमेवोपलभ्येत । ततश्चानयोरभेदस्वीकार एव समुचितो न तु मुनिवचनेभ्य उच्छृङ्खलता । एवं त्रासोद्वेगादिष्वपि बोद्धव्यम् ।

२ अनेन हि अनुचितविभावालम्बना, स्वयमनुचिता च रतिर्विवक्षिता । अनुचितप्रवृत्तस्थायिकत्वं रसाभासत्वमिति तु सरलम् ।

दिना न समानाधिकरणम्, निर्मलस्यैव रसादित्वात्, हेत्वाभासत्वमिव हेतुत्वेन इत्येके। 'नह्यनुचितत्वेनात्महानिः, अपि तु सदोषत्वादाभासव्यवहारः। अश्वाभासादिव्यवहारवत्' इत्यपरे।

उदाहरणम्—

'शतेनोपायानां कथमपि गतः सौधशिखरं
सुधाफेनस्वच्छे रहसि शयितां पुष्पशयने।
विबोध्य क्षामाङ्गीं चकितनयनां स्मेरवदनां
सनिःश्वासं श्लिष्यत्यहह सुकृती राजरमणीम्॥'

अत्रालम्बनमनुचितप्रणया राजरमणी। रहोरजन्यादुद्दीपनम्। साहसेन राजान्तःपुरे गमनम्, प्राणेषूपेक्षा, निःश्वासाश्लेषादयश्चानुभावाः। शङ्कादयः संचारिणः। निषिद्धालम्बनकत्वाच्चास्या रतेराभासत्वं रसस्य। न चात्र चकितनयनामित्यनेन परपुरुषस्पर्शत्रासाभिव्यक्त्या रतेरनुभयनिष्ठतेत्याभासताहेतुर्वाच्यः। अस्याश्च चिराय तस्मिन्नासक्ताया अन्तःपुरे परपुरुषागमनस्यात्यन्तमसंभावनया क एष मां बोधयतीत्यादावुचित एव त्रासः[2]। अनन्तरं च परिचयाभिव्यक्त्या सोऽयं मत्प्रियो मदर्थं प्राणानपि तृणीकृत्यागत इति ज्ञानादुत्पन्नं हर्षमभिव्यञ्जयत्स्मेरवदनामिति विशेषणं

चस्त्वर्थे। तत्र रसाभासेषु। आदिना भावपरिग्रहः। निर्मलस्य निर्दुष्टस्य। हेतुत्वेनेत्यस्य न समानाधिकरणमित्यस्यानुषङ्गः। नन्वत्र मते दुष्टो हेतुरितिवद्दुष्टो रस इत्यादिव्यवहारानुपपत्तिरतो मतान्तरमाह—**नहीति**। आत्महानिः स्वरूपहानिः। **अश्वाभासेति**। अश्व इति भावः। **सौधेति**। सुधानिर्मितराजगृहोपरितनप्रदेशमित्यर्थः। फेनस्यात्यन्तस्वच्छत्वादुक्तिः। पुष्पशयने पुष्पशय्यायाम्। अहहेति शङ्कायाम्। **अनुचितेति**। अनुचितः प्रणयो यस्यामित्यर्थः। यस्या इति वा। इदमाद्योदाहरणमित्याह—**निषिद्धेति**। अस्या नायकनिष्ठायाः। परेत्यस्य विबोध्येति। बोधितेत्यादिः। **स्पर्शेति**। स्पर्शकृतत्रासेत्यर्थः। **अनुभयेति**। नायके सत्त्वेऽपि नायिकायामभावादिति भावः। **हेतुरिति**। तथा च तृतीयोदाहरणमेतन्नायस्येति भावः। समाधत्ते—**अस्याश्चेति**। चो यत इत्यर्थे। व्यनक्तीत्यत्रास्यान्वयः। **रतिमिति**। नायिकासंबन्धिनीं

१ हेत्वाभासत्वं यथा हेतुत्वेन, तथा रसाद्याभासत्वं रसत्वेन न समानाधिकरणम्। अर्थात् यत्र हेत्वाभासत्वं भवति तत्र यथा हेतुत्वं न, तथा यत्र रसाभासत्वं तत्र रसत्वं न तिष्ठतीत्याशयः।

२ निद्रान्तः सहसा जागरणात् 'कोऽयं मां बोधयती'त्येव त्रासः, न तु परपुरुषबुद्ध्या। अतो नाऽनुभयनिष्ठताऽवसर इत्यर्थः।

रतिं तदीयामपि व्यनक्ति । परं तु प्राधान्यं नायकनिष्ठाया एव रतेः, सकलवाक्यार्थत्वात् ।

यथा वा—

'भवनं करुणावती विशन्ती गमनाज्ञालवलाभलालसेषु ।
तरुणेषु विलोचनाब्जमालामथ बाला पथि पातयांबभूव ॥'

अत्र कुतश्चिदागच्छन्त्याः पथि तदीयरूपयौवनगृहीतमानसैर्युवभिरनुगम्यमानायाः कस्याश्चिद्भवनप्रवेशसमये निजसेवासार्थक्यविज्ञानाय गमनाज्ञापनरूपलाभलालसेषु तेषु परमपरिश्रमस्मरणसंजातकरुणाया गमनाज्ञादाननिवेदकस्य विलोचनाम्बुजमालापरिक्षेपस्यानुभावस्य वर्णनाद्भिव्यज्यमाना रतिर्बहुवचनेन बहुविषया गम्यत इति भवत्ययमपि रसाभासः ।

रतिमपील्यर्थः । हर्षसमुच्चायकोऽपिः । नन्वेवं विनिगमनाविरहोऽत आह—**परंत्विति** । नायिकानिष्ठा तु स्मेरेति पदमात्रव्यङ्ग्यत्वान्न वाक्यार्थः । तथा चाद्योदाहरणतास्य सुस्थेति भावः । द्वितीयोदाहरणमाह—**यथा वेति** । भवनं स्वगृहम् । विज्ञानाय तदङ्गीकाराय । तेषु तरुणेषु । करुणायामन्वयः । परमेत्यस्य तरुणसंबन्धीत्यादिः । **वर्ह्मिति** । तरुणेष्विति

१ ग्रन्थकर्तुर्विरुद्धमिदम् । 'तदीयामपि रतिम्' अर्थात् नायिकाया अपि रतिमिति वदता ग्रन्थकृता अपिना नायिकाया रतिः समुच्चीयते । अर्थात् उपायशतेन सौधशिखरमारोढुर्नायकस्य रतिस्तु सुस्फुटैव, परं स्मेरवदनाया नायिकाया अपि रतिरस्त्येवेति । स्फुटं चेदमुचितम् । पूर्वपक्षिणा—परपुरुषत्रासाभिव्यञ्जकेन चकितनयनामिति विशेषणेन नायिका या रत्यभावो यदा शङ्क्यते तदा तत्समाधाने 'तदीयामपि रतिम्' अत्र स्पष्टं नायिकाया एव रतिर्महीतुमुचितैव ।

नागेशमहोदयस्तु—'तदीयामपि रतिम्' (नायिकासंबन्धिनीमपि रतिम्) इति स्फुटं वदन्तं ग्रन्थकारं पराभूय 'रतिमपि' इत्यर्थं वदन् हर्षसमुच्चायकमाह । अर्थात् 'नायिकाया रतिमभिव्यनक्ति, हर्षमपि' इति । ग्रन्थस्वारस्यं कियद्दूरं गलहस्तितमिति मर्मविदो विदुरेव । 'हर्षमभिव्यञ्जयत्' इति मूलोक्तस्फुटोक्तावपि न टीकाकर्तुर्दृष्टिरिति हन्त ! ! एवमेव स्थाने स्थाने साहित्यमार्मिकत्वमभिनीतं नागेन, किन्तु क्वचित्क्वचिदेव निदर्शितमित्यलं प्राचां वाचां विचारेण ।

यथा वा—

'भुजपञ्जरे गृहीता नवपरिणीता वरेण[1] वधूः।
तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम्॥'

अत्र रतेर्नववध्वा मनागप्यस्पर्शादनुभयनिष्ठत्वेनाभासत्वम्।

तथा चोक्तम्—

'उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम्॥' इति।

अत्र मुनिगुरुशब्दयोरुपलक्षणपरतया राजादेरपि ग्रहणम्।

अथात्र किं व्यङ्ग्यम्—

'व्यानम्राश्चलिताश्चैव स्फारिताः परमाकुलाः।
पाण्डुपुत्रेषु पाञ्चाल्याः पतन्ति प्रथमा दृशः॥'

अत्र व्यानम्रतया धर्मात्मताप्रयोज्यं युधिष्ठिरे सभक्तित्वम्, चलिततया स्थूलाकारताप्रयोज्यं भीमसेने सत्रासत्वम्, स्फारिततया अलौकिकशौर्यश्रवणप्रयोज्यमर्जुने सहर्षत्वम्, परमाकुलतया परमसौन्दर्यप्रयोज्यं नकुलसहदेवयोरौत्सुक्यं च व्यञ्जयन्तीभिर्दृग्भिः पाञ्चाल्या बहुविषयाया रतेरभिव्यञ्जनाद्रसाभास एवेति नव्याः। प्राञ्चस्त्वपरिणेतृबहुनायकविषयत्वे रतेराभासतेत्याहुः। तत्र शृङ्गाररस इव शृङ्गाराभासोऽपि द्विविधः, संयोगविप्रलम्भभेदात्। संयोगाभासस्त्वनुपदमेवोदाहृतः।

बह्वित्यर्थः। तृतीयोदाहरणमाह—**यथा वेति**। भुजेति रूपकम्। **उपेति**। आभासत्वमिति शेषः। प्रथमोदाहरणसंग्रहायाह— **अत्रेति**। अत्र वक्ष्यमाणोदाहरणे किं रसो वा तदाभासो वेत्यर्थः। स्फारिता विस्तृताः। प्रथमा इत्यनेन पूर्वं दर्शनाभावः सूचितः। सभक्तित्वमित्यादिद्वितीयान्तानां व्यञ्जयन्तीभिरित्यनेनान्वयः। भास एवेत्यस्य व्यङ्ग्य इति शेषः। एवेन रसव्यवच्छेदः। **प्राञ्चस्त्विवति**। अत्रारुचिबीजं तु रत्यनौचित्यस्यापरिणीते इवात्रापि सत्त्वम्। नहि लक्षणे तथा निवेशोऽस्तीति। तत्र रसाभासानां

१ भामिनीविलासे तु 'वरेण रहसि वधूः' इति पाठो दृष्टः। काशीमुद्रितरसगङ्गाधरे तु रहसिपदमिव उद्धृत्य 'भवत्ययमपि रहसि रसाभासः' इति उपरिपङ्क्तौ गतम्।

विप्रलम्भाभासो यथा—

'व्यत्यस्तं लपति क्षणं क्षणमथो मौनं समालम्बते
सर्वस्मिन्विदधाति किं च विषये दृष्टिं निरालम्बनाम् ।
श्वासं दीर्घमुरीकरोति न मनागङ्गेषु धत्ते धृतिं
वैदेहीकमनीयताकवलितो हा हन्त लङ्केश्वरः ॥'

अत्र सीतालम्बनेयं लङ्केशगता विप्रलम्भरतिरनुभयनिष्ठतया जगद्गुरुपत्नीविषयकतया चाभासतां गता, व्यत्यस्तं लपतीत्यादिभिरुक्तिभिर्व्यज्यमानैरुन्माद[1]श्रममोहचिन्ताव्याधिभिस्तथैवाभासतां गतैः प्राधान्येन परिपोष्यमाणा ध्वनिव्यपदेशहेतुः । एवं कलहशीलकुपुत्राद्यालम्बनतया वीतरागादिनिष्ठतया च वर्ण्यमानः शोकः, ब्रह्मविद्यानधिकारिचाण्डालादिगतत्वेन च निर्वेदः, कदर्यकातरादिगतत्वेन पित्राद्यालम्बनत्वेन वा क्रोधोत्साहौ, ऐन्द्रजालिकाद्यालम्बनत्वेन च विस्मयः, गुर्वाद्यालम्बनतया च हासः, महावीरगतत्वेन भयम्, यज्ञीयपशुवसासृङ्मांसाद्यालम्बनतया वर्ण्यमाना जुगुप्सा च रसाभासाः । विस्तृतिभयाच्चामी नेहोदाहृताः सुधीभिरुन्नेयाः । एवमेवानुचितविषया भावाभासाः ।

यथा—

'सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्यापि खेदकलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥'

---

मध्ये । एकं क्षणमिति पूर्वान्वयि । अपरमुत्तरान्वयि । ननु सीतायास्तदभावेऽपि लङ्केशे तत्सत्त्वमत आह—**जगदिति** । **उक्तिभिरिति** । यथाक्रममिति शेषः । तथैव जगद्गुरुपत्नीविषयकतयैव । **प्राधान्येनेति** । तथा च न तद्भावाभासध्वनित्वमिति भावः । **कलहशीलेति** । अवीतरागादिविषयमिदम् । अत एवाह—**वीतेति** । कदर्यो निन्द्यः । कातरो भीतः । एवमेव रसाभासवदेव । खेदकलिता खेदव्याप्ता । विनिगम-

---

1 व्यत्यस्तलापेन उन्मादः, मौनेन श्रमः, निरालम्बनदृष्ट्या मोहः, दीर्घश्वासैश्चिन्ता, अङ्गानामधृत्या च व्याधिः, उदाहरणे व्यज्यत इति बोध्यम् । अनुचितस्थले प्रवृत्ता व्यभिचारिणोऽप्याभासा भवन्तीत्यपि ग्रन्थकर्त्रा सूचितमनेन ।

गुरुकुले विद्याभ्याससमये तदीयकन्यालावण्यगृहीतमानसस्यान्यस्य वा कस्यचिदप्रतिषिद्धगमनां स्मरतो देशान्तरं गतस्येयमुक्तिः । अत्र च स्वात्मत्यागात्यागाभ्यां स्रक्चन्दनादिषु विषयेषु चिरसेवितायां विद्यायां च कृतघ्नत्वम्, अस्यां च लोकोत्तरत्वमभिव्यज्यमानं व्यतिरेकवपुः[1] स्मृतिमेव पुष्णातीति सैव प्रधानम् । एवं च त्यागाभावगतं सार्वदिकत्वं व्यञ्जयन्त्यधिदेवतोपमापि[2] । एषा चानुचितविषयकत्वादनुभयनिष्ठत्वाच्च भावाभासः । यदि पुनरियं तत्परिणेतुरेवोक्तिस्तदा भावध्वनिरेव ॥

अथ भावशान्तिः—

**भावस्य प्रागुक्तस्वरूपस्य शान्तिर्नाशः ॥**

स चोत्पत्त्यवच्छिन्न एव ग्राह्यः, तस्यैव सहृदयचमत्कारित्वात् ।

उदाहरणम्—

'मुञ्चसि नाद्यापि रुषं भामिनि मुदिरालिरुदियाय ।
इति तन्व्याः पतिवचनैरपायि नयनाब्जकोणशोणरुचिः ॥'

इह तादृशप्रियवचनश्रवणं विभावः । नयनकोणगतशोणरुचेर्नाशः, तदभिव्यक्तः प्रसादो वानुभावः । उत्पत्तिकालावच्छिन्नो रोषनाशो व्यङ्ग्यः । तथा—

**भावोदयो भावस्योत्पत्तिः ॥**

नाविरहादाह—**अन्यस्येति** । अत्र च स्वात्मत्यागेति विषयविद्योभयकर्तृकस्वत्यागेन विषयविद्ययोः कृतघ्नत्वम्, नायिकाकर्तृकस्वीयात्यागेन चास्यां नायिकायां लोकोत्तरत्वमित्यर्थः । एवं स्मृतिमेव पुष्यतीत्यर्थः । स च नाशश्चोत्पत्त्यवच्छिन्न एवोत्पत्तिकालावच्छिन्न एव । मुदिरालिर्मेघपङ्क्तिः । नाशस्य साक्षात्तत्कार्यत्वाभावादाह—**तदभीति** ।

१ चिरसेवनेपि विमुखे विषय-विद्ये कृतघ्ने, तदपेक्षया न्यूनकालाऽभिध्यानेऽपि सर्वदानुगामिनी भामिनी तु लोकोत्तरकृतज्ञेति व्यज्यमानोऽपि व्यतिरेकालंकारः स्मृतिभावपोषकतया अप्राधान्यान्न ध्वनित्वव्यपदेशहेतुरित्यर्थः ।

२ तत्तद्वस्तुनोऽधिष्ठात्री देवता यथा न जातु तत्परित्यजति, तथा सेयमपि मृगलोचना अकृतमद्धृदयमोचनास्तीति उपमालंकारेणापि नास्य काव्यस्य व्यपदेशः, उपमाया अपि प्रधानस्मृतेरेव प्रसाधकत्वादित्याशयः ।

उदाहरणम्—

'वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी ।
अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥'

अत्रापि दयितवक्षोगतविपक्षकामिनीहारलक्ष्मदर्शनं विभावः । प्रियांसदेशवलयीकृतनिजबाहुलताकर्षणमनुभावः । रोषोदयो व्यङ्ग्यः । यद्यपि भावशान्तौ भावान्तरोदयस्य, भावोदये वा पूर्वं भावशान्तेरावश्यकत्वान्नानयोर्विविक्तो व्यवहारस्य विषयः, तथापि द्वयोरेकत्र चमत्कारविरहात्, चमत्काराधीनत्वाच्च व्यवहारस्य अस्ति विषयविभागः ।

एवम्—

**भावसंधिरन्योन्यानभिभूतयोरन्योन्याभिभवनयोग्ययोः[1] सामानाधिकरण्यम् ॥**

उदाहरणम्—

'यौवनोद्गमनितान्तशङ्कि[2]ताः शीलशौर्यबलकान्तिलोभिताः ।
संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥'

अत्र भगवद्दाशरथिगतस्य लोकोत्तरयौवनोद्गमस्य, तादृशस्यैव शीलशौर्यादेश्च दर्शनं विभावः । नयनगतसंकोचविकासावनुभावः । व्रीडौत्सुक्ययोः संधिर्व्यङ्ग्यः ।

ननु ततः किमत आह—**चमत्कारेति** । एवं च यत्कृतो यत्र चमत्कारस्तत्र तद्व्यवहार इति भावः । **सामानाधिकरण्यमिति** । एकदेशवृत्तित्वविशिष्टैककालवृत्तित्वरूपमित्यर्थः । सूक्ष्मभेदस्त्वकिंचित्कर इति भावः । शबलतायां त्वेकदेशवृत्तित्वरूपमेव

१ यौ भावौ परस्परस्याभिभवयोग्यतां धारयतो न च परस्परमभिभूतौ (अवरुद्धान्योन्यचमत्कारौ), तयोरेकस्मिन् स्थले एकस्मिंश्च कालेऽभिव्यक्तिर्भावसन्धिरित्याशयः । परस्पराभिभूतयोर्भावयोः सन्धौ द्वयोरेव न चमत्कारः, उदासीनयोः (परस्पराभिभवयोग्यताविरहितयोः) अभिव्यक्तौ न सन्धिकृतो विशिष्टश्चमत्कार इति तथाविशेषणदानस्याकूतम् ।

२ वयःसन्धिमारूढाया अनूढायाः सीताया यौवनोद्गमवन्तं भगवन्तं दृष्ट्वा प्रथमवयःस्वाभाव्याच्छङ्केति संकेतः ।

तथा—

**भावशबलत्वं भावानां बाध्यबाधकभावमापन्नानामुदासीनानां वा व्यामिश्रणम् ॥**

एकचमत्कृतिजनकज्ञान[1]गोचरत्वमिति यावत्।

उदाहरणम्—

'पापं हन्त मया हतेन विहितं सीतापि यद्यापिता
सा मामिन्दुमुखी विना बत वने किं जीवितं धास्यति।
आलोकेय कथं मुखानि कृतिनां किं ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये ॥'

अत्र मत्यसूयाविषादस्मृतिवितर्कव्रीडाशङ्कानिर्वेदानां प्रागुक्तस्वस्वविभावजन्मनां शबलता। यत्तु काव्यप्रकाशटीकाकारैः 'उत्तरोत्तरेण भावेन पूर्वपूर्वभावोपमर्दः शबलता' इत्यभ्यधीयत, तन्न। 'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि' इत्यत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यमत्यौत्सुक्यानामुपमर्दलेशशून्यत्वेऽपि शबलताया राजस्तुतिगुणत्वेन पञ्चमोल्लासे मूलकृतैव निरूपणात्। स्वोत्तरविशेषगुणेन जायमानस्तु नाशो न व्यङ्ग्यः, न वोपमर्दपदवाच्यः,

सामानाधिकरण्यमिति विशेषः। नादृशस्यैव लोकोत्तरस्यैव। **एकेति।** एकं यत्तादृशं ज्ञानं महावाक्यार्थबोधस्तद्विषयत्वमित्यर्थः। **पापमिति।** अत्र पापमित्यनेन मतिः, हतेत्यादिनासूया, सीतापीत्यादिना विषादः, सेत्यनेन स्मृतिः, मामित्यादिना वितर्कः, आलोकेयेत्यादिना व्रीडा, किं त इत्यादिना शङ्का, राज्यमित्यादिना निर्वेदः, इति बोध्यम्। पश्येत्कश्चिदीति शङ्का। चल चपल रे इत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेति श्रमः। हहहेति दैन्यम्। व्युत्क्रम इति दैन्यम्। क्वासीति मतिः। यासीत्यौत्सुक्यम्। **औत्सुक्यानामिति।** मध्ये पूर्वपूर्वस्योत्तरोत्तरेणेति

१ स्वस्वाभिव्यञ्जकैः पृथग्वाक्यैरभिव्यङ्ग्यानामपि तत्तद्भावानां चमत्कारजनके एकस्मिन्महावाक्यार्थबोधे सहृदयानुभवविषयत्वमित्याशयः।

२ चित्तवृत्तिरूपा अमी भावा नैयायिकानां नये इच्छादिषु विशेषगुणेष्वेव समाविष्टाः स्युः। तन्नये च पूर्वभावस्य नाशे सत्येव भावान्तरस्योदयः स्यात्ततश्च कथमेककाले नानाभावानुभवरूपा सेयं शबलतेति शङ्का। ईदृशो नाशो व्यङ्ग्य एव कथं भवेत् [ उत्तरेणोपमर्दावस्थायां, हृदयेऽप्रतिफलनात् ]। न चायमुपमर्दपदेनाभिधातुं शक्य इत्यादिकं समाधानम्।

नापि चमत्कारी तस्मात् ।

'नारिकेलजलक्षीरसिताकदलमिश्रणे ।
विलक्षणो यथास्वादो भावानां संहतौ तथा ॥'

अत्रेदं बोध्यम्—य एते भावशान्त्युदयसंधिशबलताध्वनय उदाहृतास्तेऽपि भावध्वनय एव । विद्यमानतया चर्व्यमाणेष्विवोत्पत्त्यवच्छिन्नत्व-विनश्यदवस्थत्व-संधीयमानत्व-परस्परसमानाधिकरणत्वैः प्रकारैश्चर्व्यमाणेषु भावेष्वेव प्राधान्यस्यौचित्यात्, चमत्कृतेस्तत्रैव विश्रान्तेः । यद्यप्युत्पत्तिविनाशसंधिशबलतानां तत्संबन्धिनां भावानां च समानायां चर्वणाविषयतायां न प्राधान्यं विनिर्गन्तुं शक्यते, तथापि स्थितौ भावेषु प्रधानतायाः क्लृप्तत्वात्, भावशान्त्यादिष्वपि-तेष्वेव शान्तिप्रतियोगित्वादिभिर्व्यज्यमानेषु तस्याः कल्पयितुमौचित्यात् । किं च यदि भावशान्त्यादौ

शेषः । मूलकृतैव प्रकाशकृतैव । तत्त्वेऽप्याह—**न वेति** । तत्त्वेऽप्याह—**नापीति** । अत्र च सहृदयहृदयमेव प्रमाणमिति भावः । उपसंहरति—**तस्मादिति** । चूर्णिकेयम् । संहतौ मिश्रणे । **भावशान्त्युदेति** । भावसंबन्धिशान्त्यादीनां ध्वनय इत्यर्थः । स्थितौ तद्विषये । तेष्वेव भावेष्वेव । तस्याः प्रधानतायाः । ननु तत्र तत्कृतश्चमत्कारः, अत्र त्वेतत्कृत इति वैषम्यमत आह—**किं चेति** । सामान्येनोक्तमर्थं विशिष्योपपादयति—

१ अन्यपदार्थस्याऽऽस्वादमनुपजनयन्तो नारिकेलजलादयः पदार्था मिश्रणे सति विलक्षणमास्वादं यथोपजनयन्ति तथा पृथक्पृथगभिव्यज्यमाना अप्यमी भावा महावाक्यार्थबोधे संमिलितमपूर्वं चमत्कारमुपजनयन्तीत्याशयः ।

२ भावध्वनिषु (यत्र हि विद्यमानत्वावस्थापन्नो भावो भवति, तेषु) भावस्यैव प्राधान्यं दृश्यते, न विद्यमानत्वाऽवस्थायाः, तदनुसारमत्यपदेशात । एवमेव भावोदय-भावशान्त्यादिष्वपि उत्पत्त्यवच्छिन्नत्व-विनश्यदवस्थत्वादीनां प्रकाराणाम् (अवस्थानाम्) न प्राधान्यमुचितम्, अपि तु भावानामेवेत्याशयः ।

३ भावोदय-भावशान्त्यादिस्थले ।

४ उत्पत्ति-विनाशाद्यवस्थानां तत्संसृष्टानां भावानां च मध्ये कतरस्य प्राधान्यमिति निर्धारयितुं न शक्यत इत्यर्थः ॥

५ शान्तिप्रतियोगित्वादिभिः प्रकारैः (यस्य भावस्य शान्तिर्भवति स प्रतियोगी । यथा 'मुञ्चसि नाद्यापीति' पद्ये कोपस्य शान्तिः) चर्वणाविषयीकृतेषु तेषु भावेष्वेव प्रधानतायाः कल्पयितुमौचित्यम् ।

भावो न प्रधानम्, किं तु तदुपसर्जनं[1]कशान्त्यादिरेवेत्यभ्युपेयते तदा व्यज्यमान[2]भावेष्वभिहिततत्प्रशमादिषु काव्येषु भावप्रशमादिध्वनित्वं न स्यात्।

तथा हि।

'उषसि प्रतिपक्षनायिकासदनादन्तिकमञ्चति प्रिये।
सुदृशो नयनाब्जकोणयोरुदियाय त्वरयारुणद्युतिः॥'

अत्रोत्पूर्वकेणैतिना भावोदयस्य वाच्यतयैव प्रत्यायनात्। (ननु) उदयस्य वाच्यत्वेऽपि भावस्यावाच्यत्वाद्ध्वनित्वं सुस्थमिति चेत्, प्रधानस्य व्यपदेशानौपयिक[3]त्वेऽप्रधानकृतव्यपदेशानुपपत्तेः। अस्मन्मते तूत्पत्तेर्वाच्यत्वेऽप्युत्पत्त्यवच्छिन्नस्यामर्षस्य प्रधानस्यावाच्यत्वाद्युक्त एव भावोदयध्वनिव्यपदेशः।

एवं व्यज्यमानभा[4]वप्रतियोगिकस्य प्रशमस्य वाच्यत्वे भावशान्तिध्वनित्वं न स्यात्।

यथा—

'क्षमापणैकपदयोः पदयोः पतति प्रिये।
शेमुः सरोजनयनानयनारुणकान्तयः॥'

ननु शब्दवाच्यानां प्रशमादीनामरुणकान्त्यैवान्वयात् अरुणकान्तिप्रशमादेरेव वाच्यत्वं पर्यवसितम्, न तु तादृशप्रशमादिव्यङ्ग्यस्य रोप-

**तथा हीति**। अञ्चतीति सप्तमी। **उत्पूर्वकेणैतिनेति**। उदुपसर्गपूर्वकेणेण्धातुनेत्यर्थः। शङ्कते—**उदयेति**। अनौपयिकत्वेऽप्रधानेत्यत्राकारप्रश्लेषः। उदयस्थले दोषं दत्त्वा शान्तिस्थले तमाह—**एवमिति**। एकपदयोरसाधारणस्थानयोः। पततीति सप्तमी। उभयत्र शङ्कते—**नन्विति**। **वाच्यान्वयेति**। सकलपदानामिति शेषः।

१ सः (भावः) उपसर्जनं गौणो यस्मिन्नीदृशः शान्त्यादिरेव प्रधानमिति अभ्युपेयते स्वीक्रियते।

२ व्यज्यमानो भावो येषु, अभिहितश्च तत्प्रशमादिर्येषु काव्येषु। अर्थात् येषु काव्येषु भावो व्यञ्जनया गम्यः प्रशमादिस्तु अभिधया तेषु।

३ भवन्मते प्रधानं य उदयादिस्तस्य व्यपदेशार्थं (ध्वनित्वस्थापनार्थम्) अनुपयोगित्वे (अनर्हत्वे) अप्रधानकृतो व्यपदेशो नोपपद्यत इत्यर्थः।

४ व्यज्यमानो भावः प्रतियोगी यस्य, अर्थात् यस्य प्रशमो वाच्यः स भावो व्यङ्ग्यः; प्रशमस्तु वाच्य इत्यर्थः।

प्रशमादेः, व्यङ्ग्यव्यञ्जकभेदस्यावश्यकत्वात्। न चारुण्यव्यङ्ग्यरोषस्यैव वाच्यीभूतप्रशमाद्यन्वय इति वाच्यम्। वाच्यव्यङ्ग्यप्रतीत्योरानुपूर्व्येण सिद्धतया वाच्यान्वयबोधवेलायां वाच्यैः सह व्यङ्ग्यान्वयानुपपत्तेः। अन्यथा 'सुदृशो नयनाब्जकोणयोः' इत्यस्यान्वयो न स्यात्।[1] मैवम्। एवमपि—

'निर्वासयन्तीं धृतिमङ्गनानां शोभां हरेरेणदृशो धयन्त्याः।
चिरापराधस्मृतिमांसलोऽपि रोषः क्षणप्राघुणिको बभूव॥'

इत्यादावपि भावप्रशमध्वनित्वापत्तेः, भावस्य वाच्यत्वेऽपि प्रधानस्य तत्प्रशमस्य व्यङ्ग्यत्वात्। उभयोरप्यवाच्यत्वमपेक्षितमिति चेत्, प्रागुक्त-पद्यद्वये शमत्वोदयत्वाभ्यां शमोदययोर्वाच्यत्वादनुदाहरणत्वापत्तेः। इष्टा-पत्तिस्तु सहृदयानामनुचितैव। तस्माद्भावप्रशमादिष्वपि प्राधान्येन भावा-नामेव चमत्कारित्वम्, प्रशमादेस्तूपसर्जनत्वमतो न तस्य वाच्यतादोषः।

इदं पुनर्भावध्वनिभ्यो भावशान्त्यादिध्वनीनां चमत्कारवैलक्षण्ये

---

वाच्यैः प्रशमादिभिः। **व्यङ्ग्यान्वयेति**। आरुण्यव्यङ्ग्यरोषान्वयेत्यर्थः। अन्यथा तदङ्गीकारे। न स्यात्, रोषोदये सुदृक्त्वस्य बाधात्। तथा च रोषप्रशमादिध्वनित्वं सुस्थमिति भावः। निर्वासयन्तीं दूरीकुर्वतीम्। मांसलः पुष्टः। क्षणप्राघुणिकोऽतिथिः। शङ्कते—**उभयोरपीति**। एवमेव उक्तदोषद्वयाभावेऽपि। प्रधानाप्रधानयोरपीत्यर्थः। पद्यद्वये 'उषसि–' 'क्षमाप–' इत्यत्रेत्यर्थः। **सहृदयानामिति**। अत्र शास्त्रे तेषामेव मुख्यप्रमाणत्वेनोरीकारादिति भावः। अपिर्भावस्थितिसमुच्चायकः। नन्वेवं वैलक्षण्याना-पत्त्या भेदेनोक्त्यसंगत्यापत्तिरत आह—**इदं पुनरिति**। यदेकत्र शुद्धभावध्वनौ।

---

१ 'ननु' इत्यारभ्य'–'सुदृशो नयनाब्जकोणयोः' इत्यस्यान्वयो न स्यात्' एतत्पर्यन्तं प्रशमादिप्राधान्यवादिनः पूर्वपक्षिण उक्तिः। सर्वस्य निर्गलितः सारस्त्वयम्—

शेमुः इतिपदेन अरुणकान्तेः प्रशम एव वाच्यो जातो न त्वरुणकान्तिप्रशमेन व्यङ्ग्यः कोपरूपभावस्य प्रशमः। ननु 'शेमुः' इत्यनेन आरुण्यव्यङ्ग्यस्य रोषस्यैवान्वयादभिधेयता विवक्षितेति तु न शक्यं वक्तुम्। वाच्योत्तरमेव व्यङ्ग्यस्य प्रतीतिर्भवतीति क्रमः। ततश्च वाच्यान्वयसमये व्यङ्ग्यस्य बोध एव न पर्यवसीयते। कथं तेन सहान्वयः? एवं च क्षमापणै-केत्युदाहरणं प्रशमस्य वाच्यतया ध्वनित्वोदाहरणं न स्यादिति योऽयमस्मत्पक्षे दोषो दत्तः स न सिध्यति। 'रोषप्रशमस्याऽवाच्यत्वेन ध्वनेरेवेदमुदाहरणम्', इति पूर्वपक्षिण उक्तौ, मैवम् इत्यादिना सिद्धान्तिनः समवतरणम्।

निदानम्—यदेकत्र चर्वणायां भावेषु स्थित्यवच्छिन्नामर्षादित्वम्[1], अमर्षादित्वमेव वा प्रकारः, अन्यत्र तु प्रशमावस्थत्वादिरपीति । रसस्य तु स्थायिमूलकत्वात्प्रशमादेरसंभवः, संभवे वा न चमत्कारः, इति न स विचार्यते ।

सोऽयं निगदितः सर्वोऽपि रत्यादिलक्षणो व्यङ्ग्यप्रपञ्चः स्फुटे प्रकरणे झगिति प्रतीतेषु विभावानुभावव्यभिचारिषु सहृदयतमेन प्रमात्रा सूक्ष्मेणैव समयेन प्रतीयत इति हेतुहेतुमतोः पौर्वापर्यक्रमस्यालक्षणादलक्ष्यक्रमो व्यपदिश्यते । यत्र तु विचारवेद्यं प्रकरणम्, उन्नेया वा विभावादयस्तत्र सामग्रीविलम्बाधीनं चमत्कृतेर्मान्थर्यमिति संलक्ष्यक्रमोऽप्येष भवति । यथा—'तल्पगतापि च सुतनुः' इति प्रागुदाहृते (१४ पृष्ठे) पद्ये 'संप्रति' इत्येतदर्थावगतिर्विलम्बेन[2]। न खलु धर्मिग्राहक[3]मानसिद्धं रत्यादिध्वनेरलक्ष्यक्रमव्यङ्ग्यत्वम् । अत एव लक्ष्यक्रमप्रसङ्गे—

"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

इत्यत्र कुमारीस्वाभाव्यादप्यधोमुखत्वविशिष्टस्य लीलाकमलपत्रगणनस्योपपत्त्या मनाग्विलम्बेन नारदकृतविवाहादिप्रसङ्गविज्ञानोत्तरं व्रीडा-

विशेषणस्याव्यावर्तकत्वाद्विशेष्यमात्रकृतचमत्काराच्चाह—**अमर्षादित्वमेव वेति** । अन्यत्र भावशान्त्यादिध्वनौ । इतिर्निदानसमाप्तौ । ननु भावशान्त्यादिवद्रसशान्त्यादिः कुतो नोदाहृतोऽत आह—**रसस्येति । असंभव इति** । तत्त्वे स्थायित्वानुपपत्तेरिति भावः । नन्वभिव्यक्तिनाशादिरेव प्रशमादिरत आह—**संभवे वेति** । रत्यादिलक्षणो रत्यादिस्वरूपः । समयेन कालेन । **हेत्विति** । विभावादिरत्याद्यैरित्यर्थः । प्रकरणस्य स्फुटत्वेऽप्याह—**उन्नेया वेति** । अत एव तन्मात्रत्वाभावादेव । अस्योभयत्रान्वयः ।

१ भावध्वनौ—स्थित्यवस्थापन्नामर्षादित्वस्य, केवलामर्षादित्वस्य वा प्रकारतया चर्वणा भवति, भावशान्त्यादिध्वनिषु तु भावत्वेन सह प्रशमावस्थापन्नत्वस्यापि । अर्थात् भावध्वनौ अमर्षादिकृतचमत्कार एवास्वादनीयो भवति, भावशान्त्यादिषु तु भावैः सह प्रशमोदयादिकृतश्चमत्कारोऽप्यास्वादनीयो भवतीत्याशयः ।

२ एतत्स्पष्टीकरणं तल्पगतेतिपद्य (१४ पृष्ठे) टिप्पण्यां द्रष्टव्यम् ।

३ धर्मिणो ग्राहकेण मानेन सिद्धम् । अर्थात् रत्यादीनां ध्वनयो येन प्रमाणेन गृह्यन्ते तेनैव प्रमाणेन तेषामसंलक्ष्यक्रमतापि गृहीता भवेदित्यपि नास्तीत्याशयः ।

याश्चमत्करणाल्लक्ष्यक्रमोऽयं ध्वनिः" इति प्राहुरानन्दवर्धनाचार्याः ।
"रसभावादिरर्थो ध्वन्यमान एव, न वाच्यः । तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः" इति चाभिनवगुप्तपादाचार्याः । स्यादेतत्, यद्ययं रसादिः संलक्ष्यक्रमस्य विषयः स्यात्—अनुरणनभेदगणनप्रस्तावे "अर्थशक्तिमूलस्य द्वादश भेदाः" इत्यभिनवगुप्तोक्तिः, "तेनायं द्वादशात्मकः" इति मम्मटोक्तिश्च न संगच्छेत, वस्त्वलंकारात्मना द्विविधेन वाच्येन स्वतःसंभवित्व-कविप्रौढोक्तिनिष्पन्नत्व-कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नत्वैस्त्रिभिरुपाधिभिस्त्रैविध्यमापन्नेन षडात्मना वस्त्वलंकारयोरिव रसादेरप्यभिव्यञ्जनादष्टादशत्वप्रसङ्गात् ।

अत्रोच्यते—प्रकटैर्विभावानुभावव्यभिचारिभिरलक्ष्यक्रमतयैव व्यज्यमानो रत्यादिः स्थायिभावो रसीभवति, न संलक्ष्यक्रमतया । रसीभावो हि नाम झगिति जायमानालौकिकचमत्कारविषयस्थायित्वम् । संलक्ष्यक्रमतया व्यज्यमानस्य रत्यादेस्तु वस्तुमात्रतैव, न रसादित्वमिति

देवर्षौ नारदे । पितुर्हिमालयस्य । तथापि ध्वन्यमानत्वमात्रत्वेऽपि । **अनुरणनभेदेति ।** ध्वनिभेदेत्यर्थः । तदेत्यादिः । रसीभवत्यरसो रसः संपद्यते । एवव्यवच्छेद्यमाह—**न संलक्ष्येति ।** एवमग्रेऽपि । तेषामभिनवगुप्तादीनाम् । वर्णनेन । व्याख्याकारैरिति शेषः ।

१ एवंविधा चेष्टा कुमारीस्वभावादपि संभवति । ततश्च सेयं चेष्टा स्वाभाविकी आहोस्वित् कस्यचिद्भावस्य गोपनायेति जिज्ञासायां प्रकरणाद्यन्वेषणे सोयं व्रीडायाः (तद्गोपनात्मकस्यावहित्थस्य) चमत्कारः परस्तादुदेतीति संलक्ष्यक्रमत्वमित्याशयः ।

२ अर्थात् संलक्ष्यक्रमोपि स भवतीति ।

३ स्यादित्यनेन पुनः शङ्का—यदि रसादिः संलक्ष्यक्रमः स्यात्तत्श्च क्रमस्य लक्ष्यतया अनुरणनमत्रापि सिद्धम् (पूर्वं वाच्यानां विभावादीनां प्रतीतिस्ततश्च व्यङ्ग्यस्य रसस्याऽभिव्यक्तिरिति) । एवं च यथा वस्त्वलंकाररूपयोर्व्यङ्ग्ययोः स्वतःसंभवित्वादिभिरुपाधिभिः प्रत्येकं षड्भेदता तथा रसस्यापि स्यादिति त्रयाणामष्टादशभात्वं स्यादिति ।

४ झगिति जायमानो यः अलौकिकचमत्कारस्तस्य विषयः स्थायी यस्य तत्त्वम् । अर्थात् तादृशचमत्कारस्य विषयो यत्र रत्यादिस्थायिभावः स्यात्स एव रसः ।

५ काशीमुद्रितपुस्तके तु 'वस्तुमात्रतैव' इत्यस्य स्थाने 'भावतैव' । एवं 'न तदुक्तीनां विरोधः' इति नकारोपि लुप्तः । सोयं पाठो भ्रामक एव अविचारात् ।

तेषामाशयस्य वर्णनेन न तदुक्तीनां विरोधः। उपपत्तिस्त्वर्थेऽस्मिन्विचारणीया। रसभावादिरर्थ इत्यत्र रसादिशब्दो रत्यादिपरः।

तदित्थं निरूपितस्यास्य रसादिध्वनिप्रपञ्चस्य पदवर्णरचनावाक्यप्रबन्धैः पदैकदेशैरवर्णात्मकै रागादिभिश्चाभिव्यक्तिमामनन्ति। तत्र वाक्यगतानां पदानां सर्वेषामपि स्वार्थोपस्थितिद्वारा वाक्यार्थज्ञानोपायत्वे समानेऽपि कुर्वद्रूपतया चमत्कारायोगव्यवच्छिन्नत्वेन कस्यचिदेव ध्वनिव्यपदेशहेतुत्वम्। यथा 'मन्दमाक्षिपति' (१४ पृष्ठे) इत्यत्र मन्दमित्यस्य।

---

**उपपत्तिस्त्वर्थे इति।** विभावादिप्रतीते रसप्रतीतेश्च विद्यमानस्य सूक्ष्मकालान्तरलरूपस्य क्रमस्य सहृदयेनाकलने तस्य विगलितवेद्यान्तरत्वानापत्त्या रसत्वभङ्गापत्तिः। विगलितवेद्यान्तरत्वं च सकलसहृदयानुभवसाक्षिकमिति तवापि संमतमिति तदुपपत्तिर्बोध्या। नव्यास्तु—वक्तृवैशिष्ट्यप्रकरणादिज्ञानसहितस्यैव व्यञ्जकत्वात्तत्सहितविभावादिज्ञानोत्तरं जायमानरसप्रतीतेर्विभावादिज्ञानापेक्षया विद्यमानक्रमालक्षणेन चालक्ष्यक्रमत्वम्। तच्च प्रकरणादिज्ञानविलम्बेन विभावादिज्ञानविलम्बेऽपि पूर्वोदाहरणेऽक्षतमेव। नहि विभावादिज्ञानस्य तज्जनकस्य च क्रममादायालक्ष्यक्रमत्वम्, अपि तु तज्जन्यस्य। एतदेवाभिप्रेत्य 'अर्थशक्तिमूलस्य द्वादशभेदाः' इत्यभिनवगुप्तोक्तिर्यत्किंचिद्वाच्यार्थापेक्षया क्रमोऽपि गृह्यत इत्यभिप्रेत्य लक्ष्यक्रमत्वोक्तिर्यथाकथंचिन्नेया। नहि विभावादिप्रतीतिरहितयत्किंचिद्वाच्यार्थमात्रप्रतीतौ विगलितवेद्यान्तरता सहृदयानुभवसाक्षिका। येन तत्क्रमग्रहणेऽपि रसत्वहानिः स्यादित्याहुः। **रसभावादिरर्थ इत्यत्रेति।** अभिनवगुप्तवाक्य इत्यर्थः। अन्यथा तदसंगतिः स्पष्टैवेति भावः। कस्यचिदेव पदस्य। **यथेति।**

१ काशीमुद्रितपुस्तके तु 'उपपत्तिस्त्वर्थे सति वारणीया' इति पाठो विचिन्त्य एव।

२ 'रसभावादिरर्थो ध्वन्यमान एव, न वाच्यः। तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः' इत्यभिनवगुप्तवाक्ये रसभावादिपदेन रत्यादिर्ग्राह्यः। यतो हि तन्मतानुसारमलक्ष्यक्रमतायामेव रसत्वं भवति। अन्यथा अनुरणनानुसारं रसस्यापि पदविषयत्वं संभवेत्। तस्मात् 'रसभावादि'-पदेन रत्यादयो ग्राह्याः।

३ चमत्कारस्य अयोगः असंबन्धः तेन व्यवच्छिन्नं रहितम्। अर्थात् सर्वदा चमत्कारसहितमेव (नतत्पदम्) उपलभ्येत।

रचनावर्णानां तु पदवाक्यान्तर्गतत्वेन व्यञ्जकतावच्छेदककोटिप्रविष्टत्वमेव न तु व्यञ्जकत्वमिति यद्यपि सुवचम्, तथापि पदवाक्यविशिष्टरचनात्वेन, रचनाविशिष्टपदवाक्यत्वेन वा व्यञ्जकत्वमिति विनिगमनाविरहेण घटादौ दण्डचक्रादेः कारणत्वस्येव प्रत्येकमेव व्यञ्जकतायाः सिद्धिरिति प्राञ्चः ।

वर्णरचनाविशेषाणां माधुर्यादिगुणाभिव्यञ्जकत्वमेव न रसाभिव्यञ्जकत्वम्, गौरवा[2]न्मानाभावाच्च । न हि गुण्यभिव्यञ्जनं विना गुणाभिव्यञ्जकत्वं नास्तीत्यस्ति नियमः, इन्द्रियत्रये[3] व्यभिचारात् । इत्थं च स्वस्वव्य[4]ञ्ज-

----

प्रतिपादितमधस्तात् । अभ्यर्हितत्वाद्रचनाशब्दस्य पूर्वनिपातः । **कोटीति** । रचनाविशिष्टपदत्वादिना व्यञ्जकत्वमिति भावः । इति इत्यत्र । **घटादाविति** । दण्डविशिष्टचक्रादेश्चक्रादिविशिष्टदण्डादेर्वा कारणत्वमित्यत्र विनिगमनाविरहेण यथा कारणतायाः प्रत्येकपर्याप्तिस्तथात्र व्यञ्जकताया इति भावः । नव्यमतमाह—**वर्णेति** ।

१ रचना ( वर्ण-पद-गुम्फः ) वर्णा वा पृथग्रूपेण नोपलभ्यन्ते, किन्तु पदानां वाक्यानां वा अन्तर्गताः प्राप्यन्ते । एवं च रचनाविशिष्टपदत्वेन रचनाविशिष्टवाक्यत्वेन च पदानां वाक्यानां वा व्यञ्जकत्वम्, वर्णविशिष्टपदत्वेन वाक्यत्वेन च वर्णानां व्यञ्जकत्वं निरुच्येत । ततश्च रचनावर्णानां व्यञ्जकतावच्छेदक-( व्यञ्जकविशेषण-)-कोटिप्रविष्टत्वमेव, न स्वतन्त्रतया व्यञ्जकत्वमिति शङ्का । अत्र पद-वाक्यविशिष्टवर्णरचनात्वेन व्यञ्जकत्वं ग्राह्यमाहोस्वित् वर्ण-रचनाविशिष्टपद-वाक्यत्वेनेति विनिगमनाविरहात् ( एकतरपक्षसाधनाय दृढतरप्रमाणाभावात् ) प्रत्येकस्यैव व्यञ्जकता ग्राह्या । यथा हि घटं प्रति दण्डविशिष्टचक्रस्य कारणत्वम्, उत चक्रविशिष्टदण्डस्येति, उभयत्र विनिगमनाऽभावे कारणता प्रत्येकपर्याप्ता गृह्यते इति समाधानम् ।

२ रसव्यञ्जकानां संख्या मुधैव प्रवृद्धा स्यादिति गौरवम् ।

३ घ्राण-रसन-श्रोत्रेषु । एभिर्हि गन्धादिगुणानामेव प्रत्यक्षं भवति, न गुणिनां पृथिव्यादीनामपि ।

४ गुणिनो गुणाश्च ( पृथिव्याद्या गन्धाद्याश्च ) उदासीना वा ( येषां मिथो गुणगुणित्वादिसंबन्धो नास्ति ते ) स्वस्वव्यञ्जकैः ( शब्दादिभिः साधनैः ) पृथक्पृथगुपस्थाप्यन्ते । परमिमे कदाचित्परस्परमिलिताः कदाचिच्च तटस्थाः सन्तः प्रमितेः ( प्रत्यक्षस्य ) गोचरा भवन्ति [ अर्थात् नायं नियमो यद् गुणेन सह गुणिनोऽपि प्रत्यक्षं भवेदेव ] । एवमेव रसा गुणाश्चापि स्वस्वव्यञ्जकैः पृथक्पृथगभिव्यक्ता अपि कदाचित्संमिलिताः कदाचिच्च तटस्थाः सन्तः अभिव्यक्तेर्विषया भवन्ति ( अभिव्यज्यन्ते ) । अर्थात् अत्रापि नायमनुगमः कर्तुं शक्यते यद् गुणानामभिव्यञ्जने गुणिनाम् ( रसानाम् ) अपि अभिव्यञ्जनं स्यादिति । ततश्च वर्णरचनाद्याः स्वतन्त्रतया माधुर्यादिगुणानामेव व्यञ्जकाः स्वीकार्या न रसादेरिति नवीनानां मतम् ।

कोपनीतानां गुणिनां गुणानामुदासीनानां च यथा परस्परोपश्लेषेणौदासीन्येन वा तत्तत्प्रमितिगोचरता तथा रसानां तद्गुणानां चाभिव्यक्तिविषयतेति तु नव्याः । उदाहरणं तु 'तां तमाल' इत्यादि प्रागुक्तमेव ( ७९ पृष्ठे ) वाक्यस्य व्यञ्जकतायामपि 'आविर्भूता यदवधि' इत्यादि च ( ४१ पृष्ठे ) । प्रबन्धस्य तु योगवासिष्ठरामायणे[1] शान्तकरुणयोः, रत्नावल्यादीनि च शृङ्गारस्य व्यञ्जकत्वान्निदर्शनानि प्रसिद्धानि । मन्निर्मिताश्च पञ्च लहर्यो भावस्य । पदैकदेशस्य च 'निखिलमिदं जगदण्डकं वहामि' ( ५० पृष्ठे ) इति करूपतद्धितो वीररसस्य प्रागेवोदाहृतः । एवं रागादिभिरपि व्यङ्ग्यत्वे सहृदयहृदयमेव प्रमाणम् । एवमेषां रसादीनां प्राधान्येन निरूपितान्युदाहरणानि । गुणीभावे तु वक्ष्यन्ते, नामानि च । तत्र प्राधान्य एवैषां रसादित्वम्, अन्यथा तु रत्यादित्वमेव । नामानि[2] रसपदं तु रत्यादिपरमित्येके । अस्त्येव रसादित्वं किं तु न ध्वनिव्यपदेशहेतुत्वमित्यपरे ॥

इति महोपाध्यायपदवाक्यप्रमाणपारावारपारीणश्रीपेरमभट्टस्य
सूरेः सूनुना पण्डितराजजगन्नाथेन निर्मिते रसगङ्गाधरे
रसनिरूपणात्मकं पूर्वमाननम् ।

मन्नीति[3] । भावस्य तद्व्यङ्ग्यसंबन्धिप्रबन्धादिरूपव्यञ्जकस्य । उदाहरणानीति शेषः । **पदैकदेशस्य चेति** । चस्त्वर्थे । उदाहरणमिति शेषः । वीररसस्येत्यस्य व्यञ्जक इति शेषः । **रागादिभिरपीति** । रसस्येति शेषः । वक्ष्यन्ते इत्यत्र उदाहरणानीत्यस्यानुषङ्गः, तस्य चाग्रे नामानीति । रसवदित्यत्रेत्यर्थः ॥

इति प्रथमाननप्रकाशः ।

---

१ योगवासिष्ठ शान्तस्य, रामायणं करुणस्येति यथासंख्यं प्रबन्धव्यञ्जकतायामुदाहरणं ।

२ ननु प्राधान्य एव यदा रसादिव्यपदेशस्तर्हि गौणतायां 'रस'वत् इति नाम कथमिति शङ्का । 'रस' पदस्यात्र 'रतिप्रभृतिस्थायिनोऽर्थाः' इति समाधानम् ।

३ मन्निर्मिताः पञ्चलहर्य इति प्रतीकम् ।

मुद्रणदोषान् जहती दधती विषमेषु सान्द्रसाहाय्यम् ।
पूर्वाननपरिसर-ला सरला सरलायतां पठताम् ॥
भङ्गाय वि(कु)मतिसङ्गाद्रसगङ्गाधरमुपेयुषां विदुषाम् ।
बत मञ्जुनाथकर-ला सरला गरलायते सेयम् ॥

---

1 मुद्राद्वारकनिरोधादिप्रद्वाणं व्यसनसामयिकसाहाय्यं चादधत् उदारपुरुषोपि पूर्वेषामाननगतमुपदिदतीत्यादिरप्यर्थो विदां विदितप्राय एव ।

## द्वितीयमाननम्।

अथ संलक्ष्यक्रमध्वनिर्निरूप्यते—

स च तावद्विविधः, शब्दशक्तिमूलोऽर्थशक्तिमूलश्च। तत्राद्यो द्विविधः, व्यङ्ग्यस्य वस्तुत्वालंकारत्वाभ्यां द्वैविध्यात्। द्वितीयोऽपि वस्त्वलंकारात्मना लोकसिद्धेन, तथाभूतेनैव प्रतिभामात्रनिर्वर्तितेन च व्यञ्जकेनार्थेन चतुर्विधेन वस्त्वलंकारात्मनो द्विविधस्य व्यङ्ग्यस्य प्रत्येकं व्यञ्जनादष्टमूर्तिः। प्रतिभानिर्वर्तितत्वाविशेषाच्च कवितदुम्भितवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोर्न पृथग्भावेन गणनोचिता, उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः। न च तस्यापि कव्युम्भितत्वानपायात्तत्प्रयोज्यभेदान्तर्गतत्वमेवेति वाच्यम्। प्रथमोम्भितस्यापि लोकोत्तरवर्णनानिपुणत्वलक्षणकवित्वानपायात्पृथग्भेदप्रयोजकतानुपपत्तेः। एवं साकल्येन दशभेदोऽयम्।

तत्र केचिदाहुः—नानार्थस्य शब्दस्य सर्वेष्वर्थेषु संकेतग्रहस्य तुल्यत्वाच्छ्रुतमात्र एव तस्मिन्सकलानामर्थानामुपस्थितौ, शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति संदेहे च सति, प्रकरणादिकं तात्पर्यनिर्णायकं पर्यालोचयतः पुरुषस्य सति तन्निर्णये, तदात्मकपदज्ञानजाया एकार्थमात्रविषयायाः पुनः[2]पदार्थोपस्थितेरनन्तरमन्वयबोध इति नये द्वितीयायाः पदार्थोपस्थितेः प्राथमिक्या इव न कुतो[3] नानार्थगोचरतेति प्रकरणादिज्ञानस्य तदधीनतात्पर्यनिर्णयस्य वा पदार्थोपस्थितौ प्रतिब-

**तथाभूतेनैवेति**। वस्त्वलंकारात्मनेत्यर्थः। अन्येषां भेदानां संग्रहायाह—**प्रतिभेति**। **तदुम्भितेति**। तन्निबद्धेत्यर्थः। तस्यापि उम्भितोम्भितस्यापि। प्रतिबन्द्या समाधत्ते—**प्रथमोम्भीति**। **पृथग्भेदेति**। वृद्धोक्तिविषयान्छिशुक्तिविषय इव कव्युक्तिविषयात्कविनिबद्धोक्तिविषये चमत्काराधिक्यानुभविकत्वात्पृथगुक्तिः। ततः परं च प्रतिनिधानसाध्यप्रतीतिकतया चमत्कारस्थगनान्नोम्भितोम्भितादेः पृथग्गणनेति तु नव्याः। साकल्येन मिलित्वा। अयं संलक्ष्यक्रमध्वनिः। तन्निर्णये तात्पर्यनिर्णये। **तदात्मकपदेति**। तात्पर्यज्ञानात्मकपदेत्यर्थः। तस्य नष्टत्वादाह—**तदधीनेति**।

---

१ कविप्रौढोक्तिनिष्पन्नः, तदुम्भित-(-कविनिबद्ध-)-वक्तृप्रौढोक्तिनिष्पन्नश्च तयोः।

२ 'पुरः' इति काशीपुस्तके।

३ अर्थात् प्रथमा उपस्थितिर्यथा नानार्थविषयिणी भवति, तथा तात्पर्यनिर्णयोत्तरं जायमाना द्वितीयाप्युपस्थितिः कुतो न नानार्थविषया?

न्धकत्वं वाच्यम् । अन्यथा शाब्दबुद्धेरपि नानार्थविषयत्वापत्तिः । अत एवोक्तम्—'अनवच्छेदे विशेषस्मृतिहेतवः' इति । अनवच्छेदे तात्पर्यसंदेहे । विशेषस्मृतिरेकार्थमात्रविषया स्मृतिः । इत्थं च सुरभिमांसं भक्षयतीत्यादेर्वाक्याज्जायमाना द्वितीया प्रतीतिर्गवाद्युपस्थितेरभावात्कथं स्यादिति तदुपस्थित्यर्थं व्यञ्जनव्यापारोऽभ्युपेयः। अथैकया शक्त्या प्राकरणिकार्थोपस्थितेरनन्तरं द्वितीयया[1] शक्त्या द्वितीयार्थोपस्थितिस्तथापि स्यादिति चेत्, न स्यादेव, प्रकरणादिज्ञानस्य प्रतिबन्धकस्यानुपरमात् । अन्यथा प्राकरणिकार्थोपस्थितावेवाप्राकरणिकस्याप्यर्थस्य विषयत्वं स्यात् । न च प्रकरणादिज्ञानस्य तादृश[2]पदजन्यार्थोपस्थितिसामान्य एव प्रतिबन्धकत्वाद्व्यक्त्यापि कथमर्थान्तरोपस्थितिरिति शङ्क्यम् । धर्मिग्राह[3]कमानेनाप्राकरणिकोपस्थापकतयैव तादृशव्यक्तेरुल्लासात्तदजन्योपस्थितिं प्रत्येव प्रकरणादिज्ञानस्य प्रतिबन्धकत्वकल्पनात् ।

---

**द्वितीयेति** । गवादिविषयेत्यर्थः । प्रतिबन्धकसत्त्वादिति भावः । तदाह—**गवादीति** । नानाशक्तिरिति मताभिप्रायेण शङ्कते—**अथेति** । तथापि प्रतिबन्धकसत्त्वेऽपि । तस्य पूर्वशक्त्या पुनरनुपस्थितौ चारितार्थ्यात् । तथा च व्यञ्जनाव्यापारो निष्फल इति भावः । ज्ञानस्येत्युपलक्षणं तात्पर्यनिर्णयस्यापि । एवमग्रेऽपि । अनुपरमादनाशात् । सत्त्वादिति यावत् । शक्तेर्नानात्वे न मानम्, सत्त्वेऽपि वा तत्संकोच एवेति भावः । अन्यथा तत्सत्त्वेऽपि । तदङ्गीकारे व्यञ्जनाङ्गीकारेऽप्यनिर्वाह इति शङ्कते—**न चेति** । **तादृशेति** । द्वितीयेत्यर्थः । व्यक्त्यापि व्यञ्जनयापि । **तादृशेति** । अर्थान्तरोपस्थापकेत्यर्थः । **तदजन्येति** । व्यञ्जनाख्यवृत्त्यजन्येत्यर्थः । विनिगमनाविरहादाह—

---

१ नानाशक्तिवादिनो मते एकया शक्त्या पूर्वं सुगन्धितार्थस्योपस्थितौ, द्वितीयया (गोविषयया) शक्त्या द्वितीयस्य गवादेरर्थस्योपस्थितिः स्यात् । अर्थात् शक्त्या एकवारं यथा सुगन्धितार्थस्योपस्थितिस्तथा द्वितीयवारं शक्त्यैव गवाद्यर्थोपस्थितिरिति पूर्वपक्षः ।

२ नानार्थकपदजन्या या द्वितीयार्थोपस्थितिस्तत्सामान्ये । अर्थात् नानार्थकपदेन शक्त्या व्यञ्जनया वा यादृश्यपि द्वितीयार्थोपस्थितिर्भवेत्तां सर्वां प्रति तात्पर्यज्ञानस्य प्रतिबन्धकत्वं स्यादिति शङ्का ।

३ धर्मिणो ग्राहकं यन्मानं तेन । अर्थात् येन प्रमाणेन व्यक्तेरुल्लासो विदितस्तेनैवैतदपि विदितं यत् प्रकरणादिज्ञानं व्यक्त्यजन्योपस्थितिम् (अर्थात् व्यञ्जनातोऽतिरिक्ता या अभिधा तज्जन्यार्थोपस्थितिम्) प्रत्येव प्रतिबन्धकं, न व्यञ्जनाजन्यां प्रति । यतो हि अप्राकरणिकार्थस्य (गवादेः) उपस्थापनायैव व्यञ्जनाया अवतारः ।

व्यक्तिज्ञानस्योत्तेजकत्वकल्पनाद्वा । एतदेव सर्वमभिसंधायोक्तम्—

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥'

यत्रणमपरार्थोपस्थापनप्रतिबन्ध इति ।

अपरे त्वाहुः—नानार्थशब्दजशाब्दबुद्धौ तात्पर्यनिर्णयहेतुताया अवश्यकल्प्यत्वात्प्रथमं नानार्थशब्दादनेकार्थोपस्थानेऽपि प्रकरणादिभिस्तात्पर्यनिर्णयहेतुभिरुत्पादिते तस्मिन्यत्र तात्पर्यनिर्णयस्तस्यैवार्थस्यान्वयबुद्धिर्जायते, नान्यस्येति सरणावाश्रीयमाणायां नैकमात्रगोचरस्मृत्यपेक्षा, नाप्यपरार्थोपस्थानप्रतिबन्धकत्वकल्पनम् । एवं च प्रागुपदर्शितनानार्थस्थले प्रकरणादिज्ञानाधीनात्तात्पर्यनिर्णयात्प्राकरणिकार्थशाब्दबुद्धौ जातायामतात्पर्यार्थविषयापि शाब्दबुद्धिस्तस्मादेव शब्दाज्जायमाना कस्य व्यापारस्य साध्यतामालम्बताम्, ऋते व्यञ्जनात् । न च शक्तिसाध्या सेति वाच्यम् । तदधीनबोधं प्रति तात्पर्यनिर्णयस्य हेतुत्वात् । व्यक्त्यधीनबोधस्तु नावश्यं तात्पर्यज्ञानमपेक्षते ।

नन्वेकमात्रगोचरस्मृतेस्तच्छाब्दबुद्धावनपेक्षितत्वे 'विशेषस्मृतिहेतवः' इति प्राचां ग्रन्थः कथं संगच्छते ? कथं वा प्रकरणादिज्ञानस्यापरार्थो-

---

**व्यक्तिज्ञानस्येति** । बोधकताविशेषः शक्तिः, तद्विशेषो लक्षणा, तद्विशेष एव च व्यञ्जनेत्यालंकारिकसमयः । तज्ज्ञानं च शाब्दबोधे हेतुरित्यभिप्रायः । **उक्तम्** । काव्यप्रकाशकृतेति भावः । **प्रथमं** तात्पर्यनिर्णयात्पूर्वम् । तस्मिंस्तात्पर्यनिर्णये । इतिः पूर्वोक्तार्थस्याग्रिमनिषेधद्वये हेतुत्वबोधकः । **नावश्यमिति** । न नियमेनेत्यर्थः । व्यञ्जयानेकस्थले त्वपेक्षैवेति भावः । **तात्पर्यज्ञानमपेक्षते इति** । धर्मिग्राहकमानेन तस्यास्तथैव सिद्धेरिति भावः । इतिरपरमतसमाप्तौ । उक्तिश्चेत्यस्य कथं संगच्छत इत्यत्रानुषङ्गः ।

---

१ प्रकरणादिज्ञानेन अप्राकरणिकार्थोपस्थितिः प्रतिबद्धा, किन्तु व्यञ्जनाजन्यं ज्ञानं तत्रोत्तेजकमिति न तदर्थोपस्थितौ बाधः । यथा प्रतिबन्धकसत्तायामपि उत्तेजकस्य मण्यादेः सत्त्वे वह्नेर्दाहकत्वस्य न प्रतिबन्धः ।

२–३ अस्मिन्मते—पूर्वमतवत् एकार्थविषयिणी या पुनः पदार्थोपस्थितिर्भवति न तदपेक्षा । द्वितीयार्थोपस्थितौ प्रकरणादेः प्रतिबन्धकत्वकल्पनमपि नावश्यकम्, पूर्वमेव तस्य प्रतिबद्धत्वात् ।

४ काव्यार्थभावनापरिपक्वमतीनां साऽवश्यं भवति । कवेरपि च तत्र संरम्भः, तादृश(नानार्थबोधक)पदप्रयोगात् । ततश्च सा व्यञ्जनाव्यापारसाध्यैव ।

पस्थानप्रतिबन्धकत्वविरहे संयोगाद्यैरनेकार्थस्य शब्दस्य वाचकताया नियन्त्रणोक्तिश्चेति चेत् ? इत्थम्—स्मृतिशब्दस्य निश्चयपरतया विशेषस्मृतिशब्देन विशेषविषयस्तात्पर्यनिर्णयो गृह्यते । संयोगाद्यैर्वाचकताया नियन्त्रणं चैकार्थमात्रविषयकतात्पर्यनिर्णयजननद्वारा शाब्दबुद्ध्यनुकूलत्वम् । अवाच्यार्थोऽतात्पर्यार्थः । एवं च न ग्रन्थासंगतिरित्यपि वदन्ति । अथ प्राकरणिकार्थबोधानन्तरं तादृशपदज्ञानस्योपरमात्कथं व्यक्तिवादिनाप्यर्थान्तरधीः सूपपादेति चेत् । मैवम् । प्रथमार्थप्रतीतेर्व्यापारस्य सत्त्वाददोष इत्येके । अर्थप्रतीतौ शक्यतावच्छेदकस्येव पदस्यापि विशेषणतया भानात्प्राथमिकशक्यार्थबोधस्यैव पदज्ञानत्वादित्यपरे । आवृत्त्या पदज्ञानं सुलभमित्यपि कश्चित् । तदित्थं नानार्थस्थलेऽनुरणनीयं व्यञ्जनं शब्दशक्तिमूलम्, शब्दस्य परिवृत्त्यसहत्वादिति ध्वनिकारानुयायिनो वर्णयन्ति ।

अन्ये त्वत्र प्रत्यवतिष्ठन्ते । यत्तावदुक्तमेकार्थमात्रविषया पदार्थोपस्थिति-

**इत्यपि वदन्तीति** । अपरे इति भावः । **तादृशेति** । तात्पर्यज्ञानात्मकेत्यर्थः । **सत्त्वादिति** । तथा च तेन संबन्धेन तत्सत्त्वमिति भावः । **पदस्यापीति** । 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥' इति हर्युक्तेरिति भावः । **परिवृत्तीति** । पर्यायान्तरेणाऽबोधनादिति भावः । अत्र मतद्वये । तत्राद्यमते आह—**यत्तावदिति** । ननु तात्पर्यज्ञानस्य तत्रैवोपयोग इति

१ तथा च 'संयोगो विप्रयोगश्च' इत्यादिकारिकाया अयमर्थः—'शब्दार्थस्य अनवच्छेदे तात्पर्यसंदेहे सति संयोगो विप्रयोगश्च इत्यादयः विशेषस्मृतेः विशेषविषयस्य तात्पर्यनिर्णयस्य हेतवो भवन्ति' इति ।

व्यञ्जनास्वरूपबोधिकायाः 'अनेकार्थस्य शब्दस्य' इत्यादिकारिकाया अप्ययमर्थः—अनेकार्थस्य शब्दस्य संयोगाद्यैः वाचकत्वे नियन्त्रिते एकार्थविषयकतात्पर्यनिर्णयेन (अतात्पर्यार्थं विरहय्य) अभिधाजन्ये शाब्दबोधे निश्चिते (पुनरपि) अवाच्यार्थस्य अतात्पर्यविषयस्य (सुरभीत्यादौ गवाद्यर्थस्य) बोधकृत् यो व्यापारः सा व्यञ्जनेति ।

२ पदज्ञानोत्तरं प्राकरणिकार्थबोधः, तदनन्तरं च अप्राकरणिकार्थ-(व्यङ्ग्यार्थ-)-बोधः, तथा च पदज्ञानोत्तरं बोधनव्यापारस्य शृङ्खला न विच्छिन्नेत्याशयः ।

३ प्राथमिको यः शक्यार्थबोधः (प्राकरणिकार्थबोधः) तस्मिन् विशेषणविधया पदस्यापि भानं स्यात् (न सोऽस्ति प्रत्यय इति हर्युक्त्यनुसारम्) । ततश्च स प्राकरणिकार्थबोध एव पदज्ञानस्थानीयः स्यात् ।

स्तदन्वयबोधेऽपेक्ष्यत इति तदसारम् । नानार्थादर्थद्वयोपस्थितावपि प्रकरणादिज्ञानाधीनतात्पर्यमहिम्नैव विवक्षितार्थशाब्दबोधोपपत्तेः, एकार्थमात्रोपस्थित्यपेक्षायां मानाभावात् । अपरार्थोपस्थापकसामग्र्याः पदज्ञानस्य सत्त्वेन तदुपस्थितेरप्यौचित्याच्च । न च प्रकरणादिज्ञानं तदधीनतात्पर्यज्ञानं वा परार्थोपस्थाने प्रतिबन्धकमिति शक्यं वक्तुम् । संस्कार[2]तदुद्बोधकयोः सत्त्वे स्मृतेः प्रतिबन्धस्य क्वाप्यदृष्टत्वात् । अत्रैव स्मृतावयं प्रतिबध्यप्रतिबन्धकभावः कल्प्यते, न स्मृत्यन्तरे इत्यप्यहृदयंगमम् । तादृशकल्पनाया निष्फलत्वात्, अनुभवविरुद्धत्वाच्च । तथा हि नानार्थशक्तिविषयकदृढसंस्कारशालिनां प्रकरणज्ञानवतामपि पयो रमणीयमित्यादेर्वाक्यात्प्रथममर्थद्वयोपस्थितिरनुभवसिद्धा । अत एव पयो रमणीयमित्यादिवाक्यमकस्मादप्याकर्णितवद्भिः प्रकरणाद्यभिज्ञैरप्रकरणज्ञाः पांसुरपादा वक्तुस्तात्पर्यं बोध्यन्ते, नूनमस्य दुग्धे तात्पर्यं शब्दस्य, न तु जल इति । यदि च प्रकरणादिज्ञानं नानार्थशब्दाज्जायमानामप्राकरणिकार्थोपस्थितिं प्रतिबध्नीयात्तत्कथमेते तदानीमनुपस्थित[3]जलाः प्रकरणज्ञा जलतात्पर्यं निषेधेयुरित्यहृदयंगम एवायमप्राकरणिकार्थोपस्थापनप्रतिबन्धकभावः प्रकरणादिज्ञानस्य ।

तदावश्यकत्वमत आह—**अपरेति** । तदुपस्थितेरपि अपरार्थोपस्थितेरपि । शङ्कते—**अत्रैवेति** । ननूपायस्योपायान्तरादूषकत्वात्साप्युचितात आह—**अनुभवेति** । **प्रकरणेति** । प्रकरणादीत्यर्थः । अपिना तदज्ञानिसमुच्चयः । अत एव तस्या अनुभवसिद्धत्वादेव । विपक्षे बाधकमाह—**यदि चेति** । अनुपस्थितजला इति हेतुगर्भं विशेष-

१ 'तत्र केचिदाहुः' इत्यादिना यदाद्यं मतमुक्तं तत्र प्रथमा नानार्थविषयिणी । द्वितीया च तात्पर्यज्ञानाधीना एकार्थमात्रविषयिणी पदार्थोपस्थितिः तदन्वयबोधे पदार्थान्वयबोधे (शाब्दबोधे) अपेक्ष्यते इत्युक्तम् । तत्रान्येषां (ग्रन्थकारादीनाम्) विप्रतिपत्तिः . अयमाशयः—वक्ता हि कञ्चित्प्रसङ्गमालम्ब्यैव तं तं नानार्थशब्दमुच्चारयेत् । ततश्च प्रसङ्गाधीनेन तात्पर्यज्ञानेन (भवन्मतानुसारं नानार्थविषयकपदार्थोपस्थितिप्रसङ्ग एव) विवक्षितार्थविषयकः शाब्दबोधो भवेत् । का आवश्यकता एकार्थमात्रविषयिण्याः पदार्थोपस्थितेः ? ।

२ कोषादिज्ञानबलान्नानार्थकशब्दे यो ह्यनेकार्थविषयको दृढः संस्कारः, तादृशप्रसङ्गादिर्यश्च तदुद्बोधकस्तयोः सत्त्वे ।

३ भवन्मतानुसारं प्रकरणेन जले तात्पर्यं प्रतिबद्धम् । अतो जलार्थस्योपस्थितिरेव तेषां न भवेत् । ततः कथमेते जलतात्पर्यं निषिध्येयुः ? न हि अप्राप्तं प्रतिषिध्यत इति ।

यदप्युच्यते प्रकरणादिज्ञानात्प्राकरणिकेऽर्थे तात्पर्यविषयतया निर्णीते तदीयशाब्दबोधानन्तरमतात्पर्यविषयीभूतार्थबोधो जायमानो व्यञ्जनव्यापारसाध्य इति। तत्र किमयं नानार्थस्थले सर्वत्रैव व्यञ्जनोल्लासः, आहोस्वित्क्वचिदेवेति संमतम्। नाद्यः। प्राकरणिकाप्राकरणिकयोरर्थयोः शाब्दबुद्धौ सर्वत्राभ्युपगम्यमानायां तात्पर्यज्ञानकारणतायाः कल्पनस्य नैरर्थक्यापत्तेः। न च शक्तिजबोधे सा कल्प्यते। व्यक्तिजबोधस्तु तात्पर्यज्ञानं विनापि भवतीति तत्स्थाने शक्तिजबोधवारणाय तत्कल्पनमिति वाच्यम्। अतात्पर्यार्थबोधस्य सार्वत्रिकत्वे तस्य शक्तिजतायामपि बाधकाभावात्। अथ नानार्थशब्दादर्थद्वयोपस्थितौ सत्यां प्रकरणादिना सत्येकस्मिन्नर्थे तात्पर्यनिर्णये तस्यैवार्थस्य प्रथमं शाब्दबुद्धिर्जायते, नापरस्यार्थस्येति नियमरक्षणाय शक्तिजतदर्थशाब्दबुद्धौ तदर्थतात्पर्यज्ञानं हेतुरिष्यते। अन्यथा तात्पर्यविषयतया निर्णीतस्यार्थस्येवातथाभूतस्यापरस्याप्यर्थस्य प्रथमं

---

णम्। तदुपस्थितेरेवाभावादिति भावः। **तत्स्थाने** व्यक्तिजबोधस्थाने। तत्कल्पनं तात्पर्यज्ञानकारणताकल्पनम्। कार्यकारणभावानङ्गीकारे नियमभङ्गमाह—**अन्यथेति**।

१ प्राकरणिकार्थसंबन्धिशाब्दबोधानन्तरम्।

२ अप्राकरणिकार्थस्यापि बोधो यदा जातस्तदा किं फलं प्रकरणज्ञानस्य?। तद्धि अप्राकरणिकार्थनिवारणार्थम्। यदा हि नानार्थस्थले सर्वत्रैव (प्राक० अप्राक०) अर्थद्वयोपस्थितिस्तदा निरर्थकमेव तात्पर्यज्ञानकारणताकल्पनमित्याशयः।

३ अर्थात्तात्पर्यज्ञानकारणता न निष्फला, शक्तिजन्ये बोधे तात्पर्यार्थ एवोपतिष्ठते नान्य इति शक्तिजन्यबोधार्थं तदुपयोग इत्याशयः।

४ भवन्मतानुसारं यदि सर्वत्रैवाऽतात्पर्यार्थबोधोऽपि भवति, तर्हि सोऽपि शक्तिजन्य एव जातः। यस्मिन् शब्दे उच्चारिते यस्यार्थस्य सार्वदिकी उपस्थितिस्तर्हि तस्यार्थस्य शक्तिजत्वस्यास्वीकारे का वा बुद्धिमत्तेत्याशयः।

५ शक्तिजन्यो यः प्राकरणिकार्थविषयकः शाब्दबोधस्तस्मिन् तदर्थविषयकं तात्पर्यज्ञानं हेतुः। अयं भावः—तात्पर्यज्ञानकारणताया निष्फलत्वं यदुक्तं तन्नास्ति। नानार्थशब्दादर्थद्वयस्योपस्थितावपि प्रकरणादिना तात्पर्ये बोधिते प्राकरणिकस्यैवार्थस्य शाब्दबोधो जायते नाऽपरस्येति, शाब्दबोधे प्राकरणिकार्थोपस्थापनमेव तस्याः फलम्।

शाब्दधीः स्यात् । अनन्तरं तु तात्पर्यविषयार्थबोधादतात्पर्यविषयार्थविषयापि शाब्दधीरिष्यत इति तज्जन्यतावच्छेदककोटौ शक्तिजत्वं निवेश्यत इति चेत् । मैवम् । 'सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदो माधवः' इत्यादौ श्लेषकाव्य इव प्रकृतेऽपि प्रकृताप्रकृतयोरर्थयोर्बोधस्य स्वीकारे बाधकाभावात् । न च दृष्टान्तेऽर्थद्वयेऽपि प्रकरणसाम्यात्तात्पर्यज्ञानमस्तीति युगपद्द्वयोर्बोध उपपद्येत । दार्ष्टान्तिके त्वेकत्रैव प्रकरणादिवशात्तदिति न युगपदर्थद्वयबोधोपपत्तिरिति वाच्यम् । तात्पर्यज्ञानकारणताया एवासिद्धत्वेन युगपदर्थद्वयबोधानुपपत्तिवाचोयुक्तेररमणीयत्वात् । तादृशज्ञानहेतुतासिद्धौ तु शक्येतापीत्थं वक्तुम् । तर्हि तात्पर्यज्ञानस्य कुत्रोपयोग इति चेत् । अस्मिन्नर्थेऽयं शब्दः प्रमाणमयमर्थः प्रमाणवेद्य इत्यादिनिर्णये प्रवृत्त्यार्थमुपयोगिनीति गृहाण । इत्थं च नानार्थस्थलेऽपि तात्पर्यधियः कारणतायां शिथिलीभवन्त्यामतात्पर्यार्थविषयशाब्दबुद्धिसंपादनाय व्यक्तिस्वीकारोऽनुचित एव, शक्त्यैव बोधद्वयोपपत्तेः ।

नापि द्वितीयः । हेतोरभावात् । व्यङ्ग्यार्थविषयककवितात्पर्यज्ञानं तथेति

---

अतथाभूतस्यातात्पर्यविषयस्य । **अनन्तरं त्विति** । बोधादित्यग्रेऽन्वेति । युगपदिति शेषो बोधस्येत्यस्य बोध्यः । तत्तात्पर्यज्ञानम् । **वाच इति** । तद्रूपवाचोयुक्तेरित्यर्थः ।

**द्वितीय इति** । नानार्थस्थले क्वचिदेव व्यञ्जनोल्लास इतीत्यर्थः । शङ्कते—**व्यङ्ग्ये-**

१ तात्पर्यार्थज्ञानजन्यतावच्छेदककोटौ । पूर्वपक्षिण उक्तेरयं सारः—तात्पर्यज्ञानकारणतायाः स्वीकारे नानार्थशब्देषु प्राकरणिक एवार्थः शाब्दबुद्धौ भासेत, नाऽप्राकरणिकः । ततश्च शक्तिजन्यशाब्दबोधं प्रति तात्पर्यज्ञानकारणता न निष्फला । एवंविधशक्तिजशाब्दबोधोत्तरं व्यञ्जनयाऽपरोऽपि बोधो भवतीति द्वितीया कथा । किन्तु शक्तिजबोधे तात्पर्यार्थ एवोपतिष्ठते ।

२ शब्दजन्यानुरणनस्थलेऽपि । एककालमेव द्वयोरर्थयोर्बोधे न बाधकमित्याशयः ।

३ 'नानार्थस्थले—सर्वत्रैव व्यञ्जनोल्लासः, तज्जन्यः अप्राकरणिकार्थबोधश्चेति' प्रथमपक्षे तात्पर्यज्ञानकारणतैव निष्फलतया न सिध्यतीत्याशयः ।

४ प्रयोगप्रवृत्त्यर्थमावश्यके "अस्मिन्नर्थे अयं शब्दः कविभिः प्रमाणतया स्वीकृतः", इत्यादिनिर्णये तस्योपयोग इत्यर्थः ।

चेत्। न। व्यक्तिजबोधे तात्पर्यज्ञानकारणतायास्त्वयानभ्युपगमात्। यत्राश्लीलं दोषस्तत्राप्राकरणिकेऽर्थे सकलानुभवसिद्धे कवितात्पर्यस्य विरहात्तज्ज्ञानस्य तादृशबुद्धिहेतुताया व्यभिचारदूषितत्वाच्च। अथ श्रोतुः शक्तिविशेषो व्यक्तेरुल्लासे हेतुः, स च फलबलाच्चमत्कारिण्येवार्थे व्यक्तिमुल्लासयति नाचमत्कारिणीति सिद्धं व्यञ्जनोल्लासस्य काचित्कत्वमिति चेत्। न। हन्तैवं स नियन्त्रितशक्तेरेवोल्लासकोऽस्त्विति कृतं नानार्थस्थले [1]व्यक्तिकल्पनया। किं च 'उल्लास्य कालकरवालमहाम्बुवाहम्' इत्यादिनानार्थव्यञ्जकस्थलेऽगृहीतद्वितीयार्थशक्तिकस्य गृहीतविस्मृतद्वितीयार्थशक्तिकस्य वा पुंसः सर्वथैव व्यञ्जनया द्वितीयार्थबोधानुदयात्तत्र तयो तदापत्तिस्तव दुर्वारा। न च येन शब्देन योऽर्थो व्यज्यते तस्य [3]शब्दस्य तदर्थगतशक्ति-

---

ति। तथा हेतुः। नन्वेवमपि फलबलात्स्वीक्रियतेऽत आह—**यत्रेति**। **विरहादिति**। दोषप्रतिपादने तात्पर्यादिति भावः। तज्ज्ञानस्य कवितात्पर्यज्ञानस्य। **तादृशेति**। व्यक्तिजेत्यर्थः। **व्यभिचारेति**। व्यतिरेकव्यभिचारेत्यर्थः। **शक्तिविशेष इति**। बुद्धिशक्तिविशेष इत्यर्थः। सः शक्तिविशेषः। नियन्त्रितेत्यस्य प्रकरणादिनेत्यादिः। अभ्युपेत्याह—**किं चेति**। विनिगमनाविरहादाह—**गृहीतेति**। सर्वथैव सर्वप्रकारेणैव। सिद्धान्ते इत्यादिः। **तयेति**। व्यञ्जनयेत्यर्थः। तदापत्तिर्द्वितीयार्थबोधापत्तिः। एतद्दो-

---

१ नानार्थस्थले क्वचिदेव व्यञ्जनोल्लास इति भवदीयमतानुसारं चमत्कारिणि नानार्थस्थले प्रकरणादिना नियन्त्रितशक्तेरेवोल्लासो नाऽचमत्कारिणीति स्वीकृते व्यञ्जनास्वीकारगौरवं न भवतीत्याशयः।

२ श्रोतुर्बुद्धिशक्तिविशेष एव व्यञ्जनां जागरयतीति व्यञ्जनायाः काचित्कत्वसाधके भवदनुगमे दोषोऽपि। यथा उल्लास्य कालेत्यादिपद्ये अगृहीतद्वितीयशक्तिकस्य विस्मृतद्वितीयार्थशक्तिकस्य वा पुरुषस्य व्यञ्जनया बोधो न भवतीति स्थितिः। किन्तु भवदनुगमानुसारं 'चमत्कारिण्यर्थे व्यञ्जनोल्लासः' इति कृत्वा चमत्कारिण्यस्मिन्पद्येऽपि व्यञ्जनया अपरार्थबोधोऽभ्युपगन्तव्यो भवेत्।

३ तस्य व्यञ्जकशब्दस्य तदर्थगतशक्तिज्ञानं तादृशव्यङ्ग्यार्थसंबन्धिशक्तिज्ञानं तदर्थगतव्यञ्जनोल्लासे हेतुः। अर्थात् अनेकार्थव्यञ्जकस्थले पूर्वं शक्तिज्ञानं भवेत्तदैव द्वितीयार्थबोधिका व्यञ्जनाऽभ्युपेयते। एवं च अगृहीतशक्तेर्विस्मृतशक्तेर्वा न व्यञ्जनापत्तिः इति पूर्वपक्षिणः समाधानम्। किन्तु एवं सति निःशेषच्युतेति प्रसिद्धव्यञ्जनास्थल एव 'रन्तुं गतासि' इति व्यङ्ग्यार्थबोधो न भवेत्, 'व्यञ्जकशब्दस्य शक्तिज्ञानं व्यञ्जनोल्लासो हेतुः' इति भवन्मतानुसारम् व्यञ्जकस्याऽधमपदस्य रमणेऽर्थे शक्त्यभावात्।

४ व्यञ्जनाजन्ये बोधे हेतुः इत्यनुगमस्य व्यभिचार इत्यर्थः।

ज्ञानं तदर्थव्यक्तेरुल्लासे हेतुरिति वाच्यम् । 'निःशेषच्युत–' इत्यादौ रमणव्यक्त्यनापत्तेः । नह्यधमपदस्य कस्यचिद्रमणे शक्तिग्रहोऽस्ति । सति वा तस्मिंस्तेनैवोपपत्तौ व्यक्तिकल्पनवैयर्थ्यापत्तेश्च । न च नानार्थव्यञ्जनस्थल एवैवंजातीयकः कार्यकारणभावः कल्प्यते । तत्र च शक्तेर्नियन्त्रितत्वेन तद्ग्रहस्याप्रयोजकतया व्यक्तिकल्पनौचित्यादिति वाच्यम् । नवीनकार्यकरणभावकल्पने गौरवप्रसङ्गात् । नियन्त्रणस्य पूर्वमेव दूषितत्वेन तद्धेतोरेवेति न्यायावताराच्च ।

अथास्त्वप्राकरणिकोऽप्यर्थः शक्तिवेद्य एवान्वयधीगोचरः, परंतु यत्र न बाधितः स्यात् । यत्र तु बाधितस्तत्र 'जैमिनीयमलं धत्ते रसनायामयं द्विजः' इत्यादौ जुगुप्सितोऽर्थो वह्निना सिञ्चतीत्यादौ वह्निकरणकसेक इवाबोधोपहत एव स्यात् । बाधनिश्चयस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकतायाः सर्वजनसिद्धत्वात् । व्यक्तेस्तु बाधितार्थबोधकत्वं धर्मिग्राहकमानसिद्धमिति व्यक्तिवादिनामदोष इति । मैवम् । 'गामवतीर्णा सत्यं सरस्वतीयं पतञ्जलिव्याजात् ।', 'सौधानां नगरस्यास्य मिलन्त्यर्केण मौलयः ।' इत्यादौ वाच्यार्थान्वयबोधोपपादनायानुसरणीयेन यत्नेन नानार्थस्थलेऽपि बाधितार्थबोध-

थोद्धाराय शङ्कते—**न चेति** । **रमणेति** । नायककर्तृकरतीत्यर्थः । **सति वेति** । नायके तच्छक्तिग्रहसत्त्वादिति भावः । **तेनैवेति** । शक्तिग्रहेणैव बोधोपपत्तावित्यर्थः । एवंजातीयको येन शब्देनेत्याद्युक्तः । तथा च निःशेषेत्यादौ न दोष इति भावः । नन्वन्यथानुपपत्त्या गौरवं सुसहमत आह—**नियन्त्रणेति** । **तद्धेतोरिति** । व्यक्त्युल्लासहेतोस्तदर्थगतशक्तिज्ञानस्यैव तदर्थबोधजनकत्वमस्तु, किं व्यक्त्युल्लासजनकत्वेनेत्यर्थः । अपिः प्राकरणिकार्थसमुच्चायकः । तत्रेत्यस्येत्यादावित्यनेनान्वयः । **जैमीति** । जैमिनिप्रोक्तं पूर्वमीमांसाशास्त्रं अलं परिपूर्णं धत्ते इत्येकोऽर्थः । जैमिनिप्रोक्तशास्त्राध्येतॄणां मलं विष्ठां धत्ते इत्यपरोऽर्थो निन्दितः । गामिति सौधानामिति च भिन्नपद्यार्धे । गामित्यस्य यत इत्यादि । **यत्नेनेति** । बाधज्ञानं शाब्दज्ञाने न प्रतिबन्धकम्, अयोग्यतानिश्चयश्च ।

१ निःशेषेत्यत्र अधमपदं नानेकार्थकमिति नायं कार्यकारणभाव इत्याशयः ।

२ द्वितीयार्थे शक्तिग्रहस्य नियन्त्रिततया न द्वितीयार्थोपस्थितिः, अतो व्यञ्जना आवश्यकी ।

३ वह्निना सिञ्चतीत्यत्र यथा न बोधस्तथैव जुगुप्सितेऽपरेऽर्थेऽपि बाधाद्बोधाभावः । व्यञ्जनायां तु बाधेऽपि बोधोऽङ्गीक्रियत इति बाधितद्वितीयार्थबोधाय व्यञ्जनास्वीकार इति पूर्वपक्षः ।

४ रूपके लाक्षणिकबोधस्थले वक्ष्यते—'बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ अनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेश्यत्वात् ।',…'मुखं चन्द्र इत्यादौ आहार्ययोग्यताज्ञानसाम्राज्यम् ।' 'आहार्य एव वाऽभेदबोधोऽस्तु' इति ।

स्योपपत्तिः स्यात्। अन्यथा प्रायशः सर्वेष्वप्यलंकारेषु वाच्यार्थबोधोपपत्तये व्यञ्जनाङ्गीकरणीया स्यात्। तस्मान्नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जनेति प्राचां सिद्धान्तः शिथिल एव। प्राकरणिकाप्राकरणिकयोरर्थयोरुपमायां तु सा कदाचित्स्यादपीत्यत्रास्माकं प्रतिभाति।

एवमपि योगरूढिस्थले रूढिज्ञानेन योगापहरणस्य सकलतन्त्रसिद्धतया रूढ्यनधिकरणस्य योगार्थालिङ्गितस्यार्थान्तरस्य व्यक्तिं विना प्रतीतिर्दुरुपपादा।

यथा—

'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः॥'

अत्राशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्त इत्यर्थान्तरं न तावदबलावारिवाहचपलाशब्दैर्योगरूढ्या शक्यते बोधयितुम्, मेघत्वविद्युत्त्वाद्यघटितस्यैव तस्यार्थस्य प्रतीतेः। अन्यथा

---

एवं योग्यताज्ञानमपि न कारणम्। आहार्यो वा बोध इत्यादि यत्नोऽग्रे मूल एव स्फुटः। **अन्यथा** तत्रैव यत्नानुसरणाभावे। **सर्वेष्विति**। गामित्यत्र व्याजोक्तिः। सौधानामित्यत्र संबन्धातिशयोक्तिः। एवमन्यत्रापि बोध्यम्। नानार्थस्य शब्दस्य। सा व्यञ्जना। तथा चोपमा व्यज्यत इति भावः। स्यादपीत्यसंदिग्धे संदिग्धवचनम्, वेदाः प्रमाणं यदीतिवत्। तादृशीं नीयार्थमादाय वाक्यार्थस्यासंबद्धार्थकत्वं मा भूदिति कल्प्यमानोपमाया अर्थापत्तिवेद्यत्वस्यापि संभव इत्यत उक्तं कदाचिदिति। अपहरणं बाधः। **योगार्थेति**। योगशक्तीत्यर्थः। **अबलेति**। विद्युतो मेघैः सह नायिकानां शोभामपहृत्य यत्र तिष्ठन्ति स कालः समागत इति वाच्यार्थः। तस्यार्थान्तरस्य।

---

१ रूढिर्योगापहारिणीति सिद्धान्तात् रूढिं न अधिकरोति, केवलं योगार्थेनैवाऽऽलिङ्गितः, तादृशस्यार्थान्तरस्य व्यञ्जनां विना प्रतीतिर्दुःसमाधेया तदर्थं व्यञ्जनास्वीकार इत्यभिनवमतमाह।

२ अशक्तानां द्रव्यमपहृत्येत्यादावयं मेघत्व—विद्युत्त्वादिको रूढ्यर्थो न संवलितः अपि तु केवलं यौगिकः। एतादृशार्थस्य प्रतीतिर्योगरूढ्या न संभवति। यतः सा हि रूढ्यर्थमपि सहकरोति। न च केवलया योगशक्त्या तत्प्रतीतिसंभवः, रूढिघटिताया योगशक्तेः केवलयौगिकार्थबोधनेऽसामर्थ्यात्। रूढ्यर्थः ( विद्युन्मेघादि ) संवलितः पुंश्चलीत्वादिकोऽर्थश्च केवलयोगशक्तेः सर्वथा अविषयः। अत एव तदर्थं व्यञ्जना स्वीकार्या। तयैव च तादृशार्थप्रतीतिरिति सर्वस्याशयः।

३ सौधानामित्यादौ संबन्धातिशयोक्तिं स्वीकुर्वता पतञ्जलिव्याजादत्रापि कैतवापह्नुतिरेव वक्तव्या। विचारणीयं मार्मिकैः।

चमत्कारो न स्यात्। अत एव न योगशक्त्यापि केवलया। रूढ्यर्थासंवलितार्थबोधकत्वस्य तस्या रूढिसमानाधिकरणाया असंगतेः। पुंश्चलीत्वादेः सर्वथैव तदविषयत्वात्। एवं यौगिकरूढिस्थलेऽपि बोध्यम्।

यथा वा—

'चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं हरति॥'

अत्र नैवाश्चर्यकारी चाञ्चल्यगुणरहितानां कमलानां चाञ्चल्यगुणाधिकेन तव लोचनेन शोभायास्तिरस्कारः, आश्चर्यकृत्तु हरिणानां तद्गुणयुक्तानां तस्याः स इति वाच्यार्थे पर्यवसन्नेऽपि रूढिनिर्मुक्तकेवलयोगमर्यादया मूर्खपुत्राणामत एव प्रमत्तानां नेतृभिश्चौराद्यैः श्रियो धनस्य हरणं सुशकम्, न तु गवेषकाणामत एवाप्रमत्तानामिति जलजनयनमृगशब्देभ्यः प्रतीयमानो अर्थः कथं नाम व्यञ्जनाव्यापारं विनोपपादयितुं शक्यते। अत एव पङ्कजादिपदेभ्यः पङ्कजनिकर्तृत्वेन कुमुदाद्युपस्थितिर्लक्षणयैवेति

अन्यथा तदप्रतीतौ। तदघटितस्यैव प्रतीताविति यावत्। अत एवेत्यस्यार्थमाह—**रूढ्यर्थेति। तस्या इति**। योगशक्तेरित्यर्थः। ननु फलबलात्तथा कल्प्यतेऽत आह—**पुंश्चलीति**। आदिना पुरुषरतिलपरिग्रहः। प्रयोगरूढस्योदाहरणान्तरमाह—**यथा वेति। तद्गुणेति**। चाञ्चल्यगुणाधिक्येत्यर्थः। **तस्याः स इति**। शोभायास्तिरस्कार इत्यर्थः। **जलजनयनमृगेति**। डलयोरैक्याज्जडजलेन मूर्खपुत्राणामित्यस्य, नयतीति नयनमित्यनेन नेतृत्वेन चौराद्यैरित्यस्य, मृगयन्तीति मृगा इत्यनेन गवेषकाणामित्यस्य लाभः। 'मृग अन्वेषणे' इत्यदन्ताच्चुरादेः पचाद्यच्। **अत एव** योगशक्त्या अलाभादेव। एवमग्रेऽपि। ईशान इत्यस्य 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरि-

१ तादृशद्वितीयार्थस्य प्रतीतिरेव न भवतीत्युक्तिस्तु चमत्कारविपरीता। अनुभविभिः सहृदयैरेतन्न वक्तुमर्हमित्याशयः।

२ मण्डपादिशब्दघटितकाव्येषु।

३ पङ्कजनिकर्तृत्वस्य (योगार्थस्य) शैवालादिष्वपि प्रसक्ततया रूढिबलात्पङ्कजं कमलमेव गृह्यते। इदानीं तु 'रूढिर्योगापहारिणी'तिनियमात् पङ्कजपदेन पङ्कजनिकर्तृत्वरूपेण योगमहिम्ना कमलविशेषाणां कुमुदानां बोधो न भवेदत एव लक्षणा तत्र कर्तव्येति नैयायिकाः।

नैयायिका मन्यन्ते। अत एव च 'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' इति वेदान्तवाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवोऽत्र प्रतिपाद्यत उतेश्वर इति संशये, जीव एवेति पूर्वपक्षे च, 'शब्दादेव प्रमितः' इति सूत्रितमुत्तरमीमांसाकारैर्बादरायणचरणैः (ब्रह्मसूत्रे १।३।२४)। तस्मादर्थान्तरमिह न शक्तिवेद्यम्, अपि तु व्यक्तिवेद्यमेव। यथाश्रुतार्थस्यै-वोपपत्तेर्बाधाभावेन लक्ष्यमित्यपि न शक्यं वक्तुम्। तात्पर्यार्थबोधस्तु तदर्थ-बोधोत्तरं बोध्यः। स एव तु कथं स्यादित्युपायोऽयं विचिन्त्यते। नह्यप-हर्तृव्यवहारो वक्त्रा विवक्षित इति श्रोतुर्बोधे कश्चिदुपायोऽस्ति ऋते सहृ-दयहृदयोन्मिषितादस्माद्व्यापारात्। एवमन्यत्राप्यूह्यम्। तादृशार्थप्रतिपत्ति-रेव नास्तीति तु गाढतरशब्दार्थव्युत्पत्तिमसृणीकृतान्तःकरणैर्न शक्यते वक्तुम्।

---

वाधूमकः' इत्यादिः। कठवल्लीस्थमिदम् (चतुर्थवल्ली। १३)। अद्य वर्तमानकाले स एवास्ति। श्वो भविष्यत्काले स एव भवितेत्यर्थः। **जीव एवेति**। अङ्गुष्ठपरिमाणस्य लिङ्गस्य ब्रह्मण्यसंभवादिति भावः। **सूत्रितमिति**। सिद्धान्तार्थमिति शेषः। स चेत्थम्—परमात्मात्र प्रतिपाद्यः प्रमितः। कुतः। शब्दादेव। ईशानो भूतभव्यस्येत्यत्रे-शानशब्दात्। नहि जीवे ईशानशब्द आञ्जसः। लिङ्गश्रुत्योर्विरोधे श्रुतेः प्राबल्यात्। एतत्सूचनार्थमेवैवकारः। अङ्गुष्ठमात्रत्वं तु अङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदप्रतिपादना-न्नानुपपन्नमिति। ननु शक्त्यवेद्यत्वेऽप्यन्यत्र लक्षणावेद्यत्वमेवास्तामत आह—**यथेति**। तथा च मुख्यार्थबाधरूपलक्षणाबीजाभावान्न सेति भावः। नन्वेवं तथापि कथं निर्वा-होऽत आह—**तात्पर्यार्थेति**। ननु यत्र तद्वाक्येन तदर्थान्वयबोधात्प्राक्प्रकारान्तरेण तदर्थे वक्तुस्तात्पर्यग्रहस्तत्रास्तु नाम 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ तात्पर्यानुपपत्त्या लक्षणा, प्रकृते तु न तथेत्याह—**नह्यपहर्तृव्यवहार इति**। अस्माद्व्यञ्जनरूपात्।

१ यथाऽत्र (ऐश्वर्यविशिष्टः ईशानः) इति योगरूढिशब्दे केवलयोगशक्त्या जायमानो जीवार्थो बाधितस्तथा पूर्वोदाहरणेष्वपि यौगिकोऽर्थो बाध्येत। ततश्च तादृशार्थलाभाय व्यञ्जना आवश्यकीति उदाहरणस्य तात्पर्यम्।

२ ननु लक्षणास्तु इति शङ्कायामाह—मुख्यार्थबाधे सति लक्षणा भवति। अत्र च 'नायि-कानां शोभां हृत्वा विद्युतो मेघैः सह रमन्ते' इत्यादिको यथाश्रुतार्थस्तु-नानुपपन्न इति तात्पर्यानुपपत्तिरूपबाधाभावात्कथं लक्षणाऽवतार इत्याशयः।

३ 'तात्पर्यार्थबोधस्तु' इत्यारभ्य 'अस्माद्व्यापारात्' एतत्पर्यन्तस्य ग्रन्थस्य त्वयं भावः—एवंविधे योगरूढस्थले लक्षणया न निर्वाहः। तात्पर्यानुपपत्तिर्हि लक्षणाबीजम्। ततश्च याव-

तथा चेत्थं संग्रहः—

'योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा ॥'

एवं स्थिते नानार्थस्थलेऽप्युपमायाः प्राकरणिकाप्राकरणिकार्थगतायाः प्रतिपत्तयेऽवश्यं वाच्यया व्यञ्जनयैवाप्राकरणिकस्याप्यर्थस्य प्रतिपत्तावलं क्लिष्टकल्पनयेत्याशयेन प्राचीनैरुक्तं नानार्थव्यञ्जकत्वमपि न दुष्यति । तत्र नानार्थशक्तिनियमनाय तैः संयोगादयो निरूपिताः—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

तत्र—

**संयोगो नानार्थशब्दशक्यान्तरवृत्तितया अप्रसिद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धः संबन्धः ॥**

यथा—'सशङ्खचक्रो हरिः' इत्यत्र शङ्खचक्रयोः संयोगो भगवन्मात्रनिष्ठतया प्रसिद्धो भगवति हरिशब्दस्याभिधाया नियमेनावस्थापकः ।

---

**तादृशेति** । अन्येत्यर्थः । **अवश्यं वाच्ययेति** । अर्थापत्तेः प्रमाणान्तरत्वे मानाभावादिति भावः । **क्लिष्टेति** । पूर्वोक्तेत्यर्थः । तत्र निरूपितायां व्यञ्जनायाम् । तैः प्राचीनैः । तत्र संयोगादीनां मध्ये । मात्रपदेन विशेषणदलसत्ता सूचिता । भगवति विष्णौ ।

---

त्काल तात्पर्यबोधो न भवेत्तावत्तस्य बाध एव न साधयितुं शक्यः । अत्र च (अबलानामित्यादौ) अशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्ते इत्याकारको मेघत्वविद्युत्त्वाद्यघटितो वक्तुस्तात्पर्यार्थबोधस्तु अबलावारिवाहचपलाशब्देषु केवलां योगशक्तिमास्थाय पुंश्चलीत्वादिके शुद्धयोगार्थे निष्पादिते एव भवेत् । स एवार्थस्तु कथं भवेत्? (रूढ्याऽपहृतत्वात्) । एतदर्थमेव तु व्यञ्जनादिक उपायो गवेष्यते । ततश्च तात्पर्यार्थस्तावन्न परिज्ञायते यावद्द्वितीयोऽर्थो न निष्पाद्यते । द्वितीयोर्थस्तु स्वयमनिष्पन्नो व्यञ्जनादिकमवलम्बते । अन्वयबोधात्प्राक् यत्र प्रकारान्तरेण वक्तुस्तात्पर्यम् (दध्युपघातकेभ्यो रक्षाऽस्य चिकीर्षिता इति) ज्ञायते तत्रैव 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ लक्षणा । अत्र (अबलानां श्रियम् इत्यादौ) पुंश्चलीत्वादिव्यवहारः, (चाञ्चल्ययोगिनयनेत्यादौ) अपहर्तृव्यवहारो वक्त्रा विवक्षित इति बोधस्तु व्यञ्जनोपायं विना न साध्यः । तथा च तात्पर्यबाधबीजया लक्षणयाऽत्र न निर्वाहः ।

न त्वायुधत्वेनायुधसामान्यसंयोगः, पाशाङ्कुशादिसंयोगो वा, दलद्वयाभावात्। न चासौ लिङ्गान्तर्गत इति मन्तव्यम्, शक्यान्तरे नियमेनावृत्तेरेव प्रकृते लिङ्गत्वात्। शङ्खचक्रयोस्त्विन्द्रादिनापि कदाचिद्धारणसंभवात्।

**विप्रयोगो विश्लेषः ॥**

यथा—'अशङ्खचक्रो हरिः' इत्यत्र तयोरेव विश्लेषस्तथा। अत्र हि विश्लेषनियतपूर्ववर्तिनः संश्लेषस्य प्रागुक्तदलद्वयाक्रान्तत्वमपेक्ष्यते। तेनायुधसामान्यविभागः[2], पाशाङ्कुशादिविभागो वा न तथा। यद्यप्यत्र गुणतया[3] वर्तमानस्तादृशसंयोग एवाभिधानियमनायालम्, तथापि गुणप्रधानयोः संनिपाते प्रधानानुरोध एव न्याय्य इत्याशयेन विप्रयोगस्य नियामकत्वमुक्तम्। यद्वा संयोगस्यैव केवलत्वेन, विश्लेषगुणीभूतत्वेन च द्वैविध्यप्रदर्शनाय तथोक्तम्।

**साहचर्यमेकस्मिन्कार्ये परस्परापेक्षित्वम् ॥**

यथा—'रामलक्ष्मणौ' इत्यत्र रामे लक्ष्मणसाहचर्यं रामशब्दस्य। अथ किमिदं परस्परापेक्षित्वं यत्किंचित्कार्ये, सर्वेषु कार्येषु वा। नाद्यः। घटा-

क्रमेण दलद्वयकृत्यमाह—**न त्वायुधेति**। असौ संयोगः। लिङ्गत्वात्तत्त्वेन ग्रहणात्। तथा च विशेषणदले नियमेनेति पूरणीयमिति भावः। तयोरेव शङ्खचक्रयोरेव। तथा अभिधानियामकः। एवमग्रेऽपि। अतिप्रसङ्गवारणायाह—**अत्रेति**। तेन संश्लेषपूर्वकस्यैव तस्य ग्रहणमिति नातिप्रसङ्गः। प्राग्वत्तत्कृत्यमाह—**तेनेति**। गुणतया प्रकारतया। **तादृशेति**। दलद्वयाक्रान्तेत्यर्थः। अलं समर्थः। विश्लेषस्य नियामकत्वकल्पनजगौरवादाह—**यद्वेति**। केवलत्वेन शुद्धसंयोगत्वेन। **रामशब्दस्य** राघवेऽभिधानियामकमिति

१ सायुधो हरिरित्यत्र सायुधत्वम् (आयुधसंयोगः) शक्यान्तरे इन्द्रादौ अप्रसिद्धो नास्ति अपि तु सायुधत्वं तत्राप्यस्तीति, प्रथमदलोक्त्या तादृशसंबन्धस्य निरासः। एवं सपाशाङ्कुशो हरिः इत्युक्तौ पाशाङ्कुशसंयोगो हरौ (विष्णौ) एव प्रसिद्धो नास्तीति, द्वितीयदलेन तन्निरासः।

२ अनायुधो हरिरित्यत्र विश्लेषनियतपूर्ववर्ती संयोगः शक्यान्तरे इन्द्रादावप्यस्ति। एवं अपाशाङ्कुशो हरिरित्यत्र पूर्ववत् संयोगो विष्णावप्रसिद्ध इति विभागोऽत्राभिधानियामको न।

३ अशङ्खचक्रो हरिरित्यत्र प्रकारतया संयोगोऽवश्यमन्वेति, संयोगपूर्वकत्वाद्विभागस्य। ततश्च पूर्वरीत्या दलद्वयाक्रान्तः संयोग एवाभिधानियमनायालं किं पृथग्विभागगणनया इति शङ्कायां गुणीभूतस्य संयोगस्यापेक्षया प्रधानं विभाग एव नियामकतयोचितः।

घं व्यावर्तनाद्घटसाहचर्यस्यापि रामपदशक्तिनियामकतापत्तेः। न द्वितीयः। लक्ष्मणसाहचर्यस्यापि निवारणापत्तेः। पक्षद्वयेऽपि रामायोध्ये रघुरामावित्यत्रानियमापत्तेश्च । न च नानार्थपदसमभिव्याहृतपदान्तरार्थस्य प्रसिद्धः संबन्धस्तत् । स चैकजन्यत्व-दांपत्य-जन्यजनकभाव-स्वामिभृत्यभाव-स्वस्वामिभावादिरनेकविधः। तेन रामलक्ष्मणौ, सीतारामौ, रामदशरथौ, रामहनूमन्तौ, रामायोध्ये, इत्यादौ साहचर्यं नियामकमिति वाच्यम् । लक्ष्मणादिसंबन्धापेक्षया चक्रादिसंबन्धस्याविशिष्टतया सशङ्खचक्र इत्यत्रापि साहचर्यस्यैव नियामकतापत्तेः। न च सशङ्खचक्र इत्यादौ यत्र संबन्धः सयोगरूपस्तत्राद्यस्य, यत्र च संबन्धान्तरं तत्र तृतीयस्यावकाश इति वाच्यम्। संयोगस्यैव पृथक्कारे बीजाभावात्। न च यत्र संयोगः शब्दोपात्तस्तत्र स एव नियामकः, यत्र तु संबन्धिमात्रं न तु संबन्धस्तत्र साहचर्यम्, अत एव सशङ्खचक्र इति संयोगस्य, रामलक्ष्मणाविति च

शेषः। **निवारणेति**। सर्वकार्ये तदभावादिति भावः। **पक्षद्वयेऽपीति**। कार्यमात्रे तयोस्तदभावात्। आद्येऽसंभवात्, अन्त्ये तदा रघोरसत्त्वादिति भावः। **प्रसिद्ध इति।** नानार्थपदार्थे इति शेषः । तत्साहचर्यम् । उक्तसंबन्धानां क्रमेणोदाहरणान्याह— **तेनेति**। यत्र सशङ्खचक्र इत्यादावित्यन्वयः। आद्यस्य संयोगस्य। यत्र च रामलक्ष्मणावित्यादौ। संबन्धान्तरमेकजनकजन्यत्वादिरूपम् । तृतीयस्य साहचर्यस्य। संबन्धिमात्रं

१ यत्किञ्चित्कार्ये घटस्यापि रामेण सह सापेक्षत्वमिति घटादेर्व्यावृत्तिर्न जातेत्याशयः।

२ नानार्थपदेन समभिव्याहृतं (संयुक्तम्) यत्पदान्तरं (लक्ष्मणादि) तदर्थस्य नानार्थपदार्थेन सह प्रसिद्धः संबन्धः साहचर्यम्। संबन्धश्च एकजन्यत्वादिरग्रे वक्ष्यमाणोऽनेकविधः। यथा रामलक्ष्मणावित्यत्र—नानार्थकपदेन (रामेण) सह संयुक्तं यत्पदान्तरं लक्ष्मण इति तदर्थेन लक्ष्मणव्यक्त्या नानार्थपदार्थस्य (रामस्य) एकजन्यत्वरूपः संबन्धः स एव साहचर्यं किं न स्यादिति पूर्वपक्षः। एवंविधसंबन्धस्वीकारे सशङ्खचक्रो हरिरित्यत्रापि स्वस्वामिभावसंबन्धात्साहचर्यस्य नियामकतापत्तिः, न स्यात्संयोगस्य नियामकता।

३ अविशेषवत्तया (अपृथक्तयेत्याशयः)।

४ अभिधानियामकेषु पृथग्रूपेण संयोगः किमिति परिगणितः, तत्कार्यस्य साहचर्येणैव सिद्धेरित्याशयः।

साहचर्यस्योदाहरणमिति वाच्यम्। सलक्ष्मणो रामो विलक्ष्मणो राम इत्यत्र संयोगविभागयोर्गुणयोरप्रतीत्या साहचर्योदाहरणतायां प्रसक्तायां सशङ्खचक्र इत्यादेरपि तदुदाहरणताया एवौचित्यादिति चेत्। उच्यते— संयोगशब्दस्य संबन्धसामान्यपरतया यत्र शब्दोपात्तं प्रसिद्धं संबन्धसामान्यं शक्तिनियामकं तदाद्यस्य, यत्र तु द्वन्द्वादिगतः संबन्ध्येव केवलस्तदा तत्साहचर्यस्योदाहरणमिति प्राचामाशयात्। इत्थं च सगाण्डिवोऽर्जुनः इति संयोगस्य, गाण्डिवार्जुनाविति साहचर्यस्योदाहरणम्।

**विरोधिता प्रसिद्धं वैरम्, सहानवस्थानं च॥**

तत्राद्यस्य 'रामार्जुनौ' इत्युदाहरणं प्राञ्चो वदन्ति। यत्त्वप्पय्यदीक्षितो वृत्तिवार्तिके प्राचामुदाहरणं निराकुर्वन्नाह—"रामार्जुनपदयोर्वध्यघातकभावविरोधाद्भार्गवकार्तवीर्ययोरभिधा नियम्यत" इति, तदयुक्तम्। रामपदस्याभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम्, तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येत्यन्योन्याश्रयापत्तेः। तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसंधानान्नानार्थपदस्याभिधानियमनमिति रामरावणयोरित्युदाहरणं भवि-

---

शब्दोपात्तमित्यनुषज्यते। मात्रपदव्यवच्छेद्यमाह—**न त्विति। गुणयोरप्रतीत्येति।** असंभवादिति भावः। किं तु साहित्यतदभावयोः प्रतीत्येति शेषः। आद्यस्य संयोगस्य। **संबन्ध्येवेति।** द्वन्द्वादिघटकः केवलः संबन्ध्येव तथा प्रसिद्धः शब्दोपात्त इत्यर्थः। **भावेति।** भावरूपविरोधादित्यर्थः। तत्परशुरामेत्यर्थः। तस्मिंश्च सति कार्तवीर्येऽभिधानियमने सति। तत्कार्तवीर्येत्यर्थः। रामपदस्य परशुरामेऽभिधानियमनमिति शेषः। **व्यवस्थितेति।** निश्चितेत्यर्थः। नियामकत्वस्येत्यस्योदाहरणमित्यत्रान्वयः। एवं स्थितेऽपि

---

१ संयोगविभागौ किल गुणौ (द्रव्यधर्मौ), तयोर्द्रव्य(लक्ष्मण)साहकृतैव प्रतीतिर्न पृथक्तया। ततश्च संयोग-विभागयोरपृथक्प्रतीत्या सलक्ष्मणो राम इत्यादिकं साहचर्यस्योदाहरणं स्यात्। यदा च सलक्ष्मणो राम इति साहचर्यस्योदाहरणं तदा सशङ्खचक्रो हरिरित्यपि साहचर्यस्यैवोदाहरणमुचितमिति पूर्वनिर्धारितवैयाकुली प्रसज्येतेति शङ्का।

किंवा गुणयोर्गुणीभूतयोरित्यर्थः। अयं भावः—सलक्ष्मणो राम इत्यत्र लक्ष्मणसंयुक्तो धर्मी प्रतीयते, धर्मः संयोगस्तु गुणीभूतः। एवमेव विलक्षण इत्यत्रापि लक्ष्मणरहितो धर्मी प्रधानम्, साहित्याभावस्तु गुणीभूत इत्याशयः।

तुमर्हति इति।" तत्र तावद्रामरावणयोरिति व्यवस्थितार्थान्यतरपदकमुदाहरणं विरोधिताया नियामकत्वस्य न युक्तम्। रामलक्ष्मणयोरित्यत्रेवात्रापि साहचर्यस्यैव नियामकत्वात्। न च लक्ष्मणसाहचर्यं रामस्य प्रसिद्धम्, न तु रावणसाहचर्यमिति वाच्यम्। प्रसिद्धतत्संबन्धकत्वस्यैव[1] तत्साहचर्यपदार्थत्वात्। पितृभ्रातृजायाऽपत्यभृत्यनगरीणां संबन्धस्येव रिपोः संबन्धस्यापि लोकप्रसिद्धत्वात्। एवं स्थितेऽपि विरोधितायाः पृथग्गणने मित्रत्वादेरपि तथा गणनापत्तेः। तस्मात्प्राचीनोदाहरणमिव त्वदुक्तमुदाहरणमप्यशुद्धमेव।

'अन्यतरपदस्य व्यवस्थितार्थत्व एव' इत्याद्यप्यसंगतमेव। हरिनागस्येत्यादावुभयोरव्यवस्थितार्थत्वेऽप्येकवद्भावाभिव्यक्तेन विरोधेन धर्मिविशेषाविशेषितेनापि[2] युगपद्धर्मिविशेषद्वयेऽभिधाया नियन्तुं शक्यत्वात्। यदपि 'रामार्जुनगतिस्तयोरिति शब्दान्तरसंनिधेरुदाहरणम्' इति स एवाह। तदप्यसत्। त्वया निरूपिते शब्दान्तरसंनिधेरुदाहरणे 'निषधं पश्य भूभृतम्,' 'नागो दानेन राजते', इत्यत्र चाभिधाया नियतविषयतां विनान्वयस्यैवानुपपत्त्या, प्रकृते च 'रामार्जुनगतिस्तयो'रित्यत्रार्थान्तरविषयत्वेऽप्यन्वयानुपपत्तेरभावान्महति[3] वैलक्षण्ये शब्दान्तरसंनिध्युदाहरणत्वा-

---

साहचर्यस्य नियामकत्वसंभवेऽपि। तथा पृथक्। त्वदुक्तमप्पय्यदीक्षितोक्तम्। तत्सिद्धान्तं खण्डयति—**अन्यतरेति**। **हरीति**। 'येषां च विरोधः शाश्वतिकः' इति समाहारैकवद्भावः। अत एवाह—**एकवद्भावेति**। स एवाप्पय्यदीक्षित एव। **भूभृतमित्यत्रेति**। निषधपदसांनिध्याद्भूभृत्पदस्य राज्ञि, दानपदसांनिध्यान्नागपदस्य गजेऽभिधानियमनम्। **अर्थान्तरविषयत्वेऽपीति**। रामार्जुनवत्पराक्रमशालित्वमि-

---

१ प्रसिद्धः तत्संबन्धः ( तेन सह संबन्धः ) यस्य स प्रसिद्धतत्संबन्धकः तद्भावः, तत्साहचर्यमित्यर्थः।

२ धर्मिविशेषे न संजातो विशेषो यस्मिन्, अर्थात् हरिमुद्दिश्य नागस्य विरोधः, अथवा नागमुद्दिश्य हरेर्विरोध इत्यविशेषाद्धर्मिद्वयेपि समानैव विरोधप्रतीतिर्न कुत्रचिद्विशेषः।

३ निषधं पश्येत्याद्युदाहरणद्वये यावत्कालं निषध–भूभृत्–नाग–दानपदानामभिधानियमो न भवेत्तावत्–भूभृत्पदस्य पर्वते शक्तिसंचारात्तस्य च तत्समये दर्शनान्वयानुपपत्तिः। एवं नागपदस्य सर्पेपि शक्तिभ्रमेण तस्य दानसंबन्धायोगः। भूभृन्नागादिपदानामभिधानियमे तु न सा। एवं स्थितौ ( अनुपपत्तौ ) उदाहरणद्वयं शब्दान्तरसंनिधेरुचितम्। रामार्जुनेत्यत्र तु अभिधानियमाभावेऽपि पराक्रमशालितार्थे ( राघवार्जुनाविव पराक्रमिणौ इत्यर्थे ) नाऽनुपपत्तिः। ततश्च अन्वयस्य उपपत्त्यनुपपत्तिवैषम्येपि कथं समानरूपेण शब्दान्तरसंनिधेरुदाहरणतेत्याशयः।

योगात्। एवमपि काव्यप्रकाशगतस्य 'रामार्जुनगतिस्तयो'रिति विरोधितोदाहरणस्यासंगतिः स्थितैवेति चेत्। न। तयोः कयोश्चित्प्रसिद्धविरोधयो रामार्जुनगती रामार्जुनसदृशी गतिराचरणमिति तदर्थवर्णने विरोधेन प्रस्तावत्रशात्प्रतीतेन युगपद्भार्गवकार्तवीर्ययो रामार्जुनशब्दाभिधाया नियमनस्योपपत्तेः। न च प्रकरणादेविशेषः। विरोधस्य प्रक्रान्तत्वेऽपि भार्गवकार्तवीर्ययोः शक्तिनियमाधिकरणयोरप्रक्रान्तत्वात्। सहानवस्थानलक्षणा विरोधिता तु छायातपावित्यादौ बोध्या।

अर्थः प्रयोजनं चतुर्थ्याद्यभिधेयम्॥

यथा—'स्थाणुं भज भवच्छिदे' इत्यादौ भवच्छेदनादि स्थाणुपदस्य भवे। नन्वर्थस्य लिङ्गात्को भेदः? न च लिङ्गमनन्यसाधारणस्तद्धर्मः, अर्थस्तु तद्भजनादेः कार्यम्, न तु तद्गतो धर्म इति स्फुट एव भेद इति वाच्यम्। भवच्छेदजनकभजनकर्मत्वस्य काष्ठावृत्तिभवधर्मत्वादिति चेत्।

त्यायर्थान्तरम्। एवमपि दीक्षितोक्त्यसांगत्येऽपि। **स्थितैवेति**। दीक्षितोद्भावितान्योन्याश्रयस्यानुद्धारादिति भावः। **तदर्थेति**। उदाहरणार्थेत्यर्थः। प्रस्तावः प्रकरणम्। **युगपदिति**। तथा च नान्योन्याश्रय इति भावः। **नियमनेति**। तन्नियमाश्रयस्य प्रक्रान्तत्वे एव प्रकरणस्य नियामकत्वमिति भावः। द्वितीयविरोधितोदाहरणमाह—**सहेति**। आदिना तुमुनादिपरिग्रहः। छेदनादीत्यस्य प्रयोजनमिति शेषः। भवे। अभिधानियामकमिति शेषः। अत्र तच्छब्दाः शिवपराः। काष्ठावृत्तीत्यनेनानन्यसाधारणत्वं

१ एकस्य अभिधानियमने तद्विरोधितया अन्यस्याभिधानियमनं नास्ति येनान्योन्याश्रयः, अपि तु प्रकरणप्रतीतेन विरोधेन एककालमेव द्वयोरभिधानियमनमिति।

२ अर्थात् इदमपि प्रकरणेनाभिधानियमनस्योदाहरणं स्यादिति शङ्का। प्रकरणं तत्रैवाभिधानियमनं करोति यत्र अभिधानियमस्य आश्रयोऽपि पूर्वप्रक्रान्तो भवेत्। इह नियामको विरोधस्तु प्रक्रान्तः, नियमाधारौ रामार्जुनौ तु न प्रक्रान्ताविति नात्र प्रकरणस्यावकाश इति समाधानम्।

३ काष्ठे (स्थाणौ) अवृत्तिः भवस्य (शिवस्य) धर्मः। एवं चायमप्यसाधारणो धर्मो जातस्तथा च न लिङ्गाद्भेद इति शङ्का। लिङ्गं शाब्दबोधात्पूर्वमभिधां नियम्य शाब्दबोधे उपकारि। अर्थः (उक्तो विशिष्टो धर्मः) तु शाब्दबोधे जाते अर्थवादविषयतया मानसबोधविषय इति द्वयोर्भेद इति समाधानम्।

४ 'अर्थ' निरूपणे ये तच्छब्देन निर्देशास्ते शिवबोधका इत्याशयः।

अत्राहुः—उक्तस्य विशिष्टधर्मस्य शाब्दबोधोत्तरभाविमानसबोधविषयत्वेन प्रकृतशाब्दबोधाविषयत्वाल्लिङ्गतो वैलक्षण्योपपत्तिरिति । लिङ्गं त्वेकपदार्थः कोपादिः, अनन्वित एव यः पदार्थान्तरेण प्रकृतशक्यधर्मतां शक्यान्तरव्यावृत्ततां च भजते । उक्तधर्मस्तु न तथेत्यपि केचित् ।

**प्रकरणं वक्तृश्रोतृबुद्धिस्थता ॥**

यथा—राजानं संबोध्य केनचिद्भृत्येनोक्ते 'सर्वं जानाति देवः' इति वाक्ये देवपदस्य युष्मदर्थे ।

**लिङ्गं नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाच्छब्दवेद्यो धर्मः ॥**

यथा—'कुपितो मकरध्वजः' इत्यत्र कोपो मकरध्वजपदस्य ।

**शब्दस्यान्यस्य संनिधिर्नानार्थपदैकार्थमात्रसंसर्ग्यर्थान्तरवाचकपदसमभिव्याहारः ॥**

---

सूचितम् । **उक्तस्य** भवच्छेदजनकभजनकर्मत्वस्य । **शाब्देति** । भवच्छेदफलकचैत्राभिन्नकर्तृकस्थाणुकर्मकभजनमित्यस्यैव शाब्दबोधत्वादिति भावः । प्राचीनाशयसूचकं मतान्तरमाह—**लिङ्गं त्विति** । एकपदार्थ इत्यस्य विवरणं पदार्थान्तरेणानन्वित एवेति । एवं चासमस्ताखण्डैकपदार्थो लिङ्गमिति फलितम् । भवच्छेदनादिकं च भजनादिरूपभिन्नपदार्थान्वितमेव भवधर्म इति भावः । **कोपादिरिति** । कुपितो मकरध्वज इत्यादौ । **उक्तेति** । भवच्छेदजनकभजनकर्मत्वरूपस्तु भजनादिरूपभिन्नपदार्थान्वित एव भवधर्मो नानन्वित इत्यर्थः । अत्रारुचिः स्फुटीभविष्यत्यनुपदमेव । युष्मदर्थे । शक्ति-

१ नानार्थपदस्य प्रकृतशक्यात् अन्यस्मिन् शक्ये अवर्तमानः । 'कुपितो मकरध्वजः' अत्र प्रकृतशक्यादन्यस्मिन् शक्ये समुद्रे सोऽयं कोपोऽवर्तमानः ।

२ नानार्थपदस्य अनेकार्थानां मध्ये एकार्थमात्रसंसर्गिणा, अर्थान्तरवाचकेन पदेन समभिव्याहारः सह पठनं (संयोगः) अभिधानियमनं करोतीति पूर्वसंबन्धः । यथा--पाणि--शुण्डेत्यनेकार्थवाचकस्य करपदस्य अनेकयोरर्थयोर्मध्ये शुण्डामात्रार्थसंसर्गिणा अर्थान्तर (सर्प)-वाचकेनापि सता गजवाचकेन 'नाग'पदेन समभिव्याहारः शुण्डायाम्, एवं नागपदस्य करपदेन समभिव्याहारो गजे शक्तिनियमनं करोतीति । अत्र हि करनागपदयोर्विवक्षितार्थापेक्षया अर्थान्तरग्रहणे अन्वय एव नोपपद्यते । अत एव द्वयोरपि पदयोर्युगपदेव अभिधानियमो भवति, तेन नान्योन्याश्रयः ।

'देवस्य पुरारातेः' अत्र तु नानार्थकयोर्द्वयोरपि पदयोः अर्थद्वयमध्यात् यस्य कस्याप्यर्थस्योपस्थितावपि अन्वय उपपद्यत एव ( नगरवैरिणः राज्ञः, त्रिपुरासुरवैरिणः सुरस्य शिवस्य ) इति ।

तथा च–अन्वयानुपपत्तावेव एकार्थमात्रसंसर्गि–पदान्तरसमभिव्याहारः शक्तिनियमनं करोतीत्याशयः ।

यथा—'करेण राजते नागः' इत्यत्र करपदस्य नागपदमादाय, नागपदस्य च करपदमादाय शुण्डायां गजे च । न चात्रैकशब्दशक्तिनियमनमपरशब्दशक्तिनियमोऽपेक्षते, येनान्योन्याश्रयः स्यात् । किं तु करनागशब्दयोरर्थान्तरग्रहणेऽन्वयानुपपत्त्या युगपदेव शक्तिर्नियम्यते । देवस्य पुरारातेरिति प्राचामुदाहरणे सुरत्वभूपत्वाभ्यां देवपदान्नगरारित्वासुरविशेषारित्वाभ्यां पुरारातिपदाच्चोपस्थितेरुभयोरपि नानार्थत्वादर्थान्तरस्वीकारेऽप्यन्वयोपपत्तेश्च कथं शक्तेर्नियमः स्यात् । न च पुरारातिपदं योगरूढम्, तथा च रूढेर्योगापहारितया शिवत्वेनैव तस्य बोधकत्वाद्देवपदशक्तिनियामकतेति वाच्यम् । पुरारातिपदस्य रूढौ मानाभावात् । अथ 'देवस्य त्रिपुरारातेः' इति पाठस्तथापि पदान्तरोपस्थापितस्य त्रिपुरासुरवैरित्वस्य लिङ्गतया लिङ्गोदाहरणत्वमेवास्य स्यात्, न तु शब्दान्तरसंनिध्युदाहरणत्वमिति वदन्ति । तत्रैकपदार्थः कोपादिः पदार्थान्तरेणानन्वित एव यः प्रकृतशक्यधर्मताम्, शक्यान्तरव्यावृत्ततां च भजते स लिङ्गपदेनात्रोक्त इति प्राचामाशये तु नोक्तदोषः । यत्तु शब्दस्याव्यभिचरितस्य संनिधिः सामानाधिकरण्यम् इति काव्यप्रकाशटीकाकारैरुक्तम् । तत्तु 'करेण राजते नागः' इत्यादावव्याप्तेर्नात्, तन्नियामकान्तरस्य गवेषणे गौरवात्, 'कुपितो मकरध्वजः' इति तन्मूलोक्ते लिङ्गोदाहरणेऽतिव्याप्तेर्नाच्चोपेक्ष्यम् ।

नियमनमिति शेषः । एवमग्रे सर्वत्र । **न चेति** । नहीत्यर्थः । **अर्थान्तरेति** । हस्तसर्पेत्यर्थः । प्राचोक्तं खण्डयति—**देवस्येत्यादि** । वदन्तीत्यन्तेन । **अर्थान्तरेति** । भूपनगरादिरूपेत्यर्थः । तस्य पुरारातिपदस्य । **देवेति** । पुरेत्यादिः । **पदान्तरेति** । त्रिपुरारातेरितीत्यर्थः । अस्य देवस्य त्रिपुरारातेरित्यस्य । वदन्तीति सूचितामरुचिमाह—**तत्रेति** । 'देवस्य त्रिपुरारातेः' इति पाठे इत्यर्थः । प्रकृते च वैरित्वं त्रिपुरासुरान्वितमेव शक्यान्तरव्यावृत्तमतो न दोष इति भावः । वस्तुतस्तु त्रिपुरारातिपदस्य योगरूढत्वेन रूढ्यर्थान्वितत्रिपुरासुरवैरित्वस्य तत्पीड्यमानभूभृत्स्वपि सत्त्वेन शक्यान्तरव्यावृत्तत्वाभावाच्च । एवं चैकपदार्थ इत्यस्य यथाश्रुतत्वमेवास्त्विति बोध्यम् । **नोक्तदोष इति** । शब्दान्तरसंनिध्युदाहरणत्वाभावरूपदोषो नेत्यर्थः । अव्यभिचरितस्यार्थान्तराप्र-

१ देवपदात् सुरत्व-भूपत्वाभ्याम् ( प्रवृत्तिनिमित्ताभ्याम् ), सुरभूपयोरर्थयोः, पुरारातिपदाच्च नगरारित्व-असुरविशेषारित्वाभ्याम् (प्रवृत्ति०) नगरशत्रु-शिवरूपयो रर्थयोः उपस्थितेरित्याशयः ।

२ कर-नागपदे अर्थान्तरस्य प्रत्यायके एव स्तः ।

३ उक्तनियामकेभ्योऽन्यत्किञ्चिदत्र नियामकमित्यन्वेषणे व्यर्थं संख्यावृद्धिरित्यर्थः ।

४ अव्यभिचारितया अयमपि लिङ्गत्वधर्मयुक्तो जात इति ।

**सामर्थ्यं कारणता ॥**

यथा—'मधुना मत्तः कोकिलः' इत्यत्र कोकिलमदजनकता मधुशब्दस्य वसन्ते। 'अत्र कोकिलमादने मधोरेव शक्तिर्न तु मधुनः। मादकत्वं मधुन्यपीति न लिङ्गम्' इति वदन्ति। तत्र सामर्थ्यं लिङ्गान्तर्गतमेव कुतो न स्यात्, इति शङ्कायाः कथमेतदुत्तरं संगच्छते। न च मादनसामर्थ्यस्य सुरावृत्तितया नासाधारणधर्मतारूपं लिङ्गत्वमिति वाच्यम्। मादनसामर्थ्यस्य सुरावृत्तित्वेऽपि कोकिलमादनसामर्थ्यस्य वसन्तासाधारणतया लिङ्गस्य दुर्वारत्वात्। न च प्राणिमात्रमादनसामर्थ्यस्य मधुनः कोकिलमादनसामर्थ्यमप्यस्तीति वाच्यम्। एवं सति सामर्थ्यस्य वाचकतानियामकत्वमसंगतं स्यात्। न तु मधुन इति स्वोक्तिविरोधश्च भवेत्। प्रसिद्ध्याश्रये पुनर्लिङ्गत्वमप्रच्युतम्। शाब्दत्वाशाब्दत्वाभ्यामेकानेकपदार्थत्वाभ्यां वा विशेषस्तु स्यात्।

**औचिती योग्यता ॥**

यथा—'पातु वो दयितामुखम्' इत्यत्र दयितामुखैककर्तृकरक्षणकर्मत्वाक्षिप्तकामार्तानां संबोध्यपुरुषाणां त्राणं हि तस्याः सांमुख्येनैव भवति, न तु

---

स्यायकस्य। गवेषणेऽन्वेषणे। तन्मूलोक्तेः प्रकाशकारोक्तेः। मधुनो मद्यस्य। वदन्तीति सूचितामरुचिमाह—**तत्रेति**। मधुनेत्युदाहरणविषयभूतमित्यर्थः। मादने करणे ल्युट्। **वाचकतेति**। शक्तीत्यर्थः। असाधारणत्वाभावादिति भावः। इष्टापत्तावाह—**न त्विति**। **अप्रच्युतमिति**। कोकिलमादनसामर्थ्यस्य वसन्त एव प्रसिद्धेरिति भावः। **शाब्दत्वाशाब्दत्वाभ्यामिति**। मधुकरणकमदाश्रयः कोकिल इति हि तत्र बोधः शाब्दः। कुपितो मकरध्वज इत्यत्र तु कोपाश्रयाभिन्नः इत्येव तथेति भावः। एवं भेदस्य प्रागनुक्तत्वात्तत्रापि कोपसाधनोल्लेखस्य सुवचत्वाच्चाह—**एकानेकेति**। **आक्षि-**

---

१ यदा हि सामर्थ्यस्य लिङ्गान्तर्गतत्वमाशङ्क्य शक्तिनियामकेषु पृथग्गणनस्य विप्रतिपद्यते तदा वसन्तस्य मादनं प्रति असाधारणधर्मतास्थापनं नोत्तरम्। सामर्थ्यस्याऽपि असाधारणतायाः 'न च मादनसामर्थ्यस्ये'त्यादिना पूर्वपक्षिणो विवक्षितत्वात्।

२ एवं साधारणतास्वीकारे शक्तिनियामकत्वरूपा भवदङ्गीकृता विशिष्टयोग्यता न सिध्येदित्याशयः।

३ कोकिलमादनसामर्थ्यं वसन्तस्यैव प्रसिद्धम्, सदपि मधुनः सामर्थ्यमप्रसिद्धमिति सामर्थ्यस्य पृथक्त्वसाधने प्रसिद्धिराश्रीयते, तदापि असाधारणत्वसंपत्त्या लिङ्गत्वं न दूरीभूतम्। अर्थात् सामर्थ्य-लिङ्गयोर्मध्ये पृथग्गणनोचितो भेदो न साधितः।

४ स्वसंमतं द्वयोर्भेदमाह।

५ दयितामुखकर्तृकं यद्रक्षणं तत्संबन्धि यत्कर्मत्वं तेन आक्षिप्तानां कामार्तानाम्।

मुखमात्रेण, वैमुख्ये तेन त्राणायोगात्। अतस्त्राणार्हत्वं वदन-सांमुख्योभय-प्रत्यायकस्य मुखशब्दस्य[1]।

**देशो नगरादिः ॥**

यथा—'भात्यत्र परमेश्वरः' इत्यादौ परमेश्वरादिशब्दस्य राजादौ तस्य नगरादिसंबन्ध-तदभावयोः संभवेनाभावव्यावृत्त्यर्थमधिकरणकीर्तनस्य सार्थक्यात्। परमात्मनस्तु सर्वगतस्य व्यावर्त्याभावात्तदुक्तिवैयर्थ्यापत्तेः। एवं 'वैकुण्ठे हरिर्वसति' इत्यत्रापि बोध्यम्। एकत्रार्थान्तरोपग्रहेऽधिकरणोक्तिवैयर्थ्यम्, अपरत्र तु तदधिकरणत्वाप्रसिद्धिरिति विशेषः।

**कालो दिवसादिः ॥**

'चित्रभानुर्दिने भाति' इत्यादौ चित्रभान्वादिपदानां सूर्यादिषु। एवं 'चातुर्मास्ये हरिः शेते' इत्यस्य।

**व्यक्तिः स्त्रीपुंनपुंसकलिङ्गानि ॥**

यथा—'मित्रो भाति', 'मित्रं भाति' इत्यत्र मित्रशब्दस्य पुंनपुंसके सुहृत्सूर्ययोः। एवं 'नभो भाति', 'नभा भाति' इत्यत्रापि।

**स्वर उदात्तादिः ॥**

यथा—'इन्द्रशत्रुः' इत्यत्र समासान्तोदात्तत्वमिन्द्रशत्रुशब्दस्येन्द्रस्य शत्रौ। पूर्वपदप्रकृतिस्वरप्राप्तमाद्युदात्तत्वं त्विन्द्रशत्रुके। आदिनाभिनयादिपरिग्रहः। यथा—'एद्दहमेत्तत्थणिआ' इत्यादौ।

इहार्थसामर्थ्यौचितीनामुदाहरणेषु चतुर्थ्याद्यैस्तृतीयाद्यैरर्थसामर्थ्येन च

**तेति**। विशेषरूपेणाक्षिप्तेत्यर्थः। सांमुख्येन संमुखत्वेन। तेन मुखेन। **तदुक्तीति**। अधिकरणोक्तीत्यर्थः। एकत्र आद्ये। **अर्थान्तरेति**। परमात्मव्यानरादावित्यर्थः। आदिभ्यां रात्रिवत्सराादिपरिग्रहः। शेते इत्यस्येत्यत्रापि बोध्यमिति शेषः। पुंनपुंसके पुंनपुंसकत्वे। **सुहृत्सूर्ययोरिति**। सूर्यसुहृदोरिति क्रमो बोध्यः। पाठ एव वेत्थम्। नभाः श्रावणः। **एद्दहेति**। 'एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिँ अच्छिवत्तेहिँ। एद्दहमेत्तावत्था एद्दहमेत्तेहिँ दिअएहिँ ॥' 'एतावन्मात्रस्तनिका एतावन्मात्रैरक्षिपत्रैः। एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥' [ इति च्छाया। ] अर्थसामर्थ्येन अर्थयोग्यतया। यथासंख्यमन्वयः। बोधकवैचित्र्येऽपि पदार्थयोर्यः कार्यकारणभावस्तद्बोधकेत्यर्थः।

१ सांमुख्यार्थे शक्तिनियमनं करोतीति प्रक्रान्तान्वयः।

बोध्यमानकार्यकारणभाव एव नियामकः, न तु वस्त्वन्तरम्[1]। बोधकवैचि-
त्र्याच्च नियामकस्य वैचित्र्येणोक्तिः प्राचाम्। वस्तुतस्तु संयोगादीनामर्था-
न्तरसाधारणत्वे नानार्थशब्दस्यार्थविशेषे शक्तेः संकोच एव न संभवति,
नियामकानामसंकुचितत्वात्। अथ प्रसिद्धत्वादिना तेषामसाधारणता-
बुद्धिर्यथाकथंचिदुपपाद्यते, तदा प्रायशो लिङ्गभेदा एवैते, न तु सर्वथैव
ततः स्वतन्त्रा इति बोध्यम्[2]।

तत्र शब्दशक्तिमूलालंकारस्य ध्वनिर्यथा—

'करतलनिर्गलदविरलदानजलोल्लासितावनीवलयः।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम्॥'

अत्र राजप्रकरणे कर-दान-धनद-सार्वभौमशब्दानां शक्तौ संकोचिता-
यामपि तन्मूलकेन ध्वननेन प्रतीयमानस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा

---

नियामकस्य अर्थादेः। वैचित्र्येण भेदेन। प्राचामिति सूचितामरुचिमाह—**वस्तुतस्त्विति**। साधारणत्वे सतीति शेषः। स्वारसिकत्वाभावादाह—**यथाकथंचिदिति**। प्रागुक्तरीत्यार्थादीनामसंग्रहादाह—**प्रायश इति**। तेषामप्यन्तर्भावसंभवादाह—**सर्वथैवेति**। ततः लिङ्गात्। तत्र त्रयोदशभेदानां मध्ये। अलंकारस्येत्यस्योपमेत्यादिः। **अविरलेति**। संततेत्यर्थः। अवनीवलयः भूमण्डलः। धनदानामग्रे आदौ महिता पूजिता मूर्तिर्यस्य सः। **अत्रेति**। हस्तवितरणदातृजनभूपेष्विति भावः। तन्मूलकेन शब्दशक्तिमूलकेन। **अर्थान्तरेति**। इन्द्रवृत्तान्तेत्यर्थः। षष्ठ्यर्थे बहुव्रीहिद्वयम्। करतलमैरावतशुण्डागण्डस्थलम्। धनदः कुबेरः। अप्रस्तुतस्यासंब-

---

१ संयोगविभागादिषु यथा संयोगविभागवाचकाः शब्दा नियामकास्तथात्र न, किन्तु विभक्तिबोध्यः कार्यकारणभाव एवेत्यर्थः।

२ नियामकानां परस्परं भेदसाधनाय शङ्का-समाधानयोरयं सारः—'ऐक्यप्रतिभासेऽपि कार्यकारणभावरूपबोधकवैचित्र्यात् अर्थादीनां नियामकानां पार्थक्येनोक्तिः' इति प्राचां समाधानं शिथिलमेव। यदि संयोगादयो नियामका नियामकान्तराऽतिव्याप्ततया स्वयमसंकुचिता भवेयुस्तर्हि एभिः शक्तिसंकोच एव न संभवेत्, नियामकानां संकुचितत्व एव तथा संभवात्। यदि तु 'अयमेतदर्थं प्रसिद्धः, नायम्' इत्यसाधारणतां संपाद्य अर्थ-सामर्थ्यादीनां मिथः पार्थक्यं साध्यते, तदा असाधारणधर्मो लिङ्गमिति स्वीकारादेते सर्वे लिङ्गस्य भेदभूताः (लिङ्गान्तर्गताः) एव सिध्येयुर्न तु स्वतन्त्राः। तस्मात्प्राचीनैः स्वीकृतेष्वेषु शक्तिनियामकेषु भेदः पूर्वोक्ताभिरसदुपपत्तिभिरेव साध्य इति।

भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यत इत्युपमालंकारध्वनिः। अथ श्लिष्टविशेषणायां समासोक्तौ व्यङ्ग्यस्याप्यप्रकृतव्यवहारस्य प्रकृतधर्मिण्यारोप्यमाणस्य प्रकृतोपस्कारकतया यथा गुणीभूतव्यङ्ग्यत्वम्, एवमिहाप्युचितम्। न चोपमा प्रकृतार्थोपस्कारिका न भवतीति शक्यं वदितुम्। 'उल्लास्य कालकरवालमहाम्बुवाहम्', 'भद्रात्मनो दुरधिरोहतनोः' इत्यादौ प्राचीनानां पद्ये 'करतल–' इत्यादि प्रागुदाहृतपद्ये च व्यङ्ग्योपमया प्रकृतस्य राज्ञः प्रकर्षस्य सकलानुभवसिद्धत्वात्। अनुभवापलापे तु समासोक्तावप्यप्रकृतव्यवहारस्य प्रकृतोपस्कारकत्वं नेति सुवचत्वात्। ननु समासोक्तावत्र चास्ति विशेषः—यत्तत्र व्यवहारिणो नानार्थशब्दानुपस्थाप्यत्वम्[2], इह तु तदुपस्थाप्यत्वम्, इति चेत्, किं चातो[3] न हि व्यवहारिणो नानार्थशब्दोपस्थाप्यतामात्रेणाप्रकृतधर्मिनिरूपितायाः[4] उपमायाः प्रकृतधर्म्युपस्कारकत्वं वार्यते, येन गुणीभूतव्यङ्ग्यत्वं न स्यात्। न चात्रोपमादीनामलंकाराणां स्वभावतः सुन्दरत्वात्काव्यप्रवृत्त्युद्देश्यतया च वस्तुमात्रे गुणीभावो न संभवति, यथा वस्तुमात्रेणाभिव्यक्तानामलंकाराणाम्[5], तुल्यन्यायत्वात्। अप्रकृत-

---

द्रस्य। **श्लिष्टेति**। 'अयमैन्द्रीमुखं पश्य' इत्यादौ। व्यवहारस्य मुखचुम्बनादिरूपस्य **आरोप्येति**। अन्यथा असंबद्धाभिधानं स्यादिति भावः। इहापि करतलेत्यादावपि। तथा च मध्यमकाव्यत्वम्, नोत्तमकाव्यत्वमिति भावः। **व्यङ्ग्योपमयेति**। व्यङ्ग्यरूपोपमयेत्यर्थः। समासोक्तावपि उक्तरूपायाम्। अत्र च करतलेत्यादौ। एवमग्रेऽपि। व्यवहारिणो जारादेः। **तदुपेति**। सार्वभौमेति नानार्थपदोपेत्यर्थः। स्वभावसुन्दरस्यापि शृङ्गारादेः क्वचिद्गुणभावदर्शनादाह—**काव्यप्रवृत्त्युद्देश्यतया चेति**। अन्यथा नानार्थशब्दघटितकाव्यकरणरूपकविप्रयासानर्थक्यापत्तिरिति भावः। वस्तुमात्रे प्रकृतार्थे। **यथा वस्तुमात्रेति**। 'वीररुद्रभटान्दृष्ट्वा जयलक्ष्मीसमावृतान्। रणे कर्णिन्यरिवधूकेशांस्ते कण्टकिद्रुमाः॥' इत्यादाविति भावः। **तुल्येति**। उक्तहेतोस्तुल्यत्वा-

---

१ अयं सार्वभौमः (चक्रवर्ती) सार्वभौमः (दिग्गजः) इवेति।

२ अप्रधानशब्दार्थानुपस्थाप्यत्वमिति काशीपाठो विचार्य एव, समाधाने पुनर्नानार्थशब्दग्रहणात्। व्यवहारी प्रकृतव्यवहारनिर्वाहको धर्मी, यथा समासोक्तौ-अयमैन्द्रीत्यत्र चन्द्रः। सः (विशेष्यभूतश्चन्द्रः) न अनेकार्थः। अत्र तु व्यवहारी 'सार्वभौमः' नानार्थक इति विशेषः।

३ अतः किम्? एतावन्मात्रेण किमित्यर्थः।

४ अप्रकृतधर्मि(दिग्गज)निरूपितायाः।

५ प्रधानताकृतचमत्कारवैकल्येपि अलंकाराणां स्वाभाविकं सौन्दर्यमादाय-वस्तुनाभिव्यक्तानां तेषां ध्वनित्वमेव न गुणीभूतत्वम्। उक्तं प्रकाशकृता-'व्यज्यन्ते वस्तुमात्रेण यदाऽलं-

व्यवहारस्य तु समासोक्त्यवयवस्य निरलंकारतया वस्तुन्युपस्कारकत्वं समासोक्तावविरुद्धमिति वाच्यम् । एवमपि 'बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम्' इति न्यायेनोक्तयुक्तेः शिथिलत्वात्, अपराङ्गतायां दुरपह्नवत्वात् ।

अथोच्येत—उपमानमुपमेयं साधारणो धर्म इति ह्युपमाशरीरघटकम्[1], न तु ततः पृथग्भूतम्, तैर्विना तस्या अनिष्पत्तेः । इत्थं चोपमेयस्य साहश्यांशेनोपस्कारेऽप्युपमाया नापराङ्गत्वम्[2], उपमेयस्यापरत्वाभावात् । यथा समासोक्तावप्रकृतव्यवहारेण प्रकृतस्योपस्करणेऽपि न समासोक्तेरपराङ्गत्वम्, प्रकृताप्रकृतघटितत्वात्, एवमिहापि स्यादिति । तथापि समासोक्तेरिवास्यापि प्रभेदस्य गुणीभूतव्यङ्ग्यत्वापत्तेः, अस्येव वा समासोक्ते-

दित्यर्थः । अनलंकारत्वेऽवयवत्वं हेतुः । अदृढे इति च्छेदः । साहश्यांशेन तद्रूपोपमाङ्गेनोपमानेन । उक्तमेवार्थं विशदयति—**यथेति । गुणीभूतव्यङ्ग्यत्वापत्तेरिति ।** अयं भावः—विशिष्टस्योपमाशरीरत्वेऽपि उपमेयांशस्य न व्यङ्ग्यत्वम् । शक्त्यैव तल्लाभात् । एवं च तदघटकव्यङ्ग्यांशस्य तद्घटकवाच्यादनतिशायित्वेन गुणीभूतव्यङ्ग्यत्वं दुर्वारमिति । अत्र वदन्ति—अलंकाराणामुद्दीपनविधया रसाद्युपयोगित्वेनालम्बनापेक्षयोद्दीपनेऽधिकचमत्कारित्वस्य सर्वानुभवसिद्धतया करतलेतिपदवाच्यालम्बनविभावापेक्षयातिशायित्वाद्ध्वनित्वमव्याहतमेव । रसाद्यपेक्षया गुणीभूतव्यङ्ग्यत्वं लिष्टमेव । समासोक्तौ तु 'आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्' इति सखीशिक्षावाक्येऽप्रकृतनायकवृत्तान्ताध्यारोपं विना तदनुपपत्तेर्गुणीभूतव्यङ्ग्यत्वं स्पष्टमेव । यत्र तु तस्यापि रसाद्युपस्कारकतया वाच्या-

कृतयस्तदा । ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥' एवं च अलंकारगतचमत्कारहेतोस्तुल्यत्वादत्रापि गुणीभूतत्वं न स्यादिति शङ्का । यदि बाधिका (दत्तदोषनिवारिका), युक्तिः शिथिला, तर्हि अन्यस्थले एवं जातमिति दृष्टान्तेन किं साध्यम्? [ यथाऽत्रैव अलंकाराणामुपस्कारकत्वेपि ध्वनित्वं प्रकाशे उक्तमिति दृष्टान्तेन न फलम् । ] युक्तौ प्रबलायाम् अन्यदपि (निदर्शनस्थलमपि) बाध्यताम् । अर्थात् प्रधानस्योपस्कारकत्वे गुणीभावो भवतीति अनुगमे दृढे प्रकाशायुक्तस्थलेपि–गुणीभाव एवोचितः । इति समाधानम् ।

१ उपमाशरीरसंपादकसामग्री ।

२ सार्वभौमेन (दिग्गजेन) साम्यम् (यद्धि उपमाया एकमङ्गम्) प्रकृतस्य राज्ञ उपस्कारकमिति, अङ्गिन्या उपमाया अपराङ्गत्वं न शक्यं वक्तुम् । अपरं प्रति अङ्गत्वं तदैव भवेत् यदा इयमुपमा स्वस्मादन्यस्य कस्यचिदङ्गं स्यात् । अत्र तु उपस्कार्यम् उपमेयमुपमाघटकमेव । ततः अपरपदेन कथं वा तद्व्यपदेश उचितः? यथा समासोक्तेरङ्गद्वयं प्रकृतमप्रकृतं च । तत्र अप्रकृतस्य प्रकृतोपस्कारकत्वेपि प्रकृताप्रकृतघटिताया अङ्गिन्याः समासोक्तेर्न अपराङ्गत्वं व्यवह्रियते तथात्राप्युपमाया नाऽपराङ्गत्वम्, इति शङ्का ।

रपि ध्वनिव्यपदेश्यत्वापत्तेः। अन्यच्च—श्लेषे हि श्लेषभित्तिकमभेदाध्यवसानं द्वयोरर्थयोरिति सकलालंकारिकनिबद्धम्, अनुभवसिद्धं च। तत्र मूलान्वेषणे विधीयमाने एकपदोपात्तत्वान्न शक्यते मूलमन्यन्निर्वक्तुम्। एकपदोपात्तो ह्यनेकोऽप्यर्थोऽभिन्नतयैव भासते। इत्थं च 'उल्लास्य कालकरवाल–' इत्यादावप्येकपदोपात्ततया द्वयोरर्थयोरभेदाध्यवसानस्य युक्तत्वेनाभेदस्यैव व्यङ्ग्यत्वमुचितम्, नोपमायाः। श्लेषे द्वयोरर्थयोर्वाच्यत्वम्, एककालत्वं च। इह त्वेकस्य वाच्यत्वम्, अपरस्य व्यङ्ग्यत्वम्, भिन्नकालत्वं चेति। एतावन्मात्रेणैवैकपदोपात्तत्वप्रयुक्तमभेदाध्यवसानं न शक्यं त्यक्तुम्, व्यङ्ग्यताया भिन्नकालत्वस्य चाभेदप्रतिपत्तावबाधकत्वात्। एतेन 'रूपकस्योपमाज्ञानाधीनज्ञानत्वेन प्रथमोपस्थिततया तस्या एव संबन्धत्वं कल्प्यम्' इति काव्यप्रकाशटीकाकारैरुक्तं नातीव श्रद्धेयमिति। प्रकृतमनुसरामः।

एवमलंकारान्तरमपि शब्दशक्तिमूलानुरणनस्य विषयः। यथा यमुनावर्णने—'रविकुलप्रीतिमावहन्ती नरविकुलप्रीतिमावहति। अवारितप्रवाहा

दतिशयितत्वं प्रागुक्तरीत्या तत्रास्तु नाम ध्वनित्वं तस्याः। न चैवमप्युपमाकृतोत्कर्षमादायास्तु ध्वनित्वम्, अलंकारध्वनिरिति तु कथमिति वाच्यम्। अलंकारकृतोत्कर्षध्वनावेवालंकारध्वनिरिति व्यवहारादिति। विनिगमनाविरहादाह—**अस्यैव वेति**। प्रभेदस्येवेत्यर्थः। प्राचोक्तमुपमालंकारध्वन्युदाहरणं खण्डयति—**अन्यच्चेति**। किं चेत्यर्थः। श्लेषभित्तिकं तन्मूलकम्। **विधीयमान इति**। क्रियमाण इत्यर्थः। एकपदोपात्तत्वादन्यदित्यन्वयः। इह तु 'उल्लास्य–' इत्यादौ तु। इतिः पूर्वग्रन्थसमाप्तौ। **अलंकारान्तरमिति**। उपमातिरिक्तमपीत्यर्थः। **रवीति**। सूर्यवंशप्रीतिं मनुष्यपक्ष्युभयसमूहप्रीतिं च। **अवारीति**। अप्रतिबद्धप्रवाहा। शोभनं वार्जलं तत्संजातं यस्य

१ यदि समासोक्त्या सह साम्यं संपाद्यते तर्हि यथा समासोक्तेर्गुणीभूतव्यङ्ग्येषु गणना तथा अस्या उपमाया अपि स्वीकार्या (या हि अस्माभिः साध्यते)। ननु समासोक्तिरेव एतत्समाना कुतो न स्यादिति आगृह्यते, तदा भवदुक्तया समासोक्तिरपि ध्वनिकाव्यं स्यात्। तस्मादेवंविधस्थलेषु अभेदाध्यवसानमेव (रूपकमेव) व्यङ्ग्यं नोपमा। इति स्वसिद्धान्तं स्थापयति, प्राचोक्तं च खण्डयति।

२ प्राचामनुसारं तत्र प्रकरणादिनाऽभिधानियमाऽभावात्। अर्थाद्द्वयोरेव प्रकृतत्वात्।

३ इह तु प्रकरणाद् राजार्थस्य वाच्यत्वम्, दिग्गजार्थस्य व्यङ्ग्यत्वम्।

४ पूर्वयुक्त्या अभेदस्यैव (रूपकस्यैव) व्यङ्ग्यत्वं सिद्धं नोपमायास्तदा उल्लास्य कालकरेत्यत्र उपमाया एव प्रकृताप्रकृतयोः संबन्धत्वकथनमसंगतमेवेत्यर्थः। तथा चात्रापि एकपदोपस्थाप्यत्वरूपाभेदाध्यवसानेन रूपकस्यैव व्यङ्ग्यत्वमित्याशयः।

सुवारितप्रवाहा ।' इह नराणां वीनां च कुलस्य प्रीतिमावहतीति प्रकृतेऽर्थे सिद्धे रविकुलप्रीतिं नावहतीति द्वितीयोऽप्रकृतोऽर्थः विरोधश्च । एवमन्यत्रापि । यदि तु रविकुलप्रीतिमावहन्त्यपि न रविकुलप्रीतिमावहति । अवारितप्रवाहापि सुवारितप्रवाहा इत्यपिरन्तर्भाव्यते तदा विरोधांशस्यापिनोक्तत्वाद्द्वितीयार्थस्य च तदाक्षिप्तत्वान्न ध्वनित्वम् । निपातानां द्योतकतानयेऽपि स्फुटद्योतितस्य तदाक्षिप्तस्य च वाच्यकल्पत्वान्न तथात्वम् । ननु 'मृणालवलयादि दवदहनराशिः' इत्यत्र विरोधाभासस्य कथं वाच्यालंकारत्वम् । विरोधांशस्य शब्दवाच्यताविरहेण व्यङ्ग्यताया एवाभ्युपगन्तव्यत्वात् । न च विरोधविशिष्टाभेदस्य संसर्गत्वाद्वाच्यार्थबोधविषयतया विरोधस्य वाच्यत्वमिति वाच्यम् । विरोधाभेदयोः परस्परविरुद्धत्वेनैककालावच्छेदेनैकसंसर्गत्वस्यानुपपत्तेः । नानार्थयोरभेदस्यैव संसर्गतया विरोधस्यापि संसर्गत्वे मानाभावाच्च । पर्यन्ते दवदहनराशिपदस्य सदृशलाक्षणिकतया

---

तादृशः प्रवाहो यस्याः सा । **विरोधश्चेति** । अलंकारो ध्वन्यत इति शेषः । द्वितीयार्थस्य चाप्रकृतार्थस्य च । **तदेति** । अपिबोध्यविरोधेत्यर्थः । ननु निपातानां द्योतकत्वेनोक्तत्वाभावाद्ध्वनित्वमेवात आह—**निपातानामिति** । तथा च द्योतकत्वं विलक्षणमिति भावः । न तथात्वं न ध्वनित्वम् । प्राचीनोदाहरणे शङ्कते—**नन्विति** । ननु तादात्म्यवदुपपत्तिः स्यादत आह—**नानार्थयोरिति** । संसर्गत्वे तद्घटकत्वे । तादात्म्यस्य संसर्गत्वं तु तन्त्रान्तरे प्रसिद्धमिति भावः । ननु प्रतीत्यन्यथानुपपत्तिरेव मानमत आह—**पर्यन्त इति** । पर्यवसान इत्यर्थः । मात्रपदेन वाच्यत्वनिरासः ।

---

१ अगूढं व्यङ्ग्यं वाच्याक्षिप्तं च वाच्यायमानमिति सर्वैरुक्तम् ।

२ विरोधवाचकः 'अपि'शब्दोत्र नास्तीति ।

३ वाच्यार्थस्य यो बोधस्तद्गोचरः । अयं भावः—'मृणालवलयो दवदहनः' इत्युक्तौ विरोधविशिष्टयोर्द्वयोरनयोरभेदः संसर्गविधया वक्तव्यः स्यात् । ततश्च विरोधविशिष्टौ इमौ यदा वाच्यार्थबोधविषयौ, तदा तत्संबद्धो विरोधोपि अभिधाविषयीभूतो जात इति शङ्का । विरोधविशिष्टयोरभेदोनुपपन्नः । यदा विरोधः प्रतीयेत तदा अभेदो नेति, एककालं द्वयोः संसर्गता न स्यादिति समाधानम् ।

विरोधांशस्य तिरोधानाच्च । मैवम् । उक्तपद्यस्य विरोधोदाहरणतामात्रे तात्पर्यात्, व्यङ्ग्यत्वेऽपि तथात्वस्यानपायात् । वाच्यविरोधोदाहरणतायां त्वपिरन्तर्भाव्यः । केचित्तु—'विरोधांशस्य व्यङ्ग्यत्वेऽपि विरोधिद्वयस्य वाच्यतामात्रेण विरोधाभासस्य वाच्यालंकारव्यपदेशोपपत्तिः । इत्थमेव चांशान्तरस्य व्यङ्ग्यत्वेऽप्येकांशमादाय समासोक्त्यादीनामपि वाच्यालंकारव्यपदेशः' इत्याहुः ।

यथा वा—

'कृष्णपक्षाधिकरुचिः सदासंपूर्णमण्डलः ।
भूपोऽयं निष्कलङ्कात्मा मोदते वसुधातले ॥'

अत्र भगवत्पक्षाधिकप्रीत्यादिलक्षणे प्रकृतभूपोपयोगित्वात्प्रकृतेऽर्थे शक्त्या प्रतीतिपथमवतीर्णे द्वितीयोऽर्थोऽप्रकृतो वैधर्म्यात्मा तत्प्रयुक्तो व्यतिरेकश्च । न चात्र व्यतिरेकस्य कविगतराजविषयकरतिभावोत्कर्षकतया गुणीभूतस्य कथं ध्वनिव्यपदेशहेतुत्वम्, प्रधानस्यैव ध्वनिव्यपदेशहेतुत्वादिति वाच्यम् । उदासीने वक्तरि तत्त्वार्थकथनपरस्य पद्यस्य वक्तृगतरतिव्यञ्जकत्वासंगतेः, गुणीभूतस्याप्यर्थस्य वाच्यार्थापेक्षया प्रधानतया ध्वनिव्यपदेशहेतुतायाः प्राचीनैः स्वीकाराच्च । अन्यथा—

'निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥'

---

अन्तर्भाव्यः मृणालेत्यादौ । शब्दशक्तिमूलालंकारान्तरध्वनिमुदाहरति—**यथा वेति** । भगवत्पक्षेऽधिका प्रीतिर्यस्य । सद्भिरा समन्तात्परिपूर्णं मण्डलं यस्य । निष्कलङ्कः पवित्र आत्मा यस्य सोऽयं भूपो भुवि मोदत इति प्रकृतोऽर्थः । कृष्णपक्षेऽसितपक्षेऽधिकरुचिः । सदा सर्वकाले संपूर्णमण्डलः । निष्कलङ्कः कलङ्कशून्य आत्मा यस्य सोऽयं भुवि मोदत इति चन्द्रवैधर्म्यात्मा प्रकृतोऽर्थः । यद्वा कृष्णपक्षे पापकर्मण्यधिकरुचिः । सदासं यथा तथा पूर्णं मण्डलं यस्य । निष्कलङ्कोऽत्यन्तकलङ्क आत्मा यस्य सोऽयमित्यप्रकृतोऽर्थः । **तत्प्रेति** । अप्रकृतार्थप्रयुक्तव्यतिरेकालंकार इत्यर्थः । व्यज्यत इति शेषः । उदासीने । रतिरोषोभयानाविष्टे सतीति शेषः । अन्यथा तथानङ्गीकारे । **निरुपेति** । उपादानसंभार उपकरणसमूहस्तूलिकादिकं तद्रहितं यथा स्यात्तथा । अभित्तावेव

---

१ 'वाच्यात् अतिशायिनि व्यङ्ग्ये, उत्तमम् (ध्वनिः)' एतदेव ध्वनिलक्षणे प्रोक्तम्, तद्व्यङ्ग्यं वाच्यापेक्षया अतिशायकं सदपि कस्यचिद्व्यङ्ग्यान्तरस्यापेक्षया अनतिशायकं न स्यादिति तत्र नोक्तम् । पण्डितराजेन तु ध्वनिलक्षणे गुणीभावितात्मानाविति विशेषणेन अपराङ्गादीनां निरासो विहित इत्याकूतम् ।

इत्यत्र व्यतिरेकध्वनित्वं तैरुक्तमसंगतं स्यात् । व्यतिरेकस्य भगवद्विषयकरतिभावाङ्गताया अनुभवसिद्धत्वात् ।

शब्दशक्तिमूलवस्तुध्वनिर्यथा—

'राज्ञो मत्प्रतिकूलान्मे महद्भयमुपस्थितम् ।
बाले वारय पान्थस्य वासदानविधानतः ॥'

अत्रोपभोगं देहीति वस्तु राजपदशक्तिमूलानुरणनविषयः । राजपदाच्चन्द्रोपस्थितावेव चन्द्रजनितभयवारणकारणत्वेनोपभोगस्याभिव्यक्तेः । न चात्र नृपचन्द्रयोरुपमानोपमेयभावः, भेदापोहरूपं रूपकं वा तथास्त्विति वाच्यम् । इह नृपरूपस्यार्थस्य चन्द्ररूपार्थगोपनमात्रार्थमुपात्तत्वेन युगपदुल्लसितोपमानोपमेयकयोरुपमारूपकयोस्तात्पर्यविषयताया अयोगात् । न चासंसृष्टार्थद्वयबोधने वाक्यभेद इति वाच्यम् । तुल्यकक्षतया द्वयोरसंसृष्टयोरर्थयोः प्रतिपिपादयिषितत्व एव तस्याभ्युपगमात् । इह त्वाच्छादकप्रतीतिसमये आच्छाद्याऽप्रतीतिः, आच्छाद्यप्रतीतौ चाच्छादकन्यग्भाव एवेति नास्ति तुल्यकक्षता ।

काव्यप्रकाशे तु—'शनिरशनिश्च तमुच्चैः' इत्यादिकमुदाहृत्य 'अत्र विरुद्धौ द्वावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यत' इत्युक्तम् ।

---

शून्य एव चित्रं नानाकारं जगत्तन्वते तस्मै अनिर्वचनीयस्वरूपाय, कला चन्द्रस्य षोडशो भागस्तेन श्लाघ्याय शूलिने महादेवाय नमः । पक्षे चित्रमालेख्यम् । कला आलेख्यक्रिया कौशलं च । तैः प्राचीनैः । **राज्ञ इति** । हे बाले, त्वं मत्प्रतिकूलाद्राज्ञः सकाशादुपस्थितं महत्पान्थस्य मम भयं वासदानविधानतो वारयेत्यन्वयः । वासश्च दानं चेत्यर्थः । **भेदापोहेति** । अभेदेत्यर्थः । तथास्तु अनुरणनविषयोऽस्तु । तथा च ता[illegible]शालंकारध्वनेरेवोदाहरणम्, न वस्तुध्वनेरिति भावः । युगपदुल्लसिते उपमानोपमेये ययोस्तयोरित्यर्थः । तस्य वाक्यभेदस्य । **आच्छादकेति** । नृपरूपार्थेत्यर्थः । **आच्छाद्येति** । चन्द्ररूपार्थेत्यर्थः । शक्तिनियमेनेति भावः । अत्र बाले इति पदेन व्यङ्ग्यस्य वाच्यायमानताकरणादयोग्यमेतत् । **शनिरिति** । शनिर्ग्रहः, अशनिर्वज्रं च । पुनस्त्वर्थे । उदार उद्भटः ।

---

१ उपभोगरूपोऽर्थस्तत्र संनिहितानां न गोचरः स्यादिति पान्थस्य तात्पर्यम् । चन्द्रेण सहोपमाऽभेदयोस्तु सोऽर्थः स्फुटः स्यादित्याशयः ।

२ प्रतिपादयितुम् इष्टः प्रतिपिपादयिषितः तत्त्वे ।

तत्र 'द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं हननं भानं च[1]' इति व्याख्यातृभिर्व्याख्यातम्। तत्र शन्यशन्योर्हननक्रियाकर्तृत्वान्वयेऽप्युदारानुदारयोर्भान[2]कर्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावात्कथमेककार्यकारित्वं संगतं स्यात्। अतो विरुद्धौ द्वावित्यादि प्रथमार्धविषयम्। द्वितीयार्धे तु विरोधाभास[3] एव। कर्तर्यभेदेनान्वयमात्रेण कुरुत इत्यस्योपपत्तिश्चेत्, अस्तु द्वितीयार्धेऽपि विरुद्धौ द्वावित्यादि वस्तु व्यङ्ग्यम्। परं त्वर्धद्वयेऽपि विरोधाभासालंकारशबलितमेव। शत्रुविरुद्धस्य शत्रुत्वासंभवादेकस्य शन्यशनिकर्तृकहननकर्मत्वायोगेनाद्यार्धे, उदारत्वानुदारत्वयोरेकाधिकरणवृत्तित्वायोगाद्द्वितीयार्धे च विरोधस्य स्फुटत्वात्।

अर्थशक्तिमूलानुरणनं यथा—

'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम्।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः॥'

अत्र मधुव्रतकर्तृकमञ्जुगुञ्जनाद्यैर्वस्तुभिः कविकल्पिततत्त्वविरहेण स्वतः-

---

अनुदार अनुगतदारः, नृपदत्तैश्वर्येणाप्रवासात्। न उदारो यस्मादिति वा। पक्षेऽशनिः शनिविरोधी। नञः असुरादाविव विरोध्यर्थकत्वात्। अनुदार उदारादन्यः। शबलितमेव। उक्तवस्तु व्यङ्ग्यमित्यनुषङ्गः। तदलंकारसत्त्वे हेतुमाह—**शत्रुविरुद्धस्येति**। विरोधिशत्रोर्विरोध्यन्तरमित्रत्वादेकस्य विरोधिद्वयकर्तृकहननकर्मत्वायोगेन तादृशहननकर्मत्वयोरपि विरोधादिति भावः। राज्ञोऽविहताज्ञत्वमादाय कोपस्यातिशयितत्वमादाय वा तत्परिहारः। अशनिरित्यत्र नञ् विरुद्धार्थक इत्युक्तम्। न चैवं विरोधेऽस्य कथं व्यङ्ग्यता। तन्मूलकहननकर्मत्वयोर्विरोधस्य व्यङ्ग्यत्वेनाक्षतेः। तमादायैव च विरोधाभासः। तस्यैव समाधानात्। न त्वनयोर्विरोधस्यास्य समाधानमस्ति। एतेनैकधर्मिगतत्वे एव विरोधस्यालंकारत्वान्नात्र विरोधालंकार इति परास्तम्। तादृशकर्मत्वयोरेकधर्मिगतत्वस्य स्पष्टत्वात्। अन्ये तु विरोधिनोरप्येकशत्रुसंभवान्न तादृशहननकर्मत्वयोर्विरोध इत्याहुः। द्वितीयार्धे चानुगतदार इत्यर्थेन तत्परिहार उक्त एवेति दिक्। **रणनं यथेति**। स्वतःसंभविवस्तुना वस्तुध्वनिर्यथेत्यर्थः। **संमुखमिति**। सरस्या

---

१ कुरुतः इत्यनुषङ्गः। तत्र हननकार्यकर्तृत्वेपि भानकार्यकर्तृत्वं नास्ति। 'स उदारः अनुदारश्च भाति' अत्र प्रधानकर्ता सः, उदारानुदारौ तद्विशेषणे। ततश्च विरुद्धयोः उदारानुदारयोः भानकर्तृत्वं क?।

२ भातिक्रियाकर्ता यः तत्पदार्थः तद्विशेषणयोः। तत्पदार्थस्य प्रकारविशेषणयोर्वा।

३ अर्थात्पूर्वार्धे वस्तु व्यङ्ग्यम्। उत्तरार्धे अलंकारो (य एव उदारः स एव अनुदार इति) व्यङ्ग्यः।

संभविभिरासन्नसरसिजोत्पत्तिध्वननद्वारा शरदागमनैकव्यरूपं वस्तु व्यज्यते । काव्यप्रकाशे तु—'अरससिरोमणि धुत्ताणं अग्गिम—' इत्याद्युदाहृत्य 'ममैवोपभोग्य इति वस्तु व्यज्यते' इत्युक्तम् । तत्र केन वस्तुनेदं वस्तु, व्यज्यते ? न तावदलसशिरोमणित्वादिकान्तविशेषणैः, तेषां धात्र्यादिवृद्धस्त्रीनिरूपितत्वेन तवैवोपभोग्य इत्यादिरूपेणैव व्यङ्ग्यस्य वक्तव्यतापत्तेः । विशेषणानां कामिनीनिरूपितत्वे तु ममैवेत्यादि व्यङ्ग्याकारः स्यात् । नापि परिफुल्लविलोचनत्वेन, तस्य हर्षभावानुभावत्वेन हर्षव्यञ्जकताया एव क्लृप्तत्वात् । मदुपभोग्यत्वं हि हर्षभावस्य विभावः । नह्यनुभावैर्भावो व्यज्यत इति तद्विभावव्यञ्जनं शक्यं वक्तुम् ।

इति भावः । **आसन्नेति** । शीघ्रभाविनी या कमलानामुत्पत्तिस्तद्व्यञ्जनेत्यर्थः । **अरसेति** । 'अलसशिरोमणिर्धूर्तानामग्रणीः पुत्रि धनसमृद्धिमयः । इति जल्पितेन नताङ्गी प्रफुल्लविलोचना जाता ॥' पतिंवरां प्रति धात्र्याः प्ररोचनोक्तिः पूर्वार्धम् । उत्तरार्धं तु कविवाक्यम् । हे पुत्रि, अयं वरः निरुद्योगश्रेष्ठो धूर्तश्रेष्ठः प्रचुरधनसमृद्धिः, इति भाषितेन लज्जया नताङ्गी काचित्कन्या हर्षविकसितलोचना जातेत्यर्थः । अत्रालसत्वेन नायिकान्तरागमनं सूच्यते । धूर्तत्वेन रतेष्वनादृतगुणत्वम्, धनिकत्वेन कृपणतया दातृत्वं च सूचितं सत् अन्यासामनाकर्षणीयत्वं मदुपभोग्यत्वं च व्यनक्ति । तद्विषयकं च कुमार्या ज्ञानं प्रफुल्लनयनत्ववत्त्वेन वस्तुना स्वहेतुहर्षव्यञ्जनद्वारेण तत्कारणीभूतं सामाजिकेषु व्यज्यते । केचित्तु—'अलसत्वेन धनिकत्वेन चाप्रवासित्वम्, धूर्तत्वेन संभोगेष्वतृप्तत्वम्, धनिकत्वेन नानाधनदातृत्वमपि, नताङ्गित्वेन नमस्कारः तेन स्वस्याप्यमानिनीत्वम्, प्रफुल्लनयनत्वेन हर्षः तेन ममैवोपभोग्यो नाविदग्धाया इति वस्तुव्यञ्जनम्' इत्याहुः । तेषां विशेषणानां निरूपितत्वेन कथितत्वेन । एवमग्रेऽपि । **परीति** । अस्य कामिनीनिष्ठत्वादिति भावः । **तस्येति** । परिफुल्लविलोचनात्वस्य हर्षाख्यव्यभिचारिभावकार्यत्वेनेत्यर्थः । कार्येण कारणानुमानस्य प्रसिद्धत्वादिति भावः । विभावः कारणम् । तत्सत्त्व एव हर्षोदयात् । नहीत्यस्य वक्तुं शक्यमित्यत्रान्वयः । **तद्विभावेति** । भावविभावेत्यर्थः । हिसूचितमश-

१ यतस्तत्र 'पुत्रि' इति आमन्त्रणम् ।

२ यदि कामिन्या निरूपितं स्यात्तदा ममैवेत्यादि व्यङ्ग्यं स्यात्तया तु न निरूपितमित्याशयः ।

३ हर्षेण प्रफुल्लविलोचनत्वं भवतीति इदं हर्षस्य अनुभावः । अयमनुभावः हर्षस्य ( भावस्य ) व्यञ्जकः स्यात्, न त्वयं हर्षभावस्य विभावम् ( ममायमुपभोग्य इति हर्षकारणभूतं ज्ञानरूपं वस्तु ) व्यङ्क्तुं प्रभवेत् ।

४ अनुभावैर्भावः अभिव्यज्यते, अत एव तस्य भावस्य विभावोऽपि अनुभावैरेव व्यज्यते इति तु न शक्यं वक्तुम् । परिफुल्लविलोचनत्वरूपेणानुभावेन ममैवोपभोग्य इति विभावव्यञ्जनेऽसामर्थ्यात् । पुत्रागमनादिनापि प्रफुल्ललोचनत्वस्य सत्त्वात् ।

केवलस्य परिफुल्लविलोचनत्वस्य ममैवेत्यादिव्यङ्ग्यव्यञ्जने सामर्थ्याभावात्। पुत्रागमनधनप्राप्त्यादिविभावकेऽपि हर्षभावे परिफुल्लविलोचनताया अनैकान्तिकत्वादिति। सत्यम्। 'इअ भणिम्मि' इत्याद्यर्थवशप्रापितालसशिरोमणित्वादिविशेषणश्रवणविशिष्टप्रफुल्लविलोचनत्वेन मदुपभोग्यत्वलक्षणविभावाभिव्यक्तिद्वारा हर्षभावोऽभिव्यज्यते। तत्र द्वारीभूतविभावाभिव्यक्तिमादाय काव्यप्रकाशग्रन्थसंगतिः। न च भावध्वनेः संलक्ष्यक्रमत्वापत्तिः, द्वारस्य संलक्ष्यक्रमत्वादिति वाच्यम्। इष्टापत्तेः। न चापसिद्धान्तः, तस्य प्रागेवोद्धारात्।

'मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः
स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधरः खण्डितः।
तत्त्वं ब्रूहि मदीय जीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः॥'

क्यत्वे हेतुमाह—**केवलस्येति**। विशिष्टस्य तत्त्वस्य सिद्धान्ते वक्ष्यमाणत्वादिदं विशेषणम्। **विलोचनताया इति**। सत्त्वेन तस्या इति शेषः। अनैकान्तिकत्वाद्व्यभिचरितत्वात्। **इअ भणीति**। इति भणितेनेत्याद्युत्तरार्धस्य योऽर्थस्तदुद्देशेन प्रापितो यस्तादृशपरिफुल्लविलोचनत्वरूपो धर्मस्तेनेत्यर्थः। तस्यैकपदाबोध्यत्वादर्थवशप्रापितेत्युक्तम्। **विभावेति**। हर्षभावविभावेत्यर्थः। भावध्वनेर्हर्षभावध्वनेः। द्वारस्य तद्विभावाभिव्यक्तिरूपस्य। **तस्येति**। अपसिद्धान्तत्वस्येत्यर्थः। तथा च सिद्धान्त एवायमिति भावः। **मृद्वीकेति**। स्वतःसंभविवस्तुनालंकारध्वनिर्यथेत्यादिः। मृद्वीका द्राक्षा। सिता खण्डशर्करा। स्वर्यातेन स्वर्गं प्रति गतेन। अपेः समुच्चेयमाह—**रम्भेति**।

१ इत्याद्यर्थवशेन उपस्थापितम्, अलसशिरोमणित्व-धूर्ताग्रणीत्वादिविशेषणश्रवणेन सहकृतम्, यत्प्रफुल्लविलोचनत्वम् (अनुभावः), तेन मदुपभोग्योयमिति मदुपभोग्यत्वरूपविभावाभिव्यक्तिद्वारा (मदुपभोग्यत्वरूपं विभावमभिव्यज्य) ततः हर्षभावोऽभिव्यज्यते।

२ अयं भावः—अत्र चरमं हर्ष एवाभिव्यज्यते परंतु तदभिव्यक्तेर्द्वारभूतं मदुपभोग्योयमिति विचाररूपं हर्षभावस्य विभावम् अभिव्यज्य ततः सोऽभिव्यज्यते। ततश्च—हर्षाभिव्यक्तेर्द्वारभूतां मध्यगतां विभावाभिव्यक्तिमादाय काव्यप्रकाशेनोक्तं—'ममैवोपभोग्योयम् इति वस्तु अभिव्यज्यते', इति न काचिदसंगतिरित्याशयः।

अत्र निष्कृष्टजीवसंबोध्यक-परिदृश्यमानस्थूलदेहेन्द्रियादिचेतनाचेतनसंघातात्मकास्मत्पदबोध्यकर्तृकप्रश्नविषयेणार्थेन वस्तुना तथाभूतेन भगवन्नाम्नोऽनेकजन्मवृत्तान्ताध्यक्षीकरणकारणयोगसिद्धिविशेषतादात्म्याध्यवसायरूपातिशयोक्तिर्व्यज्यते। अथ प्रश्नविषयस्यात्र नानाजन्मगतवृत्तान्तरूपतया तज्ज्ञं प्रत्येव प्रष्टुमौचित्येनानभिज्ञं स्वजीवं प्रति प्रष्टुमयोग्यत्वात्प्रश्नान्यथानुपपत्त्या आक्षिप्ता, वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यरूपा वा, प्रागुक्तातिशयोक्तिरिह कथं ध्वनिव्यपदेशहेतुः स्यात्? इत्थमेव च 'तदप्राप्तिमहादुःख—' इत्यत्राप्यतिशयोक्तेरर्थापत्तिविषयत्वं गुणीभूतव्यङ्ग्यत्वं वा युक्तम्। अनेकजन्मोपभोग्यदुःखसुखराशिभ्यां तदप्राप्तिमहादुःखतच्चिन्ताविपुलाह्लादयोरनिगरणेऽशेषपाप-पुण्यपुञ्जनाशकताया अनुपपत्तेः। तत्तद्दुःखसुखानां स्वस्वफलोपहितपापपुण्यनाशकताया एवान्यत्र क्लृप्तत्वात्। निगरणे तु तयोस्तन्नाशकताबुद्ध्युपपत्तिः। न च वस्तुमात्राभिव्यक्तस्यालंकारस्य न गुणीभूतव्यङ्ग्यत्वम्।

भूयः पुनः। अयं सांप्रतमनुभूयमानः। **निष्कृष्टेति**। परिदृश्यमानैतच्छरीरादिपृथक्कृतेत्यर्थः। तत्त्वं च तस्य भवता मदीयेत्याभ्यामाविष्कृतम्। अर्थेन मधुरिमोद्गारलक्षणरूपेण तथाभूतेन स्वतःसंभविना। नाम्न इत्यस्य तादात्म्याध्यवसायेत्यत्रान्वयः। अनेकजन्मस्ववृत्तान्तप्रत्यक्षीकरणे कारणभूतो यो योगाभ्यासजन्यसिद्धिविशेष इत्यर्थः। अर्थापत्तेर्मानान्तरत्वाभावादाह—**वाच्येति**। **तदिति**। '[2]तदप्राप्तिमहादुःखविलीनाशेषपातका। तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥ चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्। निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका॥' इति। जगत्सूतिं श्रीकृष्णम्। तत्संभोगाप्राप्त्या महादुःखम्। तच्चिन्तया विपुलाह्लादः। 'नास्य प्राणाः समुत्क्रामन्ति। अत्रैव समवलीयन्ते' इति श्रुतेर्मोक्षकाले निरुच्छ्वासता। चयशब्दार्थमाह—**पुञ्जेति**। **स्वस्वेति**। तत्तद्दुःखसुखरूपफलजनकेत्यर्थः। तासामलंकृतीनाम्। अत्र प्रकृतलक्ष्ये।

१ शरीरादितः पृथग्विभावितो यो जीवः स संबोध्यो यस्मिन्, परिदृश्यमानो यः स्थूलदेहेन्द्रियादिचेतनाचेतनसंघातः तदात्मकः अस्मत्पदबोध्यः कर्ता यस्मिन्, एतादृशेन प्रश्नविषयेणार्थेन—"भगवन्नाम अनेकजन्मसंबन्धिस्ववृत्तान्तप्रत्यक्षीकरणस्य कारणभूतो यो योगसिद्धिविशेषः तदात्मकमस्ति" अर्थात् नाम्ना सिद्धिविशेषो भवतीति न, नाम स्वयमेव सिद्धिविशेषरूपम् इति योगसिद्धिविशेषेण सह नाम्नः तादात्म्याध्यवसानरूपा अतिशयोक्तिर्व्यज्यते इत्याशयः।

२ श्लोकद्वयं विष्णुपुराणे पञ्चमांशे त्रयोदशेऽध्याये (२१।२२) वर्तते. उदाहृतं च काव्यप्रकाशे चतुर्थोल्लासे.

'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥'

इति सिद्धान्तादिति वाच्यम्। बाधे दृढे सिद्धान्तमात्रेणात्र ध्वनित्वस्य स्थापयितुमशक्यत्वादिति चेत्। सत्यम्। यादृशव्यङ्ग्यप्रतिपत्तिं विना यत्र वाच्यस्य सर्वथाप्यनुपपत्तिस्तत्र तद्वाच्यसिद्ध्यङ्गम्। यत्र च प्रकारान्तरेणापि तस्योपपत्तिः शक्या कर्तुं न तत्र तथा। अन्यथा हि 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यत्राधमत्वसिद्ध्यङ्गत्वाद्दूतीरमणस्य वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यत्वापत्तेः। प्रकृते च भगवन्नाम्नि योगसिद्धितादात्म्याध्यवसायरूपामतिशयोक्तिं विनापि भगवन्नामोच्चारणमाहात्म्यप्राप्तसार्वज्ञ्यबुद्ध्याऽपि प्रश्नोपपत्तेर्न गुणीभूतव्यङ्ग्यत्वम्। एतेनासंबन्धे संबन्धरूपातिशयोक्तिर्नामोच्चारणमाहात्म्यप्रभवसार्वज्ञ्याध्यवसायेऽपि स्थितेति स दोषस्तदवस्थ इति परास्तम्। भगवन्नामोच्चारणस्याचिन्त्यमाहात्म्यतायाः पुराणप्रसिद्धत्वात्। अथ वा मास्तु प्रागुक्तमुदाहरणं वस्तुनोऽलंकारव्यञ्जकतायाः, इदं तु भविष्यति—

तथा च सिद्धान्तोऽन्यविषयक इति भावः। तथा वाच्यसिद्ध्यङ्गम्। **वाच्येति**। वाच्यसिद्ध्यङ्गरूपं यद्गुणीभूतव्यङ्ग्यं तत्त्वापत्तेरित्यर्थः। यथा चात्र प्रकारान्तरेणाधमत्वसिद्धिस्तथा स्पष्टमधस्तात्। **सार्वज्ञ्येति**। सर्वज्ञतेत्यर्थः **स्थितेतीति**। सर्वज्ञत्वासंबन्धे तत्कल्पनादिति भावः। स दोषो गुणीभूतव्यङ्ग्यत्वापत्तिरूपदोषः। पुराणेत्युपलक्षणं श्रुत्यादेरपि। तथा च वस्तुतस्तत्सत्त्वैव, न कल्पनमिति न संबन्धातिशयोक्तिरिति भावः। अभ्युपेत्याप्याह—**अथ वेति**। अनुगमः संबन्धः। पाण्डुभावः पाण्डुत्वम्। उपचीयते

१ 'अथ प्रश्नविषयस्य' इत्यारभ्य, 'सत्यम्' इत्यतः प्राक् पूर्वपक्षस्यायं भावः—अनेकजन्यसंबन्धिवृत्तान्तविषयकः सोयं प्रश्नः अनभिज्ञं जीवं प्रति कृतः। ततश्च अप्रमत्तकविकृतस्य प्रश्नस्यास्यान्यथानुपपत्तिरूपया अर्थापत्त्या (प्रमाणविशेषेण) पूर्वोक्ता साऽतिशयोक्तिः (भगवन्नाम्नो योगसिद्धितादात्म्याध्यवसानरूपा) आक्षिप्यते (यथा अनुपपद्यमानस्य पीनत्वस्योपपत्त्यर्थं रात्रिभोजनम्) न त्वभिव्यज्यते।

अर्थापत्तिमनङ्गीकुर्वतां मते तु—यावत्कालमतिशयोक्तिरियं नोपतिष्ठते तावद्वाच्यस्यास्य प्रश्नविषयार्थस्य सिद्धिरेव न भवतीति सेयमतिशयोक्तिर्वाच्यसिद्धेरङ्गभूता।

एवमेव 'तदप्राप्तिमहादुःख' इत्यादिप्रकाशोदाहरणेऽपि अशेषपातकानां पुण्यचयस्य च क्षयस्तावत्कालं नोपपद्यते यावत्कालं तदप्राप्तिमहादुःखस्य अनेकजन्मोपभोग्यदुःखराशिना, तच्चिन्ताविपुलाह्लादस्य च अनेकजन्मोपभोग्यसुखसमूहेन च तादात्म्याध्यवसानं न भवेत्, (सुखदुःखोपभोगेनैव पुण्यपापयोर्नाशनीयत्वात्) ततश्च स्थलद्वयेऽपि गुणीभूतव्यङ्ग्यत्वात्कथं ध्वनित्वमिति शङ्का।

'न मनागपि राहुरोधशङ्का न कलङ्कानुगमो न पाण्डुभावः ।
उपचीयत एव कापि शोभा परितो भामिनि ते मुखस्य नित्यम् ॥'

अत्र राहुरोधशङ्काऽभावादिभिर्निरपेक्षैर्वस्तुभिर्व्यतिरेकालंकारो व्यज्यते ।

'नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति बिरुदावलीमहितमन्दिरे बन्दिनः ।
इदं तदवधि प्रभो यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः ॥'

अत्र युगान्तदहनोपमया यदैव तव कोपोदयस्तदैव रिपूणां संपदो भस्मसाद्भविष्यन्तीति वस्तु व्यज्यमानं राजविषयकरतिभावेऽङ्गमपि वाच्यापेक्षया सुन्दरत्वाद्ध्वनिव्यपदेशहेतुः[1] । न च भस्मीकरणपटुत्वरूपस्य साधारणधर्मस्योपमानिष्पादकत्वाद्व्यङ्ग्यस्य[2] वाच्यसिद्ध्यङ्गत्वं शङ्क्यम् । उपात्तशोणत्वरूपसाधारणधर्मेणापि तन्निष्पत्तेः संभवात् । उपमेयीभूतशोणद्युतिगतस्य[3]

वर्धते । **नदन्तीति** । स्वतःसंभव्यलंकारेण वस्तुनो यथेत्यादिः । मदशब्दे अर्शआद्यच् । बिरुदावलीं स्तुतिपरम्पराम् । अहितमन्दिरे शत्रुगृहे । तदवधि तावत्पर्यन्तम् । एवमग्रेऽपि । **उपमयेति** । वाच्ययेति शेषः । **व्यङ्ग्यस्येति** । तच्छरीरनिविष्टत्वादिति भावः । तन्निष्पत्तेरुपमानिष्पत्तेः । विनिगमनाविरहेऽप्याह—**उपमेयीभूतेति** ।

भगवन्नाममाहात्म्यात्सर्वज्ञताप्राप्त्याऽपि सोयं प्रश्न उपपद्यते, इति व्यङ्ग्यप्रतीतिं विनापि वाच्यस्योपपद्यमानतया न वाच्यसिद्ध्यङ्गमियमतिशयोक्तिरिति तत्समाधानम् ।

१ प्राचामनुसारमिदमुक्तं पण्डितराजेन । अन्यथा स्वकृतध्वनिलक्षणे तु 'गुणीभाविताऽत्मानौ' इति विशेषणेन अपराङ्गव्यङ्ग्यस्य स्फुटमेव निरासः । प्रोक्तमिदं 'कृष्णपक्षाधिकरुचिः' इति शब्दशक्तिमूलालङ्कारध्वनेरुदाहरणे ।

२ रिपुसंपदो भस्मसाद्भविष्यन्तीति व्यङ्ग्यतया प्रोक्तं यद्भस्मीकरणपटुत्वं तदेवोपमां निष्पादयतीति शङ्का । अत्र भस्मीकरणपटुत्वं साधारणधर्मतया न विवक्षितं किन्तु—यथा नयनकोणद्युतिः शोणा तथा युगान्तदहनोपि शोण इति शोणत्वस्यैव धर्मता विवक्षितेति समाधानम् ।

३ ननु भस्मीकरणपटुत्वमपि तु साधारणधर्मः संभवति, तदा ध्वनित्वं कथमित्याह—अत्र 'यदैव तव कोपोदयस्तदैव रिपुसंपदो भस्मसाद्भविष्यन्ति' इति व्यङ्ग्यशरीरे भस्मीकरणपटुत्वं यथा वाच्याया नयनकोणद्युतेर्धर्मस्तथा व्यङ्ग्यस्य कोपस्यापि । ततश्च वाच्यनयनकोणद्युतिगतं भस्मीकरणपटुत्वमेव साधारणधर्मं सत् वाच्यामुपमां निष्पादयेत्, उपमेयेन (नयनकोणद्युत्या) अभिव्यङ्ग्यस्य कोपस्य संबन्धि भस्मीकरणपटुत्वं तु न । यतो ह्युपमा वाच्या, अत एव वाच्यावस्थायां यः साधारणधर्मः स एव तां निष्पादयेत् । व्यङ्ग्यवाच्ययोरेककालत्वाभावात् व्यङ्ग्यगतः साधारणधर्मो न तां संपादयितुमर्हेदित्याशयः ।

भस्मीकरणपटुत्वरूपसाधारणधर्मस्योपमानिष्पादकत्वेऽप्युपमेयव्यङ्ग्यकोपगतभस्मीकरणपटुत्वस्यातथात्वाच्च ।

यथा वा—

'निर्भिद्य[1] क्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसो हन्त धित्सन्ति पादान् ।
यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चूचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेंऽशवः पान्तु भानोः ॥'

अत्र भ्रान्तिभृतां[2] तिरश्चामप्येवमानन्दं जनयतीति जगदानन्दहेतुर्भगवानिति व्यज्यते । एवंरूपाया भ्रान्तेर्लोकेऽपि संभवात्स्वतःसंभवित्वम् ।

उपमाया वाच्यत्वेन तदवस्थायां यदुपमेयं तद्गतधर्मस्यैव तन्निष्पादकत्वम्, न तूपमेयभूतोपमाव्यङ्ग्यरूपकोपगतस्य तद्धर्मस्य । तदा तस्यानुपस्थितेः । तथा च यस्य तन्निष्पादकत्वं न तस्य व्यङ्ग्यत्वम्, यस्य तत्त्वं न तस्य तत्त्वम् । गोऽनुपात्त इत्यन्यत् । अस्योदाहरणान्तरमाह—**यथा वेति** । ते रविकिरणा युष्मान्पान्तु । ते के । येषु तरूणामतिनिबिडमन्तःप्रदेशं विदार्य भूमिं गतेष्वतिदीर्घसुवर्णदण्डसंबन्धिभ्रमेण भृतं पोषितं मनो येषां ते जनाः । हन्तेत्याश्चर्यम् । पादान्किरणान्धित्सन्ति धर्तुमिच्छन्ति । किं च शुकबालका यैः संभिन्ने मिश्रिते तरुपत्राग्रनिष्ठचञ्चलहिमकणे या दाडिमीबीजस्य बुद्धिस्तया चञ्च्वा चाञ्चल्यं ग्रहणार्थं व्यापारमञ्चन्ति । कुर्वन्तीत्यर्थः । अत्र भ्रान्तिमानलंकारः ।

१ क्ष्मारुहाणाम् ( वृक्षाणाम् ) अतिगहनमुदरम् ( मध्यम् ) निर्भिद्य गोत्राम् ( पृथ्वीम् ) गतेषु येषु ( किरणेषु ) अतिदीर्घ-स्वर्णदण्डभ्रमेण संभृतमानसाः ( शुकशिशवः ) पादान् स्वचरणान् धातुमिच्छन्ति । अतिनिबिडवृक्षरन्ध्रं प्रविश्य भूमौ गतान् यान् ( किरणान् ) तिर्यक्प्रसृतान् अतिदीर्घान् स्वर्णदण्डान् भ्रान्त्वा तिर्यक्प्रसृतशाखासु स्थित्यभ्यासिनः पक्षिणोऽवस्थानार्थं पादान् धातुमिच्छन्तीत्यर्थः । यैः ( किरणैः ) संभिन्न ( अत एव अरुणवर्णे ) पत्राग्रस्थितनीहारकणे न दाडिमीबीजबुद्ध्या स्वचञ्चुचाञ्चल्यं ( ग्रहणाय ) कुर्वन्ति, ते भानोः किरणाः पान्तु ।

२ अत्र गुणविवेकिनां मनुष्याणां का कथा, भ्रान्तिमतां तिरश्चामप्येवमानन्दं भानुमान् जनयतीत्युक्तौ 'अपि' पदस्वारस्यात्, 'अञ्चन्ति च' इति 'च' पदोक्त्या, 'शुकशिशवः' इति शिशुपदेन भ्रान्तिपात्रतासंघटनौचित्येन च, तिरश्चामेवाऽऽनन्दः स्पष्टमुपनिबद्धः कविना ।

साहित्यमार्मिको नागेशमहोदयस्तु वृक्षनिर्गतरविकरेषु स्वर्णदण्डभ्रमं जनानामेवाह । ते ( जनाः ) च पादान् ( किरणान् ) धित्सन्ति धर्तुमिच्छन्ति ? इति व्याचष्टे । 'धा' धातोर्ग्रहणं न क्वचित्प्रयोग इति चिन्त्य एवायमर्थः । 'किरणान्' इति यदि मुद्रणदोषः स्यात् । किन्तु ते जनाः

'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन ॥'

अत्र समुच्चयेन क्रियायौगपद्यात्मना कार्यकारणपौर्वापर्यविपर्ययात्मिकातिशयोक्तिः । एषु स्वतःसंभवी व्यञ्जकः ।

'तदवधि कुशली पुराणशास्त्रस्मृतिशतचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते हरिणकिशोरदृशो दृशोर्विलासः ॥'

अत्र कामिनीदृग्विलासे चेतसि पदमर्पितवति विवेकस्य नास्ति कुशलमिति वस्तुना दृग्विलासकर्तृकपदार्पणस्य लोकसिद्धत्वाभावात्कविप्रौढोक्तिनिष्पन्नत्वेन सुनिषण्णे तस्मिन्का कुशलचर्चा विवेकस्येति वस्तु व्यज्यते ।

'कस्मै हन्त फलाय सज्जन गुणग्रामार्जने सज्जसि
स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृता-
स्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्तनम् ॥'

इह यद्यपि रमणीयाः पदार्थाः कलेर्नित्यमदनीया इति वस्तुना प्रौढो-

---

तद् व्यङ्ग्यमाह—**अत्रेति** । अपिना अतिरश्चाम् । **उदितमिति** । तादृशालंकारेणालंकारस्य यथेत्यादिः । **तदवधीति** । कविप्रौढोक्तिनिष्पन्नवस्तुना वस्तुनो यथेत्यादिः । तदवधि तावत्पर्यन्तम् । एवमग्रेऽपि । निष्पन्नेन वस्तुनेत्यन्वयः । व्यङ्ग्यमाह—**सुनीति** । दृग्विलासे सुस्थित इत्यर्थः । अस्योदाहरणाभासं खण्डयति—**कस्मा इति** । उपस्करणाय भूषणाय । भावाः पदार्थाः । वर्तनं वृत्तिः । जीवनमिति यावत् । उत्तरार्धार्थमाह—**रमेति** । अदनीया भक्षणीयाः । अस्य नियमेन लोकसिद्धत्वाभावादाह—**प्रौढो-**

---

स्वर्णदण्डेषु तेषु पादान् चरणान् स्थापयितुमिच्छन्तीति नागेशस्याशयस्तदा मार्गे गच्छतां पुरुषाणामकाण्ड एव स्वर्णदण्डभ्रान्तिः, ततोऽपि मार्गगमनं परित्यज्य तदुपरि पादप्रक्षेपः कीलोत्पाटितामेव तेषां पिशुनयतीति किं वा वक्तव्यं विचारशीलेषु ? शावका इत्यादिप्रयोक्तव्ये 'शुकबालकाः' इत्यादिप्रयोगोपि व्याकरणफक्किकाभ्यासिनोऽस्य साहित्याक्रमणपराक्रमं प्रकाशयतीत्यलम् ।

१ 'ल'कारस्य असकृत्स्वानन्तर्यमश्रव्यं स्वयमुपनिबद्धं कविना । इदं हि श्रवणे यथा विसदृशं तथा उच्चारणेऽपि क्लेशावहम् । अपि ललनापदनिधानेनैव तु नेदं हृदयहारि स्यात् ?

क्तिसिद्धेन मर्तुं कामयसे चेद्गुणप्राप्तौ यतस्वेति वस्तु व्यज्यते, तथापि तस्य पर्यायोक्तात्मनो[1] वाच्यापेक्षया सुन्दरताविरहाद्गुणीभूतत्वमेव। अलंकारा हि वाच्यसौन्दर्यसाराः प्रायशः स्वान्तर्गतं प्रतीयमानं पृष्ठतः कुर्वन्ति।

'देवाः[2] के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः।
यावन्नायाति राजन्नयनविषयतामन्तकत्रासिमूर्ते
मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजंगः॥'

अत्र कविप्रौढोक्तिसिद्धेन रूपकेण त्वय्युद्यतकरवाले सति का परेषां जीवनस्याशेति वस्तु व्यज्यते।

'साहंकारसुरासुरावलिकराकृष्टभ्रमन्मन्दर-
क्षुभ्यत्क्षीरधिवल्गुवीचिवलयश्रीगर्वसर्वंकषाः।
तृष्णाताम्यदमन्दतापसकुलैः सानन्दमालोकिता
भूमीभूषण भूषयन्ति भुवनाभोगं भवत्कीर्तयः॥'

अत्र कीर्तेः सानन्दालोकनेन वस्तुना कविकल्पितेन दुग्धभ्रान्तिस्ताप-

---

क्तीति। कवीत्यादिः। **गुणेति**। सज्जनेत्यादिः। तस्य व्यङ्ग्यभूतवस्तुनः। **पर्यायोक्तेति**। 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्।' इत्युक्तेति भावः। हि यतः। **देवा इति**। कविप्रौढोक्तिनिष्पन्नालंकारेण वस्तुनो यथेत्यादिः। के इति मध्यमणिन्यायेनान्वेति। पूर्वदेवा असुराः। समिति सङ्ग्रामे। मम पुरस्तादित्यन्वयः। नर इति जसन्तम्। **मुग्धेति**। मुग्धरूपशत्रुसंबन्धिप्राणरूपदुग्धभोजनकृतस्निग्धकान्तिरित्यर्थः। रूपकेण खड्गसर्परूपकेण। **साहंकारेति**। कविप्रौढोक्तिनिष्पन्नवस्तुना अलंकारस्य यथेत्यादिः। व्याख्यातमिदमधस्तात्। अविवेकोऽभेदः। इदं च व्यङ्ग्यल-

---

१ मरणोत्तरं हृदयहारि—शोभाभरेषु भावेषु यदि ते गणना कामनीया तर्हि गुणप्राप्तौ यतस्वेति व्यङ्ग्यमेव भङ्ग्यन्तरेण अभिधया प्रोक्तमिति पर्यायोक्तालंकारतया परिणतस्य व्यङ्ग्यस्यास्यापेक्षया वाच्यस्यैवाधिकचमत्कारत्वादलंकारत्वेनैव ( गुणीभूतव्यङ्ग्यत्वेन ) व्यपदेश इत्याशयः।

२ समिति मम पुरस्ताद्देवाः के, पूर्वदेवाः के, नरो वा के सन्तीत्यन्वयः।

सगता व्यज्यते । न च सानन्दालोकनस्यैव चाक्षुषभ्रान्तिरूपतया[1] व्यङ्ग्यव्यञ्जकयोरविवेको व्यङ्ग्यत्वानुपपत्तिश्चेति वाच्यम् । वस्तुन एकत्वेऽपि कीर्तिरूपविशेष्यावृत्तिदुग्धत्वप्रकारकत्वात्मकभ्रान्तित्वेन सानन्दावलोकनत्वेन च व्यङ्ग्यव्यञ्जकविवेकस्य व्यङ्ग्यतावच्छेदकरूपेण वाच्यताया अभावाद्व्यङ्ग्यत्वस्य चोपपत्तेः । तथा चाहुः—'यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न तथोच्यते' इति ।

'दयिते रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥'

अत्र पूर्वोत्तरार्धवर्तिनीभ्यामपह्नुतिभ्यां न त्वं नारी किं तु नलिनीति तृतीयापह्नुतिर्व्यज्यते । एषु प्रौढोक्तिनिष्पन्नो व्यञ्जकः ।

यद्यपि शब्दशक्तिमूलकत्वमर्थशक्तिमूलकत्वं चेत्युभयमपि सकलव्यङ्ग्यसाधारणम्, शब्दार्थयोरनुसंधानं विना व्यङ्ग्यस्यैवानुल्लासात्, तथापि परि-

---

मभ्युपेत्य वस्तुनस्तदेव नेत्याह—**व्यङ्ग्यत्वेति** । वाच्यत्वात्तस्येति भावः । **कीर्तौति** । यथासंख्यमन्वयः । **उपपत्तेरिति** । 'शयिता सविधे—' इत्यत्र । 'व्यङ्ग्यतावच्छेदकेच्छात्वरूपजातिरूप' इति पाठः । तेन रूपेणैव मनोरथपदेन बोधनान्न पूर्वग्रन्थविरोधः । मनोरथत्वेच्छात्वयोर्घटत्वकलशत्ववदेकत्वात् । इह तु भ्रान्तित्वसानन्दावलोकनत्वयोर्व्याप्यव्यापकभावेन भेदादिति बोध्यम् । यथा तु येन रूपेण । एवमग्रेऽपि । **दयितेति** । कविप्रौढोक्तिनिष्पन्नालंकारेणालंकारस्य यथेत्यादिः । **पूर्वोत्तरेति** । लोकसिद्धत्वाभावेन कविप्रौढोक्तिनिष्पन्नाभ्यामित्यादिः । अनुसंधानं ज्ञानम् । तत्प्रयुक्तात्तदसहिष्णुशब्दप्रा-

---

१ प्रघट्टकस्यास्यायं सारः—अमूर्तायाः कीर्तेः सानन्दालोकनमेव भ्रान्तिः । ततश्च यथा व्यङ्ग्या भ्रान्तिः, एवं व्यञ्जिका ( अर्थाद् वाच्यापि ) जातैव । तथा च व्यङ्ग्यव्यञ्जकयोरभेदः स्फुटमेव प्रसक्तः ( प्रथमशङ्का ) । किञ्च या भ्रान्तिर्वाच्या सा व्यङ्ग्या कथं स्यात्? इति व्यङ्ग्यत्वानुपपत्तिः ( द्वितीयशङ्का ) । व्यङ्ग्या हि भ्रान्तिः—कीर्तिरूपे विशेष्ये अवृत्ति ( अवर्तमानम् ) यद् दुग्धत्वप्रकारकत्वम् तदात्मिका, अर्थात् कीर्तौ ( कीर्तिं दृष्ट्वा ) इदं दुग्धमित्याकारिका । व्यञ्जिका ( अर्थात् वाच्या ) तु सानन्दावलोकनात्मिका । अतो द्वयोर्भेदः ( प्र. शं. समाधानम् ) । भ्रान्तिर्वाच्या इत्यपि न । यथा व्यङ्ग्यं तथा ( सा ) नोच्यते । अर्थात् व्यङ्ग्यतावच्छेदकरूपेण ( कीर्तिरूपविशेष्याऽवृत्तिदुग्धत्वप्रकारकत्वात्मकभ्रान्तित्वेन ) सा नोच्यते, अपि तु सानन्दावलोकनभ्रान्तित्वेन । ( द्वि. शं. समाधानम् ) ।

वृत्त्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात्प्राधान्यात्सत्या अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यपदेशः। परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात्सत्या अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया[1] मल्लग्रामादिवत्प्रधानेनैव व्यपदेशः। यत्र तु काव्ये परिवृत्तिं सहमानानामसहमानानां च शब्दानां नैकजातीयप्राचुर्यम्, अपि तु साम्यमेव, तत्र शब्दार्थोभयशक्तिमूलकस्य व्यङ्ग्यस्य स्थितिरिति द्व्युत्थो ध्वनिः। न चायं शब्दशक्तिमूलकतयैवार्थशक्तिमूलकतयैव वा व्यपदेष्टुं शक्यः, विनिगमकाभावात्। नापि शब्दशक्तिमूलकार्थशक्तिमूलकयोः संकरेण गतार्थयितुम्, व्यङ्ग्यभेद एव संकरस्येष्टेः[2]। इह तु व्यङ्ग्यस्यैक्येन तस्यानुत्थानात्।

उदाहरणम्—

'रम्यहासा रसोल्लासा रसिकालिनिषेविता।
सर्वाङ्गशोभासंभारा पद्मिनी कस्य न प्रिया॥'

अयं च वाक्यमात्रे। पदसमूहश्च वाक्यम्। तेनास्य नानार्थानानार्थघटितसमासविषयत्वेऽपि न विरोधः। न तु शुद्धैकपदे, तस्मिन्नानार्थानाना-

---

चुर्यप्रयुक्तात्। **प्रधानेति**। तदुपकारकतयेत्यर्थः। **चशब्दानामिति**। निर्धारणे षष्ठी। अयं द्व्युत्थो ध्वनिः। एवमग्रेऽपि। विनिगमनाविरहादाह—**अर्थेति**। गतार्थयितुमिति शक्योऽयमित्यस्यानुषङ्गः। **उदेति**। द्व्युत्थध्वनेरित्यादिः। अत्र हासरसालिपद्मिनीशब्दास्तदसहाः, अन्ये तत्सहा इति साम्यम्। तेन पदसमूहरूपवाक्यनिष्ठत्वेन। अस्य द्व्युत्थध्वनेः। **न विरोध इति**। तस्याप्यवान्तरपदत्वमादाय पदसमूहत्वादिति भावः। मात्रपदव्यावर्त्यमाह—**न त्विति**। सामान्यशून्यत्वमिति। सामान्याभाव इत्यर्थः। तथा

---

१ प्रधानानुगुण्येन अर्थो यस्याः तत्तया। प्रधानानुगुणः (प्रधानानुकूलः) अर्थो यस्या इति यावत्। प्रधानानुसारमर्थस्य व्यवस्थेत्याशयः, यथा मल्लग्राम इत्यत्र। अन्येषु लोकेषु सत्स्वपि मल्लानां तत्र प्राधान्यात्तथा नामेत्याशयः।

२ शब्दशक्तिमूलकार्थशक्तिमूलकयोः संकर एव कुतो नाङ्गीकृतः, उभयशक्त्युत्थ इति पृथग्भेदः किमित्यङ्गीकृत इति शङ्का। व्यङ्ग्यभेदे सत्येव संकरस्य इष्टत्वात्। अर्थाद् उभयशक्त्युत्थे द्वयोः शक्त्योः भिन्नौ भिन्नौ व्यङ्ग्यौ यदा अभिव्यक्तौ स्यातां तदैव संकरत्वं संभवेत्। प्रकृते तु–उभयशक्तिमूलके शक्तिद्वयसमुत्थः एक एव व्यङ्ग्यो भवतीति न संकरस्योत्थानमिति समाधानम्।

र्थयोरसमावेशात् । अन्ये तु—'अर्थशक्तिमूलकत्वव्यपदेशे नानार्थप्रकाशकशब्दशक्त्युल्लास्यत्वसामान्यशून्यत्वं तन्त्रम्, विषयप्राचुर्यात् । शब्दशक्तिमूलकत्वव्यपदेशे तु नार्थशक्त्युल्लास्यत्वसामान्यशून्यत्वं तथा, विषयदौर्लभ्यापत्तेः । नहि नानार्थशब्दमात्रघटितं पद्यं प्रचुरविषयम् । अतः शब्दशक्तिमूलकत्वेनैवायं शक्यव्यपदेशो ध्वनिः' इत्यप्याहुः । इत्थमभिधामूलस्त्रिविधोऽपि संक्षेपेण निरूपितो ध्वनिः । निरूपयिष्यते चांशतो यथावसरम् ।

लक्षणामूलस्तु निरूप्यते—

तत्र वक्ष्यमाणलक्षणायां लक्षणायां प्रयोजनवत्याः षड्विधायाः सारोपसाध्यवसानाभ्यां गौणीशुद्धाभ्यां च विभक्तानां भेदानां चतुर्णामलंकारात्मना परिणतत्वाद्द्वौ भेदौ ध्वन्याश्रयतया स्थितौ, जहत्स्वार्था अजहत्स्वार्था चेति । तन्मूलौ च द्वौ ध्वनेः प्रभेदौ ।

तयोर्जहत्स्वार्थामूलो यथा—

'कृतं त्वयोन्नतं कृत्यमर्जितं चामलं यशः ।
यावज्जीवं सखे तुभ्यं दास्यामो विपुलाशिषः ॥'

तन्त्रम् । कारणमिति तदर्थः । **अत इति** । तथा वक्तुमशक्यत्वेन । तद्भिन्नत्व एव तत्त्वस्यावश्यवक्तव्यत्वादित्यर्थः । अयं श्रुत्थो ध्वनिः । उक्तरीत्या भेदसंभव एवात्रारुचिः । उपसंहरति—**इत्थमिति** । तत्र निरूपणीये तस्मिन् । **वक्ष्यमाणेति** । वक्ष्यमाणं लक्षणं यस्यास्तस्यामित्यर्थः । सत्यामिति शेषः । **अलंकारात्मनेति** । रूपकातिशयोक्तिहेत्वलंकारात्मनेत्यर्थः । **जहत्स्वार्था अजहत्स्वार्था चेति** । अनयोरेवोपादानलक्षणलक्षणेति व्यवहारः । [4]कथं कीदृशम् । अत्रोन्नतादिपदानां स्वार्थत्यागेनाधमादौ लक्षणा ।

१ तत्र व्यङ्ग्योपस्थापका नानार्थशब्दाः सर्वथा न भवेयुस्तत्रैव अर्थशक्तिमूलकध्वनिव्यवहारस्तथा च अर्थशक्तिमूलकध्वनित्वव्यवहारे नानार्थकशब्दशक्त्युल्लास्यत्वाभावः कारणम् । लभ्यन्तेऽत्रीदृशानि बहूनि अर्थशक्तिकाव्यानि यत्र नानार्थशब्दप्रयोगो न स्यात् । शब्दशक्तिमूलकत्वव्यवहारे तु अर्थशक्त्युल्लास्यत्वाभावः कारणं न । 'अर्थात्तत्रैव शब्दशक्तिध्वनिव्यवहारो भवेद्यस्मिन् काव्ये सर्वाणि पदानि नानार्थोपस्थापकान्येव स्युः, किञ्चिदपि पदमेकार्थकं न स्यादि'ति न शक्यते वक्तुम्-ध्वन्युपस्थापककेवलनानार्थशब्दघटितानि काव्यानि अतिविरलानि स्युरिति । तथा च शब्दशक्तिमूलकध्वनिकाव्ये नानार्थकशब्देतरे अपि शब्दा भवन्तीति सिद्धम्, एवं च रम्यहासा रसोल्लासेत्यादि द्व्युत्थध्वनिकाव्यं शब्दशक्तिमूलकत्वेनैव व्यपदेष्टुं शक्यम्, न पृथगिति अन्येषां मतम् । २ अर्थात् गौणी सारोपा गौणी साध्यवसाना, शुद्धा सारोपा शुद्धा साध्यवसाना इति व्यपदेश्यानाम् । ३ गौणी सारोपा रूपकत्वेन, गौणी साध्यवसाना अतिशयोक्तित्वेन, शुद्धाभेदौ तु हेत्वलङ्कारत्वेन परिणता भवन्तीत्यर्थः । ४ कथं शक्यते वक्तुमित्यस्य कीदृशं शक्यते वक्तुमिति व्याख्या विचित्रैव । धन्यो नागेशः ।

इयं कस्यचिदपकारिणं प्रत्युक्तिः। त्वया कृतेऽप्यपकारे परमखेदहेतौ मधुरमेव यो भाषेय, न परुषं तस्मिन्नेवंजातीयके मयि पापमाचरतस्तव पापिष्ठत्वं कथं शक्यते वक्तुमिति व्यङ्ग्यम्।

अपरामूलो यथा—

'बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः।
न कुर्यास्त्वं हेलामितरजनसाधारणधिया
जगन्नाथस्यायं सुरधुनि समुद्धारसमयः॥'

अत्र जगन्नाथस्येत्यनेन शक्य एवानेकपापविशिष्टत्वेन लक्ष्यते।[1] पापानां पदान्तरेणानिर्वाच्यत्वं व्यङ्ग्यम्। कुन्ताः प्रविशन्तीत्यादौ तु वाच्यगततैक्ष्ण्यादिलक्ष्यम्।[2] तदेवमेते प्रागुक्ता द्व्युत्थातिरिक्ताः सर्वेऽपि ध्वनय एकस्मिन्वाच्ये यद्येकपदमात्रगतास्तदा पदध्वनितया व्यपदिश्यन्ते। नानापदगततायां तु वाक्यध्वनितयेति।

अथ केयमभिधा नाम यन्मूलः प्रथमं निरूपितोऽयं ध्वनिप्रपञ्चः। उच्यते—

**शक्त्याख्योऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा संबन्धविशेषोऽभिधा॥**[3]

सा च पदार्थान्तरमिति केचित्। 'अस्माच्छब्दादयमर्थोऽवगन्तव्य-

---

**अपरेति**। अजहत्स्वार्थेत्यर्थः। द्रढिमेति तृतीयातत्पुरुषः। नियमय बधान। **शक्य एवेति**। जगन्नाथत्वेनेति शेषः। अनेनाजहत्स्वार्थत्वं प्रकटितम्। पदान्तरेण जगन्नाथपदातिरिक्तेन। **तैक्ष्ण्यादिलक्ष्यमिति**। वाच्यार्थगतं यत्तैक्ष्ण्यादि तल्लक्ष्यवृत्तितया व्यङ्ग्यमित्यर्थः। उपसंहरति—**तदेवमिति**। विनिगमनाविरहादाह—**शब्द-**

---

१ जगन्नाथत्वेन शक्यः अभिधेयः (जगन्नाथः) एव अनेकपापविशिष्टत्वेन लक्ष्यते। अर्थात् जगन्नाथपदस्य अनेकपापविशिष्टेऽर्थे लक्षणा। अनेन जगन्नाथपदस्य अनेकपापविशिष्टजगन्नाथे लक्षणेति स्वार्थापरित्यागः सूचितः। ईदृशोयं पापी अस्ति यत्पदान्तरेण न वक्तुं शक्यः, अतिशयपापित्वं व्यङ्ग्यमित्याशयः। २ कुन्ताः प्रविशन्तीति अजहत्स्वार्थायां तु कुन्तपदेन कुन्तवन्तः परामृश्यन्ते, ततश्च स्पष्ट एव स्वार्थोऽपरित्यागः। वाच्यार्थः कुन्तः तद्गतं यत् तैक्ष्ण्यादि, तत् लक्ष्यं यस्य ईदृशं व्यङ्ग्यम्। अर्थात् वाच्यार्थगतं तैक्ष्ण्यं लक्ष्ये (कुन्तवति) व्यङ्ग्यत्वेन प्रतीयते, बधानेत्युदाहरणे तु वाच्य(जगन्नाथ)गतत्वेन व्यङ्ग्यस्य (पापानि पदान्तरेणाऽनिर्वाच्यानि इत्यस्य) न प्रतीतिरिति भेदः। ३ अर्थं शब्देन, शब्दमर्थेन च संबध्नन् (शक्त्याख्यसंबन्धविशेषः) अभिधेति यावत्।

इत्याकारेश्वरेच्छैवाभिधा । तस्याश्च विषयतया सर्वत्र सत्त्वात्पटादीनामपि घटादिपदवाच्यता स्यात् । अतो व्यक्तिविशेषोपधानेन घटादिपदाभिधात्वं वाच्यम्' इत्यपरे । 'एवमपीश्वरज्ञानादिना विनिगमनाविरहः स्यात्, अतः प्रथममतमेव ज्यायः' इत्यपि वदन्ति । यत्तु वृत्तिवार्तिके—'शक्त्या प्रतिपादकत्वमभिधा' इत्यप्पयदीक्षितैरुक्तं तत्तुच्छम्, उपपत्तिविरोधात् । तथाहि—इह शब्दाज्जायमानायामर्थोपस्थितौ कारणीभूतं यदीयज्ञानं सा शब्दवृत्तिरभिधाख्या लक्ष्यतया प्रस्तुता । प्रतिपादकत्वस्य च प्रतिपत्ति-हेतुत्वरूपस्य शब्दगतस्य न ज्ञानं प्रतिपत्तौ कारणम् । अतः कथं नाम प्रतिपादकत्वमभिधेत्युच्यते ? अथ प्रतिपादकत्वं प्रतिपत्त्यनुकूलव्यापार-रूपं ज्ञातं सदेवोपयुज्यते प्रतिपत्तावित्युच्येत, एवमपि शक्त्येत्यनेन शब्दगतार्थगता वा काचिच्छक्तिः प्रतिपत्तिहेतुतया विवक्षिता, सैवाभिधेति 'अभिधया प्रतिपादकत्वमभिधा' इति लक्षणं पर्यवसन्नम् । तथा च स्फुटैवासंगतिरात्माश्रयश्च । न चाभिधातः शक्तिरतिरिक्ता शब्दजन्य-प्रतिपत्तिप्रयोजिका काचिदस्तीत्यत्र प्रमाणमस्ति ।

---

**स्येति** । केचित्, वैयाकरणमीमांसकादयः । अपरे, नैयायिकाः । एवमपि उक्तरी-त्यातिप्रसङ्गवारणेऽपि । **विवक्षितेति** । शक्त्येति । तृतीयाश्रुतेरिति भावः । स्वज्ञाने स्वज्ञानापेक्षत्वेनात्माश्रयस्य स्पष्टत्वादसंगतिमुपपादयति—**न चेति** । नहीत्यर्थः । **प्रमाणमस्तीति** । प्रकृत्यादित्वाद्धान्येन धनवानित्यादिवत्तृतीयाया अभेदार्थकत्वेन न

---

१ ईश्वरेच्छा विषयतासंबन्धेन यथा घटे तथा पटेऽपि वर्तमाना । अर्थबोधिकायास्तस्याः सर्वत्र समानं वर्तमानतया घटपदबोधसमये पटार्थप्रतीतिरपि स्यात् । अतो व्यक्तिविशेषमुपाधि-रूपेण संबध्य-घटोपहिता घटपदाभिधा, पटोपहिता पटाभिधेति नैयायिकानां समयः ।

२ ननु ईश्वरज्ञानमेव अभिधारूपेण कुतो न स्वीकार्यमित्यन्ये शक्नुयुर्वक्तुम् । ततश्च नानाविधानामभिधास्वरूपाणां मध्ये अन्यतमनिर्धारणे न किञ्चित्प्रमाणमिति वैयाकरणादीनामेव मतं सम्यगित्यर्थः ।

३ काशीपुस्तके तु इदं वाक्यमेव सर्वं नावलोक्यते ।

४ उपरिप्रोक्तस्य खण्डनप्रघट्टकस्यायं सारः—लक्षणे प्रोक्तं प्रतिपादकत्वं प्रतिपत्तेः (ज्ञानस्य) हेतुत्वमिति निरुच्येत । तच्च अभिधायकशब्दगतं स्यात् । एतच्छब्दनिष्ठं प्रतिपादकत्वमस्तीत्ये-तज्ज्ञानमात्रेण किं प्रतिपत्तिः (ज्ञानम्) भवेत् ? ततः कथं प्रतिपादकत्वमभिधेति लक्षणम् ?

यदि तु प्रतिपादकत्वस्यार्थः प्रतिपत्त्यनुकूलः (येन बोधो भवेत् तादृशः) व्यापार इति । स च व्यापारो ज्ञात एव अभिप्रेतार्थबोधे उपयुक्तः स्यादित्युच्येत [ ज्ञातैवाभिधा कारणमिति

सेयमभिधा त्रिविधा—केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसंकरश्चेति । आद्याया डित्थादिरुदाहरणम्, तत्रावयवशक्तेरभावात् । द्वितीयायास्तु पाचकपाठकादिः, तत्र धातुप्रत्ययशक्तिबोध्ययोरर्थयोरन्वयेनोल्लसितात्पाककर्तृरूपादर्थाद्दतेऽर्थान्तरस्यानवभासेन समुदायशक्तेरभावात् । तृतीयायाः पङ्कजादिः । इह धातूपपदप्रत्ययरूपावयवशक्तिवेद्यानां पङ्कजननकर्तृणामाकाङ्क्षादिवशादन्वये प्रकाशमानात्पङ्कजनिकर्तृरूपादर्थादतिरिक्तस्य पद्मत्वविशिष्टस्य प्रत्ययेन तदर्थं समुदायशक्तेरपि कल्पनादुभयोः संकरः । एता एव विधा रूढि-योग-योगरूढिशब्दैर्व्यपदिश्यन्ते । यत्तु 'अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः । अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः । उभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः ।' इति वृत्तिवार्तिकेऽप्पयदीक्षितैरुक्तम्, तन्न । अभिधालक्षणोक्तदूषणानामिहापि दुर्वारत्वात् ।

अथ अश्वगन्धा-अश्वकर्ण-मण्डप-निशान्त-कुवलयादिशब्देषु का शक्ति-

---

कश्चिद्दोष इति चिन्त्यमेतत्सर्वम् । निरूपिताभिधां विभजते—**सेयमिति** । धातुप्रतिपङ्कादिभिर्यथासंख्येनान्वयः । उभयोः समुदायावयवशक्त्योः । विधाः प्रकाराः । दूषणानां

---

तात्पर्यम् ]। ततोऽपि 'शक्त्या प्रतिपादकत्वम्' इति कथनं नोपपद्येत । शक्तिर्हि अभिधाख्यैव । ततश्च 'अभिधया प्रतिपादकत्वमभिधा' इति लक्षणं स्वज्ञाने स्वज्ञानापेक्षतया आत्माश्रयदोषदुष्टम् । अभिधातोऽन्या शक्तिः काचित्प्रमाणसिद्धेव नेति लक्षणे असंगतिरपि स्फुटैव ।

१ पच्धातुः, ण्वुल्प्रत्ययः अनयोर्या शक्तिस्तद्बोध्ययोः ।

२ जन्धातुः पङ्केत्युपपदम् डप्रत्ययरूपा ये अवयवास्तेषां शक्त्या वेद्याः पङ्क—जनन—कर्तृरूपाः तेषामाकाङ्क्षादिवशात् अन्वये ।

३ पङ्कजनिकर्तृत्वरूपोऽर्थः शैवालादिष्वपीति तन्निवारकस्य पद्मत्वविशिष्टस्य पद्मरूपार्थस्य प्रतीत्या ।

४ लक्षणे गृहीतस्य प्रतिपादकत्वस्य प्रतिपादकत्वं न संभवति, शक्तेरभिधां विहाय अन्यत्वाभावादसंगतिः, पूर्वोक्त आत्माश्रयश्चेति ।

५ तृतीयाविभक्तिसाधुत्वसाधनं भवेद्वैयाकरणपुङ्गवस्य नागेशभट्टोदयस्य मते समाधानम्, किंतु यत्र शब्दपुनरुक्तिरेव हेया तत्र साहित्ये 'अभिधया प्रतिपादकत्वमभिधा' इत्यस्येदमुत्तरं किं ग्राम्यतां नावहेत् ?

रिति। अत्र केचित् 'अश्वगन्धारसं पिबेत्' इत्यादिषु विषयविशेषे केवलसमुदायशक्तिः। अश्वगन्धा वाजिशाला, इत्यादिषु तु केवलयोगशक्तिः। समुदायावयवशक्त्योरुभयोरेकशब्दाश्रयत्वे कथं केवलत्वविशेषितयोराद्यद्वितीयभेदयोः[1] प्रसक्तिरिति तु न शङ्क्यम्। समुदायावयवशक्तिवेद्ययोरर्थयोरनन्वयेन तादृशशक्त्योः कैवल्यस्य साम्राज्यात्। इदमेव हि केवलत्वमिह विवक्षितम्, यदन्वयायोग्यार्थबोधकत्वम्। संकरस्त्वन्वययोग्यार्थबोधकयोरेवेति न तस्यात्र[2] प्रसक्तिः' इत्याहुः। अन्ये तु—'अश्वकर्णादिशब्देषु नाभिधायाः प्रथमद्वितीययोर्विधयोः प्रसक्तिः, कैवल्यविरहात्। परंतु संकरस्य द्वौ भेदौ—योगरूढिर्यौगिकरूढिश्चेति। तत्राद्यस्योदाहरणं पङ्कजादिशब्दाः। द्वितीयस्य त्वश्वकर्णादयः' इत्याहुः। 'चतुर्थ एवायमभिधाया भेदः' इत्यप्यन्ये। 'अखण्डा एव हि शब्दाः। तत्र समासेषु पदानाम्, कृत्तद्धिततिङन्तेषु च प्रकृतिप्रत्ययानां विभागः

प्रतिपादकत्वनिष्ठतत्त्वासंभवासंगतिरात्माश्रयाणाम्। **विषयविशेष इति**। ओषधिरूपेत्यर्थः। शङ्कते—**समुदेति**। अनन्वयेन मिथ इत्यादि। **यदन्वयायोग्येति**। एवं च योगबोध्यार्थान्वयायोग्यार्थप्रतिपादकत्वं रूढेः केवलत्वम्। रूढिबोध्यार्थान्वयायोग्यार्थप्रतिपादकत्वं योगस्य केवलत्वम्। परस्परप्रतिपाद्ययोरन्वययोग्यत्वे संकर इति फलितम्। **बोधकयोरेवेति**। भेदयोरित्यर्थः। तादृशकैवल्यविवक्षायां मानाभावादाह—**अन्ये त्विति**। संकरस्य योगरूढिशब्देनैव प्रसिद्धेर्मतान्तरमाह—**चतुर्थ एवेति**। एवेनाभिधापदसंबद्धेन संकरभेदनिरासः। तथा चाभिधा चतुर्विधेति भावः। सिद्धान्तमाह—**अखण्डा इति**। हिस्त्वर्थे। तत्र अखण्डानां मध्ये। तथा

१ अर्थात् केवलसमुदायशक्ति–केवलावयवशक्त्योरत्र एकस्मिन्नेव अश्वगन्धापदे कथं प्रसङ्गः स्यात्? केवलपददानं केवलां समुदायशक्तिमेव स्वीकरोति नावयवशक्तिम्। एवमेव केवलावयवशक्तिपदे केवलविशेषणमवयवशक्तिमेव स्वीकरोति, न समुदायशक्तेः सहकारम्। अत्र त्वेकस्मिन्नेव पदे केवलेति विशेषणविशिष्टे उभे शक्ती स्वीक्रियेते, कथमेतत्संगच्छतेति शङ्का। अत्र हि कैवल्यस्य (केवलपददानस्य) अयमेवार्थो यत् 'यदन्वयायोग्यार्थबोधकत्वम्' 'यत्' यत्पदवाच्या स्वस्मादन्या या (शक्तिः) तत्संबन्धिनोऽन्वयस्य अयोग्यो योऽर्थस्तद्बोधकत्वम्। अर्थात् यस्मिन्समये समुदाय(रूढि)शक्तेरन्वयेन औषधिरूपोऽर्थस्तस्मिन् समये अवयवशक्तेः अन्वयो न। यस्मिन् समये अवयव(योग)शक्त्या वाजिशालाऽर्थः क्रियते तस्मिन्समये समुदायशक्तेर्योगो न, ततश्च परस्परमनन्वयाद्धेतत एव कैवल्यमिति समाधानम्।

२ ननु द्वयोः शक्त्योः संकर एवात्र स्वीक्रियताम्। न। यत्र द्वयोः शक्त्योः (समु. अव.) अन्वयेन अर्थस्तत्रैव तयोः संकरः। ततश्च संकरो बोधिकयोः शक्त्योः स्वीक्रियते। अत्र तु यस्मिन्समये एका, तस्मिन्समये द्वितीया नास्तीति न संकर इत्याशयः।

काल्पनिक एवेति कुत्रास्ति योगशक्तिः ? विशिष्टस्य विशिष्टार्थे रूढेरेवाभ्युपगमात्' इत्यपि वदन्ति ।

अथ

'गीष्पतिरप्याङ्गिरसो गदितुं ते गुणगणान्सगर्वो न ।
इन्द्रः सहस्रनयनोऽप्यद्भुतरूपं परिच्छेत्तुम् ॥'

इत्यादौ रूढ्यर्थमादाय पुनरुक्त्यापत्तिः । न चैवंविधपदद्वयसमभिव्याहारस्थले योगरूढपदस्यावयवार्थमात्रबोधकत्वम्, तावन्मात्रस्यैव प्रकृतोपयोग्यतिशयविशेषसमर्पकत्वात्, इति वाच्यम् । एवमपि योगरूढपदस्य रूढिशक्तेरनियन्त्रणेन योगार्थमात्रप्रतिपादकताया अनुपपादनादुक्तदोषस्यानुवृत्तेः । एकेनैव पदेन योगार्थरूढ्यर्थयोरुभयोरप्यावश्यकयोरर्थयोरुपस्थितिसंभवेन द्वितीयपदप्रयोगस्य नैरर्थक्यापत्तेश्च, इति चेत्, अत्राहुः—'एकपदोपात्तत्वादन्तरङ्गाकाङ्क्षावशेन प्रथमं योगार्थरूढ्यर्थयोरन्वये सति समुल्लसितस्य विशिष्टार्थस्यैव पदान्तरार्थेनान्वयः, न तु तयोरेव विशकलितयोरिति यद्यपि न्यायसिद्धोऽर्थः, तथापि शक्त्याऽर्थस्य प्रतिपादने स्यादेवम् । लक्षणायां तु योगरूढेन योगार्थमात्रप्रतिपादनेन न किंचिद्बाधकमस्ति । नापि द्वितीयपदप्रयोगस्य नैरर्थक्यम् । तथा सति रूढ्यर्थबोधनेन गतार्थेन योगरूढशब्देन प्रतिपाद्यमानस्य योगार्थस्य पङ्कजाक्षीत्यादाविव नान्तरीयकत्वशङ्कया कुर्वद्रूपताया अपहतौ प्रकृतोपयोग्यतिशयविशेषव्यञ्जनस्य पाक्षिकत्वापत्तेः । द्वितीयपदयोगे तु तेनैव

चाभिधाया रूढ्याख्य एक एव भेद इति भावः । अत्र शङ्कते—**अथेति** । **गीष्पतिरिति** । राजवर्णनमिदम् । **अतिशयेति** । राजनिष्ठगुणातिशयेत्यर्थः । अनियन्त्रणेन असंकोचेन । प्रकरणादिसंकोचकाभावादिति भावः । प्रकरणादिसत्त्वे आह—**एकेनैवेति** । आवश्यकयोरिति । पदद्वयोल्लेखेनोक्तातिशयव्यञ्जनार्थमिति भावः । **एकपदोपेति** । अन्तरङ्गत्वादौ हेतुरयम् । तयोः योगार्थरूढ्यर्थयोः । **विशकलितेति** । पदान्तरार्थेनान्वय इत्यस्यानुषङ्गः । एवं योगार्थमात्रबोधकत्वानुपपादनमाद्यदोषमुद्धृत्य द्वितीयदोषमुद्धरति—**नापीति** । तथा सति द्वितीयपदानुपादाने सति । **नान्तरीयकत्वेति** । मुख्यतात्पर्याविषयत्वेत्यर्थः । शङ्काया अभावे विशिष्टार्थसिद्धिरत आह—**पाक्षि-**

रूढ्यर्थप्रतिपादने सिद्धे योगरूढपदप्रतिपाद्यस्य योगार्थस्य नान्तरीयकत्वशङ्काया अयोगात्कुर्वद्रूपत्वेन व्यङ्ग्यविशेषव्यञ्जकत्वं नियमेन सिद्ध्यति। एषा पदद्वयोपादानस्थले गतिरुक्ता।

यत्र तु 'पुष्पधन्वा विजयते जगत्त्वत्करुणावशात्' इत्यादावेकेनैव पदेन रूढ्यर्थोपस्थितिर्योगार्थद्वारा निःसारत्वाद्यवगमश्च भवति, तत्र कविकृतमन्मथरूढपदान्तरानुपादानपूर्वकपुष्पधन्वपदोपादानप्रतिसंधानेन तदीययोगार्थे कुर्वद्रूपताधानं बोध्यम्। तदित्थं द्वितीयपदस्योपादानेऽनुपादाने वा न क्षतिः। एवं जात्यन्तरविशिष्टवाचकपदसमभिव्याहारेऽपि[2]। 'दिशि दिशि

---

केति। अत एवाग्रे नियमेनेति वक्ष्यति। जगत् कर्म। कविकृतत्वमुपादानेऽन्वेति।

१ गीष्पतिरप्या० इत्यादेः प्रघट्टकस्य दुरूहत्वादिदं तद्विशदीकरणम्—'गीष्पतिः (वर्णनसमर्थानां यावन्मात्रगिरां स्वामी) अपि आङ्गिरसो गुणवर्णने—किञ्च प्रत्यक्षीकरणसाधनैः सहस्रनयनैर्विशिष्टोपि इन्द्रस्तव रूपस्य इयत्तां कर्तुं सगर्वो न' इति राजवर्णनपद्ये योगरूढपदाभ्यामेव योगार्थरूढ्यर्थयोः प्रतीतेः संभवे—आङ्गिरस—इन्द्र—पदप्रयोगो रूढ्यर्थविषये पुनरुक्तिदोषायेति शङ्का। एवंविधस्थले योगरूढपदं केवलं योगवाचकमेव, तावन्मात्रेणैव प्रकृतस्यातिशयस्य प्रतिपादनात्, इत्यपि न शक्यं समाधातुम्। प्रकरणादिकस्य शक्तिसंकोचकस्याभावे रूढेर्नियन्त्रणस्याशक्यतया पौनरुक्त्यस्याऽवारणीयत्वात्। शक्तिसंकोचकेन किम्?, एकेनैव योगरूढपदेन उभयार्थयोः संभवे द्वितीयपदस्य स्पष्टं निरर्थकत्वाच्चेति पूर्वपक्षः।

एकपदोपात्तत्वादिभिरुपपत्तिभिः संमिलितशक्तिद्वयेन संजनितस्य (योग-रूढ्यात्मकस्य) अर्थद्वयस्य एकपदोपात्तत्वरूपादन्तरङ्गत्वात्प्रथमं निष्पत्तिः, तदनन्तरं गीष्पत्यादिपदस्य पदान्तरेण (आङ्गिरसादिना) योगः स्यात् इति हि न्यायसिद्धः प्रकारः शक्त्या पदार्थोपस्थितौ स्यात्। वयं तु अप्रमत्तस्य कवेः पुनः पदप्रयोगरूपेण बाधेन—गीष्पतिसहस्रनयनेतिपदाभ्यां लक्षणया योगार्थमात्रमुपस्थाप्य, तदुत्तरं प्रयुक्ताभ्यामाङ्गिरसादिपदाभ्यां संबन्धेन निखिलगिरां स्वामी गुरुरपि तव गुणवर्णने न सगर्व इति राज्ञोतिशयं साधयामः। एकेनैव योगरूढपदेनार्थद्वयसिद्धौ द्वितीयपदं निरर्थकमित्यपि न दोषः। पङ्कजाक्षीत्यादौ पंकजपदेन रूढ्यर्थः (कमलम्) एव गृह्यते। तत्र योगार्थः नान्तरीयकः (मुख्यतात्पर्याऽविषयः), इति तस्य कुर्वद्रूपता (तात्पर्यानुगुणत्वेन स्फुरद्रूपता) अपहीयते। एवमेव गीष्पत्यादिस्थलेपि—रूढ्यर्थापहृतस्य योगार्थस्य कुर्वद्रूपताहानेः शङ्का तदा तु गिरांपतिरिति योगार्थसाध्योऽतिशयो न। यदा तु सा शङ्का नोदेति तदा कुर्वद्रूपतया योगार्थेन सोऽतिशयो जायते इति राजवर्णनेऽस्मिन् अतिशयो वैकल्पिकः स्यात्। द्वितीयपदप्रयोगे तु नान्तरीयकत्वशङ्काया अभावेन नियतमेव सोतिशयः प्रतीयत इति द्वितीयपदप्रयोगस्य न निष्फलत्वमिति समाधानम्।

२ जात्यन्तर (कमलापेक्षयाऽन्यजाति)विशिष्टस्य अर्थस्य (कुमुदस्य) वाचकं यत्पदम्।

जलजानि सन्ति कुमुदानि' इत्यत्रापि जलजादिपदानां लक्षणया योगार्थमात्रबोधकत्वम्, योगशक्त्युल्लासितस्य तु तादृशार्थस्य रूढ्यर्थोपश्लिष्टत्वेन स्वातन्त्र्येण कुमुदादावन्वयायोगात्। इत्थमभिधा निरूपिता।

अनया यः शब्दो यमर्थं बोधयति स तस्य वाचकः। इयं च यस्य शब्दस्य यस्मिन्नर्थेऽस्ति तस्य सोऽर्थोऽभिधेयः। स च जातिगुणक्रियायादृच्छिकात्मकः। तत्र जातिर्गोत्वादिः संस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धा गवादिपदानामभिधेया। अनुमानसिद्धा च घ्राणरसनत्वादिर्घ्राणरसनादिपदानाम्, आनन्त्यात्, व्यभिचाराच्च व्यक्तीनामभिधेयताया अकल्पनात्। न च ज्ञातगोत्वादिरूपया गोत्वादिज्ञानरूपया वा प्रत्यासत्त्या प्रत्यक्षेण परिकलितासु सकलतदीयव्यक्तिष्वभिधायाः कल्पने नास्ति दोष इति

---

प्रतिसंधानेन श्रोतुरिति शेषः। इत्यत्रापि इत्यादावपि। शक्त्या न निर्वाह इत्याह— **योगेति। प्रत्यक्षेति।** गवादीनां प्रत्यक्षत्वादिति भावः। **अनुमानेति।** घ्राणेन्द्रियादीनामतीन्द्रियत्वादिति भावः। **आनन्त्यादिति।** अनन्तशक्तिकल्पनजगौरवादित्यर्थः। ज्ञायमानं सामान्यं प्रत्यासत्तिरितिमतेनाह—**ज्ञातगोत्वादीति**। सामान्यज्ञानं

---

१ व्यक्तौ शक्तिस्वीकारे अनन्तव्यक्तीनामुपस्थितिरसंभवैव। ततश्च प्रत्यक्षोपस्थितायां यस्यां व्यक्तौ संकेतग्रहो भवेत्तस्यामेव तदभिधायाः प्रत्ययात्तदितरव्यक्तौ तत्पदाभिधेयताया व्यभिचारः स्फुट एव। तेन च कर्मवैगुण्यम्। यथा—'गौरनुबन्ध्यः' इति यत्रानुशिष्यते तत्र यावद्गोव्यक्तीनामनुबन्धनाऽसंभवाद् गवानुबन्धनकर्मणः स्फुटमेव वैगुण्यम्।

२ अलौकिकप्रत्यक्षे सामान्यलक्षणप्रत्यासत्तिर्नैयायिकैः स्वीकृता। तत्र 'ज्ञायमानं सामान्यं प्रत्यासत्तिः' इति मते यत्किंचित्स्थले बुद्ध्या परिगृहीतं यत्सामान्यं (गोत्वादिकम्) तदेव प्रत्यक्षाय संनिकर्षस्थानीयं भूत्वा यावद्गोव्यक्तीनामुपस्थितिं कारयति। अर्थात् अनन्ता व्यक्तीरजानन्तोपि वयं गोत्वादिसामान्येन (इयं गोपदवाच्या इत्येकत्र परिज्ञाय) तत्सजातीयास्वन्यास्वपि गोव्यक्तिषु गोपदशक्तिं गृह्णीमः।

यत्रैको घटः संयोगसंबन्धेन भूतले ज्ञातस्तदनन्तरं तादृशानां सर्वेषामेव घटवतां भूतलानां सामान्यलक्षणया भानं भवति। तत्र यावद्भूतलानां घटवत्त्वज्ञानार्थं घट एव संनिकर्षो भवति। किन्तु यत्र घटनाशोत्तरं घटवद्भूतलमासीदिति स्मरणं तत्र सामान्यलक्षणया यावद्भूतलानां घटवत्त्वभानं न स्यात्। सामान्यस्य (संनिकर्षस्थानीयस्य घटस्य) अभावात्। तस्माद् 'सामान्यज्ञानं प्रत्यासत्तिः' इति द्वितीयः पक्षः।

पक्षद्वयानुसारमपि सामान्यलक्षणया गोव्यक्तिषु गोपदाभिधाया ग्रहणे न व्यभिचार इति शङ्का।

वाच्यम् । सामान्यप्रत्यासत्तेर्निराकरणात्[1] । गौरवदोषस्यानुद्धाराच्च । एतेन शक्तिग्रहपदार्थोपस्थितिशाब्दबोधानां[2] समानप्रकारकतयैव हेतुहेतुमद्भावाद-गृहीतसंकेतानामपि व्यक्तिविशेषाणामन्वयबोधविषयताया उपपादनेऽपि न निस्तारः । व्यक्तीनां प्रत्ययस्त्वाक्षेपाल्लक्षणया[3] वेत्यन्यदेतत् । अयं च जाति-रूपः शब्दार्थः प्राणद इत्युच्यते । प्राणं व्यवहारयोग्यतां ददाति संपादयतीति व्युत्पत्तेः । तदुक्तम्—'गौः स्वरूपेण न गौर्नाप्यगौः, गोत्वाभिसंबन्धाद्गौः' इति । अस्यार्थः—गौः सास्नादिमान्धर्मी स्वरूपेण अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेण न गौः न गोव्यवहारनिर्वाहकः । नाप्यगौः नापि गोभिन्न इति व्यवहारस्य निर्वाहकः । तथा सति दूराद-नभिव्यक्तसंस्थानतया गोत्वाग्रहदशायां गवि गौरिति गोभिन्न इति वा व्यवहारः स्यात् । स्वरूपस्याविशेषाद्घटे गौरिति गवि चागौरिति वा व्यवहारः स्यादिति भावः । गोत्वाभिसंबन्धाद्गोत्ववत्तया ज्ञानाद्गौर्गो-शब्दव्यवहार्य इति ।

---

प्रत्यासत्तिरिति मतेनाह—**गोत्वादिज्ञानेति** । प्रत्यक्षेण अलौकिकेन । **गौरव-दोषस्येति** । द्वितीयदोषोद्धारेऽप्याद्यदोषस्येत्यर्थः । एतेन गौरवदोषानुद्धा-रेण । एवकारेण समानविशेष्यकत्वादिव्यवच्छेदः । **तदुक्तमिति** । प्रकाशकृतेति शेषः । एवमग्रेऽपि । तथा सति धर्मिस्वरूपमात्रेण व्यवहारनिर्वाहकत्वाङ्गीकारे सति । गौरिति व्यवहारे इष्टापत्त्या आह—**गोभिन्न इतीति** । **अविशेषादिति** । व्यक्तिस्व-रूपाणां स्वतोऽव्यावृत्तत्वादिति भावः । गौरित्यत्र विशेषणज्ञानविधया तस्यो-पयोगेऽपि नाप्यगौरित्यनेन व्यवहारमात्रं धर्मज्ञानसाध्यमित्युच्यते । अभावज्ञानेऽपि

---

१ सामान्यलक्षणा प्रत्यासत्तिरन्यत्र स्वीकृता । प्रत्यक्षं हि अशेषविशेषप्रत्ययार्थम् । अस्मिन् प्रत्यक्षे किं तत्तद्व्यक्तीनामशेषविशेषपरिचयो भवेत्? तथा चाकिंचित्करैव सैषा प्रत्या-सत्तिरिति तद्भावः ।

२ शक्तिग्रह-पदार्थोपस्थिति-शाब्दबोधेषु पूर्वपूर्वस्य उत्तरोत्तरं प्रति समानप्रकारकतया हेतुता । अर्थात् यत्प्रकारको यद्विशेष्यकश्च शक्तिग्रहः स तत्प्रकारक-तद्विशेष्यकपदार्थोपस्थितिं प्रति हेतुः, एवं यत्प्रकारिका यद्विशेष्यिका च पदार्थोपस्थितिः सा तत्प्रकारकतद्विशेष्यकशा-ब्दबोधं प्रति हेतुः । तथा च व्यक्तीनामनन्ततया येषु व्यक्तिविशेषेषु शक्तिग्रहो न जातस्त-द्विषयकशाब्दबोधस्य पूर्वोक्तरीत्या (गोत्वेन प्रकारेण) सिद्धिः स्यात् । इत्येवं समर्थनेपि न दोषमुक्तिः, व्यभिचारवारणेऽपि अनन्तशक्तिकल्पनगौरवस्य असमाहितत्वात् ।

३ ननु जातिशक्तिवादे तत्तत्कार्यार्थमावश्यकं व्यक्तीनां भानं कथं स्यादित्याह—व्यक्तिं विना जातेरभावात् आक्षेपः अनुमानम् । अनुपपत्त्या गोत्वादिजातेर्व्यक्तौ लक्षणा वा ।

गुणः शुक्लादिः शुक्लादिपदानामभिधेयः। क्रिया चलनादिशब्दानाम्। शुक्लादीनां चलनादीनां च प्रतिव्यक्तिभेददर्शनादानन्त्यव्यभिचाराभ्यां व्यक्तिशक्तिवाददोषाभ्यामिहापि कलुषीकरणमिति चेत्, तेषां लाघवात्प्रत्यभिज्ञाबलाच्चैकताया अभ्युपगमात्। तदुक्तम्—'गुणक्रियायदृच्छानां वस्तुत एकरूपाणामाश्रयभेदा[1]द्भेद इव लक्ष्यते' इति। तथा च भेदप्रतीतिर्भ्रम एवेति भावः। इदमुपलक्षणम्। उत्पत्तिविनाशप्रतीतिरपि तथैव, वर्णनित्यतावादे गकाराद्युत्पत्तिविनाशप्रतीतेर्भ्रमत्वस्य स्वीकारात्। यादृच्छिकस्तु वक्त्रा स्वेच्छया डित्थादिशब्दानां प्रवृत्तिनिमित्तत्वे संनिवेशितो धर्मः[2]। स च 'परम्परया व्यक्तिगतश्चरमवर्णाभिव्यङ्ग्योऽखण्डः स्फोटः' इत्येके। 'आनुपूर्व्यवच्छिन्नो वर्णसमु[3]दायः' इत्यपरे। 'केवला व्यक्ति[4]रेव' इतीतरे। तत्राद्यमतद्वये विशेषणज्ञानाद्विशिष्ट[5]प्रत्ययः। तृतीयमते च निर्विकल्पका[6]त्मकः प्रत्ययः। तदित्थं चतुष्टयी शब्दानां प्रवृत्तिरिति

---

प्रतियोगितावच्छेदकविशिष्टज्ञानस्य प्रतियोगितानवच्छेदकज्ञानस्य वा हेतुत्वादित्याहुः। शङ्कते—**शुक्लादीनामिति**। इहापि गुणक्रिययोरभिधेयत्वेऽपि। चेदित्यस्य तत्रेति शेषः। **एकताया इति**। तथा च नित्यत्वमपि सिद्धमिति भावः। तथैव भ्रम एव। व्यक्तिगतोऽर्थव्यक्तिगतः। अतिरिक्तस्फोटाङ्गीकारे फलाभावादाह—**आनुपूर्व्येति**। वर्णानां जन्यत्वेन समुदायासंभवादाह—**केवलेति**। दर्शनं मतम्।

---

१ यथा हि कृपाणमुकुरतैलादीनां प्रतिबिम्बाधाराणां भेदादेकमेव मुखं खड्गे दीर्घम्, मुकुरे अणु-महद्रूपम्, तैले स्निग्धम्, एवंरीत्या नानाकारत्वेन भासते, तथैव शुक्लादिगुणश्चलनादिक्रिया चाश्रयभेदेन नानाकारा भासत इत्यानन्त्य-व्यभिचारशङ्का नेत्याशयः।

२ यदृच्छाशब्दस्य यादृच्छिकोऽर्थस्तत्त्वतो व्यक्तिरूप एव सिध्यति, अत एवाग्रे वक्ष्यत्यपि 'केवला व्यक्तिरेव' इतीतरे। किन्तु उपाधिशक्तिवादिभिः स हि व्यक्तेः पृथगवस्थाप्यते। एतदुपपादने प्रकारभेदः। एके आहुः—'परम्परया व्यक्तिगत०'। अयं भावः—आशुविनाशिनां क्रमिकाणां वर्णानां मेलनाभावाद्वर्णानुपूर्व्या असंपत्तौ कथं वा स स्फोटोऽभिव्यज्यतां यो हि शब्दानामभिधेयः प्रख्याप्यते। ततश्च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेनान्तिमवर्णेन यः स्फोटः (स्फुटयत्यर्थम्) अभिव्यज्यते स एव यदृच्छाशब्दानामभिधेय इत्यर्थः। स चायं स्फोटो वस्तुगत्या आकाशनिष्ठ एव। किन्तु तच्चरमं फलं व्यक्त्यभिगमनमेवेत्यत आह—'परम्परया व्यक्तिगतः'।

३ अर्थात् डित्थ इति संज्ञाशब्दस्य अयं वर्णसमुदाय एवार्थ इति।

४ डित्थशब्दस्य तन्नामिका व्यक्तिरेवाऽभिधेय इत्यर्थः।

५ विशेषणयोः (स्फोट-वर्णसमुदाययोः) ज्ञानाद् विशिष्टस्य (विशेष्यस्य) तादृशव्यक्तिरूपार्थस्य प्रत्ययः।

६ निर्विशेषणतया शुद्धाया व्यक्तेरेव बोध इत्यर्थः।

दर्शनं व्यवस्थितम् । सर्वेषां शब्दानां जातिरेवार्थः । गुणक्रियाशब्दानां गुणक्रियागतायाः, यदृच्छाशब्दानां च बालवृद्धशुकाद्युदीरिततत्तच्छब्द[1]-वृत्तेस्तत्तत्समयभिन्नार्थवृत्तेर्वा जातेरेवाभिधेयतासंभवात् । इति जातिशक्तिदर्शनम् ।

अथ केयं लक्षणा, यन्मूलश्चरमं निरूपितो ध्वनिः । उच्यते—

शक्य[2]संबन्धो लक्षणा ॥

तस्याश्चार्थोपस्थापकत्वे मुख्यार्थतावच्छेदके[3] तात्पर्यविषयान्वयितावच्छेदकताया अभावो न तन्त्रम् । शक्यतावच्छेदकरूपेण लक्ष्यभानस्य स्वीकारात् । किं तु तात्पर्यविषयान्वये[4] मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो रूढिप्रयोजनयोरन्यतरच्च तन्त्रम् । मुख्यार्था-

मतान्तरमाह—**सर्वेषामिति** । जातिगुणक्रियायदृच्छाशब्दानामित्यर्थः । शब्दवृत्तेः परम्परया तन्निष्ठत्वकल्पने गौरवादाह—**तत्तत्समयेति** । बालत्वयुवत्ववृद्धत्वरूपे-

१ बालवृद्ध-शुकादिभिरुदीरिताः ये नानाडित्थादिशब्दास्तेषु सर्वेषु डित्थत्वमेका जातिरभिधेया सिध्यति । अर्थगता जातिरितिपक्षे–तत्तत्समये बाल्य–यौवन–वार्धक्यसमये भिन्ना ये डित्थाद्यर्थाः ( व्यक्तयः ) तेषु डित्थत्वमेका जातिरभिधेया भवतीत्याशयः ।

२ शक्यस्य प्रवाहरूपार्थस्य अन्येन तटादिलक्ष्यार्थेन सह संबन्धः । अर्थात् शक्यसंबन्धितया तत्संबद्धस्य अन्यार्थस्य प्रत्यायनं लक्षणेत्याशयः ।

३ मुख्यार्थतावच्छेदकम् ( गङ्गापदस्य मुख्योऽर्थः गङ्गा (प्रवाहः), मुख्यार्थतावच्छेदकं गङ्गात्वम् ), तद्धि सर्वथैव तात्पर्यविषयान्वयितावच्छेदकं न भवेत्, अर्थात् तात्पर्यविषयीभूतेऽन्वये मुख्यार्थतावच्छेदकस्य ( गङ्गात्वस्य ) सर्वथैव यदनन्वयस्तदैव लक्षणाऽवतरेत् इति न कारणम् । लक्ष्यस्य तटाद्यर्थस्य मुख्यार्थतावच्छेदक–( प्रवाहत्व )–रूपेण प्रतीतेः स्वीकारात् । तदेव हि शैत्यपावनत्वरूपप्रयोजनस्य प्रतिपत्तिः ।

४ तात्पर्यविषयीभूतेऽन्वये मुख्यार्थतावच्छेदकरूपेण मुख्योऽर्थः अभावस्य प्रतियोगी भवति, अर्थात् तत्र मुख्योर्थः ( प्रवाहः ) मुख्यार्थतावच्छेदकरूपेण नाऽन्वेति, अपि तु लक्ष्यार्थेन सह संबद्धतयाऽऽनुषङ्गिकरूपेण । ततश्च–लक्षणायां मुख्यार्थस्यान्वये सत्यपि मुख्यार्थत्वरूपेण मुख्यार्थस्य अन्वयो न भवति । एवं च मुख्यार्थतावच्छेदकतया मुख्यार्थप्रतियोगिकोऽभावः, रूढिप्रयोजनयोर्मध्ये एकतरच्च लक्षणायां कारणमिति सारम् ।

न्वयानुपपत्तेः तत्त्वे तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणोत्थानं[1] न स्यात्। 'गङ्गायां घोषः' इत्यत्र सामीप्यम्, 'मुखचन्द्रः' इत्यादौ सादृश्यम्, व्यतिरेकलक्षणायां विरोधः, 'आयुर्घृतम्' इत्यादौ कारणत्वादयश्च संबन्धा यथायोगं लक्षणाशरीराणि।

इयं तावद्द्विविधा, निरूढा प्रयोजनवती च। तत्रापि द्वितीया द्विविधा, गौणी शुद्धा च। तत्राद्या सारोपा, साध्यवसाना चेति द्विविधा। अन्त्या चतुर्विधा—जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना चेति प्रयोजनवती षड्विधा संपद्यते। तत्र निरूढलक्षणाया अनुकूलप्रतिकूलानुलोमप्रतिलोमलावण्यादय उदाहरणं नीलादयश्च। 'धर्मस्यायमनुकूलः' इत्यादौ मुख्यार्थस्य कूलानुगतत्वादेर्बाधात् अनादिप्रयोगप्रवाहवशादेकवस्तुप्रवण[2]त्वात्मना कूलानुगतादिरूपशक्यस्य सादृश्येन संबन्धेनानुकूलादिशब्दैरनुगुणादयो लक्ष्यन्ते। एवं नीलादिपदानां लाघवाद्गुणगतजातेरेव शक्यतावच्छेदकतया[3] गुणद्रव्ययोः 'नीलो घटः' इत्यादौ सामानाधिकरण्येनान्वयस्यानुपपत्तेः समवायात्मना गुणरूपशक्यस्य

---

त्यर्थः। तत्त्वं कारणम्। **व्यतिरेकलक्षणेति**। 'उपकृतं बहु नाम-' इत्यादौ। यथायोगं यथासंभवम्। **लक्षणाशरीराणीति**। लक्षणाज्ञानकार्यतावच्छेदकं च तादृशशक्यसंबन्धप्रकारकलक्ष्यविशेष्यकशाब्दबुद्धित्वमिति प्राचीनालंकारिकमतम्। तदनन्तरं व्यञ्जनया तादृशशक्यतावच्छेदकप्रकारकलक्ष्यबोध इति च। एकप्रवणत्वं तदेकस-

---

१ काकेभ्यो दधि रक्ष्यताम्, अत्र काकपदमुख्यार्थस्य काकस्य रक्षणक्रियान्वये न बाधः, तेभ्योऽपि दधिरक्षा वक्तुर्विवक्षितैव। ततश्च मुख्यार्थान्वयानुपपत्तिरेव लक्षणाबीजमिति स्वीकारे काकपदस्य दध्युपघातके लक्षणा नावतरेदित्याशयः।

२ अनुकूलपदस्य 'कूलम् अनुगतः' इति यः शक्योऽर्थः, तस्य एकवस्तुप्रवणत्वात्मना (एकस्मिन् वस्तुनि यत् प्रवणत्वं संसक्तत्वम् तद्रूपेण) सादृश्येन संबन्धेन।

३ नीलादिपदानां नीलादिगुण-तद्विशिष्टद्रव्येत्युभयवाचकत्वापेक्षया गुणमात्रवाचकत्वे लाघवम्। ततश्च—नीलादिपदानां शक्यतावच्छेदकं नीलादिगुणगता जातिर्न तु द्रव्यगता। 'नीलो घटः' इत्यत्र तु नील इति गुणस्य घट इति द्रव्यस्य च समानाधिकरणत्वेन (विशेषणविशेष्यभावेन) अन्वयस्य बाधात् नीलादिगुणरूपशक्यस्य समवायरूपेण संबन्धेन नीलादिशब्दैर्नीलगुणविशिष्टानि द्रव्याणि लक्ष्यन्ते इति सर्वस्याशयः।

संबन्धेन नीलादिशब्दैर्गुणिनो लक्ष्यन्ते । तत्राद्यवर्गे सादृश्यसंबन्धेन द्वितीयवर्गे च तदितरसंबन्धेन लक्षणायाः प्रवृत्तेर्निरूढायामपि गौणीत्व-शुद्धत्वाभ्यां द्वैविध्यमामनन्ति ।

विषयविषयिणोः पृथङ्निर्दिष्टयोरभेद आरोपः । अपृथङ्निर्दिष्टे विषये विषय्यभेदोऽध्यवसानम् । तत्राद्येन सहिता सारोपा । द्वितीयेन तु साध्यवसाना । उदाहरणानि च 'मुखं चन्द्रः' इत्यादीनि गौण्याः सारोपायाः । 'पुरेऽस्मिन्सौधशिखरे चन्द्रराजी विराजते' इत्यादीनि च तस्याः साध्यवसानायाः । अत्राद्यायां विषयिप्रतिपादकैश्चन्द्रादिशब्दैर्लक्षणयोपस्थापितानां चन्द्रादिसदृशानामभेदसंसर्गेण मुखादिशब्दोपस्थापितैर्मुखत्वादिविशिष्टैर्मुखादिभिरन्वयः । सादृश्यरूपधर्मलक्षणायां तु तेन सह मुखादीनामन्वयो न स्यात्, नामार्थयोरभेदातिरिक्तसंसर्गेण विशेष्यविशेषणभावस्यानुपपत्तेः । नन्वेवं सति बोधावैलक्षण्याच्चन्द्रसदृशं मुखमित्युपमातो मुखं चन्द्र इति रूपकस्य कथं भेदः । न च सदृशविशेषणचन्द्रैसंबन्धासंबन्धाभ्यामिति

---

कलम् । **विषयविषयिणोरिति** । उपमेयोपमानयोरित्यर्थः । आद्येनारोपेण । **द्वितीयेन त्विति** । अध्यवसानेनेत्यर्थः । सहितेत्यस्यानुषङ्गः । **तस्या इति** । गौण्या इत्यर्थः । ननु गौरवात्सदृशरूपधर्मिलक्षणा न युक्ता अत आह—**सादृश्येति** । तेन सादृश्येन । न स्यात्कथमपि न स्यात् । **अतिरिक्तेति** । अभेदेन तु बोधान्नेति भावः । **एवं सति** धर्मिलक्षणयाऽभेदेनान्वयाङ्गीकारे सति । धर्मलक्षणया व्युत्पत्तिसंकोचमङ्गीकृत्य भेदान्वये तु स्याद्वैलक्षण्यमिति भावः । **बोधावैलेति** । उपमायामप्यभेदेनैव बोधादिति

---

१ अनुकूल-प्रतिकूलादिषु ।

२ नीलादिषु ।

३ तनश्च गौण-सारोपलक्षणायां सत्याम् 'मुखं चन्द्रः' इत्यत्र चन्द्रसदृशाभिन्नं मुखमिति शाब्दबोधस्य सारः ।

४ ननु लक्षणया रूपकेऽपि चन्द्रसदृशमिति बोधे जायमाने, चन्द्रसदृशं मुखमिति प्रसिद्धोपमापेक्षया बोधस्य अवैलक्षण्यादुपमारूपकयोः कथं पृथगलंकारता साधनीयेति पूर्वपक्षः ।

५ नन्वस्ति रूपके उपमायां च मिथो बोधवैलक्षण्यम् । यतो हि—मुखचन्द्र इति रूपके सदृशलक्षणया चन्द्र इत्येकेनैव पदेन चन्द्र-तत्सदृशयोर्बोधनात् द्वयोरनयोः संबन्धः संसर्गतया न भासते [ भिन्नपदोपस्थाप्ययोरेवार्थयोः संबन्धः संसर्गतया स्वीक्रियत इति नियमात् ] । चन्द्रसदृशं मुखमित्युपमायां तु चन्द्र-तत्सदृशयोर्भिन्नपदार्थत्वात्तयोः संबन्धस्य संसर्गतयैव भानमिति शङ्कायाम्—एतावन्मात्रभेदेन मुखं चन्द्र इव इति शाब्दोपमायाः, चन्द्रसदृशं मुखमित्या-

वाच्यम्। बोधस्य वैलक्षण्यमात्रेण पृथगलंकारताया असिद्धेः। अन्यथा मुखं चन्द्र इवेत्यत्र चन्द्रसदृशमित्येतद्गतात्पृथगलंकारतापत्तिरिति चेत्,

अत्र केचित्—"रूपकस्योपमातः स्वरूपसंवेदनांशमादायावैलक्षण्येऽपि[1] लक्षणाफलीभूततादूप्यसंवेदनमादाय वैलक्षण्यं निर्बाधम्। ताद्रूप्यसंवेदनं च विषये मुखादौ विषयितावच्छेदकस्य चन्द्रत्वादेः संप्रत्ययः। ननु लक्षणाप्रयोज्यादपि तत्सदृशबोधात्कथं नाम ताद्रूप्यप्रत्ययः स्यात्। उपायस्या[2]भावाद्भेदज्ञानेन प्रतिबन्धाच्च। अन्यथा चन्द्रसदृशं मुखमित्यत्रापि

भावः। सदृशविशेषणचन्द्रसंबन्धासंबन्धाभ्यामिति। सदृशे विशेषणभूतो यश्चन्द्रस्तत्संबन्धतदसंबन्धाभ्यां संसर्गतया भासमानाभ्यामित्यर्थः बोधवैलक्षण्यमिति शेषः। मुखं चन्द्र इत्यत्र चन्द्रपदस्य तत्सदृशे लाक्षणिकत्वेन तस्यैकपदार्थत्वात्संसर्गस्यापि लक्ष्यघटकतया चन्द्रसदृशयोः संबन्धस्य संसर्गविधयाऽभानम्। चन्द्रसदृशमित्यत्र तु तयोर्भिन्नपदार्थत्वेन संसर्गस्य तत्त्वेन भानमावश्यकमेवेति भावः। अन्यथा बोधवैलक्षण्यमात्रेणालंकारभेदाङ्गीकारे। **मुखं चन्द्र इवेत्यत्रेति**। इत्यस्यामुपमायामित्यर्थः। इवस्य द्योतकत्वेन रूपकरीत्या संसर्गस्य तत्त्वेनाभानात्। सादृश्यवाचकत्वेऽपि तेन सह प्रतियोगित्वं संबन्धः। चन्द्रसदृशमित्यत्र तु तत्प्रतियोगिकाश्रये लाक्षणिकतया अभेदस्य संबन्धत्वमिति स्पष्टं वैलक्षण्यम्। सदृशवाचकत्वेऽपि स्वप्रतियोगिकाश्रयत्वम् चन्द्र इवेत्यत्र संबन्धः, तत्र तु स एवेति स्पष्टो भेद इति भावः। **एतद्गतादिति**। उपमालंकारादिति शेषः। **ताद्रूप्यसंवेदनमिति**। ताद्रूप्यमात्रसंवेदनमित्यर्थः। एतेन भेदाभेदोभयप्रधानोपमा। असाधारणरूपेणोपमानोपमेययोर्भेदः, साधारणरूपेण त्वभेद इत्यलंकारसर्वस्वकृद्ग्रन्थविरोध इत्यपास्तम्। **उपायस्येति**। शक्तिलक्षणान्यतरस्येत्यर्थः। तत्रापि लक्षणास्तु, अत आह—**भेदेति**। अन्यथा तस्याप्रतिबन्धकत्वे। **इत्यत्रापीति**। उपमायामपि। **ताद्रूप्येति**। ताद्रूप्यमात्रेत्यर्थः। एवमुपायमुक्त्वा द्वितीयहेतुं खण्ड-

थोंपमालंकारापेक्षयापि पृथगलंकारता स्वीकर्तव्या स्यात्। 'इव' इति निपातस्य द्योतकत्वेनावाचकत्वाद् भिन्नपदानुपस्थाप्यस्य तत्सादृश्यस्य चन्द्रेण सह संबन्धः संसर्गतया न भासते। चन्द्रसदृशमित्यत्र तु लक्षणया सदृशपदप्रतीयमानस्य सादृश्यस्य भिन्नपदोपस्थाप्यतया तयोः संबन्धः संसर्गतयैव भासत इति भेदादनयोरपि मिथः पृथगलंकारता प्रतिपाद्या स्यात्। ततश्च रूपके लक्षणास्वीकारे बोधस्याऽवैलक्षण्यादुपमारूपकयोः को भेद इति पूर्वपक्षः। एतस्य हि 'केचित्' 'अन्ये तु' 'अपरे तु' इति प्राचीनानां त्रिधा समाधानम्।

१ उभयत्रापि चन्द्रसदृशमिति स्वरूपबोधः एकरूप एवेत्यवैलक्षण्येपि।

२ ताद्रूप्यस्य ( अभेदस्य ) प्रत्ययार्थं शक्तिर्वा लक्षणादिको वा यदि कश्चिदुपायः स्यात्तदैव तत्सिद्धिः। अत्र तु चन्द्र—तत्सदृशयोर्भेदप्रतीतिरिति तद्विरुद्धः अपायः।

ताद्रूप्यप्रत्ययप्रसङ्ग इति चेत्, मैवम् । श्लेषस्थल इवात्राप्येकशब्दोपादानोत्थस्य व्यञ्जनस्योपायत्वाद्वैयञ्जनिकबोधस्य बाधबुद्ध्यप्रतिबध्यत्वाच्च । अथ चन्द्रतत्सदृशयोरेवैकपदोपात्तत्वाच्चन्द्रसदृशे चन्द्रताद्रूप्यस्य प्रत्ययो यथाकथंचिदस्तु, न तु मुखत्वविशिष्टे मुखे । अनुभवसिद्धश्च सर्वेषाम् 'वक्त्रे चन्द्रमसि स्थिते किमपरः शीतांशुरुज्जृम्भते' इत्यादौ विषये विषयिताद्रूप्यस्य प्रत्यय इति सत्यम् । स्वताद्रूप्यवदभेदबुद्ध्या स्वताद्रूप्यस्य सुबोधतया तस्मिन्नपि तस्य सिद्धेः" इत्याहुः ।

अन्ये तु—"चन्द्रादिपदेभ्यो लक्षणया चन्द्रसदृशत्वेनापि रूपेणोपस्थितानां मुखादीनां चन्द्रत्वेन रूपेणैव मुखादिपदोपस्थापितैः सहाभेदान्वय-

यति—**वैयञ्जनीति** । एतेन मुखत्वविशिष्टमुखव्यवच्छेदः । तदेवाह—**न त्विति** । रूपान्तरेण मुखोपस्थितेः सत्त्वादाह—**मुखत्वेति** । इष्टापत्तिं खण्डयति—**अनुभवेति** । स्वताद्रूप्यवदिति । चन्द्रताद्रूप्यवत्सदृशाभेदेत्यर्थः । तस्मिन्विषये । तस्य ताद्रूप्यप्रत्ययस्य । केचिदित्यनेनारुचिः सूचिता । तद्बीजं तु स्वरूपसंवेदनकृतवैलक्षण्यस्यापि संभवेन तावत्पर्यन्तगमनं व्यर्थमिति । अत एव मतान्तरमाह—**अन्ये त्विति** । अपि- मुखत्वामुखत्वसमुच्चायकः । रूपेणैवेत्यस्याभेदान्वयेत्यत्रान्वयः । उपस्थापितैरित्यस्य मुखत्वामुखत्वादिभिरिति शेषः । ननु लक्षणाज्ञानकार्यतावच्छेदकं प्राचीनसंमतं प्रागुक्तमिति

१ 'विधौ वक्त्रे मूर्ध्नि' इत्यादिश्लेषे विधौ इति एकपदोपस्थाप्ययोः विधि-विध्वोः एकपदोपस्थापनजन्या व्यञ्जना यथा अभेदं पर्यवसाययति तथा चन्द्रेत्येकपदेन चन्द्र-तत्सदृशयोरुपस्थितिरित्येकपदोपादानोत्थितया व्यञ्जनया द्वयोस्ताद्रूप्यप्रत्ययः स्यात् । भेदज्ञानरूपा बाधबुद्धिरपि न स्यादत्र प्रतिबन्धिका, व्यञ्जनाजन्यबोधस्य तत्प्रतिबध्यत्वाभावात् ।

२ चन्द्रसदृशे यदि चन्द्रताद्रूप्यं पूर्वोक्तव्यञ्जनया साधितं तर्हि स्व(चन्द्र)ताद्रूप्यवान् यः चन्द्रसदृशः तेन सह अभिन्नस्य मुखस्यापि चन्द्रताद्रूप्यं भवेदेव । चन्द्र(सदृश)-मुखेति द्वयोर्नामार्थयोरभेदस्य च सर्वानुमतत्वात् । यश्च यस्य अभिन्नेन सह अभिन्नः स तस्मादप्यभिन्नः [ चन्द्रसदृशाच्चन्द्रः अभिन्नः तर्हि चन्द्रसदृशादभिन्नान्मुखादपि चन्द्रः अभिन्न एव ] ।

३ चन्द्रसदृशाभिन्नं मुखमिति बोधे चन्द्रसदृशस्य मुखस्य च यद्यप्यभेदो लक्षणया सिध्यति तथापि मुखेन सह सोयमभेदश्चन्द्रत्वेनैव रूपेण भवति, अर्थात् पदार्थोपस्थितिरन्यविधा ( सदृशत्वात्मिका ), अन्वयश्च ( बोधः ) चन्द्रेण सह अभेदात्मकः, इत्यर्थोपस्थितिशाब्दबोधयोर्भेदः स्वीकार्य एवेत्याशयः ।

बोधो जायते। तत्तत्पदलक्षणाज्ञानस्य तत्तत्पदशक्यतावच्छेदकप्रकारकलक्ष्यान्वयबोधत्वावच्छिन्नं प्रति हेतुतायाः, पदार्थोपस्थितिशाब्दबोधयोः समानाकारत्वस्यानुभवसाक्षिकवैलक्षण्यकलाक्षणिकबोधातिरिक्तविषयतायाश्च कल्पनात्। 'अत एव गङ्गायां घोष इत्यत्र तटत्वेनाप्युपस्थितस्य तटस्य गङ्गात्वेनान्वयबोधस्तत्प्रयोज्यः शैत्यपावनत्वादिप्रत्ययश्च संगच्छते। प्रकृते तु विषयिचन्द्रादिनिष्ठासाधारणगुणवत्त्वप्रत्ययः फलम्। न हि चन्द्रत्वप्रतीतिं विना मुखे चन्द्रत्वनियतगुणवत्त्वधीः शक्योपपादयितुम्। ताद्रूप्यपदेन तदसाधारणगुणवत्त्वमेव प्राचीनैरुक्तम्। इत्थं च स्वरूपसंवित्तिकृतः फलीभूतसंवित्तिकृतश्चोपमातो रूपकस्य भेदः स्फुट एव"

---

कथं तथा बोधोऽत आह—**तत्तत्पदेति**। नन्वेवमपि तदुपस्थितिबोधयोः समानप्रकारत्वनियमभङ्गोऽत आह—**पदार्थोपेति**। कल्पनाया आवश्यकतामाह—**अत एवेति**। अपिना समीपत्वसमुच्चयः। ननु प्रकृते फलाभावोऽत आह—**प्रकृते त्विति**। नन्वेवं प्राचीनविरोधः। ताद्रूप्यसंवेदनस्य फलत्वस्य तैरुक्तत्वादत आह—**ताद्रूप्येति। तदसाधारणेति**। विजातीयाह्लादकत्वेत्यर्थः। **इत्थं चेति**। रूपके तथा बोधे तथा फलेऽङ्गीक्रियमाणे चेत्यर्थः। **उपमातो रूपकस्येति**। उपमायां तथा बोधाभावात्सा-

---

१ नन्वेवं चन्द्रसदृशाभिन्नं मुखमिति लाक्षणिकबोधः पूर्वमुक्तो विरुद्धः स्यादित्येको दोषः। पदार्थोपस्थिति-शाब्दबोधयोः समानप्रकारकत्वनियमोऽपि च खण्डितः स्यादित्यपरो दोष इति द्वयोः समाधानार्थमाह-तत्तत्पदलक्षणेति०—

तत्तत्पदानां (चन्द्रादीनाम्) यत् लक्षणाजन्यं ज्ञानं (चन्द्रसदृशमिति) तद्धि लक्ष्याणां (चन्द्रसदृशादीनाम्) तादृशम् लक्ष्यान्वयबोधं प्रति हेतुर्यत्र तत्तेषां पदानां (चन्द्रादीनाम्) शक्यतावच्छेदकं (चन्द्रत्वम्) प्रकारः (विशेषणीभूतः) स्यात्। अर्थात् चन्द्रसदृशादीनां लाक्षणिकपदानामन्वयबोधे चन्द्रादीनां शक्यतावच्छेदकं चन्द्रत्वमपि प्रविष्टं भवति, ततश्च चन्द्रत्वेन रूपेण मुखस्याभेदो न दुर्लभ इत्याशयः।

द्वितीये च—पदार्थोपस्थिति-शाब्दबोधयोः समानाकारकता अनुभवसाक्षिकं वैलक्षण्यं यस्य ईदृशं लाक्षणिकबोधम् अतिरिच्य (विहाय) एव कल्प्यते। लाक्षणिकबोधत्वादत्र तदुल्लङ्घनेपि न दोष इति।

२ लक्ष्यार्थस्य तटत्वेन रूपेण शाब्दबोधान्वये तु शैत्यपावनत्वप्रतीतिर्न स्यात्।

३ केचित्तु इति मते उपमाया रूपकेण सह ताद्रूप्यसंवेदनकृत एव भेदः, स्वरूपसंवेदनं त्वेकमेव। अस्मिन्मते तु—मुखचन्द्र इति रूपके पदार्थोपस्थितिः 'चन्द्रसदृशं मुखम्' इत्याकारिका, शाब्दबोधस्तु चन्द्ररूपं मुखमिति, द्वयोर्भेदः। उपमायां तु चन्द्रसदृशं मुखमिति पदार्थोपस्थितिः शाब्दबोधश्च द्वावपि समानाकारौ। एवं च—स्वरूपसंवित्तिकृतस्ताद्रूप्यसंवित्तिकृतश्च द्विविध एव द्वयोर्भेदः।

इति वदन्ति । अपरे तु—“भेदकरम्बितं सादृश्यमुपमाजीवातुभूतम्, भेदाकरम्बितं च गौणसारोपलक्षणाया इति स्फुटे भेदे कृतं फलकृतवैलक्षण्यपर्यन्तानुधावनेन । पक्षेऽस्मिन्भेदगर्भसादृश्यप्रतिपत्तेस्ताद्रूप्यप्रतीतिः कथं नाम फलं भवितुमीष्टे, इत्यनुपपत्तिं परिहर्तुमायासोऽपि नापततीत्यपरमनुकूलम्” इत्यप्याहुः । तदित्थं प्राचामाशयो मतभेदेन वर्णितः ।

नव्यास्तु—“मुखं चन्द्रः, वाहीको गौः” इत्यादौ चन्द्रादीनां मुखादिभिः सह संभवति लक्षणां विनैवाभेदसंसर्गेणान्वयबोधः । बाधनिश्चयप्रतिबध्यतावच्छेदककोटावनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेश्यत्वात् । अत एव ‘अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि’ इति प्राचां प्रवादोऽपि संगच्छते । न च ‘वह्निना सिञ्चति’ इत्यतो वाक्यादपि शाब्द-

---

धारणस्यैव गुणस्य प्रतीतेश्चेति भावः । अत्रापि पक्षेऽरुचिं सूचयन्मतान्तरमाह—**अपरे त्विति** । करम्बितं विशिष्टम् । सादृश्यस्य धर्मरूपत्वेऽतिरिक्तत्वे च भेदागर्भत्वादिति भावः । जीवातुर्जीवनौषधम् । **स्फुटे भेद इति** । उपमायां चन्द्रभिन्नं चन्द्रसदृशमिति बोधः । रूपके तु चन्द्रसदृशमित्येवेति भावः । पक्षेऽस्मिन्नित्यस्यापरमित्यनेनान्वयः । ननु मुखं न चन्द्र इत्यादिबाधज्ञानसत्त्वेन कथं तथा बोधोऽत आह—**बाधेति** । **अनाहार्येति** । तत्सत्त्वेऽपीच्छारूपोत्तेजकवशादाहार्यस्य जायमानत्वादिति भावः । न चेत्यस्यैवमिति शेषः । शाब्दान्यत्वनिवेशे इति तदर्थः । नन्वेवं प्रकृतेऽपि योग्यताज्ञानाभावात्कथं

१ भेदो गर्भे यस्या ईदृशी सादृश्यप्रतीतिरुपमायां भवति, ततश्चैतादृशप्रतीतेः फलं ताद्रूप्य(अभेद)प्रतीतिः कथं स्यात्? भेदाभेदयोर्मिथो विरुद्धत्वात् । रूपके तु सादृश्यबोधे सत्यपि ताद्रूप्यप्रतीतिरेव लक्षणायाः फलं स्वीक्रियते । तथा च द्वयोरनयोरलंकारयोः पृथग्भेदसाधनाय नायासः कर्तव्यो भवतीत्याशयः ।

२ बाधनिश्चयेन यज्ज्ञानं प्रतिबध्यते तदवच्छेदक( साक्षाद्धर्म )कोटौ यथा आहार्यज्ञानभिन्नत्वं निवेश्यते तथा शाब्दान्यत्वमपि निवेश्यम् । अर्थात् बाधे सत्यपि कल्पितो बोधः ( आहार्यः ) यथा बाधज्ञानेन न प्रतिरुध्यते तथा शब्दमात्रेण जनितः ( न तु व्यावहारिकरूपेण जगत्युपलब्धः ) बोधोपि न प्रतिरुध्यते । तथा च मुखं चन्द्र इत्यादेः शब्दमात्रजनितबोधत्वाल्लक्षणां विनैव अभेदबोध इत्याशयः ।

३ अत्रापि शब्दमात्रजनितबोधं स्वीकृत्य शाब्दबोधः स्यादिति शङ्का ।

बोधापत्तिः। योग्यताज्ञानविरहात्। मुखं चन्द्रः, गौर्वाहीकः, इत्यादौ त्विष्टचमत्कारप्रयोजकताज्ञानाधीनाया[1] इच्छायाः सत्त्वादाहार्ययोग्यताज्ञानसाम्राज्यम्। अत एव शाब्दबोधे योग्यताज्ञानस्य कारणत्वोक्तिः प्राचां संगच्छते। आहार्य एव वाऽभेदान्वयबोधोऽस्तु। मास्तु बाधबुद्धिप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वम्। मा चास्तु शाब्दबुद्धौ योग्यताज्ञानस्य कारणत्वम्। आहार्यं प्रात्यक्षिकमेवेति[2] नियमश्च। अवश्यं मुखचन्द्र इत्यादौ पराभिमतसारोपलक्षणोदाहरणे वाच्यार्थयोरेवाभेदान्वयोऽभ्युपगन्तव्यः[3], न तु वाच्यलक्ष्ययोः। अन्यथा 'राजनारायणं[4]

बोधोऽत आह—**मुखमिति**। अत एवाहार्ययोग्यताज्ञानसत्त्वादेव। शाब्दबोधे शाब्दबोधत्वावच्छिन्ने। लाघवान्मतान्तरमाह—**आहार्य एव वेति**। **मा चास्त्विति**। वह्निना सिञ्चतीत्यादावप्याहार्यज्ञानस्येष्टत्वादिति भावः। अस्योभयत्रान्वयः। उक्तं द्रढयति—**अवश्यमित्यादिना**। अभेदेत्यस्याहार्येत्यादिः। एवव्यवच्छेद्यमाह—

१ मुखं चन्द्र इत्यादिर्बोधः अभीष्टस्य चमत्कारस्य प्रयोजक इति ज्ञानाधीनाया अस्माकमिच्छायाः सत्त्वात् आहार्य( आरोपित )योग्यताज्ञानस्य तत्राधिकारो भवति येन न शाब्दबोधे प्रतिबन्ध इत्याशयः।

२ आहार्यमारोपितं प्रत्यक्षसिद्धमेव भवतीति नियमश्चापि 'मास्तु' इति पूर्वेणान्वयः। अर्थात् शब्दजन्यस्यापि तस्य स्वीकारे सोयं नियमो न स्वीकार्य इत्याशयः।

३ परैः ( प्राचीनैः ) मुखं चन्द्रः अत्र लक्षणां स्वीकृत्य चन्द्र इति लक्ष्यस्य मुखमिति वाच्यस्य च परस्परमभेदान्वयः प्रोक्तः। वयं तु लक्षणां विनैव वाच्ययोरेवानयोः अभेदं ( नामार्थयोस्तथैवोचितत्वात् ) स्वीकुर्म इति नव्यानामाशयः।

४ 'अन्यथा राजनारायणं लक्ष्मी'रित्यारभ्य 'तन्निवर्तकताया अयोगादिति' पर्यन्तस्य प्रघट्टकस्यायं सारः—

राजा नारायण इवेत्युपमितसमासाधीनायामुपमायां लक्ष्मीकर्तृकमालिङ्गनं नोपपद्यते। लक्ष्म्यालिङ्गनार्थं हि राज्ञि नारायणाऽभेदोऽपेक्ष्यते न तु नारायणसादृश्यम्। तत्तु रूपके उपपद्यते, नोपमायाम्। एवमेव मयूरव्यंसक( विशेषण )समासाधीने रूपके पाद एवाम्बुजमित्यत्र पादस्य अम्बुजरूपत्वे स्वीकृते नूपुरमनोहरत्वं नोपपद्यते। नूपुरधारणं हि चरणे उपयुज्यते न तु कमले।

प्राचीनानां रीत्या रूपके सदृशलक्षणास्वीकारे तु राजैव-नारायण इति रूपकेऽपि सदृशलक्षणया नारायणसदृश इति बोधे आलिङ्गनानुपपत्तौ तथैव स्थितायाम् उपमानुपपत्ते रूपकनिर्णायकता प्रोक्ता न संगच्छेत। एवमेव पादाम्बुजमित्यत्र रूपकस्वीकारेपि प्राचीनानां मते लक्षणया अम्बुजसदृशमिति बोधेन नूपुरशिञ्जितद्वारा मनोहरताया उपपत्तौ उपमितसमासस्य रूपकनिवर्तकताया उक्तिः प्राचां नोपपद्यते। तस्मान्मुखं चन्द्र इत्यादौ वाच्ययोरेवाभेदः न तु वाच्यलक्ष्ययोरिति।

लक्ष्मीस्त्वामालिङ्गति निर्भरम्', 'पादाम्बुजं भवतु मे विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यादौ क्रमेणोपमारूपकयोरुपमितविशेषणसमासाधीनयोर्लक्ष्मीकर्तृकालिङ्गनमञ्जुमञ्जीरशिञ्जितमनोहरत्वयोरनुपपत्तिर्निर्णायिका रूपकोपमयोः प्राचीनैस्तत्र तत्रोपनिबद्धा विरुद्धा स्यात् । आद्यपद्ये उपमाया इव रूपकस्यापि स्वीकारे बाधकस्य तुल्यतया तन्निर्णायकताया असंगतेः । द्वितीयपद्ये रूपकस्यापि स्वीकारे बाधकाभावेन तन्निवर्तकताया अयोगात् । न च मुखचन्द्रादौ समासे क्वचिदस्तु नाम प्रागुक्तरीत्या लक्षणां विनापि बोधोपपत्तिः, व्यासे तु लक्षणाया नास्ति बाधकमिति वाच्यम् । 'कृपया सुधया सिञ्च हरे मां तापमूर्च्छितम्' इत्यादौ व्यासेऽप्यनुपपत्तेः । न च सिञ्चतेरपि विषयीकरणे लक्षणया नानुपपत्तिः । उत्प्रेक्षाद्यतिरिक्तातिशयोक्त्यपह्नुत्यादिष्विवाहार्यज्ञानेनोपपत्तौ लक्षणायां बीजाभावादनुभवविरोधाच्च ।

अपि चोपमानवाचकस्य चन्द्रादिपदस्य रूपके उपमानसदृशे लक्षणा इति हि प्राचां समयः । तत्र च लक्ष्यतावच्छेदकं सादृश्यम् । तच्च

**न त्विति** । अन्यथा वैपरीत्याङ्गीकारे । विरुद्धेत्यत्रास्यान्वयः । **उपमितविशेषणेति** । 'उपमितं व्याघ्रादिभिः' । 'मयूरव्यंसकादयश्च' इतीत्यर्थः । तत्र तयोः स्वीकारे या तदनुपपत्तिः सा वैपरीत्ये निर्णायिकेत्यखण्डार्थः । बाधकस्य तत्कर्तृकालिङ्गनासंभवस्य । बाधकाभावेन तादृशमनोहरत्वासंभवाभावेन । **प्रागुक्तेति** । प्राचीनोक्तेत्यर्थः । **नास्ति बाधकमिति** । प्राचानुक्तत्वादिति भावः । **सिञ्चतेरिति** । अपिरेवार्थः । **उत्प्रेक्षेति** । अत्र तु यथा लक्षणा तथा स्फुटीभविष्यति । विनिगमनाविरहादाह— **अनुभवेति** । तत्र विसंवादादाह— **अपि चेति** । स च समानधर्मश्च । एवमादौ

१ समासाभावे तु सदृशलक्षणयैव कार्यं स्यादिति शङ्का । कृपया सुधयेत्यत्र व्यासेऽपि सदृशलक्षणायां सुधासदृश्या कृपया सेचनं तावन्न संघटते यथा सुधाऽभिन्नया । अत एव वाच्ययोर्द्वयोरभेदः स्वीकार्य इति समाधानम् ।

२ अतिशयोक्तौ विषयिणः (उपमानस्य) एव यथा विषयीकरणम् (उपमेयतया स्थापनम्) तथाऽत्रापि 'कुरु' इत्यस्य (विषयस्य) स्थाने सिञ्चेति विषयिणः प्रयोगः । अतिशयोक्तिरीवलने चायमर्थः—'तापमूर्च्छितस्य ममोपरि सुधासेचनसदृशीं कृपां कुरु' इति फलितोर्थः । तथा च असमासस्थलेऽपि लक्षणास्वीकारे नानुपपत्तिरिति पूर्वपक्षः । उत्प्रेक्षादिकं विहाय अतिशयोक्त्यपह्नुत्यादिषु यथा आहार्यज्ञानेनैवोपपत्तिस्तथात्रापि आहार्यज्ञानेनैवोपपत्तौ लक्षणास्वीकारे हेतोरभावः, अनुभवविरोधश्चेति तत्समाधानम् ।

समानधर्मरूपम् । स च लक्ष्यांशे सुन्दरत्वादिना विशेषरूपेण प्रतीयते, उताहो सामान्यरूपेण ? नाद्यः । सुन्दरं मुखं चन्द्र इत्यादौ पौनरुक्त्यापत्तेः । न चैवमादावुपात्तधर्मके रूपके तद्धर्मातिरिक्तो धर्म एव लक्ष्यतावच्छेदकीभूतसादृश्यरूप इति वाच्यम् । अनुभवविरोधात् ।

'अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि ।
शरीरिणां शरीराणि कमलानि[2] न संशयः ॥'

इत्यादौ श्लेषभित्तिकाभेदाध्यवसितधर्मं विना धर्मान्तरस्य सर्वथैवास्फूर्तेश्च । नान्त्यः[3] । सादृश्यस्य शब्दोपात्तत्वेनोपमात्वापत्तेः । न च सादृश्यस्य

इत्यादावित्यर्थः । अत्रादिशब्दस्य प्रकारार्थत्वात्तत्प्रयोजकधर्ममाह—**उपात्तेति** । **तद्धर्मेति** । उपात्तधर्मान्याह्लादकत्वादिरित्यर्थः । तथानुभवे विसंवादादाह—**अङ्कितानीति** । अक्षाणीन्द्रियाणि, अक्षाः पद्माक्षाश्च तत्समूहैर्व्याप्तानि । रोगसहितानि, सरोगामीनीत्यर्थः । **श्लेषेति** । शब्दश्लेषनिमित्तको यो विशेषणार्थयोरभेदाध्यवसायस्तद्विषयीभूतो यो धर्मस्तद्व्याप्तत्वसरोगत्वरूपस्तमित्यर्थः । एवमग्रेऽपि । एवं चात्र पौनरुक्त्यं दृढमिति भावः । **शब्दोपात्तेति** । लक्षणयेति भावः । तथा च रूपकोच्छेदापत्ति-

१ समानधर्मो यदि सुन्दरत्वादिना विशेषरूपेण प्रतीयते तर्हि सुन्दरं मुखं चन्द्रः अत्र सुन्दरत्वस्य शब्दद्वारा उक्तिः पौनरुक्त्यम् । यतो हि सुन्दरत्वमेव यदा लक्ष्यतावच्छेदकं तदा मुखं चन्द्र इत्यस्यैव चन्द्रेण समानं सुन्दरं मुखमित्यर्थसंपत्त्या पुनः कथनं पुनरुक्तिरेव ।

२ शरीराणि कमलानीति व्यस्तरूपकम् । लक्षणया कमलसदृशानाम् ( शरीराणाम् ) लक्ष्यतावच्छेदकं सादृश्यं च शब्दश्लेषरूपया भित्त्या ( निमित्तेन ) विशेषणीभूतयोरर्थयोः एकपदोपस्थाप्यत्वरूपस्य अभेदाध्यवसानस्य विषयीभूतो यो धर्मः अक्षसंघातैः ( इन्द्रियसमूहैः पद्माक्षराशिभिश्च ) व्याप्तत्वम्, सरोगत्वम् ( रोगसहितत्वं सरोगामित्वं ) च विहाय नान्यो ( धर्मः ) भवितुमर्हति । अर्थात् 'सुन्दरं मुखं चन्द्रः' अत्र तु उपात्तं धर्मं सुन्दरत्वं विहाय अन्योपि कश्चन धर्मः ( आह्लादकत्वं गौरत्वं वा ) लक्ष्यतावच्छेदकसादृश्यरूपेण निर्वक्तुं शक्यते । अत्र तु शरीराणाम् ( उपमेयानाम् ) कमलानाम् ( उपमानानां ) च पूर्वोक्तम् अभेदाध्यवसितधर्मं विना अन्यो न कोपि समानधर्मः प्रतीयते । तस्य च भवन्मतानुसारं लक्ष्यतावच्छेदकसादृश्यरूपत्वेन 'शरीराणि कमलानि' इत्यस्यैव 'कमलसदृशानि अक्षसंघाताङ्कितानि सरोगाणि शरीराणि' इत्यर्थो जातः । पुनः पद्ये 'अङ्कितान्यक्षसंघातैः' इत्याद्युक्तिः पौनरुक्त्यायैव । ततश्च लक्ष्यतावच्छेदकं सादृश्यं विशेषरूपेण न प्रतीयते पौनरुक्त्यापत्तेः । इति वक्तव्यं स्यात् ।

३ लक्ष्यतावच्छेदकं सादृश्यं सादृश्यत्वेन सामान्यरूपेण प्रतीयते इति अन्त्योपि पक्षो न । तथा सति लाक्षणिकेन चन्द्रादिपदेन यथा लक्ष्योऽर्थः प्रतिपाद्यते तथा लक्ष्यतावच्छेदकम् ( सादृश्यम् ) अपि प्रोच्यते । ततश्च रूपकेऽपि शब्दोपात्तस्य सादृश्यस्य सिद्धत्वादुपमालंकारो भवेत् । रूपकस्य चोच्छेदः स्यादित्याशयः ।

वाच्यतायामेवोपमाव्यपदेशः । 'नलिनप्रतिपक्षमाननम्' इत्यादौ तदभावापत्तेः । किं च 'विद्वन्मानसहंस—' इत्यादौ श्लिष्टपरम्परितरूपके श्लेषनिष्पत्तौ श्लेषभित्तिकाभेदाध्यवसानेन मानसवासित्वरूपे भूपहंसयोः सादृश्ये सिद्धे सदृशलक्षणामूलस्य भूपे हंसरूपकस्य सिद्धिः । तस्यां च सत्यां सरोमनोरूपार्थद्वयाभिधानलक्षणस्य श्लेषस्य निष्पत्तिरिति परस्पराश्रयः । नहि रूपकास्फूर्तौ सरोरूपेऽर्थे मानसशब्दस्य तात्पर्यं वेदयितुं किंचित्प्रमाणमवतरति । स्फुरिते तु रूपके तद्घटकसादृश्यान्यथानुपपत्तिरूपेण प्रमाणेनार्थद्वयाभेदबोधफलकस्य तदुभयप्रतिपादनात्मनः श्लेषस्य

---

रिति भावः । **वाच्यतायामेवेति** । शक्त्येति भावः । **तदभावेति** । प्रतिपक्षशब्दस्य न सादृश्ये शक्तिः किं तु लक्षणेति भावः । इष्टापत्तावाह—**किं चेति । विद्वदिति** । 'विद्वन्मानसहंस वैरिकमलासंकोचशीतद्युते दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भारभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥' इत्यादावित्यर्थः । अत्र मानसमेव मानसमित्यादिश्लेषः । तस्यां रूपकसिद्धौ । **तद्घटकेति** । लक्ष्यतावच्छेदकेत्यर्थः । **अर्थद्वयेति** । सरोमनोरूपे-

---

१ यत्र सादृश्यमभिधया प्रतिपाद्यं तत्रैवोपमा । अत्र तु सादृश्यं लक्षणया प्रतिपाद्यं ततो नोपमा प्रसज्येतेति शङ्का । नलिनप्रतिपक्षम् इत्यादावपि प्रतिपक्ष(शत्रु)पदेन सादृश्यं न वाच्यम्, अपि तु लक्षणागम्यमेव । सर्वसंमता चेयमुपमा । तस्मादभिधया वाच्ये एव सादृश्ये उपमा इति नोपपन्नमिदं समाधानम् । ततश्च रूपके लक्ष्यतावच्छेदकं सादृश्यं न विशेषरूपेण, न वा सामान्यरूपेण प्रतिपादयितुं शक्यत इति सर्वस्याशयः ।

२ विदुषां मानसम् ( मनः ) एव मानसम् ( सरः ) तस्य हंसः । वैरिकमलायाः ( लक्ष्म्याः ) संकोच एव वैरिकमलानाम् आ ( समन्तात् ) संकोचः तस्य कृते शीतद्युते ( चन्द्र ! ) इत्यादिषु मानसवासित्वरूपे भूपहंसयोः सादृश्ये सिद्धे सति ( लक्ष्यतावच्छेदकस्य धर्मस्य संपत्त्या ) भूपे हंसरूपकस्य सिद्धिः । रूपकसिद्धौ सत्यां तु राजनि हंसताप्रतीतिवशात् सरोमनोरूपस्य अर्थद्वयस्य प्रत्यायकः मानसपदश्लेषः सिध्येत् । [ यावत्कालं राजनि हंसरूपकं न सिध्यति तावत् विद्वत्पदसङ्कृततया मनोरूपार्थे दृढीभूतस्य मानसपदस्य सरोरूपमर्थं बोधयितुं न किञ्चित्प्रमाणान्तरमस्ति ] एवं च रूपकसिद्धौ श्लेषापेक्षा, श्लेषसिद्धौ च रूपकमपेक्षितमिति अन्योन्याश्रयदोषाद्वाच्ययोरभेदान्वयसरणिरेवोत्तमा, न तु सदृशलक्षणेत्याशयः ।

निष्पत्तिः । अतो नामार्थयोरभेदान्वयसरणिरेव रूपकस्थले रमणीया । सदृशलक्षणायाः फलं रूपके ताद्रूप्यप्रत्यय इत्यपि न हृदयंगमम् । [1]तत्सदृश इति शब्दात्सादृश्यप्रत्यये सत्यपि ताद्रूप्यप्रत्ययापत्तेः" इत्याहुः ।

अत्रेदं विचार्यते—यत्तावदुच्यते नामार्थयोरभेदान्वयबोधेनैवोपपत्तौ रूपके नास्ति लक्षणेति, तत्र चमत्कारिसाधारणधर्मानुपस्थितिदशायामुपमालंकारस्येव रूपकालंकारस्यापि नास्ति निष्पत्तिश्चमत्कारो वेति सकलहृदयसिद्धम् । कथमन्यथा 'भारतं नाकमण्डलम्', 'नगरं विधुमण्डलम्' इत्यादिवाक्यश्रवणानन्तरमनुन्मिषन्त्या रूपकप्रतिपत्तेः सुपर्वालंकृत–सकलकलादिशब्दश्रवणोत्तरमेव [2]समुन्मेषः सर्वेषाम् । इत्थमेव च मुखं चन्द्र इत्यादिप्रसिद्धोदाहरणेऽपि । इयांस्तु विशेषः—यदेकत्र साधारणो धर्मः प्रसिद्धतया नियमतः [3]स्वबोधकश्रुतिं नापेक्षते । इतरत्र त्वप्रसिद्धतया

त्यादिः । प्राचोक्तमन्यत्खण्डयति—**सदृशेति** । **नास्ति लक्षणेतीति** । मास्तु लक्षणा । नामार्थयोश्चाभेदान्वय एवास्तु । न च बाधज्ञानं प्रतिबन्धकम् । सादृश्यज्ञानरूपदोषस्योत्तेजकत्वात् । एतज्ज्ञानं च प्रसिद्धसादृश्यकस्थले साधारणधर्मानुपादाने एकसंबन्धिज्ञानादपरसंबन्धिस्मरणन्यायेन । साधारणधर्मस्मृतौ दोषविशेषसहकारेण शब्दादभेदप्रत्ययः । शङ्खे पीतत्वाभावनिश्चये काच–कामलादिदोषेण तत्पीतत्वप्रत्यक्षवत् । रूपके आहार्यबुद्धिरिति प्राचीनव्यवहारे बाधबुद्धिकालिकाकालिकत्वमात्रे आहार्यपदं लाक्षणिकम् । इवशब्दादिसमभिव्याहारे तु तेन भेदगर्भसादृश्यस्यैवोपस्थापनान्नाभेदप्रतीतिरिति मम प्रतिभाति । तत्र दोषं वक्तुमाह—**तत्रेत्यादिना** । चमत्कारी यः साधारणधर्मस्तदनुपेत्यर्थः । उभयत्र क्रमेण साधारणधर्ममाह—**सुपर्वेति** । देवालंकृतत्वं पण्डितालंकृ-

१ यथा सदृशलक्षणायां तत्सदृशेऽर्थे जाते ताद्रूप्यं लक्षणाप्रयोजनं ख्याप्यते तथा 'तत्सदृशः' इति पदेपि ताद्रूप्यम् ( अभेदः ) प्रतीयेत । न तु तथा भवतीति रूपके सदृशलक्षणा नोचितेति नवीनानामाशयः ।

२ 'भारतं नाकमण्डलम्' इति या रूपकप्रतीतिः पूर्वं नाभ्युदेति स्म, सा 'सुपर्वालंकृतम्' ( सुपर्वभिः देवैः अलंकृतं स्वर्गमण्डलम्, सुन्दरैः सभा–वन–विराटादिभिः पर्वभिश्च अलंकृतं महाभारतम् ) इति साधारणधर्मश्रवणे स्फुटं स्फुरति । एवमेव 'नगरं विधुमण्डलम्' इति रूपकमपि 'सकलकलम्' ( सकलाः कलाः षोडशभागाः यत्र तादृशं चन्द्रमण्डलम्, कलकलेन सहितं चतुःषष्टिकलासहकृतं वा नगरम् ) इति सामान्यधर्मश्रवणे द्रुतं बुद्ध्यारूढं भवति ।

३ स्वस्य ( साधारणधर्मस्य ) बोधिकां श्रुतिं शब्दश्रवणम् । साधारणधर्मवाचकशब्दश्रवणमित्यर्थः ।

तथा । एवं स्थिते साधारणधर्मवत्त्वरूपं सादृश्यं यदि रूपकमध्यं न प्रविशेत्तदा कथमिव धर्मविशेषानुपस्थितिदशायां रूपकं न पर्यवस्येत् । चमत्कारं वा न जनयेत् । उपमानोपमेययोराहार्याभेदबुद्धेरनन्यापेक्ष-पर्यवसानायाः साम्राज्यात् । न चाहार्यपदार्थद्वयाभेदबुद्धौ तच्चमत्कारे वा साधारणधर्मविशेषज्ञानं प्रयोजकमिति शक्यं वक्तुम् ।

'यद्यनुष्णो भवेद्वह्निर्यद्यशीतं भवेज्जलम् ।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥'

इत्यादौ साधारणधर्मस्याप्रत्ययेऽपि वह्न्यनुष्णत्वादीनामभेदप्रत्ययोपगतेः । न चोपमानोपमेयस्थल एवायं नवीनो विशेष इति वाच्यम् । ईदृशविशेषकल्पने मानाभावात् । साधारणधर्मानुपस्थितिदशायामपि 'मुखं यदि

---

तलं सकलकलं चेत्यर्थः । कला षोडशो भागः कौशलं च । एकत्र प्रसिद्धोदाहरणे । इतरत्राप्रसिद्धोदाहरणे तु । **तथेति** । नियमेन स्वबोधकश्रुतिमपेक्षत इत्यर्थः । कथमिव कथमपि । **अनन्यापेक्षेति** । रूपकस्य तु धर्मविशेषोपस्थित्यपेक्षं पर्यवसानमिति भावः । **विशेषज्ञानमिति** । तथा च तदभावादभेदबुद्धिरपि न स्यादिति भावः । **वह्न्यनुष्णेति** । वह्न्यादावनुष्णाद्यभेदप्रतीतेरित्यर्थः । **न चोपमेति** । वह्न्यनुष्णा-

---

१ न अन्यत् (साधारणधर्मादिकम्) अपेक्षते पर्यवसानं (सिद्धिः पूर्णता वा) यस्याः, ईदृश्याः उपमानोपमेययोः आहार्याभेदबुद्धेः साम्राज्यात् पूर्णाधिकारात् । अर्थात् भवद्रीत्या नामार्थयोर्द्वयोः आहार्याभेदस्य बुद्धिर्निष्प्रतिरोधं तत्र वर्तत एव । तस्यां बुद्धौ च न कस्यचित् साधारणधर्मादिज्ञानस्यापेक्षा । एवं सत्यपि साधारणधर्मवत्त्वम् (सादृश्यम्) यावत्कालं रूपकमध्यं न प्रविशति तावत् (नामार्थयोर्द्वयोरभेदबुद्धौ सिद्धायामपि) रूपकं न पूर्णं भवति, नापि वा चमत्कारकं भवति । किमेतत् ?

२ 'वह्निः अनुष्णः' 'अशीतं जलम्' अत्र अनुष्णाभिन्नो वह्निः, अशीताभिन्नं जलम्, इति द्वयोः पदार्थयोरभेदप्रतीतिः साधारणधर्मज्ञानं विनैव भवतीत्यर्थः ।

३ उपमानोपमेययोश्चन्द्रमुखयोराहार्याऽभेदः साधारणधर्मं प्रयोजकं कृत्वैव संभवति, अन्यथा न, इत्यपि न शक्यते वक्तुम् । यतो हि 'मुखं यदि चन्द्रः स्यात् तदा भूम्यवस्थितं न स्यात्' अत्र मुखचन्द्रयोरुपमेयोपमानत्वे सत्यपि साधारणधर्मस्य (आह्लादकत्वादेः) अभावेऽपि आहार्याभेदज्ञानं स्वीक्रियते । अन्यथा 'मुखं चन्द्रः स्यात्' इत्यन्वय एव न संभवेत् । द्वयोर्नामार्थयोरभेदातिरिक्तेन संबन्धेन अन्वयस्यैवाऽस्वीकारात् । ततश्च मुखचन्द्रादिषु उपमेयोपमानेषु साधारणधर्मोपस्थितिं विनापि अभेदबोधः संभवति, परं साधारणधर्मप्रयोज्यस्य सादृश्यस्याभावे आहार्याभेदज्ञानमात्रेण रूपकं न सिध्यति । एवं च रूपकसिध्यर्थमपेक्षितस्य सादृश्यस्य प्रतीतये सदृशलक्षणा स्वीकर्तव्येत्याशयः ।

चन्द्रः स्यात्तदा भूम्यवस्थितं न स्यात्' इत्यादौ तादृशप्रतीत्युपगमाच्च। ननु रूपकप्रतीतेरुपमानाभेदविषयत्वविरहे 'सिंहेन सदृशो नायं किं तु सिंहो नराधिपः' इत्यादौ निषेध्यविधेययोरसंगतिरिति चेत्, न। अनुपदमेव प्राचीनमतद्वयेऽपि रूपके तादृूप्यप्रतिपत्तेः स्वीकारस्य प्रतिपादनात्।

अथ विधेयकोटौ प्राचां मते सादृश्यस्यापि प्रविष्टतया तन्निषेधानुपपत्तिस्तथापि स्थितैवेति चेत्, भेदघटितसादृश्यरूपाया उपमाया एव निषेध्यत्वात् तिरोभूतभेदसादृश्यलक्षणस्य रूपकस्य विधेयत्वाच्च नानुपपत्तिः। यदप्युक्तं रूपके लक्षणास्वीकारे 'राजनारायणम्' इत्यत्र 'पादाम्बुजम्' इत्यत्र चोपमारूपकयोर्बाधकतया रूपकोपमयोर्निर्णायकतया च लक्ष्मीकर्तृकालिङ्गनमञ्जुमञ्जीरशिञ्जितत्वयोरनुपपत्तिः प्राचीनैरुक्ता विरुद्धा स्यादित्यादि, तदपि न। रूपके उपमानतावच्छेदकरूपेण तत्सदृशप्रत्ययस्योपपादितत्वेन 'राजनारायणम्' इत्यादौ विशेषणसमासायत्तस्य

दीनां तु नोपमानोपमेयत्वम्। अत एव तत्र रूपकादिकं न। अभेदबुद्धिस्तु तत्रास्तीति भावः। न त्वन्यथानुपपत्तिरेव मानं तत्राह—**साधारणेति। तादृशेति।** उपमानोपमेययोश्चन्द्रमुखयो रूपकसत्त्वेनाभेदप्रतीत्यङ्गीकारादित्यर्थः। तस्मादभेदबुद्धौ तस्य प्रयोजकत्वस्य दुर्वचतया सैव स्यात्। रूपकं न पर्यवस्येत्। अतस्तदुपस्थित्यर्थं लक्षणावश्यमाश्रयणीयेति भावः। तत्र शङ्कते—**ननु रूपकेति। विरहे इति।** नामार्थयोरभेदान्वय इति सरण्यनङ्गीकारे इत्यर्थः। **विधेयकोटाविति।** 'सिंहो नराधिपः' इत्यादावित्यर्थः। तथापि तादृूप्यप्रतिपत्त्यङ्गीकारेऽपि। एतेन सादृश्यस्य विधिनिषेधव्यावृत्तिः। तिरोभूतभेदेति बहुव्रीहिः। **सादृश्येति।** सादृश्यरूपस्येत्यर्थः। **विशेषणसमासेति।**

१ रूपके केवलं लक्षणैव न, उपमानाभेदोऽपि स्वीक्रियत इति शङ्कासमाधानाभ्यां स्थिरीकरोति। 'ननु रूपकप्रतीते०' इत्यादिना।

२ 'किं तु सिंहो नराधिपः' अनेन निषेधोत्तरं यद्विधीयते तत्रापि प्राचामनुसारं सदृशलक्षणया 'नराधिपः सिंहः' अत्र 'सिंहसदृशः' इत्येवार्थः स्यात्। 'अयं सिंहेन सदृशो न, किंतु नराधिपः सिंहः' अर्थात् सिंहसदृशः। एवं च 'सिंहसदृशो न अपि तु सिंहसदृशः' (लक्षणया) इत्येवार्थः संपन्नो यो हि स्फुटमनुपपन्नः। ततश्च लक्षणायां कथमर्थसिद्धिः? इति शङ्का। सिंहेन सदृशो नायमित्यत्र सादृश्यस्य निषेधः सिंहत्वस्य च विधानं न। अपि तु भेदघटितसादृश्या उपमा निषिध्यते। तिरोभूतसादृश्यस्य रूपकस्य विधानम्। इति न काचिदसंगतिरित्युत्तरम्।

३ 'चन्द्रसदृशत्वेनापि रूपेणोपस्थितानां मुखादीनां चन्द्रत्वेन रूपेणैव मुखादिपदोपस्थापितैः सहाभेदान्वयबोधो जायते' इति।

रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदार्थस्य नारायणसदृशस्यापि नारायणत्वेनैव प्रतीतेर्लक्ष्मीकर्तृकालिङ्गनकर्मताया अनुपपत्तेरभावात् । उपमाया उपमितसमासायत्तायाः स्वीकारे तु प्रधानीभूतपूर्वपदार्थस्य राज्ञो राजत्वेनैव प्रत्ययात्तादृशकर्मताया अनुपपत्तेः । 'पादाम्बुजम्' इत्यादावपि रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदस्यार्थस्याम्बुजसदृशस्याम्बुजत्वेनैव प्रतीतेर्मञ्जुमञ्जीरशिञ्जितमनोहरताया अनुपपत्तेः । उपमितसमासायत्तोपमायां तु प्रधानस्य पादस्य पादत्वेनैव प्रतीतस्य नास्ति तस्या अनुपपत्तिरिति न कोऽपि दोषः । न चोपमितसमासे पूर्वपदार्थस्योपमेयस्योपमेयतावच्छेदकतयैव प्रतीतिरिति न युक्तम्[1] । 'वक्त्रे चन्द्रमसि' इति प्रागुक्तरूपक इवोपमानताद्रूप्यवदभेदबुद्ध्या तत्ताद्रूप्यस्यात्रापि प्रतिपत्तुं शक्यत्वाल्लक्षणायास्तुल्यत्वादिति वाच्यम् । उपमितसमासे भेदघटितसादृश्यस्य लक्ष्यकोटिप्रविष्टतया वैलक्षण्यस्य वक्ष्यमाणत्वात् । यदप्युक्तं

मयूरव्यंसक इति समासेत्यर्थः । **उपमितसमासेति** । 'उपमितं व्याघ्रादि—'इति समासेत्यर्थः । **तादृशेति** । लक्ष्मीकर्तृकालिङ्गनेत्यर्थः । **तस्या इति** । मञ्जुमञ्जीरशिञ्जितमनोहरताया इत्यर्थः । **उपमानताद्रूप्येति** । उपमानसदृशयोरेकपदोपात्तत्वेनोपमानताद्रूप्यवत्सदृशाभेदबुद्ध्या उपमेये उपमानताद्रूप्यस्योपमायामपि ज्ञातुं शक्यत्वादित्यर्थः । तत्र हेतुमाह—**लक्षणेति** । रूपके इवोपमितसमासे वाचकेवशब्दस्याभावेन लक्षणा-

१ अर्थात् पादस्य पादत्वेनैव प्रतीतिर्भवति इति कथनं न युक्तम् । वक्त्रे चन्द्रमसि स्थिते यदपरः शीतांशुरुज्जृम्भते' अत्र चन्द्रसदृशस्य चन्द्रस्य च एकपदोपस्थाप्यत्वरूपेण अभेदाध्यवसानेन ताद्रूप्यम् ( अभेदः ) भवति । ततः चन्द्रताद्रूप्यवता चन्द्रसदृशेन सह अभेदात् ( नामार्थयोः ) मुखस्यापि चन्द्रत्वं भवतीति भवता पूर्वं साधितम् । तदनुसारम् अम्बुजसदृशस्य पादेन सह अभेदान्वयात् पादेऽपि अम्बुजताद्रूप्यं सिध्येत् । यथा रूपके ( सदृश )लक्षणा, तथा उपमितसमासेऽपि लक्षणा स्वीकर्तव्यैव । यतः 'पुरुषव्याघ्रः' इत्यादौ इवशब्दस्याऽभावेन तदर्थप्रत्ययार्थं व्याघ्रपदस्य व्याघ्रसदृशे लक्षणेति वैयाकरणैरप्यङ्गीकृतत्वात् । तथा च अम्बुजताद्रूप्यप्रत्यये सति पादे नूपुरसंबन्धस्यानुपपत्तिरुपमितसमासेपि तथैव स्थितेति शङ्का ।

उपमितसमासे भेदघटितं सादृश्यं लक्ष्यकोटिप्रविष्टम्, विशेषणसमासे तु सादृश्यं भेदाघटितमिति लक्षणाया उभयत्र समानत्वेपि, उपमायां रूपके च भेदघटितत्वाऽभेदघटितत्वाभ्यां भेदो भवति । तथा च भेदघटितसादृश्यस्य प्रत्ययेन उपमितसमासे न अम्बुजताद्रूप्यप्रतीतिरिति समाधानम् ।

सादृश्यस्य शब्देनोपादानादुपमात्वापत्तिरिति, तदपि न। भेदाकरम्बित-सादृश्यविशिष्टस्य रूपके लक्ष्यत्वादुपमाव्यपदेशस्याप्रसक्तेः। 'सादृश्यमुपमा भेदे' इति तत्सिद्धान्तात्। ननु यत्र भेदघटितसादृश्यवति वक्त्रा[1] लक्षणया मुखं चन्द्र इति प्रयुक्तं तत्र तथाप्युपमालंकारापत्तिः स्थितैवेति चेत्, भेदघटितसादृश्यप्रतिपिपादयिषाकाले लक्षणया तद्वति शब्द-प्रयोगस्य विरुद्धत्वात्। लक्षणायास्ताद्रूप्यप्रतिपिपादयिषाधीनत्वात्। नहि प्रयोजनमनुद्दिश्य रूढिव्यतिरिक्तया लक्षणयार्थं प्रतिपादयन्त्यार्याः। भेदताद्रूप्ययोर्विप्रतिषिद्धत्वेन युगपत्प्रतिपत्तृबुद्ध्युपारोहासंभवाच्च।

अथोपमितसमासे पुरुषव्याघ्र इत्यादावुत्तरपदस्य स्वार्थसदृशे[2] लक्षणैवोपगन्तव्या। अन्यथा बोधकाभावेन समासे सादृश्यप्रत्ययो न स्यात्। न च व्याघ्र इवेतीवशब्दस्तद्बोधक इति वाच्यम्, तस्य समासे संबन्धाभावात्। सति च संबन्धे तन्निवृत्तेरयोगात्, निवर्तकशास्त्रस्याभावात्। विग्रहवाक्यगतस्त्विवशब्दः स्वघटितवाक्यस्योपमाप्रतिपादकत्वं संपादयितुमीष्टे, न वाक्यान्तरस्य। तस्य विवरणत्वानुपपत्तेश्च। नहि विवरणीयवाक्यगतशब्दाप्रतिपाद्यस्यार्थस्य विवरणं युज्यते। इत्थं च

सत्त्वेन तस्याः समत्वादित्यर्थः। **भेदाकरम्बीति**। भेदाविशिष्टेत्यर्थः। दोषान्तरमाह—**भेदेति**। **संबन्धाभावादिति**। द्वयोरेव पदयोः समासादिति भावः। अभ्युपेत्याह—**सति चेति**। **उपमाप्रतीति**। उपमालंकारप्रतीत्यर्थः। वाक्यान्तरस्य समासवाक्यस्य। ननु समासे मास्तु सादृश्यप्रतीतिरत आह—**तस्येति**। विग्रहवाक्यस्येत्यर्थः। इत्थं च।

१ भेदमिश्रितं सादृश्यम् ( पुरुषव्याघ्र इत्याद्युपमितसमासे ), अभेदघटितं सादृश्यं च ( मुखं चन्द्र इत्यादौ रूपके ) इत्युभयविधमपि सादृश्यं लक्षणया बोध्यत इति स्थितम्। ततश्च सादृश्य-प्रयोगस्य वक्तुरिच्छाधीनत्वात् भेदघटितं सादृश्यं हृद्याधाय यत्र प्रयोक्त्रा 'मुखं चन्द्रः' इत्यभिहितम्, तत्र सादृश्यस्य भेदघटिततया उपमालंकारत्वं प्रसज्येतेति शङ्का। समाधानं तु मूल एव स्पष्टम्।

२ व्याघ्रसदृशे।

लक्षणाया एवाभ्युपगम्यतया सत्यां च तत्प्रयोजनीभूतताद्रूप्यप्रतिपत्तौ कथमुपमा द्विलुप्ता[1] तत्र प्राचीनैरुक्तेति चेत्, अत्रोच्यते—उपमितसमासस्य भेदघटितोपमानसादृश्यविशिष्टोपमेये शक्तेस्तद्घटकीभूतोपमानशब्दस्य भेदघटितसादृश्यविशिष्टे निरूढलक्षणाया[3] वा स्वीकाराददोषः। इयमेव निपातानामिवादीनां द्योतकतानये मुखं चन्द्र इवेत्यादौ[4], वाचकलुप्तायामुपमायां च गतिरनुसरणीया। वाचकलोपस्तूपमानाद्यकरम्बित-

उक्तदोषे चेत्यर्थः। **द्विलुप्तेति**। उक्तरीत्या धर्मवाचकयोः सत्त्वेन कथं धर्मवाचकलुप्तोक्तेत्यर्थः। विशिष्टशक्तौ गौरवादाह—**तद्घटकीति**। **भेदघटितेति**। तथा च साधारणधर्माभानाद्धर्मलुप्तत्वं सुस्थम्। नन्वेवमपि ताद्रूप्यप्रतीत्या कथं धर्मलुप्तत्वमत आह—**निरूढलक्षणेति**। **इयमेवेति**। उक्तैव गतिरित्यर्थः। धर्मलुप्तोदाहरणमाह—**मुखं चन्द्र इवेति**। **वाचकलुप्तायामिति**। तडिद्गौरीत्यादावित्यर्थः। नन्वेवमपि सादृश्यवाचकस्योपमानशब्दस्यैव सत्त्वात्कथं वाचकलुप्तत्वमत आह—**वाचकेति**। वाक्ये इवानुपादाने

१ धर्म-वाचकलुप्ता कथमुक्ता? ताद्रूप्यस्य (व्याघ्रत्वरूपस्य धर्मस्य) इवार्थस्य सादृश्यस्य च लक्षणया प्रतिपादितत्वादिति शङ्का।

२ अर्थात् पुरुषव्याघ्र इति समासनिष्पन्नपदस्यैव व्याघ्रभिन्नो व्याघ्रसदृशः पुरुष इत्यर्थोऽभिधया भवति, नाऽत्र लक्षणा।

३ अर्थात् उपमितसमासघटितव्याघ्रशब्दस्य भेदघटितसादृश्ययुक्ते (व्याघ्रभिन्ने व्याघ्रसदृशे) निरूढा (प्रयोजनानुसंधानरहिता) लक्षणा। एवं च आद्यपक्षे लक्षणाया एवाऽभावेन, द्वितीयपक्षे च लक्षणाया रूढत्वान्न ताद्रूप्यप्रतिपत्तेः संबन्धः। ततश्च द्विलुप्तात्वविरोधो न प्रसज्यत इति पूर्वोक्तशङ्कायाः समाधानम्।

४ इवस्य प्रयोगेऽपि तस्य (इवस्य) द्योतकत्वेन वाचकत्वाभावात्सादृश्यस्य वाच्यत्वं न व्यपदिश्येत। ततश्च वाचकलुप्तात्वं मास्त्विति 'चन्द्र इव' इति समुदायस्य चन्द्रभिन्ने चन्द्रसदृशे शक्तिः। किं वा चन्द्रेत्युपमानस्य चन्द्रभिन्ने चन्द्रसदृशे निरूढा लक्षणा।

५ तडिद्गौरीत्यादौ वाचकस्य लोपे तडित्सादृश्यप्रत्ययार्थं समुदायस्यैव तडिद्भिन्नतडित्सदृशगौर्यां शक्तिः, उपमानस्य तडितो वा तद्भिन्नतत्सदृशगौर्यां निरूढा लक्षणेत्याशयः।

६ नन्वेवं व्याघ्रादेरुपमानस्यैव (शक्त्या लक्षणया वा) सादृश्यवाचकत्वस्वीकारे पुरुषव्याघ्र इत्यादौ वाचकलोपः कथं व्यपदिश्येतेति शङ्का। उपमानाद्यकरम्बितस्य (उपमानादितो भिन्नस्य), सादृश्यवाचकः (इवादिः) तत्(सादृश्य)विशिष्टवाचकः (सम-सदृशादिः) अनयोरन्यतरस्य प्रतिपादको यः शब्दः तच्छून्यत्वाद्वक्तव्यः। अयं भावः—उपमानेन सादृश्यप्रतीतावपि सादृश्यवाचकसत्ता नाङ्गीक्रियते। तदर्थं हि इवादेः, सम-सदृशादिशब्दानां वा पृथक् प्रयोगोऽपेक्षितः। प्रकृते च उपमान एव सादृश्यवाचकः, न इवादिः सदृशादिर्वेति न दोष इति समाधानम्।

सादृश्य-तद्विशिष्टान्यतरप्रतिपादकशब्दशून्यत्वादुपपादनीयः । यच्च 'विद्वन्मानस-' इत्यत्र दूषणमभिहितं तद्रूपकप्रकरणे परिहरिष्यते । यदप्युक्तं रूपके सदृशलक्षणायाः फलं ताद्रूप्यप्रत्ययो न युज्यते । तत्सदृश इति शब्दजबोधानन्तरमपि तथाप्रत्ययापत्तेरिति, तन्न । तत्सदृश इत्यत्र लक्षणाया अभावेन ताद्रूप्यप्रत्ययस्यापादनायोगात् । ताद्रूप्यप्रत्ययो लक्षणायाः फलमिति प्राचां समयः । महाभाष्यादिग्रन्थानामस्मिन्नेवानुकूलत्वाच्च । नव्यनये तु तेषामाकुलीभावः स्यादिति दिक् ।

"साध्यवसानायां च 'चन्द्रराजी विराजते' इत्यादौ चन्द्रादिशब्दैर्लक्षणया मुखत्वेनोपस्थापितस्यापि मुखादेः शाब्दबोधश्चन्द्रत्वादिना भवति, लक्षणाज्ञानस्यैव माहात्म्यात्" इत्येके[1] । "लक्षणया मुखत्वेन मुखादेः शाब्द-

---

वाचकलुप्तत्वाय—**सादृश्येति** । समसदृशाद्यप्रयोगे तत्त्वायाह—**तद्विशिष्टेति** । सादृश्यविशिष्टेत्यर्थः । **परिहरिष्यत इति** । अयं भावः—उपमेयोपमानयोरभेद एव रूपकमिति मते सादृश्यज्ञानमूलकाभेदप्रतीतिविषय एव सः । एवं च 'पौरुषाब्धेस्तरङ्गः प्रत्यर्थिवंशोल्बणविजयकरिप्रौढदानाम्बुपट्टः खड्गो मालवस्य' इत्यादौ खड्गे शब्दात्प्रतीयमानदानाम्बुपट्टाभेदे प्रत्यर्थिषु वंशाभेदप्रतीतिमूलकतज्जेनृसंबन्धित्वरूपं साधर्म्यं मूलम् । प्रत्यर्थिषु वंशाभेदे च खड्गे दानाम्बुपट्टाभेदप्रतीतिमूलकतद्भज्यमानत्वम् । **तथेति** । ताद्रूप्येत्यर्थः । तस्मादवश्यं रूपके लक्षणा । अत्र युक्त्यन्तरमाह—**महाभाष्यादीति** । तथा च 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्यम्—'भिन्नानाममेदाभावात्, कथं पुनस्तस्मिन् स इत्येतद्भवति । चतुर्भिः प्रकारैस्ताद्रूप्यमारोप्यते, न तु मुख्यम् । तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्, इति । तात्स्थ्याद्यथा मञ्चा हसन्ति । ताद्धर्म्याद्यथा—'जटी ब्रह्मदत्तः' । ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्ते । तत्सामीप्याद्यथा—'गङ्गायां घोषः' । तत्साहचर्याद्यथा 'कुन्तान्प्रवेशय' इति । लक्षणाभाववादिनापि कथमन्योन्याश्रयः परिहार्यः । किमर्थं वा श्लिष्टपर्यन्तानुधावनं नवीनैर्दीक्षितैः

---

१ पदार्थोपस्थितिशाब्दबोधयोः समानाकारकत्वनियमस्य लाक्षणिकबोधेतरबोधविषयतायाः पूर्वमुपपादितत्वात् चन्द्रादिशब्दानामर्थोपस्थितिर्मुखत्वेनोपस्थापितमुखरूपेण भवति तथापि शाब्दबोधश्चन्द्रत्वावच्छिन्नमुखरूपे भवतीति एकेषां मतस्य सारः ।

बोधे वृत्ते व्यञ्जनयैकशब्दोपात्तत्वप्रादुर्भूतया चन्द्रत्वेन बोधः" इत्यपरे[1]। मतद्वयेऽप्यस्मिन्मुखादौ चन्द्रत्वभानसामग्र्या मुखत्वादेः स्वधर्मस्य भानं[2] न निवार्यते। इत्थं चैकस्मिन्धर्मिणि[3] चन्द्रत्वादीनां मुखत्वादीनां च साक्षाद्भानमेव सारोपातोऽस्या विच्छेदकम्। अपरे तु "निवार्यत एव विरुद्धभानसामग्र्या स्वधर्मस्य भानम्। रजतत्वभानसामग्र्या शुक्तित्वस्याभानात्" इति वदन्ति[4]। मतेऽस्मिन्विषयतावच्छेदकास्फूर्तिस्तथा[5]। वस्तुतस्तु साध्यवसानायां विषयतावच्छेदकधर्मभानं यदि सहृदयहृदयप्रमाणकं तदा तद्वारणाय कारणकल्पनानुचितैव। शुक्तिरजतभानस्थले

कृतमिति चिन्त्यमिति। अयमेव दिगर्थ इति बोध्यम्। **माहात्म्यादिति**। समानप्रकारकत्वनियमस्य लाक्षणिकबोधान्यबोधविषयकत्वस्य प्रागुक्तत्वादिति भावः। नियमाङ्गीकर्तृमतमाह—**लक्षणेति**। इदमपि प्रागुक्तम्। **मुखत्वादीनां चेति**। एकपदोपस्थाप्यानामिति बोध्यम्। **साक्षादिति**। सारोपायां तु चन्द्रत्वस्य चन्द्रसदृशे भानद्वारा तत्र भानमिति परम्परया तद्भानमिति भावः। **अस्या इति**। साध्यवसानाया भेदकमित्यर्थः। एकधर्म्यधिकरणकोभयभानं तु समानमिति भावः। **विषयतावच्छेदकेति**। लक्ष्यतावच्छेदकेत्यर्थः। क्वचित्तथैव पाठः। लक्ष्यतावच्छेदकं च साधारण-

१ समानप्रकारकत्वनियमं ये लक्षणायामपि स्वीकुर्वन्ति तेषां मते चन्द्रादिशब्दैः लक्षणया मुखत्वेनोपस्थापितानामपि मुखादीनाम् एकपदप्रतिपादनोत्थव्यञ्जनावशात् चन्द्रत्वेन रूपेण शाब्दबोधः। अर्थात् लक्षणया चन्द्रादिपदैः पूर्वं मुखादेर्बोधः, तदनन्तरमेकपदोपादानोत्थया (अर्थात् अभिधया चन्द्रपदस्यार्थश्चन्द्रः, लक्षणया तु तस्यैवार्थो मुखमिति) व्यञ्जनया मुखस्य चन्द्रत्वेन शाब्दबोधः। इत्यपरेषां मतम् (द्वितीयम्)। २ अर्थात् साध्यवसानायां चन्द्रशब्दस्य लाक्षणिकोऽर्थो यन्मुखमिति भवति तत्र मुखत्वस्य चन्द्रत्वस्य चेत्युभयोर्धर्मयोर्भानं भवति। ३ एकस्मिन् धर्मिणि (चन्द्रराजी विराजते इत्यादिषु—उपमाने चन्द्रे) मुख्यार्थतावच्छेदकस्य चन्द्रत्वस्य लक्ष्यार्थतावच्छेदकस्य मुखत्वस्य च साक्षाद्भानं भवति। अयं भावः—सारोपायामपि चन्द्रत्व–मुखत्वयोर्द्वयोरपि यद्यपि भानं भवति, तथापि सारोपायां चन्द्रत्वस्य भानं प्रथमं चन्द्रसदृशे भवति। (यतो हि लक्षणया चन्द्रशब्दस्यार्थः तत्सदृशम्, न तु मुखम्) तदनन्तरं तु चन्द्रसदृशाऽभिन्नं मुखमिति मुखे चन्द्रत्वस्य संप्रत्ययः। एवं च–सारोपायां चन्द्रसदृशे चन्द्रत्वस्य भानं द्वारभूतम्। तद्वारेण च मुखे चन्द्रत्वस्य भानम्। इति परम्परया चन्द्रत्वस्य भानं भवति। साध्यवसानायां तु एकस्मिन् धर्मिणि मुखत्वस्य चन्द्रत्वस्य च साक्षाद्भानं भवतीति मिथो द्वयोर्भेदः। ४ द्वितीये मते एकस्मिन्धर्मिणि चन्द्रत्वस्य मुखत्वस्य च भानं न निवार्यते। 'अपरे तु' इत्यादिना प्रतिपादिते तृतीयेऽस्मिन्मते तु लक्षणया चन्द्रे चन्द्रत्वावच्छिन्नस्य मुखस्य प्रतीतिर्भवति न तु मुखे मुखत्वमपि प्रतीयते। ५ सारोपायां–मुखादिषु लक्ष्यतावच्छेदकस्य (आह्लादकत्वादेः साधारणधर्मस्य) प्रतीतिर्भवति। साध्यवसानायां तु मुखे साक्षाच्चन्द्रत्वस्यैव।

तु शुक्तित्वेन भाते पुरोवर्तिनि रजतत्वभानस्य सर्वथैव विरुद्धत्वाद्रजतत्वभानसमये शुक्तित्वभाननिवारणमावश्यकम् । न चेहापि तथा, अनुभवविरुद्धत्वात् । यदि तु तन्न प्रामाणिकं तदा सोचितैव ।

अथास्य प्रागभिहितलक्षणस्य काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजका अलंकारा निरूप्यन्ते—

तत्रापि विपुलालंकारान्तर्वर्तिन्युपमा तावद्विचार्यते—

**सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृतिः ॥**

सौन्दर्यं च चमत्कृत्याधायकत्वम् । चमत्कृतिरानन्दविशेषः सहृदयहृदयप्रमाणकः । अनन्वये च 'गगनं गगनाकारम्' इत्यादौ सादृश्यस्य द्वितीयसब्रह्मचारिनिवर्तनमात्रार्थमुपात्तत्वेन स्वयमप्रतिष्ठानादचमत्कारितैव । अत एव तस्यान्वयाभावादनन्वयं तमाहुः । व्यतिरेके 'तवाननस्य तुलनां दधातु जलजं कथम्' इत्यादौ चमत्कारिणो निषेधस्य निरूपणाय प्रतियोगिनः सादृश्यस्य निरूपणमचमत्कारकमेव । एवमभेदप्रधानेष्वपि रूपकापह्नुतिपरिणामभ्रान्तिमदुल्लेखादिषु, भेदप्रधानेषु दृष्टान्तप्रतिवस्तूपमादीपकतुल्ययोगितादिषु चमत्कारिषु तत्तन्निष्पादकतयावस्थितस्यापि सादृश्यस्य चमत्कारिताविरहेण नास्त्युपमालंकृतित्वम् । मुखमिव चन्द्र इति प्रतीपे, चन्द्र इव मुखं मुखमिव चन्द्र इत्युपमेयोपमायां च

धर्मरूपमाह्लादकत्वाद्येवैतन्मते बोध्यम् । **तथेति** । ततो भेदिकेत्यर्थः । अथोपमा— **काव्यात्मन इति** । भेदे षष्ठीयम् । काव्यात्मनो यद्व्यङ्ग्यं तस्येत्यर्थः । यद्वा काव्यात्मन इत्यलंकारा इत्यनेनान्वेति । तत्सामान्यलक्षणमाह—**व्यङ्ग्यस्य रमणीयतेत्यादि** । तत्रापि तेष्वपि । **विपुलेति** । बहिलार्थः । वाक्यार्थोपस्कारकमित्यलंकारस्य सुन्दरमित्यस्य व्यावर्त्यमाह—**अनन्वये चेति** । सामान्यलक्षणप्राप्तम् । **सब्रह्मचारीति** । सदृशेत्यर्थः । **स्वयमिति** । स्वस्यापर्यवसानादित्यर्थः । अत एव स्वार्थबोधने तात्पर्याभावादेव । तस्य सादृश्यस्य । द्वितीयं तदाह—**व्यतिरेक इति** । अन्यदपि तदाह—**एवमिति** । अनन्वयव्यतिरेकयोरिवेत्यर्थः । **तत्तन्निष्पादकेति** । अभेदा-

१ अपरे त्विति तृतीयमते विषयता( लक्ष्यता )वच्छेदकस्य मुखत्वस्य भानं निवार्यते इत्युक्तम् । किन्तु वस्तुतस्त्वित्यादिना पण्डितराजः समीक्षते यत् साध्यवसानायां चन्द्रत्वं मुखत्वं न साक्षाद्भासत एव । ततश्च विरुद्धभान( अर्थात् लक्षणया चन्द्रत्वभान )सामग्रीकल्पनमनुचितम् । शुक्तित्वरजतत्ववत् मुखत्व-चन्द्रत्वयोः विरुद्धधर्मता न सहृदयहृदि प्रतीयते । हिन्दीरसगङ्गाधरे तु—अस्यार्थकरणे साध्यवसानायां लक्ष्यतावच्छेदकम् ( आह्लादकत्वादि ) यदुक्तम् ( पृ. १८४ ) मन्ये सोयं लेखभ्रम एव ।

साद्दश्यस्य चमत्कारित्वान्नातिप्रसङ्गः शङ्कनीयः, तयोः संग्राह्यत्वात् । ननु 'त्वयि कोपो ममाभाति सुधांशाविव पावकः' इत्यादावुपमानस्यात्यन्तमसंभावितत्वात्साद्दश्यमेव न तावत्प्रतिपत्तुं शक्यम्, चमत्कारस्तु पुनः केन स्यादिति चेत्, कविना हि खण्डशः[1] पदार्थोपस्थितिमता स्वेच्छया संभावितत्वेनाकारेण चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि कल्पने बाधकाभावात् । कल्पितमसत्साद्दश्यं कथं चमत्कारजनकमिति तु न वाच्यम्, परमसुकुमारीभवत्कनकनिर्मिताङ्ग्या मणिमयदशनकान्तिनिर्वासितध्वान्तायाः कान्ताया भावनया पुरोऽवस्थापिताया आलिङ्गनस्याह्लादजनकत्वदर्शनात् । उपमानोपमेययोः सत्यत्वस्य लक्षणे प्रवेशाभावान्नात्र[2] दोपलेशोऽपि ।

---

पल्लवादिनिष्पादकेत्यर्थः । तयोस्ताद्दशप्रतीपोपमेयोपमानयोः । **संग्राह्यत्वादिति** । चित्रमीमांसोक्तोपमालक्षणदूषणावसरे इति भावः । नव्यास्तु "यत्र चन्द्राद्युपमानप्रतियोगिकत्वसाद्दश्यानुयोगिकत्वबुद्धिकृतश्चमत्कारस्तत्रोपमालंकारत्वम् । अनन्वये तु न स्वसाद्दश्यबुद्धिकृतः सः, किं तु निरुपमत्वबुद्धिकृत इति नोपमात्वम् । उपमेयोपमायामपि न परस्परसाद्दश्यबुद्धिकृतः सः, किं त्वनयोरेव साम्यं न तृतीय एतत्सदृश इति बुद्धिकृत इति तस्यामपि न तत्त्वम् । मुखमिव चन्द्र इति प्रतीपेऽपि मुखादौ साद्दश्यप्रतियोगिकत्वबुद्धिकृत एव सः, न तदनुयोगिकत्वबुद्धिकृत इति तत्रापि न तत्त्वम् । 'अहमेव गुरुः–' इति प्रतीपेऽपि उपमानतिरस्कृतत्वकृत एव सः, न तु साद्दश्यबुद्धिकृत इति न तत्रापि तत्त्वम् । अलंकारभेदे च चमत्कारनिदानभेद एव निदानम् । रूपकोत्प्रेक्षादौ तथा कृतत्वात्, सहृदयानुभवसाक्षिकत्वाच्च । एतेन साद्दश्यस्याप्रतिष्ठानं यदि साद्दश्याप्रतीतिस्तर्ह्यनुभवविरोधः । यदि भेदगर्भे तदप्रतीतिस्तदा भेदांशनिवेशेन तद्विवरणे किं फलम् । उपमेयोपमावत्तस्याप्यस्तूपमात्वमित्यपास्तम्" इत्याहुः । उपमानस्य चन्द्राधिकरणकानलस्य । असंभावितत्वेन न तु सत्येन रूपेणेति भावः । **कल्पितमिति** । यतः कल्पितमत एवासदित्यर्थः । नन्वेवं भवतु ताद्दशस्यापि साद्दश्यस्य चमत्कृतिजनकत्वं तथापि लक्षणे उपमानोपमेययोर्निवेशेन तयोः सत्यत्वस्यापेक्षितत्वेन कथमुक्तस्थले निर्वाहोऽत

---

१ 'सुधांशौ वह्निः' इति संमिलितस्य पदार्थस्योपस्थितिस्तस्य न । अपि तु चन्द्रस्य अग्नेश्च तस्य पृथक् पृथगुपस्थितिः । ततः कविः स्वेच्छानुसारं संभावनाविषयीभूतेनाऽऽकारेण चन्द्ररूपेऽधिकरणे अनलं प्रकल्प्य साम्यं कल्पयतीति । केचित्तु–'स्वेच्छया असंभावितत्वेनाकारेण' अर्थात् यस्य संभवो नास्ति ताद्दशेन मनःकल्पितेन आकारेण न तु वास्तवेनेत्यर्थमाहुः ।

२ उपमानस्य कल्पनामात्रप्रसूतत्वेऽपि उपमायां न किञ्चिद्बाधकमित्याशयः ।

अत एव

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥'

इत्यादावपि नानुपपत्तिः । परे तु अस्याः कल्पितोपमाया उपमानान्तराभावफलकत्वेनालंकारान्तरतामाहुः । तन्न । सादृश्यस्य चमत्कारितयोपमान्तर्भावस्यैवोचितत्वात् । सन्निरूपितत्वस्य लक्षणे प्रवेशाभावात् । उपमानान्तराभावफलकत्वं ह्युपमाविशेषत्वे साधकम्, न तूपमाबहिर्भावे ।

अथ

'विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम् ।
आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥'

इत्यादौ साधारणधर्मस्याभावात्कथमुपमानिष्पत्तिः ? बुधमौक्तिकयोरेकैकमात्रवृत्तित्वात् । न चात्र यदि नासाग्रस्थितमौक्तिकं तस्या आननमालक्षितबुधाश्लेषं राकेन्दोर्मण्डलमिव विलसतीति तादृशराकेन्दुमण्डलनिरूपितसादृश्यप्रयोजकविलासाश्रयस्तादृशमाननमिति तात्पर्यं तदा विपूर्वकलसत्यर्थशोभाविशेष एव समानो धर्मः । यदि च तादृशमिन्दुमण्डलमिव यत्तादृशमाननं तद्विलसतीति तादृशसादृश्यावच्छिन्नमानन-

आह—**उपमानोपेति** । **भावफलकत्वमिति** । उपमानान्तराभावस्य फलत्वेऽपि कविकल्पितसादृश्यकृत एव चमत्कार इति नव्यमतेऽपि न दोषः । **आलक्षितेति** । आलक्षिताश्लिष्टबुधमित्यर्थः । तथा पाठस्तूचितः । अत एव वक्ष्यति—**बुधमौक्तिकयोरिति** । **कथमिति** । तद्धर्मोपस्थितेः कारणत्वस्य तत्र प्रागभिहितत्वादिति भावः । **तादृशराकेन्दुमण्डलेति** । तद्विशिष्टराकेन्द्वित्यर्थः । एवमग्रेऽपि । तथा वक्तुं तु

१ अर्थात् जगति नान्यः कश्चन पदार्थः प्राप्यते येन सह तुलना प्रकृतस्योपमेयस्य दीयेतेति कवेस्तात्पर्येण उपमायामपर्यवसानेन अलंकारान्तरमेव किंचिदिति शङ्का । सुन्दरं (चमत्कृतिजनकम्) सादृश्यमुपमेति लक्षणेन चमत्कारजनकस्य सादृश्यस्य प्रत्यक्षमुपलम्भादुपमाया एव निष्पत्तिः । सादृश्यं सन्निरूपितम् अर्थात् सता सत्येन उपमानेन निरूपितं स्यादिति तु लक्षणे नानुप्रविष्टम् । अन्यदुपमानं नास्तीति प्रतीतिरत्र फलभूतेत्येतावतापि उपमाया निरासो न क्रियते, प्रत्युत विशिष्टोपमात्वमेव साध्यत इत्युत्तरम् ।

मुद्दिश्य विलासाश्रयत्वं विधेयतया विवक्ष्यते तदास्या लुप्तोपमात्वात्पद्ममिव मुखमित्यादाविवाह्लादकत्वादिधर्म उन्नेय इति वाच्यम् । उपमानोपमेयशोभयोरपि वस्तुतोऽसाधारणत्वात् ।

'कोमलातपशोणाभ्रसंध्याकालसहोदरः ।
काषायवसनो याति कुङ्कुमालेपनो यतिः ॥'

इत्यादौ धर्मान्तरस्याप्रतिभानादसुन्दरत्वाच्च कोमलातपादीनामसाधारणत्वात्कथमुपमेति चेत्, अत्राहुः—उपमेयगतानामुपमानगतानां चासाधारणानामपि धर्माणां सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पनादुपमासिद्धिः[1] । न च भ्रमात्मकेनाहार्याभेदबोधेन कथं नाम

---

युक्तम् । आद्ये दूषणमाह—**उपमानोपेति** । द्वितीयरीत्योक्तप्रसिद्धोदाहरणे निर्वाहेऽप्यप्रसिद्धोदाहरणे दोषमाद्यसाधारणमाह—**कोमलेति** । कोमलातपत्वं शोणाभ्रत्वं च बहुव्रीहिणा संध्याकालविशेषणम् । अत एव कोमलातपादीनामिति वक्ष्यति । **अभेदाध्यवसायेनेति** । न चैकधर्मवत्त्वमिवोपमानवृत्तिधर्मसदृशधर्मवत्त्वमप्युपमाप्रयोजक-

---

१ उपर्युक्तस्य सर्वस्यापि प्रघट्टकस्य विशदीकरणं त्वेवम्—विलसत्याननमित्यादौ साधारणधर्मसिद्धये द्विधा युक्तिः पूर्वपक्षे । ( १ )–तादृश( आलक्षितबुधा० )राकेन्दुमण्डलनिरूपितं यत्सादृश्यं तत्प्रयोजकस्य ( तत्कारणीभूतस्य ) विलासस्य ( विलसतीति प्रतिपाद्यस्य शोभाविशेषस्य ) आश्रयः तादृशम् ( नासाग्रस्थित० ) आननम् । अर्थात् यथा इन्दुमण्डलं विलसति तथा मुखं विलसतीति तात्पर्येण विलास एवोभयसाधारणो धर्मः । ( २ )–तादृशराकेन्दुमण्डलनिरूपितसादृश्यावच्छिन्नम् आननमुद्दिश्य विलासाश्रयत्वं विधीयत इति विलासस्य विधेयतया पूर्वसिद्धत्वाभावेन साधारणधर्मत्वं न संभवतीति धर्मलुप्ता सेयमुपमा स्यात् । अर्थात् आह्लादकत्वादिर्धर्मो बुद्ध्या ऊहनीयः ।

एतस्य खण्डने—( १ )–मुखस्य शोभा पृथक्, इन्दुमण्डलस्य च शोभा पृथक् अर्थात् असाधारणी । ततश्च विलासस्य ( शोभायाः ) साधारणधर्मत्वोक्तिर्न घटते । ( २ )–द्वितीययुक्तिः ( धर्मान्तरकल्पनम् ) तत् प्रसिद्धे उदाहरणे ( चन्द्र इव मुखमित्यादौ ) आह्लादकत्वादेर्धर्मस्य प्रसिद्धत्वेन कदाचित्संभवेत्, परं कोमलातप० इत्यादिषूदाहरणेषु धर्मान्तराऽस्फूर्त्या न संभवति [ यातीत्यस्य तु पूर्वोक्तोदाहरणवत् विधेयस्य कल्पनेन साधारणधर्मत्वं न संभवति, एतदतिरिक्तश्च धर्मो न स्फुरति ] । यदि स्फुरेत्तदाऽपि तस्य न सुन्दरत्वम् । कोमलातपादयो यदि साधारणधर्मतया स्थाप्येरन् तर्हि न ते साधारणाः, कोमलः आतपो यस्मिन्नित्यादिबहुव्रीहिणा सन्ध्याकालविशेषणत्वात्तेषाम् । तथा च साधारणधर्मसंपादनाय युक्तिद्वयमपि न संभवति, कथमियमुपमेति, 'चेत्' पर्यन्तः पूर्वपक्षः ।

बुधस्य मौक्तिकस्य च, कोमलातपस्य केसरालेपनस्य च, भिन्नत्वेऽपि बुध-मौक्तिकयोः श्वेतकान्त्या कोमलातप-केसरलेपयोश्चारुणकान्त्या या मिथः समानता तद्द्वारा मिथः अभिन्नौ मत्वा ( बुधनक्षत्रादभिन्नं मौक्तिकम्, कोमलातपादभिन्नः केसरलेपः इत्यादिरूपेण ) अर्थात् असाधारणानामपि धर्माणां साधारणत्वसंपत्त्या उपमा सिध्यतीति तत्समाधानम् ।

कुङ्कुमालेपकोमलातपादीनां वस्तुतो भिन्नानां साधारणत्वसिद्धयेऽत्यन्तमसन्नभेदः सेद्धुं शक्नुयात्, भ्रमेणार्थसिद्धेरभावादिति वाच्यम्। प्रागुक्तेऽपि 'त्वयि कोपो ममाभाति सुधांशाविव पावकः' इत्यादावुपमानोपमेययोरत्यन्तासत्त्वेऽपि कल्पनामात्रतो यथा निष्पत्तिस्तथैव प्रकृते साधारणधर्मस्यापीति व्यक्तमुपपादयिष्यामः। अयमेव बिम्बप्रतिबिम्बभाव इति प्राचीनैरभिधीयते।

एवम्

'भुजो भगवतो भाति चञ्चंश्चाणूरचूर्णने।
जगन्मण्डलसंहारे वेगवानिव धूर्जटिः॥'

अत्र धूर्जटिभगवद्भुजयोराकारेण सादृश्यस्याभावात्प्रकारनिर्मुक्तस्य केवलभानस्याप्रयोजकतया चाणूरचूर्णननिमित्तकचाञ्चल्यवत्त्व-जगन्मण्डलसंहारनिमित्तकवेगवत्त्वयोरभेदाध्यवसानेनाभिन्नधर्मप्रकारकभानविशेष्यत्वस्य साधारणधर्मस्य सिद्धेरुपमासिद्धिः। तत्र चाणूरजगन्मण्ड-

मस्तु किममुना भेदाध्यवसायेनेति वाच्यम्। साधारणधर्मेणोपमानोपमेययोरभेदप्रतीतिकृतचमत्कारस्योपमायामिष्टस्य धर्मयोरभेदाध्यवसानं विनानुपपत्तेः। तथा चोक्तमलंकारसर्वस्वकृता—'भेदाभेदप्रधानोपमेती'ति बोध्यम्। **प्रागुक्त इति।** यत इत्यादिः। अयमेव सादृश्यमूलाभेदाध्यवसाय एव। प्राचीनैर्बिम्बप्रतिबिम्बभाव इत्यभिधीयत इत्यर्थः। एवम् उक्तोदाहरणे उपमासिद्धिवत्। भगवतः कृष्णस्य। चञ्चन् चाञ्चल्यवान्। धातूनाम-

१ अत्यन्तं विप्रकलितयोरपि उपमानोपमेयधर्मयोः केनापि सादृश्येन भेदप्रतीतिस्थगनमित्याशयः।

२ एतत्पुस्तकपाठदर्शनेऽपि 'चञ्चच्चाणूरे'ति हिन्दीरमगङ्गाधरपाठस्तु भ्रम एव।

३ भानक्रियाया उभयत्राऽन्वयात्सैव साधारणधर्मस्थानीया स्यादित्यपि न संभवति। प्रकार(विशेषण)शून्यायास्तस्याः सादृश्यं प्रति अप्रयोजकत्वादित्याशयः।

४ चाणूरचूर्णनं निमित्तं यस्य (अर्थात् चाणूरमर्दनार्थम्) चाञ्चल्यवत्त्वस्य (उपमेयगतधर्मस्य), जगन्मण्डलसंहारो निमित्तं यस्य तादृशस्य वेगवत्त्वस्य (उपमानधर्मस्य) चेति भानस्य (प्रतीतेः) प्रकारयोः (विशेषणयोः) अनयोः पूर्वोक्तरीत्या अभेदाध्यवसानेन अभिन्नौ धर्मौ प्रकारौ (विशेषणे) यस्याः एतादृश्या भानक्रियाया विशेष्यत्वम् (आश्रयत्वम्) यद्धि शिवे भगवद्भुजे चोभयत्रास्ति [एतद्धि नैयायिकानुसारम्, तेषां मते कर्तृविशेष्यकशाब्दबोधात्] एतद्विशेष्यत्वमेव साधारणधर्मकोटौ परिगण्यते। अत एवात्रोपमासिद्धिरित्याशयः।

लयोर्वस्तुतो भिन्नयोर्महाकायत्वादिना सादृश्याद्बिम्बप्रतिबिम्बभावः[1] । चूर्णनसंहारयोश्चाञ्चल्यवेगवत्त्वयोस्त्वाश्रयभेदाद्भिन्नयोरपि वस्तुत एकरूपतैवेति वस्तुप्रतिवस्तुभावः[2] । इत्येवं निरूपितमुपमालक्षणम् ।

अथेयमुदाह्रियते—

'गुरुजनभय-मद्विलोकनान्तः[3]समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि ॥'

अत्र दलदरविन्दशब्दस्योपमानवाचकस्य सुन्दरशब्देन सामान्यवचनेन समासे प्रतीयमानोपमा सकलवाक्यार्थस्य विप्रलम्भशृङ्गारस्य स्मृत्युपस्करणद्वारोपस्कारकतयालंकारः[4] । न चात्र स्मृतिः प्रधानतया ध्वन्यत इति वक्तुं शक्यम्, न विस्मरामीति स्मृत्यभावनिषेधमुखेन स्फुटमावेदनात् । नापि पूर्वार्धगतत्रासौत्सुक्ययोः परस्पराभिभवकामयोः संधिः प्रधानम्, तस्य नायिकागतत्वेनानुवाद्यत्वात्, उत्तरार्धगतस्मृत्यङ्गत्वाच्च । तस्माद्भावसंध्युपमालंकाराभ्यामुपस्कृता स्मृतिर्हापदगम्यः संतापोऽनुभावश्च विप्रलम्भमेवोपस्कुरुत इति तस्यैवात्र प्राधान्यम् ।

---

नेकार्थत्वात् । चाणूरो दैत्यः । तत्र धर्मयोर्मध्ये । **वस्तुप्रतिवस्तुभाव इति** । तत्र चूर्णनसंहारयोराश्रयभेदजभेदप्रत्ययस्तत्संबन्धिचाणूरजगन्मण्डलयोर्भेदबुद्धिर्बहिरङ्गा नोदेतीति भावः । चाञ्चल्यवेगवत्त्वयोस्त्वाश्रयभेदाद्भेदेऽपि एकनिमित्तकत्वेनाभेदमादाय साधारणतेति बोध्यम् । **समास इति** । 'उपमानानि—' इति सूत्रेणेति भावः । अत एव न श्रौतीत्याह—**प्रतीयेति** । सकलवाक्यार्थस्य सकलवाक्यतात्पर्यविषयभूतस्य । शृङ्गारस्येत्यस्योपस्कारकतयेत्यत्रान्वयः । **त्रासेति** । गुरुजनभयमद्विलोकनपदबोध्ययोर्गुरुजनभयमद्विलोकनयोर्मध्ये व्याकुलत्वोदयेन द्वयोरपि तुल्यकक्षत्वम् । अत आह—

---

१ वस्तुतो भिन्नयोरपि पदार्थयोस्तद्गतधर्माणामभिन्नतया ऐक्यप्रतिभासो बिम्बप्रतिबिम्बभाव इत्याशयः ।

२ वस्तुतः अभिन्नयोरपि आश्रयस्य (आधारस्य) भेदात् (भिन्न-भिन्नशब्दप्रतिपाद्यत्वरूपभेदाच्च) भिन्नत्वेन प्रतीतयोः पदार्थयोरैक्यप्रतीतिर्वस्तुप्रतिवस्तुभावः ।

३ गुरुजनानां भयम् मद्विलोकनं चेत्यनयोः अन्तः (मध्ये) समुदयन्तं व्याकुलभावं धारयन्त्याः ।

४ अत्र विप्रलम्भशृङ्गारः सकलवाक्यार्थतया प्रधानम् । स्मृतिभावश्च तस्याङ्गभूतः । ततश्चाङ्गभूतं स्मृतिभावमुपस्कृत्य (प्रसाध्य) प्रधानं शृङ्गारमुपशोभयन्ती उपमाऽप्यलंकारपदभागित्याशयः ।

अप्पयदीक्षिताः पुनश्चित्रमीमांसायाम्—'उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमदुष्टमव्यङ्ग्यमुपमालंकारः । स्वनिषेधापर्यवसायि सादृश्यवर्णनं वा तथाभूतं तथा' इति लक्षणद्वयमाहुः । तच्चिन्त्यम् । वर्णनस्य विलक्षणशब्दात्मकस्य विलक्षणज्ञानात्मकस्य वा शब्दवाच्यताविरहेणार्थालंकारताया बाधात् । तस्य सर्वथैवाव्यङ्ग्यत्वाद्व्यङ्ग्यत्वविशेषणवैयर्थ्याच्च । अथ यदि वर्णनविषयीभूतं तादृशसादृश्यमुपमेत्युच्यते, तदा यथा गौस्तथा गवय इत्यत्रोपमालंकारापत्तेः । एवं 'कालोपसर्जने च तुल्यम्' इत्यादावपि । अशिष्यत्वादिना प्रधानप्रत्ययार्थवचनसादृश्यस्या-

---

**परस्परेति** । तस्य संधेः । पुनः शब्दार्थे । शब्दस्य शब्दवाच्यत्वमते नायं दोषोऽत आह—**विलक्षणज्ञानेति** । अव्यङ्ग्यत्वाद्व्यङ्ग्यत्वाभावात् । **तादृशेति** । अदुष्टाव्यङ्ग्याद्यविशेषणद्वयान्यतरेत्यर्थः । **इत्यादावपीति** । उपमालंकारापत्तिरित्यस्यानुषङ्गः । आदिसंग्राह्यं चिन्त्यम् । अत्रापि कालोपसर्जनयोरपि । अत्र 'कालोपसर्जने च

---

१ यस्मात् उपमितिक्रियायाः (तुलनायाः) सिद्धिर्भवेत् ईदृशं सादृश्यवर्णनमित्यर्थः ।

२ स्वस्य (उपमायाः) निषेधे यस्य पर्यवसानं न भवेत् ।

३ उपमा अर्थालंकारः । अर्थश्च शब्दवाच्यो भवति । (सादृश्य)वर्णनस्य स्वयं शब्दात्मकस्य शब्दवाच्यत्वं कथं स्यात्? यथाकथंचित् शब्दस्य शब्दवाच्यत्वसाधनेऽपि वर्णनपदेन यदि आन्तरिकज्ञानं बुध्येत तर्हि ज्ञानस्य सर्वथैव शब्दवाच्यत्वाभावात् (वर्णनम् उपमा) इति लक्षणमसंगतमित्याशयः ।

४ 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' इति पाणिनीयसूत्रस्य 'प्रत्ययार्थः प्रधानं भवति, एवंरूपं वचनमशिष्यम् (शास्त्रद्वारा नाऽनुशासनीयम्) यतः अर्थस्य लोकत एवसिद्धेः ।' इति वृत्तिः । अयमर्थो लोक एव प्रसिद्धः । अतस्तदर्थं शास्त्रानुशासनं नापेक्षितमिति सूत्रस्याशयः । एतदुत्तरं 'कालोपसर्जने च तुल्यम्' इति सूत्रम् । 'अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः । विशेषणमुपसर्जनम्' इत्यादि यत्पूर्वाचार्यैः परिभाषितं तत्राप्यशिष्यत्वं समानम्, लोकत एव प्रसिद्धेः । अर्थात् प्रत्ययार्थः प्रधानम् इत्यादिवचनं यथा अशिष्यं तथा अद्यतनोऽयं कालः, विशेषणं हि उपसर्जनं भवतीत्यादिकमप्यशिष्यम् (लोकप्रसिद्धत्वात्) । अत्र हि प्रधानप्रत्ययार्थवचनस्य कालोपसर्जनयोश्च अशिष्यत्वरूपसामान्यधर्मेण सादृश्यं प्रतिपाद्यते, ततश्चाऽत्राप्युपमालंकारः स्यादित्यापत्तिः ।

त्रापि प्रतिपादनात् । न चात्र वचनभेदस्य दोषस्य सत्त्वाददुष्टत्वविशेषणेन वारणं भविष्यतीति वाच्यम् । एतद्वाक्योपप्लुतवाक्यान्तरप्रतिपादितैकोपमेयके सादृश्ये तथाप्यतिप्रसङ्गात्।[1] न चात्रोपमितिक्रियाया निष्पत्तावपि न सादृश्यवर्णनम्, विपयस्याचमत्कारित्वात्, चमत्कारविषयककविव्यापारस्यैव वर्णनपदार्थत्वादिति वाच्यम् । एवं हि चमत्कारित्वस्य लक्षणेऽवश्यं निवेश्यत्वेनोपमितिक्रियानिष्पत्तिविशेषणस्य वैयर्थ्यात् । नह्यनिष्पन्नमापाततः प्रतीयमानं सादृश्यं चमत्कृतिमाधत्ते । एवं द्वितीयलक्षणेऽपि निपेधापर्यवसायित्वं निरर्थकम् । व्यतिरेके कमलादिसादृश्यनिपेधस्यानन्वये च सर्वथा सादृश्यनिषेधस्य चमत्कारितया तदर्थं[2] सादृश्यस्य निरूपणमिति प्रागेवाभिधानात् । किं च ।

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः ।
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥'

इत्यादौ मुख्यवाक्यार्थत्वेनानलंकार[3]भूतायामुपमायामतिव्याप्तिः । उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनस्यादुष्टाव्यङ्ग्यत्वस्य चात्रापि सत्त्वात् । न

तुल्यम्' इत्यत्र । द्विवचनोपादानादिति भावः । एतदर्थमेव द्वितीयदोषोक्तिः । **उपप्लुतेति** । कल्पितेत्यर्थः । प्रधानप्रत्ययार्थवचनवत्काल इत्यादीति भावः । तदाह—**एकोपमेयेति** । **अत्रेति** । यथा गौरित्यादावित्यर्थः । **व्यतिरेक इति** । तवाननस्येत्यादावित्यर्थः । **कमलादिसादृश्येति** । कमलादिनिष्ठसादृश्येत्यर्थः । ननु वर्णनपदस्य चमत्कारजनकज्ञानविषयीभूतानुयोगिकत्वार्थे तात्पर्यग्राहकमिदम्, न तु लक्षणशरीरघटकमिति चेत्, तत्राह—**किंचेति** । **वाक्यार्थत्वेनेति** । तथा च न वाक्यार्थोपस्कारकत्वमिति भावः । तदाह—**अनलमिति** । ननु अलंकरोतीति योगबोधितोपस्का-

१ ननु कालोपसर्जने इति द्विवचनम्, तुल्यम् इत्येकवचनम् । इति वचनभेदरूपेण दोषेण दुष्टत्वादियमुपमा न सिध्येत्, लक्षणे अदुष्टेति विशेषणात् । इति पूर्वपक्षः । एतद्वाक्यार्थबोधनाय उपप्लुतेन (कल्पितेन) वाक्यान्तरेण (कालः प्रधानप्रत्ययार्थवचनेन तुल्यः । उपसर्जनं प्रधानप्रत्ययार्थवचनेन तुल्यम् । इत्याकारेण) प्रतिपादिते, एकमुपमेयं यत्र ईदृशे सादृश्ये वचनदोषस्याभावात्तस्यादेव उपमाप्रसक्तिरिति समाधानम् ।

२ निषेधार्थं तत्र सादृश्यस्य निरूपणम्, न सादृश्ये पर्यवसानाय । ततश्च तत्र सादृश्ये न चमत्कार इत्यर्थः ।

३ इयमुपमैव सकलवाक्यार्थत्वात्प्रधानं स्वस्य शोभाप्रख्यापिका । अलंकारस्तु अन्यस्य (स्वस्मादन्यस्य प्रधानस्य) उपस्कारको भवति । ततश्च अनलंकारेऽस्मिन्नतिव्याप्तिरित्याशयः ।

चेयमप्युपमा लक्ष्येति वाच्यम्। ध्वन्यमानोपमानिवारणप्रयासस्य वैयर्थ्यापत्तेः। नह्यत्राभेदप्रधानोत्प्रेक्षा शक्या वक्तुम्। कल्पितोपमाया निर्विषयत्वप्रसङ्गात्।

'व्यापार उपमानाख्यो भवेद्यदि विवक्षितः।
क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा॥'

इति स्वकृतसूत्रेऽलंकारभूतोपमाया एव लक्ष्यत्वेनाभिधानात्। 'अलंकारभूतोपमालक्षणत्वे तदेवादुष्टाव्यङ्ग्यत्वविशेषितमिति' तत्रैव पुनरभिधानाच्च। नह्यत्रोपमानोपमेयसादृश्यादुपमास्वरूपादस्ति कश्चिदतिरिक्तो वाक्यार्थः, येनोपमा तमलंकुर्यात्। अपि च लक्षणे सादृश्यविशेषणं निरर्थकम्। 'उपमितिक्रियानिष्पत्तिमद्वर्णनमुपमा' इत्येतावतैव स्वाभीष्टार्थलाभात्।

एवम्

'स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥'

इति विद्यानाथोक्तं लक्षणमपास्तम्। व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्याप्तेः।

---

रकत्वस्यालंकारसामान्यस्वरूपत्वेन विशेषलक्षणेषु तदनिवेशेऽपि क्षत्यभाव इत्यत आह—**अपि चेति**। अत एव चित्रभूतोपमालक्षणं क्वचित् तेनोक्तम्। पूर्ववदस्यापि तात्पर्यग्राहकत्वादिदमपि चिन्त्यम्। अव्यङ्ग्यत्वं च तल्लक्षणे प्राधान्येनाव्यङ्ग्यत्वं बोध्यमिति दिक्। एवपदार्थमाह—**व्यतीति**। तवाननस्येत्यादावित्यर्थः। एवमग्रेऽपि। यथासंभवम्

---

१ स्वयंप्रधानभूता चेदियं लक्ष्या, तर्हि स्वयंप्रधानभूता ध्वन्यमानैव किमिति निवार्यते इत्यर्थः।

२ उपमानाख्यः (तुलनात्मकः) व्यापारः उपमितिक्रियासिद्धिपर्यन्तं यदि विवक्षितः तर्हि उपमालंकृतिरित्यर्थः।

३ अलंकारभूताया उपमाया यदीदं लक्षणद्वयं भवेत्तर्हि इदम् अदुष्टाव्यङ्ग्यत्वविशेषितं स्यादित्युक्त्या अलंकारभूतोपमाया लक्ष्यत्वं स्पष्टमभीष्टमित्याशयः।

४ उपमेयाद्भिन्नेन।

५ एकदा एकवारं सादृश्यम्।

६ यत्सादृश्यं निषेधस्य प्रतियोगि भवति। अर्थात् यस्य निषेधः कर्तव्यो भवति। 'तवाननस्य तुलनां दधातु जलजं कथम्' इति व्यतिरेके जडजातेन कमलेन आननस्य सादृश्यमेव नास्तीति पर्यवसाने सादृश्यनिषेध एव फलतीत्याशयः।

एवम्

'उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।
हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः ॥'

इति प्राचामपि लक्षणं प्रत्युक्तम् । हृद्यतामात्रेण निर्वाहे विशेषणान्तरवैयर्थ्यात् । एवं काव्यप्रकाशोक्तमपि 'साधर्म्यमुपमा भेदे' इति लक्षणं नातीव रमणीयम् । व्यतिरेके निषेधप्रतियोगिनि सादृश्येऽतिव्यापनात् । न च पर्यवसितत्वेन[1] साधर्म्यं विशेषणीयमिति वाच्यम् । अनन्वयस्थसादृश्यस्यापर्यवसायित्वेनैव[2] वारणे भेदविशेषणवैयर्थ्यापत्तेः । काव्यालंकारप्रस्तावे लौकिकालौकिकप्रधानवाच्यव्यङ्ग्योपमासामान्यलक्षणकरणानौचित्याच्च । अत एव 'भेदाभेदतुल्यत्वे[3] साधर्म्यमुपमा' इत्यलंकारसर्वस्वोक्तमपि लक्षणं तथैव । एवं 'प्रसिद्धगुणेनोपमानेनाप्रसिद्धगुणस्योपमेयस्य सादृश्यमुपमा' इत्यलंकाररत्नाकरोक्तमपि न भव्यम् । श्लेषमूलकोपमायां तादृशशब्दात्मकस्य धर्मस्य कविनैव कल्पनात्[4], तेन रूपेणोपमानस्याप्रसिद्धेश्च इत्यलं परकीयदूषणगवेषणया । प्रकृतमनुसरामः ।

अस्याश्चोपमायाः प्राचामनुसारेण केचिद्भेदा उदाह्रियन्ते । तथाहि—उपमा द्विविधा, पूर्णा लुप्ता च । पूर्णा तत्र—श्रौती, आर्थी चेति द्विधा भवन्ती वाक्यसमासतद्धितगामितया षोढा । लुप्ता च—उपमानलुप्ता, धर्मलुप्ता, वाचकलुप्ता, धर्मोपमानलुप्ता, वाचकधर्मलुप्ता, वाचकोपमेय-

एवमर्थमाह—**हृद्यतेति** । ननु तत्रैव तात्पर्यग्राहकं तदत आह—**काव्येति** । **अत एवेति** । प्रकाशग्रन्थे । उक्तदोषगणादेवेत्यर्थः । तथैव नातीव रमणीयमित्यर्थः । **एवमिति** । व्यतिरेकेऽतिव्यापनादित्यर्थः । ननु पर्यवसितत्वेन विशेषणान्न दोषोऽत आह—**श्लेषेति** । प्राचां प्रकाशकारादीनाम् । तत्र तयोर्मध्ये । तत्र तासां सप्तानां

१ यस्य साधर्म्यस्य साधर्म्ये एव पर्यवसानं भवेत्, न निषेधादौ । तथा च निषेधपर्यवसायिनो व्यतिरेकगतसादृश्यस्य निरासः ।

२ अनन्वयगतसादृश्यस्यापि निषेधे एव पर्यवसानम् ।

३ भेदस्य अभेदस्य च तुल्यत्वे ।

४ श्लिष्टशब्दरूपो धर्मो न प्रसिद्धः, कल्पितत्वात् । न स उपमेये नाप्युपमाने प्रसिद्धस्तथापि तत्रोपमा भवति, प्रसिद्धेति विशेषणे तु तत्राऽव्याप्तिः स्यादित्याशयः ।

लुप्ता, धर्मोपमानवाचकलुप्तेति तावत्सप्तविधा। तत्रोपमानलुप्ता—वाक्यगा, समासगा चेति द्विविधा। धर्मलुप्ता—समागता—श्रौती, आर्थी। वाक्यगता—श्रौती, आर्थी। तद्धितगता च—आर्थ्येव, न श्रौती। इति पञ्चविधा। वाचकलुप्ता—समासगता, कर्मक्यङ्गता, आधारक्यङ्गता, क्यङ्गता, कर्मणमुलगता, कर्तृणमुलगता चेति षड्विधा। धर्मोपमानलुप्ता—वाक्यगता, समासगता चेति द्विविधा। वाचकधर्मलुप्ता क्विब्गता, समासगता चेति द्विविधैव। वाचकोपमेयलुप्ता त्वेकविधा। धर्मोपमानवाचकलुप्ता तु समासगतैकविधा। इति। एवं साकल्येनैकोनविंशतिर्लुप्ताभेदाः पूर्णाभेदैः सह पञ्चविंशतिः क्रमेणोदाह्रियन्ते।

तत्र पूर्णा श्रौती वाक्यगता यथा—

'ग्रीष्मचण्डकरमण्डलभीष्मज्वालसंसरणतापितमूर्तेः।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः॥'

अत्र प्रावृषेण्य इत्यनेन वारिधरविशेषणेन नैराकाङ्क्ष्यात्, इवेन समास इत्येव पाठान्नित्यत्वाभावाद्वारिधरेणापि नेवस्य समासः। एषा चोपमानोपमेययोर्वारिधरभगवतोर्वेदनाहरणकर्तृत्वस्य साधारणधर्मस्य सादृश्यबोधकस्येवशब्दस्य चाभिधानात्पूर्णा। सादृश्यस्य श्रुत्या बोधनाच्छ्रौती।

पूर्णा आर्थी वाक्यगता यथा—

'प्राणापहरणेनासि तुल्यो हालाहलेन मे।
शशाङ्क केन मुग्धेन सुधांशुरिति भाषितः॥'

मध्ये। तत्र पञ्चविंशतीनां मध्ये। **ग्रीष्मेति**। मण्डलस्य भीष्मा ज्वाला यत्र तत्र देशे यत्संसरणं गमनं तेनेत्यर्थः। वृष्णिवरेण्यः कृष्णः। वाक्यगतत्वमाह—**अत्रेति**। इवेन समास इति 'सुप्सुपा' इत्यस्यानित्यत्वेनास्य तत्प्रपञ्चत्वात्। एवं च वैकल्पिकत्वात्तदभावः। पूर्णात्वमाह—**एषेति**। **श्रुत्येति**। इवेनेत्यर्थः। विशेष्यतयेति भावः। **प्राणापेति**।

१ प्रावृषेण्य इति हि वारिधरस्य विशेषणम्, अत एव विशेष्याकाङ्क्षस्यास्य इवशब्दयोगस्य नाऽपेक्षा। ननु तर्हि वारिधर इति विशेष्येण सह समासोऽस्तु। एतदपि न। इवेन सह समासस्य अनित्यत्वात् (वैकल्पिकत्वात्) वारिधर इत्यनेनापि सह इवस्य न समासः, अत एव वाक्यगता सेयमित्यर्थः।

पूर्णा श्रौती समासगा यथा—

'हरिचरणकमलनखगणकिरणश्रेणीव निर्मला नितराम् ।
शिशिरयतु लोचनं मे देवव्रतपुत्रिणी देवी ॥'

अत्रेवेन समासः ।

पूर्णा आर्थी समासगा यथा—

'आनन्दनेन लोकानामातापहरणेन च ।
कलाधरतया चापि राजन्निन्दूपमो भवान् ॥'

पूर्णा श्रौती आर्थी च तद्धितगा यथा—

'निखिलजगन्महनीया यस्याभा नवपयोधरवत् ।
अम्बुजवद्विपुलतरे नयने तद्ब्रह्म संश्रये सगुणम् ॥'

अत्र पूर्वार्धे वतेः 'तत्र तस्येव' इति सादृश्ये विधानाच्छ्रौती । उत्तरार्धे 'तेन तुल्यं–' इति विधानात्सादृश्यवदर्थकतया आर्थी ।

उपमानलुप्ता वाक्यगा यथा—

'यस्य तुलामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः ।
कुसुमकुलतिलक चम्पक न वयं तं जातु जानीमः ॥'

यत्तुलनामधिरोहसीत्याद्यचरणनिर्माणे इयमेव समासगा । उपमानाभावेन सादृश्याभावस्य पर्यवसानात्सादृश्यपर्यवसानस्य चोपमाजीवितत्वादलंकारान्तरमेवात्र नोपमानलुप्तेति नाशङ्कनीयम् । यस्य तुलामारोहसि न तं वयं जानीम इत्युक्त्या अस्माकमसर्वज्ञत्वादस्मदगोचरः कोऽपि तवोपमानं भविष्यतीति सादृश्यपर्यवसानमस्तीत्युपमानलुप्तैवेयमुपमा, नालंकारान्तरम् ।

अत्र समासाभावाद्वाक्यगत्वम् । विषचन्द्रयोः प्राणापहारकत्वरूपधर्मस्य तुल्यशब्दस्य चोपादानात्पूर्णात्वम् । तुल्यशब्दस्य सदृशार्थकत्वेऽपि प्राधान्येनेवशब्दवत्सादृश्यबोधकत्वाभावादार्थत्वम् । **हरीति** । देवव्रतेन पुत्रिणी । पुत्रवतीत्यर्थः । अत्रापि चतुर्णामिवस्य चोपादानात्पूर्णात्वं श्रौतीत्वं च । समासगात्वमाह—**अत्रेति । आनन्दनेनेति** । करणे ल्युट् । लोकानामिति मध्यमणिन्यायेनान्वेति । आ समन्तात्तापेत्यर्थः । **इन्दूपमो भवानिति** । अत्र समासस्य धर्मिशक्तत्वात्कर्मसाधनेनोपमाशब्देन समासाद्वा आर्थीत्वं समासगत्वं च । पूर्णात्वं तु स्पष्टमेव । सगुणं ब्रह्म कृष्णरूपम् । कुसुमकुलानां तरूणां तिलक श्रेष्ठेति चम्पकविशेषणम् । **यत्तुलनामिति** । यस्य तुलनां यत्तुलनामित्यर्थः । शङ्कते—**उपमानेति । यस्येति** । यत इत्यादिः । **इत्युक्त्येति** । स नास्ती-

१ देवव्रतो भीष्मः, तेन पुत्रवती गङ्गा. २ व्याख्यानमिदं साहित्यमार्मिकैर्विचारणीयम् ।

एतेन

'ढुँढुँणंतो हि मरीहिसि कण्टककलिआइँ केअइवणाइं।
मालइकुसुमसरिच्छं भमर भमंतो ण पावहिसि ॥'

इत्यत्रासमालंकारोऽयमुपमातिरिक्त इति वदन्तोऽलंकाररत्नाकरादयः परास्ताः।

धर्मलुप्ता श्रौती वाक्यगता यथा—

'कलाधरस्येव कलावशिष्टा विलूनमूला लवलीलतेव।
अशोकमूलं परिपूर्णशोका सा रामयोषा चिरमध्युवास ॥'

'ग्रीष्मचण्डकरमण्डल—' इति प्रागुदाहृते पूर्णाया उदाहरणे प्रावृषेण्यो वारिधर इव यो वृष्णिवरेण्यः स मे वेदनां हरत्विति वृष्णिवरेण्यमात्रगतत्वेन वेदनाहरणकर्तृत्वं विवक्षितम्, वारिधरसादृश्यं च श्यामत्वादिना यदि, तदा तत्राप्येषा[1] बोध्या। इयांस्तु विशेषः—यत्पूर्णायां वृष्णिवरेण्यमात्रमुद्दिश्य प्रावृषेण्यवारिधरसादृश्यप्रयोजकं तादृशवारिधरसादृश्याभिन्नं वा वेदनाहरणकर्तृत्वं विधेयमित्युपमाविधेयिका[2] धीः।

त्युक्तिरन्यथा स्यादिति भावः। **एतेनेति**। उक्तरीत्या सादृश्यपर्यवसानेनेत्यर्थः। अत्रापि तत्प्राप्तिस्तव दुर्लभेत्युक्तं न तु स नाप्नोति भावः। 'ढुं ढुं कृत्वा हि मरिष्यसि कण्टककलितानि केतकीवनानि। मालतीकुसुमसदृक्षं भ्रमर भ्रमन्न प्राप्स्यसि ॥' लवलीलता 'हरफारेवडी' इति भाषया प्रसिद्धा। **अशोकमूलमिति**। 'उपान्व—' इत्याधारः कर्म। **श्यामत्वादिनेति**। विवक्षितमित्यनुषङ्गः। सादृश्यस्यातिरिक्तत्वे आह-**प्रावृषेण्येति**। धर्मरूपत्वे आह—**तादृशेति**। प्रावृषेण्येत्यर्थः। अवच्छेदिकेत्यस्यतीति शेषः। **साद-**

१ श्यामत्वादिना धर्मेण यद्द्वयोः सादृश्यं विवक्षितं तच्छब्दोपात्तं न, यच्च वेदनाहरणरूपं शब्दोपात्तं तत् उपमेये वृष्णिवरेण्यमात्रे संबद्धत्वात्साधारणधर्मपदवाच्यं नेति धर्मलुप्ता सेयमित्याशयः।

२ 'वारिधर इव वृष्णिवरेण्यो मे वेदनां हरतु' इति पूर्णोपमायां वृष्णिवरेण्योद्देश्यकं यद् वेदनाहरणकर्तृत्वम् (वेदनाहरणम्) हरत्विति लोटा विधीयते तदेव वृष्णिवरेण्यवारिधरयोः सादृश्यं प्रयोजयति (संपादयति)। [ यदि तु सादृश्यमतिरिक्तः पदार्थो न, किन्तु सदृशस्य भावः सादृश्यमिति धर्मरूपम्, तेषां मते हरणकर्तृत्वमेव सादृश्यम् ]। सादृश्यं चोपमा। अत एव उपमा विधेया यस्मिन्नीदृशः शाब्दबोधः।

धर्मलुप्तायां तु वारिधरसादृश्यावच्छिन्नवृष्णिवरेण्यमुद्दिश्य वेदनाहरणकर्तृत्वमात्रं विधेयमित्युपमोद्देश्यतावच्छेदिका[1]।

धर्मलुप्ता आर्थी वाक्यगता यथा—

'कोपेऽपि वदनं तन्वि तुल्यं कोकनदेन ते।
उत्तमानां विकारेऽपि नापैति रमणीयता ॥'

धर्मलुप्ता समासगा श्रौत्यार्थी तद्धितगार्थी च यथा—

'सुधेव[2] वाणी वसुधेवे[3] मूर्तिः सुधाकरश्रीसदृशी[4] च कीर्तिः।
पयोधिकल्पा मतिरासफेन्दोर्[5] महीतलेऽन्यस्य नहीति मन्ये ॥'

ईषदसमाप्तिरपि भङ्ग्यन्तरेण सादृश्यमेव।

वाचकलुप्ता समासगा—'दरदलदरविन्दसुन्दरं' इति प्रागुदाहृते पद्ये।

कर्माधारक्यङ्गता क्यङ्गता च यथा—

'मलयानिलमनलीयति मणिभवने काननीयति क्षणतः।
विरहेण विकलहृदया निर्जलमीनायते महिला ॥'

अत्रानलमिवाचरतीत्यर्थेऽनलशब्दात् 'उपमानादाचारे' इति सूत्रेण, कानन इवाचरतीत्यर्थे काननशब्दाच्च तत्सूत्रस्थेन 'अधिकरणाच्च' इति वार्तिकेन क्यच्। निर्जलमीनशब्दाच्च 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्। आचार-

---

श्यमेवेति। तथा च तद्विशिष्टार्थप्रतिपादकत्वादार्थी। **कर्माधारेति**। वाचकलुप्तेत्यादिः। नन्वेवमाचारवत्सादृश्यस्यापि क्यजादिना बोधनात्कथं वाचकलुप्तात्वमत आह— **आचारेति**। सादृश्यवाचकाभावादिति। शक्त्येति भावः। ननु नेदं युक्तम्। अत्र मते इवादीनां द्योतकतानये सर्वत्रैव वाचकाभावाद्वाचकलुप्तात्वापत्तेः, चन्द्रप्रतिपक्षमाननमि-

---

१ 'वारिधर इव (श्यामः) यो वृष्णिवरेण्यः स मे वेदनां हरतु' इति लुप्तायां तु सादृश्यम् (सामान्यधर्मः) श्यामत्वम्। तद्धि पूर्वतः सिद्धम्, उद्देश्यकोटिप्रविष्टम्, नात्र विधीयते। ततश्च सादृश्यस्योद्देश्यकोटिप्रविष्टत्वेन, अत्र उपमा उद्देश्यतावच्छेदिका अर्थात् उद्देश्यकोटिनिविष्टा भवतीत्याशयः।

२ सुधेव वसुधेवेत्युभयत्र धर्मलुप्ता समासगता श्रौती।

३ धर्मलुप्ता समासगा आर्थी।

४ धर्मलुप्ता तद्धितगता आर्थी।

५ नवाब आसफखान इति नाम्ना प्रसिद्धस्य।

मात्रार्थकतया क्यचक्यङोः प्रकृत्यैव लक्षणया स्वस्वार्थसादृश्यप्रतिपत्तिरिति नये सादृश्यवाचकाभावाद्वाचकलुप्ता[1]। अनलीयतीत्यादिसमुदायस्यैवानलादिसादृश्यप्रयोजकाचरणकर्तृशक्तत्वमिति[2] नयेऽपि सादृश्यसादृश्यविशिष्टान्यतरमात्रवाचकाभावाद्वाचकलुप्ता।

कर्तृकर्मणमुलगता यथा—

'निरपायं सुधापायं[3] पयस्तव पिबन्ति ये।
जह्नुजे निर्जरावासं वसन्ति भुवि ते नराः॥'

अत्र सुधापायमिति सुधामिव, निर्जरावासमिति निर्जरा इवेति 'उपमाने कर्मणि च' इति कर्मणि चकारात्कर्तर्युपमान उपपदे णमुल्।

धर्मोपमानलुप्ता वाक्यगा समासगा च यथा—

'गाहितमखिलं विपिनं परितो दृष्टाश्च विटपिनः सर्वे।
सहकार न प्रपेदे मधुपेन तथापि ते समं जगति॥'

'तथापि ते समं' इति हित्वा 'भवत्समं' इति यद्यार्या शुद्धैव विधीयते तदेदमेवोदाहरणं समासगायाः।

---

त्यत्रापि वाचकलुप्तात्वापत्तेश्च। तत्र हि प्रतिपक्षपदेन सादृश्यं लक्ष्यमेव। तस्मात्सादृश्यसादृश्यविशिष्टान्यतरमात्रबोधकाभाव एव वाचकलोप इति तत्त्वम्। अत आह—**अनलीयतीत्यादीति**। **गाहितमिति**। यद्यपीत्यादिः। तथापि हे सहकार! जगति तव तुल्यं वस्तु भ्रमरेण न प्राप्तमित्यर्थः। **शुद्धैवेति**। आर्यासामान्यलक्षणाक्रान्तत्वात्। सा तु

---

१ क्यच्क्यङादिः प्रत्ययो यस्मात्क्रियते तेन (अनल-कानन-नीनादिना प्रकृतिभागेन) लक्षणाद्वारा स्वस्य स्वस्य अर्थस्य (अर्थात् अनलादेः) यत्सादृश्यं तस्य प्रतीतिर्भवतीति मते सादृश्यस्याऽभिधाप्रतिपाद्यत्वाऽभावाद्वाचकलुप्ता।

२ अनलीयतीत्यादिक्यच्क्यङन्तानां पदानामेव अनलादिसादृश्यहेतुभूतं यदाचरणं तत्कर्तरि-शक्तिरिति मते तु सादृश्यस्यापि प्रत्ययवाच्यतया वाचकलुप्तात्वं न स्यादित्याह—सादृश्य-सादृश्यविशिष्टान्यतरेति। अनलीयतीत्यादि पदं न केवलं सादृश्यस्यैव, न वा सादृश्यविशिष्टस्यैव वाचकम्, आचारादेरन्यार्थस्यापि वाचकत्वात्।

३ सुधामिवेत्यादिविग्रहे सादृश्यवाचकमिवपदं श्रूयते, अत्र तु नेति वाचकलुप्ता सेयम्।

वाचकधर्मलुप्ता क्विब्गता यथा—

'कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने।
क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति॥'

अत्र हारहरहीरशब्दा आचारार्थके क्विपि लुप्ते धातवः। तत्र हारादिशब्दा लक्षणया हारादिसादृश्यं बोधयन्ति। लुप्तोऽपि स्मृतः क्विबाचारमिति पक्षे वाचक[1]धर्मलोपः स्पष्ट एव। हारादिशब्दा[2] एव लक्षणया तादृशसादृश्याभिन्नमाचारमिति पक्षे सादृश्यस्येव धर्मस्यापि तन्मात्रबोधकाभावाल्लोप एव।

वाचकधर्मलुप्ता समासगा यथा—

'शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे।
केसरा इव काशन्ते कान्तदन्तालिकान्तयः॥[3]'

अत्र वदनाम्बुजयोरभेदविवक्षया विशेषणसमासे दन्तालिकान्तीनां

मिश्रितेति[3] भावः। **धातव इति**। तथा च हारन्तीत्यादिप्रयोगसिद्धिरिति भावः। तत्र उक्तप्रयोगेषु। **आचारमिति**। बोधयतीति शेषः। **स्पष्ट एवेति**। सादृश्यस्य शक्त्यप्रतिपाद्यत्वात्क्विपो लुप्तत्वाच्चेति भावः। **तादृशेति**। हारादीत्यर्थः। तदित्युचितम्। **अभिन्नमिति**। तस्य धर्मरूपत्वादिति भावः। संभिन्ना मिश्राः। कान्ताश्च ते दन्ताश्चेत्यर्थः। **विशेषणेति**। मयूरव्यंसकेतीत्यर्थः। **अधिकरणेति**। वदनाम्बुजे इत्यत्र-

१ अभिधया केवलसादृश्यवाचकस्य इवादेः, धर्मभूतो य आचारस्तद्वाचकस्य क्विपश्च लुप्तत्वेनाभावात्।

२ हारादिशब्दा एव हारादिसादृश्याभिन्नम् (हारादिसादृश्यरूपम्) आचारमत्र बोधयन्ति। एवं च एकेनैव हारादिपदेन सादृश्यस्य, साधारणधर्मस्य (आचारस्य) च बोधो भवति। तथा च सादृश्यमात्रवाचक–सादृश्यविशिष्टमात्रवाचकान्यतरस्याभावे यथा वाचकलोपो व्यपदिश्यते, तथैव धर्ममात्रवाचकस्यवाभावे धर्मलोपः ख्यायेत। अत्र च हारादिशब्दा यथा सादृश्यमात्रवाचका न, साधारणधर्मरूपस्य आचारस्यापि वाचकत्वात्, एवं ते (हारादिशब्दाः) धर्ममात्रवाचका अपि न, धर्मेतरस्य सादृश्यस्यापि वाचकत्वात्। तथा चैवंविधे स्थले उभयलोप एव स्वीकार्य इत्याशयः।

३ आर्यमिश्राः! केन मिश्रितेति टीकयद्भिरपि किं नाशसं श्रीमद्भिः? अस्तु 'तथापि ते समम्' इतिघटितमुत्तरार्धं 'गीतेः' स्यात्। 'भवतसमम्' इति परिवर्तने तु शुद्धा आर्या। अर्थात् आर्यासामान्यम्, न तु पथ्या-विपुलादिव्यपदेशविशेषैर्जुष्टा।

केसरसादृश्योक्तिरसंगता स्यात् । यतो ह्यम्बुजतादा[1]त्म्यसाधकं दन्तालिकान्तीनां केसरतादात्म्यं न तु केसरसादृश्यम् । उपमितसमासे तु वदनाम्बुजयोर्धर्मिणोरौपम्ये केसरदन्तालिकान्तीनामपि तद्धर्माणामौपम्योक्तिरुचितैव । अतोऽविकरणतावच्छेदकोपमामादाय वाचकधर्मलुप्तोदाहृता । विधेयतावच्छेदिका तु पूर्णैव ।

वाचकोपमेयलुप्ता क्यज्गता धर्मोपमानवाचकलुप्ता समासगा च यथा—

'तया तिलोत्तमीयन्त्या मृगशावकचक्षुषा ।
ममायं मानुषो लोको नाकलोक इवाभवत् ॥'

तिलोत्तमीयन्त्येति तिलोत्तमामिवात्मानमाचरन्त्येत्याचारार्थके क्यचि तिलोत्तमापदस्य तिलोत्तमासादृश्ये लाक्षणिकतया वाचकस्य स्फुटत्वेन प्रतीयमानतया आत्मन उपमेयस्य चानुपादा[3]नाल्लोपः । स्वयं तु सा नोपमेया । आचारकर्मण उपमानस्य तिलोत्तमारूपस्य तत्कर्त्र्यामुपमेयायामुपमानत्वासंगतेः । अत आत्मैवात्रोपमे[4]यतयोन्नेयः । मृगचक्षुषेति मृगस्य चक्षुषी इव

त्यामित्यर्थः । **अवच्छेदिका त्विति** । उपमेति शेषः । कान्तयः केसरा इव काशन्ते इत्यत्रत्येति भावः । **वाचकस्येति** । इवशब्दस्येत्यर्थः । उपमेयानुपादाने हेतुमाह— **स्फुटत्वेनेति** । **स्वयं त्विति** । तिलोत्तमीयन्तीति बोध्येत्यर्थः । तत्कर्त्र्यामाचारकर्त्र्याम् ।

१ वदनमेव अम्बुजमिति अम्बुजेन सह अभेदसाधकं केसरतादात्म्यम् (अभेदः, दन्तालिकान्तय एव केसरा इत्याकारकः) एव स्यान्न तु दन्तपङ्क्तिकान्तीनां केसरैः सह सादृश्यम् ।

२ दन्तकान्तीनां केसराणां चाधारभूतयोर्वदनाम्बुजयोरुपमा वाचकधर्मलुप्तास्ति (वाचकस्य इवस्य, धर्मस्य सुन्दरमित्यादेरनुपादानात्), सैवात्रोदाहरणभूता । विधेयतावच्छेदिका (वाक्यार्थे प्रधानभूता) कान्तयः केसरा इव काशन्ते इति तु पूर्णेत्याशयः ।

३ 'तिलोत्तमीयन्त्या' अत्र तिलोत्तमापदस्यैव तिलोत्तमासदृशे लक्षणा, अन्यथा तिलोत्तमामिव आत्मानमाचरन्त्येति विग्रहस्यार्थः सिद्धरूपे न प्रतीयेत । ततश्च सादृश्यमात्रवाचकस्य इवादेरनुपादानात्, क्यच्प्रत्ययेनैव (तिलोत्तमामिव) आत्मानमाचरन्तीति उपमेयभूतस्य आत्मनः स्फुटं प्रतीतिर्भवति, ततश्च—स्फुटत्वादेव उपमेयस्यानुपादानाच्च वाचकोपमेयलुप्ता सेयमित्याशयः ।

४ ननु तिलोत्तमारूपस्योपमानस्य उपमेयं नायिका । तद्वाचकमत्र 'तया' इति पदं स्फुटमुपात्तम् । तत्कथमुपमेयलोप इति शङ्का ।

अत्र तिलोत्तमारूपमुपमानम् आचरणक्रियायाः कर्म । आचरणक्रियायाः कर्त्री नायिका तु प्रथमान्तम् । ततश्च—उपमानोपमेययोः समानविभक्तिकत्वनियमात् प्रथमान्तस्य (नायि-

चक्षुषी अस्या इति 'सप्तम्युपमानपूर्वस्य' इति समासोत्तरपदलोपौ । मृगपदस्य मृगचक्षुःसदृशलाक्षणिकत्वपक्षे, वृत्तेर्विशिष्टार्थतावाचकतापक्षेऽपि स्वस्वमात्रबोधकपदाभावात्त्रयाणां लोपः । इति पञ्चविंशतिरुपमाभेदाः ।

इहान्यानपि भेदानन्ये निगदन्ति—वाचकलुप्ता षड्विधोपवर्णिता । 'कर्तर्युपमाने' इति णिनौ सप्तम्यपि दृश्यते । कोकिल इवालपति कोकिलालापिनीति । तथाष्टम्यपि—'इवे प्रतिकृतौ' इति कनि 'लुम्मनुष्ये' इति लुपि चञ्चेवेत्यर्थे 'चञ्चा पुरुषः सोऽयं यः स्वहितं नैव जानीते' इत्यत्र । नवम्यपि—आचारक्विपि पदान्तरेण प्रतिपादिते समाने धर्मे दृश्यते । 'आह्लादि वदनं तस्या शरद्राकामृगाङ्कति' इत्यादौ ।

उपमानलुप्ता वाक्यसमासयोर्द्विविधोपवर्णिता, तृतीयापि दृश्यते—

'यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः ।
उपनतमेतदकस्मादासीत्तत्काकतालीयम् ॥'

इत्यत्र काकतालशब्दयोर्लक्षणया काकागमनतालपतनबोधकयोरिवार्थे 'समासाच्च तद्विषयात्' इति ज्ञापकात्समासे काक इव ताल इव काकतालमितिकाकतालसमागमसदृशश्चोराणामस्य च समागम इत्यर्थः । ततः

तयोः समानरूपस्य तत्र तन्त्रत्वादिति भावः । **शरद्राकेति** । शारदपूर्णिमाचन्द्र इवाचरतीत्यर्थः । पूर्वोक्तेन 'समासाच्च–' इत्यनेन । स्थिते इत्यस्यार्थे इत्यादिः । **तृतीयचर-**

---

क्राया: ) उपमेयस्य तिलोत्तमामिवेति द्वितीयान्तमुपमानं न भवितुमर्हति । आवश्यकं च क्यज्विधायकसूत्रे उपमानस्य कर्मत्वम् । तथा च आत्मानमित्येवोपमेयं न नायिका । आत्मानमिति तु समस्ते न दृश्यत इत्युपमेयलोपख्यातिः ।

१ मृगपदस्य मृगचक्षुःसदृशमिति लक्षणया बोधः । ततो मृगचक्षुःसदृशवाचकस्य मृगपदस्य चक्षुःशब्देन बहुव्रीहिसमासे मृगवत् (अर्थात् मृगचक्षुर्वद्) चक्षुषी यस्या इत्यर्थः । इत्येकः पक्षः ।

२ वृत्तिः बहुव्रीहिसमासवृत्तिरेव पूर्वोक्तस्य विशिष्टार्थस्य वाचिका । अर्थात् 'मृगचक्षुः' इति समासघटितपदस्यैव मृगचक्षुःसदृशचक्षुःशालिनीत्यर्थः । इति द्वितीयः पक्षः । उभयत्रापि उपमानवाचकस्य चक्षुःशब्दस्य [ समासे यच्चक्षुःपदं श्रूयते तत्तु उपमेयस्य नायिकाचक्षुषो वाचकम् ], केवलसादृश्यवाचकस्य इवादेः, साधारणधर्मवाचकस्य विशालादिपदस्य, चेति त्रयाणामभावाद् धर्मोपमानवाचकलुप्तेति व्यपदेशः ।

काकतालमिवेति द्वितीय इवार्थे पूर्वोक्तेनैव सूत्रेण छप्रत्यये तालपतनजन्यकाकवधसदृशश्चोरकर्तृको देवदत्तवध इत्येवं स्थिते प्रत्ययार्थोपमायामुपमानस्य तालपतनजन्यकाकवधस्यानुपादानादुपमानलुप्ता।

वाचकोपमानलुप्ता तु नाम्नैव न निर्दिष्टा। साप्यत्र प्रकृत्यर्थे[1] दृश्यते।

धर्मोपमानलुप्ता वाक्यसमासयोर्द्विविधैवोक्ता। सा चात्रापि तृतीयचरणोक्तधर्मनिरासे प्रत्ययार्थे[2] दृष्टा।

वाचकधर्मलुप्ता क्विप्समासयोर्द्वयोरेव कथिता। सापि 'चञ्चा पुरुषः सोऽयं योऽत्यन्तं विषयवासनाधीनः[3]' इत्यत्र स्वहिताकरणरूपस्य धर्मस्यानुपादाने कनो लोपे विलोक्यते। एवं च द्वात्रिंशद्भेदाः।

अत्रेदमवधेयम्—कर्माधारक्यचि[4] क्यङि च वाचकलुप्तोदाहरणं प्राचामसंगतमिव प्रतीयते, धर्मलोपस्यापि तत्र संभवात्। न च क्यजाद्यर्थे आचार[5] एव साधारणधर्मोऽस्तीति वक्तव्यम्। धर्ममात्ररूपस्याचारस्योपमा-

---

णोक्तेति। 'उपनतमेतदकस्मात्' इत्यस्य स्थाने चरणान्तरनिर्माण इत्यर्थः। **धर्मलोपस्यापीति।** 'उपमानादाचारे' इत्यत्रोपमानमाचारनिरूपितमेव गृह्यते। उदाहरणे च पुत्रपदस्य पुत्रकर्मकाचारसदृशे लक्षणेति वैयाकरणमते च सुतरां धर्मलोपः। न चैतन्मते 'त्रिविष्टपं तत्खलु भारतायते' इत्यत्र क्यचोऽनुपपत्तिः। भारताचारसदृशाचारस्य त्रिविष्टपवृत्तेरप्रसिद्धेः। 'सुपर्वभिः शोभितम्' इत्यस्य श्लेषेणाभेदाध्यवसाय एव, न सादृश्यावसाय इति वाच्यम्। एकशब्दोपात्तत्वेनाभेदबुद्धेरिव शब्दरूपसाधर्म्येण साद-

---

१ छप्रत्ययप्रकृतिभागस्य काकतालमित्यस्यार्थे। तत्र हि उपमानं काकतालसमागमः, तथा च समागमवाचकपदाभावादुपमानस्य, एवम् इवादेर्वाचकस्याप्यभावाद्वाचकोपमानलोपः।

२ छप्रत्ययस्यार्थे काकतालीयमित्यत्र।

३ विषयवासनाधीनत्वं तु पुरुषमात्रनिष्ठं न साधारणधर्मः, चञ्चायां (तृणमये पुरुषे) तदसंभवेन उभयसाधारणत्वाभावात्।

४ अर्थात् धर्म-वाचकलुप्तोदाहरणमिदम्।

५ यत्किञ्चिद्धर्मरूपस्य आचारस्य सत्तया साधारणधर्मसत्तां संसाध्य धर्मलुप्तत्वाभावो न साधयितुं शक्यते। 'धर्मलोप'पदे तादृशो धर्मोऽनुपदमेव विवक्षितो ग्रन्थकृता यो ह्युपमाप्रयोजकः स्यात्।

प्रयोजकत्वाभावात् । 'नारीयते सपत्नसेना' इत्यादौ वृत्त्यन्तरनिवेदितैः कातरत्वादिभिरभिन्नतयाध्यवसितस्याचारस्योपमानिष्पादकत्वात् । यदि च क्यङर्थ आचारमात्रमुपमानिष्पादकं स्यात्तदा 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ सुप्रसिद्धत्वादिरूपाचारोपस्थितावप्युपमालंकृतेरनिष्पत्तेः, तस्यैव च 'सुपर्वभिः शोभितमन्तराश्रितैः' इति चरणान्तरनिर्माणे तस्या निष्पत्तेः क्यङाद्यर्थः साधारणोऽपि नोपमां प्रयोजयति । उपमाप्रयोजकतावच्छेदकरूपेण साधारणधर्मवाचकशून्यत्वस्यैव धर्मलोपशब्देनाभिधानात् । अन्यथा 'मुखरूपमिदं वस्तु प्रफुल्लमिव पङ्कजम्' इत्यादौ पूर्णोपमापत्तेरिति दिक् ।

यच्चाप्पयदीक्षितैरस्मिन्नेव प्रस्तावे "धर्मलुप्ता वाक्यसमासतद्धितेषु दर्शिता द्विर्भावेऽपि दृश्यते। 'पटुपटुर्देवदत्तः' इत्यत्र 'प्रकारे गुणवचनस्य' इति सादृश्ये द्विर्भावविधानात्" इति निगदितं तत्तुच्छम् । अत्र च वाचकस्याप्यनुपादानाद्वाचकधर्मलुप्तायामेतदाधिक्यमुद्भावयितुमुचितम्, न तु

---

दयतु द्धेरप्युपपत्तेः । इत्याहुः । ननु नारीयते इत्यादौ तस्य तत्त्वमस्तीत्यत आह—**नारीति । वृत्त्यन्तरेति** । मात्रपदेन किंचिदभिन्नतयाध्यवसितलक्ष्यवच्छेदः । तस्यैव पद्यस्य । तस्या उपमालंकृतेः । साधारणोऽपि उभयनिष्ठोऽपि । ननु क्यङाद्यर्थाचारमात्रस्योपमाप्रयोजकत्वाभावेऽपि साधारणत्वेनोभयधर्मत्वात्तत्सत्त्वाच्च कथं तल्लोपसंभवोऽत आह—**उपमेति । अत्र चेति** । चो ह्यर्थे । **सूत्रार्थ इति** । द्विर्भावस्य सादृश्यद्योत-

---

१ 'नारीयते' अत्र नारीपदेन कातरता( भीरुता )रूपस्यार्थस्यापि वृत्त्यन्तरेण ( व्यञ्जनया ) प्रतीयमानतया यत्किञ्चिद्धर्मरूपस्य आचारस्यैवोपमासाधकत्वं न, अपि तु व्यञ्जनानिवेदित–कातरत्वेन सह अभिन्नतयाऽध्यवसितस्याचारस्यैव । नारी अर्थात् भयशालिनी ( स्त्री ) यथा भीरूचितमाचरणं करोति तथा वीरं त्वां दृष्ट्वा सपत्नसेनेति तत्तात्पर्यम् ।

२ आचारो यद्यपि उपमानोपमेयनिष्ठतया साधारणस्तथापि नोपमासंपादकः । किन्तु आचारेतरस्य तादृशधर्मस्यापेक्षा, यो ह्युपमाप्रयोजकः स्यात् ।

३ अर्थात् यो धर्म उपमाप्रयोजको भवेत्, तादृशसाधारणधर्मवाचकपदशून्यतायामेव धर्मलोपव्यपदेशो भवति ।

४ वस्तुत्वम् ( पदार्थत्वम् ) मुखे पङ्कजेऽपि च सत्त्वात्साधारणधर्मस्तथाप्युपमागतचमत्कार-प्रयोजकत्वाभावान्न कस्याप्येतादृशो धर्मोऽनुमतः ।

धर्मलुप्तायाम्। धर्ममात्रलुप्ताया एव धर्मलुप्ताशब्देन तैर्विवक्षणात्। अन्यथा एकलुप्तास्वेव द्विलुप्तानां त्रिलुप्तायाश्च ग्रहणात्पृथगुपादानमसंबद्धमेव स्यात्। न चात्र वाचकस्य द्विर्भावस्यैव सत्त्वान्नास्ति लोपः अपि तु धर्ममात्रस्येति वक्तुं शक्यम्। द्विर्भावस्य सादृश्यवाचकत्वोक्तेर्भाष्यकैयटादिविरुद्धत्वात्। तदुक्तं कैयटेन 'प्रकारे गुणवचनस्य' इति सूत्रे सिद्धं त्विति प्रतीकमुपादाय—'द्विर्वचनस्य प्रकृतिः स्थानी इति तदर्थो विशेष्यते न तु प्रकारः। तत्र सर्वस्य गुणवचनत्वाद्व्यभिचाराभावात्। तद्ग्रहणाद्गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्ये द्योत्ये द्वे भवत इति सूत्रार्थः' इति।

इदं चान्यत्तस्मिन्नेव प्रस्तावे चित्रमीमांसाकृद्भिरभ्यधीयत—

"-'नृणां यं सेवमानानां संसारोऽप्यपवर्गति।
तं जगत्यभजन्मर्त्यऽश्रद्धा चन्द्रकलाधरम्॥'

अत्र क्विप्कनोर्लोपे प्रत्येकं वाचकधर्मलोप उभयत्रापि," तद्रमणीय-

---

कत्वेऽपि शक्तत्वरूपवाचकत्वाभावाद्वाचकलोप इति तव हृदयम्। तत्तु इवादेर्द्योतकतानये चन्द्र इव मुखमित्यत्र, चन्द्रसुहृन्मुखमित्यत्र च वाचकलुप्ताव्यवहाराभावाय सादृश्यतद्विशिष्टान्यतरबोधकाभावस्यैव वाचकलुप्ताव्यवहारप्रयोजकत्वस्य वाच्यत्वेन द्योतकस्यापि बोधकत्वानपायेन नास्ति वाचकलोप इति तदाशयादबोधमूलकमिति चिन्त्यमिदम्। इदं चान्यदिति। वक्ष्यमाणमन्यच्चेत्यर्थः। क्विब्लोपे तथोक्तेर्युक्तत्वेऽपि

१ धर्मलुप्तायां वाचकादेरन्यस्यापि लोपे सत्यपि यदि धर्मलुप्तेत्येव व्यवहारः स्यात्तदा भवन्मतानुसारमेकलुप्तायामेव द्विलुप्तास्त्रिलुप्ता अप्युपमाः संगृहीताः स्युः (धर्मलुप्तायाम् अन्यलोपे सत्यपि भवता एक(धर्म)लुप्तेत्येव व्यवहारः क्रियते) ततश्च द्विलुप्ता-त्रिलुप्तानां पृथक्परिगणनं व्यर्थं स्यादित्याशयः।

२ प्रकारे गुणवचनस्येतिसूत्रस्थं गुणवचनपदं प्रकारस्य (सादृश्यस्य) विशेषणमुत स्थानिनः (यस्य द्वित्वं क्रियते तस्य प्रकृतिभागस्य)? तत्र प्रकारस्य विशेषणं व्यर्थम्, प्रकारस्य (सादृश्यस्य) सर्वत्रैव गुणवाचकत्वात् [तद्धि न क्रियारूपं न वा जातिरूपम्]। 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति नियमानुसारं प्रकारे गुणवचनताया नास्त्येव व्यभिचारः। ततश्च तद्ग्रहणात् (अर्थात् गुणवचनपदग्रहणात्) गुणवचनो यः शब्दः इत्यादिको मूलप्रोक्तोऽर्थो निष्पन्न इति सर्वस्याशयः। ततश्च द्विर्भावः सादृश्यस्य द्योतको न वाचकः, एवं च पटुपटुः (अर्थात् पटुसदृशः) इति धर्मवाचकलुप्तोदाहरणं न धर्मलुप्तायाः।

मेव । कनो वाचकस्य लोपेऽपि तं चन्द्रकलाधरमभजन्निति चन्द्रकलाधरभजनराहित्यरूपस्य धर्मस्य चञ्चामर्त्यसाधारणस्योक्तत्वात्कथं तावद्धर्मस्य लोपः । न चोपमेयमर्त्यविशेषणतयोपात्तस्य चन्द्रकलाधरभजनराहित्यस्य सादृश्योपसर्जने[1] चञ्चायामनन्वयान्न साधारण्यमिति वाच्यम् ।

"-'यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति ।
तं शंभुमभजन्मर्त्यश्चञ्चैवात्महिताकृतेः ॥'

इति पाठे धर्मश्रवणमप्युभयत्रापि संभवति" इति स्वोक्तेरसंगतत्वापत्तेः । इहाप्युपमेयसंसारविशेषणतयोपात्तस्य सुखमयत्वस्य सादृश्योपसर्जनेऽपवर्गेऽन्वयाभावात्कथंकारं धर्मस्य साधारण्यम् । उपमेयगतत्वेनोपमानगतत्वेन वोपात्तस्य धर्मस्य शाब्द उभयान्वयेऽसत्यपि वस्तुत उभयवृत्तित्वज्ञानमेव साधारणताया नियामकमिति चेत्[2], चन्द्रकलाधरभजनराहित्येऽपि दीयतामेवमेव दृष्टिः । यदि चोपमेयतावच्छेदकतयैव[3] चन्द्रकलाधरभजनराहित्यं मम विवक्षितम्, साधारणधर्मश्च स्वात्महिताऽकरणरूपः स चात्र लुप्त एवेति शपथेन स्वाभिप्रायः प्रकाश्यते तदा निवारितोऽयं दोषः । तुष्यतु[4] भवान् ।

इदमप्यन्यत्तैरेव वाचकोपमेयलुप्तायामुदाहरणं निरमीयत—

'रूपयौवनलावण्यस्पृहणीयतराकृतिः ।
पुरतो हरिणाक्षीणामेष पुष्पायुधीयति ॥'

कन्लोपेऽयुक्तत्वमित्याह—**कन इति** । तामुपपादयति—**इहापीति** । कथंकारं कथं कृत्वा । पाठान्तरवादी स्वाशयमाह—**उपमेयेति** । **एवमेवेति** । एवं च तुल्यतेति भावः । प्रकारान्तरेण स स्वाशयमाह—**यदि चेति** । **इदमप्यन्यदिति** । वक्ष्यमाण-

१ सादृश्यं प्रति उपसर्जनीभूते ( विशेषणाभूते ) । अयमाशयः—इवार्थे विहितस्य कनो लोपेपि चञ्चापदस्य चञ्चासदृशः पुरुषोऽर्थः । ततश्च सदृशपदार्थं प्रति गुणीभूतश्चञ्चा । किञ्च चन्द्रकलाधरमभजन्निति विशेषणमुपमेयेन पुरुषेणैव संबद्धमित्युभयत्र योगाभावान्नास्य साधारणधर्मतेत्यत्रान्तरपूर्वपक्षः ।

२ अर्थात् अत्र सुखमयविशेषणस्य शाब्दोऽन्वयः उपमेयेन पुरुषेणैवास्ति, तथापि बौद्धः ( अस्मद्बुद्धावभिप्रेतः ) अन्वयः उपमानेन अपवर्गेणापीति साधारणतायां न बाधकमिति चेत्समाधीयते तर्हि चन्द्रकलाधरमभजन्नित्यस्यापि बौद्धेऽन्वये ( उपमानेन चञ्चया ) संभवति धर्मलुप्तोदाहरणत्वमसंगतं स्यात् ।

३ अस्मद्बुद्ध्या केवलमुपमेय-पुरुषविशेषणतयैव तदिदं वक्तुमभिप्रेतमित्याशयः ।

४ अर्थात् मौखिकशपथेन हृदयनिहितसत्यस्याऽपलापः सोयम् ।

इदं च पद्यमपशब्ददुष्टमवैयाकरणतां कर्तुः प्रकाशयति। तथा हि पुरत इति नगरवाचिनः पुरशब्दात्तसिलि हरिणाक्षीणां नगरादित्यर्थस्यासंगतेः। नहि पूर्ववाचकः पुरशब्दः क्वापि श्रूयते। पूर्वशब्दात्तु 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसौ पुरादेशे च पुर इति भाव्यम्, न तु पुरत इति। अत एव 'अमुं पुरः पश्यसि देवदारुम्' इति प्रायुङ्क्त महाकविः। एवमेव "मुखस्य पुरतश्चन्द्रो निष्प्रभः– इत्यप्रस्तुतप्रशंसा" इति द्वितीयप्रकरणारम्भेऽप्यपशब्दितं तैः। तथा चाहुर्वैयाकरणाः—"-'पत्या पुरतः परतः', 'आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि', 'पुरतः सुदती समागतं माम्' इत्यादयः सर्वेऽपि व्याकरणाज्ञानमूला अपशब्दाः" इति।

इयं चैवंभेदोपमा वस्त्वलंकाररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारकतया पञ्चधा।

तत्र व्यङ्ग्यवस्तूपस्कारिका यथा—

'अविरत[1]परोपकरणव्यग्रीभवदमलचेतसां महताम्।
आपातकाटवानि स्फुरन्ति वचनानि भेपजानीव॥'

अत्र तादृंशि वचनान्यर्थद्वारा सेवमानस्य मनागप्यक्षुभ्यतः परिणामे परमं सुखं भवतीति प्राधान्येन व्यङ्ग्यस्य वस्तुन उपस्कारिका भेपजो[2]पमा।

मित्यर्थः। **तसिलीति**। इदं चिन्त्यम्। तदप्राप्तेः। आयादिरवात्तसाविरयुच्चितम्। महाकविः कालिदासः। तैः अप्पयदीक्षितैः। इदं चिन्त्यम्। "पुरत इति निपाताङ्गीकारात्। अत एव 'इयं च तेऽन्या पुरतो विडम्बना' इति कालिदासः, 'पश्यामि तामित इतः पुरतश्च पश्चात्' इति भवभूतिश्च संगच्छते" इति केचित्। अन्ये तु "-'दक्षिणोत्तराभ्यामतसुच्' इत्यत्र तसुचैव पुंवद्भावेन सिद्धेऽतसुज्विधानमन्यस्मादपीति ज्ञापनाय। तेन पचाद्यजन्तात्पुरशब्दात्तस्मिन्निष्टसिद्धिः।" इत्याहुः। वस्तुतस्तु—'पुर अग्रगमने' इति चौरादिकाण्णिजभावे इगुपधलक्षणे के 'सार्वविभक्तिकस्तसिः' इति बोध्यम्। **वैयाकरणा इति**। प्राञ्च इत्यादिः। एवंभेदा वक्ष्यमाणप्रकारभिन्ना। तदेव विशिष्याह—**वस्त्वति**। **आपातेति**। प्रागनुभूयमानकटुलकानीत्यर्थः। तादृंशि आपातकाटवानि। **प्राधान्येन व्यङ्ग्यस्येति**। तेनापातकाटवानीति पदव्यङ्ग्यस्ये-

---

१ अनवरतेति पाठस्तु सर्वत्राऽप्युपादीयमानश्छन्दोभङ्गी।

२ औषधान्यापातत एव कटुकानि, परिणामे तु गदनिर्हरणद्वारा तान्यमृतायमानानि भवन्तीत्यर्थं सूचयन्ती सेयमुपमा पूर्वोपपादितं व्यङ्ग्यं प्रसाधयतीत्याशयः।

व्यङ्ग्यालंकारोपस्कारिका यथा—

'अङ्कायमानमलिके[1] मृगनाभिपङ्कं
पङ्केरुहाक्षि वदनं तव वीक्ष्य बिभ्रत् ।
उल्लासपल्लवितकोमलपक्ष्ममूला-[2]
श्चञ्चूपुटं चपलयन्ति चकोरपोताः ॥'

अत्र प्राधान्येन व्यङ्ग्ये आरोप्यमाणचन्द्रके[3] भ्रान्तिमत्यलंकारे उपपादकस्य भालस्थमृगमदपङ्कविषयकस्याङ्काभेदारोपस्याङ्कसादृश्यरूपदोषमूलकत्वादुपमात्रालंकारः ।

रसोपस्कारिका तु 'दरदलदरविन्द—' इत्यत्र प्रागेवोदाहृता । रसपदेनासंलक्ष्यक्रमस्योपलक्षणाद्भावाद्युपस्कारिकाप्यत्रैवान्तर्भाव्या । यथा—'नैवापयाति हृदयादधिदेवतेव', 'वन्यकुरङ्गीव वेपते नितराम्' इत्यादिषु प्रागुदाहृतेषु ।

वाच्यवस्तूपस्कारिका यथा—

'अमृतद्रवमाधुरीभृतः सुखयन्ति श्रवसी सखे गिरः ।
नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव ॥'

अत्र नयनशिशिरीकरणरूपे वस्तुनि वाच्ये मुखस्य शरदिन्दूपमोपस्कारिका ।

---

त्यर्थः । नन्वत्रोपमालंकारो नैवात आह—**अत्र प्राधान्येनेति** । **व्यङ्ग्ये इति** वाक्यव्यङ्ग्ये इत्यर्थः । अलंकारे सतीति शेषः । उपपादकेत्यस्य तस्येत्यादिः । **अत्रालंकार इति** । तथा च तदुपस्कारकत्वमस्याः स्पष्टमिति भावः । ननु वस्त्वलंकारयोरिव

१ अलिके अङ्कायमानम् (चन्द्रगतमेचकचिह्नसदृशम्) मृगनाभिपङ्कं बिभ्रत् तव वदनं वीक्ष्येत्यन्वयः ।

२ उल्लासेन पल्लविते (पल्लवाकारतया स्फुटं प्रकटिते) कोमले पक्ष्ममूले (पक्षत्योर्मूलदेशौ) येषाम् ।

३ आरोप्यमाणः चन्द्रो यस्मिन् अर्थात् चकोरपोता भ्रान्तिवशान्मुखे चन्द्रस्यारोपं कुर्वन्तीति भ्रान्तिमान् प्रधानव्यङ्ग्यः । तस्मिन्नुपपादकः (साधकः) ललाटस्थकस्तूरीद्रवे कलङ्कस्य अभेदारोपः । अभेदारोपे च मृगमदद्रवस्य कलङ्कस्य च सादृश्यरूपो दोषो मूलम् । सादृश्यमेव चोपमा । तथा चैवंरीत्या उपमा व्यङ्ग्यस्य भ्रान्तिमदलंकारस्योपस्कारिकास्तीति सर्वस्याशयः ।

वाच्यालंकारोपस्कारिका यथा—

'शिशिरेण यथा सरोरुहं दिवसेनामृतरश्मिमण्डलम्।
न मनागपि तन्वि शोभते तव रोषेण तथेदमाननम्॥'

अत्र वाच्यस्य दीपकस्योपमोपस्कारिका।

रसादिस्तु न वाच्य इति प्रागेवाभिहितम्।

अथ कथमलंकारस्यालंकारान्तरोपस्कार्यत्वमुच्यते। प्रधानस्यैवालंकार्यत्वादिति चेत्, मैवम्। अलंकारस्योपमादेर्ध्वन्यमानतायां प्राधान्याद्रसादिवदलंकारान्तरोपस्कार्यत्वे न कोऽपि तावदस्ति विरोधः। एवमेव मुख्यतया वाच्यतायामपि[1]। यथा ह्यापणादौ विक्रीयमाणतायां कनकताटङ्कस्य रत्नाद्यलंकारान्तरोपस्कार्यत्वे तस्यैव च कामिनीकर्णालंकरणतायां पुनः प्रधानान्तरसांनिध्यात्ताटङ्कस्य[2] तद्गतरत्नानां च साक्षात्परम्परया च कर्णादिशोभोपस्कारकतया यथा तदलंकारत्वम्, एवमेव रसादिसांनिध्ये रूपकादेस्तदुपस्कारकस्यालंकारान्तरस्य च रसाद्यलंकारतेति।

एवं च प्राचां मते पञ्चविंशतिभेदायाः पुनः पञ्चविधतायां सपादशतं भेदाः। द्वात्रिंशद्भेदवादिनां तु षष्ट्युत्तरं शतम्। इतश्चान्येऽपि प्रभेदाः कुशाग्रीयधिषणैः स्वयमुद्भावनीयाः। तत्र क्वचिदनुगाम्येव धर्मः। क्वचिच्च केवलं बिम्बप्रतिबिम्बभावमापन्नः[3]। क्वचिदुभयम्। क्वचिद्वस्तुप्रतिवस्तुभावेन करम्बितं बिम्बप्रतिबिम्बभावम्। क्वचिदसन्नप्युपचरितः। क्वचिच्च केवलशब्दात्मकः।

रसस्यापि वाच्यत्वेन षोढा वक्तुमुचितेयमत आह—**रसादिरिति**। **प्रधानस्यैवेति**। अलंकारस्त्वप्रधानमेवेति भावः। वाच्यतायामपि विरोध इत्यनुषङ्गः। **उभयं अनुगामित्वं**

---

१ अर्थात् मुख्यतया वाच्यतादशायामपि अलंकाराः अलंकारान्तरेणोपस्कार्या भवन्ति।

२ पूर्वस्य प्रधानस्य (ताटङ्कस्य) अपेक्षया अन्यस्य (कामिनीकर्णस्य) सांनिध्यात् ताटङ्कस्य साक्षात्; रत्नानां च परम्परया कर्णशोभकतया तदलंकारत्वम् [तस्याः (कामिन्याः) अलंकारत्वम्]।

३ आपन्नः स धर्म इति पूर्वान्वयः।

तत्राद्यो यथा—

'शरदिन्दुरिवाह्लादजनको रघुनन्दनः ।
वनस्रजा विभाति स्म सेन्द्रचाप इवाम्बुदः ॥'

अत्र पूर्वार्धे सकृन्निर्देशाद्धर्मोऽनुगामी ।

केवलबिम्बप्रतिबिम्बभावापन्नः 'कोमलातपशोणाभ्र—' इत्यत्र बोध्यः । द्वितीयार्धे तूभयम् ।

तृतीयोऽपि त्रिविधः—विशेषणमात्रयोर्विशेष्यमात्रयोस्तद्युगलयोर्वा वस्तुप्रतिवस्तुभावेन करम्बितः ।

तत्राद्यो यथा—

'चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् ।
तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥'

अत्र चलनाधीरत्वयोर्विशेषणयोर्वस्तुत एकरूपयोरपि शब्दद्वयेनोपादानाद्वस्तुप्रतिवस्तुभावः । तद्विशेषणकयोश्च भृङ्गनयनयोर्बिम्बप्रतिबिम्बभावः । इति तत्करम्बितोऽयमुच्यते ।

तत्र द्वितीयो यथा—

आलिङ्गितो जलधिकन्यकया सलीलं
लग्नः प्रियंगुलतयेव तरुस्तमालः ।
देहावसानसमये हृदये मदीये
देवश्चकास्तु भगवानरविन्दनाभः ॥'

---

बिम्बप्रतिबिम्बभावं च । अयं चोक्तान्तर्गतोनतिरिक्तो भेदः । अत एव वक्ष्यति—**तृतीयोऽपि त्रिविध इति** । षष्ठ इति च । वनस्रजा आपादतलावलम्बिमालया ।

---

१ शरदिन्दुरितिपद्यस्य द्वितीयार्धे । अत्र हि विभाति सेति मेघ-रामयोरनुगामी । वनमालेन्द्रधनुषोरभेदरूपश्च बिम्बप्रतिबिम्बभावापन्नः इत्युभयमपि । द्वितीयार्धे इत्यस्य 'काषायवसनो यातीत्यादौ' इति टीकयन्नागेशस्तु भ्रान्तः । कुङ्कुमालेपादेर्यतिमात्रविशेषणतया साधारणत्वाभावेन उपमाया एवाभावात् ।

२ चलनाधीरत्वे विशेषणे ययोस्तयोर्विशेष्ययोः ।

अत्रालिङ्गितत्वलग्नत्वयोर्वस्तुप्रतिवस्तुभावः । तद्विशेष्ययोश्च[1] जलधिकन्याप्रियंगुलतयोर्बिम्बप्रतिबिम्बभावः । इत्ययमपि तत्करम्बित एव ।

तत्र तृतीयो यथा—

'दशाननेन दृप्तेन नीयमाना बभौ सती ।
द्विरदेन मदान्धेन कृष्यमाणेव पद्मिनी ॥'

अत्र विशेषणयोर्दृप्तत्वमदान्धत्वयोर्विशेष्ययोश्च नीयमानत्वकृष्यमाणत्वयोर्वस्तुप्रतिवस्तुभावेनोभयतः संपुटितो दशाननद्विरदयोर्बिम्बप्रतिबिम्बभावः । इत्ययमपि तत्करम्बितः ।

'विमलं वदनं तस्या निष्कलङ्कमृगाङ्कति' इत्यत्र वैमल्यनिष्कलङ्कत्वयोर्वस्तुत एकरूपयोर्बिम्बप्रतिबिम्बभावनिर्मुक्तं वस्तुप्रतिवस्तुभावमापन्नयोरुपमानिष्पादकत्वं यद्यस्ति तदा शुद्धं वस्तुप्रतिवस्तुभावमापन्नोऽप्येष षष्ठो धर्मः । न च 'कोमलातपशोणाभ्रसंध्याकालसहोदरः' इत्यादौ यतिसंध्याकालयोरुपमायां धर्मान्तरस्यानवगमात्कुङ्कुमालेपकषायवसनयोः कोमलातपशोणाभ्रयोश्च बिम्बप्रतिबिम्बभावो यथावश्यमभ्युपेयः, प्रकृते तु न तथा वस्तुप्रतिवस्तुभावः । वदनमृगाङ्कयोः सौन्दर्यरूपसाधारणधर्मस्य प्रतीयमानत्वेन धर्मान्तरानपेक्षणादिति वाच्यम् । एवं तर्हि 'यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इति भवभूति-

द्वितीयार्धे तु 'काषायवसनो याति' इत्यादौ । **यद्यस्ति** तदेत्यनेनारुचिः सूचिता । तद्बीजं तु—एकोऽप्यर्थो भिन्नशब्देनोपात्तो भिन्न इव प्रतीयते । अत एव 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ 'रक्त एवास्तमेति च' इति पाठे दुष्टतेति प्राञ्चः । प्रकृते संबन्धिभेदादपि भेदप्रत्ययस्तयोः । भिन्नरूपेण प्रतीयमानस्य च न साधारणता । साधारणीकरणस्य च न कश्चिदुपायः, विना बिम्बप्रतिबिम्बभावापन्नैकधर्मसंबन्धित्वम् । तथा च शब्दाद्भेदेन प्रत्यये, संबन्धिभेदाच्च भेदप्रत्यये, बिम्बप्रतिबिम्बभावापन्नैकधर्मसंबन्धित्वेन तयोरभेदाध्यवसाये साधारणत्वमस्येति कथं शुद्धस्योपमानिष्पादकत्वम् । अत एव प्राञ्चः बिम्बप्रतिबिम्बभावकरम्बित एवायमित्याहुरिति । **प्रकृते तु न तथेति** । तथा तु प्रकृते नेत्यर्थः ।

१ ते आलिङ्गितत्वलग्नत्वे विशेष्ये ययोः, अर्थात् आलिङ्गित-लग्नेति-विशेष्यद्वयस्य विशेषणीभूतयोः । जलधिकन्यया आलिङ्गितः, प्रियङ्गुलतया लग्न इत्यन्वये जलधिकन्या प्रियङ्गुलता च विशेषणम्, आलिङ्गित इत्यादि च विशेष्यमित्यर्थः ।

पद्येऽपि प्रतीयमानेन सौन्दर्येणैव सामान्येन निर्वाहे कंधरावृन्तयोर्बिम्बप्रतिबिम्बभावस्य वलितत्वाऽऽवृत्तत्वयोर्वस्तुप्रतिवस्तुभावस्य च सकलैरालंकारिकैः स्वीकारो विरुद्धः स्यात्। अतो यथास्थितमेव साधु।

उपचरितो यथा—

'शतकोटिकठिनचित्तः सोऽहं तस्याः सुधैकमयमूर्तेः।
येनाकारिषि मित्रं स विकलहृदयो विधिर्वाच्यः॥'

एषा सीतां विवासितवतः स्वात्मगता रामस्योक्तिः। अत्र काठिन्यं पार्थिवो धर्मश्चित्ते उपचरितः।

केवलशब्दात्मको यथा—

'यत्र वसन्ति सुमनसि मनुजपशौ च शीलवन्तः सर्वत्र समाना मन्त्रिणो मुनय इव।'

अत्रोपमानोपमेयगतस्यार्थस्यैकस्याभावाच्छब्द एव धर्मः।

एवमेतेषां धर्माणां व्यामिश्रणं च संभवति।

१ अयमस्य प्रघट्टकस्य सारः—कोमलातप० इत्यादौ उपमासंपादक-धर्मान्तरानुपलम्भाद् बिम्बप्रतिबिम्बभावो धर्मतया स्वीक्रियते। विमलं वदनम्० इत्यत्र तु वदनमृगाङ्कयोः सौन्दर्यरूपसाधारणधर्मेणैवोपमासिद्धिः स्यात्ततः काऽऽवश्यकता वस्तुप्रतिवस्तुभावस्य साधारणधर्मत्वस्वीकारे इति शङ्का।

उपमासाधनाय येषां पदार्थानां बिम्बप्रतिबिम्बभावो वस्तुप्रतिवस्तुभावो वा साधारणधर्मतया कविना स्वरचनायामाकूतेन सूचितो भवेत्, उपमोपस्करणाय यादृशश्चालंकारिकाणां संप्रदायः, तत्र तदनुसारमेव उपमा उपपादयितव्या। अन्यथा यान्त्या मुहुः० इति भवभूतिपद्येऽपि सौन्दर्येणैव साधारणधर्मेण उपमोपपत्तौ बिम्बप्रतिबिम्बभावादेः स्वीकारस्य काऽऽवश्यकता स्यादिति तत्समाधानम्।

२ वज्रम्।

३ निन्दनीयः।

४ पृथिवीसंबन्धी धर्मः अमूर्ते चित्ते आरोपितः।

५ 'मुनय इव सुमनसि (विदुषि) मनुजपशौ (महामूर्खे) च सर्वत्र समानाः मन्त्रिणः' अत्र उपमाने मुनौ समानपदस्य समदृष्टित्वमर्थः। उपमेये मन्त्रिणि (समः मानः समादरो येषां ते समानाः इत्यर्थः) ततश्चार्थभेदेपि शब्दात्मकः समानधर्मः।

यथा—

'श्यामलेनाङ्कितं भाले बाले केनापि लक्ष्मणा ।
मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बुजायते ॥'

अत्र भालगताङ्क-प्रसुप्तभृङ्गौ बिम्बप्रतिबिम्बभावमापन्नौ क्यङर्थे आचारेऽनुगामिन्य[1]भेदमापद्य स्थितौ ।

यथा वा—

'सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः ।
संध्याशोणाम्बरगतनवेन्दुलेखायितः पातु ॥'

अत्र सिन्दूरसंध्याभ्यां गणाधिपगगनाभ्यां च बिम्बप्रतिबिम्बभावमापन्नाभ्यां [ धर्माभ्यां ][2] संपादिताभेदेन विशिष्टधर्मेणाभेदेनावस्थितः क्यङर्थोऽनुगामी ।

क्वचिद्धेतुहेतुमद्भावेन[3] । यथा—

'खलः कापट्यदोषेण दूरेणैव विसृज्यते ।
अपायशङ्किभिर्लोकैर्विषेणाशीविषो यथा ॥'

---

**गणाधिपगगनाभ्यामिति** । गणाधिपगगनयोर्बिम्बप्रतिबिम्बभावे च बिम्बप्रतिबिम्बभावापन्नसिन्दूरसंध्याविशेषणकारुणत्वशोणत्वे वस्तुप्रतिवस्तुभावापन्ने एव साधारणधर्मे इति तयोरभेदेन विशिष्टधर्मेणेत्युक्तिरिति भावः । **क्यङर्थोऽनुगामीति** । यद्यपि प्रसिद्धौज्ज्वल्यशोभाविशेषादिकमादायाप्याचारोऽनुगामी कर्तुं शक्यते तथापि

---

१ 'मुखमम्बुजायते (अम्बुजवदाचरति)' इत्युक्तया क्यङ्प्रत्ययार्थ आचरणम् उपमेये मुखे, उपमाने अम्बुजे चानुगामि (उभयसंबद्धम्) इत्यवबुध्यते । मुखस्य अम्बुजवदाचरणं च—भालगतस्याङ्कस्य अन्तरासुप्तस्य भृङ्गस्य च बिम्बप्रतिबिम्बभाव( अभेदारोप )रूप एव । एवं च अस्यामुपमायां बिम्बप्रतिबिम्बभावस्य अनुगामिनो धर्मस्य च व्यामिश्रणं जातमित्याशयः ।

२ अयं भावः—वस्तुप्रतिवस्तुभावापन्नाभ्यामरुणत्वशोणत्वाभ्यामन्वितयोः सिन्दूर-सन्ध्ययोर्बिम्बप्रतिबिम्बभावः । तादृशबिम्बप्रतिबिम्बभावापन्न-सिन्दूरसन्ध्याविशिष्टयोर्गणपतिगगनयोश्चापि मिथो बिम्बप्रतिबिम्बभावः । स च क्यङर्थात् आचारात् ( यः उपमानोपमेययोरनुगामी ) अभिन्नः, अर्थात् तादृशधर्मविशिष्टयोर्गणाधिपगगनयोरभेदः ( बिम्बप्रतिबिम्बभावः ) एव स आचाररूपः साधारणधर्मोऽस्ति यद्धेतुना दन्ताङ्कुरचन्द्रलेखयोरुपमा सिध्यति ।

३ व्यामिश्रणमिति पूर्वसंबन्धः । यथा श्यामलेन० सिन्दूरारुण० इति पूर्वोदाहरणयोर्बिम्बप्रतिबिम्बभावः अनुगामिनि धर्मे अभेदेन व्यामिश्रः, तथात्र बिम्बप्रतिबिम्बभावः अनुगामिनि कार्यकारणभावेनेत्यर्थः ।

अत्र कापट्यं विषं च बिम्बप्रतिबिम्बतां गतं दूरतो विसर्जनेऽनुगामिनि हेतुः[1]।

यथा वा—

'रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी।
अन्तः काटवसंपूर्णा सुपक्वेवेन्द्रवारुणी॥'

अत्र रूपवत्त्वदुःखदायित्वयोर्द्वयोरनुगामिनोर्मध्ये क्रौर्यकाटवे बिम्बप्रतिबिम्बभावापन्ने दुःखदायित्वेन सह हेतुहेतुमद्भावेन मिश्रिते, अपरेण तु [2]शुद्धसामानाधिकरण्येन। एवमन्यैरपि व्यामिश्रणं बोध्यम्। प्रकारान्तरं च लक्ष्यानुसारेण सुधीभिः स्वयमुन्नेतुं शक्यम्।

यथा—

'यथा लतायाः स्तबकानतायाः स्तनावनम्रे नितरां समासि।
तथा लता पल्लविनी सगर्वे शोणाधरायाः सदृशी तवापि॥'

अत्र स्तनावनम्राहं स्तबकानताया लताया उपमान[3]मस्मीति गर्वं मा

कवितात्पर्यविषयतास्यैवेति बोध्यम्। तादृशशोभाविशेषयोरैक्यप्रतिपत्तये वानयोर्बिम्बप्रतिबिम्बभाव आवश्यक इत्याहुः केचित्। **अनुगामिनि हेतुरिति**। तयोर्बिम्बप्रतिबिम्बभावं विना भिन्नप्रकरणत्वेन दूरविसर्जने भेदप्रतीत्यानुगामित्वमेव

१ खलस्य सर्पस्य च अत एव दूरतो विसर्जनं क्रियते यतस्तयोर्यथासंख्यं कापट्यं विषं चास्ति। एवं चात्र दूरतो विसर्जने (द्वयोरनुगामिनि) बिम्बप्रतिबिम्बभावापन्नं कापट्यं विषं च हेतुर्विसर्जनं च हेतुमत् (कार्यम्) इत्याशयः।

२ रूपवत्त्वदुःखदायित्वे कामिनीन्द्रवारुण्युभयगामितया अनुगामिनौ धर्मौ। तयोर्मध्यात् दुःखदायित्वेनानुगामिना सह बिम्बप्रतिबिम्बभावापन्नयोः क्रौर्यकाटवयोर्हेतुहेतुमद्भावेन मिश्रणम्। यतो हि कामिन्यां क्रूरत्वम्, इन्द्रवारुण्यां च काटवं दुःखस्य कारणम्। अपरेण (रूपवत्त्वेन) सह तु बिम्बप्रतिबिम्बभावापन्नयोः क्रौर्यकाटवयोः सामानाधिकरण्यमात्रम्। कामिनीन्द्रवारुण्योः (आधारयोः) रूपवत्त्वक्रौर्यादीनां सहाधिष्ठानात्।

३ 'त्वं लतायाः सदृशी' इति दृष्ट्वा त्वं-पदार्थे (कान्तायाम्) उपमेयत्वभ्रमस्तु न कर्तव्यः। 'लतायाः सदृशी' इति वाक्ये लताया उपमानत्वे कान्तायाश्चोपमेयत्वेऽपि 'यथा त्वं लतायाः सदृशी तथा लता तव सदृशी' इति यथातथापदप्रतिपाद्यायामुपमायां कान्ताया उपमानत्वमेव। यतो हि यथापदसंबद्धमुपमानम्, तथापदसंबद्धं चोपमेयं भवति। यथा इन्द्रस्तथा जयपुरेन्द्रः' अत्र यथापदसंबद्धस्य इन्द्रस्य स्फुटमेवोपमानत्वम्। इयं शङ्का न चेत्यादिना स्वयं ग्रन्थकृतैव समाहितेति जिज्ञासुभिरवधातव्यम्।

विदुष्याः। यतः शोणाधराया उपमेयायास्तवापि पल्लविनी लतोपमानं भवतीति वाक्यार्थे यथातथापदप्रतिपाद्या कान्तोपमानिका[1] लतोपमेयिकोपमा निष्पादिका[2]। अस्यां चोपमायां निरूपकतासंबन्धेनोपमानोपमेयगते द्वे उपमे समसदृशशब्दाभ्यां प्रतिपादिते बिम्बप्रतिबिम्बभावमापन्ने साधारणधर्मतया स्थिते। तत्र निरूपकतासंबन्धेन प्रधानीभूतोपमोपमानकान्तागतायामुपमायां प्रतिबिम्बभूतायां गुच्छस्तनयोर्वस्तुप्रतिवस्तुभावापन्ननमननम्रीभवनविशेषणयोर्बिम्बप्रतिबिम्बभावमापन्नयोः साधारणधर्मत्वम्। एवं तेनैव संबन्धेन लतारूपोपमेयगतायां बिम्बभूतायामुपमायामधर[3]-

न स्यादिति भावः। **उपमा निष्पादिकेति**। एवं च वाक्यार्थोपस्कारिकेयमुपमेत्यर्थः। **बिम्बप्रतिबिम्बभावमापन्ने इति**। यद्यपि समसदृशशब्दाभ्यां प्रतिपादितोपमयोर्वस्तुप्रतिवस्तुभाव एव, तथापि तद्विशेषणयोः शोणाधरनायिकास्तवकावनम्रलतयोर्बिम्बप्रतिबिम्बभाव आवश्यक इति भावः। तयोश्च बिम्बप्रतिबिम्बभावे सादृश्यानुयोगित्वमेव साधारणो धर्म इति ध्येयम्। तत्र तयोरुपमयोर्मध्ये। **निरूपकतेति**। प्रतियोगितेत्यर्थः। **तेनैव संबन्धेनेति**। प्रतियोगितासंबन्धेनेत्यर्थः।

---

१ कान्ता उपमानं यस्याम्।

२ यथातथापदप्रतिपाद्या प्रधानभूता सेयमुपमा वाक्यार्थोपस्कारिका। वाक्यार्थसंपादिका च।

३ अस्य प्रघट्टकस्यायं सारः—अस्मिन्पद्ये तिस्र उपमाः। तासु 'यथा त्वं लतासदृशी, तथा लता तव सदृशी' इति यथातथाप्रतिपाद्या वाक्यार्थभूता प्रधानम्। प्रधानभूताया अस्या उपमायाः 'त्वं लतासदृशी', 'लता त्वत्सदृशी' इति द्वे उपमे साधारणधर्मभूते। अङ्गभूते इमे द्वे अपि उपमे परस्परं बिम्बप्रतिबिम्बभावापन्ने। अनयोर्मध्ये 'स्तनावनम्रा त्वं स्तबकानताया लतायाः सदृशी' इत्याकारिकायाः प्रतिबिम्बभूतायाः प्रथमोपमायाः वस्तुप्रतिवस्तुभावापन्नयोर्नम्रीभवन–नमनयोर्विशेषणीभूतौ स्तन–स्तबकौ [ स्तनाभ्याम् आनम्रा इत्यन्वये स्तनौ आनम्रीभवनपदार्थे विशेष्येते इति विशेषणत्वमनयोः ] साधारणधर्मभूतौ, यौ हि मिथो बिम्बप्रतिबिम्बभावापन्नौ। एवं 'पल्लविनी लता शोणाधरायाः तव सदृशी' इति बिम्बभूतायां द्वितीयोपमायाम् अधर–पल्लवौ साधारणधर्मौ, यौ हि मिथो बिम्बप्रतिबिम्बभावापन्नौ। [ अत्र हि बिम्बप्रतिबिम्बभावो वस्तुप्रतिवस्तुभावकरम्बितो नास्तीति पूर्वोपमातो भेदः ]। पूर्वमुदाहृतासु

पल्लवयोः । न च तेन सदृश इत्यादौ तन्निरूपितसादृश्याश्रयस्योपमेयस्य, तस्य सदृश इत्यादौ च तत्संबन्धिसादृश्याश्रयस्योपमानस्य प्रतीतेः सिद्धत्वात्प्रकृते च सदृशीति शब्दान्निवेद्यमानेऽप्युपमानभावे कथं नाम लताया उपमेयतेति वाच्यम् । सदृशशब्दप्रतिपाद्यधर्मभूतोपमायामुपमानत्वेऽपि यथातथाशब्दवेद्योपमायां लताया उपमेयत्वे बाधकाभावात् । एवमन्येऽपि प्रकाराः ।

'यथा तवाननं चन्द्रस्तथा हासोऽपि चन्द्रिका ।
यथा चन्द्रसमश्चन्द्रस्तथा त्वं सदृशी तव ॥'

एभिर्भेदैः प्रागुक्तानां सधर्माणां भेदानां यथासंभवं गुणने बहुतरा भेदा भवन्ति । तथा धर्माणां वाच्यतायां वाच्यधर्मा बहुधोक्ता । व्यङ्ग्यत्वे व्यङ्ग्यधर्मा, धर्मलोपे गदितैव ।

लक्ष्यतायां यथा—

'सर्प इव शान्तमूर्तिः श्वेवायं मानपरिपूर्णः ।
क्षीब इव सावधानो मर्कट इव निष्क्रियो नितराम् ॥'

इत्यत्रोपमानमहिम्ना शान्तमूर्त्यादिशब्दैर्विरुद्धा धर्मा लक्ष्यन्ते ।

**अधरपल्लवयोरिति** । कान्तालताविशेषणयोर्बिम्बप्रतिबिम्बभावमापन्नयोः साधारणधर्मत्वमित्यर्थः । **तन्निरूपितेति** । तत्प्रतियोगिकेत्यर्थः । सादृश्याश्रयस्य तत्प्रतियोगिन इत्यर्थः । **सधर्माणां भेदानामिति** । साधारणधर्मभेदसहितानां पूर्णलुप्तादिभेदानामित्यर्थः । **व्यङ्ग्यत्वे इति** । धर्माणामित्यस्यानुषङ्गः । **लक्ष्यतायामिति** । धर्माणामित्यादिः । **महिम्नेति** । तेषु शान्तमूर्तित्वादेरभावादिति भावः । **धर्मा लक्ष्यन्त इति** ।

---

उपमासु अन्यान्ये नानाविधाः साधारणधर्मा उक्ताः, अत्र तु उपमाया इमे द्वे उपमे एव साधारणधर्मभूते इत्येव नवीनः प्रकार इत्युदाहरणदानस्य विशेषः ।

१ चन्द्रेण सदृशम् इत्युक्तौ चन्द्रनिरूपितं यत्सादृश्यं तदाश्रय इत्यर्थप्रतीत्या चन्द्रः उपमानिरूपकः (उपमानम्), सादृश्याश्रय उपमेयं च उपमाया आधारः (अधिष्ठानम्) भवति । 'चन्द्रस्य सदृशम्' अर्थात् चन्द्रस्य सादृश्यं वहति इत्युक्तौ सादृश्यं चन्द्रस्य संबन्धि भवति तदाधारश्चोपमानं भवति [ चन्द्रसंबन्धि सादृश्यं गृह्यते, तस्याधारः चन्द्र एव स्यात् ] सादृश्यस्य (उपमायाः) निरूपकं च उपमेयं भवति । ततश्च—लतायाः सदृशीत्युक्तौ लता उपमानम् स्यात्कथं लताया उपमेयत्वमिति शङ्का । लतायाः सदृशीति वाक्ये लताया उपमानत्वेपि 'यथा लतायाः सदृशी त्वं तथा लता तव सदृशी' इति वाक्ये तु तस्या उपमेयत्वमेवेति समाधानम् ।

इयं चोपमा मुख्यार्थस्य क्वचित्साक्षादुपस्कारिणी क्वचिच्चोपस्कारकान्तरोपस्करणद्वारा। तत्र साक्षादुपस्कारिणी प्राग्बहुधोदीरिता।

परम्परया यथा—

'नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति बिरुदावलीमहितमन्दिरे बन्दिनः।
इदं तदवधि प्रभो यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः॥'

अत्र मुख्यार्थस्य राजविषयायाः कविरतेरुपस्कारकस्य यदैव तव कोपोदयस्तदैव रिपूणां संपदो भस्मसाद्भविष्यन्तीति वस्तुन उपस्कारिका नयनकोणशोणद्युतेर्युगान्तदहनोपमा। इयं चेवयथावादिशब्दैर्वाचकैः प्रतिपादिता वाच्यालंकारः। लक्ष्यापि चालंकुर्वाणा दृश्यते।

यथा—

'नीवीं नियम्य शिथिलामुषसि प्रकाशमालोक्य वारिजदृशः शयनं जिहासोः।
नैवावरोहति कदापि च मानसान्मे
नाभेर्निभा सरसिजोदरसोदरायाः॥'

अत्रैकोदरप्रभवत्वरूपस्य मुख्यार्थस्य बाधात्तदीय[1]शोभालक्षणसमानांशहरत्वस्य प्रयोजनस्य सत्त्वात्सोदरपदेन सदृशो लक्ष्यते। आर्थी च तत्रोपमा प्रतीय[2]माना। अवरोहतिलक्ष्य[3]स्य विषयतया स्मृतिशून्यीभवनस्य निषेधनेन प्रतीयमानायाः स्मृतेरुपस्कारिका। एवं प्रतिभटप्रतिमल्लादिशब्दानां तदीयन्यग्भवनतदीयशोभारूपसर्वस्वापहरणादेः प्रयोजनस्य सत्त्वात्सादृश्यवति लक्षणैव, न व्यञ्जना। मुख्यार्थस्य बाधात्। प्रयोजने पुनर्व्य[4]ञ्जनैवेति।

लक्ष्यतावच्छेदकेऽपि लक्षणेति मतेनेदम्। **इयं चेति**। उपमेत्यर्थः। तत्र नाभौ। **अवरोहतिलक्ष्यस्येति**। एतत्पदलक्ष्यस्येत्यर्थः। **व्यञ्जनैवेति**। इत्यस्य बोध्यमिति

१ नाभिसंबन्धिनी या शोभा तद्रूपसमानांशहरत्वस्य।

२ प्रतीता भवतीत्यर्थः।

३ (मानसात्) अवरोहतिपदस्य लक्षणीयार्थभूतं यत् विषयरूपया स्मृत्या शून्यीभवनम् (अर्थात् विस्मृतेर्विषयीभवनम्) तन्निषेधनेन।

४ चन्द्रप्रतिभटमित्युक्तयां चन्द्रस्य न्यग्भवनं प्रयोजनमित्याशयः।

क्वचिद्व्यङ्ग्यापि चेयमुपमालंकारः । यथा—

'अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥'

कस्यचिद्विदेशस्थितस्य किरणैरात्मानं संतापयन्तं चन्द्रं प्रत्येषोक्तिः । अत्र च अस्ति मम प्रियायाः कदापि बहिरनिर्गतायाः, अत एव त्वयाप्यदृष्टाया आननं त्वत्सदृशमिति प्रतीयमाना उपमा मूढपदेन ध्वन्यमानायां चन्द्रविषयायां वक्तृगतायामसूयायामलंकारः । एतेनाप्पयदीक्षितैरुपमालक्षणे दत्तमव्यङ्ग्यत्वविशेषणमयुक्तमेव । नहि व्यङ्ग्यत्वालंकारत्वयोरस्ति कश्चिद्विरोधः । प्राधान्येन[1] व्यङ्ग्यतायां तु प्रधानत्वालंकारत्वयोर्विरोधादलंकारलक्षणं तत्र मातिप्रसाङ्क्षीदित्युपस्कारकत्वेन पुनर्विशेषणीयम्, न त्वव्यङ्ग्यत्वेन, प्रागुक्तायामसूयालंकारोपमायामव्याप्त्यापत्तेः । विशिष्टोपमादिस्थले[2] विशेषणानुपमानां वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वम्, सिद्धार्थस्योपस्करणाभावात्तु नालंकारत्वमिति न काप्यसंगतिः ।

यच्चापि "सेयमुपमा संक्षेपतस्त्रिविधा—क्वचित्स्ववैचित्र्यमात्रविश्रान्ता । यथा 'स च्छिन्नमूलः क्षतजेन रेणुः' इत्यादौ । क्वचिदुक्तार्थोपपादनपरा । यथा 'अनन्तरत्नप्रभवस्य' इत्यादौ" । क्वचिद्व्यङ्ग्यप्रधाना

---

शेषः । **विनिभालितमिति** । विशेषेण दृष्टमित्यर्थः । **अत्र चेति** । प्रतीयमानेत्यत्रास्यान्वयः । **प्रतीयमाना उपमेति** । अत्रोपमानस्योपमेयत्वकल्पनात्मकप्रतीपस्यैव व्यङ्ग्यत्वम्, मूढपदस्वारस्यात्, चमत्कारातिशयाच्च । किं हृष्यसीत्येतत्स्वारस्याच्चेति केचित् । **एतेनेति** । एतेनापीत्यर्थः । अपिना प्रागुक्तदूषणसमुच्चयः । **तैरेनेति** । अप्प-

१ अलंकारस्यैव प्राधान्येन व्यङ्ग्यतायाम् ।

२ बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिका या विशिष्टाः (विशेषप्रकारिकाः) उपमाः पूर्वं निदर्शितास्तासु बिम्बप्रतिबिम्बभूतयोर्विशेषणयोर्या अवान्तरा उपमा भवति सा व्यङ्ग्यैव भवति । ननु तस्या निरासाय अव्यङ्ग्यविशेषणदानं न निरर्थकमिति शङ्का । एवंविधोपमायाः प्रधानोपमासाधकतया वाच्यसिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यत्वम् । कस्यचित्पूर्वसिद्धस्यार्थस्यालंकरणं तया न क्रियते अपि तु प्रधानभूता उपमैवालंक्रियते इति तस्या अलंकारत्वमपि नास्तीति तन्निरासार्थं यत्नो व्यर्थ इति समाधानम् ।

सा इति तैरेव द्रविडशिरोमणिभिरभ्यधीयत । तदप्यहृद्यमेव । 'नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव' इति वाच्यवस्तूपस्कारिकायाः शरदिन्दूपमाया अक्रोडीकरणात् । अलंकारभूतोपमासु स्ववैचित्र्यमात्रविश्रान्ताया उपमायाः संग्रहे[1], को नाम ध्वन्यमानायास्तस्या निरासायाव्यङ्ग्यत्वविशेषणदानदुराग्रहः ? अहो महदेवेदमन्याय्यम्—यदलक्षणीयायाः[2] संग्रहः, लक्षणीयायाश्चासंग्रह[3] इति । प्राचीनानां[4] तूपमासामान्यं लक्षयतां ध्वन्यमानाया इवास्या अपि संग्रहो नानुचितः । न तु[5] स्वस्य यत्नेन ध्वन्यमानोपमां निरस्य कण्ठरवेणालंकारभूतोपमालक्षकस्य । यदि च प्रबन्धव्यङ्ग्योपस्कारकत्वेनेयं संगृह्यत इत्युच्यते तदा 'स्ववैचित्र्यमात्रविश्रान्ता' इति स्वोक्तिर्विरुद्धा[6] स्यात् । 'अनन्तरत्नप्रभवस्य' इत्यत्र गुणसमूह-

यदीक्षितैरेवेत्यर्थः । **स्वस्येति** । तवेत्यर्थः । नानुचित इत्यस्यानुषङ्गः । इयं स्ववैचित्र्यमात्रविश्रान्ता । **विरुद्धा स्यादिति** । वस्तुतस्तु उपमासामान्यलक्षणस्यापि प्रकृतत्वेनोपमासामान्यस्यैवायं विभागः । उपमानोपमेयतावच्छेदकयोर्भेदाचास्त्येवोपमितिनिष्पत्तिः । अत एव सेयमुपमेत्येवोक्तम्, न त्वलंकार इति । 'नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव' इत्यत्र तु उक्तार्थोपपादनपरैव मुखकर्तृकनयनकर्मकशिशिरीकरणस्य कव्युक्तस्येन्दूपमयैवोपपत्तेः । उक्तार्थोपपादनेत्यस्य चोक्तार्थस्योपपादनमुक्तार्थे

१ संग्रहे कृते सति । अर्थात्तस्यास्तु संग्रहः कृतः, व्यङ्ग्याया निरासार्थं यत्न इत्याश्चर्यम् ।

२ स्ववैचित्र्यमात्रविश्रान्ता न कस्यचिद्वस्तुनः शोभाकरी, अत एव अलक्षणीया सा ।

३ या स्वयं व्यङ्ग्या सत्यपि प्रधानव्यङ्ग्यस्योपस्कारिका (सा शोभाकरत्वात् लक्षणीया) तस्या असंग्रहः ।

४ ननु प्राचीनैरालंकारिकैरपि स्ववैचित्र्यमात्रविश्रान्तायाः संग्रहः कृतः, को मे दोष इति चेदाह—प्राचीनानां तु० । तैः सामान्यलक्षणं कृतम् । तत्र यथा व्यङ्ग्यायाः संग्रहो नानुचितस्तथा स्ववैचित्र्यमात्रविश्रान्ताया अपि संग्रहो नानुचितः ।

५ यत्नेन ध्वन्यमानोपमां निरस्य कण्ठरवेण अलंकारभूतोपमालक्षकस्य स्वस्य (तव) स्ववैचित्र्यमात्रविश्रान्तायाः संग्रहो न नानुचितः, अपि तु अनुचित एव । इत्यर्थः ।

६ प्रबन्धस्य व्यङ्ग्यो यो वीररसादिस्तस्योपस्कारिका या (यथा सच्छिन्न० संदर्भस्य व्यङ्ग्यभूतो यो वीरस्तस्योपस्कारिका) सा स्ववैचित्र्यमात्रविश्रान्ता कथमिति विरोधः ।

समानाधिकरण एको दोषो दोषत्वेन न स्फुरतीत्यस्यार्थस्य पूर्वार्धप्रतिपादितार्थसमर्थनात्मकस्य सामान्यरूपस्य विशेषरूपोदाहरणप्रदर्शनमन्तरेण सम्यगनाकलनादिन्दुकिरणसमानाधिकरणोऽङ्क उदाहृतः, न तूपमानतया निर्दिष्टः। सामान्याद्विशेषस्य भेदाभावेनोपमितिक्रियाया अनिष्पत्त्या उपमालंकृतेरत्रानवतारादुदाहरणालंकारोऽयमतिरिक्तः । यथा 'इको यणचि' इति वाक्यार्थस्य सामान्यस्य विज्ञानायोकारे दध्युदकेकारस्येवेति वाक्यान्तरेण तद्विशेष उदाह्रियते तद्वदत्रापीति तत्प्रसङ्गे विवेचयिष्यामः।

यच्चाप्पयदीक्षितैः 'लुप्तायां तु नैवं भेदाः। तस्यां साधारणधर्मस्यानुगामितानियमात्' इत्युक्तम्, तन्न 'मलय इव जगति पाण्डुर्वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्रानुगामिधर्मस्याप्रत्ययाच्चन्दनानां पाण्डवानाम्,

---

वोपपादनमित्यर्थद्वयम्, विनिगमनाविरहात् इति न दोष इति चिन्त्यमिदमिति बोध्यम् । उक्तार्थोपपादनपरोपमायास्तदुक्तमुदाहरणं दूषयति—**अनन्तेति**। 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् । एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥' इत्यत्रेत्यर्थः । स्फुरतीत्यस्यार्थस्य तृतीयचरणप्रतिपाद्यस्य। तत्त्वेनानिर्दिष्टत्वे हेतुमाह—**सामान्येति**। **अनवतारादिति**। अग्रे तथा चेति शेषः। **अलंकारोऽयमतिरिक्त इति**। 'अदत्त्वा मादृशो मा भूर्दत्त्वा त्वं त्वादृशो भव' इत्यभिन्नधर्मिकोपमायामुपमानतावच्छेदकोपमेयतावच्छेदकभेदेनोपमितिक्रियानिष्पत्तेरुपमालंकारव्यवहारस्य च सर्वसंमतत्वेन तद्वदिहापि सामान्यधर्मविशेषधर्मयोस्तयोर्भेदेन तन्निष्पत्तेः संभवादुदाहरणालंकारो मास्त्वतिरिक्त इति तदाशयाच्चिन्त्यमेतत् । उदकोकारे दधीकारस्य य इति पाठः । तत्प्रसङ्गे उदाहरणालंकारप्रसङ्गे।

१ गुणसमूहेन समानमधिकरणं यस्य ( गुणसमूहसहवासी ) ।

२ अनन्तरत्नसमानाधिकरणो यस्य हिमः सौभाग्यलोपी न जात इति पूर्वार्धोक्तार्थस्तत्समर्थनात्मकस्य ।

३ इन्दुकिरणैः समानमधिकरणम् ( आधारः ) यस्य ईदृशोऽङ्कः कलङ्कः ।

४ सामान्ये विशेषोऽप्यन्तर्भवतीति न तयोर्मिथो भेदः । उपमितिश्च भिन्नयोर्द्वयोर्भवति ।

५ बिम्बप्रतिबिम्बभावापन्नादिनानाविधानां साधारणधर्माणां भेदवशाद् ये भवन्ति ते । तस्यां तु साधारणधर्मः केवलमनुगामी भवति नान्यविध इत्यर्थः ।

सर्पाणां दुर्योधनादीनां च बिम्बप्रतिबिम्बभावस्यैव[1] प्रतिपत्तेः। न च शब्देनोपात्तत्वं बिम्बप्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः। श्रौतत्वार्थत्वाभ्यां बिम्बप्रतिबिम्बभावस्य द्वैविध्यौचित्यात्। अत एवाप्रस्तुतप्रशंसादौ प्रकृताप्रकृतवाक्यार्थयोरौपम्यमवयवे[2]वबिम्बप्रतिबिम्बभावमूलं संगच्छते।

इयमपि रूपकवत्केवलनिरवयवा, मालारूपनिरवयवा, समस्तवस्तुविषयसावयवा, एकदेशविवर्तिसावयवा, केवलश्लिष्टपरम्परिता, मालारूपश्लिष्टपरम्परिता, केवलशुद्धपरम्परिता, मालारूपशुद्धपरम्परिता चेत्यष्टधा। तत्रोपमायां केवलत्वं मालानन्तर्गतत्वं निरवयवत्वं चोपमान्तरनिरपेक्षत्वम्। इयं च शतशः प्रागेवोदाहृता।

मालारूपनिरवयवा यथा—

आह्लादिनी नयनयो रुचिरैन्दवीव
कण्ठे कृतातिशिशिराम्बुजमालिकेव।
आनन्दिनी हृदि गता रसभावनेव
सा नैव विस्मृतिपथं मम जातु याति॥'

यथा वा—

'कलेव सूर्यादमला नवेन्दोः कृशानुपुञ्जात्प्रतिमेव हैमी।
विनिर्गता यातुनिवासमध्याद्ध्यावभौ राघवधर्मपत्नी॥'

पूर्वमनुगा[3]मिना धर्मेण भिन्नदेशका[4]लावच्छेदेन, अत्र तु बिम्बप्र[5]तिबि-

---

अत एव तस्य द्वैविध्यादेव। इयमपि उपमापि। तत्र तासां मध्ये। इयं च केवलनिरवयवा च। **ऐन्दवीति**। ऐन्दवी रुचिरिवेत्यर्थः। **यातुनिवासेति**। राक्षसनिवासेत्यर्थः।

---

१ येन हि चन्दना इव लोकानन्दनाः पाण्डवा उत्पादिताः। येन च सर्पा इव भयङ्करा दुर्योधनादयो जनिताः।

२ अवयवानाम् आर्थः (अर्थवशादाक्षेप्यः) यो बिम्बप्रतिबिम्बभावस्तन्मूलम्। तथा च शाब्देतरः (आर्थः) अपि आवश्यक इत्याशयः॥

३ पूर्वपद्ये आह्लादिनीत्यादिर्धर्मोऽनुगामी।

४ यौ देशकालौ इन्दुरुच्यादेर्न तौ नायिकायाः।

५ सूर्यस्य कृशानुपुञ्जस्य च यातुनिवासेन सह बिम्बप्रतिबिम्बभावः।

स्वभावमापन्नेनैकदेशकाला[1]वच्छेदेनेति विशेषः । अत्राधिकदीप्तिरूपे वाक्यार्थे उपमे उपस्कारिके । आत्यन्तिकविनाशहेतुत्वेन देदीप्यमानत्वेन च साधारण्येन सूर्यमण्डलस्य, निष्कलङ्कताभिव्यञ्जकत्वेन भस्मीभवनहेतुत्वेन कृशानुपुञ्जस्य च लङ्काप्रतिबिम्बता[2] । मालारूपत्वं चात्रैकोपमेयं[3]कानेकोपमासामानाधिकरण्यात् ।

समस्तवस्तुविषया सावयवा यथा—

'कमलति वदनं यस्यामलयन्त्यलका[4] मृणालतो बाहू ।
शैवालति रोमावलिरद्भुतसरसीव सा बाला ॥'

यथा वा—

'ज्योत्स्नाभमञ्जुहसिता सकलकलाकान्तकान्तवदनश्रीः ।
राकेव रम्यरूपा राघवरमणी विराजते नितराम् ॥'

द्वितीये तमुपपादयति—**अत्रेति** । द्वितीयपद्य इत्यर्थः । **सूर्यमण्डलस्येति** । लङ्काप्रतिबिम्बतेत्यत्रान्वयः । अमायां रावणवधे सति प्रतिपदि सीतानिर्गम इत्येकदेशकालावच्छिन्नत्वं बोध्यम् । **सामानाधिकरण्यादिति** । उपमान्तरनिरपेक्षत्वान्निरवयवत्वमित्यपि बोध्यम् । **कमलतीति** । अत्र चतुर्षु उपमानादाचारे क्विप् । **ज्योत्स्नेति** । ज्योत्स्नाभं

१ एकदेशकालत्वं टीकायां प्रकटम् ।

२ सूर्यमण्डलं चन्द्रकलाया आत्यन्तिकविनाशकारणं दीप्तिशालि च । एवं लंकापि सीताया आत्यन्तिकविनाशकारणम् (अनेकनिवासे तस्या नाशावश्यंभावात्) सौवर्णत्वाद्दीप्तिशालिनी च । अत एव लङ्कायाः प्रतिबिम्बभूतं तत् ।

अग्निपुञ्जोपि सुवर्णप्रतिमाया निष्कलङ्कताभिव्यञ्जको (तस्याः) भस्मीभवनहेतुश्च । एवं लङ्कापि सीताया निष्कलङ्कताभिव्यञ्जिका (स्वस्य) भस्मीभवनहेतुश्च । अत एव अग्निपुञ्जस्यापि लङ्काप्रतिबिम्बत्वम् ।

३ एकमुपमेयं यासु एवंविधानामनेकासामुपमानां सामानाधिकरण्यम् (एकस्थाने समावेशः) ।

४ यस्यां बालायाम् अलकाः अलयन्ति भ्रमरायन्ते । 'यस्याः मलयन्त्यलकाः' इति छेदे 'अलका मलयन्ति सर्पायन्ते' इत्यर्थस्तु हिन्दीरसगङ्गाधरोक्तः कोषप्रमाणसापेक्षः ।

अत्र सर्वेषामुपमानानां शब्दैरेवाभिधानात्समस्तवस्तुविषया, अङ्गोपमाभिनिष्पाद्यमानत्वाच्च साङ्गा भवति ।

एकदेशविवर्तिनी सावयवा यथा—

'मकरप्रतिमैर्महाभटैः कविभी रत्नसमैः समन्वितः ।
कविताऽमृतकीर्तिचन्द्रयोस्त्वमिहोर्वीरमणासि कारणम् ॥'

अत्रोत्तरार्धे उपमितसमास एव, विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् । राज्ञो जलधेरुपमा शब्देनानभिहिताप्यङ्गोपमाभिराक्षिप्ता प्रतीयते, इत्येकदेशविवर्तनादेकदेशविवर्तिनी ।

केवलश्लिष्टपरम्परिता यथा—

'नगरान्तर्महीन्द्रस्य महेन्द्रमहितश्रियः ।
सुरालये खलु क्षीबा देवा इव विरेजिरे ॥'

अत्र श्लेषोपस्थापितेन सुमेरुणा मदिरागारस्योपमा क्षीबानां देवोपमाया उपाय इति श्लिष्टपरम्परिता, अन्योन्योपायतारूपस्यैव परम्परितत्वस्येह परिभाषणात् । मालारूपताविरहाच्च केवला ।

मञ्जु हसितं यस्याः । सकलः पूर्णकलः कलाकान्तश्चन्द्रस्तद्वद्वदनश्रीर्यस्याः । अत्र उदाहरणद्वये । सर्वेषामवयवरूपाणामवयविरूपाणां च । तथा च तेषां तदभिधेयत्वमेव समस्तवस्तुविषयत्वमिति भावः । **अङ्गोपमेति** । अवयवोपमेत्यर्थः । एवमग्रेऽपि । साङ्गा सावयवा । तथा चोपमानां सापेक्षत्वं सावयवत्वमिति भावः । मकरा मत्स्याः । कविता अमृतमिव । कीर्तिश्चन्द्र इव । **विशेषणेति** । मयूरव्यंसकेतीत्यर्थः । **नगरान्तरिति ।** महेन्द्रवत्पूजिता श्रीर्यस्य तस्य राज्ञो नगरमध्ये सुरालये मत्ता देवा इव खलु विरेजिरे इत्यर्थः । **गारस्योपमेति** । सुरालये इतीति भावः । नन्वेवं श्लिष्टत्वेऽपि कथं परम्परितत्वमत आह—**अन्योन्योपायतारूपस्यैवेति** । सावयवायां परस्परसमर्थकत्वेऽपि नोपायता । ज्योत्स्नायां हसितत्वारोपं विनापि औज्वल्यादिना सीतायां राकासाम्यसिद्धेः । इह तु मदिरागारेषु सुमेरूपमां विना क्षीबेषु देवोपमायां न किंचित्साधर्म्यम् । तस्मिंश्च तादृशसादृश्यप्रतीतिमूलाभेदमापन्नं सुरालयत्वनिलमेव । तथा मदिरागारेषु सुमे-

१ एकदेशे ( अवयवे ) विवर्तनात् स्वस्वरूपगोपनेन अन्यथात्वेन वर्तनात् । यद्वा एकदेशे विशेषेण स्फुटतया वर्तनादेकदेशविवर्तिनीति रूपके स्फुटीक्रियेत ।

२ साधर्म्यं च तादृश( श्लिष्टतया एकशब्दोपस्थाप्यतारूप )सादृश्यप्रतीत्या सुरालयः ( मदिरागारम् ) सुरालयात् ( सुमेरोः ) अभेदमापन्नो भवति । ततश्च तादृशसुरालयवृत्तित्वमेव उपायः ।

मालारूपश्लिष्टपरम्परिता यथा—

'महीभृतां खलु गणे रत्नसानुरिव स्थितः ।
त्वं काव्ये वसुधाधीश वृषपर्वेव राजसे ॥'

अत्र श्लेषोपस्थापिताभ्यां पर्वतशुक्राभ्यां राजकाव्ययोरुपमे मेरुवृषपर्वभ्यां राज्ञ उपमयोरुपायः । नन्वत्र पर्वतानामिव राज्ञां शुक्र इव कवित्वे इत्येवंरूपा उपमा कथं प्रत्येतुं[1] शक्या । उपमानोपमेयशब्दयोः पार्थक्याभावादिति चेत्, श्लेषे ह्येकशब्दोपात्तत्वेन रूपेणाभेदाध्यवसानस्येव तेनैव साधर्म्येण सादृश्याध्यवसानस्यापि सुवचत्वात्, तस्यैव च प्रकृते प्रयोज्योपमानुकूलत्वात् ।

केवलशुद्धपरम्परिता यथा—

'राजा युधिष्ठिरो नाम्ना सर्वधर्मसमाश्रयः ।
द्रुमाणामिव लोकानां मधुमास इवाभवत् ॥'

मालारूपशुद्धपरम्परिता यथा—

'मृगतां हरयन्मध्ये वृक्षतां च पटीरयन् ।
ऋक्षतां सर्वभूपानां त्वमिन्दवसि भूतले ॥'

---

रूपमायां च क्षीबेषु देवोपमां विना न साधारणधर्म इत्यन्योन्योपायता । अन्योन्याश्रयपरिहारस्तु रूपकप्रकरणे वक्ष्यते । चस्त्वर्थे, केवलपदोत्तरं वा योज्यः । महीभृतां पर्वतानां राज्ञां च गणे समूहे । रत्नसानुः सुमेरुः । काव्ये शुक्रे कवित्वे च । वृषपर्वेव दैत्यराज इव । तेनैव एकशब्दोपात्तत्वेन साधर्म्येण । मधुमास इव चैत्रमास इव । अत्र मालारूपताविरहात्केवलत्वम्, श्लेषाभावाच्छुद्धत्वम्, अन्योन्योपायतारूपत्वात्परम्परितत्वमिति बोध्यम् । **मृगतामिति** । मृगा इवाचरतां सर्वभूपानां मध्ये हरयन्सिंह-

---

[1] उपमानोपमेये यत्र पृथक्पृथक्शब्दाभ्यामुपतिष्ठतस्तत्रैवोपमाप्रतीतिः । अत्र तु 'महीभृताम्' इत्यादिः श्लिष्ट एक एव श्रूयते, तथा च रूपकप्रतीतिरेव स्यादिति शङ्का । श्लेषे एकशब्दोपात्ततया यथा द्वयोरभेदोऽध्यवसीयते तथैव एकशब्दोपात्ततारूपं साधर्म्यमादाय द्वयोः सादृश्यमपि वक्तुं शक्यम् । ततश्च—एकशब्दोपात्तत्वरूपसाधर्म्येण महीभृताम् (पर्वतानां राज्ञां च) काव्यस्य (शुक्रस्य कवितायाश्च) परस्परमुपमैव 'वृषपर्वेव' इति प्रधानोपमाया अनुकूला । [ रूपकं यत्राङ्गि तत्र अङ्गभूतेषु श्लिष्टार्थेषु अभेदः । उपमा यत्राङ्गिनी तत्र श्लिष्टेष्वङ्गेषु उपमेति सारार्थः ] तथा च अङ्गयोरुपमयोः सिद्धत्वान्न दोष इति समाधानम् ।

उपमानयोः परस्परमुपमेययोश्चानुकूल्ये उपमयोरेषोपायता निरूपिता।

प्रातिकूल्ये उपायता यथा—

'राजा दुर्योधनो नाम्ना सर्वसत्त्वभयंकरः ।
दीपानामिव साधूनां झञ्झावात इवाभवत् ॥'

अत्रोपमानयोर्दीपझञ्झावातयोरन्योन्यमुपमेययोश्च साधुदुर्योधनयोः प्रातिकूल्येऽप्युपमयोः[2] परस्परमानुकूल्यादुपायतैव ।

एवम्—

'सरोजतामथ सतां शिशिरर्तवताधुना ।
दर्भतां सर्वधर्माणां राज्ञानेन विदर्भितम्[3] ।'

इत्यादौ मालारूपतायामपि ।

उपमेयानां स्वस्वोपमानानुपमानानामुपमानतायां[4] रशनोपमा । यथा—

इवाचरन्, वृक्षा इवाचरतां तेषां मध्ये पटीरयंश्चन्दनद्रुरिवाचरन्, त्वं ऋक्षतां नक्षत्राणीवाचरतां तेषां मध्ये भूतले चन्द्रवदाचरसीत्यर्थः । **आनुकूल्ये इति** । अनुकूलताख्यगुणे सतीत्यर्थः । मृगतां हरयन्नित्यत्रापि मृगाधिपत्वादानुकूल्यमेवेति बोध्यम् । एवं प्रातिकूल्ये शुद्धपरम्परितामुदाहरति—**एवमिति** । कमलवदाचरतां सतां मध्ये शिशिरर्तुवदाचरतानेन राज्ञा अधुना दर्भवदाचरतां सर्वधर्माणां मध्ये विदर्भदेशवदाचरितमित्यर्थः । **स्वस्वोपमानानुपमानानामिति** । इदं विशेषणमुपमेयोपमायामतिव्याप्तिवार-

---

१ मृग-मृगाधिपयोर्वृक्ष-चन्दनयोश्च ( उपमा० उपमे० )परस्परं योगानुकूल्यात्पूर्वार्धोक्तस्य उपमाद्वयस्य 'इन्दवसी'ति प्रधानोपमां प्रति उपायता, अत एव परम्परितत्वमित्यर्थः ।

२ अङ्गभूता उपमा 'दीपानामिव', अङ्गिनी च 'झञ्झावात इव' इत्यनयोरङ्गाङ्गितया परस्परमानुकूल्यादुपायता ( साधकता ) । सेयं प्रातिकूल्ये केवलशुद्धपरम्परिता । 'सरोजतामथ' इत्यादि तु प्रातिकूल्ये मालारूपशुद्धपरम्परितेति बोध्यम् ।

३ विदर्भदेशे यथा दर्भा न प्ररोहन्ति तथास्मिन् राज्ञि सर्वधर्मा इत्याशयः ।

४ यत्र उपमेयानि निजोपमानानामुपमानानि न भूत्वा अन्येषामुपमानानि भवन्ति तत्रेत्याशयः । उपमेयोपमायाम् उपमानानि स्वोपमानस्यैव उपमानानि भवन्ति । यथा 'धर्मः अर्थ इव पूर्णश्रीः' अत्र धर्म इत्युपमेयम् 'अर्थो धर्म इव त्वयि' इत्युत्तरवाक्ये स्वोपमानस्य अर्थस्यैव उपमानं भवति । तथा च उपमेयोपमानिरासार्थं 'स्वोपमानानाम् अनुपमानानि यानि उपमेयानि तेषामुपमानतायाम्' इत्युक्तम् ।

'वागिव मधुरा मूर्तिर्मूर्तिरिवात्यन्तनिर्मला कीर्तिः ।
कीर्तिरिव जगति सर्वस्तवनीया मतिरमुष्य विभोः ॥'

इयं धर्मभेदे ।

धर्मैक्ये तु—

'भूधरा इव मत्तेभा मत्तेभा इव सूनवः ।
सुता इव भटास्तस्य परमोन्नतविग्रहाः ॥'

धर्मलोपे तु तस्येत्यस्यानन्तरम् 'भटा इव युधि प्रजाः' इति बोध्यम् । इयमेवंभेदा प्राचीनैर्भेदैर्गुणने वागगोचरं भूमानं भजमाना नेयत्तामर्हतीति दिक् ।

एषैव च यदा सकलेन वाक्येन प्राधान्येन ध्वन्यते तदा परिहृतालंकारभावा ध्वनिव्यपदेशहेतुः । अस्यां चालंकारव्यपदेशः कदाप्यलंकारभावमप्राप्तेपु मञ्जूषादिगतेपु कटकादिष्विवालंकुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनः । क्वचिदसौ शब्दशक्तिमूलानुध्वननविषयः । क्वचिदर्थशक्तिमूलानुध्वननविषयः ।

आद्यो यथा—

'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

यथा वा—

'विमलतरमतिगभीरं सुपवित्रं सत्त्ववत्सुरसम् ।
हंसावासं स्थानं मानसमिह शोभते नितराम् ॥'

अत्रानेकार्थानामपि शब्दानां प्रकरणेन कृतेऽपि शक्तिसंकोचे तन्मूलकेन

---

णार्थम् । **भूधरा इति** । परमोन्नतविग्रहत्वमेकोऽत्र धर्मः । एषैव च उपमैव । **परीति** । त्यक्तालंकारत्वकेत्यर्थः । नन्वेवं कथं तत्रालंकारव्यवहारोऽत आह—**अस्यां चेति** । **धर्ममात्रेति** । उपमात्वेत्यर्थः । मात्रपदेनालंकारत्वव्यवच्छेदः । **अविरलेति** । अयं राजा सार्वभौमः सर्वभूमीश्वरः । उदग्दिग्गजश्च । धारापदं व्यर्थमिति केचित् । 'स कीचकैः–' इतिवत्प्रयोग इत्यन्ये । धनदातॄणामग्रे पूजितमूर्तिः । कुबेराग्रे पूजितमूर्तिश्च । सत्त्वं प्राणी बलं च । रसो जलं शृङ्गारादिश्च । हंसः पक्षी परमात्मा च । **अत्रेति** ।

ध्वननेन प्रतीयमानस्य, सरोवररूपस्यार्थान्तरस्याप्रस्तुतस्याभिधानं मा भूदिति प्रकृताप्रकृतयोरुपमानोपमेयभावः प्रधानवाक्यार्थतया कल्प्यते।

द्वितीयो यथा—

'अद्वितीयं रुचात्मानं दृष्ट्वा किं चन्द्र दृप्यसि।
भूमण्डलमिदं सर्वं केन वा परिशोधितम्॥'

अत्र मूढादिपदाप्रयोगादसूयादेरप्रत्ययान्मुख्यतयोपमैव व्यङ्ग्या।

अथात्र सादृश्यस्य पदार्थान्तरत्वे बोधो विचार्यते—अरविन्दसुन्दर[2]मित्यत्रारविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते। तच्च सुन्दरपदार्थैकदेशेन सौन्दर्येणाभेदसंसर्गेणान्वेति। तेनारविन्दनिरूपितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नमिति धीः। निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याव्युत्पन्न-

---

उदाहरणद्वये इत्यर्थः। **अद्वितीयमिति।** वाशब्दो हेत्वर्थः। **असूयादेरप्रत्ययादिति।** अत्र मूढादिपदाप्रयोगेऽपि किं चन्द्र दृप्यसीत्याक्षेपेणासूया व्यङ्ग्या न वेति सहृदयैर्विभाव्यम्। **लक्ष्यत इति।** अरविन्दपदेनेति शेषः। **अभेदानुसरणमिति।** प्रयोजकसौन्दर्ययोरिति भावः। ननु नित्यसाकाङ्क्षस्थले तथाङ्गीकारेऽप्यत्र न तथेति चेदत एव

---

१ सार्वभौमः (राजा) सार्वभौमः (उत्तरदिग्गजः) इवास्ति। एवम् मानसम् (मनः) मानसम् (सरः) इवास्ति। इत्याकारकः। सा चेयमुपमा वाचकाभावाद् व्यङ्ग्या। दानादिपदानां परिवृत्त्यसहत्वात् शब्दशक्तिध्वननविषयः सेयमुपमा। अद्वितीयमिति पद्ये तु पदानां परिवृत्तिसहत्वादर्थशक्तिरिति ज्ञेयम्।

२ अरविन्दसुन्दरमित्यत्र अरविन्दवत् सुन्दरमित्यर्थप्रतीतावपि सादृश्यवाचकस्याश्रवणात्तदर्थे लक्षणा। उपमायां हि सादृश्यस्य निरूपकं (प्रवर्तकम्) उपमानं भवति। ततश्चात्र—अरविन्दपदेन अरविन्दनिरूपितं यत्सादृश्यं तत्प्रयोजकं लक्ष्यते। सुन्दरपदस्य च सौन्दर्यवदित्यर्थः। ततश्च सुन्दरपदश्रवणे एकदेश(अवयव)भूतं सौन्दर्यं तद्युक्तो धर्मी च प्रतीयते। निपातातिरिक्तयोर्नामार्थयोरभेदेनैवान्वय इत्यनुगमः पूर्वं प्रतिपादितस्तदनुसारं 'अरविन्द' 'सुन्दर' इति प्रातिपदिकयोरपि अभेदान्वय एव स्यादिति स्थितौ—सुन्दरपदार्थस्यैकदेशेन सौन्दर्येण सह अरविन्दपदार्थस्याभेदः कर्तव्यः [एकदेशान्वयो हि 'देवदत्तस्य नप्ता' इत्यत्र सर्वैरेव स्वीकर्तव्यः] ततश्च—अरविन्दनिरूपितसादृश्यप्रयोजकाभिन्नं यत् सौन्दर्यं तद्वता (तद्युक्तेन) सह अभिन्नम् [अत्रापि नामार्थयोरभेदात्] (मुखम्) इति शाब्दबोधः।

'एकदेशान्वयः सर्वत्र नानुमतः' इति मते 'अरविन्दसुन्दर'मिति समासस्यैव अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्ने शक्तिरिति सिद्धस्तादृशोऽर्थबोधः। अन्ये तु—समासघटितस्य अरविन्दपदस्यैव अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नमित्यर्थो लक्षणया। सुन्दरपदं तु तात्पर्यग्राहकम्। यथा प्रभवतीत्यादौ प्रकृष्टभवनं भवतीत्यस्यैवार्थः, 'प्र'उपसर्गस्तात्पर्यग्राहकमात्रः।

त्वाद्भेदानुसरणम् । एकदेशान्वयस्तु देवदत्तस्य नप्तेत्यादाविवात्राप्यभ्युपेयः । 'समासस्यैव विशिष्टार्थे शक्तिः' इत्येके । 'अरविन्दपदमेव लक्षणया सर्वार्थबोधकं सुन्दरपदं तु तात्पर्यग्राहकम्' इत्यपरे ।

तथा अरविन्दमिव सुन्दरमित्यत्रेवार्थे सादृश्येऽरविन्दस्य निरूपितत्वसंसर्गेणान्वयः । तस्य[1] च प्रयोजकतासंसर्गेण सौन्दर्ये । एवं चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नमिति । अरविन्दमिवेत्यत्र त्वरविन्दनिरूपितसादृश्यवदिति[2] निपातजन्योपस्थितिप्रयोज्यप्रकारतानिरूपितविशेष्यता—निपातजन्योपस्थितिप्रयोज्यविशेष्यतान्यतरभिन्नविशेष्यतासंसर्गेण[3] नामार्थप्रकारकबोध एव विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वादिवार्थस्य नञर्थस्येव भेदसंसर्गेण नामार्थविशेष्यत्वे विशेषणत्वे च न दोषः । अरविन्दमिव भातीत्यत्रारविन्दनिरूपितसादृश्यस्य प्रकारतासंबन्धेन धात्व-

मतान्तरमाह—**समासेति** । अत्र मते गौरवान्मतान्तरमाह—**अरविन्देति** । **तथेति** । समस्तवद्व्यस्तेऽपीत्यर्थः । ननु विशेष्यतया नामार्थप्रकारकबोधे विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुत्वात्कथमिवार्थसादृश्येऽरविन्दस्यान्वयस्तस्य च कथं सौन्दर्येऽन्वयोऽत आह—**निपातेति** । उक्तोदाहरणे इवार्थसादृश्ये प्रकारताविशेष्यतान्यतरत्वसत्त्वादन्य-

१ सादृश्यस्य ।

२ इवस्य यद्यपि सादृश्यमेवार्थः, किन्त्वग्रे उपमात्वसिद्धये मुखेनान्वयो विवक्षितः । स च आश्रयाश्रयिभावरूपः । अत एवात्र 'सादृश्यवत्' इति धर्मिप्रधानको बोधः ।

३ एतद्विशेष्यताद्वयभिन्ना या विशेष्यता तत्संबन्धेन यत्र नामार्थं प्रकारीकृत्य (विशेषणीकृत्य) बोधो भवति तादृशशाब्दबोधे एव विभक्त्यर्थस्य विशेष्यतया हेतुत्वम् । अयं भावः—भेदसंबन्धेन प्रातिपदिकार्थः सर्वत्र विभक्त्यर्थे एव विशेषणं भवति, विभक्त्यर्थश्च विशेषणतया धात्वर्थेन प्रातिपदिकान्तरार्थेन वा युज्यते । परं यत्र निपातपदप्रयोगो भवति तत्र निपातार्थः साक्षात्प्रातिपदिकार्थे विशेषणं भवितुमर्हति, विभक्त्यर्थे न । स प्रातिपदिकार्थश्च विभक्त्यर्थे विशेषणं भवितुमर्हति । एवं च—निपातार्थे यत्र विशेष्यता भवेत्, निपातार्थं विशेषणीकृत्य नामार्थे वा विशेष्यता (निपातजन्योपस्थितिप्रयोज्यप्रकारतानिरूपितविशेष्यता) भवेत्, एवंविधं विशेष्यताद्वयं विहाय विभक्त्यर्थस्य विशेष्यतया बोधो नियत इति सारम् । अत्र तु 'इव' निपात एवास्ति, अत एव एतदन्यतरभिन्ना विशेष्यता न, अपि तु अन्यतररूपैव । ततश्च नञर्थो यथा नामार्थस्य विशेष्यं विशेषणं वा भवति [ यथा घटः पटो न, अत्र पटप्रतियोगिकभेदवान् घट इति बोधे नञर्थं प्रति पटः प्रतियोगितासंबन्धेन विशेषणं घटश्च विशेष्यम् । अत्र हि विभक्त्यर्थेन न संबन्धः ] एवमत्रापि इवार्थस्य सादृश्यस्य भेदसंसर्गेण नामार्थं प्रति विशेष्यतया विशेषणतया वा बोधो न दुष्यतीत्याशयः ।

र्थेऽन्वयादरविन्दसादृश्यप्रकारकधीविशेष्य इति। तत्रैव सौन्दर्येणेति धर्मोपादाने तृतीयार्थः प्रयोज्यत्वं धात्वर्थे भाने इवार्थे सादृश्ये वान्वेति। तेन सौन्दर्यप्रयोज्यारविन्दनिरूपितसादृश्यप्रकारकधीविशेष्य इति। तथा गज इव गच्छति, पिक इव रौतीत्यादावुपमानपदानां तत्कर्तृकक्रियायां लक्षणया गजादिगमनादिसदृशगमनाद्यनुकूलकृतिमानिति।

ननु घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयवारणाय धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेण शाब्दबोधं प्रति विशेष्यतया विभक्त्यर्थोपस्थितेर्हेतुत्वम्। एवं च गज इव गच्छति, पिक इव रौतीत्यादौ नेवाद्यर्थस्य सादृश्यस्य धात्वर्थेऽन्वयः संभवति। तस्माद्गजादिसादृश्यस्य गमनादिकर्तर्येवान्वयः स्वगमनादिसदृशगमनादिकर्तृत्वेन समानधर्मेण। इत्थमेव चाख्यातवादशिरोमणिव्याख्यातृ-

न्तरभिन्नत्वनिवेशः। एतेनोक्तकार्यकारणभावव्यवच्छेदः। धात्वर्थमाह—**धीति। तत्रैवेति।** अरविन्दमिव भातीति वाक्य एवेत्यर्थः। तृतीयार्थाभिन्नं प्रयोज्यत्वम् अन्वये कर्तृ। भानस्य तत्प्रयोज्यत्वाभावादाह—**इवार्थ इति। कर्तर्येवेति।** एतेन लक्षणादिव्यवच्छेदः।

१ धीः भानं तत्र विशेष्यः अर्थात् आश्रयः कर्ता (मुखादि)। वैयाकरणानां मते तु—मुखकर्तृकं वर्तमानकालिकम् अरविन्दनिरूपितसादृश्यप्रकारकं भानमिति बोधः।

२ गजो यथा गच्छति तथायम्, इति बोधनतात्पर्यात् गजकर्तृकगमनक्रियायां पिककर्तृकस्वनक्रियायां च लक्षणा।

३ घटाभावं पश्यतीति द्वितीयाविभक्तिवारणाय।

४ अयं भावः—आख्यात(तिङन्तक्रिया)स्थले यत्र धात्वर्थो विशेष्यम् (प्रधानम्) भवति तत्र प्रकारः विभक्तिजन्योऽर्थो भवति। घटो न पश्यतीत्यत्र घटान्वितोऽभावो विभक्त्या उपस्थापितो नास्तीति धात्वर्थम् (दर्शनम्) प्रति न तस्य विशेषणतयाऽन्वयः। ततश्च न कर्मत्वशङ्का।

५ इवार्थस्य सादृश्यस्य (प्रकारतया) धात्वर्थे (गमने) अन्वयो न स्यात्, किन्तु कर्तरि (गजादौ)। कर्तुश्च धात्वर्थेऽन्वयः। यतो हि पूर्वोक्तनियमानुसारं विभक्तिजन्यार्थस्यैव प्रकारतया धात्वर्थे(विशेष्ये)ऽन्वयो भवेत्। निपातभूत इवार्थस्तु न विभक्तिजन्यः। ततश्च गजगमनसदृशगमनानुकूलकृतिमान् इति धात्वर्थेन सह सादृश्यान्वयशाली शाब्दबोधः कथमिति शङ्का।

भिरपि सिद्धान्तितमिति चेत्, नैवम् । गज इव गच्छतीत्यत्र सादृश्यस्य विधेयतया प्रतीतेरपलापापत्तेः[1] । गज इव यः पुरुषः स गच्छति, पुरुषो यः स गज इव गच्छतीति वाक्याभ्यां भिन्नप्रतीत्योरनुभविक-[2]त्वात् । एवं वनं गज इव गृहं देवदत्तो गच्छतीत्यादौ वनादेः सर्वथै-वानन्वयापत्तेश्च[3] । एवं बिम्बप्रतिबिम्बभूतस्य कारकमात्रस्यानन्वयो बोध्यः । तस्माद्गजनिरूपितसादृश्यप्रयोजकगमनाश्रय इत्येव गज इव[4] गच्छतीत्यत्र धीः । कारकोपादाने[5] तूपमानपदानां तत्कर्तृकक्रियायां लक्षणेत्येव साधु । न च प्रागुक्तकार्यकारणभावस्य धात्वर्थनिष्ठेत्यादेर्व्य-

---

समानधर्मेणेत्यस्य पूर्वत्रान्वयः । ननु तस्य तत्त्वेन प्रतीतावेव न मानमत आह—**गज इवेति । अनन्वयो बोध्य इति** । वस्तुतस्तु वनं गज इव रणभूमिं शूरो गच्छतीत्यादौ वनकर्मकगमनानुकूलकृतिमद्गजसदृशः समरभूमिकर्मकगमनानुकूलकृतिमाञ्शूर इत्यादिबोधः । इवशब्देन च बिम्बप्रतिबिम्बभावापन्नवनसमरभूमिविशेषणकगमनमेव धर्मत्वेन बोध्यते । इवादयश्च धर्मत्वेनैव बोधका इति सर्वसंमतम् । गज इव यः पुरुषः स गच्छतीत्यत्र चेवेन गमनान्वित एव शूरत्वादि धर्मत्वेन बोध्यते । पुरुषो यः स गच्छतीत्यत्र तु गमनमेव तथेति तयोर्विशेषोऽप्युपपद्यत एव । उपमाया विधेयत्वं चैतदेव यद्विधेयस्यैव धर्मत्वेनोपमाबोधकबोध्यत्वमिति चिन्त्यमिदम् । वैयाकरणनये तु क्रिययोरेवोपमानोपमेयभावः । गच्छतीत्यस्य चात्रत्योभयत्रान्वयः । गजादिपदानां स्वकर्तृकक्रियायां लक्षणा वेति दिक् । **कारकोपेति** । कर्त्रादीत्यर्थः । अङ्गीकारे दोषमाह—

---

१ गमनगतं सादृश्यं यद् विधेयतया (तात्पर्यविषयतया) प्रतीयते तस्यापलापः स्यात्, कर्तर्येव सादृश्यान्वये कर्त्रोरेव उपमानोपमेयभावात् ।

२ पूर्ववाक्ये कर्त्रोः सादृश्यम्, गमनं च न समानधर्मः । अपि तु स्थौल्यादिना साम्यम् । उत्तरत्र तु उभयकर्तृकयोर्गमनयोरुपमा । कर्त्रैव सह धात्वर्थान्वये तु उभयत्र समाना प्रतीतिः स्यात् ।

३ अत्र हि 'यथा गजो वनं गच्छति तथा देवदत्तो गृहं गच्छति' इति वनगृहयोर्बिम्बप्रतिबिम्बतया सादृश्येऽन्वयः सर्वेषां प्रतीयते, भवद्रीत्या तु केवलं कर्त्रोरेवान्वयः स्यात् । अस्मन्मते तु कारकोपादाने उपमानपदानां तत्कर्तृकक्रियायां लक्षणया तत्क्रियान्वितत्वेन कारकाणामप्यन्वयः ।

४ गज इव इत्यस्य गजनिरूपितं यत्सादृश्यम् इत्यर्थः, गच्छति इत्यस्य (प्रयोजक) गमनाश्रय इति । अर्थात् गजेन सह सादृश्यस्य निमित्तं तादृशं गमनमेवास्ति, तस्याश्रयोऽयमित्याशयः ।

५ अर्थात् कर्मादिकारकं यत्र गच्छतीत्यनेन सह उपात्तं तत्र । कर्त्रादि कारकमिति नागेशटीका तु विचारदरिद्रैव, गजादेः कर्तुः पूर्वत एवोपादानात् । अत एव यत्र बिम्बप्रतिबिम्बभावेन कर्मादिकारकमुपात्तं यथा वनं गज इव गृहं देवदत्तो गच्छतीत्यत्र 'वनकर्मकगजगमनसदृश-गृहकर्मकगमनानुकूलकृतिमान् देवदत्तः' इति बोधः ।

भिचारः, तस्यानङ्गीकारात् । अङ्गीकारे च तूष्णीमारात्पृथगित्याद्यर्थानां धात्वर्थान्वयोऽनुभवसिद्धोऽपलपनीयः स्यात् । कथं तर्हि घटो न पश्यतीत्यादौ घटाभावं पश्यतीति नान्वयबोधः । धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधं प्रति नञ्जन्योपस्थितिमात्रस्य प्रतिबन्धकत्वकल्पनात्[3] । धात्वर्थस्य नामार्थभिन्नत्वेन विशेषणं तु द्वयोस्तुल्यम् । तेन पाको न याग इत्यादौ न व्यभिचारः । इत्यलमप्रसक्तविचारेण ।

अथारविन्दतुल्यो भातीत्यत्र कथं धीः । तुल्यपदार्थस्य निपातभिन्ननामार्थत्वेन धात्वर्थे भेदेनान्वयायोगात् । तादृशतुल्यत्वादेर्भानोद्देश्यतावच्छेदकत्वे भानमात्रविधेयतायां विवक्षितार्थाप्रतीतिः । न च तुल्यपदेन तुल्यत्वप्रकारको लक्षणयोपस्थापितो ह्यभेदेन धात्वर्थेऽन्वेष्यतीति वाच्यम् । क्रियाविशेषणत्वेनारविन्दतुल्यशब्दस्य नपुंसकत्वापत्तेरिति चेत्, व्याकरणस्य सिद्धानुवादकत्वेन स्तोकं पचतीत्यादिमात्रविषयत्वेन

अङ्गीति । उक्तदोषमुद्धरति—**कथमिति** । मात्रपदेनेतरनिपातव्यवच्छेदः । **कथमिति** । भेदेनाभेदेन वेत्यर्थः । तत्र नाद्य इत्याह—**तुल्येति** । उक्तव्युत्पत्तेरिति भावः । नाप्यभेदेनेत्याह—**न चेति** । धात्वर्थे भानरूपे । **उपपत्तेरिति** । तथा चोक्तरीत्या अभेदेनैवा-

१ यतो ह्यत्र सादृश्यस्य धात्वर्थेन सहान्वयः कृतः, पूर्वोक्तकार्यकारणभावानुसारं तु सादृश्यस्य कर्त्रैव अन्वय उचितो न धात्वर्थेन ।

२ तूष्णीं तिष्ठति, आराद् वसति, इत्यादौ विभक्त्यनुपस्थापनयोरपि तूष्णीम् आरात् इति निपातार्थयोर्धात्वर्थेऽन्वयः सकलानुभवसिद्धः ।

३ अर्थात् धात्वर्थं विशेष्यीकृत्य (प्रधानीकृत्य) प्रकारता(विशेषणता)संसर्गेण नञ्जन्या उपस्थितिः अन्वयबोधे प्रतिबन्धिका, अर्थात् तत्रान्वयबोधो न भवति । ततश्च नञर्थस्य संबन्धे प्रतिबन्धान्न कर्मताऽऽपत्तिः ।

४ अत्र धात्वर्थपदेन नामार्थ(प्रातिपदिक)भिन्नो धात्वर्थो गृह्यते । तथा च पाको न यागः अत्र नञो धात्वर्थेन संबन्धे शाब्दबोधसिद्धावपि न व्यभिचारः, पाक इत्यादेर्नामार्थत्वात् ।

क्रियाऽव्ययविशेषणानां क्लीबतेष्यते इत्यस्योपपत्तेः[1] । धातोरेव लक्षणया सकलार्थबोधकत्वमितरस्य[2] तात्पर्यग्राहकतेत्यपि केचित् । अरविन्दवत्सुन्दरमित्यत्र वतेः 'तेन तुल्यम्–' इति विहितस्य सादृश्यवदर्थकस्य सादृश्ये[3]

न्वय इति भावः । मतान्तरमाह—**धातोरेवेति** । तथा च तस्य तादृशो विशिष्ट एवार्थ इति नोक्तव्युत्पत्त्यवसर इति भावः । **इत्यपि केचिदिति** । वस्तुतस्तु उपमाविधेयकबोधे तात्पर्ये अरविन्दतुल्यमित्येव साधु, न तुल्य इति । यदि तु विधेयस्य धर्मत्वेनोपमाबोधकबोध्यत्वमेव विधेयत्वमुपमाया इति विभाव्यते तर्हि अरविन्दतुल्यविषयकं भानं भानविषयोऽरविन्दतुल्य इति वा बोधेऽपि भानस्य धर्मत्वेन भानादुपमाया अविधेयत्वमेव । धर्मान्तरस्य तथा भाने तु अरविन्दतुल्य इत्येव प्रयोगः सर्वसंमतः । उपमाया उद्देश्यतावच्छेदकत्वं चेति ध्येयम् । **अरविन्दमिव सुन्दरमित्यत्रेवेति** । वस्तुतस्तु क्रियायास्तुल्यत्वे एव 'तेन तुल्यम्–' इति वतिविधानादरविन्दमिव सुन्दरमित्यादिवत्कथं बोध इति चिन्त्यमिदम् । अत एव ब्राह्मणवदधीते इत्यत्र ब्राह्मणकर्तृकाध्ययने ब्राह्मणपदस्य लक्षणेति महाभाष्यकारादयः । अरविन्दवत्सुन्दरं मुखमित्यत्र च भवतिक्रियाऽध्याहार्या । अरविन्दपदेन च सुन्दरारविन्दभवनं लक्ष्यते । तथा च सुन्दरारविन्दभवनसदृशं सुन्दरं

१ अथारविन्देत्यारभ्य, 'उपपत्तेः' एतत्पर्यन्तस्य संदर्भस्यायमाशयः—निपातभिन्नो नामार्थो धात्वर्थे यद्यन्वेति तदाऽभेदेनैव । स च क्रियाविशेषणमिति व्यपदिश्यते । एतदनुसारं तुल्यत्वप्रकारकतुल्यविशेष्यकस्य तुल्यपदार्थस्य भातीत्यनेन सह कथं योगः ? ननु अरविन्दतुल्य इति हि कर्तुः चरणादेर्विशेषणमित्युद्देश्यतावच्छेदककोटिप्रविष्टम् । भातीत्यनेन तु केवलं भानमात्रं विधीयते । ततश्च विधेयेन भातीत्यनेन सह तुल्यस्यान्वय एव नावश्यक इति तु नोचितम् । अरविन्दतुल्यो भातीति प्रयुञ्जानस्य तुल्यत्वानन्विते भानमात्रे तात्पर्याभावात् । ततश्च अभेदान्वयानुरोधेन तुल्यपदस्य तुल्यत्वप्रकारकतुल्यविशेष्यक इत्यर्थमपहाय तुल्यत्वप्रकारक इति भागमात्रे लक्षणा । लक्षितः तुल्यत्वप्रकारक इत्यर्थोऽभेदेन धात्वर्थे भानेऽन्वेति । एवं च अरविन्दनिरूपिततुल्यत्वप्रकारकाभिन्नं भानमिति बोधः । क्रियाविशेषणतया अरविन्दतुल्यशब्दस्य नपुंसकत्वापत्तिरपि न । व्याकरणं हि सिद्धानुवादकम् ( अर्थात् यथा लोकानां प्रयोगास्तदनुकूलमनुशासनम् ) । ततश्च क्रियाव्ययविशेषणानां क्लीबतेत्यनुशासनस्य प्रसिद्धेषु स्तोकं पचतीत्यादिष्वेव प्रवृत्तिः, नात्र । तस्मात्पूर्वोक्तो बोधो निर्दोष इत्याशयः ।

२ अर्थात् भातीत्यस्यैव अरविन्दतुल्यत्वप्रकारकं भानमित्यर्थः । अरविन्दतुल्य इति तु तात्पर्यग्राहकमात्रः । एवं न अभेदबोधकादिव्युत्पत्तीनामवसर एव नेत्याशयः ।

३ सदृशार्थकस्य तुल्यपदस्य सादृश्यवान् इत्यर्थः । ततश्च तुल्यार्थे विहितस्य 'वत्' प्रत्ययस्यापि सादृश्यवदर्थः । ततश्च लक्षणया तस्य ( वतेः ) सादृश्यमर्थः । तस्य सादृश्यस्य ( पदार्थान्तरत्वे ) सौन्दर्येण सह प्रयोज्यप्रयोजकभावसंबन्धेनान्वयात् 'अरविन्दमिव सुन्दरम्' इतिवत् अरविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नम् ( मुखम् ) इति शाब्दबोधः ।

लक्षणा । तस्य सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयादरविन्दमिव सुन्दरमित्यत्रेव बोधः । एकत्र शक्त्याऽपरत्र लक्षणया च सादृश्यप्रतिपादनाच्छ्रौत्यार्थी चेति ।

अरविन्दवन्मुखमित्यत्र त्वरविन्दनिरूपितसादृश्यवदभिन्नमिति । अरविन्दवत्सौन्दर्यमस्येत्यत्रारविन्दशब्दस्यारविन्दसौन्दर्यलाक्षणिकतयारविन्दसौन्दर्यनिरूपितसादृश्याधिकरणमेतत्संबन्धिसौन्दर्यमिति[1] मुखारविन्दसौन्दर्ययोः सादृश्यबोधे शाब्दे, तयोरभेदाध्यवसायादभिन्नधर्ममूला[2] पश्चान्मुखारविन्दयोरपि सादृश्यधीः । अरविन्देन तुल्यमित्यत्र तृतीयार्थो निरूपितत्वम् । तस्य च सादृश्येऽन्वयादरविन्दनिरूपितसादृश्याश्रयाभिन्नमिति[3] । तत्रैव सौन्दर्येणेति धर्मनिर्देशे तृतीयार्थः प्रयोज्यत्वम् ।

---

मुखभवनमिति शाब्दे बोधे वृत्ते अरविन्दमुखयोः सौन्दर्यधर्मैकृतसादृश्यं व्यञ्जनया बुध्यते । एवमरविन्दवन्मुखमित्यत्रापि अरविन्दभवनसदृशं मुखभवनमित्येव बोधो युक्त इति बोध्यम् । एकत्र अरविन्दमिवेत्यत्र । अपरत्र अरविन्दवदित्यत्र । **सादृश्यवदभिन्नमितीति** । बोध इत्यस्यानुषङ्गः । लक्षणा नेति भावः । अत एव तुः प्रयुक्तः । **सौन्दर्यलाक्षणिकतयेति** । तत्र तस्येवेति वतेरिवार्थे विहितत्वेन सादृश्यार्थकस्य तत्प्रयोजके लक्षणयारविन्दसादृश्यप्रयोजकमेतत्संबन्धिसौन्दर्यमिति बोधे उपपन्ने अरविन्दपदस्यारविन्दसौन्दर्यलक्षणा किंफला किंप्रमाणा चेति चिन्त्यमिदम् । **शाब्दे इति** । वृत्ते इति शेषः । तयोर्मुखारविन्दसौन्दर्ययोः । अभेदेत्यस्य सादृश्यमूलेत्यादिः । **अभिन्नधर्मेति** । सौन्दर्यरूपेत्यर्थः । सादृश्ये तुल्यपदार्थैकदेशे । अभिन्नमितीत्यस्य

---

१ अर्थात् अरविन्दपदस्य अरविन्दसौन्दर्यार्थे लक्षणा, ततश्च अरविन्दपदस्य अरविन्दसौन्दर्यमित्यर्थः । सौन्दर्यं च सादृश्यस्य निरूपकम् (प्रयोजकम्) । तथा च अरविन्दसौन्दर्यनिरूपितम् (प्रयोज्यम्) यत् सादृश्यं तदधिकरणम् (तदाधारः, आश्रयः) अस्य सौन्दर्यम् अर्थात् एतत्संबन्धि सौन्दर्यमित्याशयः । अस्मिन् शाब्दबोधे सौन्दर्यरूपसाधारणधर्मस्य अस्य इत्युपमेये अरविन्दे इत्युपमाने च संबन्धः सुस्पष्टं प्रतीयते ।

अरविन्दसादृश्यप्रयोजकम् एतत्संबन्धि सौन्दर्यमिति नागेशेनोपपादिते शाब्दबोधे तु उपमेयमात्रे सौन्दर्यस्यान्वयः प्रतीयते । अरविन्दवत्सौन्दर्यमस्येत्युक्तौ सहृदयरसिकश्च सौन्दर्यस्योभयत्र संबन्धः । एवं सत्यपि 'अरविन्दसौन्दर्यलक्षणा किंफला' इत्यादिना मुधैव खण्डयन् नागेशमहोदयस्तु स्थूलदृश्वैव ।

२ तयोः उभयसंबन्धिसौन्दर्ययोः सादृश्यमूलकस्य अभेदस्य निश्चयात् अभिन्नधर्म(सौन्दर्य)-मूला, मुखस्य अरविन्दस्य चापि सादृश्यबुद्धिः सिध्यति ।

३ मुखमित्यनेन मध्यान्वये द्वयोरभेदस्यानुरोधादिदम् ।

तेनारविन्दनिरूपितसौन्दर्यप्रयोज्यसादृश्यवदभिन्नमिति । अरविन्दमाननं च सममित्यत्र प्रथमं शब्दात्[1]सादृश्यवदभिन्नमिति बोधे पश्चान्मानसी वैयञ्जनिकी वा परस्परनिरूपितसादृश्यस्य प्रतीतिः प्रसिद्धनिरूपित-सादृश्यस्य वा ।

बिम्बप्रतिबिम्बभावापन्ने तु—

'कोमलातपशोणाभ्रसंध्याकालसहोदरः ।
कुङ्कुमालेपनो याति काषायवसनो यतिः ॥'

इत्यादौ कुङ्कुमालेपनादिविशिष्टो यतिः कोमलातपादिविशिष्टसंध्याकाल-सदृशाभिन्न इति शक्त्या बोधे[2] पश्चात्सादृश्यप्रयोजकधर्माकाङ्क्षायां श्रुतानां कोमलातपादीनामुपमानोपमेयविशेषणानां सादृश्यमूले तादात्म्याध्यवसाने साधारणत्वनिष्पत्तिः । कुङ्कुमालेपकाषायवसनाभ्यामयं यतिरित्यत्र[3] कुङ्कुमा-लेपकाषायवसनयोरसाधारणयोरपि साधारणत्वज्ञानजननद्वारा कल्पनीय-[4]

बोध इति शेषः । एवमग्रेऽपि निरूपितप्रयोज्यते सादृश्यविशेषणे । **अभिन्नमिति** । अरविन्दमाननं चेति शेषः । **परस्परेति** । मुखसादृश्यस्य कमले, कमलसादृश्यस्य मुखे इत्यर्थः । विनिगमकाविरहादिति भावः । प्रसिद्धत्वस्य गमकत्वादाह—**प्रसिद्धेति** । अरविन्देत्यर्थः । **सादृश्यस्य वेति** । प्रतीतिरित्यस्यानुषङ्गः । **पन्ने त्विति** । तदापन्न-धर्मके त्वित्यर्थः । सहोदरशब्दार्थमाह—**सदृशेति** । **तादात्म्येति** । अभेदेत्यर्थः । लक्ष्यान्तरमाह—**कुङ्कुमालेपेति** । **साधारणत्वेति** । सादृश्यमूलाभेदाध्यवसानेनेत्या-दिः । **कल्पनीयेति** । यतिरित्यस्य यतिरिवेत्यर्थः । अन्यत्र अन्यशब्दप्रयोगादिति भावः ।

१ समशब्दात् सादृश्यवदभिन्नम् (सादृश्यवता अभिन्नम्, सदृशम्) अर्थात् मुखमाननं च सादृश्यवत् इति शाब्दबोधः । तदनन्तरं च एकतरसादृश्ये विनिगमकाभावात् परस्पर-सादृश्यस्य अर्थात् कमले मुखसादृश्यस्य मुखे च कमलसादृश्यस्य मानसी व्यञ्जनाजन्या वा प्रतीतिर्जायते । अथवा मुखस्य अरविन्देन सादृश्यं प्रसिद्धम्, अतः प्रसिद्धत्वं विनिगमकमादाय अरविन्दसादृश्यस्य मुखे प्रतीतिर्न परस्परस्येत्याशयेन प्रोक्तम् 'प्रसिद्धनिरूपितसादृश्यस्य वा' । प्रसिद्धम् अरविन्दं तन्निरूपितसादृश्यस्येति तदर्थः । २ अर्थात् शाब्दो बोधस्तु अयमेव । केन कारणेनानयोः सादृश्यमिति आकाङ्क्षायामुपमानोपमेयगतविशेषणानां सादृश्यमूलके अभेद-निश्चये जाते उभयेषां साधारणत्वं निष्पद्यते । ततश्च—एतादृशसादृश्यप्रयोजकधर्ममूला यति-संध्याकालयोः सादृश्यप्रतीतिरित्याशयः । ३ 'कुङ्कुमालेपकाषायवसनाभ्यामयं यतिः । कोम-लातपशोणाभ्रसंध्याकालसहोदरः' इति लक्ष्ये तु । ४ कल्पनीयं यत् द्वयोः (यति—संध्या-कालयोः) सादृश्यं तन्निष्पत्तिप्रयोजकत्वात् कुङ्कुमालेपकषायवसनयोः, सादृश्ये प्रयोज्यत्वे-नान्वयः । अर्थात् द्वयोः सादृश्यस्य प्रयोज्यस्य कुङ्कुमालेपकाषायवसने प्रयोजके । ततश्च—कुङ्कुमालेपकाषायवसनप्रयोज्यं यत् कोमलातपशोणाभ्रसंध्याकालसादृश्यं तद्वदभिन्नो यतिरिति बोधः । ५ धन्यमिदं नागेशस्य साहित्यज्ञानम् ।

सादृश्यनिष्पत्तिप्रयोजकत्वात्प्रयोज्यत्वेन सादृश्येऽन्वयः । एकदेशान्वयः[1] पुनरेषु पक्षेष्वगतिकतयाश्रीयत इत्युक्तमेव ।

सादृश्यस्य समानधर्मरूपत्वे तु अरविन्दसुन्दरं वदनमित्यत्र लक्षणयारविन्दवृत्तिसमानधर्मः प्रतीयते । तस्य चाभेदेन सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयः[2] । अरविन्दमिव सुन्दरमित्यत्रारविन्दपदार्थ आधेयतया[3] संसर्गेण इवपदार्थेन समानधर्मेणान्वेति । शेषं[4] प्राग्वत् । सौन्दर्येणारविन्देन सममित्यत्र सौन्दर्योत्तरतृतीयया धान्येन धनीत्यत्रेव अभेदार्थिकया[5] अन्यया च निरूपितत्वार्थिकया सौन्दर्याभिन्नमरविन्दनिरूपितं यत्सादृश्यं तद्वदभिन्नमिति धीः । क्यङर्थाचारो[6] धर्ममात्रम् । तस्य चोपमानपदेन लक्षणयोपस्थितं तन्निरूपितसादृश्यं प्रयोजकतासंसर्गेणाभेदेन वा विशेषणम् । विशेष्यं चाश्रयतयोपमेयम्[7] । क्यजर्थाचारश्चानुरूपक्रियादिरिति[8] दिक् ।

---

लक्षणयेत्यस्यारविन्दपदस्येत्यादिः । **शेषमिति** । तस्य चाभेदेनेत्यादीत्यर्थः । **अन्यया चेति** । अरविन्दपदोत्तरया चेत्यर्थः । एकदेशान्वयः प्राग्वदेवेत्याह—**सादृश्यमिति** । लुप्तास्थले बोधमाह—**क्यङर्थेति** । सादृश्यस्यातिरिक्तत्वे आह—**प्रयोजकतेति** । धर्मरूपत्वे आह—**अभेदेति** । **विशेष्यमिति** । अस्य चेत्यादिः । तत्र सादृश्ये । ननु

---

१ ननु कुङ्कुमालेपादेः सहोदरपदस्य अर्थे सदृशे अन्वय उचितो न तु सदृशस्यैकदेशे सादृश्ये इति शङ्कायामाह—एकदेशान्वय इति ।

२ अरविन्दवृत्तिसमानधर्माऽभिन्न-सुन्दरत्ववदभिन्नं मुखमिति बोधः ।

३ यतो हि अरविन्दे ( आधारे ) इवपदार्थः समानधर्म आधीयते । ततश्च अरविन्दवृत्तिर्यः समानधर्म इत्यर्थः ।

४ अर्थात् तस्य समानधर्मस्य चाभेदेन सुन्दरपदार्थैकदेशेन सुन्दरत्वेनान्वयः । ततश्च पूर्ववत् अरविन्दवृत्तिसमानधर्माभिन्न-सुन्दरत्ववदभिन्नं वदनमिति बोधः ।

५ प्रकृत्यादिभ्य उपसंख्यानमित्यनुशिष्टया ।

६ अरविन्दायते मुखम् इत्यस्य बोधः सादृश्यस्य पदार्थान्तरत्वे समानधर्मरूपत्वे वा कीदृक् तदाह ।

७ तथा च अरविन्दनिरूपितं यत्सादृश्यं तत्प्रयोजको य आचारः ( मुखवृत्तिनत्तद्धर्मरूपः ) तदाश्रयो मुखमिति पदार्थान्तरत्वे, तदभिन्नो य आचारस्तदाश्रयो मुखमिति समानधर्मत्वे बोधः ।

८ ततश्च चन्द्रायति मुखं [ मुखं (कर्तृ) चन्द्रमिवात्मानमाचरति ] इत्यादौ चन्द्रनिरूपितसादृश्याभिन्नः ( सादृश्यस्य धर्मरूपत्वे ) सादृश्यप्रयोजकः ( इति सादृश्यस्य पदार्थान्तरत्वे ) य आचारस्तदनुकूलव्यापारवन्मुखमिति बोधः ।

तत्रेवादीनां द्योतकत्वमेव न वाचकत्वम्, निपातत्वादुपसर्गवत्। द्योतकत्वं च स्वसमभिव्याहृतपदान्तरेण शक्त्या लक्षणया वा तादृशार्थबोधने तात्पर्यग्राहकत्वेनोपयोगित्वमिति वैयाकरणाः। उपसर्गाणां द्योतकत्वमावश्यकम्। अन्यथा उपास्यते गुरुः, अनुभूयते सुखम्, इत्यादौ गुर्वादेर्लेनाभिधानं न स्यात् धात्वर्थकर्मताविरहात्। इवादीनां तु वाचकत्वम्, बाधकाभावात्। प्रागुक्तहेतुस्त्वप्रयोजकत्वान्न साधकः। अन्यथा अव्ययत्वादिति हेतुना अव्ययमात्रस्यैव द्योतकतापत्तिरिति नैयायिकाः।

अथास्याश्चमत्कारस्यापकर्षकं यावत्तत्सर्वमपि दोषः। कविसमयप्रसिद्धिराहित्यम्, उपमानोपमेययोर्जात्या प्रमाणेन लिङ्गसंख्याभ्यां चाननुरूप्यम्, बिम्बप्रतिबिम्बभावे धर्माणामुपमानोपमेयगतानां न्यूनाधिक्यम्, अनुगामितायामनुपपद्यमानकालपुरुषविध्याद्यर्थकत्वम्, एवमादि।

---

न द्योतकत्वं साध्यम्। अनर्थकनिपातेषु निपातत्ववत्सु द्योतकत्वाभावेन व्यभिचारात्। अत एव द्योत्यं साध्यमाह—**न वाचकत्वमिति**। तथा च वाचकत्वाभावे साध्ये नोक्तव्यभिचार इति भावः। नानार्थभिन्नस्थले शक्त्या बोधने तात्पर्यग्राहकानपेक्षणादाह—**लक्षणयेति**। लेन लकारेण। **प्रयोजकत्वादिति**। 'साक्षात्क्रियते दयिता' इत्यादौ लेन दयितादेरभिधानसिद्धये निपातत्वे द्योतकतावच्छेदकता कल्प्यत इति चिन्त्यमेतत्। **द्योतकतापत्तिरिति**। न चेष्टापत्तिः। स्वरादीनां स्वातन्त्र्येण प्रयोगानापत्तेरिति भावः। अस्याः प्रकृतोपमायाः। समयः संकेतः। **आननुरूप्यमिति**।

---

१ 'निपातत्वात्' इति हेतुना निपातेषु वाचकत्वाभावः साध्यते। ततश्च 'अरविन्दमिव' इत्यत्र अरविन्दनिरूपितसादृश्यम् अरविन्दपदस्यैवार्थः। 'इव'निपातस्तु सादृश्यार्थबोधने तात्पर्यग्राहकमात्र इत्याशयः।

२ स्वेन निपातेन ( इवादिना ) समभिव्याहृतं सहोच्चारितं यत्पदान्तरम् ( अरविन्दादि ) तेन।

३ सादृश्याद्यर्थबोधने।

४ अयं भावः—यद्युपसर्गाणां वाचकत्वं स्यात्तर्हि 'उपास्यते' अत्र सेवनमर्थः 'उप' उपसर्गस्यैव स्यात्, 'आस्' धातोरुपवेशनमात्रार्थकत्वात्। एवमेव 'अनुभूयते सुखम्' अत्रापि प्रत्यक्षीकरणम् उपभोगो वा 'अनु' उपसर्गस्यैवार्थः स्यात्, 'भू' धातोः सत्तामात्रार्थकत्वात्। ततश्च गुरोः सुखस्य च धात्वर्थं प्रति कर्मता न सिध्येत्। [ धातुः 'आस्' 'भू' इति। तत्कर्मत्वं गुर्वादेः कथं संभवति ? ] एवं च 'उपास्यते' इत्यादौ लट्लकारेण गुर्वादेः कर्मणोऽभिहिततया प्रथमा भवतीति कथनमसंगतं स्यात्। तस्मादुपसर्गाणां द्योतकत्वमेव स्वीकर्तव्यमित्याशयः।

५ उपसर्गाणां योगे यथा धात्वर्थकर्मत्वाद्यनुपपत्त्यादिकं बाधकं तथाऽत्र नास्तीत्याशयः।

क्रमेण यथा—

'प्रफुल्लकह्लारनिभा मुखश्री रदच्छदः कुङ्कुमरम्यरागः।
नितान्तशुद्धा तव तन्वि वाणी विभाति कर्पूरपरम्परेव ॥'

'मुनिः श्ववदयं भाति सततं पर्यटन्महीम्।
विनिवृत्तक्रियाजातः श्वापि लोके शुकायते ॥'

'सरसि प्लवदाभाति जम्बीरं सुपचेलिमम्।
आदिकारणतोयौघ इव ब्रह्माण्डमण्डलम् ॥'

एतस्यैव किंचित्पदव्यत्यासे ब्रह्माण्डस्योपमेयतायां चायमेव दोषः।

'द्राक्षेव मधुरं वाक्यं चरितं कौमुदी यथा।
सदैवार्द्राणि चेतांसि सुधेव सुमहात्मनाम् ॥'

'वामाकल्पितवामाङ्गो भासते भाललोचनः।
शम्पया संपरिष्वक्तो जीमूत इव शारदः ॥'

अत्र जीमूतगतो भालस्थलोचनप्रतिबिम्बो नोपात्त इति न्यूनत्वम्। 'भगवान्भवः' इति कृते तु बिम्बस्यैवाभावान्न प्रतिबिम्बापेक्षेति साधु।

'विष्णुवक्षःस्थितो भाति नितरां कौस्तुभो मणिः।
अङ्गारक इवानेकतारके गगनाङ्गणे ॥'

---

नञ्समासोत्तरं भावप्रत्ययः। कालो भूतादिः। पुरुषः प्रथमादिः। **प्रफुल्लेति**। अत्र कह्लारमुखयोः केसरौष्ठयोः कर्पूरवाण्योश्च तत्त्वं तत्संकेताप्रसिद्धम्। कह्लारं पुष्पविशेषः। रदानां दन्तानां छदोऽपवारकः पल्लवः। ओष्ठ इति यावत्। **विनीति**। विशेषेण निवृत्तक्रियासमूहः। अत्र श्वमुन्योः शुकशुनोश्च जात्याननुरूप्यम्। प्लवच्चञ्चलम्। सुपचेलिमं अत्यन्तपक्वम्। **आदिकारणेति**। 'अप एव ससर्जादौ तासु बीजमवासृजत्' इति श्रुतेस्तत्त्वमिति भावः। अत्र प्रमाणत आननुरूप्यम्। तयोरत्यन्तवैलक्षण्यात्। एतत्पोषकमपि सुपचेलिममिति विशेषणम्। पक्वस्यात्यन्तसूक्ष्मत्वात्। **किंचित्पदेति**। इवप्लवत्पदयोरित्यर्थः। 'सरसीव समाभाति' 'प्लवद्ब्रह्माण्डमण्डलम्' इति यावत्। अयमेव प्रमाणतोऽननुरूपताख्य एव। **द्राक्षेति**। अत्र पूर्वार्धे लिङ्गोदाहरणम्। उत्तरार्धे लिङ्गसंख्योदाहरणम्। **वामेति**। वामया पार्वत्या कल्पितं स्वीकृतं वामाङ्गं

---

१ शुकः शुकमुनिः। २-सरसि प्लवत् (तरत्) सुपक्वतया सुवर्णवत्पीतवर्णं जम्बीरमुपमेयम्। तोयौघोपरि दीप्यमानं सुवर्णमयं ब्रह्माण्डं चोपमानम्। जम्बीरस्योपमेयस्य ब्रह्माण्डमुपमानं प्रमाणतो नाऽनुरूपम् (अत्यधिकविस्तीर्णत्वात्)। 'पक्वस्याऽत्यन्तसूक्ष्मत्वात्' इत्यादि नागेशव्याख्यानं तु भ्रमापादकमेव। पक्वं जम्बीरं रसाधिक्येन बृहत्परिमाणं भवति, उत तत्र सूक्ष्मत्वम्?, इत्यादि विशेषविवरणमुपोद्घातस्य ३७ पृष्ठे द्रष्टव्यम्।

अत्र तारकाणां बिम्बाभावादाधिक्यम्। 'विष्णोर्वक्षसि मुक्तालिभासुरे भाति कौस्तुभः' इत्यर्थे तु न दोषः। अत्र विशेषणविशेषणयोर्मुक्तालितारकागणयोर्बिम्बप्रतिबिम्बभावेन वक्षोगगनाङ्गणयोर्विशेषणयोर्बिम्बप्रतिबिम्बभावः, तन्मूला चोपमा।

'रराज राजराजस्य राजहंसः करस्थितः।
हस्तनक्षत्रसंसक्त इव पूर्णो निशाकरः॥'

अत्र रराजेति प्रतिपाद्ये भूतकालावच्छिन्नक्रियाविशेषे राजहंसस्यान्वय इव न निशाकरस्येत्यनुपपद्यमानकालघटितत्वं धर्मस्य।

'रणाङ्गणे रावणवैरिणो विभोः शराः समन्ताद्वलिता विरेजिरे।
निदाघमध्यंदिनवर्तिनोऽम्बरे सहस्रभानोः प्रखराः करा इव॥'

यथा वा—

'आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम्।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा॥'

अत्र शृण्वतीति शत्रा प्रत्यायितेन श्रवणसमकालमेव प्रियाया देहल्यागमनमित्यर्थेनातिशयोक्त्यात्मना[2] गमितस्त्वरातिशयस्तद्गतमौत्सुक्यातिशयं[3] पुष्णाति। कौमुद्युपमा तु तत्परिपोषितं प्रधानीभूतं प्रियगतमौत्सुक्यम्।

---

यस्य सः। शम्पया विद्युल्लतया। जीमूतो मेघः। राजराजस्य कुबेरस्य। **न निशाकरस्येति**। तदीयक्रियाविशेषस्य वर्तमानत्वात्। निशाकरस्याकल्पस्थायित्वात्। एवमग्रेऽपि बोध्यम्। धर्मस्य क्रियाविशेषस्य। अस्यैवोदाहरणान्तरमाह—**यथा वेति**। एवमग्रेऽपि। विभोः श्रीरामस्य। वलितास्तीक्ष्णाः। **ईरितमिति**। वच इति शेषः। तद्गतं नायिकागतम्। तत्परिपोषितं नायिकागतौत्सुक्यातिशयपोषितम्। **औत्सुक्य-**

---

१ मुक्तालिभासुरे अनेकतारके इति हि क्रमशो वक्षसि गगनाङ्गणे इत्यनयोर्विशेषणे। 'मुक्तालि' 'तारकागण' इति तु विशेषणयोरपि विशेषणे, मुक्तालिभिर्भासुरे इत्याद्यन्वये तयोर्विशेषणत्वात् इत्यर्थः। विशेषण--विशेषणयोर्बिम्बप्रतिबिम्बभावात् (हेतोः) विशेषणयोः सः।

२ पूर्वं श्रवणं ततस्तद्दर्शनोत्कण्ठा ततस्तत्रागमनमिति क्रमसत्त्वेपि श्रवणस्य कारणस्य, आगमनस्य च कार्यस्य सहत्ववर्णनात्मिकेत्यर्थः।

३ व्यञ्जितः।

चकितमित्यागमनविशेषणमपि वस्तुतो विचार्यमाणमीक्षणविशेषणीभव-त्तस्यैवानुकूलम् । इति स्थिते भविष्यत्कालावच्छिन्नशिशिरीकरणस्य साधारणधर्मस्योपमेयान्वितत्वमिव नोपमानान्वितत्वम् ।

'एतावति महीपालमण्डलेऽवनिमण्डन ।
तारकापरिषन्मध्ये राजन्राजेव राजसे ॥'

अत्र क्रियायां संबोध्योपमेयान्वय इव नोपमानान्वयः ।

'राजेव संभृतं कोषं केदारमिव कर्षकः ।
भवन्तं त्रायतां नित्यं भयेभ्यो भगवान्भवः ॥'

अत्र प्रार्थ्यमानत्राणकर्तृत्वमुपमेये भव इवोपमानयो राजकर्षकयोर्नास्ति, तयोस्त्राणकर्तृत्वस्य सिद्धत्वात् । यदि तु त्रायत इति प्रार्थनानिर्मुक्तं त्राण-

---

**मिति** । पुष्णातीत्यस्यानुषङ्गः । तस्यैवेक्षणस्यैव । **नोपमानान्वितत्वमिति** । तथा चानुपपद्यमानकालार्थकत्वं सर्वत्र बोध्यम् । एषु सर्वेषु भूतभविष्यत्तत्तत्पदार्थानामेवोपमानीकरणेनान्वयस्य संभवोऽस्त्येवेति चिन्त्यान्येतान्युदाहरणानि । 'त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव' इत्यादि तूदाहर्तुमुचितम् । राजेव चन्द्र इव । **नोपमानेति** । तथा चानुपपद्यमानपुरुषार्थकत्वमत्र बोध्यम् । विध्यादीत्यादिपदग्राह्यप्रार्थनोदाहरणमाह—**राजेवेति** । **नास्तीति** । विशेषणाभावप्रयुक्तविशिष्टाभावोऽत्र । तदाह—**तयोरिति** । **त्रायते** । **इतीति** । लडन्तमिति भावः । लडन्तपक्षे शङ्कते—

---

१ मृगेक्षणाघटितस्येक्षणस्य विशेषणम्, अर्थात् मृगवत् चकितमीक्षणं यस्या इत्यर्थः । एवंप्रकारेण ईक्षणविशेषणीभावो विचार्यो विवेकिनाम् ।

२ उपमेया कान्ता आशास्ये भविष्यत्काले एव लोचने शिशिरीकरिष्यति, उपमानभूता कौमुदी तु सर्वदैव शिशिरीकरोति, न तु भविष्यत्काले एव करिष्यतीत्याशयः ।

३ 'त्वं राजसे' इति मध्यमपुरुषस्य उपमेयेऽन्वयः, राजेव (चन्द्र एव) इति युष्मद्भिन्ने (मध्यमपुरुषो यत्र न भवति) उपमाने नान्वय इति धर्मस्य उपमानोपमेयसाधारणत्वाभावो दोष इत्यर्थः ।

४ राजा कोषम्, कर्षकश्च केदारं त्रायत एवेति त्राणकर्तृत्वस्य सिद्धतया तत्र प्रार्थ्यमानत्वं नास्तीत्यर्थः ।

५ सर्वकालस्थायिनो हि निशाकरकौमुद्यादयः । तथा च भविष्यत्कालिकानां तेषामुपमानीकरणे अनुपपद्यमानकालत्वं नास्ति । त्यक्ष्यामि वैदेहसुतामित्यत्र तु पृथिव्याः पूर्वं त्यक्तत्वाद्भविष्यत्कालान्वयो दुष्टः ।

कर्तृत्वमुच्यते तदा धर्मस्य साधारणत्वान्न दोषः । अथ त्रायत इति प्रार्थ्यमानतानिर्मुक्तेऽपि त्राणकर्तृत्वे न साधारणत्वम् । प्रार्थ्यमानताया इव विधेयतानुवाद्यत्वयोर्भेदकत्वादिति चेत्[1] । सत्यम् । इह हि धर्मलोपरहितायामुपमायां धर्मवाचकशब्दप्रतिपाद्यैः प्रार्थना । भूतभविष्यद्वर्तमानत्वादिभिर्विशेषणैर्विशिष्टधर्मस्योपमानोपमेयसाधारण्याभावे प्रयोजकाभावान्नोपमानिष्पत्तिरिति निर्विवादम् । तत्र विधेयत्वानुवाद्यत्वाभ्यां शब्देनानिवेदिताभ्यां विषयताभ्यां विशिष्टस्य धर्मस्य यदि नास्ति साधारण्यं मास्तु नाम । नह्युदासीनैर्विशेषणैर्विशिष्टस्य धर्मस्य साधारण्यमपेक्षितम्, अपि तु धर्मवाचकशब्दनिवेदितैः । एवं चन्द्रवत्सुन्दरं मुखमित्यत्रापि सुन्दरत्वस्योपमानेऽनुवाद्यत्वे उपमेये च विधेयत्वेऽपि न साधारण्यहानिः[2] ।

ननु

'नीलाञ्चलेन संवृतमाननमाभाति हरिणनयनायाः ।
प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः[3] ॥'

---

अथेति । विधेयतेति । उपमाननिष्ठे तत्रानुवाद्यत्वमुपमेयनिष्ठे तत्र विधेयत्वमिति भावः । प्रार्थ्यमानताया इवेत्यस्य प्रार्थ्यमानतातदभावयोरित्यर्थः । साधारण्याभावे सतीति शेषः । प्रयोजकेति । सादृश्यप्रयोजकसाधारणधर्माभावादित्यर्थः । तत्र तस्यामुपमायाम् । उदासीनैः शब्दाप्रतिपाद्यैः । प्रसिद्धोदाहरणेऽप्येवमेवेत्याह—एवमिति । तथा च तत्कृतभेदेऽपि तस्यानपेक्षितस्य तत्त्वसत्त्वाल्लडन्तपाठे न दोष इत्युक्तं युक्तमेवेति भावः । प्रतीति । यमुनागभीरजलमध्ये प्रतिबिम्बितश्चन्द्र इवेत्यर्थः ।

---

१ त्रायतामिति पाठे प्रार्थ्यमानता यथा द्वयोः साधारणताविघातिनी आसीत्तथा त्रायते इति पाठेपि उपमान(राजादि)निष्ठं त्राणं पूर्वसिद्धमिति तत्रानुवाद्यत्वम्, उपमेयनिष्ठं त्राणं तु नवीनतया इदानीं विधेयमित्युद्देश्यविधेयत्वकृतभेदात्कथं त्राणस्य साधारणधर्मत्वमिति शङ्का ।

२ धर्मसहितायामुपमायां साधारणधर्मस्य शब्दवाच्यता अपेक्षिता । शब्दवाच्ये धर्मे शब्दवाच्यैरेव भूत-भविष्यत्त्वादिविशेषणैर्यदि द्वयोः साधारण्यविघातस्तर्हि उपमायां प्रयोजकस्य साधारणधर्मस्य असंपत्त्या नोपमानिष्पत्तिरिति सर्वसंमतम् । राजेवेति पद्ये तु विधेयानुवाद्यत्वे शब्दवाच्ये न । अत एव शब्दानुपस्थापितविशेषणविशिष्टस्य धर्मस्य साधारणताऽभावेपि न हानिः । धर्मवाचकशब्दनिवेदितैर्विशेषणैर्विशिष्टो धर्मो यदि साधारणो न भवेत्तदैव दोषः परिगण्यते, अत एव चन्द्रवत्सुन्दरमित्यत्र चन्द्रे सुन्दरत्वमनुवाद्यम् ( पूर्वसिद्धत्वात् ), मुखे तु नवीनतया विधेयमिति पार्थक्येऽपि विधेयताऽनुवाद्यत्वयोः शब्दनिवेदितत्वाभावान्न दोष इति समाधानम् ।

३ गभीरनीरस्य अन्तः अभ्यन्तरे मृगाङ्कः चन्द्रः । पद्यस्यास्य छायाविचारः उपोद्घातस्य २८ पृष्ठे द्रष्टव्यः ।

इत्यत्रोपमाने चन्द्रे योगमर्यादया भासमान एणरूपोऽङ्क आननरूपोपमेयविशेषणस्य[1] बिम्बाभावात्कस्य प्रतिबिम्बः स्यात्। अत आधिक्यापादकतया दोषः। न च हरिणनयनसदृशस्य नयनस्योपादानात्तस्यैव[2] बिम्बस्य प्रतिबिम्बः स्यादिति वाच्यम्। तादृशनयनस्य बहुव्रीह्यर्थकान्ताविशेषणतया आननाविशेषणत्वेन बिम्बत्वाभावादिति चेत्, मैवम्। शब्देनाननविशेषणत्वेन तादृशनयनस्याप्रतिपादनेऽपि कान्ताविशेषणत्वेनैवाननवृत्तित्वस्यापि प्रतिपत्तेः। नह्याननमविषयीकृत्य कान्तां विशेष्टुमीष्टे नयनम्, अनुभव[3]विरोधात्। तथापि[4] समभिव्याहारविशेषमापन्नेन शब्देनाप्रतिपादनाच्छाब्दे बोधे नाननस्य नयनविशिष्टत्वेन विषयत्वमिति चेत्, संसर्गत्वे बाधकाभावात्स्वविशिष्टाननसंसर्गेण तादृशनयनस्य कान्ताविशेषणत्वात्।

**योगेति**। बहुव्रीहीत्यर्थः। **स्वेति**। अङ्केत्यर्थः। **तादृशेति**। हरिणनयनसदृशेत्यर्थः। एवमग्रेऽपि। **ईष्टे इति**। नयनस्याननमात्रसंबन्धित्वादिति भावः। तदाह—**अनुभवेति**। शङ्कते—**तथापीति**। तद्वृत्तित्वस्यार्थिकप्रतिपत्तावपीत्यर्थः। **समभीति**। नयनरूपेत्यर्थः। शब्देन हरिणनयनशब्देन। **अप्रतीति**। नयने आननवृत्तित्वस्येत्यादिः। विषयता त्रिविधा—प्रकारता, विशेष्यता, सांसर्गिकी च। तत्राद्ययोरभावेऽप्यन्त्या सुवचेत्याह—**संसर्गत्व इति**। आननस्येत्यादिः। तदेवाह—**स्वविशिष्टेति**।

---

१ उपमेयस्य विशेषणीभूतो यः स्वस्य (एणाङ्कस्य) बिम्बः, तस्याऽभावात्।

२ हरिणनयनसदृशे नयने यस्याः इत्यर्थवाचकहरिणनयनापदे हरिणनयनसदृशं नयनमुपात्तमेव, तस्यैव बिम्बभूतस्यायं प्रतिबिम्बः स्यादिति पूर्वपक्षिणः समाधानम्।

३ अर्थात् हरिणनयनागतं नयनपदं शब्देन कान्ताया विशेषणं सदपि आननस्यापि विशेषणमस्ति, नयनस्य आननमात्रसंबन्धित्वात्। अयं भावः—विषयतासंबन्धेन आनने वर्तमानमेव नयनं कान्ताया विशेषणं भवति, तथा च कान्ताविशेषणमपि आननस्यापि विशेषणं स्यादेव।

४ एवं सत्यपि समभिव्याहारविशेषम् (सहोच्चारणविशेषम्) आपन्नेन शब्देन अर्थात् नयनेत्याकारकेण शब्देन नयने आननवृत्तित्वस्याऽप्रतिपादनात् आननं नयनविशिष्टत्वेन शाब्दबोधस्य विषयो न स्यादिति शङ्का। वास्तवे ह्याननं नयनविशिष्टम्। अत एव स्व(नयन)विशिष्टाननसंसर्गेण हरिणनयनं कान्ताविशेषणं भवितुमर्हति। अर्थात् संसर्गविधया नयनस्य आननविषयतायाः शाब्दबोधे प्रतीतिः स्यात्। अयं भावः—विषयता त्रिविधा। तत्र प्रकारता-विशेष्यता इत्येतयोरसिद्धावपि सांसर्गिकी विषयता स्यादेवेति समाधानम्।

यथाकथंचिदुपमेयवृत्तिताज्ञानस्य बिम्बताप्रयोजकत्वात् । यद्वा कान्ता-विशेषणतया तादृशनयनयोः शाब्दे बोधे वृत्ते पश्चादाननस्य तद्विशेष्य-तया वैयञ्जनिके मानसे वा बोधे [1]बोधकाभावात् । एवं च तादृशवाक्य-प्रयोज्ये ज्ञाने उपमेयविशेषणतया भातस्य तादृङ्नयनस्य बिम्बस्य सत्त्वात्तदर्थं च चन्द्रगतस्यैणरूपस्याङ्कस्य प्रतिबिम्बतयोपादानमावश्यकमे-वेति नाधिक्यं दोषः । कविसमयसिद्धतया चमत्कारापकर्षकत्वाभावेन लिङ्गभेदोऽपि नात्र दोषः । एवं च कविसमयसिद्धतया प्रकारान्तरेण वा प्रागुक्तानां दोषाणां चमत्कारानपकर्षकत्वे नास्त्येव दोषत्वम् ।

यथा—

'नवाङ्गनेवाङ्गणेपि गन्तुमेष प्रकम्पते ।
इयं सौराष्ट्रजा नारी महाभट इवोद्भटा ॥'

एवमन्यत्रापि ज्ञेयम् । शेषं स्मरणालंकारप्रकरणे विकल्पप्रकरणे च वक्ष्यामः । इत्युपमानिरूपणसंक्षेपः ॥

इति रसगङ्गाधरे उपमाप्रकरणम् ।

---

नयनविशिष्टेत्यर्थः । नन्वेवमपि प्रकारतया विशेष्यतया वा उपमेयवृत्तित्वज्ञानस्य बिम्ब-ताऽप्रयोजकत्वात्कथं बिम्बत्वमत आह—**यथाकथंचिदिति** । न तूक्तरीत्यैव । तथा च संसर्गतया तत्त्वसत्त्वात्तत्त्वं सुवचम् । नन्वेवमप्यतिप्रसङ्गापत्तिः । नहि संसर्गतया भासमानस्य शाब्दत्वमत आह—**यद्वेति** । **तादृशेति** । हरिणीयत्वनायकीयत्वविशिष्टे-त्यर्थः । **तद्विशेष्येति** । नयनविशेष्येत्यर्थः । **तादृशेति** । कान्ताविशेषणत्वेन नयन-बोधकेत्यर्थः । साक्षात्तज्जन्यत्वाभावादाह—**प्रयोज्ये इति** । ज्ञाने वैयञ्जनिकादौ । तदर्थं तत्प्रतिबिम्बाकाङ्क्षाशान्त्यर्थम् । एवमाधिक्यदोषं परिहृत्य नीलाञ्चलेनेत्यत्र लिङ्गभेददोष-मुद्धरति—**कवीति** । एवमन्यत्राप्यपवादमाह—**एवं चेति** । तदभावसिद्धौ चेत्यर्थः । तत्रादौ कविसमयसिद्धतयेत्यस्य लक्ष्यमाह—**यथेति** । ननु किं तत्प्रकारान्तरं येनादुष्ट-त्वमत आह—**शेषमिति** । परमं प्रकृतमुपसंहरति—**इत्युपमेति** । चन्द्रालोके तु—'अनेकस्यार्थयुग्मस्य सादृश्ये स्तबकोपमा । श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसौ यथा ॥ स्यात्संपूर्णोपमा यत्र द्वयोरपि विधेयता । पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥' इति भेदद्वयमधिकमुक्तम् ॥ इति रसगङ्गाधरमर्मप्रकाशे उपमाप्रकरणम् ॥

---

१ अर्थात् शाब्दे बोधे तु हरिणसदृशे नयने कान्ताविशेषणे एव । किन्तु शाब्दबोधोत्तरम् आननस्य हरिण(सदृश)नयनविशिष्टतया बोधो व्यञ्जनाजन्यो मानसो वा भवतीति द्वितीयं समाधानम् ।

२ आननम् एणाङ्क इव, अत्र यथाक्रमं नपुंसकपुंलिङ्गयोरुपमेयोपमानभावः ।

अथास्या एव भेद उपमेयोपमा निरूप्यते—

**तृतीयसदृश[1]व्यवच्छेदबुद्धिफलकवर्णनविषयीभूतं परस्परमुपमानोपमेयभावमापन्नयोरर्थयोः सादृश्यं सुन्दरमुपमेयोपमा ॥**

'तडिदिव तन्वी भवती भवतीवेयं तडिल्लता गौरी' इत्यत्र परस्परोपमायामतिव्याप्तिवारणाय भूतान्तम्। अत्र तानवगौरिमभ्यामनुगामिधर्माभ्यां प्रयोजितमुपमाद्वयं न तृतीयं सदृशं व्यवच्छिनत्ति। एकेन धर्मेणैकप्रतियोगिके परानुयोगिके सादृश्ये निरूपितेऽपरप्रतियोगिकस्यैकानुयोगिकस्यापि तेन धर्मेण सादृश्यस्यार्थतः सिद्धतया शब्देन पुनस्तदुक्तिः स्वनैरर्थक्यपरिहाराय तृतीयसदृशव्यवच्छेदमाक्षिपति। प्रकृते चैकेन तानवरूपेण धर्मेण तडित्प्रतियोगिके कामिन्यनुयोगिके सादृश्ये निरूपिते तेनैव धर्मेण कामिनीप्रतियोगिकस्य तडिदनुयोगिकस्य सादृश्यस्यार्थतः सिद्धावपि न गौरत्वेन धर्मेण सिद्धिरिति तदर्थमुपात्तस्य द्वितीयसादृश्यवचनस्य न तृतीयसदृशव्यवच्छेदफलकत्वम्।

'सदृशी तव तन्वि निर्मिता विधिना नेति समस्तसंमतम्।
अथ चेन्निपुणं विभाव्यते मतिमारोहति कौमुदी मनाक्॥'

इति तृतीयसदृशव्यवच्छेदफलकवर्णनविषये सादृश्येऽतिव्याप्तिवारणाय पर[3]स्परमिति। लिङ्गवचनभेदादिदुष्टसादृश्यवारणाय सुन्दरमिति।

---

**उपमाद्वयमिति**। यतोऽतः पुनर्वर्ण्यमानमिति शेषः। एकेनेत्यस्य यत इत्यादिः। तदर्थं तेन धर्मेण सादृश्यसिद्ध्यर्थम्। **सदृशीति**। व्यक्तिरित्यर्थः। **समस्येति**। सर्वेत्यर्थः। विभाव्यते विभावनाविषयीक्रियते। **मतिमिति**। तदेत्यादिः। तदैवं बुद्ध्यारूढं भवति कौमुदी ईषत्तव सदृशीत्यर्थः। अत्र कौमुदीभिन्ने कान्तासादृश्यनिषेधस्य शब्दतः कथनादीषत्सादृश्यस्य चन्द्रिकायां कथनात्तृतीयसदृशव्यवच्छेदः फलितस्तदाह— **तृतीयेति**। **परस्परमिति**। कौमुदीसादृश्योक्तिस्तत्राभाव इति भावः। **दुष्टेति**।

---

१ तृतीयस्य सदृशस्य व्यवच्छेदबुद्धिः फलं यस्य सदृशस्य वर्णनस्य विषयीभूतम् (उप. मे. भावम्)।

२ 'तडिदिव तन्वी' अत्र तानवधर्मेण यथा त्वं तडित्सदृशी तथा तडिदपि त्वत्सदृशी' इति वचनेन अनुक्तावपि अर्थतः स्वयं सिध्यति। एवं स्थितावपि यदि 'तडिदिव तन्वी भवती, भवतीव तडिल्लता तन्वी' इति पुनर्मुखतः प्रोच्येत, तर्हि सेयं पुनरुक्तिर्निरर्थिका माभूदिति 'द्वे एव युवां सदृश्यौ स्तः, तृतीया नास्ति' इति तृतीयव्यवच्छेदः फलति। धर्मद्वयप्रयोजितायां परस्परोपमायां तु न तथेति तद्वारणाय भूतान्तम्।

३ तन्वीकौमुद्योर्नात्र परस्परं सादृश्यं शब्देन वर्णितमित्याशयः।

अथेयमुदाह्रियते—

'कौमुदीव भवती विभाति मे कातराक्षि भवतीव कौमुदी ।
अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥'

इयं च तावद्द्विविधा—उक्तधर्मा व्यक्तधर्मा च । उक्तधर्मा तावदनुगाम्यादिभिः प्रागुक्तैर्धर्मैरनेकधा ।

अनुगामी धर्मो यथा—

'निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोऽर्थः ।
शिव इव गुरुर्गरीयान्गुरुरिव सोऽयं सदाशिवोऽपि तथा ॥'

बिम्बप्रतिबिम्बभावमापन्नो यथा—

'रमणीयस्तबकयुता विलसितवक्षोजयुगलशालिन्यः ।
लतिका इव ता वनिता वनिता इव रेजिरे लतिकाः ॥'

अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां च विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां पुटितः स्तबकस्तनरूपः परस्परं बिम्बप्रतिबिम्बभावापन्नो धर्मः ।

उपचरितो यथा—

'कुलिशमिव कठिनमसतां हृदयं जानीहि हृदयमिव कुलिशम् ।
प्रकृतिः सतां सुमधुरा सुधेव हि प्रकृतिरिव च सुधा ॥'

---

घट इव घटः, पट इव पटः, इत्यादेस्तु सामान्यप्राप्तालंकारत्वेनैव निरास इति भावः । **तवाम्बुजं सममिति** । अत्र तुलितं सममित्युपमावाचकवैलक्षण्यं वक्ष्यमाणक्लिप्क्यङादिवैलक्षण्यमिव दुष्टमिति चिन्त्यमिदम् । **व्यक्तेति** । व्यञ्जितेत्यर्थः । **निगमेति** । वेदसमूहे इत्यर्थः । तथा गरीयान् । **विशेषणेति** । स्तबकवक्षोजयुगलेत्यादिः । एवमग्रेऽपि । **वस्त्विति** । वस्तुतस्तयोरेकत्वादिति भावः । पुटितः संपुटितः । **कुलिशमिति** । अत्र पृथिवीनिष्ठकठिनत्वस्य मनसि, सुधानिष्ठमाधुर्यस्य प्रकृतावुपचारः ।

केवलशब्दात्मको यथा—

'अविरतचिन्तो लोके वृक इव पिशुनोऽत्र पिशुन इव च वृकः।
भारतमिव सचित्तं सचित्तमिवाथ भारतं सकृपम्॥'

व्यक्तधर्मो यथा—

'वारिधिराकाशसमो वारिधिसदृशस्तथाकाशः।
सेतुरिव स्वर्गङ्गा स्वर्गङ्गेवान्तरा सेतुः॥'

अत्रापारत्वादिर्व्यज्यमानो धर्मः। एषा सर्वापि स्फुटे वाक्यभेदे प्रपञ्चिता।

आर्थे तु वाक्यभेदे—

'अभिरामतासदनमम्बुजानने नयनद्वयं जनमनोहरं तव।
इयति प्रपञ्चविषयेऽपि वैधसे तुलनामुदञ्चति परस्परात्मना॥'

अत्र परस्परात्मना तुलनामुदञ्चतीति संक्षिप्ताद्वाक्यादिदमेतेनैतच्चानेन तुलनामुदञ्चतीति वाक्यद्वयं विचारकमुल्लसति। एवं पूर्णालुप्तादयोऽप्यस्या उपमाया इव प्रायशः सर्वेऽपि भेदाः संभवन्ति। ते चामुयैव दिशा सुबुद्धिभिरुन्नेतुं शक्या इति नेह निरूप्यन्ते।

चित्रमीमांसाकृतस्तु प्राचीनं लक्षणमव्याप्त्यतिव्याप्त्यादिभिर्दूषयित्वा

'अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा।
एकधर्माश्रया या स्यात्सोपमेयोपमा मता॥'

**अवीति**। निरन्तरचिन्तत्वस्य पिशुनवृत्तित्वेऽपि वृकावृत्तित्वात्सकृपत्वस्य साधुचित्तवृत्तित्वेऽपि भारतग्रन्थावृत्तित्वाच्छब्द एव समानोऽत्र धर्मः। न चोपचरितत्वं शङ्क्यम्। एकनिष्ठस्यान्यत्रारोपे तत्त्वेऽपि प्रकृते तत्त्वेनाप्रसिद्धत्वात्। अन्तरा आकाशमध्ये, समुद्रमध्ये च। आदिना दुर्घटत्वं सेतुस्वर्गङ्गयोः संगृह्यते। व्यक्तपदार्थं सूचयितुमाह—**व्यज्येति**। **वाक्यभेद इति**। उदाह्रियत इति शेषः। वैधसे विधातृनिर्मिते। उदञ्चति प्रकाशयति। परस्परात्मना परस्पररूपतया। इदं नयनम्। एतेन नयनेन। एवमग्रेऽपि। **विचारकमिति**। विवरणरूपमित्यर्थः। एवमनुगाम्यादिधर्मभेदवत्। अस्या उपमेयोपमायाः। असंभावितभेदवारणाय प्रायश इति। दिशा रीत्या। **प्राचीनेति**। 'उपमानोपमेयत्वं द्वयोः पर्यायतो यदि। उपमेयोपमा सा स्याद्द्विविधैषा प्रकीर्तिता॥' इत्यर्थः। **अव्याप्तीति**। 'तद्वल्गुना युगपदुन्मिषितेन तावत्' इत्यत्राव्याप्तिः। 'रजोभिः

१ अविषु (मेषेषु) रता चिन्ता मनोव्यापारो यस्य ईदृशो वृकः, निरन्तरचिन्तः पिशुनः।
२ सदयं सचित्तम्, कृपाचार्यसहितं च भारतम्।

इति स्वयं लक्षणमाहुः । अस्यार्थः संक्षेपेण सपदकृत्यस्तदुक्तरीत्या सहृदयानां सौकर्यायोच्यते—अन्योन्येनेति । अन्योन्यप्रतियोगिकत्वविशिष्टा व्यक्त्या व्यञ्जनाव्यापारेण वृत्त्यन्तरेण शक्त्या वा बोध्या वेद्या एकधर्माश्रया एकधर्मप्रयोज्या या उपमा सा उपमेयोपमा मतेत्यन्वयः । अन्योन्येनेति विशेषणादिदं तच्च सममित्युभयविश्रान्तोपमाया निरासः । अत्रान्योन्यप्रतियोगिकत्वस्य व्यञ्जन[1]व्यापारमात्रगम्यत्वेनोपमायाश्च शक्तिवेद्यतया परस्परनिरपेक्षेणैकेन व्यापारेणान्योन्यप्रतियोगिकत्वविशिष्टायास्तस्या अबोधनात्, परस्परनैरपेक्ष्यस्यात्र वाकारेणाभिधानात् । एकधर्माश्रयेति विशेषणात् 'रजोभिर्भूरिव द्यौर्घनसंनिभैर्गजैश्च द्यौरिव भूः' इति कस्यचित्पद्यस्यार्थे परस्परोपमायां नातिव्याप्तिः, तत्रोपमाप्रयोजकधर्मैक्याभावात् । भूतलोपमानिकायां प्रयोजकस्य रजसामनुगामिधर्मस्य, नभस्तलोपमानिकायां प्रयोजकस्य घनसदृशगजानां बिम्बप्रतिबिम्बभावापन्नधर्मस्य च भेदात् । व्यक्त्येति च विशेषणं व्यङ्ग्योपमेयोपमासंग्रहार्थमितीदमुपमेयोपमात्वप्रयोजकं लक्षणमिति, तन्न ।

स्यन्दनोद्धतेः' इत्यत्रातिव्याप्तिरिति भावः । तृतीयार्थः प्रतियोगित्वमित्याशयेनाह—**अन्योन्यप्रतीति** । लक्षणाया असंभवादाह—**शक्त्येति** । इवादिसत्त्वे इति भावः । **विश्रान्तेति** । उभयत्र पर्यवसिता न श्रौती तस्यामित्यर्थः । **शक्तीति** । समपदेत्यादिः । ननु मिथो निरपेक्षत्वं न निविष्टमत आह—**परस्परेति** । अन्यथा पक्षान्तरकथनासंगतेरिति भावः । **अर्थ इति** । अर्थरूपायां तस्यामित्यर्थः । **रजसामिति** । प्रयोजकीभूतरजोभिन्नानुगामिधर्मस्येत्यर्थः । समानविभक्तिकत्वस्येव समानवचनत्वस्याभेदान्वये न तन्त्रत्वमिति भावः । एवमग्रेऽपि । घनगजयोर्भेदेन साधारणत्वं कथमत आह—**बिम्बेति** । **प्रयोजकमिति** । अनुगतानतिप्रसक्तलक्षणमात्रं तु 'सदृशस्य तृतीयस्य व्यवच्छेदाय यद्द्वयोः । अन्योन्येनोपमेयत्वमुपमेयोपमा मता ॥' इति द्रष्टव्यम् । अत्रान्योन्येनेति विशेषणम् 'अहमेव गुरुः सुदारुणानाम्' इति प्रतीपविशेषव्यावृत्त्यर्थमिति

१ अयं भावः—'इदं तच्च समम्' अत्र उपमा तु समम् इति शब्दवाच्यतया अभिधागम्या, अन्योन्यप्रतियोगिकत्वम् अर्थात् 'इदं तेन समम्, तच्च अनेन समम्' इति परस्परोपमानभावस्तु व्यञ्जनया गम्यः । ततश्चास्यामुपमेयोपमायां शक्तिव्यापारस्य व्यञ्जनाव्यापारस्य चेत्युभयोरपेक्षणात् । परस्परनिरपेक्षेण एकेन व्यापारेण (व्यक्त्या शक्त्या वा) बोध्यत्वं नास्ति । द्वयोः परस्परनिरपेक्षत्वं तु वाशब्देन प्रोक्तमेव ।

'अहं लतायाः सदृशीत्यखर्वं गौराङ्गि गर्वं न कदापि यायाः।
गवेषणेनालमिहापरेषामेषापि तुल्या तव तावदस्ति॥'

अत्रान्योन्यप्रतियोगिकत्वविशिष्टाया उपमायास्तनुत्वादिरूपैकधर्माश्रयाया वृत्त्यन्तरेण शक्त्या बोधनादुपमेयोपमात्वापत्तेः। न चात्रान्योन्यप्रतियोगिकत्वमुपमायां न प्रतीयते, लतादिसंबन्धिसादृश्याश्रयत्वस्यैवास्मत्पदार्थेऽन्वयादिति वाच्यम्। 'मुखस्य सदृशश्चन्द्रश्चन्द्रस्य सदृशं मुखम्' इत्युपमेयोपमायामव्याप्तेः। न ह्यहं लताया इत्यत्रोपमेयोपमा भवितुमर्हति। गर्वमात्रनिरासपरत्वेनोत्तरार्धोपमायास्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः। अत एव अन्यान्यपि तव सदृशानि सन्त्येव तेषां गवेषणेन किं फलमित्येतदर्थकं गवेषणेनेत्युत्तरार्धं संगच्छते। तृतीयसब्रह्मचारिव्यवच्छेदो ह्युपमेयोपमाजीवितमित्यालंकारिकसिद्धान्तः। अन्यथा 'भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम्' इत्यत्राप्युपमेयोपमात्वनिवारणप्रयासवैयर्थ्यापत्तेः।

भावः। **अहमिति**। लतानुयोगिकसादृश्याश्रयाहमित्यर्थः। अखर्वं महान्तम्। एषापीति। त्वदनुयोगिकसादृश्यप्रतियोगिकेत्यर्थः। अत्रेत्यस्य इतीत्यादिः। तनुत्वेत्यस्य अनुपात्तेत्यादिः। **लतादीति**। लताद्यनुयोगिकसादृश्यप्रतियोगिकत्वस्यैवेत्यर्थः। एवेन सादृश्यव्यवच्छेदः। सदृशादिपदानां धर्मिबोधकत्वात्। एवं च सादृश्यस्य तत्रान्वये इदम्, न तु तत्रेति भावः। **मुखस्येति**। अत्रापि सदृशपदसत्त्वेन तत्तुल्ययोगक्षेमत्वादिति भावः। नन्वेवं तथा दुर्वचमिति यथैतत्संग्रहस्तथाह—**लताया इति**। अस्यापि संग्रह इष्ट एवेत्यतिव्याप्तिर्नात आह—**न ह्यहमिति**। ननु तन्मात्रपरत्व एव किं बीजमत आह—**अत एवेति**। तत्परत्वेन तस्याः साफल्यादेवेत्यर्थः। उत्तरार्धं तदेकदेशः। अन्यथा तुर्यचरणेनैवेष्टार्थलाभे मध्ये एतत्कथनानर्थक्यं स्पष्टमेवेति भावः। नन्वेवमपि तृतीयसदृशव्यवच्छेदप्रतीतावेवेयमित्यत्र किं विनिगमकमत आह—**तृतीयेति**। **सब्रह्मेति**। सदृशेत्यर्थः। एवमग्रेऽपि बोध्यम्। 'सिद्धान्त' इति पाठः। 'सिद्धान्तात्'

१ परस्परोपमानभावाया इत्यर्थः।

२ अत्र तनुत्वादिर्धर्मोऽर्थबलादाक्षिप्यते। तमेकं धर्ममाश्रित्य सेयमित्यर्थः।

३ 'लतायाः सदृशी, तव तुल्या' इति कथनात् सादृश्याश्रयभूतस्य सदृशस्य धर्मिणस्त्वान्वयो न सादृश्यस्येति एकदेशिनः समाधानम्।

४ पूर्वोक्तप्रकारेण एकधर्माश्रयेतिविशेषणान्निवारणयत्नेऽपि परस्परोपमायां पुनरप्युपमेयोपमात्वं प्रसज्येतैव। तृतीयसदृशव्यवच्छेदफलकत्वस्वीकारे तु नात्र प्रसक्तिः, तृतीयसदृशव्यवच्छेदे तात्पर्याभावात्।

न च तृतीयसदृशव्यवच्छेदफलकत्वमुपमाविशेषणं वाच्यम्, विशेषणान्तरवैयर्थ्यापत्तेः । विशेषणव्यावर्त्यानामाधुनिकविशेषणेनैव वारणात् । अन्योन्यप्रतियोगिकत्वविशिष्टा उपमा एकवृत्तिमात्रवेद्येत्यप्ययुक्तमेव । 'खमिव जलं जलमिव खम्' इत्यादौ खजलयोः सादृश्यान्वये प्रतियोगित्वस्य संसर्गत्वेन वृत्त्यविषयत्वात् । वृत्तिवेद्यानां पदार्थानां संसर्गो वृत्त्यवेद्य इत्यभ्युपगमात् । अन्यथा प्रकारतापत्तेः ।

यदप्यलंकारसर्वस्वकृतोक्तम् 'द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा । तच्छब्देनोपमानोपमेयत्वप्रत्यवमर्शः । पर्यायो यौगपद्याभावः । अत एवात्र वाक्यभेदः' इति, तन्न । अत्र द्वयोरिति व्यर्थम् । एकस्योपमानोपमेयात्मकत्वे 'गगनं गगनाकारम्' इत्यादौ वाक्यभेदाभावेन पर्यायाभावादेवाप्रसक्तेः । यदि च स्फुटत्वार्थमुपमानोपमेयत्वयोग्यतासंपादकलिङ्गवचनभेदराहित्यप्रतिपत्त्यर्थं कविसमयप्रसिद्धिस्फोरणार्थं वा द्वयोरिति ग्रहणं स्यात्, अथापि प्रागुदीरिते 'अहं लतायाः सदृशीत्यखर्वम्' इति पद्ये प्रतिपाद्यायामुपमायामतिव्याप्तेः ।

'तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।

इत्यपपाठः । अन्यथा तस्य तज्जीवितत्वानङ्गीकारे । **वाच्यमिति** । 'अहं लतायाः' इत्यत्रातिव्याप्तिवारणायेदानीं वक्तव्यमित्यर्थः । **विशेषणान्तरेति** । अन्योन्येनेत्यादीत्यर्थः । नन्वेवं कथमुक्तदोषनिरासोऽत आह—**विशेषणेति** । विशेषणान्तरेत्यर्थः । तदुक्तमन्यद्दूषयति—**अन्योन्येति** । **प्रतियोगित्वस्येति** । अनुयोगित्वविशिष्टेत्यादिः । ननु तस्य वृत्तिविषयत्वं कुतो नेत्याह—**वृत्तीति** । उक्तग्रन्थस्यैकवृत्तिमात्रवेद्यत्वे न तात्पर्यं किं तु वृत्तिद्वयवेद्यत्वाभावे । यद्वा तज्जन्यप्रतीतौ यथाकथंचिद्भासमानत्वमेव तन्मात्रवेद्यत्वम् । अस्ति च 'खमिव जलम्' इत्यादौ । नास्ति च तत्रेति तन्निरास इत्याशयेनादोषाच्चिन्त्यमिदम् । **द्वयोरिति** । द्वयोः पर्यायेण तस्मिन्सतीत्यर्थः । अत्रेत्यस्यात इत्यादिः । ननु स्फुटार्थत्वेऽन्येषामपि निवेशः कुतो नात आह—**उपमेति** । तद्भेदेऽपि तद्योग्यतायाः सत्त्वादाह—**कवीति** । इष्टापत्त्या नातिव्याप्तिरत आह—**तदिति** ।

१ 'अन्योन्येनोपमा' इति कथनेन परस्परप्रतियोगिकत्वमुपमायाः प्रोक्तम् । 'खमिव जलम्' अत्र खस्य इवपदार्थेनान्वये खप्रतियोगिकं जलानुयोगिकं सादृश्यमित्यर्थे खपदस्याकाशोर्थः इवस्य सादृश्यमर्थः । प्रतियोगित्वं तु न कस्याप्यर्थः, स तु संसर्गविधया भासते । स्वयं संसर्गस्तु वृत्त्यवेद्यः, इत्युपमेयोपमा 'एकमात्रवृत्तिवेद्या' इति कथनमसंगतमेवेत्याशयः ।

प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥'

इति कालिदासपद्ये प्रतिपाद्यायामुपमानोपमेययोर्युगपदुपमेयोपमानभावायामुपमेयोपमायां वाक्यभेदाभावादव्याप्तेश्च । न चात्रापाततः शब्दैक्येऽपि पर्यवसितो वाक्यभेदोऽस्तीति वाच्यम् । तथापि—

'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥'

इति कस्यचित्कवेः पद्ये परस्परोपमायामतिव्याप्तेः । न चेयमुपमेयोपमेति शक्यते वक्तुम्, सुखसमये दुःखदोऽपि सुखयति, दुःखसमये च सुखदोऽपि दुःखयति इत्येतावन्मात्रस्यार्थस्य विवक्षितत्वात्तृतीयसदृशव्यवच्छेदाप्रतिपत्तेः ।

एवम्—

'रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'

इत्यत्र परस्परोपमायामतिव्याप्तिः । सदृशान्तरव्यवच्छेदफलकत्वेन विशिष्यमाणे तु तस्मिन्नस्मदुक्त एव पर्यवसानम् ।

यच्च विमर्शिनीकारेणोक्तम् "स च वाक्यभेदः शाब्द आर्थश्च । तत्र शाब्दो यथा—'रजोभिः स्यन्दनोद्धूतैः' इत्यादिः । अस्याश्चोपमानान्तरतिरस्कार एव फलम् । अत एवोपमेयेनोपमेत्यन्वर्थाभिधत्वम्" इति, तत्तुच्छम् । न हि 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्रोपमानान्तरतिरस्कारः प्रतीयते । द्वयोरुपमयोरेकधर्मकत्वाभावात्, आद्याया उपमाया अनुगामिधर्म-

**भावायामिति** । उपमेयोपमानात्मिकायामित्यर्थः । विधवतीत्यादीन्याचारक्विबन्तानि । यथासंख्यमन्वयः । **न चेति** । नहीत्यर्थः । तथा च लक्ष्यत्वान्नातिव्याप्तिरिति भावः । मात्रपदव्यवच्छेद्यं स्फुटत्वायाह—**तृतीयेति** । **सदृशान्तरेति** । तृतीयसदृशेत्यर्थः । **विशीति** । विशेषविषयीकृते इत्यर्थः । तस्मिन्नुपमानोपमेयत्वे । **अस्मदिति** । तृतीयसदृशव्यवच्छेदेत्याद्युक्ते एवेत्यर्थः । **विमर्शिनीति** । अलंकारसर्वस्वव्याख्याकारेणेत्यर्थः । **स चेति** । मूलीयत्वेन प्रागुक्त इत्यर्थः । अस्या उपमेयोपमायाः । **उपमानान्तरेति** । तृतीयसदृशेत्यर्थः । हि यतः । **अनुगामीति** । रजोरूपेत्यर्थः । **बिम्बेति** ।

प्रयोज्यत्वात्, द्वितीयायाश्च बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्यत्वात् । यदपि 'परस्परमुपमानोपमेयत्वमुपमेयोपमा' इति लक्षणं विधाय 'सविता विधवति–' इत्यादि प्रागुक्तपद्यं रत्नाकरेणोदाहारि, तच्च तदीयेनैव 'स चोपमानान्तरनिषेधार्थः' इति ग्रन्थेन विरुद्धम् । न ह्यस्मिन्पद्ये उपमानान्तरनिषेधः प्रतीयत इति प्रागेवावेदनात् । प्रतीयत एवेति चेत्, पुनरपि पृच्छ हृदयमेव स्वकीयम् । इत्यलं विवादेन ।

इयं चोपमेयोपमा यदि कस्याप्यर्थस्योत्कर्षाधायिका तदालंकारः । अन्यथा तु स्ववैचित्र्यमात्रपर्यवसितेति । एवमलंकारान्तरेऽपि ज्ञेयम् ।

अथ ध्वन्यमानेयमुदाह्रियते—

'गाम्भीर्येणातिमात्रेण महिम्ना परमेण च ।
राघवस्य द्वितीयोऽब्धिरम्बुधेश्चापि राघवः ॥'

द्वितीयशब्दस्य सादृश्यविशिष्टे शक्त्यभावाद्व्यक्तिरेव ।

यदि तु लक्षणा तदेदमुदाहरणम्—

'सुधासमुद्रं तव रम्यवाणी वाचं क्षमाचन्द्र सुधासमुद्रः ।
माधुर्यमध्यापयितुं दधाते खर्वेतरामान्तरगर्वमुद्राम् ॥'

अत्र वागादिकर्तृकस्य परस्पराध्यापनस्य बाधान्माधुर्यसंक्रान्तिविशेषस्य लक्षणया बुध्यमानस्य प्रयोजनं स्वप्रयोज्यान्योन्योपमानोपमेयभावः ।

अथ दोषाः–

तत्र तावत्प्रागुक्ता यावन्त उपमाया दोषाः, अनुक्ताश्च विस्तृतिभयात्,

---

घनगजेत्यर्थः । स च मिथ उपमानोपमेयभावश्च । हिः पूर्वहेतुत्वपरामर्शकः । **इतीति** । अस्य बोध्यमिति शेषः । अतिमात्रेणातिशयितेन । व्यक्तिरेव व्यञ्जनैव । इदं वक्ष्यमाणम् । **सुधेति** । राजानं प्रति कव्युक्तिः । हे क्षमाचन्द्र, तव रम्यवाणी सुधासमुद्रं माधुर्यमध्यापयितुं संक्रामयितुं सुधासमुद्रश्च तव वाचं माधुर्यमध्यापयितुं च महतीं मानसिकगर्वसूचकाकारव्यक्तिं धत्त इत्यर्थः । लक्षणयेत्यस्याध्यापयितुमिति पदेत्यादिः । एवं मुख्यार्थबाधतद्योगावुक्त्वा प्रयोजनवतीत्वमाह–**प्रयोजनमिति** । स्वं लक्षणा । तत्प्रतीतिश्च वैयञ्जनिक्यैवेति भावः । **दोषा इति** । अस्या इत्यादिः । उच्यन्त इति शेषः । तत्र वक्तव्यानां तेषां मध्ये प्रागुपमायामुक्ता यावन्तो दोषा इत्यन्वयः । न तत्परिगणनमि-

ते सर्वेऽप्युपमात्वाक्रान्तत्वादस्यामपि बोध्याः। अयं पुनरन्योऽपि दोषः— यदेकोपमावैलक्षण्यमपरस्यामुपमायाम् । यथा—'कमलमिव वदनमस्य वदनेन समं तथा कमलम्' अत्र श्रौत्यार्थीकृतं वैलक्षण्यम् । 'कमलति वदनं तस्याः कमलं वदनायते जगति' क्विप्क्यङ्कृतमत्र वैलक्षण्यम् । एवमत्रैव 'पद्मं वदनायते' इति निर्माणे 'वक्त्रायते' इति वा उपमानोपमेयवाचकवैलक्षण्यम् । एवंप्रकारैरनेकैर्वैलक्षण्यं यदि सहृदयोद्वेजकं तदा दोषः ॥

इति रसगङ्गाधरे उपमेयोपमाप्रकरणम् ।

अथानन्वयः—

**द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः ॥**

स च कस्याप्युपस्कारत्वेऽलंकारः । अन्यथा तु शुद्धः ।

'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् ।
दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥'

अत्र लोहितपीतकुसुमावृतं भूभृतः शिखरं स्वेनैव कस्मिंश्चित्समये दावज्वालाकीर्णेनोपमीयते, इति तत्सादृश्यवारणाय भूतान्तम् ।

इदं वा प्रत्युदाहरणम्—

'नखकिरणपरम्पराभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः ।
अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकासे ॥'

अत्रापि नखकिरणपरम्पराभिरामं हरेः पदाम्बुजं स्वात्मनैव सुरदीर्घिकाप्रवाहप्रकरपरीतेनोपमीयते । संप्रति सुरदीर्घिकाप्रवाहेण भगवत्पादाम्बुरुहस्य संबन्धाभावात्सुरनिम्नगोत्पत्तिकालावच्छिन्नस्य तस्योपमानताव-

त्याह—**अनुक्ताश्चेति** । ननूपमादोषा अत्र कथमत आह—**उपमात्वेति** । अत एवास्या एव भेद इति प्रतिज्ञावाक्ये उक्तम् । तद्वृत्त्यन्यदोषमाह–**अयं पुनरिति** । **इति वेति** । कमलमित्यादिः । निर्माणे इत्यस्यानुषङ्गः । उपसंहरति—**एवमिति** । यदीत्यनेन तदभावेऽदुष्टत्वमेवेति सूचितम् ॥ इति रसगङ्गाधरमर्मप्रकाशे उपमेयोपमाप्रकरणम् ॥

**शुद्ध इति** । स्ववैचित्र्यमात्रविश्रान्त इत्यर्थः । भूभृतः पर्वतस्य । कदाचित्समये तैराकीर्णं स्वमिवेत्यर्थः । स्फुटत्वाय प्रत्युदाहरणान्तरमाह—**इदं वेति** । अत एवाह—**अत्रापीति** । स्वात्मनैव पदाम्बुजद्वयेनैव । संप्रति वर्णनकाले । तस्य प्रवाहस्य । अत्र

गमायाभिनवेति प्रवाहविशेषणम् । नह्यत्र सादृश्यवर्णनस्य फलं द्वितीयसब्रह्मचारिव्यवच्छेदः, तस्याप्रतिपत्तेः ।

'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः ।
सुधांशुबिम्बतो मेरौ लम्बमान इवोरगः ॥'

इति कल्पितोपमानिकायामुपमायामतिप्रसङ्गवारणायैकोपमानोपमेयकमिति । अत्रासत उपमानस्य कल्पनया सदुपमानं नास्तीति द्वितीयसदृशव्यवच्छेदस्यास्ति प्रतीतिः ।

उदाहरणममृत( पीयूष )लहर्याख्ये मदीये गङ्गास्तवे—

'कृतक्षुद्राघौघानथ सपदि संतप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥'

यथा वा—

'इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि ।
परमार्थतो विचारे देवी गङ्गा तु गङ्गेव ॥'

पूर्वपद्ये वाच्योऽनुगामी धर्मः । इह तु व्यङ्ग्य इति विशेषः । तुशब्दोऽयं तीर्थान्तरेभ्यो वैलक्षण्यं प्रतिपादयंस्तत्प्रयोजकं भगवद्वासुदेवा-

प्रत्युदाहरणद्वये । **द्वितीयसब्रह्मेति** । द्वितीयसदृशेत्यर्थः । अनन्वयपदार्थनिबन्धनवशाद्धि द्वितीयसदृशव्यवच्छेदः फलति । नहि धर्मान्तरावच्छिन्नत्वस्य धर्मान्तरावच्छिन्नत्वेन साधर्म्यमनन्वयि । अत एवोपमेयतावच्छेदकोपमानतावच्छेदकयोर्भेद एव साधर्म्यघटको न तु धर्मिणोः इत्युक्तं प्राक् । एवं चानन्वयपदार्थनिबन्धनप्रयोज्यद्वितीयसदृशव्यवच्छेदफलकसादृश्यवर्णनमनन्वयः । एकोपमानोपमेयकत्वविशेषणं चात्रैवार्थे तात्पर्यग्राहकम् । अन्यथा धर्मिभेदादेव तत्र वारणेन तद्वैयर्थ्यं स्पष्टमेवेति भावः । तदाह—**तस्येति** । तद्व्यवच्छेदस्येत्यर्थः । **असत इति** । तथा च धर्मिभेदः स्पष्टोऽत्र । **नास्तीति** । अन्यथा तावत्पर्यन्तधावनं व्यर्थं स्यादिति भावः । अथ अल्पपापकरणानन्तरम् । सपदि तत्कालमेव । न तु कालान्तरे । प्राक्तनमुक्तोद्रेकादिति भावः । **अपीति** । प्रायश्चित्तप्राप्तिविषयत्वातिक्रान्ताचरणकानपीत्यर्थः । नरानिति पूर्वार्धेऽपि विशेष्यम् । निष्पापत्वेन स्वीकर्तुम् । जननि गङ्गे । उदाहरणान्तरदाने बीजमाह—**पूर्वेति** । विजयसे इति वाच्यः सर्वोत्कर्षरूप इत्यर्थः । **इह तु इति** । स एवानुगामीति शेषः । पूर्ववदत्र स्पष्टवैलक्षण्याभावादाह—**तुशब्दोऽयमिति** । 'तुशब्दोऽत्र' इति पाठान्तरम् ।

स्मकत्वं धर्मं श्रीगङ्गायां व्यनक्ति। उभयत्रापि श्रीगङ्गाविषयकरत्युपस्कारकत्वादलंकारोऽयम्। बिम्बप्रतिबिम्बभावापन्नो धर्मस्त्वत्र नास्ति। तस्मिंश्च सति किंचिद्धर्मावच्छिन्नेन स्वेन सादृश्यस्य धर्मान्तरावच्छिन्ने स्वस्मिन्नन्वये बाधकाभावात्सदृशान्तरव्यवच्छेदाप्रतिपत्तेश्चानन्वय एव न स्यात्।

स च पूर्णो लुप्तश्चेति तावद्द्विविधः। पूर्णस्तूपमावत्षड्विधोऽपि संभवति। यथा—

'गङ्गा हृद्या यथा गङ्गा, गङ्गा गङ्गेव पावनी।
हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः॥
गुरुवद्गुरुराराध्यो गुरुवद्गौरवं गुरोः॥'

लुप्तेष्वपि धर्मलुप्तः पञ्चविधोऽपि संभवति, प्रागुक्ते सार्धपद्ये धर्मवाचकपदमपहाय पदान्तरदाने। तथा वाचकलुप्तः—

'रामायमाणः श्रीरामः सीता सीतामनोहरा।
ममान्तःकरणे नित्यं विहरेतां जगद्गुरू॥'

इत्यत्र क्यङ्समासयोः।

एवम्—

रतीति। कविनिष्ठेत्यादिः। अत्र उभयत्र। **बाधकाभावादिति**। चो वाक्यालंकारे, हेतौ वा। सदृशान्तरव्यवच्छेदाप्रतिपत्तावन्वये बाधकाभावो हि हेतुः। स च अनन्वयश्च। **षड्विधोऽपीति**। श्रौतार्थयोस्तयोः प्रत्येकं वाक्यसमासतद्धितगामित्वेनेति भावः। **गङ्गेति**। अत्राद्यपादे श्रौतो वाक्यगः पूर्णः। द्वितीयपादे समासगः श्रौतः पूर्णः। तृतीयपादे आर्थो वाक्यगः पूर्णः। तुर्यपादे समासग आर्थः पूर्णः। पञ्चमपादे 'तेन तुल्यं–' इति वतेः सत्त्वादार्थः स तद्धितगः पूर्णः। षष्ठपादे 'तत्र तस्येव' इति वतेः सत्त्वाच्छ्रौतस्तद्धितगः पूर्ण इति ध्येयम्। 'लुप्तेष्वपि' इति पाठः। भेदेष्विति शेषः। निर्धारणे एकवचनासंगतेः। **पञ्चविधोऽपीति**। श्रौतो वाक्यगः, आर्थो वाक्यगः, श्रौतः समासगः, आर्थः समासगः, आर्थस्तद्धितगश्चेत्येवमित्यर्थः। पूर्वं तेषामेवोदाहृतत्वादिति भावः। **पदान्तरेति**। 'गङ्गा राजन्यथा गङ्गा गङ्गा गङ्गेव सर्वदा। हरिणा सदृशो विष्णुर्विष्णुतुल्यः सदा हरिः॥ गुरुवद्गुरुरास्तेऽस्मिन्मण्डले गुरुवद्गुरोः॥' इति न्यास इत्यर्थः। कर्मणमुलगतमुदा-

१ किंचिद्धर्मावच्छिन्नेन स्वेन सह धर्मान्तरावच्छिन्नस्य स्वस्य सादृश्यवर्णने हि बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मकः 'अनन्वयः' उदाहृतो भवेत्। एवं सति सादृश्यस्यान्वयो जात एव। तथा च 'न अन्वयः सादृश्यस्य, इत्यनन्वयः' इति सदृशान्तरव्यवच्छेदरूपं स्वारस्यं न सिध्यति। इति न बिम्बप्रतिबिम्बतासंभवः।

'लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः ।
क्रुद्धं रणे सपदि दाशरथिं दशास्यः संरब्धदाशरथिदर्शमहो ददर्श ॥'

एवं कर्तृणमुलादावप्यूह्यम् ।

'अम्बरत्यम्बरं यद्वत्समुद्रोऽपि समुद्रति ।
विक्रमार्कमहीपाल तथा त्वं विक्रमार्कसि ॥'

अत्र वाक्यार्थावयवेष्वनन्वयेषु धर्मवाचकयोर्लोपः । मुखवाक्यार्थस्त्वनन्वयफलेन निरुपमत्वेन समानधर्मेण प्रयोजितो मालोपमैव[1] । एषा च ज्ञानसौकर्यायात्रैव निरूपिता ।

'एतावति प्रपञ्चेऽस्मिन्सदेवासुरमानुषे ।
केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥'

अत्र वाचकधर्मोपमानानां लोपः । अत्र चोपमानलुप्तादयोऽन्ये भेदा असंभवादहृद्यत्वाच्च नोदाहृताः ।

यत्तु—''तेन तदेकदेशेनावसितभेदेन वोपमानतया कल्पितेन सादृश्यमनन्वयः । उपमेयेनैवोपमानतया कल्पितेनोपमेयस्यामुखावभासमानसाधर्म्यापादनमेकोऽनन्वयः । उपमेयैकदेशस्य तथैवोपमानताकल्पनमपरः । उपमेयस्यैव प्रतिबिम्बत्वादिना भेदेनावसितस्य तत्त्वकल्पनं तृतीयः ।

आद्यो यथा—'युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापः' इत्यादि ।

हरति—**एवं लङ्केति** । ईदृशो दशास्यो रणे क्रुद्धं सपदि दाशरथिं संरब्धदाशरथितुल्यं ददर्शेत्यर्थः । संरब्धदाशरथिरिव दृश्यते इति कर्मणि णमुल् । धर्मवाचकलुप्तमुदाहरति—**अम्बरेति** । अत्र सर्वत्राचारे क्विप् । अम्बरमाकाशम् । ननु कोऽसौ वाक्यार्थो यदवयवास्त्रयोऽनन्वया अत आह—**मुख इति** । मुख्य इत्यर्थः । 'मुख्य' इति पाठस्तूचितः । ननु मालोपमा नैवास्ति पूर्वमनुक्तत्वादत आह—**एषा चेति** । मालोपमा चेत्यर्थः । अत्रैव अनन्वयप्रकरण एव वाचकधर्मोपमानलुप्तमुदाहरति—**एतेति** । तज्ज्ञै रामस्वरूपज्ञैः । न्यूनतां निराचष्टे—**अत्र चेति** । संभवेऽप्याह—**अहृद्येति** । तेनेत्यस्यार्थमाह—**उपेति** । **अमुखेति** । अमुख्येत्यर्थः । तदेकदेशेनेत्यस्यार्थमाह—**उपेति** । तथैव उपमेयवत् । अवसितभेदेनेत्यस्यार्थमाह—**उपेति** । प्रतिबिम्बोऽत्र लौकिकः । अवसितस्य निश्चि-

१ वाक्यार्थस्य अवयवभूताः–अम्बरम् अम्बरति, समुद्रः समुद्रति, विक्रमार्क त्वं विक्रमार्कसि, इति त्रयो विकीर्णा अनन्वयाः । 'यद्वत् समुद्रः······तथा त्वं विक्रमार्कसि' इति प्रधानवाक्यार्थः ( यद्वत्तथापदप्रतिपादितः ) तु निरुपमत्वरूपं साधारणधर्ममादाय मालोपमैव न अनन्वयः । ( समुदितेन उपमाया एव प्रतीतेः ) ।

द्वितीयो यथा—

'एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि।
अनुहरति सुभग तस्या वामार्धं दक्षिणार्धस्य॥'

तृतीयो यथा—

'गन्धेन सिन्धुरधुरंधरवक्त्र मैत्री-
मैरावणप्रभृतयोऽपि न शिक्षितास्ते।
तत्त्वं कथं त्रिनयनाचलरत्नभित्ति-
स्वीयप्रतिच्छविषु यूथपतित्वमेषि॥'

एषूपमानान्तरविरहस्त्रिष्वपि भेदेषु गम्यते। इत्यनन्वयस्त्रिविधः।" इति रत्नाकरेणोक्तम्। तन्न। उपमानान्तरविरहप्रतीतिमात्रादेवानन्वयत्वे 'स्तनाभोगे पतन्भाति—' इत्यत्रोपदर्शितायाः कल्पितोपमाया अपि तथात्वापत्तेः। यद्यर्थातिशयोक्तावतिप्रसक्तेश्च[1]। तादृशप्रतीतिफलकैकोपमानोपमेयकसादृश्यस्य तत्त्वे पुनः कथं नाम वामार्धदक्षिणार्धयोर्भिन्नयोः सादृश्ये तद्भेदत्वोपन्यासः। न च स तदेकदेशस्तत्प्रतिबिम्बश्चेत्येतदन्यतमप्रतियोगिकसादृश्यमनन्वयः इति कातिव्याप्तिर्वेति वाच्यम्। नास्त्यन्वयोऽस्येति

तस्य। **तत्त्वेति**। उपमानत्वेत्यर्थः। महिला स्त्री। दक्षिणार्धस्येति कर्मणः शेषत्वविवक्षायां षष्ठी। अत्रोपमेयं समुदिता नायिका। **गन्धेनेति**। हे सिन्धुरधुरंधरवक्त्र गजश्रेष्ठमुख गणपते, ऐरावणप्रभृतयोऽप्यैरावतादयोऽपि ते त्वया गन्धेन सुगन्धेन मैत्रीं न शिक्षिताः। यद्वा गन्धेन संबन्धेन लेशेन गर्वेण वा। अपिर्गन्धपदोत्तरं मैत्रीपदोत्तरं वा योज्यः। तत्तस्मात्कारणात्त्वं कैलासाचलरत्नखचितभित्त्याधारकस्वप्रतिबिम्बेषु यूथपतित्वं दिग्गजत्वं कथमेषीत्यर्थः। **उपमानान्तरविरह इति**। तत्राद्ये स्फुट एव। द्वितीये तदवयवस्य तदवयवान्तरोपमया तस्यां निरुपमत्वं सिद्ध्यति। अन्यथा तत्सदृशपदार्थावयवेनैवैतदवयवस्योपमां दद्यात्। तृतीयेऽपि प्रतिबिम्बस्योपमानत्वकल्पनयान्यस्योपमानस्याभावो गम्यते। **तथात्वेति**। अनन्वयत्वेत्यर्थः। इष्टापत्तावाह—**यद्यर्थेति**। **तादृशेति**। उपमानान्तरविरहेत्यर्थः। सादृश्यविशेषणमुभयत्र। तत्त्वे अनन्वयत्वे। पुनःशब्दस्तुशब्दार्थे। **भिन्नयोरिति**। तथा च द्वितीयविशेषणाभाव इति भावः। **तद्भेदत्वेति**। अनन्वयविशेषत्वेत्यर्थः। **सेति**। उपमेयेत्यर्थः। इदानीमाद्यविशेषणं न

[1] 'यद्यर्थोक्तौ च कल्पनम्' इति काव्यप्रकाशोक्तचतुर्थ्यातिशयोक्त्युदाहरणे—'राकायां यदि चन्द्रस्य निष्कलङ्कं वपुः स्यात्तर्हि तस्या मुखं पराभूयेत' इत्यादौ पूर्णचन्द्रस्य निष्कलङ्कता न संभवतीति निरुपमं तस्या मुखमित्यर्थः प्रतीयते, तत्रश्चात्राऽतिव्याप्तिरित्यर्थः।

योगार्थविरहेण तदेकदेशसादृश्यस्यानन्वयपदार्थत्वासंभवात् । अपि चानन्वये 'गगनं गगनाकारम्' इत्यादावुपमेयस्यैवोपमानत्वेनोपन्यासादुपमेयातिरिक्तोपमानविरहप्रतीतिद्वारा निरुपमत्वमुपमेयगतं सिद्ध्यति । अत्र च वामार्धस्योपमेयस्य दक्षिणार्धरूपोपमानकथनेन निरुपमत्वं विरुद्धमेव । कान्तागतनिरुपमत्वप्रत्ययस्तु नानन्वयस्य फलं भवितुमर्हति, तस्या अनुपमेयत्वात् ।

यदपि चालंकारसर्वस्वकृता 'अनन्वयध्वनित्वमत्र भविष्यति । अन्यथाऽलंकारध्वनेर्विषयापहारः स्यात्' इत्युक्तम्, तदपि तुच्छम् । अस्य ह्युपमाननिषेधफलकमभिन्नोपमानोपमेयकं सादृश्यं स्वरूपमित्युक्तम् । प्रकृते च वामार्धदक्षिणार्धयोस्तद्बाधितमित्युक्तमेव । कान्तायाः पुनरुपमाननिषेधस्य व्यङ्ग्यत्वेऽपि अभिन्नोपमानोपमेयक[1]सादृश्यस्य स्वरूपस्याप्रत्ययात् । नहि निरुपमत्वप्रतीतिषु सर्वास्वभिन्नोपमानोपमेयकसादृश्यप्रतीतिपूर्वकत्वमिति नियमोऽस्ति । कल्पितोपमातिशयोक्त्योरसमालंकारध्वनौ च व्यभिचारात् । तस्मान्नास्त्येवात्रानन्वयगन्धोऽपि ।

देयम् । तद्विरहस्य नान्तरीयकत्वादिति भावः । **विरहेणेति** । अबाधितत्वादिति भावः । ननु स्फुटमेवानन्वयपदमत आह—**अपि चेति** । अत्र द्वितीयभेदे च । निरुपमत्वं एणूरगानान्तरेत्यादिना प्रतिपादितम् । ननु तेन ग्रन्थेन कान्तायां निरुपमत्वं प्रतिपादितं न तत्रात आह—**कान्तेति** । **अनन्वयध्वनित्वमिति** । तद्वामार्धं दक्षिणार्धमनुहरतीत्युच्यतां सोऽनुहरतीति व्यङ्ग्यमिति भावः । एवं चास्य हीत्यादिना किमुच्यते तद्विचार्यं सहृदयैः । ईदृशव्यङ्ग्यव्यञ्जने उपायाभाव इत्यपि कश्चित् । अत्र द्वितीयलक्ष्ये । हि यतः । अस्यानन्वयस्येदं स्वरूपमित्युक्तमतस्तत्तुच्छमित्यर्थः । तदुपपादयति—**प्रकृते चेति** । तत् अभिन्नोपमानोपमेयकं सादृश्यं तयोर्भेदात् । ननु कान्तागतनिरुपमत्वस्य व्यङ्ग्यत्वेन तस्या एवोपमेयाया उपमानत्वकल्पनेन तादृशसादृश्यप्रतीतिस्तयोस्तस्य बाधितत्वेऽप्यस्त्येवात आह—**कान्ताया इति** । सादृश्येऽप्यन्वयः । **कल्पितोपमेति** । स्तनाभोगे इत्यत्रेत्यर्थः । **अतीति** । यद्यपीतीत्यर्थः । उपसंहरति—**तस्मादिति** । सैव त्वदागमन-

१ अभिन्नोपमानोपमेयकमुपमाननिषेधफलकं सादृश्यमनन्वय इत्युक्त्या अत्र कान्तागतः केवलमुपमाननिषेधः प्रतीयते, न तादृशं सादृश्यम् । ततश्च नात्राऽनन्वयः । ननु उपमाननिषेधेनैव अभिन्नोपमानोपमेयकं सादृश्यमपि स्वतः प्रतीयेत इति शङ्कां हृदि निधाय स्वयं परिहरति—न हि निरुपमत्वप्रतीत्यादिना ।

यच्च "अयमनन्वयो व्यङ्ग्योऽप्यस्ति ।

यथा—

'अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुनः ॥'

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्ये इयं त्वदागमनप्रभवप्रीतिर्बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेत् नान्येन, इत्युक्तिभङ्ग्या त्वदागमनप्रभवप्रीतेः सैव सदृशी न त्वितरप्रभवा इति व्यज्यते" इत्यप्पयदीक्षितैरभिहितम्, तदपि न । अमुष्यास्त्वदागमनप्रभवायाः प्रीतेर्वारान्तरत्वदागमनप्रभवा प्रीतिः सदृशीति प्रत्ययस्य सर्वजनसिद्धतया श्रीकृष्णागमनजन्यप्रीतिसामान्यावयवयोर्द्वयोः प्रीतिव्यक्त्योः सादृश्यस्याबाधितत्वाद्योगार्थाभावेनानन्वय एव नायं भवितुमर्हति । 'स्वस्मिन्सादृश्यस्यान्वयाभावादनन्वयः' इत्युपमाप्रकरणे स्वयमेवाभिधानात् । उपमेयस्य प्रीतिव्यक्तिविशेषस्य सदृशान्तरव्यव[1]च्छेदे बाधात, तादृशप्रीतिसामान्यस्य चावयविनो निरुपमतया प्रतीयमानस्यानुपमेयत्वात्पूर्वोदाहरणतुल्यमेवैतत् ।

---

प्रभवैव । **अमुष्या इति** । यत इत्यादिः । व्यक्त्योदितभेदेनेति शेषः । **योगार्थेति** । अनन्वयपदयोगार्थेत्यर्थः । ननु रूढमेवानन्वयपदमभिमतमत आह—**स्वस्मिन्निति** । **व्यवच्छेदे बाधादिति** । तस्य व्यवच्छेदकरणेऽसामर्थ्यादित्यर्थः । कालान्तरस्थप्रीतिव्यक्तिविशेषस्य सदृशस्य सत्त्वादिति भावः । **तादृशेति** । श्रीकृष्णागमनजन्येत्यर्थः । **पूर्वोदाहरणेति** । अनुहरतीत्युदाहरणेत्यर्थः । नन्ववयविनो निरुपमत्वप्रतीतिवन्मध्ये

१ श्रीकृष्णागमनजन्यं प्रीतिसामान्यम् अवयवि । तस्याऽवयवभूते—अद्य कृष्णागमनजन्या प्रीतिः, वारान्तरे संभाव्यमानकृष्णागमनजन्या प्रीतिश्च । तत्र उपमेया या (अवयवभूता) अद्यतनी प्रीतिस्तस्याः सदृशान्तरव्यवच्छेदः (स्वसदृशस्य अन्यस्याऽभावः अर्थात् निरुपमत्वम्) बाधितः (न भवितुमर्हति) वारान्तरे संभाव्यमानया प्रीत्या सह सादृश्यस्य प्रतीतत्वात् । यदि तु अवयविभूतस्य कृष्णागमनजन्यप्रीतिसामान्यस्य निरुपमत्वमादाय अनन्वयत्वं साध्यते तर्हि तत् (प्रीतिसामान्यम्) उपमेयं न । उपमेयस्यैव सादृश्यानन्वयः (निरुपमत्वम्) अनन्वयालंकारे विवक्षितः न तु यस्य कस्यचिदनुपमेयस्यापि । अत एव रत्नाकरोपस्थापितवामार्धदक्षिणार्धयोरुपमाविचारे पूर्वं प्रोक्तम्—'कान्तागतनिरुपमत्वप्रतीतिस्तु नानन्वयस्य फलं भवितुमर्हति, तस्या अनुपमेयत्वात्' इति । तथा च पूर्वोदाहरणे (एतावति प्रपञ्चे०) यथा अनन्वयो निरस्तस्तथाऽत्रापीत्याशयः ।

क्वचिदवयवयोरुपमाप्यवयविगतनिरुपमत्वव्यञ्जिकेति स्थिते सामान्यस्य श्रीकृष्णागमनजन्यप्रीतेः सैव सदृशीति मध्ये[1] स्वसादृश्यप्रत्ययकल्पनं पुनर्न सहृदयहृदयमारोढुमीष्टे । रत्नाकरोक्तस्यैवानन्वय[2]प्रकारस्यात्र व्यङ्ग्यतेत्यपि न युक्तम्, तस्य प्रागेव दूषितत्वात् प्रकृतेऽवाच्यत्वात्, स्वयमनन्वय-प्रकरणे तस्य प्रतिपादनविरहाच्च ।

इदं पुनरनन्वयध्वन्युदाहरणम्—

"पुष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे ।
भेदेन भुवि न पेदे साधर्म्यं ते रसाल मधुपेन ॥"

अत्र भेदेनेत्युक्त्याऽभेदे सादृश्यमनन्वयात्मकं तु पेदे इति ध्वन्यते ।

सादृश्यप्रतीतिरप्यस्तु अत आह—**क्वचिदिति** । पूर्वोदाहरण इत्यर्थः । सैव श्रीकृष्णा-गमनजन्यप्रीतिरेव । मध्ये वाच्यव्यङ्ग्यार्थयोर्मध्ये । ननूक्तरीत्या न व्यङ्ग्यत्वं किन्तु रत्ना[3]-करोक्तरीत्येति नोक्तदोषोऽत आह—**रत्नेति** । तस्य प्रकारस्य प्रकृतेऽवाच्यत्वात् । अवा-च्यत्वे हेतुः प्रागेव दूषितत्वादिति । ननु त्वया दूषितोऽपि न मया दूषितस्तत्राह—**स्वयमिति** । 'अन्यथालंकारध्वनेर्विषयापहारः स्यात्' इति रत्नाकरोक्तिं खण्डयितु-माह—**इदं पुनरिति** । परपुष्टाः कोकिलाः । हे आम्रवृक्ष, तव भुवि भेदेन सादृश्यं भ्रमरेण न पेदे । न गृहीतमित्यर्थः । नगेभ्यः । पर्वतेभ्यः । कपर्दो जटाजूटः । अत्र **पूर्वार्धे**

---

१ अनयोरवयवभूतयोः प्रीत्योरुपमया 'कृष्णागमनजन्यं प्रीतिसामान्यम् (अवयवि) निरु-पमम्' इति व्यज्यते । किन्तु निरुपमापि सा प्रीतिः उपमेया न । तस्या उपमेयत्वसाधनार्थं यद्युच्येत यत् वाच्यायाः अवयवोपमायाः व्यङ्ग्यस्य निरुपमत्वस्य च मध्ये इदमपि प्रतीयतेऽत्र यत् 'श्रीकृष्णागमनजन्यप्रीतिसामान्यस्य सैव प्रीतिः सदृशी, नान्या ।' तथा च अवयविभूत-प्रीतिसामान्यस्य निरुपमस्य उपमेयत्वमपि संपन्नमिति स्यादनन्वय इति पूर्वपक्षिण उक्तः 'सहृ-दयहृदये नैवंविधा प्रतीतिर्भवितुमर्हति' इति सिद्धान्ते निरासः ।

२ भवद्रीत्या अनन्वयस्य व्यङ्ग्यत्वं मास्तु परं रत्नाकरोक्तेषु त्रिषु प्रकारेषु 'तदेकदेशेन' इत्यादि-प्रकारस्य व्यञ्जना स्यात्, इति यदि समाधीयेत, तदपि न । स प्रकारः अनुहरतीत्युदा-हरणविचारे पूर्वं खण्डित इति न पुनरिह स वाच्यः । ननु येषु प्रकारेषु भवतैकः खण्डि-तस्तेभ्योतिरिक्तोऽन्यः प्रकारो ममाभिप्रेत इति शङ्कां परिहरति–स्वयमनन्वयेति । यद्यन्यः प्रकारोऽभिप्रेतस्तर्हि अनन्वयप्रकरणे तत्प्रतिपादनं कर्तव्यमासीत् । किन्तु तस्याभाव एव ।

३ भ्रान्तोऽत्र नागेशः । 'रत्नाकरोक्तस्यैव अनन्वयप्रकारस्यात्र व्यङ्ग्यता–' इति वदतो ग्रन्थ-कर्तुः अनन्वयस्य प्रकारः (भिदा) विवक्षितः, न तु व्यङ्ग्यताया रीतिः । यतो हि 'प्रागेव दूषितत्वात्' अस्य व्याख्यायां स्वयं नागेशेनैव व्याख्यायते–'तस्य प्रकारस्य दूषितत्वात्' इति । किन्तु ग्रन्थकृता व्यङ्ग्यतायाः प्रकारो न दूषितः, अपि तु अनन्वयस्यैव–इत्यास्तां तावत् ।

यथा वा—

'नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः॥'

अत्र कया वा त्वदितरया श्रीभर्तुः पदं सलिलैरक्षालि यस्यामितरस्यां कविभिस्तव तुलालेशोऽपि दीयेतेत्यर्थेन त्वयि पुनः सलिलक्षालितश्रीरमणचरणायां तव तुला दीयेतैवेत्यर्थोऽनन्वयात्मा श्रीगङ्गागतनिरुपमत्वपर्यवसायी इतरपदमहिम्ना व्यज्यते॥

इति रसगङ्गाधरेऽनन्वयप्रकरणम्।

**सर्वथैवोपमानिषेधोऽसमाख्योऽलंकारः॥**

अयं चानन्वये व्यङ्ग्योऽपि तच्चमत्कारानुगुणतया रूपकदीपकादावुपमेव न पृथगलंकारव्यपदेशं भजते[1]। वाच्यतायां तु स्वातन्त्र्येण चमत्कारितया पृथग्व्यपदेशभाक्।

यथा—

'भूमीनाथ शहाबदीन भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवप्रपञ्चविपये[2] नास्तीति किं ब्रूमहे।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः॥'

---

तादृशव्यञ्जकाभावादाह—**अत्र कया वेति**। पूर्वोदाहरणे भेदेनेत्युक्त्या तादृशव्यङ्ग्यस्य स्फुटं प्रतीतिः। अत्र त्वस्फुटा। अत एवोदाहरणान्तरदानं ध्वनयन्नाह—**इतरपदमहिम्नेति**॥ इति रसगङ्गाधरमर्मप्रकाशेऽनन्वयप्रकरणम्॥

**उपमानिषेध इति**। साक्षात्परम्परया वेत्यादिः। **तच्चमत्कारेति**। तन्निषेधकृतचमत्कारपरिपोषकतयेत्यर्थः। **पृथगिति**। पृथगलंकारेत्यर्थः। शहाबदीनेति राज्ञो नाम। **एतद्भूतेति**। अनेन कारणान्तरस्याप्यादौ निर्माणेन तेनाग्रिमसृष्टिकरणयोग्यता सूचिता। अन्यथा तेषामेवासत्त्वादसंगतिः स्पष्टैव। तदाह—**नूतनेति**। प्रसिद्धपञ्चभूतातिरिक्तस्वनिर्मितकारणैरित्यर्थः। अत एव सृष्टेरपि न तत्त्वम्। न स्यादेवेत्यर्थ इतीति

---

१ अनन्वये व्यङ्ग्यः 'असमः' पृथगलंकारव्यपदेशं न भजते, वाच्यस्तु पृथक् चमत्कारितया भजत इत्याशयः।

२ एतैर्वर्तमानैः भूतैः पञ्चमहाभूतैर्जनिते प्रपञ्चविषये।

यथा वा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ॥'

राजस्तुत्युत्कर्षकत्वादत्रासमालंकारः । आत्यन्तिकः काचित्कश्च सदृशनिषेधोऽसमोपमानलुप्तयोर्विषयः । सर्वथैवोपमाननिषेधेन सादृश्यस्याप्रतिष्ठानान्नोपमागन्धोऽपि ।

यत्तु—

"-'ढुण्ढुलन्तो मरीहसि कण्टककलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमंतो न पाविहिसि ॥' इति ।

नेयमुपमानलुप्तोपमा, तस्याः संभवदुपमानानुपादानविषयत्वात् । अपि त्वसमालंकारः" इति रत्नाकरेणोक्तम्, तदसत् । मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसीत्युक्त्या वर्ततां नाम तत्सदृशं क्वापि, त्वया तु दुष्प्रापमेवेति प्रत्ययादात्यन्तिकोपमाननिषेधाभावादुपमानलुप्तोपमैवेयं भवितुमर्हति नासमालंकारः । अन्यथा मालतीकुसुमसदृशं नास्तीत्येव ब्रूयात्, न तु प्राप्स्यसीति । अथासमालंकारध्वननेनैव चमत्कारोपपत्तेरनन्वयस्य पृथगलंकारता[1] कथमिति चेत्, सत्यम् । दीपकादेरप्युपमाभिव्यक्त्यैव चमत्कारो-

शेषः । नृपेति संबोधनम् । पदं स्थानं चिह्नं वस्तु वा । आद्ययोर्भेदसंबन्धः । अन्त्येऽभेदः । कालत्रयासत्त्वमुक्तोदाहरणाद्विशेषः । ननूदाहरणद्वयेऽपि निषेधस्य प्राधान्यात्कथमलंकारत्वमत आह—**राजेति** । अत्र उदाहरणद्वये । ननूपमानलुप्तयैव गतार्थोऽयमत आह—**आत्यन्तिक इति** । यथासंख्यमन्वयः । नन्वात्यन्तिकनिषेधेऽपि कुतो नोपमानलुप्तात आह—**सर्वथैवेति** । **निषेधाभावादिति** । संभवदुपमानत्वाच्चेत्यपि बोध्यम् । अन्यथा तस्येष्टत्वे । एवं वाच्यतायां निषेधस्यासमालंकारे सिद्धेऽनन्वये निषेधस्य व्यङ्ग्यत्वे वासमालंकारस्य ध्वननाङ्गीकारे चमत्कारस्तत एवास्तु नानन्वयकृत इत्यनेनैव गतार्थः स इत्याशयेन शङ्कते—**अथेति** । प्रतिबन्द्या समाधत्ते—**सत्यमिति** । अत एव पूर्वं दृष्टान्तोक्तिः । दीपकादेरित्यस्य पृथगलंकारत्वमित्यत्रान्वयः । हि यतः ।

१ असमालंकारे स्वीकृते, अनन्वयस्थले ( त्वमिव जननि त्वं विजयसे इत्यादौ ) 'तव सादृश्यं जगति नास्ति' इति निषेधस्य व्यङ्ग्यतया तत्कृतेन व्यङ्ग्येन असमालंकारेणैवास्तु व्यपदेशः, किमनन्वयालंकारस्वीकारेणेति शङ्का ।

पपत्तौ कथं नाम पृथगलंकारत्वमिति तुल्यम्[1]। न च दीपकादावुपमाया व्यङ्ग्यत्वेऽपि गुणीभावात्प्रकृते तु स्वसादृश्यस्य स्वस्मिन्नतितमां तिरस्कारेणासमालंकारस्यैव मुख्यतया ध्वननाद्वैषम्यमिति वाच्यम्[2]। यथा हि दीपकसमासोक्त्यादौ गुणीभूतव्यङ्ग्यसत्त्वेऽप्यलंकारत्वं न हीयते एवमनन्वये प्रधान[3]व्यङ्ग्यसत्त्वेऽपीति न किंचिद्विरुद्धम्। अनन्वयशरीरस्य स्वसादृश्यमात्रस्य वाच्यत्वेन वाच्यालंकार[4]व्यपदेशोऽपि सुस्थ एव। दीपका[5]द्यलंकारकाव्ये गुणीभूतस्य व्यङ्ग्यस्य सत्त्वादस्तु नाम गुणीभूतव्यङ्ग्यत्वम्। ध्वनित्वं पुनर्न क्वाप्यलंकृतिकाव्ये दृष्टमिति चेत्, पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादिकाव्ये ध्वनित्वस्य स्फुटत्वात्। प्राञ्चस्तु नेदमलंकारान्तरमित्यप्याहुः।

अयं चासमालंकारो व्यज्यमानो यथा—

‘मयि त्वदुपमाविधौ वसुमतीश वाचंयमे
न वर्णयति मामयं कविरिति क्रुधं मा कृथाः।
चराचरमिदं जगज्जनयतो विधेर्मानसे
पदं न हि दधेतरां तव खलु द्वितीयो नरः॥’

---

**सत्त्वेऽपीति**। अलंकारत्वं न हीयते इत्यस्यानुषङ्गः। एवमलंकारत्वव्यपदेशे साधिते वाच्यालंकारव्यपदेशं तस्य साधयति—**अनन्वयेति**। शङ्कते—**दीपकाद्यलंकारेति**। बहुव्रीहिः। **अलंकृतीति**। तद्युक्तकाव्य इत्यर्थः। तथा चैवमित्याद्युक्तिरयुक्तेति भावः। अप्रस्तुतप्रशंसाया अनेकविधत्वादाह—**सादृश्येति**। **अलंकारान्तरमिति**। अत्रोपपत्तिर्व्यतिरेकालंकारप्रकरणे स्फुटीभविष्यति। **त्वदिति**। त्वदुपमावर्णनविषये। वाचं-

---

१ दीपकादौ उपमाया व्यङ्ग्यत्वेपि दीपकादेः पृथग्व्यपदेशस्तत्कृत एव न काव्ये दीपकादिव्यवहारस्तथात्रापीति प्रतिबन्द्या समाधानम्।

२ ननु दीपकादिस्थले उपमा गुणीभूता, ततश्च गुणीभूतां तामादाय न व्यपदेशः, अनन्वयस्थले तु असमालंकारस्य मुख्यतया ध्वनित्वसत्त्वादसमालंकारव्यपदेश एवोचित इति शङ्का।

३ प्रधानीभूततया ध्वनिरूपस्य असमालंकाररूपव्यङ्ग्यस्य सत्त्वेपीत्यर्थः। ननु असमस्य मुख्यतया ध्वननात्तस्यैव प्राधान्येन असमालंकारध्वनिव्यवहारोस्तु तत्र, न अनन्वयालंकारत्वमिति तु न शङ्क्यम्। त्वमिव जननि त्वमित्यत्र गङ्गागतरतेरेव चरमव्यङ्ग्यतया ध्वन्यमानस्यापि असमस्य अलंकारत्वात्। अलंकारत्वस्य व्यङ्ग्यत्वस्य च न मिथो विरोध इति स्थाने स्थाने प्रोक्तमेव ग्रन्थकृता।

४ स्वेनैव स्वस्य सादृश्ये अभिधया प्रतिपाद्ये वाच्योऽनन्वय इत्यर्थः।

५ ननु दीपकादौ उपमाया व्यङ्ग्यत्वेपि वाच्यार्थस्य प्राधान्याद् गुणीभूतव्यङ्ग्यत्वं यत्प्रसिद्धं तदुचितमेव। अनन्वये तु स्वस्य समानता न स्वस्मिन् प्रतितिष्ठतीति तत्र असमालंकारस्य ध्वनित्वम् (प्रधानतया) कथमिवालंकारकाव्ये स्यादुचितमिति शङ्का। पर्यायोक्ताद्यलंकारेषु ध्वनित्वं स्फुटं प्रसिद्धमिति समाधानम्।

अत्र य एतावन्तं समयं विधातुर्मानसं नाधिरूढः सोऽग्रेऽपि माना-भावान्नारोहेत्, अतः सर्वथैव नास्तीति गम्यते । एवं च व्यज्यमानोऽप्य-समोऽत्र प्रधानीभूतराजस्तुत्युत्कर्षकतयालंकार एव ।

मुख्यतया ध्वन्यमानोऽयं यथा—

'सदसद्विवेकरसिकैरालोक्य समस्तलोकमथ कविभिः ।
गणिता गगनलतादेर्गणनायां तन्वि तव सदृशी ॥'

अयं कचिदुपमानस्य निषेधात्कचिच्च साक्षादुपमाया एव । आद्यस्तूप-दर्शितः ।

द्वितीयो यथा—

'पूर्णमसुरै रसातलममरैः स्वर्गो वसुंधरा च नरैः ।
रघुवंशवीरतुलना तथापि खलु जगति निरवकाशैव ॥'

एवं पूर्णतया लुप्ततया चास्यापि यथासंभवं भेदा उन्नेयाः ॥

इति रसगङ्गाधरेऽसमालंकारप्रकरणम् ।

**सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् ॥**

अर्थान्तरन्यासवारणायोच्यमान इति । वचनं च इव-यथा-निदर्शन-

यमे मौनव्रतवति । पदं चरणम् । द्वितीयः सहायः । सदृश इति यावत् । ननु निषेधस्य वाच्यत्वेन कथं तस्य व्यङ्ग्यत्वम्, किं च लिटा भूतनिषेधप्रतिपादनेनात्यन्तिकनिषेधाप्रतीत्या कथमयमत आह—**अत्रेति** । पद्ये इत्यर्थः । एवं च पदधारणनिषेधस्य शाब्दत्वेऽप्युपमाननिषेधस्य व्यङ्ग्यत्वमेवेति भावः । प्राग्वदाह—**एवमिति** । अथ अनन्तरम् । हे तन्वि, तव तुल्या असत्पदार्थगणनायां गणिता । एवं च त्वत्तुल्या असतीति प्राधान्येन ध्वन्यते इति ध्वनिरयम्, नालंकारः । **निरवेति** । निष्प्रसरेत्यर्थः । निराधारेति यावत् । एवं उक्तभेदवत् । अस्याप्यसमालंकारस्यापि ॥ इति रसगङ्गाधरमर्मप्रकाशेऽसमालंकारप्रकरणम् ॥

**सुखेति** । द्रुततरं बुद्ध्यारूढत्वाय । तयोः सामान्यैकदेशयोः । अवयवावयविभावस्व-

१ गुणवद्वस्तुसंसर्गाद्याति स्वल्पोपि गौरवम् । पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ इति विशेषेण सामान्यसमर्थनरूपेऽर्थान्तरन्यासे गुणवद्वस्तुरूपस्य सामान्यस्य तदेकदेशस्य पुष्प-मालायाश्च अवयवावयविभावः ( विशेषसामान्यात्मकः ) यद्यप्यस्ति, परम् इव-यथादिवाचक-शब्दैरुपनिबध्यमानो न स उच्यमानः ( वाच्यः ) ।

दृष्टान्तादिशब्दैः काव्येषु स्फुटम्। न च इव-यथाशब्दयोः सादृश्यवचनयोरवयवावयविभावे विशेषसामान्यात्मके नास्ति वृत्तिरिति[1] वाच्यम्। लक्षणायाः साम्राज्यात्। अन्यथा ह्युत्प्रेक्षाबोधकतापि दुर्घटा स्यात्।

उदाहरणम्—

'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव॥'

न चात्र पदार्थलशुनयोरुपमा शक्या वक्तुम्। तयोः सामान्यविशेषभावेन सादृश्यस्यानुल्लासात्[2]। तथात्वे तु इवादिशब्दानामिव सदृशादिशब्दानामप्यलंकारेऽस्मिन्प्रयोगः स्यात्।

यथा वा—

'अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति।
त्रिपुरद्विपि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा॥'

अत्र त्रिपुरद्विड्वीरते अतिमात्रबलचापलयोर्विशेषौ[3]। अवलेपकुसुमायुधौ च कुमतिरित्यत्र गुणप्रधानयोः[4]।

यथा वा—

'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम्।
मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः॥'

---

रूपमाह—**विशेषेति**। अन्यथा लक्षणानङ्गीकारे। **अनुल्लासादिति**। मिथो भेदाभावेन स्फुटमप्रतीतेरित्यर्थः। तथात्वे नु सादृश्योल्लासे तु। अस्योपपत्तिरग्रेऽत्रैव स्फुटीभविष्यति। इवयुतोदाहरणमुक्त्वा यथाघटितमुदाहरणमाह—**यथा वेति**। **गुणेति**। कुत्सितमतितद्विशेष्ययोरित्यर्थः। विशेषावित्यस्यानुषङ्गः। निदर्शनपदघटितमाह—**यथा वेति**। सद्गुणो विपद्गतोऽपीत्यर्थः। दृष्टान्तपदघटितस्यापीदमेवोदाहरणमिति ध्वनयितुं निदर्शनप-

---

१ इवादीनाम् अवयवावयविभावे वृत्तिर्वर्तमानता अर्थाद्बोधकता, (शक्तिर्वा) नास्तीति शङ्का। इवादिभिर्लक्षणया सोऽर्थो बोध्यत इति समाधानम्।

२ सामान्याद्विशेषस्य भेदाऽभावेन भेदसापेक्षं सादृश्यं मिथः कथमुल्लसेदित्याशयः।

३ अर्थात् अतिमात्रबल-चापले सामान्ये (अवयविभूते)। त्रिपुरद्विट्-वीरते च तद्विशेषौ (तदेकदेशौ)।

४ कुमतिरित्यत्र कुमतिविशिष्टः पुरुष इति बोधेन कुत्सिता मतिः गुण(विशेषण)भूता, (तद्विशिष्टः) पुरुषश्च प्रधानम् (विशेष्यभूतः), ततश्च विशेषणविशेष्यभूतयोः कुत्सितमति-तद्विशेष्यपुरुषयोः सामान्यभूतयोः अवलेप-कुसुमायुधौ विशेष (एकदेश) भूतौ इत्याशयः।

दृष्टान्तो वा । इवादिशब्दप्रयोगे सामान्यार्थप्राधान्यं[1] वाक्यैक्यम्, निदर्शनादिशब्दप्रयोगे तु विशेषप्राधान्यं[2] वाक्यभेदश्चेति विशेषः । तत्र तावत् 'अमितगुणः—' इति पद्ये क्रियाप्रधानमाख्यातमिति नयेऽमितगुणपदार्थकर्तृकमेकदोषहेतुकं निन्दाविषयीभवनं निखिलरसायनराजलशुनकर्तृकोग्रगन्धहेतुकनिन्दाविषयीभवनावयवकमिति[3] धीः । प्रथमान्तविशेष्यकबोधवादिनां तूग्रगन्धहेतुकनिन्दाविषयीभवनाश्रयतादृशलशुनावयवकस्तादृशपदार्थ एकदोषहेतुकनिन्दाविषयीभवनाश्रय इति । तत्रापि विशेषवाक्यार्थे क्रियान्वयो मृग्यते[4] हेत्वन्तरान्वयार्थम् । अन्यथा तादृशलशुनावयवके तादृशपदार्थ एव क्रियान्वये नोपपत्तिः स्यात् । एवं यथाशब्दस्थलेऽपि ।

---

दस्थाने पाठान्तरमाह—**दृष्टान्तो वेति** । वाशब्द एवार्थे[5] । इवेत्यस्य तत्रेत्यादिः । **सामान्यार्थप्राधान्यमिति** । तस्यापि प्राधान्यमित्यर्थः । तमेव विशेषं प्रदर्शयति—**तत्रेत्यादिना** । तत्र तेषां मध्ये । **तादृशेति** । निखिलरसायनराजेत्यर्थः । **तादृशेति** । अमितगुणेत्यर्थः । एवमग्रेऽपि धीरित्यस्यानुषङ्गः । ननु निन्दितो भवतीत्यादेरेकत्रैवोपादानात्कथमुभयत्र बोधोऽत आह—**तत्रापीति** । **हेत्वन्तरान्वयेति** । उग्रगन्धादिरूपहेत्वन्तरेत्यर्थः । अन्यथा तदनन्वये । **नोपपत्तिरिति** । उपपत्तिर्न स्यादित्यर्थः ।

---

१ उग्रेण गन्धेन लशुन इव एकेन दोषेण अमितगुणोपि पदार्थो निन्दितो भवतीत्यत्र आमितगुणपदार्थस्य सामान्यस्य प्राधान्यं वाक्यैक्यं च स्पष्टम् ।

२ सद्गुणशाली उपकारमेव कुरुते । मृतः पारदोऽत्र निदर्शनम्, अत्र विशेषस्य पारदस्य प्राधान्यं वाक्यभेदश्चेति स्फुटम् । इवादौ वाक्यैक्यम्, निदर्शनादिशब्दप्रयोगे वाक्यभेद इत्यादिकं शाब्दबोधे स्पष्टीकृतं ग्रन्थकृता ।

३ लशुनकर्तृकम् उग्रगन्धहेतुकं निन्दाविषयीभवनम् अवयवो यस्य, अर्थात् अमितगुणपदार्थस्य (सामान्यस्य, अवयविभूतस्य) एकदोषहेतुके निन्दाविषयीभावे रसायनराजलशुनस्य (सामान्यैकदेशभूतस्य, विशेषस्य) उग्रगन्धेन हेतुना निन्दाविषयीभावः अवयवः; एकदेशभूत इत्याशयः ।

४ अयं भावः–एकदोच्चारितताया निन्दितो भवतीति क्रियाया अन्वयो यद्यप्येकदैव प्राप्तस्तथापि विशेषवाक्यार्थे (लशुनवाक्यार्थे) उग्रगन्धेति हेतोरन्वयार्थं द्विवारमावर्त्यते । यद्येकवारमेव क्रियान्वयः स्यात्तर्हि–'रसायनराजलशुनावयवक(अर्थात् अमितगुणपदार्थसामान्यस्य एकदेशभूतो लशुनो यत्र) अमितगुणपदार्थकर्तृकम् एकदोषहेतुकं निन्दाविषयीभवनम्' इत्येकदा क्रियान्वये सति, एकदेश(अवयव)घटितवाक्ये क्रियाऽनन्वयात् पूर्णवाक्यार्थस्योपपत्तिर्न स्यादित्याशयः ।

५ पाठान्तरं ब्रुवतोपि नागेशस्य सेयं व्याख्या भ्रमाख्या । 'निदर्शनं पारदोऽत्र रसः' इति पाठस्य स्थाने 'दृष्टान्तः पारदोऽत्र रसः' इति पाठान्तरं स्वीकृत्यापि 'वाशब्द एवार्थे' इत्यस्य कोऽर्थः ?

उपकारमेवेत्यत्र तु विपद्गताभिन्नः सद्गुण उपकारानुकूलकृतिमानिति पूर्ववाक्यार्थः, अत्रास्मिन्नर्थे मूर्च्छां गतो मृतो वा पारदो निदर्शनमेकदेश इत्युत्तरवाक्यार्थे गुणं इति केषांचित् । इतरेषां तु तादृशकर्तृका तादृशक्रियेति पूर्ववाक्यार्थे तादृशः पारद एकदेश इति । प्रधानावयवस्येव गुणावयवस्यापि विशिष्टार्थावयवत्वात् , घटमानयेत्यत्र नीलघटवत् ।

'अर्थिभिश्छिद्यमानोऽपि स मुनिर्न व्यकम्पत ।
विनाशेऽप्युन्नतः स्थैर्यं न जहाति द्रुमो यथा ॥'

अत्र दधीच्यालम्बनायां तदीयलोकोत्तरचरितस्मरणोद्दीपितायामेतत्पद्यप्रयोगानुभावितायामेतत्पद्यनिर्मातृगतायां रतौ प्रधानीभूतायामर्थ्यालम्बनस्तत्कृतयाच्ञाश्रवणोद्दीपितो गात्रच्छेदाभ्यनुज्ञानानुभावितो धृत्या संचारिभावेन पोषितो मुनिगत उत्साहो गुणः । तत्र चाध्यर्धतृतीयचरणगत-

पद्यस्यात्रेत्यस्यार्थमाह—**अस्मिन्निति** । केषांचिन्नैयायिकानाम् । इतरेषां च वैयाकरणानाम् । **तादृशेति** । विपद्गताभिन्नसद्गुणकर्तृकोपकारक्रियेत्यर्थः । पद्यस्यात्रेत्यस्यार्थमाह—**पूर्ववाक्यार्थ इति** । मूर्च्छां गतादिरूपः पारदः पूर्ववाक्यार्थस्यावयव इत्यर्थः । ननु क्रियारूपस्य पूर्ववाक्यार्थस्य कथं द्रव्यरूपः पारदोऽवयव इत्यत आह—**प्रधानेति** । **घटमानयेति** । कर्मणः सर्वमते गुणत्वादित्यर्थः । नीलघटवदिति चिन्त्यमिति कश्चित् । अत्रोदाहरण एकवाक्यतासत्त्वेऽपि वाक्यैकवाक्यता पूर्वस्माद्विशेषः । पूर्वत्र तु पदैकवाक्यतैवेति बोध्यम् । स दधीचिः । नन्वेवं कथमलंकारत्वमत आह—**तत्र चेति** । रतावित्यर्थः । उत्कर्षकतयेत्यत्रास्यान्वयः । **अध्यर्धेति** । अर्धाधिकस्तृतीयचरणो यस्मि-

१ गुणः गुणीभूतः । अर्थात् विशेष( एकदेश )प्रतिपादक उत्तरवाक्यार्थः प्रधानम्, सामान्य( अवयवि )प्रतिपादकः पूर्ववाक्यार्थश्च तत्र गुणीभूतः । उक्तं पूर्वं ग्रन्थकृता—'निदर्शनादिशब्दप्रयोगे तु विशेषप्राधान्यं वाक्यभेदश्च' इति ।

२ अर्थात् क्रियाविशेष्यकबोधवादिनां वैयाकरणानां मते तु–तादृशकर्तृका तादृशक्रियेति पूर्ववाक्यार्थे अर्थात् विपद्गताभिन्नसद्गुणकर्तृकोपकारक्रियायां तादृशः अर्थात् मूर्च्छां गतो मृतो वा पारदः निदर्शनम् ( एकदेशः )–इत्याकारकः शाब्दबोधः ।

३ ननु उत्तरस्य विशेषवाक्यार्थस्यैकदेशः पारदः पूर्ववाक्यार्थस्य ( क्रियाविशेष्यकबोधवादिनाम् ) कथमेकदेश इति शङ्का । घटमानयेति वाक्यस्य यथा घटोऽवयवः, एवं प्रधाने घटे समवेततया गुणीभूतो नीलगुणोऽप्यवयवः । एवमेव पूर्ववाक्यार्थस्य यथा उत्तरवाक्यार्थोऽवयवस्तथा तद्वाक्यावयवः पारदोऽप्येकदेश इति समाधानम् ।

४ गुणीभूतः ।

स्यार्थान्तरन्यासस्योत्कर्षकतया स्थितस्य विवेचनद्वारालंकरणं चतुर्थचरणशकलगतमुदाहरणम् ।

एवमेव—

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

इति कालिदासपद्येऽपि बोध्यम् । अस्मिंश्चालंकारेऽवयवावयविभावबोधकस्येवशब्दादेः प्रयोगः, सामान्यविशेषयोरेकरूपेविधेयान्वयश्चार्थान्तरन्यासभेदाद्वैलक्षण्याधायक इति तत्प्रकरणे निपुणतरमुपपादयिष्यामः ।

प्राञ्चस्तु "नायमलंकारोऽतिरिक्तः । उपमयैव गतार्थत्वात् । न च सामान्यविशेषयोः सादृश्यानुल्लासात्कथमुपमेति वाच्यम् । 'निर्विशेषं न सामान्यं–' इति सामान्यस्य यत्किंचिद्विशेषं विना प्रकृतत्वायोगात्तादृशवि-

---

स्वद्गतस्येत्यर्थः । अत एव वक्ष्यति—**शकलेति । विवेचनेति ।** बुद्ध्यारोहणेत्यर्थः । यस्य हिमाचलस्य । कुमारसंभवस्थं पद्यम् । नन्वेवं सांकर्येण तद्विशेषत्वस्यैवात्र संभवेन कथमलंकारान्तरत्वमत आह—**अस्मिंश्चेति ।** भेदाद्विशेषात् । **तत्प्रकेति ।** अर्थान्तरन्यासप्रकरण इत्यर्थः । अयमुदाहरणरूपः । नन्वेवमप्यत्रेवादीनां सामान्यविशेषभावा-

---

१ 'छिद्यमानोपि स मुनिर्न व्यकम्पत' इति विशेषस्य, 'उदारपुरुषो विनाशेपि स्थैर्यं न जहाति' इति सामान्येन समर्थनादर्थान्तरन्यासोऽयं दधीच्यालम्बनाया रतेरुत्कर्षकः ( अलंकारः ) । अर्थान्तरन्यासेन समर्थनीयमर्थं स्पष्टं बुद्ध्यारूढं कुर्वत्, वाचकेन यथाशब्देन चतुर्थचरणस्य खण्डे स्फुटीभवत् 'द्रुमो यथा' इत्युदाहरणं [ विनश्यदवस्थापन्नत्वेऽपि स्थिरीभूतस्य उन्नतस्य ( सामान्यस्य, अवयविनः ) द्रुमः एकदेश इति ] च अर्थान्तरन्यासस्यालंकरणमित्याशयः । [ एवंविधस्थले उदाहरणेनैव गतार्थत्वे कुवलयानन्दस्वीकृतो नवीनो विकस्वरालंकारोऽनुचित इत्यर्थान्तरन्यासे प्रकटीकरिष्यमाणमाकूतं सूचितम् ]

२ ननु अर्थान्तरन्यासविशेष ( भेद ) एव उदाहरणालंकार इति शङ्कायां द्वयोर्वैलक्षण्यमाह— उदाहरणे सामान्य-विशेषयोः एकरूपे विधेये ( क्रियायाम् ) अन्वयः । अर्थात् विशेषनिरूपणपक्षेऽपि पूर्वप्रतिपादितसामान्यार्थगतैव क्रिया विधेया भवति । यथा 'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥' इत्युदाहरणे विशेषस्य पारदस्य पक्षेपि 'उपकारमेव कुरुते' इति सामान्यगतक्रियैव विधेया । 'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् । मूर्च्छां गतो मृतो वा रोगानपहरति पारदः सकलान् ॥' इत्यर्थान्तरन्यासे तु पृथगुपात्त-विशेषरूपेण 'अपहरति'क्रियान्वयो भवतीत्यर्थान्तरन्यासप्रकरणे प्रतिपादितम् ।

शेषमादाय विशेषान्तरस्य सादृश्योल्लासे बाधकाभावादिवादिभिरामुखे प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेः[1] ॥" इत्यप्याहुः ॥

इति रसगङ्गाधर उदाहरणप्रकरणम् ।

सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालंकारः ॥

यथा—

'दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डध्वनि[2]-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वलगद्गाण्डिवमुक्तकाण्डवलय[3]ज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः[4] स्मरेत् ॥'

यथा वा—

'भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भवन्तमरिमण्डलक्रथन पश्यतः संगरे ।
अमन्दकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झगित्यधिरुरोह देवेश्वरः ॥'

अनयोः पद्ययोः प्रधानीभूताया राजविषयककविनिष्ठरतेरुत्कर्षकतया

---

त्मकानयवावयविभावबोधकत्वेन कथं तदुल्लासोऽत आह—**इवेति** । आमुखे आदौ ॥ इति रसगङ्गाधरमर्मप्रकाश उदाहरणप्रकरणम् ॥

त्वां प्रकृतं राजानम् । **मध्येरणमिति** । रणमध्ये इत्यर्थः । वल्गन्मनोहरम् । पाण्डवमर्जुनम् । दन्तावलो हस्ती । अरिमण्डलक्रथनेति संबोधनम् । **अमन्देति** । तीक्ष्णेत्यर्थः । 'कराल' इति क्वचित् पाठः । झगिति झटिति । देवेश्वर इन्द्रः । रतेर्भावस्य ।

---

१ निर्विशेषं न सामान्यमित्यादेः प्राचां समाधानस्यायं निर्गलितार्थः—यथा अमितगुणोपि पदार्थ इत्युदाहरणे लशुनस्य (विशेषस्य) प्रस्तावे अमितगुणपदार्थसामान्यस्य अप्रकृतस्य कीर्तनं न युज्यते इति तदन्तर्गतेन (यतो हि सामान्यगर्भेपि कश्चिद्विशेषो भवत्येव) यत्किंचिद्विशेषपदार्थेन सह विशेषान्तरस्य (लशुनस्य) सादृश्योल्लासे उपमा निर्बाधेति प्राचामाशयः । नन्वेतादृशस्थले इवादिना सामान्यविशेषभावः (अवयवावयविभावः) बोध्यते, ततः कथं सादृश्यमुल्लसेदिति चेत् । आदौ प्रतीयमानस्यापि सामान्यविशेषभावस्य अन्ते सादृश्ये एव पर्यवसानं भवतीति उपमायां बाधाऽभावात् ।

२ ध्वनिना ध्वस्तं विपक्षमण्डलं येन तत् ।

३ काण्डवलयस्य बाणसमूहस्य ज्वालावलीनां ताण्डवेन भ्रश्यत् (नश्यत्) यत् खाण्डवं तन्नामकं वनं तत्र रुष्टं पाण्डवम् ।

४ 'क्षितीश !' 'इति संबोधनपाठे तु-हे क्षितीश त्वां वीक्ष्य पाण्डवं को वा जनो न स्मरेदित्यर्थः ।

स्मरणमलंकारः । आद्ये वाच्यम्, द्वितीये तु लक्ष्यमिति विशेषः । वीररसोऽपि चात्र प्रधानोत्कर्षकतयालंकार एव ।

एकीभवत्प्रलयकालपयोधिकल्प-
मालोक्य संगरगतं कुरुवीरसैन्यम् ।
सस्मार तल्पमहिपुंगवकायकान्तं
निद्रां च योगकलितां भगवान्मुकुन्दः ॥

अत्र तल्पनिद्रयोः स्मरणं यद्यपि न तल्पनिद्रासादृश्यदर्शनोद्बुद्धसंस्कार-प्रयोज्यम्, तथापि सैन्यगतपयोधिसादृश्यदर्शनोद्बुद्धपयोधिविषयकसंस्का-रजन्यपयोधिस्मरणाधीनत्वाद्भवत्येव यत्किंचित्सादृश्यदर्शनोद्बुद्धसंस्कार-प्रयोज्यम् । नहि सादृश्ये स्मर्यमाणसंबन्धित्वं विवक्षितम् । एवं वाच्ययो-स्तल्पनिद्रास्मरणयोः, एतत्कारणतया आक्षिप्तस्य पयोधिस्मरणस्य चाविशे-षेण संग्रहाय लक्षणे जन्यत्वमपहाय प्रयोज्यत्वमुपात्तम् । केचित्तु सदृश-ज्ञानोद्बुद्धसंस्कारजन्यं सदृशविषयकमेव स्मरणमलंकारः । भुजगेन्द्रनिद्रा-दिस्मृतिस्तु नालंकार इत्याहुः ।

लक्ष्यद्वयदाने बीजमाह—**आद्ये इति**। स्मरणमित्यस्यानुषङ्गः । **लक्ष्यमिति**। अविरो-हतेर्लक्ष्यमित्यर्थः । नन्वेवमपि वीररसस्यानयोः प्राधान्येन राजनिष्ठस्य सत्त्वात् ध्वनित्वमे-वात आह—**वीरेति**। **प्रधानोत्कर्षेति**। कविनिष्ठरत्युत्कर्षेत्यर्थः । **अलमिति**। रस-वदलंकार इत्यर्थः । विवक्षितं लक्षणे इति शेषः । **एवमिति**। वैधर्म्ये दृष्टान्तः । **एत-दिति**। तल्पनिद्रास्मरणकारणतयेत्यर्थः । संग्रहाय एतल्लक्ष्यत्वाय । **केचित्त्विति**। अत्र मते जन्यत्वनिवेशः सादृश्ये स्मर्यमाणसंबन्धिनिवेशश्चेति पूर्वतो भेदः । **भुजगेन्द्रेति**। एकसंबन्धीति न्यायेन तल्पादिस्मरणस्य पयोधिस्मरणजन्यत्वेऽपि तादृशसंस्काराजन्यत्वा-दसदृशविषयकत्वाच्च पयोधिस्मरणं तु तथेति भवति स इति भावः । अत्रारुचिबीजं तु

१ सादृश्यदर्शनेन उद्बुद्धो यः पयोधिविषयकः संस्कारस्तज्जन्यस्य पयोधिस्मरणस्याधीन-त्वात् । अर्थात् तल्पनिद्रयोः स्मरणं केनचित्पदार्थेन सह तयोः सादृश्यदर्शनात् यद्यपि न जातं तथापि तयोः स्मरणे यत्किंचित्सादृश्यदर्शनं मूलभूतमवश्यमस्ति । अपारेण सैन्येन सह पयोधेः सादृश्यात् पयोधेः संस्कार उद्बुद्धः तेन च पयोधिस्मरणं जातम्, तत्स्मरणाधीनं च तल्प-निद्रयोः स्मरणमिति एनयोः स्मरण ( पयोधेः ) सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं जातम् ।

२ अर्थात् यद् वस्तु स्मर्यमाणं तत्संबन्धिसादृश्यज्ञानोद्बुद्धत्वाद्यर्थो न विवक्षितः ।

३ सादृश्यज्ञानोद्बुद्धसंस्काराज्जन्यत्वं पयोधिस्मरणस्यैव, प्रयोज्यत्वं तु पयोधिस्मरणाधीन-तल्पनिद्रास्मरणस्यापीत्याशयः ।

'इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः ।
परिवर्तितकंधरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि ॥'

अत्र स्मरणं चिन्तोद्बुद्धसंस्कारप्रयोज्यत्वान्नालंकारः । व्यङ्ग्यत्वविरहाच्च न भावः ।

एवम्—

'दरानमत्कंधरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिःश्वासभरालसाङ्ग्याः स्मरामि सङ्गं चिरमङ्गनायाः ॥'

इहापि स्मृतिर्न भावो नाप्यलंकारः । व्यङ्ग्यस्यैव व्यभिचारिणो भावत्वात् । यथा 'सा वै कलङ्कविधुरा मधुराननश्रीः' । अयं चालंकारिकाणां संप्रदायो यत्सादृश्यमूलकत्वे स्मरणं निदर्शनादिवदलंकारः । तस्याभावे व्यङ्ग्यतायां भावः । तयोरभावे तु वस्तुमात्रम् ।

अप्पयदीक्षितास्तु—

''-'स्मृतिः सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालंकृतिः सा स्यादव्यङ्ग्यत्वविशेषिता ॥'

यथा—

'अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥'

---

सादृश्ये स्मर्यमाणसंबन्धित्वनिवेशस्त्वेवं सति फलाभावः । नहि तादृशसंस्कारजन्यं स्मरणं विसदृशविषयकं संभवति । तथा पयोधिस्मरणस्य सदृशज्ञानत्वेन तेन तत्पादिस्मरणानुकूलसंस्कारस्योद्बोधनसंभवेन तज्जन्यत्वसत्त्वादलंकारत्वमेव तस्येति । सादृश्यज्ञाननिवेशफलमाह—**इत एवेति** । गुरुभिः श्वश्र्वादिभिः । परिवर्तितेत्यादिद्वयं स्मयमानक्रियाविशेषणम् । इहापि इत्यत्रापि । ननूक्तरीत्यानलंकारत्वेऽपि भावत्वं कुतो न, अव्यङ्ग्यत्वस्याप्रतिबन्धकत्वात् । अत आह—**व्यङ्ग्येति** । तस्य सादृश्यमूलकत्वस्य । व्यङ्ग्यतायां सत्याम् । तयोर्व्यङ्ग्यत्वसादृश्यमूलकत्वयोः । **अपीति** । रघुवंशे दशरथमृगयावर्णनम् ।

यथा वा—

'दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥'

एकत्र सदृशदर्शनात्तत्सदृशकर्मिका स्मृतिः। इतरत्र सदृशदर्शनात्तत्सदृशलक्ष्मीसंबन्धिनो जलनिधिमन्थनस्य स्मृतिः। उभयत्रापि सादृश्यमूलकवस्त्वन्तरस्मृतित्वमविशिष्टम्। अत एव सदृशासदृशसाधारण्यार्थतया लक्षणे वस्त्वन्तरग्रहणमर्थवत्।

'सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि॥'

अत्र श्रुतकुरङ्गसंबन्धिनस्तन्नयनस्य स्मरणात्तत्सदृशसीतानयनस्मृतिस्तत्संबन्धिसीतास्मृतिश्चेति। किं त्वेषा व्यङ्ग्या अलंकार्यभूता च तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणम्।

---

स दशरथः। सादृश्यबोधकं केशपाशस्य विशेषणद्वयम्। **दिव्यानामिति**। माघे जलक्रीडावर्णनम्। अम्भस्तो जलात्। मन्थनस्येति 'अधीगर्थ—' इति कर्मणि शेषे षष्ठी। लक्ष्यद्वयदाने बीजमाह—**एकत्रेति**। आद्य इत्यर्थः। इतरत्र अन्त्ये। **सदृशेति**। लक्ष्मीसदृशनायिकेत्यर्थः। लक्षणं संगमयति—**उभयत्रेति**। तथा च द्वितीयलक्ष्यसंग्रह एव वस्त्वन्तरसमाश्रयेति विशेषणफलमित्याह—**अत एवेति**। द्वितीयस्य लक्ष्यत्वादेवेत्यर्थः। **सदृशासदृशेति**। स्मृतेः सदृशासदृशान्यतरविषयकत्वलाभार्थतयेत्यर्थः। अव्यङ्ग्यत्वविशेषणफलमाह—**सौमित्रे इति**। हनुमन्नाटके सीतावियोगे श्रीरामचन्द्रस्य लक्ष्मणं प्रत्युक्तिरियम्। ननु निश्चयेन। चण्डांशुः सूर्यः। **तन्नयनेति**। कुरङ्गनयनेत्यर्थः। तत्सदृशेति नयनविशेषणम्। इतिर्भूता चेत्यग्रे योज्यः। एषा सीतास्मृतिः। अलंकारसामान्यलक्षणमपि नास्तीत्याह—**अलमिति**। सीतास्मृतेः प्राधान्यादिति भावः।

---

१ किंचिद्वस्तु दृष्ट्वा कुत्रचित् तत्सदृशस्य वस्तुनः स्मरणम्, कुत्रचित्तु तत्सदृशवस्तुनः संबन्धिपदार्थस्य यस्य कस्यचित् (असदृशस्यापि) स्मरणम्। उभयत्रापि सादृश्यं मूलं यत्र एतादृशम् (अर्थात् सादृश्यं दृष्ट्वा) वस्त्वन्तरस्य स्मरणं भवतीत्याशयः।

'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न श्रान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥'

अत्र स्तूयमानभूसंबन्धिनो भूभृतः स्मृतिर्न सादृश्यमूलेति नात्र स्मरणालंकारः । किं तु स्मृतेः संचारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात्प्रेयोलंकारः । एतद्व्यावृत्तये सादृश्यमूलेति विशेषणम् ।" इत्याहुः ।

तदेतत्सर्वमरमणीयम् । यत्तावदुच्यते सदृशासदृशयोः केशपाशजलनिधिमन्थनयोः संग्रहाय लक्षणे वस्त्वन्तरग्रहणमर्थवदिति । तत्र सादृश्यमूला स्मृतिः स्मरणालंकार इत्येतावतैव केशपाशस्मरणस्येव जलनिधिमन्थनस्मरणस्यापि संग्रहाद्वस्त्वन्तरसमाश्रयत्वविशेषणमनर्थकम् । एकत्र सादृश्यदर्शनोद्बुद्धसंस्कारजन्यत्वेन, अपरत्र च सादृश्यदर्शनोद्बुद्धसंस्कारजलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वेन च सादृश्यमूलत्वाविशेषात् । नहि सादृश्यमूलेत्युक्ते सदृशविषयेति लभ्यते, येन जलनिधिमन्थनस्मृतेरसंग्रहः स्यात् । यदपि 'सौमित्रे ननु सेव्यतां—' इत्यत्र स्मृतिर्व्यङ्ग्या अलंकार्यभूता च, तद्व्यावृत्तयेऽव्यङ्ग्यत्वविशेषणमित्युक्तम् । तत्र नेयं स्मृतिरलंकार्यभूता । किं तु

**अत्युच्चा इति** । भुवं प्रत्युक्तिरियम् । प्रस्तौमि करोमि । इमां भुवम् । **न सादृश्येति** । किं लेकसंबन्धीति रीत्येति भावः । **रतिभावेति** । कविनिष्ठेत्यादिः । **अरमणीयमिति** । वक्ष्यमाणदोषादिति भावः । तमेव दार्ष्टान्तिकानुवाह—**यत्तावदिति** । तत्र उच्यमाने तस्मिन् । ब्रूम इति शेषः । तदाह—**सादृश्येति** । एवमग्रेऽपि । **केशेति** । तस्य सदृशत्वेन दृष्टान्तत्वमिति भावः । **स्यादिति** । इतीति शेषः । सादृश्यपदस्य नियतसंबन्धिकतया संबन्ध्याकाङ्क्षायामुपस्थितस्मर्यमाणस्यैवान्वयापत्तिः । नहि जनकत्वमूला पूज्यत इत्युक्ते पुत्रजनकत्वेन भार्या पूज्यते । अतो वस्त्वन्तरसमाश्रयेत्यावश्यकमिति चिन्त्यमिदम् । **नेयं स्मृतिरलंकार्यभूतेति** । अत्र स्मृतेः हा क्वासीत्यादिपदगम्यत्वेन विवहनप्रवृत्तराजानुगम्यमानभूत्यवत्, 'शठेन विधिना निद्रादरिद्रीकृतः' इत्यादौ शठादिपदगम्यासूयावद्वा तस्या एव प्राधान्यादलंकार्यत्वम् । अनुपस्कारकत्वाच्च विप्र-

१ संस्कारजं यत् लक्ष्मीस्मरणम्, तेन उद्बुद्धो यः संस्कारः (जलनिधिमन्थनविषयकः) तज्जन्यं (जलनिधिमन्थनस्मरणम्) तस्मात् ।

जानक्यालम्बनो निशासमयोद्दीपितः संतापादिनानुभावित उन्मादेन संचारिणा परिपोषितो विप्रलम्भः प्रधानत्वेनालंकार्यः । तस्य च स्मृतिरुत्कर्षहेतुत्वादलंकार एव । अतो नितरां तद्व्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणदानमनुचितम् । नहि व्यङ्ग्यत्वालंकारत्वयोर्विरोध इति वक्तुं शक्यम् । नित्यव्यङ्ग्यानां रसभावादीनामपि पराङ्गतायामलंकारत्वाभ्युपगमात् । प्रधानव्यङ्ग्यव्यावृत्त्यर्थं पुनरुपस्कारकत्वं सर्वेष्वलंकारलक्षणेषु देयमिति प्रागेवावेदितम् । यदप्युक्तम् 'अत्युच्चाः परितः स्फुरन्ति गिरयः' इत्यत्र स्मृतेः संचारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात्प्रेयोलंकार इति, तन्न । भावस्य हि भावाद्यङ्गतायां प्रेयोलंकारत्वम् । नह्यत्र स्मृतिर्भावः । तस्याः स्मरतिना वाचकेनाभिधानात् । नहि वाच्यस्य व्यभिचारिणो भावत्वं वक्तुं युक्तम् । 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तविरोधात् । तथा चोक्तं सर्वस्वकृता—

"प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः । तत्रापि विभावाद्यागूरितत्वे, यथा 'अहो कोपेऽपि कान्तं मुखम्' इति । न तु स्वशब्दनिवेद्यत्वे ।

यथा—

'अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥'

---

लम्भस्यैव तत्त्वाच्चेति चिन्त्यम् । विप्रलम्भः श्रीरामचन्द्रनिष्ठः । नितरामित्यस्यानौचित्येऽन्वयः । तदाशयं खण्डयति—**नहीति** । **नित्येति** । सर्वथेत्यर्थः । कदाप्यवाच्यलक्ष्येति यावत् । नन्वेवं प्राधान्येऽप्यलंकारत्वापत्तिरत आह—**प्रधानेति** । सर्वेषु न त्वत्रैव । तथा चालंकारसामान्यलक्षणप्राप्तत्वात्तस्य नातिप्रसङ्ग इति भावः । **सिद्धान्तेति** । मम्मटभट्टादीनामिति शेषः । तद्ग्रन्थमाह—**प्रेयोलमित्यादि** । इतीत्यन्तेन । तत्रापि तदुत्थापितस्मृतिष्वपि । आगूरितत्वे आविष्कृतत्वे । **अत्रेति** । पुष्पकेण लङ्कातोऽयोध्यां गच्छतः श्रीरामस्य सीतां प्रत्युक्तिरियं रघुवंशे । अनुगोदं गोदासमीपे । **वानीरेति** । तृणधान्यतृणेत्यर्थः । सुप्तं स्वापः । इष्टापत्तिं परिहरति—**एवं चेति** ।

---

१ तस्य ( विप्रलम्भस्य ) उत्कर्षहेतुत्वात्स्मृतिरलंकार एवेत्यन्वयः ।

२ सौमित्रे अत्र स्मृतेः सादृश्यमूलकत्वम् उपस्कारकत्वं च यदा सिद्धं तदाऽस्या अलंकारत्वमपि न व्यावर्तनीयम्, व्यङ्ग्यत्वं तु अलंकारत्वे न विरोधीति तु प्रोक्तमेव ।

इत्यादाविति।" ननु भावाद्यङ्गीभूतभावत्वं न प्रेयोलंकारलक्षणम्। अपि तु भावाद्यङ्गीभूतसंचारित्वमात्रम्। तथा च प्रकृते स्मरणस्य स्वशब्दनिवेद्यत्वेन भावत्वविरहेऽपि संचारित्वानपायात्प्रेयोलंकारत्वमविरुद्धमेवेति चेत्, एवं तर्हीतराङ्गीभूतस्थायित्वमात्रं रसालंकारत्वम्, न तु व्यज्यमानत्वविशिष्टम्, इत्यस्यापि सुवचत्वात्।

एवं च—

'चराचरोभयाकारजगत्कारणविग्रहम्।
कल्पान्तकालसंक्रुद्धं हरं सर्वहरं नुमः॥'

इत्यत्र क्रोधस्य स्वशब्दनिवेदितत्वेऽपि देवताविषयकरतिभावाङ्गीभूतस्थायित्वानपायाद्रसालंकारता स्यात्। न चेष्टापत्तिः, अपसिद्धान्तात्। तस्माद्व्यज्यमानस्यैव स्थायिनः पराङ्गत्वे यथा रसालंकारत्वमेवं व्यज्यमानस्यैव संचारिणो भावाद्यङ्गतायां प्रेयोलंकारत्वमिति नात्र स्मृतिमादाय प्रेयोलंकारता वाच्या, किं तु भूविषयकरतेः पूर्वार्धव्यङ्ग्याया उत्तरार्धव्यङ्ग्यभूभृद्विषयरतिभावाङ्गत्वाद्युक्ता प्रेयोलंकारता वक्तुम्। उक्तं च मम्मटभट्टैः—'अत्र भूविषयो रत्याख्यो भावो राजविषयरतिभावस्य' इति। अपि च महदिदमाश्चर्यं यत् स्वेनैव निर्मितः कुवलयानन्दाख्यः संदर्भो विस्मृतः। उक्तं च तत्र—'विभावानुभावाभ्यामभिव्यञ्जितो निर्वेदादिर्भावः, स यत्रापरस्याङ्गं स प्रेयोलंकारः' इति।

यदपि 'सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम्' इत्यलंकारसर्वस्व-

तथा सुवचत्वे चेत्यर्थः। **स्वशब्देति**। क्रुद्धमितीत्यर्थः। **रतिभावेति**। कविनिष्ठेत्यादिः। स्मृतिमादायेत्युक्तिफलमाह—**किं त्विति**। एवं च प्रेयोलंकारसत्त्वेऽपि त्वत्कृतं तदुपपादनं चित्रमीमांसास्थमयुक्तमिति भावः। **भावस्येति**। अङ्गमिति शेषः। स्वेनैव अप्पयदीक्षितेनैव। तत्र कुवलयानन्दे। निर्वेदादिस्त्रयस्त्रिंशत्। अपरस्य भावादेः। अलंकार-

---

१ अङ्गभूतो भावो विभावादिभिर्व्यञ्जितो भवेदिति नावश्यकम्, अपि तु भावः (संचारिमात्रम्) अङ्गं भवेदिति।

२ अर्थात् रसस्याङ्गभूतो रसः (अर्थाद् स्थायी, यतो हि प्रधानतायामेव रसत्वव्यपदेशः अङ्गतायां तु स्थायित्वमात्रमिति संप्रदायात्) व्यज्यमानः स्यादित्यपि रसालंकारत्वे नावश्यकं स्यात्, अपि तु रसस्याङ्गभूतं स्थायिभावमात्रं स्यादित्यपि वक्तुं शक्येतेत्यापत्तिः।

रत्नाकरयोः स्मरणालंकारलक्षणमुक्तम्, तदपि न। सदृशस्मरणादुद्बुद्धेन संस्कारेण जनिते स्मरणे अव्याप्तेः।

यथा—

'सन्त्येवास्मिञ्जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भिः
स्मृत्यारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥'

अत्र च चातकदर्शनादेकसंबन्धिज्ञानादुत्पन्नेनापरसंबन्धिनो जलधरस्य[1] भगवत्सदृशस्य स्मरणेन जनितं भगवतः स्मरणं भगवद्विषयरतिभावाङ्गम्[2]। यदि च 'सदृशानुभवात्' इत्यपहाय 'सदृशज्ञानात्'[3] इति लक्षणे निवेश्यते तदा भवत्यस्यापि संग्रह इति दिक्।

अथास्य ध्वनिः।

यथा—

'इदं लताभिः स्तबकानताभिर्मनोहरं हन्त वनान्तरालम्।
सदैव सेव्यं स्तनभारवत्यो न चेद्युवत्यो हृदयं हरेयुः ॥'

अत्र स्तबकानताभिर्लताभिः स्तनभारवतीनां युवतीनां स्मरणमलंकार्यस्यान्यस्याभावादनुपसर्जनम्[4], स्तनस्तबकरूपस्य बिम्बप्रतिबिम्बभावमाप-

सर्वस्वरत्नाकरयोर्ग्रन्थयोः। अध्यक्षैः प्रत्यक्षैः। अथ प्रत्यक्षानन्तरम्। **अनुपसर्जनमिति**। प्रधानमित्यर्थः। एवमलंकारत्वं निरस्य ध्वनित्वमुपपादयितुमाह—**स्तनेति**।

---

१ इह हि चातकं दृष्ट्वा तदेकाधारस्य जलधरस्य स्मरणं पूर्वं जायते, तदनु च जलधरसादृश्येन भगवतः स्मृतिरुपतिष्ठते। ततश्च भगवतः सेयं स्मृतिः सदृशस्य स्मरणादुद्बुद्धो यः सादृशविषयः (श्रीकृष्णविषयः) संस्कारस्तास्माज्जनिता वर्तते, न तु सदृशानुभवात्, इति पद्येऽस्मिन् स्मरणालंकारलक्षणस्याव्यापनादव्याप्तिदोषः।

२ रतिभावः प्रधानम्, स्मरणं तु तदुपस्कारकत्वादङ्गम् इत्यलंकार एवायमित्याशयः। सेयमलंकारता रत्नाकराभिमतलक्षणे न संगृह्यत इत्यापत्तिः।

३ 'सदृशज्ञानात्' इत्युक्तौ तु सदृशस्य (जलधरस्य) ज्ञानात् (हेतोः) अर्थात् जलधरसादृश्यज्ञानहेतुकं भगवद्रूपवस्त्वन्तरस्य स्मरणमत्रोपपन्नमिति स्मरणालंकारः संपद्यत एवेत्याशयः।

४ यथा पूर्वोदाहरणेषु कृष्णविषयकरतिभावादिः प्रधानं स्मरणं च तदुपस्कारकम्, तथात्र नास्ति। स्मरणस्यैवात्र चमत्कारजनकतया तदिदं प्रधानमित्याशयः।

न्नस्य साधारणधर्मस्य वाच्यत्वेऽपि तत्प्रयोजितसादृश्यमूलकस्य स्वस्य शब्दवाच्यत्वविरहाद्व्यङ्ग्यं च। युवत्य इति च 'सर्वतोऽक्तिन्नर्थात्' इति ङीषि साधुः।

यथा वा—

'इदमप्रतिमं पश्य सरः सरसिजैर्वृतम्।
सखे मा जल्प नारीणां नयनानि दहन्ति माम्॥'

अत्रापि सरसिजज्ञानाधीनतत्सदृशनयनस्मृतिः प्राधान्येन ध्वन्यते।

अथास्मिन्स्मरणालंकारे उपमादोषाः प्रायशः सर्व एव दोषाः। विशेषतश्च नियमेनास्मिन्व्यज्यमानसादृश्यके सादृश्यस्य शब्दवाच्यतायां दोषः।

यथा—

'उपकारमस्य साधोर्नैवाहं विस्मरामि जलदस्य।
दृष्टेन येन सहसा निवेद्यते नवघनश्यामः॥'

अत्र स्मृत्यैव घनसादृश्यं भगवतः प्रतीयमानं वाच्यवृत्त्या कदर्थितम्, निवेद्यते देवकीतनय इति तु साधु।

अत्र सादृश्यप्रयोजकस्य साधारणधर्मस्य साक्षादुपादानानुपादानयोरुपमायामिवात्रापि व्यवस्था। तथा हि उपमायां तावत्क्वचिद्धर्मो नियमेन प्रतीयमानः साक्षान्नोपादेय एव। यथा 'शङ्खवत्पाण्डुरच्छविः' इत्यत्र पाण्डुरत्वम्। 'शङ्खवत्पाण्डुरोऽयम्' इत्यादौ तु नानाविधेषु धर्मेष्वनेनैव

स्वस्य स्मरणस्य। व्यङ्ग्यं च स्मरणमिति पूर्वत्रान्वयः। ङीपि साधुरिति। यौतेः शत्रन्तात् ङीप्यपि साधुत्वं भवति। 'सर्वतः—' इत्येतत्पर्यन्तानुधावनं व्यर्थं दुष्टं चेति प्रपञ्चितमन्यत्र। **व्यज्येति**। अर्थात् प्रतीयमानसादृश्यक इत्यर्थः। अत्र स्मरणालंकारे। अस्योपादानादावेवान्वयः। दानयोः सतोरिति शेषः। अत्रापि स्मरणालंकारेऽपि। स्पष्टत्वाय पुनरुक्तिः। प्रतीयमानो गम्यमानः। साक्षादुपमानोपमेयविशेषणत्वेन। **यथेति**। उपमेयविशेषणच्छविविशेषणतयोपस्थितपाण्डुरत्वस्यैव प्रत्यासत्त्या तत्र गम्य-

१ घनं दृष्ट्वा घनश्यामस्य हरेः सादृश्यं स्मृत्यैव स्वयमुपतिष्ठते। एतद्धि 'घनश्यामः' इति शब्देन न्यक्कृत्य स्मरणालंकाराच्च्यावितम्। 'घनश्याम'स्य स्थाने 'देवकीतनयः' इति तु कृते वाच्यकदर्थना निवर्तेत इत्याशयः।

धर्मेण सादृश्यमित्यस्य दुरवगमत्वात्, सर्वत्रोपमानोपमेयसाधारणस्य श्लिष्टशब्दात्मकस्यान्यस्य वा स्वानभिप्रेतस्य साधारणधर्मस्योपमाप्रयोजकत्वसंभवात्तद्वारणाय पाण्डुरत्वादिधर्मो वाच्यतां नीयते । यथा वा 'अरविन्दमिव सुन्दरं मुखम्' इत्यादौ सुन्दरत्वादिः । न नीयते च क्वचित्, वक्तुरन्यस्यानुपस्थानात्प्रसिद्धेः प्राबल्यात् । यथा 'अरविन्दमिव मुखम्' इत्यादौ स एव । अप्रसिद्धश्च धर्मोऽवश्यं साक्षादुपादेयः । अन्यथा तस्याप्रतिपत्तौ कवेस्तदुपमानिर्माणप्रयासवैयर्थ्यापत्तेः । यथा 'नीरदा इव ते भान्ति बलाकाराजिता भटाः' इत्यादौ श्लिष्टशब्दात्मकः । इत्थं च कश्चित्साधारणो धर्मः साक्षादनुपादेय एव । कश्चिदुपादेयानुपादेयश्च । कश्चिदुपादेय एवेति सहृदयसंमतः समयः । एवमेवोपमाजीवातुकेऽस्मिन्स्मरणालंकारेऽपि बोध्यम् । तत्रानुगामिनि धर्मे 'स्मृत्यारूढं भवति किमपि' इत्यादौ पद्ये निवेदितमेव स्मरणम् । बिम्बप्रतिबिम्बभावापन्नेऽपि धर्मे 'भुजभ्रमितपट्टिश–' इत्यादिपद्ये निरूपितम् । कुलिशपट्टिशयोर्भूधरदन्तावलयोश्च बिम्बप्रतिबिम्बभावात् ।

---

मानत्वादिति भावः । ननु धर्मान्तरस्योपमाप्रयोजकत्वाभावादेव नैव सादृश्यं दुरवगममत आह—**सर्वत्रेति** । अस्य द्वितीयमुदाहरणं विशेषं वक्तुमाह—**यथा वेति** । **न नीयते चेति** । वाच्यतामित्यस्यानुषङ्गः । अनुपस्थितौ हेतुमाह—**प्रसिद्धेरिति** । **स एवेति** । सुन्दरत्वादिरित्यर्थः । **बलाकाराजिता इति** । बलाका बकपङ्क्तिस्तया राजिताः । बलात्काराभ्यामजिता इत्यर्थः । उपसंहरति—**इत्थं चेति** । यथोपमायामिति शेषः । जीवातुर्जीवनौषधम् । तत्र अनुपादेयादिधर्माणां मध्ये । **स्मृत्यारूढमिति** । अत्रानुगामी श्यामत्वधर्मोऽनुपात्तः । निरूपितं स्मरणमित्यस्यानुषङ्गः । एवमग्रेऽपि । अत्रोक्तहेतोस्तस्योपादानमित्याह—**कुलिशेति** ।

---

१ वक्तुः अन्यस्य धर्मस्य उपस्थितिर्न भवतीति हेतुः ।

२ यथा– 'शङ्खवत्पाण्डुरच्छविः' इति ।

३ नानाधर्माणां मध्ये अनभिप्रेतेन सादृश्यं मास्त्वित्युपादेयो यथा–'शङ्खवत्पाण्डुरोऽयम्' 'अरविन्दमिव सुन्दरं मुखम्' इत्यादिः । प्रसिद्धेः प्राबल्यादनुपादेयो यथा–'अरविन्दमिव मुखम् ।'

४ अर्थात् अप्रसिद्धः ( साक्षात् उपमानोपमेयविशेषणत्वेन ) उपादेय एव यथा–नीरदा इव ते भान्ति बलाका० ।

५ पट्टिशदन्तावलयोर्बिम्बत्वं कुलिशभूधरयोश्च प्रतिबिम्बत्वमिति बोध्यम् ।

उपचरिते[1] यथा—

'क्वचिदपि कार्ये मृदुलं क्वापि च कठिनं विलोक्य हृदयं ते।
को न स्मरति नराधिप नवनीतं किं च शतकोटिम् ॥'

यथा वा—

'अगाधं परितः पूर्णमालोक्य स महार्णवम्।
हृदयं रामभद्रस्य सस्मार पवनात्मजः ॥'

अत्र मृदुलत्वादयो[2] धर्मा हृद्युपचरिताः। इयांस्तु विशेषः—यदेकत्रानुभूयमाने हृदये[3] स्मर्यमाणनवनीतादेः सादृश्यस्य सिद्धिः, अपरत्र तु स्मर्यमाणे हृदयेऽनुभूयमानसमुद्रस्येति, सादृश्यस्योभयाश्रयत्वात्।

केवलशब्दात्मके यथा—

'ऋतुराजं भ्रमरहितं यदाहमाकर्णयामि नियमेन।
आरोहति स्मृतिपथं तदैव भगवान्मुनिर्व्यासः ॥'

अत्र भ्रमरहितशब्दो व्यासवसन्तयोः साधारणः। एवमन्येऽपि प्रभेदाः सुधीभिरुन्नेयाः। इह पुनर्दिङ्मात्रमुपदर्शितम्।

इति रसगङ्गाधरे स्मरणालंकारनिरूपणम्।

---

स पवनात्मज इत्यन्वयः। अत्रानयोः। आदिना कठिनत्वागाधत्वादिपरिग्रहः। द्वितीयोदाहरणदाने बीजमाह—**इयानिति**। एकत्र आद्ये। अपरत्र द्वितीये। **समुद्रस्येतीति**। सादृश्यस्य सिद्धिरित्यस्यानुषङ्गः। उभयाश्रयत्वादुभयनिरूप्यत्वात्। ऋतुराजं वसन्तम्, भ्रमराणां हितम्; नानापुष्पविकासद्वारा मधुपापकत्वात्। व्यासपक्षे भ्रमेण रहितमित्यर्थः। नियमेनेत्युत्तरान्वयि। इति स्मरणम् ॥ इति रसगङ्गाधरमर्मप्रकाशे स्मरणालंकारनिरूपणम् ॥

---

१ उपचरिते धर्मे स्मरणं यथेत्यनुषङ्गः। एवमग्रेऽपि।

२ मृदुलत्वकठिनत्वे मूर्त(दृश्यमान)पदार्थधर्मौ, अगाधत्वं च समुद्रगतः, एवं सत्यपि हृदये उपचरिताः (आरोपिता इति यावत्)।

३ मृदुलत्वादिविशिष्टस्य हृदयस्यानुभवः प्रत्यक्षतः, नवनीतादेस्तु स्मरणं भवतीत्याशयः।

अथाभेदप्रधानेषु रूपकं तावन्निरूप्यते—

**उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम् । तदेवोपस्कारकत्वविशिष्टमलंकारः ॥**

उपमेयतावच्छेदकपुरस्कारेणेति विशेषणादपह्नुतिभ्रान्तिमदतिशयोक्तिनिदर्शनानां निरासः । अपह्नुतौ स्वेच्छया निषिध्यमानत्वात्, भ्रान्तिमति च तज्जनकदोषेणैव प्रतिबध्यमानत्वात्, अतिशयोक्तिनिदर्शनयोश्च साध्यवसानलक्षणामूलकत्वात्, उपमेयतावच्छेदकस्य नास्ति पुरस्कारः । शब्दादिति विशेषणात् 'मुखमिदं चन्द्रः' इति प्रात्यक्षिकाहार्यनिश्चयगोचरचन्द्रतादात्म्यव्यवच्छेदः । निश्चीयमानमिति विशेषणात्संभावनात्मनो 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षाया व्यावृत्तिः । उपमानोपमेयविशेषणाभ्यां सादृश्यलाभात् 'मुखं मनोरमा रामा' इत्यादिशुद्धारोपविषयतादात्म्यनिरासः । सादृश्यमूलकमेव च तादात्म्यं रूपकमामनन्ति ।

प्रधानेष्वलंकारेषु । एवं च पूर्वं भेदाभेदोभयप्रधाना निरूपिताः, इदानीं बह्वलंकारव्यापित्वेन प्रसिद्धतया प्राधान्येन च रूपकनिरूपणमिति भावः । उपमेयतावच्छेदकमात्रप्रकारकप्रतीतिजनकशब्दबोध्ये विषये इत्यर्थः । तेनातिशयोक्तौ चन्द्रादिपदान्मुखत्वादिना मुखोपस्थितिरिति मतेऽपि नातिव्याप्तिरिति बोध्यम् । **तज्जनकेति** । भ्रान्तिजनकेत्यर्थः । **उपमेयतेति** । मध्यमणिन्यायेनोभयत्रान्वयोऽस्य । संभावनात्मनस्तद्रूपाया उत्प्रेक्षाया वस्तूत्प्रेक्षायाः । **उपमानोपमेयेति** । एतद्रूपविशेषणाभ्यामित्यर्थः ।

१ मुखं चन्द्र इत्यत्र उपमेयतावच्छेदकं मुखत्वम् तत्पुरस्कारेण ( अर्थात् तदुद्दिश्य ) उपमेये अर्थात् मुखत्वविशिष्टे मुखे यश्चन्द्रतादात्म्यनिश्चयः ( तद्रूपकमित्यर्थः ) ।

२ प्रात्यक्षिको य आहार्यनिश्चयः ( अर्थात् शब्दद्वारा अभेदारोपो न, अपि तु 'मुखमिदं चन्द्रः' इति चाक्षुषादिप्रत्यक्षद्वारा यः काल्पनिको निश्चयः) तद्विषयकस्य चन्द्रतादात्म्यस्य व्यवच्छेदो निरासः । अर्थात् शब्दादित्युक्तौ हि 'मुखं चन्द्रः' अत्र अन्यस्मिन् अन्यशब्दव्यपदेश इति शाब्दिक एव अभेदारोपः, नतु प्रात्यक्षिको निश्चय इति सुतरां सिद्ध्यति व्यवच्छेद इत्याशयः । 'प्रात्यक्षिकाहार्यनिश्चयाश्रयणे च' इति काशीपुस्तकपाठः ।

३ अयं भावः—उपमेये उपमानस्य तादात्म्यमिति रूपकस्वरूपम् । ततश्च उपमेयमुपमानमिति द्वे अपि तादात्म्यं प्रति विशेषणभूते । उपमानोपमेयभावश्च सादृश्यनियतः, अर्थात् सादृश्ये सत्येव भवति । ततश्च विशेषणाभ्यामाभ्याम् ( उपमा०उपमे० ) 'उपमेये शब्दान्निश्चीयमानम् सादृश्यमूलकं यत् उपमानतादात्म्यं तद्रूपकम्' इत्यर्थः फलितः । एवं च 'मनोरमा रामा सुखम्' अर्थात् सुन्दरस्त्री सुखकारणभूता एव किम्, स्वयं सुखरूपा । अत्र आरोपस्य ( लक्षणाप्रवृत्तेः ) सादृश्येतर( कार्यकारणभाव )संबन्धमूलकत्वात् शुद्धोऽयमारोपः । एवं च शुद्धारोपविषयस्य तादात्म्यस्य निरासे सति 'रामा सुखम्' इति रूपकं न भवतीत्याशयः ।

तथा चाहुः—

'तद्रूपकमभेदो य उपमानोपमेययोः।'

'उपमैव तिरोभूतभेदा रूपकमुच्यते।' इति।

तच्च यत्र विषयविषयिणोरेकविभक्त्यन्तत्वेन निर्देशस्तत्र संसर्गः[1], अन्यत्र[2] तु शब्दार्थतया क्वचिद्विशेषणं विशेष्यं चेति विवेचयिष्यते।

यत्तु "सादृश्यप्रयुक्तः संबन्धान्तरप्रयुक्तो वा यावान्भिन्नयोः सामानाधिकरण्यनिर्देशः स सर्वोऽपि रूपकम्। सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्तस्य तादात्म्यस्येव संबन्धान्तरप्रयुक्तस्यापि तादात्म्यस्य संग्रहीतुमौचित्यात्। तस्मात् दुराग्रह एवायं प्राचाम्—उपमानोपमेययोरभेदो रूपकम्, न तु कार्यकारणयोः" इति रत्नाकरेणोक्तम्, तन्न। अपह्नुत्यादौ भिन्नयोः सामानाधिकरण्यस्य सत्त्वात्तत्रातिव्याप्तेः। किं च 'सादृश्यमूलकं स्मरणं स्मरणालंकारः, न तु चिन्तादिमूलम्' इति भवतैव पूर्वमुदितम्। तत्र यदि सादृश्यामूलकस्यापि कार्यकारणादिकयोः कल्पितस्य तादूप्यस्य[3] रूपकत्वमभ्युपेयते तदा सादृश्यामूलकस्य चिन्तादिमूलस्य स्मरणस्याप्यलंकारत्वमभ्युपेयताम्। न च स्मरणस्य भावत्वमुच्यमानं निर्विषयं स्यादिति वाच्यम्। तस्य व्यज्यमानविषयत्वेनोपपत्तेः।

अप्पयदीक्षितास्तु—

"-'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।

उपरञ्जकतामेति विषयी रूपकं तदा॥'

---

उपमानत्वोपमेयत्वयोः सादृश्यनियतत्वादिति भावः। **आहुरिति**। मम्मटभट्टादय इत्यर्थः। अत्रार्धं मम्मटीयम्। अर्धमन्यदीयम्। तथा च भिन्नं लक्षणद्वयमिदम्। **तच्चेति**। उक्तरूपतादात्म्यं चेत्यर्थः। **संसर्ग इति**। अपदार्थत्वादिति भावः। विनिगमकाभावादाह—**क्वचिदिति**। **भिन्नयोरिति**। न तूपमानोपमेययोरित्यर्थः। **किं चेति**। यत इति शेषः। **निर्विषयमिति**। सर्वस्यैवालंकारत्वेन तदन्यत्वाभावादिति भावः। **व्यज्यमानेति**। व्यज्यमानस्मरणविषयत्वेनेत्यर्थः। नखरत्नानामिति रूपकम्। **बिम्बेति**। अयं भावः—यथा चन्द्रः स्वतः शुभ्रत्वादनासञ्जनीयधावल्यस्तथा नखाः

---

१ अपदार्थः (पदानामर्थो न भवन्नपि) संसर्गविधया भासत इत्यर्थः।

२ यत्र एकविभक्त्यन्तत्वेन न निर्देशस्तत्र, विशेषणीभूतं तादात्म्यं यथा 'विधुभावमञ्चतितमां त्वाननम्' इत्यादौ। विशेष्यं यथा—'आस्ये पूर्णशशाङ्कता' इत्यादौ।

३ कारणस्य कार्यस्य च कल्पितं यत्ताद्रूप्यम् (अभेदः) तस्य। यथा सुखकारणभूताया अपि रामायाः सुखमित्यभेदः।

अत्र बिम्बाविशिष्ट इति विषयविशेषणात्

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति निदर्शनाया निरासः । तत्र विषयस्य मार्जनस्यालक्तकादिरूपबिम्बविशिष्टत्वात् । निर्दिष्ट इति विशेषणान्निगीर्णविषयायाम् 'कमलमनम्भसि कमले च कुवलये तानि कनककलतिकायाम्' इत्याद्यतिशयोक्तौ नातिव्याप्तिः । अनिह्नुते निषेधास्पृष्ट इति विशेषणादपह्नुतौ नातिव्याप्तिः । उपरञ्जकतामाहार्यताद्रूप्यनिश्चयगोचरतामेतीत्यनेन ससंदेहोत्प्रेक्षासमासोक्तिपरिणामभ्रान्तिमत्स्वतिव्याप्तिनिरासः । ससंदेहोत्प्रेक्षयोर्निश्चयस्यैवाभावात् । समासोक्तिपरिणामयोर्विषयिताद्रूप्यस्यागोचरत्वात्, समासोक्तौ व्यवहारमात्रसमारोपात् । परिणामे चारोप्यमाणस्यैव विषयताद्रूप्यगोचरत्वात्[1] । भ्रान्तिमति च सतः कल्पितस्य वा प्रवृत्त्यादिपर्यन्तिकस्वारसिक[2]भ्रमस्यैव निबन्धनेन तस्यानाहार्यत्वात् ।" इत्याहुः । तत्र । 'त्वत्पादनखरत्नानाम्' इत्यादिनिदर्शनाव्यावृत्त्यर्थं बिम्बाविशिष्टत्वं विषयविशेषणं तावदयुक्तमेव । यद्यत्र 'मुखं चन्द्रः' इत्यादिरूपकान्तर[3] इव सत्यपि श्रौतारोपे नेदं रूपकम्, अपि तु निदर्शनेत्युच्यते, तदा 'मुखं चन्द्रः'

स्वतोऽरुणत्वादनासञ्जनीयारुण्या इति सादृश्येन नखानां चन्द्रस्य च बिम्बप्रतिबिम्बभावः । अलक्तकचन्दनयोरन्यत्र स्ववर्णासञ्जकत्वेन सः । तथा च बिम्बप्रतिबिम्बभावापन्ननखालक्तकविशिष्ट एव रञ्जने तत्प्रतिबिम्बभूतचन्द्रचन्दनविशिष्टं पाण्डुरीकरणमुपरञ्जकमिति । **निर्दिष्ट इति** । उच्चारित इत्यर्थः । तत्र येन यस्य व्यावृत्तिस्तत्क्रमेणाह—**ससमिति** । अगोचरत्वे क्रमेण हेतू आह—**समेति** । अत्र त्वत्पादेत्यत्र ।

१ परिणामे आरोप्यमाणस्य ( विषयिणः ) एव विषयताद्रूप्यं भवति । यथा 'दृगब्जेन वीक्षते मदिरेक्षणा', अत्र विषयिणः अब्जस्यैव दृक्ताद्रूप्यमिष्यते, वीक्षणोपयोगित्वात् । न त्वत्र विषयस्य विषयिताद्रूप्यम् ।

२ प्रवृत्त्यादिपर्यन्तं स्वारसिको यो भ्रमस्तस्य निबन्धनेन, अर्थात्तत्र स्वरसतः ( स्वभावतः ) प्रवृत्त्यादिपर्यन्तं भ्रम एव भवति न स्वेच्छयाऽऽरोपितत्वप्रत्ययः । यथा 'पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः' अत्र हि शुकतुण्डे प्रवृत्तिप्रयोजको भ्रमरस्य यः पलाशमुकुलभ्रमः ( शुकतुण्डे पलाशमुकुलताद्रूप्यनिश्चयः ) भवति न स आहार्य इत्याशयः ।

३ रूपकान्तरे रूपकमध्ये ।

इत्यपि निदर्शनेत्युच्यताम्। निरस्यतां च रूपकदाक्षिण्यकौपीनम्[1]। किं च 'त्वत्पाद-' इत्यत्र किं पदार्थनिदर्शना, आहोस्विद्वाक्यार्थनिदर्शना? नाद्यः। बिम्बप्रतिबिम्बभावापन्नपदार्थघटितविशिष्टार्थयोरेवात्राभेदप्रतीतेः[2]। कुवलयानन्दगतनिदर्शनाप्रकरणे त्वयोक्तमार्गेण धर्म्यन्तरे पदार्थे तद्वृत्तिधर्मस्य पदार्थस्य भेदेनारोपस्याभावाच्च[3]। न द्वितीयः। वाक्यार्थरूपकोच्छित्त्यापत्तेः। इष्टापत्तौ वैपरीत्यस्य सुवचत्वाच्च। अस्माभिर्निदर्शनाप्रकरणे वक्ष्यमाणया सरण्या अभेदस्य श्रौतत्वार्थत्वाभ्यामुद्देश्यविधेयभावालिङ्गनानालिङ्गनाभ्यां च रूपकनिदर्शनयोर्वैलक्षण्येन सकलव्यवस्थोपपत्तेः[4]। तस्मादत्र वाक्यार्थरूपकमेव, न वाक्यार्थनिदर्शना। तस्याश्चैवमुदाहरणं निर्मातव्यम्—

**दाक्षिण्येति**। रूपकमुखसंकोचरूपकौपीनमित्यर्थः। निर्लज्जत्वादिति भावः। विशिष्टार्थयोः वाक्यार्थयोः। त्वदुक्तपदार्थनिदर्शनालक्षणमपि नास्तीत्याह—**कुवलयेति**। वैपरीत्यस्य वाक्यार्थनिदर्शनोच्छित्तेः। क्षमते न कस्याप्युच्छेद इत्याह—**अस्माभिरिति**। **श्रौतत्वेति**। यथासंख्येनान्वयः। नन्वेवं तर्हि तस्याः किमुदाहरणमत आह—**तस्या-**

१ रूपकालंकारेपि परिज्ञानदाक्षिण्यमस्तीति विद्वत्सु स्वस्य निर्लज्जतानिवारकमवगुण्ठनं संप्रति निरस्यताम्, एवंविधस्थले रूपकमनङ्गीकृत्य प्रसह्य निर्लज्जताप्रकटनात्, अथवा रूपकदाक्षिण्यरूपं कौपीनं कूपपतनोचितमकार्यम्। एवं सति रूपकदाक्षिण्यगर्वो भवत्कृते अपराधस्थानीय इत्याशयः। 'अकार्यगुह्ये कौपीन'मित्यमरः। रूपकमुखसंकोचेत्यादिनागेशाक्षरस्वारस्यं तु नागेश एव विजानीयात्।

२ बिम्बप्रतिबिम्बभावापन्ना ये पदार्थाः (नखालक्तकचन्द्रचन्दनाः) तद्घटितयोर्विशिष्टार्थयोः (मार्जन-पाण्डुरीकरणयोः)। 'विशिष्टयोः (बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः) धर्मयोरैक्यारोपो वाक्यार्थनिदर्शना' इति कुवलयानन्दोक्तरीत्या नात्र पदार्थनिदर्शनेत्याशयः।

३ 'उपमानोपमेययोरन्यतरस्मिन्नन्यतरधर्मारोपः पदार्थनिदर्शना' इति तत्रैवोक्तेः अन्यतरस्मिन्नन्यतरधर्मारोपाभावान्न पदार्थनिदर्शनेति भावः।

४ श्रौतः (शाब्दः) यत्राभेदः, उद्देश्यविधेयभावस्यालिङ्गनं यत्र तद्रूपकम्। यथा 'मुखं चन्द्रः' अत्र शाब्दः अभेदः, मुखमुद्दिश्य चन्द्रस्याभेदो विधीयते इत्युद्देश्यविधेयभावोपि स्फुटः। यत्र आर्थः (अर्थबलाद् गम्यः) यत्राभेदः, उद्देश्यविधेयभावस्य अनालिङ्गनं यत्र सा निदर्शना। यथा—'यो नखान् यावकै रञ्जयति स इन्दुं चन्दनेन पाण्डुरीकुरुते' अत्र यः सः इत्येकविभक्तिकयोः कर्त्रोरभेदः शब्दतः प्रतीयते, परं रञ्जयति-पाण्डुरीकरोत्योरभेदो न शाब्दः। एवमेव उद्देश्यविधेयभावोपि नात्रेति द्वयोरलंकारयोर्व्यवस्था।

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥'

अत्र कर्त्रोरभेदस्य शाब्दत्वेऽपि क्रिययोरभेदस्याशाब्दत्वात्तस्यैव च समग्रभरसहिष्णुत्वान्निदर्शनैव । ननु यदीदमुदाहरणं निदर्शनायां न स्यात्तदा कथमलंकारसर्वस्वकृता तत्प्रकरण उदाहृतमिति चेत्, भ्रान्तेनैव[1] प्रतारितोऽसि । नहि प्रामाणिकेन भवता कदापि परेणानुक्तं किंचिदुच्यते । यदपि रूपके बिम्बप्रतिबिम्बभावो नास्तीत्युक्तं तदपि भ्रान्त्यैव । तथा च सर्वस्वटीकायां विमर्शिन्यामुदाहृतं बिम्बप्रतिबिम्बभावेन रूपकम्—

'कंदर्पद्विपकर्णकम्बु[2] मलिनैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः ।
व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं
पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम् ॥'

अत्र कलङ्कस्य दानाम्ब्वादिभिः प्रतिबिम्बनम्[3], लाञ्छितत्वाङ्कितत्वयोः शुद्धसामान्यरूपत्वमित्युक्तं चेत्यास्तां तावत् । तथा निर्दिष्टे शब्देनाभिहिते इत्यस्य येनकेनचिद्रूपेण शब्देनाभिहित इत्यर्थः, उताहो उपमेयतावच्छेदकरूपेण शब्देनाभिहिते ? । आद्ये 'सुन्दरं कमलं भाति लतायामिदमद्भुतम्'

अत्रेति । वाक्यार्थनिदर्शनाया इत्यर्थः । यावकैः अलक्तकरसैः । ननु कर्त्रोरभेदमादाय वाक्यार्थरूपकमेवास्त्वित्यत आह—**तस्यैव चेति** । क्रिययोरभेदस्यैव चेत्यर्थः । **समग्रेति** । मुख्यत्वादित्यर्थः । इदं दीक्षितोक्तम् । **भ्रान्तेनैवेति** । भ्रान्त्यैवेति मुख्यपाठः । **कंदर्पद्विपेति** । सर्वत्र षष्ठीतत्पुरुषः । कम्बु शङ्खः । कलं रमणीयम् । 'अनोकहः कुटः शालः' । **शुद्धसामान्येति** । अनयोर्वस्तुप्रतिवस्तुभावापन्नत्वादिदं चिन्त्यम् । **उक्तं चेति** । चकार उदाहृतसमुच्चायकः । द्वितीयविशेषणं दूषयति—**तथेति** । उताहो अथवा । इत्यत्र रूपकातिशयोक्तिविषये । अन्वय एवेति । तत एव चमत्कारात्सांनिध्याच्चेति भावः । रूपकातिशयोक्तिं ध्वनयितुमाह—**कमलेति** ।

१ 'भ्रां तेनैव' इति काशीपुस्तकपाठः सुन्दरः ।

२ श्याममदजलैर्लाञ्छितं कन्दर्परूपद्विपस्य कर्णसमीपस्थं कम्बु ( शङ्खः ) । हस्तिनः कर्णास्थनि शङ्खो भवतीति राजनिर्घण्टादिषु प्रसिद्धम् । हिन्दीरसगङ्गाधरस्य: 'कामदेव के हाथी का कान' इति कम्बु विमुच्य शूर्पप्रायेण कर्णेन रूपकार्थस्तु विचार्य एव ।

३ अत्र शशिबिम्बे कम्बु–गण्डोपधान( कपोलोपबर्ह 'गालमसूरी'ति भाषायाम् )प्रभृतीनां रूपणम् । रूपके चात्र उपमेय( शशिबिम्ब )धर्मस्य कलङ्कस्य दानाम्बु–अञ्जनादिभिः उपमान( कर्णकम्ब्वादि )धर्मैः सह बिम्बप्रतिबिम्बभावः ।

इत्यत्रातिप्रसङ्गः । सुन्दरपदेन सुन्दरत्वेन[1] रूपेण इदंपदेन च विषयस्याननस्य प्रतिपादनात् । न चात्र सुन्दरपदार्थस्यारोप्यमाणकमलान्वय एव, न तु वदनरूपविषयान्वय इति वाच्यम्[2] । कमलपदेन कमलताद्रूप्येणाननस्यैव लक्षणयोपस्थानात्तत्रैव सुन्दरादिपदार्थान्वयो युक्तः, न तु विशेषणीभूते कमले[3] । अथ तादृशं[4] विषयमुद्दिश्य विषयिताद्रूप्यं यत्र विधीयते इत्यपि लक्षणवाक्यार्थः । प्रकृते च सुन्दरत्वावच्छिन्नमुद्दिश्य कमलताद्रूप्यस्याविधानान्नातिप्रसङ्ग इति चेत् । न । 'मुखचन्द्रस्तु सुन्दरः' इत्यादिरूपके समासगतयोर्विषयविषयिणोः पृथग्विभक्तिमन्तरेणोद्देश्यविधेयभावाभावादव्याप्त्योपत्तेः[5] । द्वितीये त्वनिह्नुत इति विशेषणवैयर्थ्यम् । अपह्नुतावुपमेयतावच्छेदकस्य[6] निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्ट-

तत्रैव आनन एव । **न त्विति** । पदार्थः पदार्थेनेति न्यायादिति भावः । तादृशं येनकेनचिद्रूपेण शब्देनाभिहितम् । इत्यपि उद्देश्यविधेयभावघटितोऽपि । **अविधानादिति** । तादृशमाननमुद्दिश्य भानक्रियाया एव विधेयत्वादिति भावः । यद्वा सुन्दरत्वादेः कमलत्वादिविशिष्टे विशेषणत्वमेवोद्देश्यतावच्छेदकत्वम् । इयांस्तु विशेषः—यदतिशयोक्तावुपमेयधर्मस्योद्देश्यतावच्छेदकत्वाभाव एव । रूपके त्वनियम इतीति भावः । अत एवाह—**मुखचन्द्रस्त्विति । पृथगिति** । उद्देश्यविधेयभावेन बोधेऽभिन्नविभक्तिजन्योपस्थितेस्तन्त्रत्वात् । तथा च व्यस्ते तथा प्रतीतिः, न समासे इत्यत्राव्याप्तिरिति भावः । ननूपमेयतावच्छेदकरूपेण शब्देनाभिहिते इति तदर्थेन न प्रागुक्तदोषोऽत आह—**द्वितीये त्विति** ।

१ येनकेनचिद्रूपेण ( सुन्दरत्वेन रूपेण ), शब्देन ( इदंपदेन ) विषयस्य ( आननस्य ) प्रतिपादनात् सुन्दरं कमलमित्यत्र अतिशयोक्तिं परिहृत्य रूपकमेव प्रसज्येत । वास्तवे तु इदंपदेन आननं निर्दिश्य कमलत्वेनातिशयोक्तिविषय इत्यापत्तिरेनेयम् ।

२ सुन्दरपदार्थस्य आरोप्यमाणे ( विषयिणि ) कमल एवान्वयः, न तु वदनरूपे ( विषये ) अन्वय इति शङ्का ।

३ 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायानुसारं कमलपदेन लक्षणया उपस्थिते आनन एव सुन्दरपदार्थान्वय उचित इति तत्समाधानम् ।

४ तादृशम् अर्थात् येन केनचिद्रूपेण, शब्देनाभिहितं विषयमुद्दिश्य विषयिणः अभेदो यत्र विधीयते इत्युद्देश्यविधेयभावघटितो रूपकलक्षणवाक्यार्थः स्वीक्रियते । रूपकातिशयोक्तौ ( सुन्दरं कमलम्० अत्र ) च मुखमुद्दिश्य कमलताद्रूप्यं न विधीयते, अपि तु सुन्दरम् आननमुद्दिश्य भान( प्रतीति )क्रियैव विधेया । ततश्च तादृशोद्देश्यविधेयभावाऽघटितत्वान्न रूपकापत्तिरिति पूर्वपक्षी ।

५ उद्देश्यविधेयभावस्वीकारे 'मुखचन्द्र' इत्यादौ प्रसिद्धे उदाहरण एव रूपकं न स्यात्, 'मुखं चन्द्रः' इत्यादिरूपेण विभक्त्या पृथङ् निर्देशं विना उद्देश्यविधेयभावस्याप्रतीतेरिति सिद्धान्ती पूर्वपक्षं समाधत्ते ।

६ उपमेयतावच्छेदकं मुखत्वम्, अवच्छेद्यं च मुखम् तस्य ।

त्वादेव लक्षणस्याप्रसक्तेः । निश्चयगताहार्यत्वविशेषणवैयर्थ्यं च । भ्रान्तिमति दोषविशेषेण प्रतिबध्यमानतया नास्त्युपमेयतावच्छेदकसंस्पर्श इति तावतैव वारणात् । अपि च 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति कुवलयानन्दे त्वयोक्तायामपह्नुतावतिप्रसङ्गः । अत्र सुधांशौ सुधांशुत्वनिह्नवेऽप्यारोपविषयस्यानिह्नवात् । न चेदं रूपकमेवेति वाच्यम् । त्वदुक्तिविरोधापत्तेः । यच्चाप्युक्तमव्यङ्ग्यत्वविशेषणाच्चेदमेवालंकारभूतस्य रूपकस्य लक्षणमिति, तदपि न । नहि व्यङ्ग्यत्वालंकार-

---

अपह्नुतौ 'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्' इत्यत्र । **अनिर्दिष्टत्वादेवेति।** अत्र निषेधप्रतियोगिविधया निर्दिष्टत्वादिदं चिन्त्यम् । न च तथा निर्दिष्टत्वेऽपि पुरस्काराभावः । तर्हि तावत्पर्यन्तविवक्षाबोधनार्थमेवानिह्नुते इति विशेषणसाफल्यादिति बोध्यम् । तावतैव उक्तार्थकनिर्दिष्टे इति विशेषणेनैव । इदं चिन्त्यम् । आहार्यत्वविशेषणस्य निर्दिष्टे इति विशेषणलब्धार्थकथनतात्पर्यकत्वात् । अतिशयोक्तौ लक्षणामाहात्म्याज्जायमानज्ञानस्यानाहार्यस्यैव जायमानत्वेन तावतैव वारणात् । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोर्भानमिति त्वल्लिखितमतान्तरेऽपि युगपदेवोभयोर्भानेन बाधस्यैवानुपस्थितत्वान्न तद्बुद्धेराहार्यत्वम् । किं च चन्द्रवृत्तिगुणवत्त्वस्य लक्ष्यतावच्छेदकस्य चन्द्रत्वस्य च मिथो विरोधाभावेन न बाधप्रतिसंधानम् । मुखत्वेन मुखं लक्ष्यत इति त्वश्रद्धेयमेव । रूपके तु बाधस्य स्फुटमुपस्थितत्वेन साक्षाद्व्यञ्जनया वा जायमाना ताद्रूप्यप्रतिपत्तिराहार्यैवेति दीक्षिताशय इति दिक् । अपह्नुतौ पर्यस्तापह्नुतौ । विषयस्य सुधांशोः । इदमपि चिन्त्यम् । उपमेयोपमादीनां वैचित्र्यविशेषेणालंकारान्तरत्ववदिहाप्युपपत्तेः । मतान्तरेऽप्यभेदादिकृते चमत्कारे रूपकम्, निह्नवादिकृते तस्मिंस्तु सेति विषयविभागसंभवात् । चमत्कारित्वस्यालंकारसामान्यलक्षणप्राप्तत्वात्समुदितस्यालंकारत्वेनांशे रूपकत्वे इष्टापत्तेश्चेति दिक् । चित्रमीमांसायामप्पयदीक्षितोक्तमन्यदपि खण्डयति—**यच्चापीति।**

---

१ 'आहार्यो यस्ताद्रूप्यनिश्चयस्तद्गोचरताम्' इति वदता दीक्षितेन भ्रान्तिमति भ्रमवशाज्जायमानस्य ताद्रूप्यनिश्चयस्य ग्रहणं मा भूदिति 'आहार्य'विशेषणं दत्तम् । 'निर्दिष्टे' इत्यस्य 'उपमेयतावच्छेदकरूपेण, शब्देनाभिहिते विषये' इत्यर्थस्वीकारे तु प्रमत्तमधुपस्त्वन्मुखं पङ्कजं वेत्तीत्यत्र भ्रान्तौ पङ्कजभ्रमदोषेण विषये (मुखे) उपमेयतावच्छेदकस्य (मुखत्वस्य) स्पर्शोपि नास्ति [ कमलमिति मुखे भ्रान्तस्य मुखत्वसंस्पर्शः कथं स्यात् । ] इति 'निर्दिष्टे' इति विशेषणेनैव वारणादाहार्यपदनिवेशो व्यर्थ इत्याशयः ।

२ अर्थात् 'सुधांशुः प्रेयसीमुखम्' इत्यंशे उपमेयतावच्छेदकरूपेण शब्देनाभिहिते 'प्रेयसीमुखम्' इति विषये 'सुधांशुः' इति विषयिण उपरञ्जनात् रूपकं प्रसज्येतेत्यापत्तिः ।

३ मुखस्य स्थाने सुधांशोर्विषयीकरणं विचार्यमेव ।

त्वयोर्विरोधोऽस्ति। प्रधानव्यङ्ग्यरूपकवारणाय पुनरुपस्कारकत्वं विशेषणमुचितमित्यसकृदावेदनात्। अनलंकारत्वस्य तुल्यतया प्रधानव्यङ्ग्यरूपकस्येव प्रधानवाच्यरूपकस्यापि वारणीयत्वेन तद्वारकविशेषणाभावेन तत्रातिप्रसङ्गाच्च।

यच्च 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्यादि प्राचीनैरुक्तम्, तच्चिन्त्यम्। अपह्नुत्यादावुपमानोपमेययोरभेदस्य प्रतीतिसिद्धतया तत्रातिप्रसङ्गात्। अथोपमानोपमेययोरित्युक्त्या उपमेयतावच्छेदकं पुरस्कृत्योपमानतावच्छेदकावच्छिन्नाभेद इत्यर्थलाभादपह्नुतौ चोपमेयतावच्छेदकस्य पुरस्काराभावान्नातिप्रसङ्ग इति चेत्। न। 'नूनं मुखं चन्द्रः' इत्याद्युत्प्रेक्षायां तथाप्यतिप्रसक्तेः। न च—

'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः।'

'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।'

इत्याद्यपह्नुत्युत्प्रेक्षादीनां बाधकत्वात्तत्परिगृहीतविषयातिरिक्तो रूपकस्य 'मुखं चन्द्रः' इत्यादिर्विषयः स्यात्। यथा 'शरमयं बर्हिः' इत्येतद्विषयातिरिक्तः 'कुशमयं बर्हिः' इत्यस्य। यथा वा क्सादेशविषयातिरिक्तो

---

इदगेव प्रागुक्तं रूपकलक्षणमेव। नन्वेवं कथमतिप्रसङ्गनिरासोऽत आह—**प्रधानेति**। नन्वेवमपि विनिगमनाविरहात्तथोक्तिरत आह—**अनलमिति**। मन्मते तु तेनैवोभयोर्वारणमिति भावः। प्रकाशोक्तिं खण्डयति—**यच्चेति**। तथापि उक्तार्थाङ्गीकारेऽपि। अत्र तस्य पुरस्कारोऽस्तीति भावः। **मुखं चन्द्र इति**। अत्र गमकाभावात्तदुभयं न। तत्र जैमिनीयं दृष्टान्तमाह—**यथा शरेति**। आभिचारिके कर्मणि विशेषविहितमिदम्। व्याकरणोक्तं तमाह—**यथा वा क्सेति**। 'शल इग्-' इति

---

१ अव्यङ्ग्यत्वविशेषणेन प्रधानव्यङ्ग्यस्य (अलंकार्यस्य) रूपकस्य वारणं कदाचित्स्यात्, परं वाच्यालंकारद्वयमध्ये एकेन अलंकारेण उपस्कार्यं यत् प्रधानं रूपकं तस्य अलंकारगणनातो वारणमव्यङ्ग्यत्वेन न स्यात्। आवश्यकं च वारणं तस्यापि। यथा प्रधानव्यङ्ग्यं रूपकम् अलंकार्यतया अनलंकारम् (अलंकारभिन्नम्), एवं प्रधानवाच्यमपि अन्यालंकारेण अलंकार्यतया अनलंकारत्वादलंकारगणनातो वारणीयम्। तस्मात् उपस्कारकत्वविशेषणेनैव द्वयोर्वारणं भवतीत्याशयः।

२ उत्प्रेक्षादिपरिगृहीताद्विषयादतिरिक्तः। अयं भावः—'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' इति वैयाकरणनये इव अपवादभूतानामपह्नुत्यादीनां विशेषालंकाराणां विषयं परिहृत्य उत्सर्ग(सामान्य)स्य रूपकस्य विषयः स्यात्। इति 'वाच्यं'पर्यन्तः पूर्वपक्षः।

विषयः सिचः । लोकेऽपि यथा 'ब्राह्मणेभ्यो दधि देयम्', 'तक्रं कौण्डिन्याय' इत्यत्र तक्रसंप्रदानातिरिक्तं दध्नः संप्रदानमिति वाच्यम् । वैषम्यात् । विशेषशास्त्रं हि स्वविषयातिरिक्तं विषयं ग्राहयत्सामान्यशास्त्रस्य बाधकमित्युच्यते । प्रकृते च रूपकस्य लक्षणं धर्मः । स यद्युत्प्रेक्षादिवृत्तिः स्यात् कस्तमस्माद्विषयान्निरस्य विषयान्तरं ग्राहयेत् । नहि घटत्वं स्वाधिकरणात्पृथिवीत्वं द्रव्यत्वं वा निरस्य विषयान्तरं ग्राहयितुमीष्टे । तस्मादतिप्रसक्तिर्लक्षणे[1]ऽस्मिन्दोषः । ननु संभावनात्मिकोत्प्रेक्षा, कथं तस्यामभेदत्वात्मकरूपकलक्षणातिप्रसक्तिरिति चेत् । न । विनिगमकाभावेन संभाव्यमा[2]नाभेदस्याप्युत्प्रेक्षास्वरूपत्वात् । विषयसंभावनाऽभेदाभ्यामुत्प्रेक्षायामलंकारद्व[3]यव्यवहारापत्तेश्च । निश्चीयमानत्वे[4]नाभेदो विशेषणीय इति चेदस्मदुक्त एव तर्हि पर्यवसितिरिति दिक् ।

तदिदं रूपकं सावयवं निरवयवं परम्परितं चेति तावत्त्रिविधम् । तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधम् । द्वितीयमपि केवलं मालारूपकं चेति द्विविधम् । तृतीयं च श्लिष्टपरम्परितं शुद्धपरम्परितं चेति द्विविधं सत्प्रत्येकं केवलमालारूपत्वाभ्यां चतुर्विधमित्यष्टविधमाहुः ।

---

विहितः । ग्राहयत् न त्वग्राहयत् । तस्यैव तद्बीजत्वात् । धर्मः अभेदत्वरूपः । संभावनैवोत्प्रेक्षेति पक्षे आह—**विषयेति । अलंकारद्वयेति** । रूपकोत्प्रेक्षेतीत्यर्थः । नहि प्रधानत्वं तद्विशेषणम्, तत्त्वस्यैव भङ्गापत्तेः । तावत् आदौ । आहुः प्रकाशकारादयः । एत-

---

१ विशेषशास्त्रं हि स्वप्रवृत्तेर्विषये सामान्यशास्त्रस्य प्रवृत्तिं वारयितुं शक्नोति, एकेन शास्त्रेण अपरशास्त्रस्य प्रवृत्तेर्वारयितुं शक्यत्वात् । किन्तु रूपकस्य लक्षणम् अभेदरूपो धर्मः । सः (अभेदः) यद्यपह्नुत्यादिष्वपि उपलभ्येत, तर्हि तन्निवारणं केन शक्यम्? घटत्वं हि पृथिवीत्वस्य द्रव्यत्वस्य वाऽपेक्षया विशेषधर्मः । ततश्च स्वस्य (घटत्वस्य) अधिकरणे (कम्बुग्रीवादिमद्व्यक्तौ) सामान्यधर्मं पृथिवीत्वं द्रव्यत्वं वा बाधित्वा (निरस्य) एव घटत्वं तिष्ठेदिति किं संभवपरम्? तस्मादलंकारेषु (एषु) बाध्यबाधकभावः शास्त्रेष्विव न घटते, इति स्पष्टं वैषम्यम् । इत्युत्तरः पक्षः ।

२ अभेदो रूपकमित्यविशेषोक्तौ संभाव्यमानोऽप्यभेदो ग्रहीतुं शक्येतेत्यर्थः ।

३ ननु भवद्रीत्या संभाव्यमानः अभेदः उत्प्रेक्षा । ये तु विषयसंभावनामेव उत्प्रेक्षां मन्यन्ते तन्मते तु रूपकलक्षणस्य नातिप्रसक्तिरुत्प्रेक्षायाम्? इति शङ्कायामाह—विषयसंभावना०-तथा सति लक्षणभेदात् उत्प्रेक्षायामेव उत्प्रेक्षा-रूपकमित्यलंकारद्वयव्यवहारः स्यादित्यापत्तिः ।

४ उत्प्रेक्षायामभेदस्य संभाव्यमानतया (ऊह्यमानतया) न निश्चय इत्यतिप्रसक्तिवारणाय निश्चीयमानः अभेदः इति विशेष्यते चेत् ।

तत्र—

**परस्परसापेक्षनिष्पत्तिकानां[1] रूपकाणां संघातः सावयवम् ॥**

तत्रापि—

समस्तानि वस्तून्यारोप्यमाणानि शब्दोपात्तानि यत्र तत्समस्तवस्तुविषयम् ॥

**यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिके अवयवरूपके विवर्तनात्स्वस्वरूपगोपनेनाऽन्यथात्वेन वर्तनादेकदेशविवर्ति ॥**

यद्वा—

एकदेशे उपात्तविषयिके अवयवे विशेषेण स्फुटतया वर्तनादेकदेशविवर्ति ॥

समस्तवस्तुविषयं सावयवं यथा—

'सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः ॥'

अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि वस्तुतः समर्थ्यसमर्थकभावस्य परस्परं तुल्यत्वेऽपि कवे राकारूपस्यैव समर्थ्यत्वेनाभिप्रेतत्वात्समर्थकतयोपादानमितरेषामिति गम्यते । एवं स्थिते समर्थकरूपकाणां विषयविषयिणोः पृथग्विभक्तेरश्रवणादनुवाद्यत्वेऽपि समर्थ्यरूपकस्य तयोः पृथग्विभक्तिश्रवणाद्विधेयतया तदादाय संघातात्मकस्य

त्सूचिताऽरुचिस्त्वग्रे स्फुटीभविष्यति । यत्र च यत्र तु संघातात्मकसावयवरूपके । **अवयवरूपके इति** । रूपकसंघातस्यावयविनोऽनयवे कस्मिंश्चिद्रूपक इत्यर्थः । **विवर्तनादिति** । विरुद्धतया वर्तनादित्यर्थः । विरुद्धत्वमेवाह—**स्वेति** । विनिगमनाविरहादाह—**यद्वेति** । अवयवे अवयवरूपके । अवयवानां मुक्तानक्षत्रवस्त्रज्योत्स्नामुखचन्द्रनायिकापूर्णिमारूपाणाम् । **अभिप्रेतेति** । विधेयत्वेन वर्ण्यत्वादिति भावः । तयोर्विषयविष-

१ परस्परसापेक्षा निष्पत्तिर्येषाम्, अवयवरूपकाणां सिद्धिं विना प्रधानरूपकस्य सिद्धिरेव यत्र न भवेदित्याशयः ।

सावयवरूपकस्यापि विधेयत्वमत्र व्यपदिश्यते[1] । यथा भटसंघातान्तर्गतस्य मुख्यस्य कस्यापि भटस्य जयपराजयाभ्यां भटसंघातो जितः पराजितश्चेत्युच्यते ।

'व्योमाङ्गणे सरसि नीलिमदिव्यतोये
तारावलीमुकुलमण्डलमण्डितेऽस्मिन् ।
आभाति षोडशकलादलमङ्कभृङ्गं
सूराभिमुख्यविकचं शशिपुण्डरीकम्[2] ॥'

अस्य तु सावयवरूपकस्यानुवाद्यत्वमेव । अत्र वर्ण्यस्य पूर्णचन्द्रस्य सूर्याभिमुख्यं ज्योतिःशास्त्रसिद्धम् । तेन सूर्याभिमुख्ये चन्द्रस्य कथं विकास इति न शङ्कनीयम् ।

एकदेशविवर्ति सावयवं यथा—

'भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो
बलादुन्मूल्य द्राङ्निगडमविवेकव्यतिकरम् ।
विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे
विगाहन्ते[3] दूरीकृतकलुषजालाः सुकृतिनः ॥'

अत्र सहचरैर्निगडादिरूपकैः सुकृतिषु गजरूपकमाक्षिप्यते ।

यथा वा—

'रूपजला चलनयना नाभ्यावर्ता कचावलीभुजगा ।
मज्जन्ति यत्र सन्तः सेयं तरुणीतरङ्गिणी विषमा ॥'

यिणोः । तदादाय तदीयविधेयत्वमादाय । अत्र पद्ये । अन्यधर्मेणान्यत्र व्यपदेशे मानमाह—**यथेति** । लक्ष्यान्तरमाह—**व्योमेति** । लक्ष्यान्तरदाने विशेषमाह—**अस्य त्विति** । अत्र क्वापि पृथग्विभक्तेरश्रवणान्मिथ उद्देश्यविधेयभावाभावेन सर्वमुद्दिश्याभाया एव विधेयत्वादिति भावः । स्पष्टत्वादितरदुपेक्ष्याह—**अत्रेति** । प्रौढातपेत्यत्र कर्मधारयः । व्यतिकरः संबन्धः । सहचरैरित्यनेनाक्षेपकत्वयोग्यता, गजरूपकस्य प्राधान्यं च

१ 'सुन्दरि त्वं राकासि' अत्र सुन्दरी उद्देश्यं राकात्वं विधेयमिति यथा स्पष्टं प्रतीयते तथा सुविमलमौक्तिकतारे ! ( सुविमलमौक्तिकानि तारा यस्याम् ) इत्यादिसंबोध्यविशेषणेषु मौक्तिकादीन्युद्दिश्य तारादित्वविधानं ( वर्णनम् ) न स्पष्टं प्रतीयते, समासेन उद्देश्यविधेयभावसूचक-विभक्तिलोपात् । इति शङ्कायाः–समर्थ्य( प्रधान )रूपकस्य विधेयत्वमादाय संपूर्णरूपकस्यापि विधेयत्वं व्यपदेश्यमिति समाधानम् । २ पूर्वोदाहरणे 'सुन्दरि ! त्वं राकाऽसि' इति रूपकं यथा विधेयं तथाऽत्र न । अपि तु–'शशी एव पुण्डरीकम्' इति पृथग्विभक्त्याऽनिर्दिष्टोपमानोपमेये रूपके ( उद्देश्ये ) आभातीति शोभामात्रं विधेयम् । ३ मज्जनपूर्वकं स्नान्ति ।

पूर्वं तु कवेः समर्थ्यत्वेनाभिमतस्य रूपकस्याक्षेपः, इह तु समर्थकत्वेनाभिमतस्य नयनयोर्मीनरूपकस्येति विशेषः। अत्र च चमत्कारविशेषजनकतया रूपकसंघातात्मकमपि सावयवरूपकं रूपकालंकृतिभेदगणनायां गण्यते। यथा मौक्तिकालंकृतिभेदगणनायामेकं नासामौक्तिकमिव संघातात्मकमौक्तिकमञ्जर्यादयोऽपि गण्यन्ते। अन्यथा[1] मालारूपस्योपमादेस्तद्भेदगणनेऽगणनप्रसङ्गात्। एतेन 'गवां संघातो गोभेदानां कपिलादीनां गणनायां यथा न गण्यते तथा रूपकभेदगणनाप्रस्तुतौ न तत्संघातात्मकं सावयवं गणनीयम्' इति परो[2]क्तम्। एवमस्मात्संघातात्मकात्सावयवान्मालारूपकस्य संघातात्मकत्वेनाविशेषेऽप्येकविषयकत्वपरस्परनिरपेक्षत्वाभ्यामस्ति महान्विशेषः।

निरवयवं केवलं यथा—

'बुद्धिर्दीपकला लोके यया सर्वं प्रकाशते।
अबुद्धिस्तामसी रात्रिर्यया किंचिन्न भासते॥'

अत्र रूपकद्वयमपि सापेक्षरूपकसंघातात्मकत्वविरहान्निरवयवम्। मालात्मकत्वविरहाच्च केवलम्।

निरवयवं मालारूपकं यथा—

'धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेर्जीवितं शारदायाः।
आज्ञा साक्षाद्ब्रह्मणो वेदमूर्तेराकल्पान्तं राजतामेष राजा॥'

सूचितम्। लक्ष्यान्तरदाने बीजमाह **पूर्वं त्विति**। रूपकस्य गजेत्यादि। **मीनेति**। सन्त इत्यस्य तु साधवः सुहृदश्चेत्यर्थद्वयमिति भावः। जनकतयेति गणनायां हेतुः। **गण्यत इति**। पृथगिति शेषः। लोकदृष्टान्तेन सिद्धमर्थं प्रतिपाद्य व्यतिरेकमुखेन द्रढयति—**तद्भेदेति**। उपमालंकारभेदेत्यर्थः। प्रस्तुतौ प्रस्तावे। एवं अस्य पृथग्गणनवत्। **एकविषयत्वेति**। एतौ च मालारूपकनिष्ठौ धर्मौ। सावयवानेकविषयकं परस्परसापेक्षं चेति बोध्यम्। शारदायाः सरस्वत्याः। **साक्षादिति**। अप्रतिहतशक्तित्वादिति

१ यदि संघातात्मकं रूपकं तद्गणनायां न गण्येत तर्हि मालोपमायाः (उपमासंघातात्मिकायाः) अपि उपमाभेदेषु गणनं न कर्तव्यं स्यादित्युपपत्तिः।

२ चमत्कारविशेषजनकत्वात् मौक्तिकालंकृतिभेदेषु संघातात्मक—मौक्तिकमञ्जर्यादयो यथा गण्यन्ते तथा संघातात्मकं सावयवरूपकमपि रूपकभेदेषु गणनीयमेवेत्याशयः।

एकविषयकनानापदार्थारोपरूपत्वान्मालारूपमिदम्। परस्परसापेक्षत्वविरहाच्च निरवयवम्।

**यत्र चारोप एवारोपान्तरस्य निमित्तं तत्परम्परितम्। तत्रापि समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वे श्लिष्टपरम्परितम्॥**

यथा—

'अहितापकरणभेषज नरनाथ भवान्करस्थितो यस्य।
तस्य कुतो हि भयं स्यादखिलामपि मेदिनीं चरतः॥'

अत्र द्वयोरप्यारोपयोः समर्थ्यसमर्थकभावस्य वस्तुतस्तुल्यत्वेऽप्यहितानामपकरणमेवाहीनां तापकरणमिति श्लेषमूलकेनारोपेण राजनि भेषजतादात्म्यारोपस्य समर्थनीयतया कवेरभिप्रायः[1]। अत एव भङ्गश्लेषनिवेदितोऽहिभयाभावोऽपि[2] संगच्छते।

इदमेव मालारूपं यथा—

'कमलावासकासारः[3] क्षमाधृतिफणीश्वरः।
अयं कुवलयस्येन्दुरानन्दयति मानवान्॥'

शुद्धपरम्परितं केवलं यथा—

'देवाः के पूर्वदेवाः समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः।

भावः। **एकेति**। राजेत्यर्थः। **द्वयोरपीति**। अहिसंबन्धितापकरणभेषजारोपयोरित्यर्थः। 'समर्थनीयतायाम्' इति पाठः। **कवेरिति**। प्राधान्यादिति भावः। अत एव तस्य तात्पर्यविषयत्वेन समर्थनीयत्वेन तद्वेद्यत्वादेव। **भङ्गेति**। पदच्छेदेत्यर्थः। इदमेव श्लिष्टपरम्परितमेव। **कमलेति**। कमलानामावासः। कमलाया वासः। पृथ्वीधृतिः क्षान्तिधृतिः। पृथ्वीमण्डलस्य कुमुदस्य च। अयं वर्ण्यो राजा। अत्र समर्थककमलावासाद्यारोपस्य श्लेषमूलकस्य चन्द्रारोपे निमित्तत्वाद्राज्ञि कासाराद्यनेकपदार्थारोपरूपत्वाच्च मालाश्लिष्टपरम्परितरूपकता। पूर्वदेवा दैत्याः। 'समिति' इति 'क इह' इति द्विः पाठः।

---

१ अहितानामपकरणमेव अहीनां तापकरणमिति रूपकं समर्थकम्, भेषजतादात्म्यारोपश्च समर्थनीय इति कवेरभिप्रायः।

२ त्वं भेषजमसि अत एव अहिभयाभाव इत्यर्थः।

३ कमलाया वास एव कमलानाम् आवासः तत्कृते कासारः (सरोवरम्), एवंप्रकारेण सर्वत्र परम्परितता समर्थनीया।

यावन्नायाति राजन्नयनविषयतामन्तकत्रासिमूर्ते

मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजंगः ॥'

अत्रापि भुजंगारोपो दुग्धारोपसमर्थ्यत्वेनाभिमतः ।

तदेव मालारूपं यथा—

'प्राची संध्या समुद्यन्महिमदिनमणेर्मानमाणिक्यकान्ति-

र्ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य ।

आज्ञा[1] कान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसानां

क्षोणीन्द्रो संगरे ते लसति नयनयोरुद्भटा शोणिमश्रीः ॥'

यद्यपि सावयवेऽप्यारोपे[2] आरोपान्तरस्योपायस्तथापि तत्रारोपाति-रिक्तेन कविसमयसिद्धसादृश्येनाप्यारोपान्तरसिद्धिः संभवति । यथा प्रागुक्ते 'सुन्दरि राकासि नात्र संदेहः' इत्यत्र मौक्तिकादीनां तारात्वाद्या-रोपं विनाप्यौज्वल्यमात्रेणापि सुन्दर्यां राकारोपसिद्धेः, इह तु नयन-शोणिम्नि ज्वालाद्यारोपोऽनलसमारोपं नियमेनापेक्षते । एवं 'कारुण्यकुसु-माकाशः खलः' इत्यत्राकाशखलयोः सादृश्यस्याप्रसिद्धतयारोपसिद्ध्यर्थ-मारोप एवोपाय इति वैलक्षण्यम् ।

कश्चित्तु बह्वारोपात्मकात्सावयवादारोपद्वयात्मकमेवास्य वैलक्षण्ये बीजमित्याह ।

---

व्याख्यातमिदम् । **दुग्धारोपेति** । अनेन परम्परितत्वमुक्तम् । श्लेषमालयोरभावाच्छुद्ध-केवलत्वे । तदेव शुद्धपरम्परितमेव । **प्राचीति** । अपिना मालारूपकपरिग्रहः । 'तत्र सावयवे सिद्धिः' इति पाठः । अनलसमारोपमिति । **राज्ञीति** शेषः । **कश्चित्त्विति** ।

---

१ कान्तापादलाक्षारसानाम् आज्ञा, तव नयनयोः शोणता लाक्षारसानामाज्ञेव शोण-तासंपादयित्रीत्याशयः ।

२ एकेनारोपेण अपरस्यारोपस्य समर्थने उभयत्र समानेऽपि सावयवरूपकात्परम्परितस्य को भेद इति जिज्ञासायामाह—सावयवे रूपके—आरोपे एकस्मिन् आरोपे सति, द्वितीयस्य आरोपस्य उपायो भवतीत्यर्थः ।

३ अमोयं नागेशमहोदयस्य, क्रोधे इति वाच्यम् ।

'काव्यं सुधा रसज्ञानां कामिनां कामिनी सुधा ।
धनं सुधा सलोभानां शान्तिः संन्यासिनां सुधा ॥'

अत्र विषयमालाकृतो न कश्चिच्चमत्कारविशेष इति न पृथग्भेदगणनायां गण्यते । आरोप्यमाणमाला तु चमत्कारविशेषशालित्वाद्गण्यत एव ।

अथ कथं नाम श्लिष्टपरम्परिते 'कमलावासकासारः' इत्यादावेकस्यारोपस्यारोपान्तरोपायत्वम् । यतः श्लेषेण कमलानामावासस्य कमलाया वासस्य चाभेदमात्रमत्र प्रतीयते, नैकत्रान्यारोपः । तस्य स्वतन्त्रविषयनिर्देशापेक्षत्वात् । न च शुद्धाभेदप्रत्यय एवारोपः । विषयनिगरणात्मिकायामतिशयोक्तावपि तत्प्रसङ्गात् । न च शुद्धाभेदप्रत्ययेनात्रार्थः यत्संबन्धिनि यत्संबन्ध्यभेदस्तस्मिंस्तदभेद इति 'कमलावासकासारः' इत्यादौ राजनि कासारारोपो राजसंबन्धिनि लक्ष्म्याश्रयत्वे कासारसंबन्धिसरोजाश्रयत्वाभेदारोपेण समर्थयितुं शक्यः । श्लेषेण तु पुनर्लक्ष्म्याश्रयत्वसरोजाश्रयत्वयोरभिन्नत्वेन प्रत्ययाद्भिन्नधर्मनिबन्धनो राजकासारयोरप्यभेदप्रत्ययः स्यात्, न तु राजनि विषये कासारविषयिकस्यारोपस्य प्रकृतस्य सिद्धिः । इमावभिन्नावित्याद्याकारस्य शुद्धाभेदप्रत्ययस्याप्रकृतत्वात्प्रागुक्त आरोपो मृग्यः । स च न श्लेषसाध्य इति । सत्यम्[1] । श्लेषेण शुद्धाभेद-

अत्रारुचिबीजं तु प्रागुक्तरीत्या निर्वाह इति । **विषयमालाकृत इति** । एकस्योपमेयस्य नानोपमानकृत इत्यर्थः । या माला । तस्यैकत्रान्यारोपस्य नानुपपत्तिरिति । अत्रेदं चिन्त्यम्—कमलावासेनायं राजा कासार इत्यादौ यथा श्लेषमूलकाभेदाध्यवसानेनैनं साधारणधर्ममादाय राजकासारयो रूपकस्य गाम्भीर्येण समुद्रोऽयमित्यादाविव संभवस्तद्वत्कमलावासकासार इत्यादावपि संभवात्किमर्थोऽयं क्लेशः । साधारणधर्मज्ञानस्य चाभेदारोपप्रयोजकत्वात् । इदमेव चास्योपायत्वमारोपे एतन्मूलीभूतसाधारणधर्मसंपत्तिः । साधारणधर्मसंपत्तिः आरोपेणैवेत्यत्र न किंचिन्मानम् । समर्थके रूपकत्वव्यवहारस्तु भाक्तः । तदापि श्लिष्टेषु सादृश्यमूलकत्वाभावादावश्यकः । एवं च 'कारुण्यकुसुमाकाशः

१ 'सत्यम्' एतत्पर्यन्तस्य पूर्वपक्षस्येदं विशदीकरणम्—'कमलावासकासारः' अत्र कमलाया वासे कमलानामावासत्वस्य आरोपः (रूपकम्), राजनि कासारत्वस्य आरोपे उपायभूतः । अत एव हि परम्परितत्वव्यपदेशः । इति कथनं कथं संगच्छते? श्लेषेण कमलाया वासस्य कमलानामावासस्य च परस्परमभेदः प्रतीयेत कामम्, परम् एकत्र (कमलाया वासे) अन्यस्य (कमलानाम् आवासस्य) आरोपो न सिध्यति । आरोपे स्वतन्त्रस्य (पृथक्शब्दसूचितस्य)

प्रतीतौ सत्यां प्रकृतारोपसमर्थनायान्तरा मानसस्य[1] राजसंबन्धिनि कासारसंबन्ध्यभेदारोपस्य कल्पनान्नानुपपत्तिः। कथं तर्हि परम्परितरूपके 'सौजन्यचन्द्रिकाचन्द्रो राजा' इत्यादौ रूपकत्वम्, अभेदारोपस्य सत्त्वेऽपि तस्य सादृश्यमूलकत्वाभावात्। इति चेत्, न। समर्थकारोपेण धर्मैक्यसंपादने सादृश्यस्य[2] निष्प्रत्यूहत्वात्। स्यादेतत्[3]। सौजन्यचन्द्रि-

---

खलः' इत्यादौ वक्ष्यमाणान्योन्याश्रयोऽपि न। खलाकाशरूपकोपयुक्तकारुण्यकुसुमयोरभेदप्रत्ययस्येच्छाधीनाहार्यस्य संभवेन तावतैवोपपत्तेः। न तु समर्थकारोपे सादृश्यमूलकत्वमावश्यकमित्यनुपदमेवोक्तम्। एतेन स्यादेतदित्यादिना सौजन्यचन्द्रिकाचन्द्र इत्यन्त्यपूर्वपक्षसमाधाने परास्ते। अस्मदुक्तरीत्या पूर्वपक्षस्यैवाभावादिति। समर्थकारोपेण

---

विषय( उपमेय )निर्देशस्यापेक्षितत्वात्। शुद्धः (साक्षात्, इतरामिश्रितः) अभेदप्रत्यय एव तु नाऽऽरोप( रूपक )पदवाच्यः, अतिशयोक्तावपि तदुपलम्भात्।

ननु शुद्धाभेदप्रत्ययस्य अयमर्थो यत्—यस्य ( राज्ञः ) संबन्धिनि ( कमलाया वासत्वे लक्ष्म्याश्रयत्वे ) यस्य ( कासारस्य ) संबन्धिनः कमलानामावासत्वस्य ( सरोजाश्रयत्वस्य) अभेदः, तस्मिन् ( राज्ञि ) तस्य ( कासारस्य ) अभेद इति। अर्थात् ययोर्धर्मिणोः संबन्धिपदार्थानाम् ( धर्माणाम् ) परस्परमभेदः, तयोर्धर्मिणोरपि परस्परमभेदः सिध्यति। ततश्च धर्मयोः ( लक्ष्म्यावास—सरोजाश्रययोः ) अभेदेन धर्मिणो राज—कासारयोरप्यभेदः स्यात्, तेन च राजनि कासाराऽऽरोपोपि स्यादिति चेत्। न। श्लेषमूलकेन धर्मयोरभेदेन धर्मिणोरप्यभेद एव सिध्येत् न त्वेकस्मिन्नन्यारोपः। इमौ द्वावपि पदार्थौ अभिन्नौ इति शुद्धः अभेदप्रत्ययस्तु न प्रकृतः ( प्रकृतकार्योपयोगी ), अपि तु राजनि कासारारोप एव प्रकृतः। स चारोपः अन्वेषणीयः ( साधनीयः ) एव, नाधुनाप्युपपन्नः। आरोपस्य श्लेषसाध्यत्वाभावात्। इति पूर्वपक्षः।

१ द्वयोः शुद्धाभेदप्रत्यये सति, राजसंबन्धिनि पदार्थे कासारसंबन्धिनः पदार्थस्याऽभेदारोपो मानसः कल्प्यते। अर्थात् श्लेषेण द्वयोरभेदः, अभेदोत्तरं परस्परमारोपस्तु मनसा ( साधनेन ) कल्प्यते, इत्युत्तरः पक्षः।

२ अर्थात् सौजन्य—चन्द्रिकयोरभेदे संपादिते सचन्द्रिकत्वं द्वयोर्निष्प्रतिबन्धम्।

३ अंशमात्रं स्वीकृत्य अंशान्तरे शङ्कते—'सौजन्यमेव चन्द्रिका' इति षष्ठीतत्पुरुषावयवे समानाधिकरणतत्पुरुषे उत्तरपदार्थप्राधान्यात् विशेष्यभूतायां चन्द्रिकायां सौजन्याऽभेदोऽन्वियात्। ततश्च सौजन्याभेदे सति चन्द्रिका सौजन्यरूपा परिणमेत्। चन्द्रिकायाः सौजन्यात्मकत्वं तु न राजनि चन्द्रात्मकत्वं ( रूपकम् ) साधयेत्। 'यत्( चन्द्र )संबन्धिनि ( चन्द्रिकायाम् ) यत्संबन्धिनः ( राजसंबन्धिनः ) सौजन्यस्याऽभेदः, तस्मिन् ( चन्द्रे ) तस्य ( राज्ञः ) अभेदः' इति न्यायेन चन्द्रे राजाऽभेदः सिध्येत्। अभिप्रेतस्तु राज्ञि चन्द्राऽभेदः। ननु चन्द्रिकायां सौजन्याऽभेदः सौजन्ये वा चन्द्रिकाऽभेदो द्वयमपि समानवित्ति—( एकरूपेण साधनेन, एकविभक्तिकतया संसर्गत्वेन ) बोध्यम्। अत एव इच्छानुसारं चन्द्रिकायां सौजन्याभेद इव

काचन्द्र इत्यत्र तत्पुरुषावयवे समानाधिकरणतत्पुरुषे चन्द्रिकायामभेदसंसर्गेण सौजन्यस्य विशेषणत्वात्प्रतीयमानश्चन्द्रिकागतः सौजन्याभेदो न राजनि चन्द्राभेदात्मकं रूपकं समर्थयितुं प्रभवति, यत्संबन्धिनि यत्संबन्ध्यभेद इत्यादिप्रागुक्तन्यायात्। अपि तु सौजन्ये विषये चन्द्रिकाभेदः। यथा—'सौजन्यं ते धराधीश चन्द्रिका त्वं सुधानिधिः।' स च दुरुपपाद एव। न चानयोः समानवित्तिवेद्यत्वान्नानुपपत्तिरिति शक्यं वक्तुम्, प्रात्यक्षिके हि सामग्र्यास्तुल्यत्वात्तत्। न तु शाब्दबोधे व्युत्पत्तिवैचित्र्यनियन्त्रिते। एवमन्यत्रापि कथं समासगतशुद्धपरम्परिते द्वयोरारोपयोर्निर्वाह्यनिर्वाहकभावः? कथं च शशिपुण्डरीकमित्यादौ पुण्डरीकरूपकमुच्यते? पुण्डरीकाभेदात्मकस्य पुण्डरीकताद्रूप्यस्याभानात्। शश्यभेदप्रत्ययाच्च पुण्डरीकं शशीत्यत्रेव शशिरूपकमुच्यताम्। एवं नीलिमदिव्यतोये तारावलीमुकुलमण्डलमण्डिते षोडशकलादलमङ्कभृङ्गमित्यत्राप्युत्तरपदार्थे पूर्वपदार्थाभेदस्यैव भानात्पूर्वपदार्थरूपकापत्तिः।

तथा—

'सुनिर्मलमौक्तिकतारे[1] धवलांशुकचन्द्रिकाचमत्कारे।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः॥'

इत्यत्र सुन्दर्यां विषयभूतायां राकातादात्म्यावगमात्स्फुटमेव तावद्राकारूपकम्। तत्र चरणत्रयगतानि राकारूपकाण्यनुगुणतयोपात्तान्यपि नानुगु-

चन्द्रिकायां सौजन्याभेदारोपेण। **चन्द्रिकाऽभेद इति।** तदात्मकरूपकं समर्थयितुं प्रभवतीत्यस्यानुषङ्गः। स च स तु, सौजन्यचन्द्रिकेत्यत्र। अनयोरभेदयोः। तत् तुल्यवित्तिवेद्यत्वम्। अन्यत्रापि उदाहृतातिरिक्तस्थलेऽपि। उदाहृतस्थल एव शङ्कते—**कथं चेति।**

सौजन्ये चन्द्रिकाऽभेदोपि शक्यते ग्रहीतुम् इति चेत्। न। प्रत्यक्षविषये तुल्यसामग्रीकत्वमादाय समानवित्तिवेद्यत्वं स्वीक्रियते। शाब्दबोधे नेदं मन्तुं युज्यते। ततश्च—शशिपुण्डरीकम्, नीलिमदिव्यतोये, सुविमलमौक्तिकतारे, इत्यादौ सर्वत्र तत्पुरुषघटिते उत्तरपदार्थे पूर्वपदार्थस्याऽभेदः प्रतीयेत, अर्थात् तारादिषु मौक्तिकादीनामभेदः प्रतीयेत। न चायम् (मौक्तिकाभेदः) सुन्दर्यां राकातादात्म्यं साधयेत्, अपि तु मौक्तिकादिषु तारादीनामभेद एव राकाऽभेदं साधयितुं शक्नुयात्। इति 'अत्र वदन्ति' इत्यतः प्राक् पूर्वपक्षः।

१ 'सुविरल' इति काशीपुस्तकपाठः।

ण्यमाचरन्ति। तारा—चन्द्रिका—पूर्णचन्द्राणां मौक्तिक—धवलांशुक—वदना-भिन्नत्वे सिद्धेऽपि न सुन्दर्यां राकातादात्म्यं सेद्धुमीष्टे। प्रत्युत विपरीतं राकायां सुन्दरीताद्रूप्यम्, तेषां राकासंबन्धित्वात्सर्वमेव व्याकुलमिति।

अत्र वदन्ति—अभेदस्तावद्विशेषणस्य संसर्गो भवति। स च यथा मुखं चन्द्र इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे विशेषणताया निर्वाहकस्तथैव समासगते मुखचन्द्र इत्यादौ रूपके स्वानुयोगिनो मुखस्य प्रतियोगिनि चन्द्रे विशेषणतायाः। एवं चोभयत्रापि वस्तुतश्चन्द्राभेद एव संसर्गः। क्वचिदनुयोगित्वमुखः, क्वचिच्च प्रतियोगि-त्वमुखः, विशेषणविशेष्यभाववैचित्र्यात्। न तु मुखचन्द्र इत्यत्र मुखाभेदः संसर्गः। तथा सति चन्द्ररूपकानापत्तेः, मुखरूपकापत्तेश्च। स्वप्रतियोगि-काभेद एव विशेषणसंसर्गो न तु स्वानुयोगिकाभेद इति तु दुराग्रहः। एवं च सौजन्यचन्द्रिकेत्यादौ वस्तुतः सौजन्याभेदो न सौजन्यस्य चन्द्रि-काविशेषणस्य संसर्गः, अपि तु चन्द्रिकाऽभेद एव। तथा च सौजन्य-निष्ठाभेदप्रतियोगिनी चन्द्रिकेति पर्यवसितेऽर्थे, भङ्ग्यन्तरेण सौजन्ये चन्द्रिकाऽभेदसिद्धौ जातायां राजनि चन्द्राभेदोऽपि निष्पद्यते इति

चस्त्वर्थे। ईष्टे तदभिन्नत्वमिति शेषः। सुन्दरीताद्रूप्यं तदभिन्नत्वं सेद्धुमीष्टे इत्यस्यानुषङ्गः। क्वचित्समासगते क्वचिच्च वाक्यगते। एवंव्यावर्त्यमाह—न त्विति। इत्यत्र

१ वाक्ये—'मुखं चन्द्रोऽस्ति' इत्यभेदः स्वप्रतियोगिनः ( चन्द्रस्य ) अनुयोगिनि ( मुखे ) विशेषणताया निर्वाहकः। समासे—'मुखचन्द्रः' अत्र तु स्वानुयोगिनो मुखस्य प्रतियोगिनि चन्द्रे विशेषणताया निर्वाहकः। उभयत्रापि चन्द्रस्यैवाऽभेद इत्याशयः।

२ समासे—स्वानुयोगिनो मुखस्य प्रतियोगिनि चन्द्रे अभेद इति सोऽयमभेदः अनुयोगित्व-मुखः। अनुयोगित्वं मुखे आदौ यस्य।

३ वाक्ये—स्वप्रतियोगिनश्चन्द्रस्य स्वानुयोगिनि मुखे अभेद इति प्रतियोगित्वमुखः।

४ अर्थात् प्रतियोगित्वमुख एव विशेषणस्य संसर्गो भवति, न तु अनुयोगित्वमुख इति तु हठ एवेत्यर्थः।

५ सौजन्यमेव चन्द्रिका इत्युत्तरपदविशेष्यतासूचकस्य विग्रहस्य दृष्ट्या मा भूत्कागम्। परम् अभेदो विशेषणस्य संसर्गः ( अर्थात् एकं विशेषणीकृत्य अपरस्मिन्नेकीकरोति )। वाक्ये प्रतियोगी ( चन्द्रादिः ) विशेषणम्, समासे अनुयोगी ( मुखादि ) विशेषणम्। परं वस्तुतश्च-न्द्रस्यैवाऽभेद उभयत्र।

परम्परिते नानुपपत्तिः । शशिपुण्डरीकमित्यादावपि शशिनिष्ठाभेदप्रतियोगि पुण्डरीकमिति पर्यवसितेऽर्थे पुण्डरीकाभेदस्य भानात्पुण्डरीकरूपकमव्याहतम् । एवमन्येष्वप्यवयवरूपकेषु बोध्यम् । एवं सुविमलमौक्तिकतारे इत्यादावपि ताराद्यभेद एव मौक्तिकादिगतो मौक्तिकादीनां तारादिविशेषणानां संसर्गीभवन्राकारूपकस्य समर्थको भवतीति सर्वं सुस्थम् ।

सोऽयमभेदो यत्रानुयोगित्वमुखस्तत्र रूपकस्य विधेयता । यत्र च प्रतियोगित्वमुखस्तत्रानुवाद्यत्वमिति दिक् ।

तत्र 'प्राची संध्या समुद्यन्महिमदिनमणेः' इत्यत्रारोप्यमाणयोः परस्परमारोपविषययोश्चानुकूल्ये रूपकयोरनुग्राह्यानुग्राहकभावो दर्शितः ।

समासगते । मुखाभेदो मुखप्रतियोगिकाभेदः । **नानुपपत्तिरिति** । रूपकत्वस्येत्यादिः । **सर्वं सुस्थमिति** । अन्ये तु "तुल्यवित्तिवेद्यतया चन्द्राभेदस्यापि मुखे प्रतीतेरार्थं चन्द्ररूपकम् । शाब्दं व्यस्ते । एवं मुखाभेदस्य समासशास्त्रप्रवृत्त्युपयोगितयाङ्गीकारेऽप्यतात्पर्यविषयत्वान्न तमादाय मुखरूपकव्यवहारः । किं चात्र पूर्वपदार्थप्रधानमयूरव्यंसकादिसमासेन चन्द्रपुण्डरीकाद्यभेदस्यैव मुखशब्दादौ भानान्न दोषः । अत एव 'विशेष्यस्य पूर्वनिपातार्थमिदम्' इति भाष्यकृतः । एवं च वाच्यतापि चन्द्ररूपकस्य" इत्याहुः । अपरे तु "चन्द्रनिष्ठाभेदश्चन्द्रप्रतियोगिकाभेदश्च रूपकम् । अत एव 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्युक्तं प्रकाशे । यद्वा विषयिनिष्ठाभेदप्रतियोगितया यत्र विषयस्य रञ्जनमित्येव लक्षणार्थः । एवं च मुखप्रतियोगिकाभेदवांश्चन्द्र इत्येवंबोधेऽपि न क्षतिः" इत्याहुः । तत्र पदार्थरूपकाणां मध्ये । परस्परमित्यस्य मध्यमणिन्यायेनोभयत्रा-

१ मुखचन्द्र इति समासे मुखं चन्द्र इति वाक्येऽपि च चन्द्रप्रतियोगिक एवाभेदो भवति, न तु मुखप्रतियोगिकः । क्वचित् अनुयोगी आदौ भवति, क्वचित्प्रतियोगी, इति वैचित्र्यमात्रम् । एवं साधिते—सौजन्यचन्द्रिकेत्यादौ सर्वत्र समासगतरूपकस्थले आपातत एव विशेषणस्य सौजन्यादेरभेदः प्रतीयते, वास्तवे तु चन्द्रिकाया एवाभेदः । एवं च सौजन्यनिष्ठो योऽभेदस्तत्प्रतियोगिनी चन्द्रिका इत्यादिरेव सर्वत्र बोधः पर्यवसीयते । तथा च—आपाततश्चन्द्रिकायां सौजन्याभेदप्रतीतावपि वस्तुतः सौजन्ये चन्द्रिकाऽभेदसिद्धौ ( पूर्वोक्तयुक्त्या ) जातायां तत्समर्थितो राजनि चन्द्राभेदः ( रूपकम् ) निष्प्रतिबन्धः । एवं शशिपुण्डरीकं सुविमलमौक्तिकतारे इत्यादौ सर्वत्र समासगतरूपके बोध्यम् ।

२ दिनमणेररुणतार्थं सन्ध्या अनुकूलेति आरोपविषययोः ( महिम-नयनारुणिमश्रियोः ) आरोप्यमाणयोः ( दिनमणि-सन्ध्ययोः ) च परस्परमानुकूल्ये अनुग्राहकेण समर्थकेन ( महिमनि दिनमणित्वरूपकेण ) अनुग्राह्यं समर्थनीयं ( नयनशोणिमश्रियः प्रातःसन्ध्यात्वरूपकम् ) इति आनुकूल्ये परम्परितरूपकम् ।

प्रातिकूल्ये यथा—

'आनन्दमृगदावाग्निः शीलशाखिमदद्विपः।
ज्ञानदीपमहावायुरयं खलसमागमः॥'[1]

यथा वा—

'कारुण्यकुसुमाकाशः शान्तिशैत्यहुताशनः।
यशःसौरभ्यलशुनः पिशुनः केन वर्ण्यते॥'[2]

एकत्र नाश्यनाशकभावरूपमपरत्र चात्यन्तिकसंसर्गशून्यतारूपं प्रातिकूल्यमुपमानयोस्तथैवोपमेययोश्च। अनुग्राह्यानुग्राहकभावः[3] पुनरारोपयोरविशिष्ट एव।

तथा—

'अयं सज्जनकार्पासरक्षणैकहुताशनः।
परदुःखाग्निशमनमारुतः केन वर्ण्यते॥'

अत्र रक्षणशमनपदे विरोधिलक्षणया विपरीतार्थबोधके[4]।

एवं पदार्थरूपकं[5] लेशतो निरूपितमेव।

वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम्।

यथाहि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थस्तथात्रापि वाक्यार्थघटकानां पदार्थानां रूपकमर्थावसेयम्।

---

न्वयः। लक्ष्यान्तरदाने बीजमाह—एकत्रेति। आद्ये इत्यर्थः। अयं पिशुनः। अर्था-

---

१ दावाग्निना यथा मृगस्तथा खलसमागमेन आनन्दो नाश्यते, एवं च दावाग्निर्यथा मृगार्थं प्रतिकूलस्तथा आनन्दकृते खलसमागम इत्यादिरूपे प्रातिकूल्ये परम्परितरूपकम् [ आनन्दमृगेत्यादिपद्ये ]।

२ आकाशे यथा कुसुमस्य तथा खले कारुण्यस्य सर्वथा संसर्गो नेत्यादिरूपे प्रातिकूल्ये परम्प० [ कारुण्येत्यादिपद्ये ]।

३ आनन्दे मृगरूपकेणैव खलसमागमे दावाग्निरूपकं समर्थ्यते, इत्यादिकः।

४ हुताशनकर्तृकं कार्पासकर्मकं रक्षणं यथा बाधितं तथा पिशुनकर्तृकं सज्जनरक्षणं बाधितमिति रक्षणपदस्य ( नाशने ) लक्षणा। एवं शमनपदस्य वर्धने।

५ एकस्मिन् पदार्थे ( विषये ) अपरपदार्थस्य ( विषयिणः ) आरोपः।

'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् ।
क्षालनं भास्करस्येदं सारसैः सलिलोत्करैः ॥'

अत्रात्मनि तपोदानेषु चारोपविषयविशेषणतया बिम्बभूतेषु, भास्करस्य सलिलक्षालनादीनां च विषयिविशेषणत्वेन प्रतिबिम्बानां रूपकं गम्यमानं प्रधानीभूतविशिष्टरू[1]पकाङ्गम् । 'नेदं रूपकम् । रूपके च विम्बप्रतिबिम्बभावो नास्ति' इति केनाप्यालंकारिकंमन्येन प्रतारितस्य दीर्घश्रवस उक्तिरश्रद्धेयैव । ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति निय[2]मात् । अत्र यदि रूपकं नाङ्गीकुरुषे मैवाङ्गीकुरु, तर्हि तत्रेवयथादिशब्दप्रयोगे उपमा[3]मपि । एवं 'त्वयि कोपो महीपाल सुधांशाविव पावकः' इत्यादौ स्वकल्पितेन विशिष्टेन धर्मिणा सादृश्यस्य प्रत्ययादुपमां ब्रूषे

वसेयमार्थिकम् । एतल्लक्ष्यमाह—**आत्मन इति** । सारसैः सरःसंबन्धिभिः । 'सलिलोत्करादीनां च' इति पाठः । **नेदमिति** । किं तु निदर्शनेत्यर्थः । चोऽप्यर्थे । दीर्घश्रवसो लम्बकर्णस्य । द्रविडस्याप्पयदीक्षितस्य । **तयोरिति** । तदभावे इति शेषः । युक्त्यन्तरमाह—**एवमिति** । बालाभ्रः । शोणाभ्र इत्यर्थः । विषयिणश्चन्द्राधिकरणकाग्निरूपोपमा-

१ अत्र प्रधानीभूतं विशिष्टं रूपकम् 'यत् निर्मलीकरणम् ( विषयः ), इदं क्षालनम् (विषयि )' इति । प्रधानेऽस्मिन् रूपके आरोपविषयस्य ( निर्मलीकरणम् इत्येतस्य ) आत्मतपोदानानि विशेषणानि बिम्बभूतानि । भास्कर-सलिलोत्करादीनि च आरोपविषयिणः ( क्षालनम् इत्येतस्य ) विशेषणानि, अतः प्रतिबिम्बानि । ततश्च निर्मलीकरणे क्षालनारोपरूपं प्रधानं रूपकं यथा वाच्यम्, तथा बिम्बभूतेषु आत्म-तपोदानेषु प्रतिबिम्बानां भास्कर-सलिलोत्करादीनामारोपरूपम् अङ्गभूतं रूपकं व्यज्यमानमस्तीत्याशयः ।

२ अर्थात् उपमायाम् इव-यथादिवाचकशब्दप्रयोगः, रूपके च एकस्मिन् अन्यारोपः असाधारणः । अन्या सर्वापि सामग्री ( बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिप्रयोगरूपा ) उपमा-रूपकयोः समाना भवतीत्यालंकारिकाणां नियमः ।

३ उपमामपि मा अङ्गीकुरुष्वेत्यनुषङ्गः । अर्थात् तत्र ( आत्मनोऽस्येतिपद्ये ) इवादिशब्दप्रयोगे उपमा भवेत् । यथा—'तपोदानैः आत्मनो निर्मलीकरणं सरःसलिलोत्करैर्भास्करस्य क्षालनमिव' इति । ततश्च बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिका सामग्री उपमा-रूपकयोः साधारणीति सिद्धम् । एवं च रूपके बिम्बप्रतिबिम्बभावो नास्तीति कथनमनुपपन्नमेवेत्याशयः ।

४ त्वत्पदार्थ( महीपाल )रूपविशेषणविशिष्टे धर्मिणि कोपे, स्वकल्पितेन सुधांशुरूपविशेषणविशिष्टेन धर्मिणा पावकेन सह सादृश्यस्य प्रत्ययात् उपमाम् ( बिम्बप्रतिबिम्बभावविशिष्टाम् ) ब्रूषे, तर्हि—तत्रैव ( त्वयि कोपः इत्युदाहरणे ) इवस्य निरासे महीपालविशेषणविशिष्टे धर्मिणि कोपे, सुधांशुरूपविशेषणविशिष्टस्य ( विशेष्यस्य ) स्वकल्पितस्य धर्मिणो हव्यवाहनस्य आरोपे सति ( विशिष्टम् ) रूपकमपि ब्रूहि इति योजना ।

तर्हि तत्रैवेवस्य निरासे 'त्वयि कोपो महीपाल सुधांशौ हव्यवाहनः' इत्यादौ रूपकमपि।

तथा—

'कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः।
कोमलातपबालाभ्रः संध्याकालो न संशयः॥'

इत्यादावपि विशिष्टरूपकं[1] बोध्यम्। त्वयि कोप इत्यत्र विषयिणः स्वबुद्धिकल्पितत्वात्कल्पितं विशिष्टरूपकम्। इह तु न तथेति विशेषः।

न चैवमादौ प्रतीयमानोत्प्रेक्षा वक्तुं शक्या, अभेदस्य निश्चीयमानत्वात्। उत्प्रेक्षायां च सत्यां संभाव्यमानता स्यात्। अन्यथा मुखं चन्द्र इत्यादावपि प्रतीयमानोत्प्रेक्षापत्त्या रूपकविलोपापत्तेः।

अथ बोधो विचार्यते—

तत्र प्राञ्चः—"विषयिवाचकपदेन विषयिवृत्तिगुणवतो लक्षणया सारोपयोपस्थितौ[2], विषये तस्याऽभेदेन संसर्गेण विशेषणतयान्वयः। एवं च मुखं चन्द्र इत्यत्र चन्द्रवृत्तिगुणवदभिन्नं मुखमिति धीः। अत एवालंकारभाष्यकारः 'लक्षणापरमार्थं यावता रूपकम्' इत्याह। न च चन्द्रसदृशं मुखमित्युपमातोऽस्य को भेदः। बोधवैलक्षण्याभावेन विच्छित्तिवैलक्षण्याभावात्। वृत्तिमात्रवैलक्षण्यस्याप्रयोजकत्वादिति वाच्यम्। लाक्षणिकबोधोत्तरं जायमानेन प्रयोजनीभूतेनाभेदबोधेनैव वैलक्षण्यात्।

---

नस्य। इह तु कुङ्कुम इवेत्यत्र तु। एवमादौ आत्मनोऽस्येत्यादौ। इवाद्यप्रयोगादाह— **प्रतीयेति**। अन्यथा तस्य संभाव्यमानत्वे इष्टापत्तौ। तत्र बोधविषये। द्वयोरुपादानादाह—**सारोपेति**। उपस्थितौ सत्यामिति शेषः। **विषये तस्याभेदेनेति**। विषयतावच्छेदकावच्छिन्नविषये पूर्वोपस्थितस्येत्यर्थः। **वृत्तीति**। शक्तिलक्षणान्यतरेत्यर्थः।

---

१ 'यतिः (विषयः) सन्ध्याकालः (विषयी)' इति प्रधानम् अङ्गि रूपकम्। अस्मिन् रूपके कुङ्कुमद्रवलेपः काषायवसनं चेति विषयविशेषणतया बिम्बभूते। बिम्बभूतयोरेनयोः (सप्तमी) यथाक्रमं कोमलातप-शोणाभ्रयोः विषयिविशेषणयोः प्रतिबिम्बभूतयोरारोपः, इति बिम्बप्रतिबिम्बभावविशिष्टमिदं रूपकम्।

२ विषयिणि (चन्द्रादौ) वर्तमाना ये गुणास्तद्वतः सारोपया लक्षणया विषयिवाचकपदेन उपस्थितौ सत्यामिति योजना।

निरूढलक्षणातिरिक्ताया लक्षणायाः प्रयोजनवत्त्वानियमात् । अभेदबुद्धेश्च वृत्त्यन्तरवित्तिभाव्यत्वेन न बाधबुद्धिप्रतिबध्यत्वम्” इत्याहुः ।

नव्यास्तु—“नामार्थयोरभेदसंसर्गेणान्वयस्य व्युत्पत्तिसिद्धत्वाच्चन्द्राभिन्नं मुखमिति लक्षणां विनैव बोधः । फलस्यान्यथैवोपपत्तेर्लक्षणाकल्पनस्यान्याय्यत्वात् । किं च यदि च रूपके लक्षणा स्यान्मुखचन्द्र इत्यत्रोपमितविशेषणसमासयोरुत्तरपदस्य लाक्षणिकत्वा[1]विशेषादेकस्योपमात्वमन्यस्य रूपकत्वमिति व्याहतं स्यात् । अपि च मुखं न चन्द्रसदृशमपि तु चन्द्र इत्यादौ सादृश्यव्यतिरेकमिश्रिते सादृश्यबुद्धेरयोगात् । एवं देवदत्तमुखं चन्द्र एव, यज्ञदत्तमुखं तु न तथा, अपि तु चन्द्रसदृशमित्यादौ[2] नञर्थस्य लक्ष्यमाणचन्द्रसदृशान्वयित्वात् ‘न चन्द्रसदृशश्चन्द्रसदृशम्’ इति बोधकदर्थनापत्तेश्च । नहि[3] नञः फलीभूतज्ञानविषयेणाभेदेनान्वयो

वृत्त्यन्तरवित्तीति । व्यञ्जनाज्ञानेत्यर्थः । आहुरिति । एतन्मते ह्येवं रूपकलक्षणम्—अनिह्नुतविषयकं पुरस्कृतविषयतावच्छेदकं वा आहार्याभेदप्रतीतिफलकोपमानबोधकपदजन्यप्रतीतिविषयीभूतं साधर्म्यमिति । फलस्याभेदबुद्धेः । अन्यथैव, उक्तप्रकारेण । न तथा, न चन्द्रः । सदृश इति । मुखपदार्थ इति शेषः । ननु स्वमते बाधसत्त्वेन कथमभेद-

१ मुखं चन्द्र इवेत्युपमितसमासे अप्रयुज्यमानवाचकशब्दत्वात् सादृश्यार्थस्य प्रतीतये चन्द्रसदृशे लक्षणा भवति । इदानीं विशेषणसमासे (मयू०) रूपकेऽपि लक्षणायां स्वीकृतायामुभयविधसमासेऽपि उत्तर(चन्द्र)पदस्य लाक्षणिकत्वाऽविशेषः ।

२ तथा अर्थात् चन्द्रो न, अपि तु चन्द्रसदृशम् । रूपके लक्षणास्वीकारे तु ‘चन्द्रः’ इत्यस्य ‘चन्द्रसदृशम्’ इत्यर्थः स्यात् । ततश्च—‘तथा न, अपि तु चन्द्रसदृशम्’ इत्यस्य ‘चन्द्रसदृशं न अपि तु चन्द्रसदृशम्’ इत्यर्थे सति बोधस्य स्पष्टं कदर्थनेत्याशयः ।

३ ननु नञः ‘तथा’पदबोध्येन चन्द्रेण (लक्षणया चन्द्रसदृशेन) नात्रान्वयः, अपि तु लक्षणायाः फलीभूतं यज्ज्ञानम् (मुखं चन्द्राभिन्नमिति) तद्विषयेण अभेदेन सह नञोऽन्वयः । तथा च–‘मुखस्य चन्द्रेण अभेदो न, अपि तु मुखं चन्द्रसदृशम्’ इत्यर्थे सति न काचित्कदर्थनेति चेत् । न । वाक्यार्थबोधोत्तरं प्रत्येयस्य अभेदस्य पदार्थान्वयकाले अनुपस्थितेः । अत एव हि फलत्वव्यपदेशः । फलं हि बोधोत्तरमेव स्यान्न तु पदार्थान्वयकाले ।

युक्तः, एतदन्वयवेलायां तस्यानुपस्थितेः । ताद्दशाभेद[1]बोधस्य चाहार्यत्वान्न बाधबुद्धिप्रतिबध्यत्वम् । यद्वा आहार्यान्यत्वस्येव शाब्दान्यत्वस्यापि बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ निवेशः । सति च बाधनिश्चये तद्वत्ताशाब्दबुद्धेरनुत्पादः, योग्यताज्ञानविरहात् । सति च कचिदाहार्ये योग्यताज्ञाने तद्बुद्धेरिष्टत्वात् । अत एव योग्यताज्ञानस्य बाधनिश्चयपराहतस्यापि शाब्दधीहेतुत्वम् । तस्मादेतदन्यत[2]रप्रकारेण काव्ये सर्वत्र बोधोपपत्तिः । अपि च तद्गत[3]धर्मवत्त्वबुद्धेः कथं तदभेदबुद्धिः फलं स्यात् । नहि

धीरत आह—**ताद्दशेति** । इदं च शाब्दे तस्याः प्रतिबन्धकत्वमूरीकृत्य । वस्तुतस्तदेव नेत्याह—**यद्वेति** । नन्वेवं सति बाधनिश्चये तदभावो नोपपद्येतात आह—**सति चेति** । **बुद्धेरनुत्पाद इति** । इदं तु चिन्त्यम् । शाब्दबोधो हि भवत्येव । अत एव वह्निना सिञ्चतीति वाक्यप्रयोक्तुरद्रवेण वह्निना कथं सेकं ब्रवीषीत्युपहासः संगच्छते । अबोधे हि एतदर्थकद्रविडभाषाश्रवणोत्तरं पाश्चात्यस्येव मूकतैव स्यात् । ननु पदार्थस्मरणमेव न शाब्दबोध इति चेत्, किमनेन श्रद्धाजाड्येन । बाधज्ञानादीनां च तद्बोध्येऽप्रामाण्यज्ञानजननद्वारा प्रवृत्तिप्रतिबन्धकत्वम्, योग्यताज्ञानादीनां च तज्जनकत्वमेव

१ ताद्दशाभेदबोधस्येत्यारभ्य-सर्वत्र बोधोपपत्तिरेतत्पर्यन्तस्येदं विशदीकरणम्—अयं च द्वयोः ( नामार्थयोः ) अभेदबोधः आहार्यः ( बाधे सत्यपि इच्छया कल्पितः ) । अत एव नायं बाधबुद्ध्या प्रतिबध्यः । अथवा–आहार्योऽभेदबोधो यथा बाधनिश्चयेन न प्रतिबध्यः तथा शाब्दोऽपि ( शब्दमात्रेण कल्पितः, न तु वास्तवः ) । तथा च–मुखं चन्द्र इत्यादौ आहार्यत्वाऽस्वीकारेऽपि शाब्दत्वेन कार्यनिर्वाहः । आहार्य–शाब्दयोर्बाधनिश्चयाऽप्रतिबध्यत्वे उपपत्तिमाह—सति च बाधनिश्चयेति०—अर्थात् यत्र यद्वत्ताबुद्धेः बाधनिश्चयो भवति तत्र तद्वत्ताशाब्दबुद्धिर्नोत्पद्यते । अत्र तु कल्पितं योग्यताज्ञानं स्वीकृत्य तद्वत्ताबुद्धिरुत्पद्यत एव, न प्रतिबध्यते । तस्मात्–अन्यतर( आहार्योऽभेदबोधः शाब्दो वा स्वीकार्यः )प्रकारेण मुखं चन्द्र इत्यादौ बोधोपपत्तिः, न लक्षणाजन्यं गौरवमिति नव्यानामाशयः । अयं विषयो गौणसारोपलक्षणाप्रसङ्गे पूर्वमप्युपपादितः ।

२ रूपकस्थले—अभेदज्ञानमाहार्यं स्वीकार्यम् [ आहार्यात् अन्यत् ( अनाहार्यं सत्यम् ) ज्ञानमेव बाधबुद्ध्या प्रतिबध्यं भवति । आहार्यस्य तु बोधे न बाध इत्यर्थः ] अथवा बोधोपपत्तये योग्यताज्ञानमेव आहार्यम् ( कल्पितम् ) स्वीकार्यम्, एतदन्यतरप्रकारेण बोध इत्याशयः ।

३ सदृशलक्षणया तद्गत( चन्द्रगत )साधारणधर्म( आह्लादकत्व )वत्त्वबोधे सति चन्द्राभिन्नत्वं फलं कथं स्यात् ? साधारणधर्मवता ( वस्तुना ) सह अभेदस्य ज्ञाने सति साधारणधर्मवदभेदो गृह्येत, न खलु तत्तदसाधारणधर्मवतः ।

साधारणधर्मावच्छिन्नाभेदज्ञानस्य तत्तदसाधारणधर्मावच्छिन्नाभेदज्ञाने हेतुत्वं क्वाप्यवगतम्। घटपटयोर्द्रव्यत्वेनाभेदग्रहेऽपि घटत्वादिना भेदग्रहात्। तदभिन्नत्वेन ज्ञानस्य पुनस्तद्धर्मप्रतिपत्तिः फलं स्यात्। प्रवाहाभिन्नज्ञानस्येव शैत्यपावनत्वादिप्रतिपत्तिः।

अत एव—

'कृपया सुधया सिञ्च हरे मां तापमूर्च्छितम्।
जगज्जीवन तेनाहं जीविष्यामि न संशयः॥'

इत्यादावमृताभिन्नत्वबोधे सत्येव कृपायाः सेके करणत्वेनान्वयः। तादृशसेकस्य जीवने हेतुत्वेन इति दिक्।

अथ कथं 'गाम्भीर्येण समुद्रोऽयं सौन्दर्येण च मन्मथः' इत्यत्र बोधः। शृणु—प्राचां तावल्लक्ष्यमाणैकदेशे सादृश्ये प्रयोज्यताया अभेदस्य वा तृतीयार्थस्यान्वयाद्गाम्भीर्यप्रयोज्यसमुद्रसादृश्यवदभिन्नोऽयम्, गाम्भीर्याभिन्नसमुद्रवृत्तिधर्मवदभिन्नोऽयमिति वा धीः। लक्षणां विनैव अभेदसंसर्गेणान्वयवादिनां पुनरित्थम्—कविना स्वेच्छामात्रादुपकल्पिता असन्तोऽप्यन्तःकरणपरिणामात्मका अर्था उपनिबध्यन्ते मुखचन्द्रादयः। तेषु च साधारणधर्माणामस्त्येव प्रयोजकत्वम्, तद्दर्शनाधीनत्वात्तन्नि-

नेति रमणीयः पन्थाः। **अभेदग्रहेऽपीति**। अन्ये तु चमत्कारिसाधारणधर्मरूपसादृश्यज्ञान एव फलबलात्तथाशक्तिकल्पने नायं दोष इत्याहुः। **सेके करणत्वेनेति**। न तु सदृशत्वेनेत्यर्थः। ज्ञाने तत्सदृशात्तत्कार्योत्पत्तेरनुभवविरुद्धत्वादिति भावः। नन्वेवमन्ध-

१ अभेदज्ञाने सति तु तत्तदसाधारणधर्मप्रतीतिः फलं स्यात्। अयं भावः—लक्षणया सादृश्यबोधे सति साधारणधर्मवदभिन्नस्य लक्ष्यस्य बोधः स्यात् न तु असाधारणधर्मवतः साक्षात्तद्वस्तुन एवाऽभेदो गृह्येत। द्वयोः (नामार्थयोः) अभेदे तु गृहीते असाधारणधर्मवदभेदोऽपि फलतया प्रतीयते। एवं च—'कृपया सुधया सिञ्च' अत्र लक्षणायां सुधासदृश्या कृपया सिञ्चेत्यर्थे सुधासदृश्या सेचनमनुभवविरुद्धम्। द्वयोरभेदे तु सुधाऽभिन्नया कृपया सेचनमुचितमेव। एवं च रूपके न लक्षणा, अपि तु नामार्थयोरभेदेनैवोपपत्तिरिति नव्यमतम्।

२ अर्थात् केवलमभेदान्वयेनैव न निर्वाहः, अपि तु यावत्कालं साधारणधर्माः प्रयोजका न स्युस्तावत् न रूपकोपपत्तिः। मुखचन्द्रयोः तत् (साधारणधर्म) दर्शनादेव हि तत् (मुखचन्द्र इत्यादिरूपक) निर्मितिर्भवति [उक्तमिदं सारोपगौणलक्षणाप्रसङ्गे नव्यमतालोचनायाम् 'अत्रेदं विचार्यते' इत्यादिना]।

मितेः। एवं च गाम्भीर्यादिप्रयोज्यसमुद्राद्यभिन्न इति बुद्धिरप्रत्यूहेति। यद्वा ज्ञानजन्य-ज्ञानप्रकारत्वं तृतीयार्थः, वह्निमान्धूमादित्यादौ पञ्चम्यर्थतया तस्य कल्पनात्। एवं च गाम्भीर्यज्ञानजन्यज्ञानप्रकारसमुद्राभिन्न[1] इत्यादिर्बोधः। तदिदं रूपकं विषयविषयिणोः सामानाधिकरण्ये अपदार्थतया[2] संसर्गः। यथा 'बुद्धिर्दीपकला'- इत्यादौ। वैयधिकरण्ये[3] च शब्दार्थतया क्वचिद्विशेष्यम्।

यथा—

'कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किं चासीदमृतस्य भेदविगमः साचिस्मिते तात्त्विकः॥'

अत्र शशाङ्कता-तादात्म्य-भेदविगमशब्दैरभिधीयमानं रूपकं प्रथमान्तविशेष्यतावादिनां मते विशेष्यम्[4]। क्रियाविशेष्यतावादिनां तु तत्रैव किंचिद्व्यत्यासेन निष्ठान्तक्रियादाने[5]।

कवेस्तन्निर्मितिर्न स्यादत आह—**यद्वेति**। यद्वा तज्ज्ञानस्य प्रयोजकत्वेऽपि तस्यातत्त्वादाह—**तस्येति**। ज्ञानजन्यज्ञानप्रकारत्वस्यान्यैः कल्पितत्वादित्यर्थः। **क्वचिद्विशेष्यमिति**। वाक्यार्थमुख्यविशेष्यमित्यर्थः। आयातीति सप्तम्यन्तं वयोविशेषणम्। तन्व्यास्तनाविति मध्यमणिन्यायेनान्वेति। आगामीति। शक्त्या लक्षणया वेति भावः। **किंचिदिति**। 'किं चासीत्' इत्यस्य स्थाने 'संपन्नो हि' इति पाठे इत्यर्थः।

१ गाम्भीर्यज्ञानेन जन्यं यज्ज्ञानम् (समुद्रविषयकम्) तस्मिन् प्रकारीभूतो यः समुद्रस्तदभिन्नः।

२ 'मुखं चन्द्रः अस्ति' 'बुद्धिः दीपकला' इत्युक्तौ समानविभक्तिकतयैव द्वयोरभेदः (**रूपकम्**) प्रतीयते इति सोऽयमभेदः कस्यचन पदस्य नाऽर्थः। अत एव संसर्गरूपः सः।

३ असमानविभक्तिकतायां तु केनचन शब्देन प्रतिपाद्यः सः (अभेदः)। शब्दप्रतिपाद्यः अभेदः क्वचिद्विशेष्यं क्वचिच्च विशेषणं भवतीत्यग्र उदाहरणाभ्यां स्पष्टीकृतम्।

४ तथा च 'आस्ये पूर्णशशाङ्कता आसीत्' अत्र आस्यनिष्ठाऽभेदप्रतियोगित्वप्रकारकानद्यतनभूतकालिकभवनानुकूलकृतिमान् पूर्णशशाङ्क इति प्रथमान्तविशेष्यतावादिनाम् (नैयायिकादीनाम्) मते शाब्दबोधः।

५ 'किं चासीत्' अस्य स्थाने 'संपन्नो हि' इति निष्ठा(क्त)न्तक्रियादाने [ लिङ्गविपरिणामेन च पूर्णशशाङ्कतादिभिः सहान्वये ] क्रियाविशेष्यतावादिनामपि मते रूपकं विशेष्यं भवतीत्यन्वयः। कृदन्तक्रियायां तेषामपि प्रथमान्तस्यैव विशेष्यत्वात्।

क्वचिच्च विशेषणम् । यथा—

'अविचिन्त्यशक्तिविभवेन सुन्दरि प्रथितस्य शम्बररिपोः प्रभावतः ।
विधुभावमञ्चतितमां तवाननं नयनं सरोजदलनिर्विशेषताम् ॥'

इह द्वितीयार्थे विशेषणीभूतं विधुत्वादि विध्वभेदात्मकतया रूपकम् । एवं मुखचन्द्र इत्यादावुपमितसमासे तावदुपमैव । विशेषणसमासे तु रूपकम् । बोधश्च शशिपुण्डरीकमित्यादाविव प्राक्प्रतिपादितदिशा बोध्यः ।

'मीनवती नयनाभ्यां करचरणाभ्यां प्रफुल्लकमलवती ।
शैवालिनी च केशैः सुरसेयं सुन्दरीसरसी ॥'

इत्यादौ तृतीयायाः[2] अभेदार्थकत्वात्तस्य च प्रागुक्तदिशा प्रतियोगित्वमुख्यस्यार्थवशादन्वये, नयननिष्ठाभेदप्रतियोगिमीनवतीति बोधः । मीनवत्त्वं च स्वाभिन्नद्वारकम् । एतत्स्फोरणायैव नयनाभ्यामित्युक्तम् । मीनाभिन्ननयनवतीति तु पर्यवसितम् । नयनाभेदे तु मीनेषु गृह्यमाणे सरसीरूपकापोषणादित्युक्तमेव ।

विभवेनेति प्रख्याने हेतुः । शम्बररिपोः कामस्य । द्वितीयार्धे कर्मणि । **विध्वभेदेति ।** लक्षणयेति भावः । **विशेषणसमासे न्विति ।** चिन्त्यमिदम् । चन्द्रमुखमित्यस्यापत्तेः । परिणामालंकारोदाहरणे तु विशेषणसमास उचितः । अत्र तु मयूरव्यंसकेति समासे लित्युन्नितम् । **प्रतीति ।** मीनप्रतियोगिकाभेदस्य नयने अर्थवशात्सरसीरूपकानुरोधेनान्वये इत्यर्थः । **स्वाभिन्नेति ।** मीनाभिन्ननयनेत्यर्थः । नयनाभेदे तत्प्रतियोगिकाभेदे ।

१ विधुभावः (विधुत्वम्) आनने न संघटते इति विधुत्वस्य लक्षणया विध्वभेदोऽर्थः । अभेदो हि रूपकम् । स चाभेदः (अर्थात् रूपकम्) द्वितीयार्धे (कर्मणि) विशेषणीभूतः । अतो रूपकमत्र विशेषणीभूतमिति व्यपदेशः । आननं विधुभावमञ्चतीत्यस्य विधुप्रतियोगिकाभेद(विधुभाव)कर्मकाञ्चनानुकूलकृतिमत् आननमिति बोधः ।

२ प्रकृत्यादित्वाद् या तृतीया जाता तस्या अभेदोऽर्थः । नयनशब्दादेव तृतीयाविधानात् अयमभेदो नयनरूपप्रतियोगित्वमुख एव यद्यपि प्रतीतुमापतितस्तथापि प्रागुक्तदिशा (सौजन्यचन्द्रिकाचन्द्रः, सुविमलमौक्तिकतारे, इत्यादौ चन्द्रादिरूपकानुरोधेन चन्द्रादिप्रतियोगिकस्यैवाऽभेदस्योपपत्तिर्दर्शिता) अत्रापि अर्थवशात् (सरसीरूपकानुरोधात्) वाक्यगामितया प्रतियोगित्वमुखस्य अभेदस्य (अर्थात् मीनप्रतियोगिकाभेदस्य) नयनेऽन्वये सति ।

३ ननु सामान्यसरस्यां मीनवत्त्वं संभवेत् सुन्दरीरूपायां तु तस्यां कथमित्याह—मीनवत्त्वमिति । स्वाभ्याम् (मीनाभ्याम्) अभिन्ने ये नयने तद्द्वारकम् । अर्थात् तस्या मीनाभिन्ने नयने स्तः, अत एव तद्द्वारा मीनवती सा ।

साधारणधर्मश्चात्राप्युपमायामिव क्वचिदनुगामी क्वचिद्बिम्बप्रतिबिम्बभावमापन्नः क्वचिदुपचरितः क्वचिच्च केवलशब्दात्मा । सोऽपि क्वचिच्छब्देनोपात्तः, क्वचित्प्रतीयमानतया नोपात्तः ।

उपात्तोऽनुगामी यथा—

'जडानन्धान्पङ्गून्प्रकृतिबधिरानुक्तिविकला-
न्ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥'

अत्र त्रातुमिति तुमुन्नन्तेन शब्देनोपात्तं जडान्धादित्राणं भेषजभागीरथ्योः ।

अयमेवानुक्तो यथा—

'समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासाम्राज्यं[1] ते सलिलमशिवं नः शमयतु ॥'

अत्र सौभाग्यभागीरथ्योः स्वाभावव्यापकदौर्भाग्यत्व[2]—परमोत्कर्षाधायकत्वादिरनुपात्तः प्रतीयमानो धर्मः । एवमीश्वरासाधारणधर्मत्व—परमगोप्यत्व—निरतिशयसुखजनकत्वान्यापामरसकलजनजरामृत्युहरणक्षमत्वं चोत्तरोत्तरारोपेष्वनुगामीति[3] ।

बिम्बप्रतिबिम्बभावमापन्नो विशिष्टरूपकप्रसङ्गे निरूपितः ।

निलिम्पा देवाः । निरयो नरकः । अम्ब गङ्गे । भेषजभागीरथ्योः । अनुगामी धर्म इति शेषः । **समृद्धमिति** । गङ्गास्तुतिरेव । सौभाग्यभागीरथ्योः सौभाग्यभागीरथीजलयोः स्वपदेन विषयविषयिपरामर्शः । सुधासाम्राज्यमित्यत्राह—**आपामरेति** । **निरूपित इति** । 'कुङ्कुमद्रवलिप्ताङ्गः काषायवसनो यतिः । कोमलातपशोणाभ्रः संध्याकालो न संशयः' ॥

१ 'सुधासोदर्यं' इति पाठः ।

२ स्वस्याऽभावे व्यापकं दौर्भाग्यं यस्य यस्याश्च, [ यदि सौभाग्यम्, भागीरथी वा न भवेत्तर्हि दौर्भाग्यं व्याप्नुयात् ], तत्त्वम् । स्वपदं तात्पर्यग्राहकमेव ।

३ यथाक्रमं धर्मानुगमनम् । ऐश्वर्ये भागीरथीजले च ईश्वरासाधारणधर्मत्वम्, श्रुतिसर्वस्वे गङ्गासलिले च परमगोप्यत्वम्, सुकृते जाह्नवीजले च निरतिशयसुखजनकत्वम्, सुधासाम्राज्ये गङ्गाम्भसि च आपामरसकलजरामृत्युहरणक्षमत्वं चानुगामी धर्मः ( अनुपात्तः ) ।

उपचरितो यथा—

'अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्दिरचन्द्रिका ॥'

अत्रामृतरूपके विषये वचस्युपचरितो मधुरिमातिशयः शब्देनोपात्तः । अम्बुनिध्यादिरूपके च गाम्भीर्याद्यनुपात्तम् ।

केवलशब्दात्मको यथा—

'अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि ।
शरीरिणां शरीराणि कमलानि न संशयः ॥'

अत्र सरोगशब्दादिरुपात्त एव प्रतीयते न लुप्तः । आद्यो ह्यभग्नो[1] द्वितीयस्तु भग्नः ।

अयमेव साधारणो यत्र युक्तिरूपेणोपन्यस्यते तद्धेतुरूपकम्[2] ।

यथा—

'पञ्चशाखः प्रभो यस्ते शाखा सुरतरोरसौ ।
अन्यथानेन पूर्यन्ते कथं सर्वमनोरथाः ॥'

एवम्—

'प्राणेशविरहक्लान्तः कपोलस्तव सुन्दरि ।
मनोभवव्याधिमत्त्वान्मृगाङ्कः खलु निर्मलः ॥'

इह श्लेषेण रसचन्द्रयोः कपोले ताद्रूप्यप्रत्ययाद्द्विरूपकं निरवयवम् । हेतुस्तु त्रिपु श्लिष्ट एव । एवमन्येऽपि प्रकारा ज्ञेयाः ।

---

इत्यादाविति भावः । **चन्दिरेति** । चन्द्रेत्यर्थः । **उपेति** । वस्तुतो मधुरिमातिशयस्य तत्रासत्त्वात् । एवमग्रेऽपि । **अनुपात्तमिति** । उपचरितमिति शेषः । **अङ्कितानीति** । व्याख्यातमिदम् । **उपात्त एवेति** । एवं चैक एव भेदोऽस्य तदाह—**लुप्त इति** । अनुपात्त इत्यर्थः । अभग्नः पदावान्तरभङ्गशून्यः । भग्नस्तद्युक्तः । अस्य भेदान्तरमाह—**अयमेवेति** । केवलशब्दात्मक एवेत्यर्थः । **यथेति** । राजानं प्रत्युक्तिः । हे राजन्, ते पञ्चशाखः पञ्चाङ्गुलिर्हस्तोऽसौ कल्पवृक्षस्य शाखैवेत्यर्थः । मृगाङ्कः श्लेषेण चन्द्रो रसविशेषश्च । तदाह—**इहेति** । **निरवयवमिति** । मिथोऽवयवावयविभावाभावादिति भावः । हेतुर्मनोभवेत्यादि बोध्यः । त्रिपु उपमानद्वये उपमेये चेत्यर्थः । **श्लिष्ट एवेति** ।

---

१ आद्यः 'अक्षसंघात'रूपो धर्मः अभङ्गश्लेषोत्थः, द्वितीयः सरोग, सरो–ग इति भङ्गश्लेषमूलः । २ उपपत्तिरूपेण अर्थात् विषयविषयिसाधारणोयं केवलशब्दात्मको धर्मो यत्र आरोपस्य उपपादकः स्यात् । यथा हस्तः सुरतरुशाखा, यतो मनोरथपूरकः ।

'उल्लासः फुल्लपङ्केरुहपटलपतन्मत्तपुष्पंधयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।
उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
संघातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥'

अत्रोपमेय उपमानस्य नारोपः, अपि तु कारणे कार्यस्येति रूपकं न भवतीति प्राञ्चः । एतन्मतानुसारेणैवास्माभिरपि लक्षितम्[1] । उच्छृङ्खलाः पुनरारोपमात्रं रूपकं वदन्त इहापि रूपकमेवाचक्षत इति प्रागेव निरूपितम् ।

ननु—

'यशःसौरभ्यलशुनः शान्तिशैत्यहुताशनः ।
कारुण्यकुसुमाकाशः पिशुनः केन वर्ण्यते ॥'

इत्यत्र लशुनहुताशनाकाशैः पिशुनस्य किं साधर्म्यम्, येन तेषामस्मिन्रूपकमुच्यत इति चेत्, यशःसौरभ्ययोः शान्तिशैत्ययोः कारुण्यकुसुमयोश्च ताद्रूप्ये शब्दादुपस्थापितेऽनन्तरमुपस्थितं यशोरूपसौरभ्याद्यभाववत्त्वमेतत्[2] । एवमपि लशुनखलयोस्ताद्रूप्यसिद्धौ सत्यां लशुनरूपखलावृत्तित्वेन यशःसौरभ्ययोस्ताद्रूप्यं सिद्ध्येत्, यशःसौरभ्ययोस्ताद्रूप्यसिद्धौ च यशोरूपसौरभ्यशून्यत्वेन लशुनखलयोस्ताद्रूप्यम्, इत्यन्योन्याश्रयो नाशङ्कनीयः । सकलसिद्धेः कल्पनामयत्वेन, कल्पनायाश्च स्वप्रतिभाधीनत्वात्[3] । शिल्पिभिः परस्परावष्टम्भमात्राधीनस्थितिकाभिः शिलेष्टकाभिर्गृहविशेषनिर्माणाच्च ।

मनसिजातमदनसंबन्धिविशिष्टाधिमत्त्वं दयितायाम्, मनोभवव्याधिरूपक्षयमन्थकत्वं रसे, मनोभवसंबन्धिराजयक्ष्मरूपव्याधिमत्त्वं चन्द्रे इति भावः । **उल्लास इति** । तद्धेतुरित्यर्थः । सूर्योदयवर्णनम् । तेषां लशुनादीनाम् । अस्मिन्पिशुने । चस्त्वर्थे । नन्वन्योन्याश्रयस्योत्पत्ताविव ज्ञानेऽपि प्रतिबन्धकत्वात्कथं तथा स्वप्रतिभाऽत आह—

१ अर्थात् उपमेये निश्चीयमानमुपमानतादात्म्यमिति रूपकलक्षणे उपमानोपमेयभावो दर्शितः ।

२ लशुनो हि सौरभ्याभाववान् । खलेपि यशःसौरभ्याभावे सिद्धे लशुनत्वमुपपन्नमेव । एवं हुताशनत्वाद्यपि ।

३ अन्योन्याश्रयो लौकिकघटनासु प्रतिबन्धकः, कविप्रतिभोत्थितकल्पनासु नेत्याशयः । द्वयोरेकस्य ताद्रूप्यस्य कल्पनया निष्पत्तौ सुखमन्योन्याश्रयभङ्ग इत्यर्थः ।

अथास्य ध्वनिः—

तत्र शब्दशक्तिमूलो यथा—

'विज्ञत्वं विदुषां गणे सुकवितां सामाजिकानां कुले
माङ्गल्यं स्वजनेषु गौरवमथो लोकेषु सर्वेष्वपि।
दुर्वृत्ते शनितां नृलोकवलये राजत्वमव्याहतं
मित्रत्वं च वहन्नकिंचनजने देव त्वमेको भुवि॥'

अत्र शक्तिनियन्त्रणेऽपि बुधत्वशुक्रत्वादीनि बुधाद्यभेद[1]रूपाणि राजनि व्यज्यन्ते।

यथा वा—

'अविरलविगलद्दानोदकधाराऽऽसारसिक्तधरणितलः।
धनदाग्रमहितमूर्तिर्देव त्वं सार्वभौमोऽसि॥'

अर्थशक्तिमूलो यथा—

'कस्तूरिकातिलकमालि विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम्।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि॥'

अत्र त्वदीयमाननं कलङ्क-चन्द्रिका-विशिष्टचन्द्राभिन्नमिति रूपकं कुमुदविकासादिना ध्वन्यते, न तु भ्रान्तिमान्। कुमुदानां हरितां चाचेतनत्वात्। न[2] चाचेतनेषु मुदामसंभवादवश्यं कुमुदादिषु चेतनत्वारोपेण भाव्यम्, तेन च भ्रान्तिसिद्धिरिति वाच्यम्। मुत्पदस्य विकासे लाक्षणिकत्वात्।

**शिल्पिभिरिति**। **विज्ञेति**। अत्र विज्ञादयः पण्डितानामिव बुधादीनामपि वाचकाः। नानार्थत्वात्। विज्ञत्वं पण्डितत्वं बुधत्वं च। सुकवितां काव्यकर्तृत्वं शुक्रत्वं च। माङ्गल्यं शोभनत्वमङ्गारकत्वं च। गौरवं श्रेष्ठत्वं बृहस्पतित्वं च। दुर्वृत्ते शनितां अशनितां च। वज्रत्वं मन्दत्वं चेत्यर्थः। राजत्वं नृपत्वं चन्द्रत्वं च। मित्रत्वमाप्तत्वं सूर्यत्वं च। **नियन्त्रणेति**। प्रकरणादिति भावः। धारासारेत्यत्र 'स कीचकैः' इतिवदासारपदं संपातमात्रपरम्। व्याख्यातमिदम्। पूर्वं विशेषणेष्वेव ध्वनिः, अत्र तु विशेष्येऽपीति पूर्वतो भेदः। सार्वभौमश्चक्रवर्ती दिग्गजश्च। सौधमौलिं गृहशिखरम्। मुदां विकाराणाम्। उदारामतिशयिताम्। हरितो दिशः कर्त्र्यः। विविक्तं भ्रान्तिमद-

१ अभेदश्च रूपकम्।

२ काशीपुस्तके त्वयं पूर्वपक्षस्तत्समाधानं च नास्ति।

इदं वा विविक्तमुदाहरणम्—

'तिमिरं हरन्ति हरितां पुरः स्थितं तिरयन्ति तापमथ तापशालिनाम्।
वदनत्विषस्तव चकोरलोचने परिमुद्रयन्ति सरसीरुहश्रियः॥'

इहापि वदनं चन्द्र इति गम्यते।

आनन्दवर्धनाचार्यास्तु—

"प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः॥'

अत्र रूपकाश्रयेण काव्यचारुत्वव्यवस्थापनाद्रूपकध्वनिः" इत्याहुः। तच्चिन्त्यम्। अत्र च जलधिकम्पहेतुत्वेन विकल्पत्रयं कल्प्यते। तच्च प्रकृते राजविशेष्यिकां[1] जलनिधिगतामनाहार्यविष्णुतादात्म्यज्ञानरूपां भ्रान्तिमेवाक्षिपति, न रूपकम्। तज्जीवातोराहार्यविष्णुतादात्म्यनिश्चयस्य कम्पाजनकत्वात्। कवि[2]जलधिगतत्वेन वैयधिकरण्याच्च। अज्ञात[3]मेव केवलं

मिश्रितम्। तज्जीवातो रूपकजीवातोः। **वैयधीति**। कम्पो जलधौ, आहार्यविष्णुतादात्म्यनिश्चयस्तु कवाविति न तस्य तज्जनकत्वम्। सामानाधिकरण्याभावात्। केवलमित्यस्यैव व्याख्याऽज्ञातमेवेति। चन्द्रालोके तु—'यत्रोपमानचित्रेण सर्वथाप्युपरज्यते। उपमेयमयी भित्तिस्तत्र रूपकमिष्यते॥ समानधर्मयुक्ताध्यारोपात्रोपाधिरूपकम्।

१ राजा विशेष्यो यस्याः, राजविषयिकामित्यर्थः। अयमत्रत्यः सारः—राजविषये 'विष्णुरयम्' इति जलनिधेर्विष्णुतादात्म्यज्ञानरूपो भ्रमो जातः। अत एव मन्थसेतुबन्धादिविषयको विकल्पः, तज्जनितभयेन कम्पश्च जलधेर्जातः। रूपके तु अभेदनिश्चयः आहार्यः (कल्पितः) भवति। स्वकल्पितया मिथ्याकल्पनया [अयं वास्तवे विष्णुर्न, किन्तु आरोपितो विष्णुः इत्याकारिकया] न कस्यचिद्भयं भवेत। ततश्च अनाहार्यविष्णुतादात्म्यभ्रममूलकस्य भ्रान्तिमत एव ध्वनिरुचितः, न तु आरोपिताभेदमूलकस्य रूपकस्येत्याशयः।

२ कृपया सुधया सिञ्चेत्यत्र सेचनवत् आहार्याभेदतोऽपि भयादिकं काव्यवर्णितं स्यादेतदिति उपपत्त्यन्तरं वैयधिकरण्यमाह—

३ यत् तादात्म्यं कवेरेव ज्ञातम्, अत एव सः 'विकल्पान् दधत इव पयोधेः कम्प आभाति' इति विष्णुतादात्म्यं वर्णयति। न तु जलधेस्तादृशं ज्ञानम्। अत एव अज्ञातं तादृशं तादात्म्यं न भयं (कम्पम्) जनयितुमलमित्यर्थः।

विष्णुतादात्म्यं जलधेः कम्पेऽनुपयुक्तमेव । चमत्कारिण्यपि चात्र भ्रान्तिरेवेति ध्वनिरपि तस्या एव युक्तः ।

अथास्यापि कविसमयविरुद्धतया चमत्कारापकर्षका लिङ्गभेदादयो दोषाः संभवन्ति ।

यथा—

'बुद्धिरब्धिर्महीपाल यशस्ते सुरनिम्नगा ।
कृतयस्तु शरत्कालचारुचन्दिरचन्द्रिका ॥'

अत्र विषयविषयिणोर्लिङ्गादिकृतं[1] वैलक्षण्यं तयोस्ताद्रूप्यबुद्धौ प्रतिकूलम् ।

क्वचित्कविसमयसिद्धतया चमत्कारहानिराहित्ये तु नामी दोषाः । यथा 'संतापशान्तिकारित्वाद्वदनं तव चन्द्रमाः' इत्यादौ हेतुरूपके ।

इति रसगङ्गाधरे निरूपितं रूपकप्रकरणम् ।

अथ परिणामः—

**विषयी यत्र विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण, स परिणामः ॥**

अत्र च विषयाभेदो विषयिण्युपयुज्यते । रूपके तु नैवमिति रूपकादस्य भेदः ।

---

उत्सिक्तक्षितिभृल्लक्षपक्षच्छेदपुरंदरः ॥' साधारणधर्मविशिष्टोपमानस्य यत्रारोप इत्यर्थः । 'पृथक्कथितसादृश्यं दृश्यसादृश्यरूपकम् । उल्लसत्पञ्चशाखोऽयं राजते भुजभूरुहः ॥ स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम् । अङ्गयष्टिधनुर्वल्लीत्यादि रूपितरूपकम् ॥' इत्यपि दृश्यते ॥

इति रसगङ्गाधरे मर्मप्रकाशे रूपकप्रकरणम् ॥

परिणामं लक्षयति—**अथेति** । विषयी उपमानम् । **विषयेति** । उपमेयेत्यर्थः । एवव्यावर्त्यमाह—**न स्वातन्त्र्येणेति** । स्वस्वरूपेणेत्यर्थः । तत्रेति शेषः । स विषयाभेदः । अत्र च परिणामे च । **नैवमिति** । किं तु विपरीतमिति भावः । **रूपकादस्य भेद इति** । वयं तु ब्रूमः—उपमानप्रतियोगिकाभेदो रूपकम् । उपमेयप्रतियोगिकाभेदः परिणामः प्रतीपवत् । तत्राभेदे उपमेयप्रतियोगिकत्वतात्पर्यग्राहकं प्रकृतकार्योपयोगः । न तु तच्छरीरेऽस्य प्रवेशः । एवं च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगो यत्र चोदासीनता

---

१ आदिपदेन वचनभेदो गृह्यते । यथा ह्यत्र 'कृतयः चन्द्रिका' इति विषयो बहुवचनान्तः, विषयी एकवचनान्त इति ।

अयमुदाह्रियते—

‘अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्संतापं हरिनवतमालस्तिरयतु॥’

अत्र भगवदात्मतयैव तमालस्य सं[1]सारतापनिवर्तनक्षमत्वम्। मार्ग-श्रान्तजनसंतापहारकत्वाद्रमणीयशोभाधारत्वाच्च तमालो विषयितयो-पात्तः। अयं समानाधिकरणो वा[2]क्यगः।

समासगो यथा—

‘महर्षेर्व्यासपुत्रस्य श्रावं श्रावं वचःसुधाम्।
उप(अभि)मन्युसुतो राजा परां मुदमवाप्तवान्॥’

व्यधिकरणो यथा—

‘अहीनचन्द्रा लसताननेन ज्योत्स्नावती चापि शुचिस्मितेन।
एषा हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात्॥’

तत्र रूपकमेव। एवं च परिणामो विशेषणसमासायत्तः रूपकं मयूरव्यंसकादिसमासायत्तम्। मुखचन्द्र इत्यादौ यदि तु चन्द्रमुखमिति। प्रयुज्यते तदा विशेषणसमासायत्तमपि रूपकमिति। परे तु “उपमानोपमेयपदानामुपमानप्रतियोगिकाभेदसंसर्गेण बोधकानां ‘मयूरव्यंसकादयश्च’ इति समासेन विशेषणसमासबाधाच्चन्द्रमुखमिति प्रयोग एव न” इत्याहुः। भ्रामं भ्रामं भ्रान्त्वा भ्रान्त्वा। एवमग्रेऽपि। विगलितेति क्रियाविशेषणम्। हरिरेव नवतमालः। भक्तोक्तिरियम्। **भगेति**। अत्रेत्यादिः। ननु हरेर्विषयित्वेन रूपकमेवेदमत आह—**मार्गेति। महर्षेरिति**। शुकदेवस्येत्यर्थः। श्रावंश्रावंवचःसुधामिति विशिष्टं समस्तमेकं पदम्। मयूरव्यंसकादित्वात्। स्नात्वाकालक इतिवत्। प्रकृतकार्योपयोगित्वपर्यन्तस्य परिणामशरीरत्वात्। अत एव तिरयतुपदस्यासमस्तत्वात्पूर्वोक्तस्य वाक्यगत्वमित्याहुः। क्वचित्तु ‘हरिरिह तमालः’ इति पाठः। तत्र वाक्यगत्वं स्पष्टमेव। तदा वचःसुधामित्येव समस्तम्। श्रावं श्रावमिति भिन्नं पदमिति बोध्यम्। उप(अभि)-मन्युसुतः परीक्षितः। आननेनेति च्छेदः। एषा कामिनी शुक्लपक्षयामिनीत्यर्थः।

१ संतापस्य परम्परया ‘संसारे’ इत्यनेन संबद्धत्वात्।

२ विषयात्मतया प्रकृतकार्योपयोगो हि परिणामः। प्रकृतकार्योपयोगित्वसूचकं चात्र ‘तिरयतु’-पदम्, तद्घटितस्य ‘हरिनवतमालस्तिरयतु’ इत्यस्यासमस्तत्वात् वाक्यगत्वमिति नागेशाशयः।

अत्र सर्वेषामेव तोषाय स्यादित्यनेन विरहिजनतोषजनकत्वमपि लभ्यते । तत्रारोप्यमाणशुक्लपक्षरजन्याः स्वात्मना बाधितम्, योषारूपेण तु संगच्छत इति भवति परिणामः । स च परस्परसापेक्षबहुसंघात्मकतया[1] सावयवः । तत्राद्यार्धगतौ द्वाववयवौ व्यधिकरणौ द्वितीयार्धगतश्चैकः समानाधिकरणः ।

यच्चाप्पयदीक्षितैर्वैयधिकरण्येन परिणामे उदाहृतम्—

तारानायकशेखराय जगदाधाराय धाराधर-
च्छायाधारककंधराय गिरिजासङ्गैकशृङ्गारिणे ।
नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे
नागैः कङ्कणिने नगेन गृहिणे नाथाय सेयं नतिः ॥'

यथा वा—

'द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥' इति ।

अत्र चिन्त्यते—तारानायकशेखरायेति पद्ये गिरिजासङ्गैकशृङ्गारिणि भवे कविकर्तृका नतिः प्रक्रान्ता । शृङ्गारिता च शेखरादीनि

अत्र नञ् काकाम् । तल्लब्धमर्थमाह—**अत्रेति** । **आरोप्येति** । योषायामित्यादिः । तस्या उद्दीपकत्वेन तत्तापजनकत्वादिति भावः । नन्वेवं समानाधिकरण एवायमिति कथं विपरीतप्रतिज्ञा अत आह—**स चेति** । उक्तप्रधानपरिणामप्रकरणे 'इदं वैयधिकरण्यं रूपकेऽपि दृश्यते' इत्युक्त्वा तारानायकशेखरायेत्याद्युदाहृतम् । तत्र को दोषः । किं च नद्या शेखरिणे इत्यंशे विषयात्मतयैव प्रकृतोपयोगाभावात्परिणामाभावेऽपि वाच्यमार्थं वा रूपकमपि न वाच्यम् । उपमानप्रतियोगिकाभेदस्योपमेयेऽभानात् । किं च शृङ्गारितोपपादकं शेखरादीत्यप्ययुक्तम् । नारायणेनास्त्रिणे इत्यस्य तदुपपादकत्वाभावात् । किं तु नमस्यतासंपादकशिवनिष्ठोत्कर्षबोधकानीमानि विशेषणानि । तदुपपादकता च शेखरस्य नदीतादात्म्यापत्त्येति परिणाम एवायम्, शेखरस्य नीचजनसाधारणत्वात् । इत एवास्वरसाद्द्विर्भावः पुष्पकेतोरिति पद्यान्तरमुदाहृतं तैः । तस्मात् 'यच्च' इत्यादि 'कुत्रास्ति परिणामः' इत्यन्तं चिन्त्यमिति बोध्यम् । **तारेति** । चन्द्रशेखरायेत्यर्थः । **धाराधरेति** । नीलग्रीवायेत्यर्थः । नद्या गङ्गया । दृशा भालचक्षुषा । नगेन

१ आनन-स्मिताद्यङ्गैरेव योषारूपकं पूर्यत इत्याशयः ।

भूषणान्यपेक्षत इति नद्या आरोप्यमाणशेखररूपतयैवोपयोगः न स्वरूपेण । एवं दृशोऽपि तिलकरूपतयेति रूपकमेव शुद्धं भवितुमर्हति । ननु परिणामे विषयाभिन्नत्वेन विषय्यवतिष्ठत इत्युक्तम्, प्रकृते च विषयवाचकेभ्यो नद्यादिशब्देभ्यः परस्यास्तृतीयाया अभेदार्थकत्वाच्छेखरादेश्च तदन्वयित्वात्कथं नात्र परिणाम इति चेत्, न । विषयाभिन्नत्वेन विषयिणो भानेऽपि तेन रूपेण तस्यानुपयोगात्[1] । द्विर्भावः पुष्पकेतोरिति पद्येऽपि कोविदानन्दजनन-जगदुत्कर्षौ कथ्येते राज्ञो नृसिंहस्य । तत्र कोविदानन्दजनकत्वमपि राज्ञ आरोप्यमाणद्वितीयमन्मथादितादूप्येण यथा संभवति न तथा केवलस्वरूपेण । तथाहि—अहो नयनानामस्मदीयानां साफल्यं यदयमपरो मन्मथोऽस्माभिरालोक्यत इति मन्यमानानां तेषां नयनानन्दस्तावत्पुष्पकेतुनैवोपपाद्यते, न तु राज्ञा । एवमपरोऽयं कल्पतरुश्चिन्तामणिर्द्वितीयः कर्ण इन्द्रश्च भूगतोऽयमन्यो दारिद्र्यमस्माकं परिहरिष्यति । हरिः खल्वयं संसारं[2] हरिष्यतीत्यभिमानाज्जायमानस्तेषामानन्दोऽप्यारोप्यमाणैः कल्पवृक्षादिभिरेवेति न विषयात्मना विषयिण उपयोगः, अपि तु स्वात्मनैवेति कुत्रास्ति परिणामः ? ।

अलंकारसर्वस्वकारस्तु—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति सूत्रयित्वा 'आरोप्यमाणं रूपके प्रकरणोपयोगित्वाभावात्प्रकृतोपर-

कैलासेन । कोविदानां पण्डितानाम् । शुद्धं परिणामामिश्रम् । **तदन्वयीति** । तृतीयार्थाभेदान्वयित्वादित्यर्थः । **कथ्येते इति** । शत्रन्तलडन्ताभ्यामिति भावः । तत्र द्वयोर्मध्ये । द्विर्भावः पुष्पकेतोरित्यर्थमाह—**द्वितीयमन्मथेति** । विबुधेति वाक्यार्थमाह—**अपरोऽयं कल्पतरुरिति** । विटपिनामिति बहुवचनं कल्पभेदाभिप्रायेण । विकल्पश्चिन्तारत्नस्येत्यर्थमाह—**चिन्तामणिर्द्वितीय इति** । द्वितीय इत्यस्याग्रेऽप्यनुषङ्गो बोध्यः । तपनेत्यादेरर्थमाह—**कर्ण इति** । वासवेत्यर्थमाह—**इन्द्रश्चेति** । भूगत इत्यनेन प्रसिद्धेन्द्राद्व्यतिरेकः सूचितः । द्वैतं देवस्येत्याद्यर्थमाह—**हरिरिति** । **प्रकरणोपेति** । प्रकृतोपेत्यर्थः । **प्रकृतोपरञ्जकत्वेनेति** । तस्य स्वोपरक्तबुद्धिविषयीकरणेने-

१ अर्थात् 'विषयात्मतयैव प्रकृतोपयोगी' इत्युक्तया परिणामे 'विषयाऽभेदः, प्रकृतोपयोगः' इति द्वावंशौ, तत्र प्रथमसत्त्वेपि न द्वितीय इत्याशयः ।

२ दैत्याधिपविध्वंसनेन धर्ममर्यादापालकस्य हरेरारोपेण संसार( जननमरणादिसंसरण )-हारकत्वं कोविदानामाशास्यमित्याशयः ।

अकत्वेनैव केवलेनान्वयं भजते । परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणतया परिणमति' इति व्याख्यातवान् । अत्रापि चिन्त्यते—आरोप्यमाणस्य प्रकृतोपयोग इत्यस्य प्रकृतकार्ये उपयोग आहोस्वित्प्रकृतविषयात्मतया उपयोगोऽर्थः? न तावदाद्यः ।

'दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥'

इति तदुदाहृतरूपकोदाहरणे आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसङ्गात् । न द्वितीयः ।

'अथ पक्त्रिमतामुपेयिवद्भिः सरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरंगमाद्यैः ॥'

इत्यत्र स्वोक्तव्यधिकरणपरिणामोदाहरणासंगत्यापत्तेः । यतो राजसंघटने ह्युपायनस्यारोप्यमाणस्य स्वात्मनैवोपयोगः, न तु विषयवचोरूपतया । वचसां तु विषयाणामारोप्यमाणोपायनरूपत्वेन परमुपयोग इति प्रत्युत

---

त्यर्थः । **उपयोग इति** । वक्ष्यमाणार्थपदस्यात्राप्यपकर्षः । **दासे इति** । नायिकां प्रति सापराधस्यानुभूततत्पादप्रहारस्य नायकस्योक्तिरियम् । नायिकासंबन्धात्पुलकोदयः । पुलकाङ्कुरा एव कण्टकाग्राणीत्यर्थः । **तदुदेति** । अलंकारसर्वस्वकृदुदाहृतेत्यर्थः । एवमग्रेऽपि । **आरोप्येति** । पुलकेष्वित्यादिः । **प्रकृतेति** । प्रकृतो यः खेदस्तत्संबन्धिनी या व्यथेत्यर्थः । पक्त्रिमतां पक्वत्वम् । तत्परतस्तदनन्तरम् । राजसंघटने राजमेलने । उपायनस्य 'भेट, नजर' इत्यादिभाषाप्रसिद्धस्य । **आरोप्येति** । वचसीत्यादिः । **प्रत्युत विपरीति** । अत्रेदं चिन्त्यम्—यत्किंचिद्रूपोपायनस्य राजसंघटनानुपायत्वात्, विलक्षण-

---

१ रिक्तहस्तो न वीक्षेत राजानमित्याद्युक्त्या राजदर्शने उपायनमपेक्षितम् । ततश्च-आरोप्यमाणमुपायनं स्वात्मना ( आरोप्यमाणोपायनत्वेनैव ) उपयोगि, न तु विषय( वचन )रूपतया । अयं भावः—वचनेषु उपायनत्वं यदा आरोपितं तदैव तेषां प्रकृतोपयोगित्वं जातम् । वचनरूपत्वे तु न तेषां प्रकृतोपयोगः । इति पण्डितराजतात्पर्यं 'वचन-तुरंगमरूपस्य तस्य यथावत् ( कस्य उपायनस्य ? ) [ उपायनस्य ( आरोप्यमाणस्य ) एव यदा स्वयमुपयोगस्तदा कुत्र परिणामः ? ] तदुपायत्वात्' इति स्वलेखेनोद्गिरतोपि नागेशस्य 'चिन्त्यम्' इति फल्गुफूत्कारमात्रम् ।

विपरीतम्। तस्मादस्मदुक्तमेव व्यधिकरणपरिणामस्योदाहरणं साधु। इदं तु पुनर्व्यधिकरणरूपकं भवितुमर्हति। तृतीयार्थाभेदोऽपि मीनवती नयनाभ्यामित्यत्रैव प्रकृत्यर्थानुयोगिको[1] बोध्यः।

केचित्तु "क्वचित्केवलो विषयः स्वात्मना न प्रकृतोपयोगीत्ययमारोप्यमाणाभिन्नतयावतिष्ठते, तत्रारोप्यमाणपरिणामः। यथा—'वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ'। अत्र वदनमिन्द्वभिन्नतयावतिष्ठते, केवलस्य वदनस्य दृक्छिशिरीकारकत्वायोगात्। क्वचिच्चारोप्यमाणः स्वात्मना न प्रकृतकार्योपयोगीत्ययं विषयाभिन्नतयावतिष्ठते, तत्र विषयपरिणामः। यथा—'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति'। अत्रेन्दुर्वदनाभिन्नतयावतिष्ठते, केवलस्येन्दोः स्मरतापापनोदकत्वायोगात्। एवं च परिणामद्वयात्मकमिदं रूपकमेव भवितुमर्हति। विषयतावच्छेदक-विषयितावच्छेदकान्यतरपुरस्कारेण निश्चीयमानविषयिविषयान्यतरत्वस्य[2] तल्लक्षणत्वात्। अत एवोक्तम्—'तद्रूपकमभेदो य उपमानोपमेययोः' इति। तस्मान्न रूपकात्परिणामोऽतिरिच्यते" इति वदन्ति।

अथ बोधः—

हरिनवतमाल इत्यत्र भगवदभिन्नतमाल[3] इति निर्विवादैव धीः। तथा श्रावं श्रावं वचःसुधामित्यत्र विशेषणसमासगतपरिणामे वचनाभिन्नां[4] सुधामिति, पायं पायं वचःसुधामिति रूपके तु वचोनिष्ठाभेदप्रतियोगिनीं

वचनतुरंगमादिरूपस्यैव च तदुपायत्वात्, एवं च राजसंघटनोपयोगित्वं तुरंगमादिरूपेणैवोपायनस्यैतदुक्तिरेव विपरीतेति। अग्रिममनवधारणमिदं खिल्यादुक्तं च चिन्त्यमिति बोध्यम्। **वदनस्येति**। तस्य जलभिन्नत्वादिति भावः। **इन्दोरिति**। तस्योद्दीपकत्वेन तज्जनकत्वादिति भावः। **तल्लक्षणेति**। रूपकलक्षणेत्यर्थः। तदेवाह—**अत एवेति**। उक्तं मम्मटेनेति भावः। केचिद्वदन्तीत्याभ्यामरुचिः सूचिता। चमत्कृतिनिदानत्वेनालंकारभेद इति सिद्धान्तनादन्यत्रेवात्रापि भेद एवोचित इति। परिणामे वचःसुधामित्यंश

१ प्रकृत्यर्थौ नयने, ते अनुयोगिनी यत्र। अर्थात् नयनयोः ( विषययोः ) मीनयोरभेदः। तेन नयननिष्ठाभेदप्रतियोगिमीनवतीति बोधः।

२ विषयतावच्छेदकं ( मुखत्वम् ) पुरस्कृत्य निश्चीयमानं विषयि( चन्द्र )त्वम्, विषयितावच्छेदकं ( चन्द्रत्वम् ) पुरस्कृत्य निश्चीयमानं विषय(मुख)त्वम् वा [ मुखे ( विषये ) विषयिणः ( चन्द्रस्य ) अभेदः, विषयिणि ( चन्द्रे ) विषयस्य ( मुखस्य ) अभेदो वा ] रूपकमित्याशयः।

३ तमालनिष्ठाभेदप्रतियोगी हरिरित्याशयः।

४ सुधानिष्ठाभेदप्रतियोगीनि वचांसि।

सुधामिति बुद्धिः । एवं च 'वदनेनेन्दुना[1] तन्वी स्मरतापं विलुम्पति' इति व्यस्तपरिणामे 'वदनेनेन्दुना[2] तन्वी शिशिरीकुरुते दृशौ' इति व्यस्तरूपके च बोधवैलक्षण्यम् ।

तथा—

'शान्तिमिच्छसि चेदाशु सतां वागमृतं[3] शृणु[4] ।
हृदये धारणाद्यस्य न पुनः खेदसंभवः ॥'

इति परिणामे, शृण्विति विहाय पिबेति कृते तत्रैव रूपके,

'विद्धा मर्मणि वाग्बाणै[5]र्घूर्णन्ते साधवः खलैः ।
सद्भिर्वचोमृतैः सिक्ताः पुनः स्वस्था भवन्ति ते ॥'

इति रूपके च बोधव्यवस्थितिः । तथा 'अहीनचन्द्रा लसताननेन ज्योत्स्नावती चापि शुचिस्मितेन' इति व्यधिकरणपरिणामेऽभेदस्य तृतीयार्थत्वाल्लसदाननाभिन्नहीनेतरचन्द्रयुक्तेति धीः । मीनवती नयनाभ्यामित्यत्र तु सरसीतादात्म्यारोपो बाधकाभावात्तावत्[6] सिद्धः । तस्य च मीनयोर्नयनाभेदारोपेणासमर्थनान्नयनयोर्मीनाभेदारोपो मृग्यः । स च तृतीयायाः प्रकृत्यर्थाभेदार्थकतायां न संभवतीति यथाकथंचित्तस्याः

इत्यर्थः । सुधामितीत्यत्र धीरित्यस्यानुषङ्गः । **एवमिति** । प्राग्वदित्यर्थः । **बोधवैलेति** । अनुयोगित्वमुखत्व-प्रतियोगित्वमुखत्वकृतमिति भावः । एवमग्रेऽपीत्याह—**तथेति** । यस्य वागमृतस्य । स्थलान्तरे बोधमाह—**तथेति** । तावत् आदौ । तस्य च सुन्दर्यां सरसीतादात्म्यस्य । **प्रकृत्यर्थाभेदेति** । प्रकृत्यर्थप्रतियोगिकाभेदेत्यर्थः । विभक्त्या संसर्गबोधनस्य प्रकृत्यर्थप्रतियोगिकस्यैव व्युत्पत्तिसिद्धत्वेन तदसंभवादाह—**यथा कथंचिदिति** । अत्र मीनवती नयनाभ्यामित्यत्र । उक्तप्रकारेणायमेव बोधोऽन्यत्रे-

१ अनुयोगित्वमुखत्वेन–इन्दुनिष्ठाभेदप्रतियोगिना वदनेनेति बोधः ।

२ प्रतियोगित्वमुखत्वेन—वदननिष्ठाऽभेदप्रतियोगिना इन्दुना ।

३ वागभिन्नममृतम्, अर्थात् अमृतनिष्ठाऽभेदप्रतियोगिनीं वाचम् इति परिणामे ।

४ पिबेति पाठं कृत्वा रूपके तु—वाङ्निष्ठाभेदप्रतियोगि अमृतम्, इति ।

५ बाणाभिन्नाभिर्वाग्भिः, अर्थात् वाङ्निष्ठाभेदप्रतियोगिभिर्बाणैरिति बोधः ।

६ शाब्दबोधपर्यन्तस्यास्य मीनवतीतिरूपकप्रसङ्गस्येदं विशदीकरणम्–'सुन्दरीसरसी' इति आरोपे ( रूपके ) न किञ्चिद् बाधकमिति प्रधानं ( विशेष्यम् ) इदं रूपकं प्रथमतः सिध्यति । ततो विशेषणरूपके नयनाभ्यामित्यभेदार्थकतृतीयाश्रवणात् यद्यपि प्रकृत्यर्था( नयना )भेदः

प्रकृत्यर्थनिष्ठाभेदप्रतियोगित्वार्थकत्वं वाच्यम् । तेन नयननिष्ठाभेदप्रतियोगिमीनयुक्तेति धीः । एवं चारोप्यमाणे विषयप्रतियोगिकाभेदस्याभानान्न परिणामः, अपि तु रूपकमेव । इयमेव सरणिः 'नद्या शेखरिणे दृशा तिलकिने—' इति प्रागुक्ताप्पयदीक्षितदत्तोदाहरणे, 'वचोभिरुपायनं चकार—' इत्यलंकारसर्वस्वोदाहरणे च बोध्या[1] । यदि पुनरारोप्यमाणे यथाकथंचिद्विषयाभेदप्रत्ययमात्रात्परिणामतोच्यते, नाद्रियते च प्रकृतोपयोगस्तदा 'प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्' इति तदुदाहृतरूपकस्य परिणामतापत्तिः, प्रेमलतिकामिति समासे प्रेम्णो विषयस्य लतिकायामारोप्यमाणायामभेदेन[2] विशेषणत्वादिति दिक् ।

---

त्याह—**इयमेवेति** । उदाहरणे च बोध्येति । परे तु "पूर्वपदार्थप्रधानमयूरव्यंसकादिसमासेन सुधाप्रतियोगिकाभेदवद्वच इत्येव बोधः । रूपके मीनवती नयनाभ्यामित्यत्र सुन्दर्यां सरसीतादात्म्यरूपं रूपकं मुख्यवाक्यार्थः । तत्र च मीनवत्त्वादिः साधारणो धर्मः । तस्य च सुन्दर्यामभावात्प्राप्तबाधबुद्धिस्थगनाय नयनाभ्यां मीनवतीति सुन्दरीविशेषणम् । सरस्यां च मीनवत्त्वं प्रसिद्धमेव । एवं च सुन्दर्यां मीनवत्त्वसंपादनरूपप्रकृतकार्योपयोगिता मीनानां नयनात्मतापत्त्यैवेति तदंशे परिणाम एवेति नयनप्रतियोगिकाभेदवन्मीनवतीत्येव बोध इति दिक् । 'पादाम्बुजं भवतु नो विजयाय मञ्जु' इत्यादौ रूपकोपमयोः संदेह एव" इति प्राहुः । तदाह—**दिगिति** । दूषितमित्यस्य चन्द्रात्मनेतीत्यन्तेनान्वयः ।

---

अर्थात् नयनप्रतियोगिकोऽभेदः प्राप्तः, किं तु नयनाभेदे तस्य (सरसीरूपकस्य) समर्थनं न भवति । अत एव नयनयोर्मीनाऽभेदः अर्थात् मीनप्रतियोगिकोऽभेदः मृग्यः (यत्नविशेषेणाऽपि स्वीकार्यः) । स चायं मीनाभेदो यत्नविशेषं विना न संभवति । यतो हि प्रकृत्यादित्वाद् या तृतीया कृता सा प्रकृत्यर्थस्य (तृतीयाप्रकृतिभूतस्य नयनार्थस्य) अभेदं बोधयेत्, न तु मीनयोः । तथापि सरसीरूपकानुरोधेन तृतीयाकृतायाः प्रकृत्यर्थाभेदबोधकतायाः स्थाने प्रकृत्यर्थनिष्ठाभेदप्रतियोगित्वबोधकता वाच्या स्यात् । अनेन यत्नेन—प्रकृत्यर्थे (नयनयोः) निष्ठो यः अभेदस्तत्र प्रतियोगित्वं मीनयोरेव सिद्धम् । अर्थात् नयने विषयौ कृत्वा मीनयोर्विषयिणोरभेदः संपन्नो येन नयननिष्ठाभेदेत्यादिके मूलोक्ते बोधे सिद्धे सरसीरूपकसमर्थनं निर्बाधम् ।

१ बोधस्तु—नदीनिष्ठाभेदप्रतियोगिशेखरयुक्तायेति । एवमेव वचोभिरुपायनमित्यत्रापि । तथा च—नैतेषु परिणामः, अपि तु रूपकमेवेत्याशयः ।

२ अर्थात् अत्र लतिकायां विशेषणीभूतस्य प्रेम्णः (विषयस्य) अभेदः प्रतीतः । अत एव प्रकृतोपयोगाभावेऽपि परिणामत्वं स्यात् ।

अथ परिणामध्वनिर्विचार्यते—

तत्र यत्तावदप्पयदीक्षितैर्विद्याधरोक्तं ध्वन्युदाहरणमनूद्य दूषितम्—"तथाहि—

'नरसिंह धरानाथ के वयं तव वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥'

अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्याक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यते इति, तदयुक्तम् । तत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैवाक्रमणोपयोगः, न चन्द्रात्मना" इति ॥ तदसत् । अत्र विजृम्भणं नाम न केवलं प्रागल्भ्यमात्रं कवेरभिप्रेतम्, येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात् । अपि तु निरतिशयनैर्मल्यगुणवत्तायां स्वसमानजातीयद्वितीयराहित्यप्रयुक्तः प्रौढिविशेषः । आक्रमणं तु न्यग्भाव एव । एवं चैवंविधविजृम्भणे चन्द्रकर्मकमेवाक्रमणमुपयुज्यते, न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि

अत्र प्रागुक्तपद्ये । एवं च विजृम्भणाक्रमणयोरुक्तरूपत्वे च । गुणवत्तायां तद्रूपसा-

१ प्रोक्तस्य निर्गलितार्थस्त्वयम्—'राजानमाक्रम्य यस्य (राज्ञः) यशो विजृम्भते' इत्युक्तौ कवेः श्लिष्टपदप्रयोगसंरम्भात् 'प्रतिस्पर्धिनं राजानमाक्रम्य यथायं राजा विजृम्भते, तथा अन्येषां राज्ञां यश उपमानत्वेन प्रसिद्धं राजानम् (चन्द्रम्) आक्रम्य (न्यक्कृत्य) अस्य यशोपि विजृम्भते' इति प्राकरणिकेऽर्थे पर्यवसिते चन्द्रपदेन राजरूपोऽप्यर्थो व्यञ्जनया बुध्यते । एवं च चन्द्रवाचके राजनि (विषये) नृपवाचकस्य राज्ञः (विषयिणः) अभेदः परिकल्प्यते । अत्र हि आक्रमणरूपे नृपोचितकार्ये आरोप्यमाणस्य नृपस्य नृपत्वेनैवाक्रमणकर्मतासंपादनरूप उपयोग इति दीक्षितोक्तिः ।

विजृम्भते इत्यस्य न परस्परसंघर्षविषयकशौर्यमात्रमर्थो यत्र हि कर्मभूतस्य नृपस्यैवोपयोगः । अपि तु निर्मलतायां निजनिष्प्रतिद्वन्द्विताप्रयुक्तः कश्चित्प्रौढिविशेषोऽर्थः, यत्र हि [चारित्र्यादिनैर्मल्येन नृपस्तु स्वल्पमेवोपयुज्यते] विश्वविश्रुतविशदस्वच्छेन निजमहसा चन्द्र एवाधिकमुपयुज्यते । अत एव भवत्ययं परिणामध्वनिरिति पण्डितराजाशयः ।

२ अर्थात् अत्र विषयवाचकश्चन्द्ररूपार्थस्तु (यशोवर्णनप्रकरणात्) राजशब्देनोपस्थितः, नृपरूपार्थस्तु प्रसङ्गसूचितयाऽर्थपरिपाट्यैव व्यज्यते । अत एव हि सोयं परिणामो व्यज्यमान इत्यर्थः । मूलनिर्मूलनाय यत्किञ्चिच्चेष्टावती नागेशस्तु—शक्तिसंकोचकं प्रकरणाद्येव नास्तीति राजपदेन अर्थद्वयमपि शक्तिबोध्यमित्याह । मदुक्तदिशा प्रकरणे प्रतीते नागेशस्य सोयं फुंकारः कियत्फलेग्रहिरिति सुधियो विमृशन्तु ।

नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीयमेव विद्याधरेणोक्तं परिणामव्यङ्ग्यतायामुदाहरणम्। यदपि तैरेव परोक्तिं दूषयित्वा स्वयं परिणामस्य व्यङ्ग्यतायामुक्तम्—

"–'चिराद्विषहसे तापं चित्त चिन्तां परित्यज।
नन्वस्ति शीतलः शौरेः पादाब्जनखचन्द्रमाः॥'

अत्र चिरतापार्तं प्रति हरिपादनखचन्द्रसद्भावप्रदर्शनेन तमेव निषेवस्व तन्निषेवणादयं तव तापः शान्तिमेष्यतीति परिणामो व्यज्यते" इति, तत्तुच्छम्। 'आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणामः' इति स्वयमेवोक्तम्। तत्र प्रकृतकार्योपयोगमात्रं न परिणामशरीरम्। अपि तु विषयिगतायाः[1] प्रकृतकार्योपयोगिताया अवच्छेदकीभूतं विषयताद्रूप्यम्।

---

धारणधर्मे। **रमणीयमेवेति**। अत्रेदं चिन्त्यम्—राजशब्दस्यानेकार्थत्वात्, विजृम्भतेश्च प्रागल्भ्यतदुक्तार्थोभयपरत्वात्, प्रकरणादेश्च शक्तिसंकोचकस्याभावात्, तन्त्रेण शक्त्यैव तुल्यतयार्थद्वयोपस्थितौ 'सर्वदो माधवः पातु' इतिवत् श्लेष एवायम्, क्व परिणामः क्व वा नृपस्य व्यज्यमानतेति प्रकृतनरसिंहराजोत्कर्षस्य च चन्द्रकर्मकाक्रमणेनेवेतरनृपाक्रमणेनापि सूपपादत्वात्। न च द्वयोरपि राजपदार्थयोरितरक्रियान्वये राजानाविति द्विवचनं स्यादिति वाच्यम्। 'न ब्राह्मणं हन्यात्' इतिवदुपपत्तेः। समाहारद्वन्द्वविषयेऽप्येकशेषस्य कैश्चिद्वैयाकरणैरङ्गीकाराच्च। अस्तु वारोपः, तथापि नृपस्यैवारोप्यमाणत्वं चन्द्रस्यैव विषयत्वमित्यत्र नियामकाभावः। अत्रैव च दीक्षिततात्पर्यम्। अपि च प्रागल्भ्यस्यापि विजृम्भत्यर्थत्वेन प्रकृतकार्योपयोगिता नृपत्वेनापि नृपस्य संभवति। अत एव विद्याधरेणापि विषयिणः स्वरूपेण प्रकृतकार्यानुपयोगित्वे तदुपयोगाय विषयिणो विषयात्मना परिणत्यपेक्षायामेव परिणाम इत्युक्तम्। यदाह—'तं परिणामं द्विविधं कथयन्त्यारोप्यमाणविषयतया। परिणमति यत्र विषयी प्रस्तुतकार्योपयोगाय॥' इति। ननु तात्पर्यविषयीभूतप्रकृतकार्यानुपयोगित्वमस्त्येवेति चेत्, तस्यैव तात्पर्यविषयत्वे मानं विभावयेति। तैरेव अप्पयदीक्षितैरेव। परोक्तिं विद्यानाथोक्तिम्। तापार्तं चित्तमिति

---

१ विषयि(आरोप्यमाण)गता या प्रकृतकार्योपयोगिता तस्या अवच्छेदकीभूतम् (असाधारणधर्मीभूतम्) विषयताद्रूप्यम् (अभेदः)। अयं भावः—आरोप्यमाणो विषयात्मकः सन् यत्र प्रकृतकार्योपयोगी तत्र परिणामः, इति लक्षणे विषयिगतं विषयताद्रूप्यं तस्य प्रकृतोपयोगश्च परिणामशरीरम्। ततश्च परिणामस्य व्यङ्ग्यत्वार्थं विषयिणो विषयताद्रूप्यस्य तद्गतप्रकृतकार्योपयोगस्य चेत्युभयोर्व्यङ्ग्यत्वमपेक्षितम्। अत्र कार्योपयोगस्य व्यङ्ग्यत्वेपि संसारतापतप्तस्य भगवन्नखाभिन्नश्चन्द्र एव शैत्यजनक इति आरोप्यमाणचन्द्रस्य विषयताद्रूप्यमभिधया स्फुटमुक्तम् (वैयाकरणरीत्या) कविना। (नैयायिकरीत्या)–शक्यो यो नखाभिन्नश्चन्द्रस्तस्य संसर्गरूपं तदेतत्ताद्रूप्यमिति वाच्यतास्पर्शान्न व्यङ्ग्यत्वमुचितमिति सर्वस्याशयः।

एवं चात्र नखचन्द्रसद्भावप्रदर्शनेन तन्निषेवणादयं तव तापः शान्तिमेष्यतीति प्रकृतोपयोगिताया व्यङ्ग्यत्वेऽपि तदवच्छेदकीभूतस्य विषयिणि विषयताद्रूप्यरूपस्य परिणामस्य वाक्यवाच्यत्वात् शक्यसंसर्गत्वाद्वा सर्वथैव न व्यङ्ग्यत्वं वक्तुमुचितम् ।

इदं तूदाहरणं युक्तम्—

'इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना ।
ममायं विषमस्तापः केन वा शमयिष्यते ॥'

अत्र वक्तुर्विरहितया व्यज्यमानरमणीवदनाभिन्नत्वेनेन्दुरभिप्रेतः[1]। तेन रूपेणैव तस्य प्रकृतविरहसंतापशमनहेतुत्वात् । न चात्र विषयनिगरणात्मिकातिशयोक्तिर्वक्तुं शक्या, तस्यां ह्यारोप्यमाणाभिन्नत्वेन विषयस्य प्रत्ययात् । यथा 'कमलं कनकलतायाम्' इत्यादौ कनकलताऽभिन्नायां वनितायां कमलाभिन्नं मुखमिति । इह तु मुखस्य चन्द्राभिन्नत्वेन प्रत्यये न पुनर्विरहतापशमनरूपप्रकृतकार्यसिद्धिरिति चन्द्रस्यारोप्यमाणस्य मुखरूपविषयाभिन्नत्वं मृग्यम्[2] । तच्च व्यङ्ग्यतायामेव भवतीति परिणामध्वनिरेवायम्, नातिशयोक्तिः । अयं त्वर्थशक्तिमूलः ।

शब्दशक्तिमूलपरिणामध्वनिर्यथा—

'पान्थ मन्दमते किं वा संतापमनुविन्दसि ।
पयोधरं समाशास्व[3] येन शान्तिमवाप्नुयाः ॥'

शेषः । वैयाकरणमतेनाह—**वाक्येति** । नैयायिकमतेनाह—**शक्येति** । **परेति** । उत्कृष्टेत्यर्थः । **बन्धुना विनेति** । तादृशेन्दुरूपेण बन्धुनेत्यर्थः । **तेनेति** । तस्योद्दीप-

१ इन्दुपदस्य चन्द्रेऽभिधेयेऽपि विरहिप्रकरणवशात् विरहतापशमकरमणीवदने एव चन्द्रत्वमारोप्यते । आरोप्यमाणश्चन्द्रश्च विषय(वदन)ताद्रूप्येणैव प्रकृत(विरहशमन)कार्योपयोगी । इन्दोर्वदनताद्रूप्यं च व्यङ्ग्यमेवेति परिणामध्वनिरित्याशयः ।

२ कामनीयमित्याशयः ।

३ 'झगाशास्व' इति काशीपुस्तकपाठस्तु शोधकबुद्धिवैभवम् । ग्रन्थे 'झगिति' अर्थविशदीकरणमात्रम्, न पद्यपदलापनम् । पण्डितराजसूक्तिगङ्गायामिदं झगाशास्वेति नूनं झपमारणमेव ।

अत्र झगिति तापशमनहेतुत्वेनोपस्थिते पश्चान्मन्दबोधनीयविशेष्यक-स्मरतापवत्तावैशिष्ट्यबुद्धौ सत्यां सहृदयस्य तादृशतापशामकरमणीस्तन-रूपविषयतादूप्यबुद्धिर्भवति। दोषाश्चात्रापि पूर्ववदुन्नेयाः।

इति रसगङ्गाधरे परिणामप्रकरणम्।

अथ ससंदेहः—

**सादृश्यमूला भासमानविरोधका समबला नानाकोट्यवगाहिनी धी रमणीया ससंदेहालंकृतिः॥**

'अधिरोप्य हरस्य हन्त चापं परितापं प्रशमय्य बान्धवानाम्।
परिणेष्यति वा न वा युवायं निरपायं मिथिलाधिनाथपुत्रीम्॥'

अत्र मिथिलास्थजनोक्तौ तच्चिन्ताभिव्यञ्जके संशयमात्रेऽतिव्याप्तिवारणाय सादृश्यमूलेति। सादृश्यज्ञानरूपदोषजन्येत्यर्थः। तेन 'सिंहवत्प्रान्तरं गच्छ गृहं सेवस्व वा श्ववत्' इत्युपमाविकल्पे वाकारप्रतीतविरोधक-

---

कत्वेन स्वरूपेण तस्य तापजनकत्वादिति भावः। अयं तु इन्दुनेत्युदाहृतः। झगिति आदौ। आतपादिकृतसंतापशामकमेघत्वेन तस्योपस्थितेरिति भावः। **दोषाश्चेति।** लिङ्गभेदादय इत्यर्थः॥ इति रसगङ्गाधरमर्मप्रकाशे परिणामप्रकरणम्॥

संशयं लक्षयति—**अथेति। धी रमणीयेति।** तादृशधीवृत्तिसंशयत्वप्रकारकज्ञानविषया साऽलंकार इत्यर्थः। सादृश्यमूलेत्यस्य व्यावर्त्यमाह—**अधीति।** हन्तेति खेदे। बान्धवानां विश्वामित्रादीनाम्। निरपायं निष्प्रतिबन्धकम्। क्रियाविशेषणमेतत्। **तदिति।** तादृशजनेत्यर्थः। मात्रपदेनालंकारत्वव्यवच्छेदः। यद्यप्यधिरोप्येति पद्ये संशयस्य न सादृश्यमूलत्वमिति यथाश्रुतेनैव वारणं संभवति, तथाप्यन्यत्राप्यदोषायाह—**सादृश्येति।** तद्व्यावर्त्यमाह—**तेनेति।** तथार्थविवक्षणेनेत्यर्थः। प्रान्तरमरण्यम्। यथाश्रुतेऽतिप्रसङ्गमाह—**वाकारेति।** अपिः प्रागुक्तसमुच्चायकः। तेनेत्यस्यार्थमाह—

---

१ अयमाशयः—अत्र साधारणतः संतापशामकतया पयोधरपदस्य झटिति मेघरूपोऽर्थः झगिया चेतस्युदेति। परं 'मन्द!' इति संबोधनाऽऽकूतेन संतापपदात् स्मरतापानुसंधाने तादृशतापशामकरमणीस्तन एवार्थो व्यञ्जनया उपतिष्ठते। तथा च पयोधरे (रमणीस्तने) पयोधरस्य (मेघस्य) आरोपः। आरोप्यमाणः पयोधरश्च स्तनाऽभिन्न एव वक्तुरभिप्रेतः, तस्यैव स्मरसंतापनिर्वापकत्वात्। 'पयोधर'पदमपरिवृत्तिसहमिति शब्दशक्तिमूलोयं ध्वनिः।

२ 'सादृश्यमूला' इत्यस्य यथाश्रुतार्थत्वे—भासमानविरोधके समचमत्कारे नानाकोट्यवगाहिनि उपमाविकल्पेऽस्मिन्नतिप्रसङ्गः सादृश्यमूलत्वादुपमायाः। 'सादृश्यज्ञान(रूपदोष)जन्या' इत्यर्थे तु—उपमा सादृश्यज्ञानरूपा भवति, न सादृश्यज्ञानजन्येति निरासः।

प्रान्तरगमन—गृहसेवन-रूपनानाधर्मावगाहिनि सादृश्यविषयकेऽपि नातिप्रसङ्गः । तस्य सादृश्यज्ञानरूपत्वात् । मालारूपकातिप्रसङ्गवारणाय भासमानविरोधकेति । उत्प्रेक्षाव्यावृत्तये समबलेति समानभासकसामग्रीत्वार्थकम् । एतद्विशेषणद्वयप्राप्तस्यैवानेकत्वस्य स्फुटत्वार्थं नानेति । स्थाणुर्वा पुरुषो वेति लौकिकसंशयनिवृत्तये रमणीयेति, चमत्कारिणीत्यर्थः । एतच्च विशेषणं सामान्यालंकारलक्षणप्राप्तमेव । एवमुपस्कारकत्वमपि बोध्यम् । एतद्विशेषणद्वयस्य सादृश्यमूलत्वस्य चाभावे संशयमात्रमेव । यद्वा 'सादृश्यहेतुका निश्चयसंभावनान्यतरभिन्ना धी रमणीया संशयालंकृतिः' ।

सा च शुद्धा निश्चयगर्भा निश्चयान्ता चेति त्रिविधा ।

**तस्येति** । उपमाविकल्पस्येत्यर्थः । **मालारूपकेति** । 'धर्मस्यात्मा भागधेयं क्षमायाः सारः सृष्टेः' इत्यादावित्यर्थः । ननु कोट्योः समबलत्वविशेषणेन कथमुत्प्रेक्षाव्यावृत्तिः, तत्रापि तयोस्तुल्यबलत्वस्य सत्त्वादत आह—**समानेति** । तत्र तु विधेयांशे भासकसामग्री उत्कटेति भावः । नन्वेवं नानेतिमात्रं व्यर्थमत आह—**एतदिति** । **भासमानेति** । समबलेत्येतदित्यर्थः । **अनेकेति** । अनेकधर्मकस्य संशयस्येत्यर्थः । **एतदिति** । रमणीयत्वोपस्कारकत्वद्वयेत्यर्थः । ननु संशये विरोधो न भासते । मानाभावात् । किंत्वविरोधित्वज्ञानाभावविशिष्टनानाकोटिकज्ञानमेव संशय इति कथमुक्तलक्षणमत आह—**यद्वेति** । अन्यतरत्रोभयभेदसत्त्वात्तथोक्तौ तत्रातिप्रसङ्गापत्तेराह—**अन्यतरेति** । तथा च संभावनाभिन्नत्वे सति निश्चियभिन्नत्वमित्यर्थलाभान्न रूपकोत्प्रेक्षादावतिप्रसङ्ग इति भावः । तत्रालिर्नेत्रं वेति वाक्याद्विरोधभानवादिमतेऽलित्ववानयमलित्वविरुद्धनेत्रत्ववानिति विशिष्टवैशिष्ट्यन्यायेन, एकत्र द्वयमिति न्यायेन वा बोधः । अलिशब्दस्य च वाशब्दसमभिव्याहारे उभयत्रान्वयः । व्युत्पत्तिवैचित्र्यात् । केचित्तु वाशब्दद्वयबलादलित्वविरुद्धनेत्रत्ववानयं नेत्रत्वविरुद्धालित्ववानिति बोधमाहुः । तदभानवादे तु अलित्ववानयं नेत्रत्ववानिति बोधः । समुच्चये त्वेतन्मतेऽविरोधभानमङ्गीकार्यमिति दिक् ।

१ समानं भासते तादृशी । भासनविषयकसामग्री समाना भवेदित्याशयः । उत्प्रेक्षायां विधेयकोटिः प्रबला भवति । यथा धूमस्तोमं तमः शङ्के अत्र धूमतमसोः समाने भासनेऽपि धूमकोटेरुत्कटत्वम् ।

२ केवलो निश्चयः केवला संभावना वा निश्चयसंभावना (उभय)भिन्ना वक्तुं युक्तेति इत्याशयः ।

आद्या यथा—

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे ॥'

द्वितीया यथा—

'तरणितनया किं स्यादेषा न[1] तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः ।
इति रघुपतेः कायच्छायाविलोकनकौतुकै-
र्वनवसतिभिः कैः कैरादौ न संदिदिहे जनैः ॥'

तृतीया यथा—

'चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः ।
गुरुनिःश्वसितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥'

एषु संशयेषु मञ्जूषादिगतकटकादिष्विवालंकारव्यपदेशः । एवं च—

'तं दृष्टवान्प्रथममद्भुतधैर्यवीर्य-
गाम्भीर्यमक्षणविमुक्तसमीपजानिम् ।
वीक्ष्याथ दीनमबलाविरहव्यथार्तं
रामो न वायमिति संशयमाप लोकः ॥'

इत्यत्रापि सत्यपि चमत्कारे सादृश्यमूलत्वाभावान्न[2] संशयस्यालंकारत्वम् । एवमारोपमूलोऽयं संदेहालंकारः । अध्यवसानमूलोऽपि दृश्यते ।

---

**मरकतेति** । व्याख्यातं प्राक् । इति पूर्वार्धोक्तः । प्रपेदे प्राप्तः । **तरणीति** । कालिन्दीत्यर्थः । सा तज्ज्योत्स्ना । इयं तु मधुरेति भावः । वसतिर्वासः । अत्र निश्चयस्य [विना] मध्ये प्रतिपादनात्तद्गर्भत्वम् । अत एव तृतीयाद्भेदः । कपिर्हनूमान् । **वियोगिनीति** । श्रीरामचन्द्रवियुक्ता सीतेत्यर्थः । नन्वेषूदाहरणेषु संशयस्यैव प्राधान्येनान्यानुपस्कारकत्वात्कथमलंकारत्वमत आह—**एष्विति** । तथा च तद्वृत्तयोग्यतामात्रेण गौणस्तद्व्यवहार इति भावः । एवं च उक्तरीत्या संशयलक्षणपर्यवसाने च । तं श्रीरामम् । प्रथमं संयोगदशायाम् । अद्भुतेति बहुव्रीहिः । **अक्षणेति** । न क्षणं विमुक्ता समीपप्रदेशाज्जाया सीता येनेत्यर्थः । अथ रावणकृतसीतापहारोत्तरम् । अस्य संशयस्य विप्रलम्भपोषकत्वादाह—**सत्यपीति** । त्रिविधस्याप्यस्य द्वैविध्यमाह—**एवमिति** ।

---

१ इयं किं कालिन्दी ? इति संशये, न अर्थात् इयं यमुना न, हि (यतः) सा तोयमयी-त्यादिः सर्वत्रार्थः ।

२ रामव्यक्तेरेकत्वान्नात्र सादृश्यं मूलं संदेहे, इत्याशयः ।

यथा—

'सिन्दूरैः परिपूरितं किमथवा लाक्षारसैः क्षालितं
लिप्तं वा किमु कुङ्कुमद्रवभरैरेतन्महीमण्डलम् ।
संदेहं जनयन्नृणामिति परित्रातत्रिलोकस्त्विषां
व्रातः प्रातरुपातनोतु भवतां भव्यानि भासांनिधेः ॥'

अयं च संशयः सवितृविषयककविरतिपरिपोषकतया कामिनीकरगतकङ्कणादिरिव मुख्यतयालंकृतिव्यपदेश्यः । अत्र च विवक्षितविवेचने क्रियमाणे किरणव्राते सिन्दूरत्वादिकोटिकः[1] संशयः पर्यवस्यति । स च न सारोपः । विषयविषयिणोस्तदनुकूलविभक्तेरभावात् । अतः सिन्दूरत्वादिना संशयधर्मी किरणव्रातोऽध्यवसीयत इति । अत्र विचार्यते—सिन्दूरैः परिपूरितं किमथवेति पद्ये तावत्सिन्दूरादिकरणकपरिपूरितत्वादिकोटिको जगन्मण्डलधर्मिकः संशयः शब्दात्प्रतीयते । तस्मिंश्च संशये किमिदं सिन्दूररजो वा स्यात्, आहोस्विल्लाक्षारसः उताहो कुङ्कुमद्रव इति सूर्यकिरणधर्मिकं संशयान्तरमानुगुण्यमाधत्ते । यथा पुरोवर्तिनि तुरगे स्थाणुर्वा पुरुषो वेति संशयो भूतलमिदं स्थाणुमत्पुरुषवद्वेति संशये । एवं च सूर्यकिरणधर्मिकः संशयो गुणीभूतो व्यञ्जनागम्यत्वाद्विषयविषयिणोरारोपानुकूलविभक्तिकतां नापेक्षते । अपेक्षते च साक्षाच्छब्दवेद्यतायामिति कुत्राध्यवसानमूलता संशयस्य[2] ? एतेनाध्यवसानमूलतां संशयस्य निरूपयतो विमर्शिनीकारस्योक्तिरपास्ता ।

द्वयोरुपादानादिति भावः । भासांनिधेः सूर्यस्य । पूर्वतो भेदान्तरमाह—**अयं चेति** । नन्वत्र महीमण्डलस्योपादानात्सारोपत्वमेवात आह—**अत्र चेति** । **विवेति** । तात्पर्यार्थेत्यर्थः । नन्वेवमपि किरणव्रातस्योपादानात्सारोपत्वमेवात आह—**विषयेति** । **तदिति** । आरोपेत्यर्थः । तथा च तत्त्वेनानुपादानमिति भावः । उपसंहरति—**अत इति** । तावदादौ । इदं किरणजातम् । अनपेक्षत्वे हेतुमाह—**व्यञ्जनेति** । तर्हि कुत्र तदपेक्षा तत्राह—**अपेक्षते चेति** । एवं च रूपकमूल एवायमित्यध्यवसानमूलः संशयः

१ किरणव्रातो वा सिन्दूर-लाक्षादिकं वेत्याकारकः ।

२ सर्वसंदर्भस्यायं भावः—यत्रारोपमूलः संशयस्तत्र विषयविषयिणोरारोपानुकूला विभक्तिः (प्रथमादिः) दृश्यते । यथा-रघुपतिर्वा (विषयः) मरकतमणिमेदिनीधरो वा तमालो वा (विषयिणौ), रघुपतिकायच्छाया वा, तरणितनया वा मरकतज्योत्स्ना वा, वियोगिनी वा

अप्पयदीक्षितास्तु—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥'

इत्यत्र चन्द्रादीनां संदेहधर्मिणामेवानेकत्वम्। प्रकारस्तु वर्णनीयवनितास्रष्टृत्वमेकमेवेत्यनेककोटिकत्वाभावाद्विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोट्यवगाहित्वरूपस्य संशयलक्षणस्याव्याप्तिमाहुः। तन्न। अत्र हि अस्याः सर्गविधौ यः प्रजापतिरभूत्स किं नु चन्द्रः, किं नु मदनः, किं वा नु वसन्त इति संशयः प्रजापतिधर्मिकश्चन्द्रत्वादिनानाकोटिक एवेति

---

खपुष्पायमाण इति भावः। तदाह—कुत्रेति। अस्या इति। मालतीमाधवे मालतीवर्णनमिदम्। मासो वसन्तः वनितास्रष्टृत्वं प्रजापतिशब्दबोध्यम्। अभावादित्यव्याप्तौ हेतुः। संशयलक्षणमाह—विरोधेनेति। हि यतः। अस्या मालत्याः। तदुपपादनं

---

चपला वा लता वा, इत्यादिः। अत्र तु संशयधर्मी किरणव्रातः प्रथमान्तः, सिन्दूर-लाक्षारसादिकास्तु प्रकारास्तृतीयान्ताः। एवं च नायमारोपमूलः संशयः। अपि तु किरणव्रातः (संशयधर्मी) एव सिन्दूर-लाक्षारसत्वादिना अध्यवसीयते (भासते)। अत एवाध्यवसानमूलः। इति साधारणदृष्टिः।

विवेचने तु-सिन्दूरैरित्यादिः संशयो नाध्यवसानमूलः सिध्यति। यत्तावदुच्यते आरोपे अनुकूला विभक्तिरपेक्ष्यते इति। नेदं विचारसहम्। अत्र हि महीमण्डलधर्मिकः संशयः [एतत् महीमण्डलं सिन्दूरेण परिपूरितं वा लाक्षारसक्षालितं वा कुङ्कुमलिप्तं वा] शब्दवेद्यः। एतत्संशयान्तर्गतोऽन्यः संशयः—किरणव्रातो वा सिन्दूररजो वा इत्यादिकः (प्रधानं प्रति गुणीभूतः) व्यञ्जनया गम्यते। अत एव अशब्दबोध्ये(व्यञ्जनागम्ये)ऽस्मिन् न विभक्तेरपेक्षा। तथा च सिन्दूरैरित्यादिपद्ये आरोपोऽपि वक्तुं शक्यत एवेति।

१ भासमानविरोधकः समबलो नानाकोट्यवगाही संदेहस्तन्नामालंकार इति लक्षणमत्र न घटत इत्यर्थः।

२ विवादवेतालाविष्टतया साहित्यसौधे बलादुद्भवमानस्य महाभागस्य पुनः परिचीयतां काव्यमार्मिकत्वं येन हि कालिदासस्यापि कविता न कदाचित्परिचिता। इदं हि विक्रमोर्वशीयं (प्रथमाङ्के) पद्यं काव्यप्रकाशे साहित्यदर्पणे अन्येष्वपि च साहित्यनिबन्धेषूदाहृतमपि।

कुत्राऽव्याप्तिः¹। न चात्र चन्द्रादिधर्मिकः संशयो युक्तो वक्तुम्। एवं च प्रजापतेः प्रथमोद्देशो न स्यात्। यदपि, 'साम्यादप्रकृतार्थस्य या धीरनवधारणा' इति प्राचां लक्षणं महता प्रबन्धेन त एव दूषितवन्तः, तदपि न। साम्यनिमित्ता निश्चयसंभावनान्यतरभिन्ना या धीरिति तदर्थकरणे दोषाभावात्। निश्चयत्वं तु संशयाघटितमेव निर्वचनीयम्। उक्तेषूदाहरणेषु सोऽयं संशयालंकारः स्वशब्दवेद्यत्वाद्वाच्यः।

लक्ष्यो यथा—

'साम्राज्यलक्ष्मीरियमृष्यकेतोः² सौन्दर्यसृष्टेरधिदेवता वा।
रामस्य रामामवलोक्य लोकैरिति स्म दोला रुरुहे तदानीम्॥'

अत्र पर्यायेणोभयकोट्यालम्बनतया³ दोलासादृश्यात्संशयोऽत्र दोलाशब्देन लक्ष्यते।

व्यङ्ग्योऽयं यथा—

'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला॥'

अत्र कमलधर्मिकोऽभेदेन संसर्गेण पुरोवर्तिव्यक्तिद्वयप्रकारकः कमल-

---

खण्डयति—**न चात्रेति**। **एवं चेति**। चो ह्यर्थे। यत एवं सतीत्यर्थः। विधेयस्य पाश्चात्यत्वमिति नियमादिति भावः। त एव अप्पयदीक्षिता एव। अनवधारणेत्यस्य तात्पर्यार्थमाह—**निश्चयेति**। नन्वेवमन्योन्याश्रयापत्तिरत आह—**निश्चयत्वं त्विति**। ऋष्यकेतोश्चन्द्रस्य। ऋष्यः कुरङ्गः। रुरुहे आरूढा। आलम्बनतया एतद्रूपधर्मेण। **तीर इति**। व्याख्यातं प्राक्। **मिलदिति**। सविकासमित्यर्थः। **इदं पदार्थेति**। इदंत्वेने-

---

१ प्रघट्टकस्यायं सारः—'चन्द्रो मदनो वसन्तो वा अस्याः प्रजापतिः' इति संशयस्य धर्मिणः (आधाराः) एवानेके [चन्द्रो वा प्रजापतिः मदनो वा प्रजापतिरितिरूपेण] प्रजापतिरूपा कोटिः (यस्य संदेहो भवति) तु एकैवेति दीक्षितदृष्टिः। पद्ये प्रजापतेः, (उद्देश्यस्य) पूर्वं प्रयोगात् 'अस्याः सर्गे यः प्रजापतिः स चन्द्रो वा मदनो वा वसन्तो वा) इति संशयाकारात् धर्मी प्रजापतिरेकः, चन्द्रमदनादयः कोटय(प्रकाराः) स्त्वनेका एवेति स्पष्ट एवायं संशय इति पण्डितराजः। २ कामस्य, साम्राज्यसर्वस्वमित्यर्थः। चन्द्रस्येति टीकयतो नागेशदेवस्य तु कोष-साहित्यज्ञानं लोकातीतमेव। 'ब्रह्मसूर्ऋष्यकेतुः स्यात्' इति पाठोऽमरेपि प्रसिद्धः। प्रचलितपुस्तकेष्वयमेव पाठः प्रायो दृश्यते। हरिणवाहनं चन्द्रं प्रचारयद्भिः पञ्चाङ्गचित्रैरेव व्यामोहितोऽयं महाभागो यत् वृषकेतुरिव ऋष्यकेतुश्चन्द्रश्चित्रितः। अस्तु. सामान्यतोपि सहृदयसंप्रदाये स्मर एव सम्राट् समीर्यते। सुरभि-सुधाकरयोस्तु सचिवता समुदीरिता, समुचिता चापि। ३ एकदा साम्राज्यलक्ष्मीरित्यूह्यते, पुनस्तं पक्षं परित्यज्य सौन्दर्याधिदेवतेति वितर्क्यते इत्याशयः।

मिदमिदं वेति भ्रमरगतः संशयो [1]व्यङ्ग्यः। न च कमलाभेदबुद्धेर्भ्रमरप्रवृत्त्युपायतयापेक्षणादिदंपदार्थाभेदबुद्धिर्निरर्थिकेति वाच्यम्। एकपदार्थधर्मिकापरपदार्थाभेदबुद्धेरपरपदार्थधर्मिकैकपदार्थाभेदबोधप्रयोजकत्वेन कमलाभेदबोधसाम्राज्यात्[2]। कमलत्वमेतद्वृत्ति तद्वृत्ति वेति संशयाकारः। सोऽयं संशयध्वनिः।

'आज्ञा सुमेषोरविलङ्घनीया किं वा तदीया नवचापयष्टिः।
वनस्थिता किं वनदेवता वा शकुन्तला वा मुनिकन्यकेयम्॥'

यद्यप्यत्रापि वाचकश[3]ब्दाभावाद्व्यङ्ग्य एव भवितुमर्हति संशयः, तथापि विषयनिरूपणेन स्फुटमावेदितत्वान्न ध्वनिव्यपदेशस्य हेतुः। अपि तु गुणीभूतव्यङ्ग्यप्रभेदव्यपदेशस्य। अनुगामी चात्र प्रतिप्रकारं पृथगे[4]व

दंपदार्थेत्यर्थः। तथा चेदमिदं वा कमलमित्योचित्येनानेककोटिकत्वाभावान्नायं संशय इति भावः। ननु प्रवृत्त्यन्यथानुपपत्त्या तथा कल्प्यम्, सा चान्यथासिद्धेत्याह—**एकेति**। कमलेत्यर्थः। **अपरेति**। इदंपदार्थः। पर्यवसितमाह—**कमलत्वमिति**। ध्वनेरुदाहरणान्तरं खण्डयति—**आज्ञेति**। सुमेषुर्मदनः। सुमं पुष्पम्। तदीया मदनीया। इयं सीता। **विषयेति**। आज्ञादीत्यर्थः। **व्यङ्ग्येति**। व्यङ्ग्यरूपो यः प्रभेदस्तद्व्यपदेशस्येत्यर्थः। प्रतिप्रकारं प्रतिसंदेहम्। तत्र ह्याज्ञासंदेहेऽविलङ्घनीयत्वं वनदेवतासंदेहे वन-

१ पुरोवर्ति व्यक्तिद्वयम् ( वदन-सरोजरूपम् ) दृष्ट्वा 'अभेदसंसर्गेण इदं कमलम्? अथवा इदम्?' इत्याकारात् कमलरूपे एकस्मिन् धर्मिणि 'इदं वा इदं वा' इति व्यक्ति(कोटि)द्वयस्य प्रकारत्वात्संशयः। इदमिदं वेत्यस्याऽशब्दवेद्यत्वाच्च व्यङ्ग्यत्वमित्यर्थः।

२ शङ्कासमाधानयोरिदं विशदीकरणम्—ननु इदंपदार्थे कमलाभेद एव साधनीयो न तु कमले इदंपदार्थाऽभेदः। यतो हि कमलाऽभिन्नं दृष्ट्वैव भ्रमरः प्रवर्तते। अतः कमलाभेद एव भ्रमरस्य प्रवृत्तौ कारणम्, इदंपदार्थाभेदस्तु भ्रमरार्थे निरर्थक इति शङ्का।

अभेदो हि द्विसंबद्धः। अत एव कमले यदा इदंपदार्थाभेदः साध्यते तदा भ्रमरप्रवृत्तिप्रयोजकः इदंपदार्थे कमलाभेदोपि स्वतः फलतीति तत्समाधानम्। इदानीं 'कमलत्वम् एतद्वृत्ति तद्वृत्ति वा' इति संशयाकारः।

३ वाचकशब्दाभावोऽत्र विमर्शनीयो मार्मिकाणाम्। 'इयं शकुन्तलास्ति, किं वा आज्ञा, किं वा चापयष्टिः?' इत्युक्तौ संदेहस्य स्फुटं वाच्यत्वात्। उदाहरणपद्यवत् 'संशयः प्रपेदे' 'संदिदिहे' 'संशये निमग्नः' इत्याद्युक्तावेव वाच्यत्वमिति यदि पण्डितराजाशयः, तर्ह्यपि विचारावसरः। 'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी' इत्यादौ सर्वैरेव ससंदेहत्वमङ्गीकृतम्। संशय-संदेहादिव्यपदेशाभावेऽपि 'अस्याः सर्गविधौ' इति पद्ये प्रकाशेन प्रोक्तः संदेहः, यो हि पण्डितराजेनापि सोत्साहं समर्थितः।

४ आज्ञा-वनदेवतयोरनुगामी धर्मो दर्शितो नागेशेन। चापयष्टेस्तु 'नवा' इति धर्मो बोध्यः।

निर्दिष्टः। यत्तु चित्रमीमांसायां संशयध्वन्युदाहरणप्रसङ्गे अप्पयदीक्षिताः—

"-'कांचित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।
वरदः संशयापन्नो वक्षःस्थलमवैक्षत ॥'

अत्र संशयस्य शब्दोपात्तत्वेऽपि तावन्मात्रस्यानलंकारत्वात्तदलंकार[1]-ताप्रयोजकस्य वक्षःस्थले स्थितैव लक्ष्मीस्ततोऽवतीर्य पुरस्तिष्ठतीत्येवं संशयाकारस्य वक्षःस्थलमवैक्षतेत्यनेन व्यङ्ग्यत्वात्संदेहालंकारध्वनिरत्रेति ।

यथा—

'दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनु बिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥'

इत्यत्र कानि कान्यपीति सामान्यतो निर्दिष्टानुभावविशेषप्रतीत्यर्थं[2] लज्जाशब्दप्रयोगेऽपि तस्याः स्वविभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः" इत्याहुः, तदेतद्ध्वनितत्त्वविज्ञैरुपहसनीयमेव ।

तथाहि संशयाविष्ट इत्यत्र संशयपदेनैकस्मिन्पदार्थे विरुद्धनानापदार्थसंबन्धावगाहि ज्ञानं साक्षादेव निवेद्यते । तत्र कोऽसौ विरुद्धो नानार्थ इति विशेषाकाङ्क्षायां वक्षःस्थलावेक्षणेन वक्षःस्थलस्थैव लक्ष्मीस्ततोऽवतीर्य किं पुरस्तिष्ठतीत्यादिरर्थो व्यञ्जनाव्यापारेण बोध्यमानः शक्त्या संशयशब्दनिवेदितज्ञानविशेषणीभूतेन सामान्यार्थेन साकमभेदेन पर्यवस्यति । एवं च संशयमात्रस्य शक्त्या बोधनाद्वक्षःस्थलस्थितैवेत्यादिविषयभागस्यापि

स्थितत्वं च पृथगुपात्तमिति भावः । **कांचिदिति** । इदं पद्यमप्पयदीक्षितमूलपुरुषवक्षःस्थलाचार्यकृतवरदराजवसन्तोत्सवस्थम् । वरदः काञ्चीदेवता विष्णुः । **तदिति** । संशयेत्यर्थः । तत्र सामान्यज्ञाने । **अवेक्षणेनेति** । व्यङ्ग्यार्थवृत्तिरपीति भावः । संशयमात्रस्य सर्वस्य संशयस्य । **अर्थत्वेन सामेति** । एतद्रूपसामान्याकारेणेत्यर्थः ।

१ तदलंकार( ससंदेहालंकार)ताप्रयोजकस्य संशयाकारस्य व्यङ्ग्यत्वादित्यन्वयः ।

२ कानि कान्यपीति चेष्टितानां सामान्यतो निर्देशेऽपि नायं विशेषः प्रतीयते यदिमानि लज्जाया अनुभावा इति तत्प्रतीत्यर्थं लज्जाशब्दप्रयोगः ।

विरुद्धनानार्थत्वेन सामान्याकारेणावलीढतया तयैव कवलीकरणाद्वाच्यार्थसंशयपर्यवसायकत्वाच्च न कस्यापि ध्वनिव्र्यपदेशहेतुत्वं युक्तम् । सर्वथा वाच्यवृत्त्यचुम्बितस्यैव तथात्वमिति ध्वनिमार्गप्रवर्तकैः सिद्धान्तितत्वात् ।

तथा च द्वितीयोद्द्योते—

"शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥"

इति सूत्रयित्वा

"संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥"

अत्र संकेतकालमनसं ज्ञात्वा लीलापद्मं निमीलितमिति वदता कविना लीलापद्मनिमीलनस्य प्रदोषाभिव्यञ्जकत्वं स्वोक्त्यैव निवेदितमिति ध्वनिमार्गादयमपर एव गुणीभूतव्यङ्ग्यस्य मार्गः ।

---

**अवलीढेति** । बोध्यतयेत्यर्थः । तयैव शक्त्यैव । **कवलीति** । बोधनादित्यर्थः । नन्वेवमपि विशेषरूपेण व्यङ्ग्यत्वमेवात आह—**वाच्यार्थेति** । विशेषसंशयस्येत्यादिः । तदाह—**कस्यापीति** । विशेषस्यापीत्यर्थः । सर्वथा केनापि प्रकारेण । तथात्वं ध्वनित्वम् । **संकेतेति** । को वाऽऽवयो रतिकालस्तत्संकेतं ब्रूहि इत्यत्र दत्तचित्तमित्यर्थः । हसदिति क्रियाविशेषणम् । **इति वदतेति** । क्लान्तवाक्यविशिष्टं वदतेत्यर्थः । अन्यथा क्लान्तवाक्येनैवार्थात्तदभिव्यञ्जकत्वे सिद्धे क्लान्तवाक्यानर्थक्यं स्पष्टमेव । तदाह—**स्वोक्त्येति** ।

---

१ तत्र कोसौ विरुद्ध इत्यादिग्रन्थस्यैदं विशदीकरणम्—कोसौ विरुद्धोर्थ इति विशेषाकाङ्क्षानिवृत्तये व्यञ्जनाबोध्योऽप्यर्थः शक्तिद्वारा संशयशब्दनिवेदिते ज्ञाने विशेषणीभूतात् सामान्यार्थात् अभिन्नः पर्यवसाने सिद्ध्यति । अयं भावः—व्यङ्ग्योऽप्यर्थो विशेषाकाङ्क्षापूर्तये अभिधाबोध्यसामान्यार्थरूपो भवति । एवं च संपूर्णेपि संशयशरीरे अभिधाबोध्ये जाते 'वक्षःस्थलस्था लक्ष्मीः किं पुरस्तिष्ठति' इति विशेषरूपेण व्यञ्जनाबोध्योऽप्यर्थः सामान्यज्ञानस्य (सामान्यसंशयात्मकस्य) विरुद्धनानाकोटिपूर्तये विरुद्धनानार्थरूपो भवतीति सोऽपि (व्यङ्ग्योपि) अभिधाबोध्यस्य सामान्यस्य (संशयस्य) अङ्गत्वेन सामान्येनावलीढः (सामान्याक्रान्तः, बोध्यः) भवति । अत एव अभिधया सोपि कवलीक्रियते (बोध्यत इत्याशयः) इति न तत्र व्यङ्ग्यताविश्रमः । ननु विशेषरूपेण वक्षःस्था लक्ष्मीः इत्याद्याकारेण तु अयमर्थो व्यङ्ग्य इत्यपि न शक्यते वक्तुम् । अयं व्यङ्ग्योपि सामान्यार्थपूर्तये उपयुज्यते इति सोयं व्यङ्ग्योपि संशयमाविष्ट इत्यस्य वाच्यार्थे संशये पर्यवसितो भवतीति न कस्यापि (सामान्यसंशयस्य विशेषस्य वा) ध्वनिसंज्ञाहेतुत्वम् ।

यथा वा—

'अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र ।
अस्मिन्पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥'

अत्र निःशङ्कं रन्तुमायाहीत्यर्थश्चरणत्रयव्यङ्ग्योऽप्यवसरव्याहृतेर्व्याजत्वं ब्रुवता कविना स्फुटं स्वोक्त्या निवेदित इत्ययमपि न ध्वनेर्मार्गः" इत्याहुरानन्दवर्धनाचार्याः ।

तृतीयोद्द्योते च गुणीभूतव्यङ्ग्यनिरूपणे 'व्यङ्ग्यस्यार्थस्य यदि मनागप्युक्त्या प्रकाशनं तदा गुणीभाव एव शोभते । तस्माद्यत्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रतीयते तत्र तस्य प्राधान्याद्ध्वनित्वम्' इति तद्युक्तिविवेचनेऽभिनवगुप्तपादाचार्याः ।

एवं चैवंविधेषु विषयेषु व्यञ्जकत्वस्य व्यङ्ग्यस्य वा मनागुक्तिसंस्पर्शमात्रेण ध्वनित्वं निराकुर्वाणाः 'कांचित्काञ्चनगौराङ्गीं—' इति पद्ये शब्दाभिहितव्यङ्ग्ये ध्वनित्वं कथमिव स्वीकुर्वीरन् । एतेन 'दर्पणे च परिभोगदर्शिनी' इति प्रागुक्तपद्ये लज्जाध्वनित्वं यद्दीक्षितैरभ्यधीयत तदप्यपास्तमिति दिक् ।

अस्मिंश्च संशये नानाकोटिषु क्वचिदेक एव समानो धर्मः । क्वचित्पृथक् । सोऽपि क्वचिदनुगामी, क्वचिद्बिम्बप्रतिबिम्बभावमापन्नः, क्वचिदनिर्दिष्टः, क्वचिन्निर्दिष्टः । तत्र 'मरकतमणिमेदिनीधरो वा' इति प्रागुदाहृतपद्ये श्यामाभिरामत्वं धर्मिणो रामस्य कोट्योश्च तमालमरकतभूधरयोरेक एवानुगामी धर्मः प्रतीयमानत्वादनिर्दिष्टः ।

क्लान्तत्वाख्येनेत्यर्थः । अत्र गृहप्रदेशविशेषे । एवमग्रेऽपि । कुम्भेति पान्थसंबोधनमिति कश्चित् । तद्वासिका दासीत्यन्यः । जलाद्याहरणार्थं दासी, न क्रीडादासीति तु तत्त्वम् । वियोगात्पापात्वम् । कतिपयेत्यनेन द्रुतमागमनाभावः सूचितः । अवसरे समये उक्तेर्व्याजपूर्वमित्यर्थः । पूर्वोदाहरणाशयेनाह—**व्यञ्जकेति** । द्वितीयाशयेनाह—**व्यङ्ग्येति** । तत्र तेषां धर्माणां मध्ये । **श्यामेति** । तद्विशिष्टाभिरामत्वमित्यर्थः । स एव अनुगाम्येव ।

१ 'संशयम् आविष्टः' अत्र शब्दनिवेदितस्य विरुद्धनानाकोटिकज्ञानरूपस्य संशयस्य जिज्ञासापूर्वंर्थं व्यङ्ग्योऽर्थः (किं वक्षःस्थितैव लक्ष्मीः पुरस्तिष्ठतीति) सहायको भवति, ततश्चं सोक्त्या सोयमपि व्यङ्ग्योर्थ आविष्कृतो भवतीति नास्य ध्वनित्वमित्यर्थः ।

स एव निर्दिष्टो यथा—

'नेत्राभिरामं रामाया वदनं वीक्ष्य तत्क्षणम्।
सरोजं चन्द्रबिम्बं वेत्यखिलाः समशेरत ॥'

अत्र नेत्राभिरामत्वरूपस्त्रिष्वेक एवानुगामी धर्मो निर्दिष्टः। पृथगनुगामी निर्दिष्टो यथा प्रागुदाहृते 'आज्ञा सुमेषोः' इत्यादौ।

यथा वा—

'संपश्यतां तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम्।
सौदामिनी वा सितयामिनी वेत्येवं जनानां हृदि संशयोऽभूत् ॥'

अत्रातिमात्रतनुत्वं सौदामिन्या, शोभाभिराभासितसर्वलोकात्वं च सितयामिन्या सह कान्तायाः पृथगनुगामी समानो धर्मः। अत्रैव पूर्वार्धगतविशेषणद्वयत्यागे स एवानिर्दिष्टः। बिम्बप्रतिबिम्बभावमापन्नो यथा 'तीरे तरुण्या वदनं सहासं—' इत्यादौ प्रागुक्ते।

यथा वा—

'सपल्लवा किं नु विभाति वल्लरी सफुल्लपद्मा किमियं नु पद्मिनी।
समुल्लसत्पाणिपदां स्मिताननामितीक्षमाणैः समलम्भि संशयः ॥'

अत्र पल्लवफुल्लपद्मे पाण्याननयोः प्रतिबिम्बकोट्योः पृथङ् निर्दिष्टे[1]।

'इदमुदधेरुदरं वा नयनं वात्रेरुतेश्वरस्य मनः।
दशरथगृहे तदानीमेवं संशेरते स्म कवयोऽपि ॥'

अत्र तदानीमिति प्रकरणसाहाय्यवशाद्दशरथगृहेण धर्मिणाक्षिप्तस्य

---

**नेत्रेति**। तयोरभिराममित्यर्थः। **समेति**। संशयं कृतवन्तः। एवमग्रेऽपि। **पृथगिति**। उपपादितमिदं प्राक्। **सौदामिन्येति**। सह कान्तेत्यत्रान्वेति। वल्लरी लता। **पाणिपदां स्मितेति**। पादप्रतिबिम्बानिर्देशान्न्यूनतात्र। अत एव पाण्याननयोरित्यग्रिमोक्तिः संगच्छते। वस्तुतस्तु फुल्लपद्मं पाणिवत्पादयोरपि प्रतिबिम्ब इति न दोषः। व्याख्यानं तूपलक्षणत्वेन योज्यमिति बोध्यम्। कोट्योः वल्लरीपद्मिन्योः। बिम्बप्रतिबिम्बभावापन्नस्य निर्दिष्टस्योदाहरणं दत्त्वाऽनिर्दिष्टस्य तदाह—**इदमिति**। चन्द्रस्य त्रिधोत्पत्तिः, समुद्रादत्रिनेत्रात्परमेश्वरमनसश्चेति भावः। तदानीं रामोत्पत्तिसमये। **तदानीमिति**।

१ बिम्बभूतस्य पाणेराननस्य च प्रतिबिम्बकोट्योर्मध्ये पल्लवफुल्लपद्मे पृथङ् निर्दिष्टे इत्यर्थः। पाण्याननयोर्बिम्बयोः पल्लवफुल्लपद्मे इति प्रतिबिम्बौ पृथगुपात्तावित्याशयः।

तत्कालजातस्य भगवतो रामस्य जलध्युदरादिसंशयकोटित्रयाक्षिप्तः साधारण[1]श्चन्द्रः प्रतिबिम्बः । इमौ च बिम्बप्रतिबिम्बावनिर्दिष्टावपि प्रतीयमानौ सादृश्यं प्रयोजयतः । एतेन 'अनुगाम्येव धर्मो लुप्तः संभवति, न तु बिम्बितः' इति वदन्तः परास्ताः । इति दिक् ।

अयं च क्वचिदनाहार्यः, क्वचिदाहार्यः । यत्र हि कविना परनिष्ठः संशयो निबध्यते प्रायशस्तत्रानाहार्यः । यथा 'तीरे तरुण्याः', 'मरकतमणिमेदिनीधरो वा' इत्यादिषु प्रागुदाहृतेषु पद्येषु । तत्र भ्रमरादीनां सं[2]शयानानां ग्राह्यनिश्चयाभावात् । यत्र च स्वगत एव तत्राऽऽहार्यः ।

यथा—

'अलिर्मृगो वा नेत्रं वा य[3]त्र किंचिद्विभासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥'

अत्र वक्तुः कवेस्तत्त्वज्ञतया संशयावाहार्यावेव ।

परम्प[4]रितोऽपि चायं संभवति—

**प्रेति** । प्रतिपाद्यप्रकरणेत्यर्थः । इमौ राम-चन्द्रौ । अयं च संशयः । **परनिष्ठ इति** । स्वभिन्ननिष्ठ इत्यर्थः । क्वचिद्व्यभिचारादाह—**प्रायश इति** । अनाहार्यत्वमुपपादयति—**तत्रेति** । 'संशयानानां' इति पाठः । भ्रमरादिविशेषणमेतत् । एतेन परनिष्ठत्वव्यवच्छेदः । यत्र मुखरूपवस्तुनि । इदमेवाग्रे इदंपदार्थः । प्रत्यासत्तिन्यायेनाह—**कवेरिति** । **परम्परितोऽपीति** । अत्रारोपस्यारोपगात्रोपायत्वेन परम्परितत्वम्, न तु संश-

१ बिम्बभूतस्य रामस्य, चन्द्रः कोटित्रयसाधारणः ( कोटित्रयेऽपि भमानः ) प्रतिबिम्ब इत्यर्थः ।

२ संशयकर्तॄणाम् ( येषां संशयो जातस्तेषाम् ) भ्रमरादीनां ग्राह्यविषयः क आसीदिति तत्त्वनिश्चयाऽभावात् अयं संशय अनाहार्यः ( अनारोपितः, वास्तवः ) इत्याशयः ।

३ यत्र ( यस्मिन् मुखे ) इदं नेत्रं वा अलिर्मृगो वा इत्येकः संशयः । तदिदम् ( यत्र अलिर्मृगो वेति संशयो जातः ) मुखमस्ति, अथवा अरविन्दं चन्द्रो वा, इति द्वितीयः संशयः । मुखे अरविन्दसंशये नेत्रे अलिसंशयः, चन्द्रसंशये च तन्मध्यसंस्थस्य मृगस्य संशय इत्याशयः ।

४ विदुषां दारिद्र्यमेव तमः ( रूपकम् ), तस्य कृते अयं सूर्यः [ अथवा वैरीन्द्रवंशस्य कृते दवाग्निः, अथवा दुग्धाम्बुधिः इत्यादिप्रकारकः संशयः ] । अत्र हि दारिद्र्यादिषु तमस्त्वादेरारोपो राजनि सूर्यत्वाद्यारोपस्य निमित्तगत एव परम्परितत्वम् । न तु पूर्वोप्यारोपः संशय इत्यादि टीकायां द्रष्टव्यम् ।

'विद्वद्दैन्यतमस्त्रिमूर्तिरथवा वैरीन्द्रवंशाटवी-
दावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः ।
किं वानङ्गभुजंगदष्टवनिताजीवातुरेवं नृणां
केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः ॥'

अत्राप्याहार्यः ।

क्वचित्परनिष्ठोऽपि कविना निबध्यमान आहार्यो भवति ।

यथा—

'गगनाद्गलितो गभस्तिमानुत वाऽयं शिशिरो विभावसुः ।
मुनिरेवमरुन्धतीपतिः सकलज्ञः समशेत राघवे ॥'

अत्र मुनेर्वसिष्ठस्य सर्वज्ञत्वेनोपात्तस्य संशय आहार्य एव । यद्यप्यत्र 'मुनीनां च मतिभ्रमः' इत्युक्त्या तस्यानाहार्य एव संशयो वक्तुं शक्यः, तथापि कोटितावच्छेदकयोः शिशिरत्वगगनगलितत्वयोरग्निसूर्यरूपकोटिद्वये आहार्यबोधस्यैवावश्यवाच्यतया पुरोवर्तिन्यभेदेन कोटिद्वयाभेदांशेऽपि तस्यैव न्याय्यत्वात् । इह च कोट्योर्धर्मिसादृश्यदार्ढ्यायो-

यस्य संशयोपायत्वेन । दैन्यादीनां तमस्त्वादिसंदेहाविषयत्वादिति बोध्यम् । त्रिमूर्तिः ऋग्यजुःसामात्मकः सविता । **वैरीन्द्रेति ।** वैरिश्रेष्ठा एव वंशारण्यमित्यर्थः । जीवातुर्जीवनौषधम् । अल्पेतरा बहवः । कल्पनाः संशयाः । स्वगत एवेत्यवधारणमयुक्तमित्याह— **क्वचित्परनिष्ठोऽपीति** । यद्यपि विद्वद्दैन्येत्युदाहृतोऽपि परनिष्ठो भवति तथापि केषामिति सामान्येन निर्देशात्स्वनिष्ठोऽपि भवतीत्यत उदाहरणान्तरमाह—**गगनादिति ।** विभावसुरग्निः । मुनिर्वसिष्ठः । समशेत संशयं कृतवान् । अत्र गगनादितिपद्ये । चोऽन्यसमुच्चायकः । तस्य वसिष्ठस्य । पुरोवर्तिनि श्रीरामे । वर्तिन्यभेदेनेति चिन्त्यम् । तस्यैव

१ अर्थात् अयं गभस्तिमान् वा विभावसुर्वा इति सूर्य–अग्निरूपकोटिद्वये कोटितावच्छेदकस्य (कोटेर्विशेषणस्य) गगनगलितत्वस्य शिशिरत्वस्य च आहार्य एव बोधोऽवश्यं वाच्यः [यतो हि न स वास्तवः] । ततश्च अस्मिन्नंशे आहार्यो बोधो यदि स्वीकृतस्तर्हि पुरोवर्तिनि (रामे) अभेदसंसर्गेण सूर्यो वा अग्निर्वा इति कोटिद्वयप्रकारकः संशयबोधोऽपि आहार्य एव न्याय्य इत्याशयः ।

ष्णत्वगगनगतत्वरूपवैधर्म्यनिरासकमविद्यमानमपि गगनगलितत्त्वं शिशिरत्वं चारोप्यते वक्त्रा । एवमादयोऽन्येऽपि प्रकाराः सुधीभिः स्वयमुन्नेयाः ।

इति रसगङ्गाधरे ससंदेहप्रकरणम् ।

अथ भ्रान्तिमान्

**सदृशे धर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः । सा च पशुपक्ष्यादिगता यस्मिन्वाक्संदर्भेऽनूद्यते स भ्रान्तिमान् ॥**

अत्र च भ्रान्तिमात्रमलंकारः । भ्रान्तिमानलंकार इति व्यवहारस्त्वौपचारिकः । तथा चाहुः—

'प्रमात्रन्तरधीभ्रान्तिरूपा यस्मिन्ननूद्यते ।
स भ्रान्तिमानिति ख्यातोऽलंकारे त्वौपचारिकः ॥' इति ।

लक्षणे मीलित-सामान्य-तद्गुण-वारणाय धर्मिग्रहणद्वयम् । रूपकवित्तिवारणायानाहार्य इति कविभिन्नगत इति वा । संशयवारणाय निश्चय इति । इदं रजतमिति रङ्गविशेष्यकबोधवारणाय चमत्कारीति । कविप्रतिभानिर्वर्तित इत्यर्थः । रङ्गे रजतमिति बुद्धेर्लौकिकतया न कविप्रतिभानिर्वर्तितत्वम् ।

आहार्यबोधस्यैव । ससंदेह इति व्यवहारस्त्वौपचारिकः, भ्रान्तिमानितिवत् ॥ इति रसगङ्गाधरमर्मप्रकाशे ससंदेहप्रकरणम् ।

अथ भ्रान्तिमन्तं लक्षयति—**अथेति** । अन्यत्र नैवमित्याह—**प्रकृत इति** । आदिना मनुष्यग्रहणम् । प्रतिज्ञाविरोधाभावायाह—**अत्रेति** । **औपचारिक इति** । भ्रान्तिनिष्ठालंकारत्वस्य तद्वत्यारोपात् । भ्रान्तितद्वतोरभेदारोपाद्वेति भावः । ससंदेह इति व्यवहारोऽप्येवमेवेति प्रागुक्तम् । **प्रमेति** । कविभिन्नेत्यर्थः । अलंकारे अलंकाराणां मध्ये । आर्षमेकवचनं वा । अनुरोधेनाह—**कवीति** । ननु तत्रापि चमत्कारोऽस्त्ये-

१ अयमाहार्यो बोधः, अत एव राजकधर्मिकस्य सूर्याग्निकोटिकस्य संशयस्य मूलभूतं यत्सादृश्यं (अलौकिकतेजःशालित्वरूपम्) तद्बाधाय कोटिभूते सूर्ये गगनगतत्वरूपं यद् वैधर्म्यं तन्निवर्तकम्, अग्नौ च उष्णत्वरूपं यद्वैधर्म्यं तन्निवर्तकं च असदेव गगनगलितत्वं शिशिरत्वं चारोप्यत इत्याशयः ।

२ मीलितादिषु उक्तविशेषणविशिष्टोऽनाहार्यो निश्चयो भवति, परं स एकस्मिन्धर्मे धर्मान्तरस्य । यथा मीलिते—चरणगतसहजरक्तिमनि लाक्षागतरक्तिम्नो निश्चयः । एवं सामान्य-तद्गुणयोरपि बोध्यः । न तेषु एकस्मिन् धर्मिणि धर्म्यन्तरस्य निश्चय इत्यर्थः ।

३ रूपके अभेदबोध आहार्यो भवति, अत एव कविनिष्ठोऽसौ ।

'अकरुणहृदय प्रियतम मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥'

इत्यत्र नायिकासंदेशहरस्योक्तौ व्यज्यमानस्योन्मादस्य वारणाय साहश्यप्रयोज्य इति। न चात्रोन्मादस्य प्राधान्यात्सकलालंकारसाधारणेनोपस्कारकत्वविशेषणेनैव वारणमिति वाच्यम्। तस्यापि पार्यन्तिकविप्रलम्भोपस्कारकत्वात्। यद्वा संदेशहरात्संदेशं श्रुतवतो नायकस्य स्वमित्रं प्रति यदेदं वाक्यं 'अकरुणहृदय-' इत्यादि, तदास्मिन्नेव पद्ये सेति पदव्यङ्ग्यायाः स्मृतेरुपस्कारके उन्मादे तथाप्यतिप्रसङ्गापत्तेः साहश्यप्रयोज्यत्वमावश्यकम्। लक्षणे चात्रैकत्वं विवक्षितम्। अन्यथा वक्ष्यमाणानेकग्रहीतृकानेकप्रकारकैकविशेष्यकभ्रान्तिसमुदायात्मन्युल्लेखेऽतिप्रसङ्गापत्तेः। अत एवैकवचनमपि सार्थकम्।

उदाहरणम्—

'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया।
चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने॥'

अत्र चातकगतहर्षोपस्कारकतया तद्गता भ्रान्तिरलंकारः। अत्रैव यदि 'परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने' इत्युत्तरार्धं निर्मीयते तदायमेव भ्रान्तिध्वनिः।

यच्चाप्पयदीक्षितैर्लक्षणमुक्तम्—

'कविसंमतसाहश्याद्विषये पिहितात्मनि।
आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः॥' इति।

'तत्र कविसंमतसाहश्यप्रयोज्ये विषये आरोप्यमाणानुभवो यत्र वाक्यसं-

---

वात आह—**कवीति**। उक्तौ नायकं प्रतीति शेषः। **उन्मादस्येति**। 'विप्रलम्भमहापदादिजन्मा अन्यस्मिन्नन्यावभास उन्मादः' इति मतेनेदम्। नन्वत्र विप्रलम्भजन्यत्वेनोन्मादस्य कथं तदुपस्कारकत्वमत आह—**यद्वेति**। अत एव निश्चय इत्यत्रैक-

१ अनेके ग्रहीतारो यस्मिन् ईदृशः, अनेकप्रकारक एकविशेष्यकश्च यो भ्रान्तिसमुदायात्मक उल्लेखस्तस्मिन् 'एकस्मिन् धर्मिणि एकधर्मिप्रकारक एव निश्चयः' इत्येकवचनविवक्षातो नातिव्याप्तिरित्याशयः। तत्र हि अनेकग्रहीतृवशादेकस्मिन्वस्तुन्यनेकप्रकारको बोधः (भ्रमात्मकः)।

दर्भे स भ्रान्तिमान्' इति भ्रान्तिमतो लक्षणं विधाय रूपकव्यावृत्त्यर्थं पिहितात्मनीत्युच्यते । न चैतद्युक्तम् । नहि रूपकवाक्ये आरोप्यमाणस्यानुभवो वर्ण्यते, किं तु तस्माज्जायते । न चात्रानुभवान्तं भ्रान्तेर्लक्षणमग्रिमं च भ्रान्तिमतः । तत्र भ्रान्तिलक्षणे रूपकेऽतिव्याप्तेर्वारणाय विषये पिहितात्मनीति विशेषणमिति वाच्यम् । अनुभवत्वघटितस्य भ्रान्तिलक्षणस्यानुभूयमानाभेदात्मके रूपके कथमप्यप्रवृत्तेः । यदि च रूपकपदं रूपकबुद्धिपरमिति ग्रन्थसामञ्जस्यं विधीयते, तदापि विषयतावच्छेदकानवगाहिनि 'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः' इति संशयेऽतिप्रसङ्गात्, 'कमलमिति चञ्चरीकाश्चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति' इति भ्रान्तिसमुदायात्मन्युल्लेखेऽतिव्याप्तेश्च । अत्र भ्रान्त्या संकीर्ण उल्लेख इति चेत्, नह्येतावतोल्लेखांशातिव्याप्तिर्न दोषः । नहि दुग्धभागजलभागानां व्यामिश्रतास्तीति दुग्धलक्षणं जलांशातिव्याप्तिकं कर्तुं युक्तम् । यच्चापि भिन्नकर्तृकोत्तरोत्तरभ्रान्तावुदाहृतम्—

त्वविवक्षणादेव । **उच्यत इति** । अयं भावः—तद्विशेषणेनारोप्यमाणानुभवस्य स्वारसिकस्य भ्रान्तिमता फलत्वं विवक्षितम् । तस्यैव विषयपिधानसामर्थ्यादिति । **अग्रिमं चेति** । यत्रेत्याद्युक्तमित्यर्थः । **तत्रेति** । तद्वाक्यजाऽनुभवस्य तत्रापि सत्त्वादिति भावः । **कथमपीति** । ज्ञानविषययोर्भेदेन ज्ञानवृत्तिधर्मस्य विषयेऽसत्त्वादिति भावः । ननु न नाम संशयेऽतिप्रसङ्गः, विषयस्यैव इति प्रतिपादनादत आह—**कमलमिति** । अत एव वक्ष्यति भ्रान्त्या संकीर्ण इति । **अतिव्याप्तेश्चेति** । उल्लेखत्वभ्रान्तित्वयोरत्र संकीर्णत्वम् । बाधकाभावात् । भूतत्वमूर्तत्वयोरिव नरैर्वैरगतिप्रदेत्यत्रोल्लेखत्वस्य, कनकद्रवेत्यत्र भ्रान्तित्वस्य सावकाशत्वादिति कश्चित् । वनितेति वदन्त्येनां लोका इति त्वदुदाहृतापह्नुतिसंकीर्णोल्लेखे उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनोत्थाप्यापह्नुतिलक्षणातिव्याप्तिस्त्वयाप्यस्ति । एवं तत्तदलंकारसंकीर्णे तत्तदलंकारलक्षणस्य सा दुर्वारेति चिन्त्य-

१ रूपके अभेदानुभवः ( पूर्वसिद्धः ) न भवति, अपि तु तदैव सोऽभेदोऽनुभूयमानो भवति । अत एव विषयाभेदानुभवात्मकस्य भ्रान्त्यलंकारलक्षणस्य नातिव्याप्तिः । भ्रान्तिरनुभवः, अनुभवे उपगतोऽभेदश्च रूपकम्, ततः कथं तत्रातिव्याप्तिः ?

२ विषयतावच्छेदकस्य ( रघुपतौ रघुपतित्वस्य ) परामर्शो यत्र न । अर्थात् विषये ( रघुपतौ ) आरोप्यमाणयोः ( मरकतभूधर-तमालयोः ) एव अनुभवः ( प्रतीतिः ) तत्राप्यस्तीति भ्रान्तिलक्षणस्यातिव्याप्तिः ।

३ संकीर्णत्वेपि एकलक्षणमन्यस्मिन् नातिव्यापयितुं योग्यम् । दुग्धस्य जलमिश्रितत्वेपि दुग्धलक्षणं जलातिव्याप्तं केन क्रियेत ?

'शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः ।
तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकै-
रित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥' इति ।

तत्र विचार्यते—स्तनकलशयुगे हि न तावन्मञ्जरीसादृश्यं कविसमयसिद्धम्, येन तन्मूला चञ्चरीकाणां भ्रान्तिरुपनिबध्येत । दोषान्तरमूला तु सा नालंकार इत्यनुपदमेव निरूपितम् । अपि च धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलंकारान्तरमुपनिबध्यमानमुद्वेजकमेव सहृदयानाम् । नहि सादृश्यमूलैकालंकारावच्छिन्ने सादृश्यमूलमलंकारान्तरं शोभते । यथा 'मुखकमलं तव चन्द्रवत्प्रतीमः' इति प्रागेव निवेदनात् । प्रत्युत कलशरूपकेण मञ्जरीसादृश्यतिरस्काराच्च । 'तत्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः' इत्यत्र विधेयाविमर्शाद्विधेयान्तरमाकाङ्क्षितम् । कीरैर्दष्टा इति तु भाव्यम् । जाता इत्यध्याहारेऽपि विवक्षितस्याविधेयत्वमविवक्षितस्य च विधेयत्वं प्रसज्येत । एवं 'तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः' इत्यत्र न तावत्पिकनिनदास्ताडनयोग्याः काकानाम्, येन तद्धिया आलपन्त्यस्तैस्ताड्येरन् । नापि पिकनिनदभ्रम आलपन्तीषु संभवति[1] । संभवन्वा न सादृश्यमूलः । पिकनिकरधियेति तु भाव्यम् । अथ तदालापेषु पिकनिनदबुद्धेरपि[2] तासु पिकबुद्ध्युत्पादनद्वारा संभवत्येव ताडनोपयोग इति प्रयोज्यत्वार्थकतृतीयया

मिदमित्यपरे । तावदादौ **उपेति** । वर्ण्यतेत्यर्थः । ननु यथाकथंचित्सादृश्यमप्यस्तीत्यत आह—**अपि चेति** । धर्मिणि स्तनरूपे । मुखकमलमिति रूपकम् । अभ्युपेत्याह—**प्रत्युतेति** । एवमाद्ये दोषमुक्त्वा द्वितीये दोषमाह—**तत्रासोल्लेति** । भ्रमरभयजननजातचेष्टा इत्यर्थः । **विधेयाविमर्शादिति** । विधेयस्याकथनादित्यर्थः । उद्देश्यकोटिप्रविष्टं सर्वमिति भावः । पाणीनुद्दिश्य विशिष्टस्य कीरकर्तृकदष्टत्वस्य विधेयत्वे को दोष इति चिन्त्यमिदम् । **विवेति** । दष्टत्वस्येत्यर्थः । तृतीये तमाह—**एवमिति** । तल्लोपाय कीरदूरीकरणाय । तावदादौ । दोषमूलः संभवतीत्याह—**संभवन्वेति** । **शब्दप्रयो-**

१ आलपन्तीषु ( धर्मिषु ) निनदस्य ( धर्मस्य ) भ्रमः कथमिति भावः ।

२ अभिन्नासु इति काशीपाठः ।

पिकनिनदधीप्रयोज्यकाककर्तृकताडनकर्मत्वमालपन्तीनां सुप्रतिपादमेवेति चेत्, नैवम् । तथाप्रतीतेरसिद्धेः । 'चोरबुद्ध्या हतः साधुः' इत्यादौ चोरबुद्धिहननयोः सामानाधिकरण्येन हेतुहेतुमद्भावगमकत्वव्युत्पत्तेः । एवं 'दन्तिबुद्ध्या हतः शूरैर्वराहो वनगोचरः' इत्यत्रापि विशेष्यतया वराहवृत्तेर्दन्तिबुद्धेर्वराहवृत्तिहननहेतुभावावगमः । त्वदुक्तरीत्या दन्तबुद्ध्येतिकृते बोधकदर्थनैव । किं च पिकानां हि कूजितादिशब्दैरेव शब्दो वर्ण्यते, न तु निनदादिशब्दैः सिंहदुन्दुभ्यादिशब्दप्रयोगयोग्यैः । तथा प्रथमद्वितीयचरणस्थयोः स्तनपाण्योर्यथाकथंचिद्व्यवहितमपि जातान्वयमपि त्वदरिमृगदृशामिति षष्ठ्यन्तमन्वेतुं शक्नुयात्, न तु तृतीयचरणस्थे आलपन्त्य इत्यस्मिन्विशेषणे विशेष्यभावेनेति तासां ताटस्थ्यमेव स्यात् । विभक्तिविपरिणतावपि प्रक्रमभङ्गासंष्ठुलत्वाभ्यां स्थितमेवेति पद्यमव्युत्पन्ननिर्मितमेव । दीक्षितैस्तु भ्रान्त्यलंकारांशमात्रमादायोदाहृतमिति दिक् ।

यत्त्वलंकारसर्वस्वकृता लक्षितम्, 'सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्' इति, तन्न । प्रागुक्ते संशयालंकारे वक्ष्यमाणायामुत्प्रेक्षायां चातिप्रसङ्गात् । प्रतीतिपदस्य निश्चयपरत्वे रूपकवित्तावतिप्रसङ्गात् । विषयतावच्छेदकानवगाहित्वेन निश्चयो विशेषणीय इति चेत्, विशेष्यताम् । तथाप्यतिशयोक्तिवित्तावतिप्रसक्तिरवारितैव । अनाहार्यत्वेन निश्चयविशेषणत्वे पुनरस्मदुक्त एव पर्यवसितिः, मतुबर्थासंगतिश्च । तत्र 'कनकद्रवकान्तिकान्तया'

**गेति** । शब्दे प्रयोगेत्यर्थः । आसत्त्याकाङ्क्षयोः स्वारसिकयोरभावादाह—**यथाकथंचिदिति** । **जातान्वयेति** । नाप्यरण्यं शरण्यमिति संनिहितेनेति भावः । **न त्विति** । विभिन्नविभक्तिकत्वात्तस्मिन्स्वभेदाभावाच्चेति भावः । ननु विभक्तिविपरिणामेनाभेदान्वयः सुलभोऽत आह—**विभक्तीति** । **प्रक्रमेति** । नन्वेवं दीक्षितैः कथमुदाहृतमत आह—**दीक्षितैरिति** । **निश्चयपरत्व इति** । तथा च संशयसंभावनारूपयोस्तयोर्नातिप्रसङ्ग इति भावः । वित्तौ तज्ज्ञाने । **अनाहार्यत्वेनेति** । नन्वेवमपि कथमतिशयोक्तावतिव्याप्तिवारणम् । तस्यामनाहार्याभेदज्ञानस्यैव सर्वसंमतत्वात्प्रागुक्तत्वाच्चेति चेत्, चिन्त्यमेतत् । **मतुबिति** । भ्रान्तिमानिति मतुबित्यर्थः । अत्र धर्मभेदमाह—

१ अर्थात् पूर्वं तदालापेषु पिकनिनदबुद्धिः । तादृशबुद्ध्या च तास्वपि पिकबुद्धिः । पिकबुद्ध्या च तासु ताडनमिति प्रयोज्यार्थकतृतीयया सोयमर्थः सुप्रतिपाद इति शङ्का । २ वराहे वर्तमाना दन्तिबुद्धिर्वराहवृत्तिहननस्य हेतुरित्याशयः । ३ पिकधिया ताडिता इत्यस्य स्थाने पिकनिनदधिया ताडिता इति प्रयोज्यत्वार्थकतृतीयया यथा भवता प्रयोक्तुं शक्यते तथा दन्तिबुद्ध्या इत्यस्य स्थाने दन्तबुद्ध्या इत्यपि कर्तुं शक्यतया बोधकदर्थनैवेत्याशयः ।

इत्यत्र सीतातडितोर्बिम्बप्रतिबिम्बभावः । युतत्वमिलितत्वयोश्च शुद्धसामान्यरूपता ।

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः ॥'

अत्र स्निग्धत्वश्यामत्वयोरनुगामित्वम् ।

इति रसगङ्गाधरे भ्रान्तिमत्प्रकरणम् ।

अथोल्लेखः—

**एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः ॥**

'अधरं बिम्बमाज्ञाय मुखमब्जं च तन्वि ते ।
कीराश्च चञ्चरीकाश्च विन्दन्ति परमां मुदम् ॥'

अत्र कीरचञ्चरीकाभ्यामधरवदनयोर्बिम्बत्वेन पद्मत्वेन च ग्रहणे भ्रान्तिरूपेऽतिप्रसङ्गवारणायैकस्य वस्तुन इति । 'धर्मस्यात्मा भागधेयं क्षमायाः' इत्यादिमालारूपकेतिप्रसङ्गवारणायानेकैर्ग्रहीतृभिरित्यविवक्षितबहुत्वकं ग्रहणविशेषणम् ।

'नृत्यत्त्वद्वाजिराजिप्रखरखुरपुटप्रोद्धतैर्धूलिजालै-
रालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते ।
विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः
कोकाः क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः ॥'

अत्र धूलिजालरूपस्यैकस्य वस्तुनोऽनेकैर्लोककोकोलूकैर्ग्रहीतृभिरेकेनैव रजनीत्वरूपेण प्रकारेण ग्रहणमिति तत्रातिप्रसङ्गवारणायानेकप्रकारक-

**तत्रेति ।** उक्तोदाहरणानां मध्य इत्यर्थः । धाराधरो मेघः । शिखावला मयूराः ॥ इति रसगङ्गाधरमर्मप्रकाशे भ्रान्तिमत्प्रकरणम् ॥

उल्लेखं लक्षयति—**अथोल्लेख इति** । ग्रहणं ज्ञानम् । कीराः शुकाः । चञ्चरीका भ्रमराः । नन्वेवं बहुवचनात्त्रिप्रभृतौ न स्यात्, द्वयोर्न स्यादत आह—**अविवक्षितेति । नृत्यदिति ।** राजानं प्रति कवेरुक्तिः । **अतुलेति ।** आलोकालोकम् । लोकालोकस्य किंचिदंशे प्रकाशः किंचिदंशेऽप्रकाशः । धूल्याक्रान्तत्वे तु सर्वांशेनाप्रका-

१ लोकालोकभूधरपर्यन्तं भूतले अतुलनिरालोक(अत्यन्तनिष्प्रकाश)भावं प्रयाते सति ।

मिति । ग्रहणमिति ग्रहणसमुदायो विवक्षितः । एकत्वं जातौ । अनेकग्रहीतृकस्यैकस्य ग्रहणस्याप्रसिद्धेः । तेन द्वयोर्बहूनां वा ग्रहणं निमित्तवशादिति तु वस्तुकथनमात्रम् ।

उदाहरणम्—

'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसंघैरपि ।
हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं
तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥'

अत्र च लिप्सारुचिभ्यां निमित्ताभ्यामस्त्यनेकग्रहीतृकवरगतिप्रदात्वाद्यनेकप्रकारकग्रहणसमुदायो गङ्गाविषयकरतिभावोपस्कारकः । शुद्ध एवात्रायमुल्लेखालंकारः, रूपकाद्यमिश्रणात् ।

संकीर्णोऽपि दृश्यते । यथा—

'आलोक्य सुन्दरि मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः ।
किं चालि पूर्णमृगलाञ्छनसंभ्रमेण
चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥'

शत्वं गत इत्यर्थः । नन्वेवं बहुवचनौचित्येन कथमेकत्वमत आह—**एकत्वमिति** । **अनेकेति** । एकस्य वस्तुनोऽनेकप्रकारस्येत्यादिः । बहुवचनमविवक्षितमित्युक्तत्वादाह—**द्वयोरिति** । नन्वेवमपि निमित्तवशादित्यधिकमत आह—**निमित्तेति** । न च 'कीर्तौ विस्फूर्तिमत्यां ते मृणालक्षीरशङ्किनः । द्वयेऽपि नागास्तन्वन्ति जिह्वान्तोल्लोलनं मुहुः ॥' इति भ्रान्तिमदुदाहरणे एकस्या एव कीर्तेरनेकेन कुञ्जरभुजंगरूपेण ग्रहीत्रा मृणालक्षीररूपत्वानेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासाय निमित्तभेदादित्यर्थकं निमित्तवशादित्यावश्यकम् । तत्र कीर्तिगतं धावल्यमेकमेवोल्लेखद्वयेऽपि निमित्तमिति वाच्यम् । स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदस्यापि तत्र सत्त्वेन संग्राह्यत्वादिति भावः । **वरेति** । ब्रह्मसुखाप्तीत्यर्थः । **स्वकीयेति** । मन्दाकिनीत्यर्थः । **उदारेति** । उत्कृष्टतरेत्यर्थः । शन्तनो राज्ञः स्त्री गङ्गा मम तनोः शं कल्याणं सपदि तत्कालं तनोत्वित्यर्थः । लिप्सा लाभेच्छा । तस्यालंकारत्वायाह—**गङ्गेति** । कविनिष्ठेत्यादिः । **अत्रेति** । पद्य इत्यर्थः । उक्त इति शेषः । सुन्दरीति आलीति च संबोधने । नायिकां प्रति सख्या नायकस्य वोक्तिः । **चिरं चकोरा इति** । स्वस्वप्रियाहारलिप्सा च निमित्तम् । एतां नायिकां

अत्रैकैकग्रहणरूपया भ्रान्त्या समुदायात्मक उल्लेखः संकीर्णः।

'वनितेति वदन्त्येतां लोकाः सर्वे वदन्तु ते।
यूनां परिणता सेयं तपस्येति मतं मम॥'

अत्र विषयतावच्छेदकस्य परसंमतत्वेन निषेध्यतयोपन्यासादपह्नुत्या संकीर्णः।

अप्पयदीक्षितास्तु—"एवमपि यदि—

'कान्त्या चन्द्रं विदुः केचित्सौरभेणाम्बुजं परे।
वक्त्रं तव वयं ब्रूमस्तपसैक्यं गतं द्वयम्॥'

इत्यपह्नवोदाहरणविशेषेऽतिव्याप्तिः शङ्क्या, तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम्। तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद्गम्यमाननिषेधमिति नातिव्याप्तिः" इत्याहुः। तन्न। 'द्विविधश्चायमुल्लेखः शुद्धोऽलंकारान्तरसंकीर्णश्च' इत्युक्त्वा "श्रीकण्ठजनपदवर्णने, 'यस्तपोवनमिति मुनिभिरगृह्यत' इत्यादौ शुद्धः, 'यमनगरमिति शत्रुभिः, वज्रपञ्जरमिति शरणागतैः' इत्यादौ भ्रान्तिरूपकादिसंकीर्णः" इति स्वयमेवोक्तत्वात्। इहाप्यपह्नुत्या संकीर्ण उल्लेख इत्यस्य सुवचत्वात्। यदि चैवंविधापह्नुतिवारणाय निषेधास्पृष्टत्वं विशेषणमुच्यते तदा—

'कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति॥'

नायकोक्तिरियम्। अवच्छेदकस्य वनितात्वस्य। **निषेध्येति**। आर्थिकेत्यादिः। एवमपि उक्तविशेषणदानेऽपि। **गम्येति**। बहुव्रीहिः। **श्रीकण्ठेति**। शुद्धस्यैकमुदाहरणं सोपपादनमुक्त्वान्यदाह–यथा वा हर्षचरिते इत्यादिः। यस्तपोवनमित्यादिगद्यम्। अगृह्यतेत्यस्य सर्वत्र संबन्धः। यच्छब्दार्थः श्रीकण्ठजनपदः। **शुद्ध इति**। तत्र तपोवनादिभूनिष्ठत्वादिति भावः। यमनगरत्वादीनां ताद्रूप्यानुभवगोचरतयान्वये आह— **भ्रान्तीति**। यदि तेषामुपरञ्जकतामात्रेणान्वयस्तदाह—**रूपकेति**। **एवंविधेति**।

१ अर्थात् केचिज्जनाश्चन्द्रं विदुः, अहं न वेद्मि इति निषेधस्य गम्यमानतया निषेधाऽस्पृष्टत्वाभावादपह्नुतौ नातिव्याप्तिः।

इति त्वदुदाहृतभ्रान्तावतिप्रसङ्गः कथं नाम वार्येत । मार्जाराद्यनेकग्रहीतृकानेकधोल्लेखनस्य तत्रापि सत्त्वात् । स्वस्वप्रियाहारलिप्सारूपनिमित्तभेदाच्च । तस्मात्संकीर्णनिवारणाय यत्नोऽनर्थक एव ।

संशयसंकीर्णो यथा—

'भानुरग्निर्यमो वायं बलिः कर्णोऽथवा शिबिः ।
प्रत्यर्थिनश्चार्थिनश्च विकल्पन्त इति त्वयि ॥'

अत्र द्वयोर्ग्रहणयोः प्रत्येकं संशयत्वम् । समुदायस्य तूल्लेखता । अयं च स्वरूपमात्रोल्लेखे स्वरूपोल्लेखः प्रागेव निरूपितः ।

फलानामुल्लेखे फलोल्लेखो यथा—

'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः ।
जातोऽयं हन्तुमेवेति वीरास्त्वां देव जानते ॥'

हेतूनामुल्लेखे हेतूल्लेखः । यथा—

'हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये ।
त्वां प्राहुः पुण्यतमामपरे सुरतटिनि वस्तुमाहात्म्यात् ॥'

अथ प्रकारान्तरेणाप्युल्लेखो दृश्यते—यत्रासत्यपि ग्रहीत्रनेकत्वे विषयाश्रयसमानाधिकरणादीनां संबन्धिनामन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वम् । अयमपि द्विविधः, शुद्धोऽलंकारान्तरसंकीर्णश्च ।

---

विलक्षणेत्यर्थः । **त्वदुदेति** । त्वया प्रथमं मुख्यत्वेनोदाहृतेत्यर्थः । तादृशभ्रान्तिविशेषस्यापि वारणावश्यकत्वात् । अन्यथा संकीर्णं तत्कथमादावुदाहृतम् । तद्विविक्तविषयस्यैवादावुदाहर्तुमौचित्यात् । अन्यथालंकारभेदो न स्यादिति भावः । **अनेकधेति** । पयस्वादीत्यर्थः । उपसंहरति—**तस्मादिति** । शिबिस्तन्नामको राजा । **अत्र द्वयोरिति** । प्रथमपादद्वितीयपादप्रतिपाद्ययोरित्यर्थः । उत्प्रेक्षावद्भेदमाह—**अयं चेति** । उल्लेखश्चेत्यर्थः । उल्लेखे सतीति शेषः । एवमग्रेऽपि । **अर्थिन इति** । राजानं प्रति कस्युक्तिः । **हरीति** । गङ्गास्तुतिः । **नखरेति** । नखेत्यर्थः । **वस्तुमाहात्म्यादिति** । स्वस्वरूपस्यैव माहात्म्यादित्यर्थः । पूर्वोदाहरणे एकस्यैव राज्ञो दातृत्वत्रातृत्वहन्तृत्वप्रकारेणोल्लेखः । अत्र त्वेकस्य पुण्यतमात्वस्य हरिपदसङ्गादिहेतुकत्वेनोल्लेखः । प्रकारस्य फलत्वहेतुत्वाभ्यां फलोल्लेखत्वादिव्यवहार इति बोध्यम् । **संबन्धिनामिति** । विषयरूपाश्रयरूपैकाधिकरणवृत्तित्वेन प्रतीयमानरूपाश्च ये संबन्धिनः । विषयाश्रयसहचरादिरूपा ये संबन्धिन इति

शुद्धो यथा—

'दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किं च मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कांदिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः॥'

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वम्। राजविषयकरतिभावोपस्कारकोऽयमुल्लेखः। यद्यपि चित्तवृत्तिव्यक्तीनामत्रैक्यं नास्ति, तथापि तदीयचित्तवृत्तित्वेन सामान्येन तासामेकत्वं विवक्षितम्।

यथा वा—

'कातराः परदुःखेषु निजदुःखेष्वकातराः।
अर्थेष्वलोभा यशसि सलोभाः सन्ति साधवः॥'

अत्रापि साधवः सन्तीत्यनेन मृता अपि न मृतास्ते, इतरे पुनरमृता अपि मृता एवेत्यर्थाभिव्यक्तिद्वारा व्यज्यमाने साधूत्कर्षविशेषे उपस्कारकोऽयम्।

यथा वा—

'तुषारास्तापसव्राते तामसेषु च तापिनः।
दृगन्तास्ताडकाशत्रोर्भूयासुर्मम भूतये॥'

पूर्वपद्ययोर्विषयानेकत्वप्रयुक्तम्, इह त्वाश्रयानेकत्वप्रयुक्तमनेकविधत्वं दृगन्तानाम्।

यावत्। तेषां मध्ये यस्य कस्यचिद्यदनेकत्वं तत्प्रयुक्तमित्यर्थः। व्राते समूहे। **मृद्वीति**। काव्योक्तिषु कोमलेत्यर्थः। काव्यालापेषूक्तिमात्रेषु मृद्वीका द्राक्षारूपा। मधुरेति। यावदिति कश्चित्। **तर्केति**। तर्कस्य प्रतीत्यर्थः। वसूनि द्रव्ये। **परेति**। परस्य परा वेत्यर्थः। **कांदिशीति**। कस्यां दिशि गन्तव्यमिति धीविशिष्टेत्यर्थः। राजानं प्रति कव्युक्तिः। अस्यालंकारत्वायाह—**राजेति**। कविनिष्ठेत्यादिः। **नास्तीति**। तथा चैकस्य वस्तुन इत्यंशाभावान्नेदं लक्ष्यमिति भावः। तथा लक्षणे विवक्षाया अभावादाह—**यथा वेति**। अत्र परदुःखादीनां विषयाणामनेकत्वात्साधूनामनेकविधत्वं स्पष्टमुपेक्ष्यालंकारान्तरत्वमुपपादयति-**अत्रापि साधव इति**। एवं विषयानेकत्वप्रयुक्तमुदाहृत्याश्रयानेकत्वप्रयुक्तमुदाहरति—**यथा वेति**। ताडकाशत्रोः श्रीरामस्य। समानाधिकरणानेकत्वं प्रत्युदाह-

१ चित्तवृत्तेः (ग्राहिकायाः) एकत्वेपि।

'विद्वत्सु विमलज्ञाना विरक्ता यतिषु स्थिताः ।
स्त्रीयेषु तु गरोद्गारा नानाकाराः क्षितौ खलाः ॥'

अत्र विद्वदादिसहचरभेदप्रयुक्तं खलानामनेकविधत्वम् । एवमन्येषां संबन्धिनां भेदेऽप्यूह्यम् ।

संकीर्णो यथा—

'गगने चन्द्रिकायन्ते हिमायन्ते हिमाचले ।
पृथिव्यां सागरायन्ते भूपाल तव कीर्तयः ॥'

अत्रोपमया आपाततः प्रतीयमानया पर्यवसितया चोत्प्रेक्षया ।

'उपरि करवालधाराकाराः क्रूरा भुजंगमपुंगवात् ।
अन्तः साक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥'

अत्रोपमाव्यतिरेकाभ्यां तयोः समुच्चयेनोत्प्रेक्षया च संकीर्णः ।

'यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां
सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् ।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥'

अत्र कविना यमत्वादिना रूपेण राज्ञो रूपवतः करणाद्रूपकेण, विपक्षभूपालादीनामेतस्मिन्नायाते यमत्वादिना भ्रान्तिरपि संभवतीति

रति—**विद्वदिति**। यथा चेत्यादि। यतिषु भिक्षुषु। गरोद्गारा विषोद्गाराः। आदिपदार्थमाह—**एवमिति**। उपमानाद्यक्थनो विधानादाह—**अत्रोपमेति**। तत्रातात्पर्यादाह—**पर्यवेति**। **उत्प्रेक्षयेति**। संकीर्ण इति शेषः। **भुजंगमेति**। सर्पश्रेष्ठादित्यर्थः। सप्तमीसमासः कर्मधारयो वा। **द्राक्षेति**। द्राक्षाया या माधुर्यदीक्षा तस्या गुरव इत्यर्थः। करवालेत्यत्रोपमा। क्रूरा इत्यत्र व्यतिरेकः। तयोरुपमाव्यतिरेकयोः। गुरव इत्यत्राह—**उत्प्रेक्षया चेति**। द्वयोरुल्लेखयोः संकरमादिपदग्राह्यसंबन्धिभेदप्रयुक्तत्वं च दर्शयितुमुदाहरति—**यम इति**। तन्नीवृतां प्रतिपक्षराजजनपदानाम्। कुलिशं वज्रम्। राजानं प्रति कव्युक्तिः। **यमत्वादिना भ्रान्तिरपीति**। शरणेच्छूनां भ्रान्तिवर्णने राजो-

१ आर्यापूर्वार्धे 'नेह भवति विषमे जः' इति नियमादत्र न विषमे सप्तमस्थाने जगणस्य सत्त्वाच्छन्दोभङ्गदूषितमेतदार्यापूर्वार्धमिति ज्ञेयम्।

२ प्रतिपक्षभूपानाम्।

भ्रान्तिमता, विपक्षभूपालादिभिरनेकैर्ग्रहीतृभिर्यमत्वादिभिरनेकैर्धर्मैरुल्लेखनात्प्रागुक्तोल्लेखप्रकारेण च सह संकीर्णोयं संबन्धिषष्ठ्यन्तभेदप्रयुक्तवर्ण्यानेकविधत्वक उल्लेखः।

अत्रेदं बोध्यम्—प्रथमनिरूपितोल्लेख[1]प्रकारे 'यं महाविष्णुरिति वैष्णवाः, शिव इति शैवाः, यज्ञपुरुष इति याज्ञिकाः, स्वभाव इति लौकायतिकाः, ब्रह्मेत्यौपनिषदा वदन्ति सोऽयमादिपुरुषो हरिः' इत्यादौ तत्तद्ग्रहीतृकतत्तत्प्रकारकज्ञानसमुदायस्य चमत्कारजनकताया अनुभवसिद्धत्वेनालंकारत्वम्। द्वितीये तु प्र[2]कारे 'यः शिष्टेषु सदयो दुष्टेषु करालः' इत्यादौ तत्तद्विषयभेदभिन्नस्य प्रकारसमुदायमात्रस्य तथात्वम्। न तु विद्यमानस्यापि ज्ञानांशस्य, चमत्कारित्वेनाननुभवात्। चमत्कारनिबन्धनो ह्यलंकारभाव उपमादीनाम्। अत एवास्माभिः 'विषयाद्यन्यतमानेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वम्' इति द्वितीय उल्लेखो लक्षितः।

एवं च 'लक्षणद्वयान्यतरत्वमुल्लेखसामान्यलक्षणतावच्छेदकम्' इत्याहुः। परे तु 'प्रकारद्वयेऽपि वर्ण्यवृत्तित्वेन भासमानप्रकारसमुदाय एवोल्लेखः' इत्यपि वदन्ति।

अथोल्लेखस्य ध्वनिः—

---

त्कर्षविरोधीति चिन्त्यमिदम्। **प्रागुक्तोल्लेखेति**। इदमपि चिन्त्यम्। ज्ञानस्यानिबन्धने च ज्ञानपर्यन्तस्य पूर्वोल्लेखस्य कथमप्यत्रासत्त्वात्। नियतत्वाजनकसामग्र्यभावेनाऽऽर्थस्यापि तस्यासत्त्वाच्चेति दिक्। इतोऽपि भ्रान्तिरपि संभवतीति चिन्त्यमिति बोध्यम्। विषयाश्रयसहचराणां संबन्धिनामत्रासत्त्वादाह—**संबन्धिषष्ठ्यन्तेति**। षष्ठ्यन्तार्थसंबन्धीत्यर्थः। क्वचित्तथैव पाठः। यं प्रकृतं राजानम्। एवमग्रेऽपि। **जनकताया इति**। इदं ज्ञानं चमत्कारीत्यनुभवाकारः। 'भिन्नप्रकार' इति पाठः। भिन्नत्वं प्रकारविशेषणमात्रव्यवच्छेद्यमाह—**न त्विति**। अन्यतरत्वस्य गुरुत्वाद्दुर्ज्ञेयत्वाच्चाह—**परे त्विति**।

---

१ अनेकैर्ग्रहीतृभिरेकस्यैव बहुधोल्लेखनरूपे—यं महाविष्णुरित्यत्र ज्ञानसमुदायस्य चमत्कारकत्वादलंकारत्वम्।

२ एकस्यैव वस्तुनो विषयाश्रयादीनामनेकत्वप्रयुक्तम् यदनेकप्रकारकमुल्लेखनं तद्रूपे—यः शिष्टेष्वित्यत्र विषयाणां भेदेन भिन्नस्य प्रकारसमुदायमात्रस्य चमत्कारकतया अलंकारत्वम्, न तु ज्ञानांशस्य। अनेकधा ज्ञानम्, अनेकप्रकारकत्वं चेति द्वयमप्युल्लेख इत्याशयः।

यथा—

'अनल्पतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः ।
विलोक्य गङ्गां विचलत्तरङ्गाममी समस्ताः सुखिनो भवन्ति ॥'

अत्र पूर्वार्धोदीरितानां चतुर्णां विलोकनकर्तॄणां सुखित्वोक्त्या क्रमेण तापपापरोगभवनाशकत्वप्रकारकाणि ग्रहणान्याक्षिप्यन्ते । अयं च शुद्धस्योल्लेखस्य ध्वनिः ।[1]

संकीर्णस्य यथा—

'स्मयमानाननां तत्र तां विलोक्य विलासिनीम् ।
चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः ॥'

अत्र ध्वन्यमानया एकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदायात्मा उल्लेखः संकीर्णः । न चात्र भ्रान्तेरेव चमत्कार इति शक्यापह्नव उल्लेखः । अनेककर्तृकानेकधाग्रहणस्यालंकारान्तरविविक्तविषयस्य चमत्कृतेरिहापि सत्त्वात् ।

द्वितीयस्योल्लेखस्य ध्वनिर्यथा—

'भासयति व्योमगता जगदखिलं कुमुदिनीर्विकासयति ।
कीर्तिस्तव धरणिगता सगरसुतायासमफलतां नयते ॥'

अत्राधिकरणभेदप्रयुक्तमेकस्यामेव कीर्तौ चन्द्रिकात्वसागरत्वरूपानेकविधत्वं रूपकसंकीर्णं[2] ध्वन्यते ।

इति रसगङ्गाधर उल्लेखप्रकरणम् ।

---

**अनल्पेति** । बहुतापा इत्यर्थः । **गदैकेति** । रोगप्रधानेत्यर्थः । समासः प्राग्वत् । **विचलदिति** । 'विवलन्' इति पाठान्तरम् । अर्थस्तु तुल्यः । **स्मयेति** । सस्मयुक्तिर्नायकोक्तिर्वा । **एकैकेति** । चन्द्रत्वेन पद्मत्वेन च ग्रहणेत्यर्थः । **शक्येति** । नैवात्रोल्लेखोऽस्तीत्यर्थः । **विषयस्य चमदिति** । जन्यत्वं पञ्चम्यर्थश्चमत्कृतावन्वेति । व्योमेति गतिकर्म । कुमुदिनीरित्यर्थः । **सगरेति** । सगरसुतप्रयासमित्यर्थः । सागरकार्यस्य कीर्त्यैव संपादितत्वादिति भावः । **रूपकेति** । चन्द्रसागररूपकेत्यर्थः ॥ इति रसगङ्गाधरमर्मप्रकाश उल्लेखप्रकरणम् ॥

---

१ अनल्पतापास्तापनाशिकां कृतपापाः पापनाशिकामित्याद्यनेकप्रकारेण एकामेव गङ्गां गृह्णन्तीत्युल्लेखो व्यङ्ग्य इत्यर्थः ।

२ कीर्तिश्चन्द्रः, कीर्तिः सागरः, इत्येवैकग्रहणं 'रूपकम्' । तेन संकीर्णो व्योम-धरणीत्यधिकरणभेदकृतेन एकस्या एव कीर्तेरनेकप्रकारकोल्लेखेन च द्वितीयोल्लेखो व्यङ्ग्य इत्याशयः ।

अथापह्नुतिः—

**उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः ॥**

रूपकवारणाय तृतीयान्तम्। अस्यां चोपमेयतावच्छेदकस्य निषेधादुपमेयतावच्छेदकोपमानतावच्छेदकयोर्विरोधो गम्यते। रूपके तु तयोः सामानाधिकरण्यप्रत्ययात्स निवर्तते।

उदाहरणम्—

'स्मितं नैतत्किं तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते मूढः कुमुदमिदमुद्यत्परिमलम्।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्फलयुगं
लता रम्या सेयं भ्रमरकुलनम्या न रमणी ॥'

इयं चानुग्राह्यानुग्राहकभावापन्नावयवकसंघातात्मकतया सावयवा। निरवयवेयं यथा—

'श्यामं सितं च सुदृशो न दृशोः स्वरूपं
किं तु स्फुटं गरलमेतदथामृतं च।
नो चेत्कथं निपतनादनयोस्तदैव
मोहं मुदं च नितरां दधते युवानः ॥'

अत्र प्रतिज्ञातार्थवैपरीत्ये बाधकोपन्यासाद्धेत्वपह्नुतिः। अस्यां च नञादिभिः साक्षात्, परमतसिद्धत्वाद्युपन्यासैश्च किंचिद्व्यवधानेन विषयस्य

अपह्नुतिं लक्षयति—**अथेति**। **छेदकेति**। नञ्य निषेधेत्यर्थः। रूपकवारणायेति भ्रान्त्यादेरप्युपलक्षणम्। तदुपपादयति—**अस्यां चेति**। स विरोधः। भ्रमरकुलनम्येत्येतदंशेऽतिशयोक्तिरिति प्रक्रमभङ्गोऽत्र काव्य इति बोध्यम्। अत्र स्पष्टत्वाल्लक्षणसमन्वयमुपेक्ष्य भेदमाह—**इयं चेति**। उदाहृता चेत्यर्थः। **वयवकेति**। बहुव्रीहिणा संघातविशेषणम्। **श्याममिति**। अंशभेदेनेति भावः। कव्युक्तिरियम्। विपक्षे बाधकमाह—**नो चेदिति**। अनयोर्दृशोः। तदैव पतनकाल एव। 'सदैव' इति पाठान्तरम्। अत्र निरवयवत्वस्य सत्त्वात्प्रागवदाह—**अत्रेति**। **किंचिदिति**। भ्रान्त्यादीत्यर्थः।

१ अङ्गभूतया स्मिताद्यपह्नुत्या अङ्गिभूता रमण्यपह्नुतिः समर्थ्यत इति।

२ यदि गरलममृतं च न स्यात्तदा गरलकार्यं मोहः, अमृतकार्यं मोदश्च न स्यादिति गरलामृतसाधनाय मोह-मोदरूपहेतूपन्यासाद्धेत्वपह्नुतिः।

३ नञादिभिः साक्षान्निषेधे बोध्यमाने, परे एवं वदन्ति (नाहमेवं वदामि) इत्याद्यनुवादेन च किंचिद्व्यवधानेन निषेधे बोध्यमाने इत्यर्थः।

निषेधे बोध्यमाने प्रायशो वाक्यस्य भेदः । मिषच्छलच्छद्मकपटव्याजवपुरात्मादिशब्दैस्तु तस्मिंस्तस्यैक्यम् । क्वचिदपह्नवपूर्वकत्वं क्वचिच्चारोपपूर्वकत्वं क्वचिद्विषयिताद्रूप्य—विषयनिषेधयोरेकस्य शाब्दत्वमेकस्यार्थत्वं क्वचिदुभयोः शाब्दत्वमथोभयोरार्थत्वं विधेयत्वमनुवाद्यत्वं चेति । एवमनेके प्रकाराः संभवन्ति । परं तु न ते वैचित्र्यविशेषमावहन्तीत्यगणनीयाः । एवमपि दिङ्मात्रमुपदर्श्यते—तत्र प्रागुक्तायां सावयवापह्नुतौ प्रथमावयवेऽपह्नवपूर्वकत्वमुभयोः शाब्दत्वं विधेयत्वं वाक्यभेदश्च । द्वितीयावयवे तु वक्तृगतमूढतोक्त्या तद्गतभ्रान्तिप्रतिपत्तिव्यवहिता निषेधप्रतिपत्तिरिति निषेध आर्थः । ताद्रूप्यं शाब्दम् । विधेयत्ववाक्यभेदापह्नवपूर्वकत्वानि पूर्ववत् । चतुर्थावयवे पुनरारोपपूर्वकोऽपह्नवः । उभयोः शाब्दत्वविधेयत्वे वाक्यभेदश्च प्रथमवदेव ।

'वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण धात्रा ।
अनया कथमन्यथावलीढा न हि जीवन्ति जना मनागमन्त्राः ॥'

अत्रैकवाक्यत्वं निषेधताद्रूप्ययोरार्थत्वं विधेयत्वं[1] च, निवेशनस्य विधेयत्वात् । एवमन्यदप्यूह्यम् । अत्र च लक्षणे आरोप्यमाणमित्यस्याहार्यनिश्चयविषयीक्रियमाणमित्यर्थः । तेन

'गङ्गामाङ्गणसंमुखागतकियद्विश्वंभराधीश्वरव्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा ।

तस्मिन् तन्निषेधे । तस्य वाक्यस्य । **निषेध्ययोरिति** । मध्य इति शेषः । **अथेति** । क्वचिदित्यर्थः । **अनुवाद्यत्वं चेति** । उभयोरप्यनुवाद्यत्वं विधेयत्वं चेत्यर्थः । क्वचिदित्यस्यानुषङ्गः । असतेव(?)निरासायाह—**एवमपीति** । चमत्कारित्वाभावेऽपीत्यर्थः । **दर्श्यत इति** । उक्तप्रकारजातमिति शेषः । तत्र तेषां मध्ये । **प्रथमेति** । स्मितमिति पादप्रतिपाद्य इत्यर्थः । **अपह्नवेति** । निषेधस्य प्रागुल्लेखादिति भावः । उभयोस्ताद्रूप्यनिषेधयोः । अस्य त्रिष्वन्वयः । एतत्पदार्थस्योद्देश्यत्वादाह—**विधेयेति** । **द्वितीयेति** । मुखमिति पादप्रतिपाद्य इत्यर्थः । तुरुक्तवैलक्षण्ये । तदेवाह—**वक्तृगतेति** । स्तनद्वन्द्वमिति पादप्रतिपाद्यतृतीयावयवस्य द्वितीयेन तुल्यत्वात्तमुपेक्ष्याह—**चतुर्थेति** । लतेति पादप्रतिपाद्य इत्यर्थः । पुनःशब्दो वैलक्षण्ये । वाक्यैक्यस्योदाहरणं सप्रकारभेदमाह—**वदन इति** । अनया रसनया । अमन्त्रा जीवनोपायशून्याः । 'आर्थत्वमनुवाद्यत्वं च' इत्येव युक्तः पाठः । 'विधेयत्वं च' इत्यपपाठः । अत एवाह—**निवेशनेति** । आहार्यत्वनिवेशफलमाह—**तेनेति** । तैर्नाशितमध्यभागेन यद्विवरं तस्मादुन्मीलन्प्रकाशमान आकाश-

१ विधेयत्वमर्थात् प्रधानत्वम्, नानुवाद्यकोटौ प्रविश्य गुणीभूतत्वमित्यर्थः ।

अङ्गारप्रखरैः करैः कवलयन्सद्यो जगन्मण्डलं
मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ॥'

अत्र विरहिजनवाक्ये नायं शशाङ्कः, अपि तु सच्छिद्रो मार्तण्ड इति तु च्छायामात्रमपह्नुतेः, न त्वपह्नुत्यलंकारः। तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्, किं तु भ्रान्त्यलंकार एव।

'अलिर्मृगो वा नेत्रं वा यत्र किंचिद्विभासते।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥'

इत्यत्र मुखमरविन्दं वेति कविनिष्ठाहार्यसंशये मुखनिषेधसामानाधिकरण्येन विषयीभवतोऽरविन्दतादात्म्यस्य निश्चयविषयत्वाभावान्न संग्रहः। न चात्र विषयनिषेधस्यापदार्थत्वं शङ्क्यम्, वाशब्दार्थत्वात्। यत्तु कुवलयानन्दाख्ये संदर्भे अप्पयदीक्षितैरपह्नुतिप्रभेदकथनप्रस्तावे पर्यस्तापह्नुत्याख्यं भेदं निरूपयद्भिरभिहितम्—

'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥' इति।

अत्र चिन्त्यते—नायमपह्नुतेर्भेदो वक्तुं युक्तः, अपह्नुतिसामान्यलक्षणानाक्रान्तत्वात। तथा हि—'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत्स्थाप्यते सापह्नुतिः' इति काव्यप्रकाशोक्तलक्षणबहिर्भावस्तावत्स्फुट एव। एवं 'विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिः' इत्यलंकारसर्वस्वोक्तं लक्षणमपि नात्र प्रवर्तते।

'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।
साम्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा ॥'

नैल्यगुणो यस्येत्यर्थः। अङ्गारतीक्ष्णकिरणैरित्यर्थः। छायामात्रं सादृश्यमात्रम्। निश्चयत्वनिवेशफलमाह—**अलिरिति**। व्याख्यातमिदम्। अपदार्थत्वं कथमपि पदाप्रतिपाद्यत्वम्। **वाशब्देति**। विकल्पद्वारा वाशब्दव्यङ्ग्यत्वादित्यर्थः। एवं चार्थिको निषेध इति भावः। स कारिकाकारः स्वीयव्याख्यानमाह—**उपमेयमसत्यमिति**। अत्र ह्युपमेयपदं पदार्थोपलक्षणमावश्यकमित्येतद्विरोधश्चिन्त्य इत्यग्रे स्फुटं निरूपयिष्यते। **प्रतीताविति**। तत्रैव प्रत्यासत्तेरिति भावः। एवं पूर्वत्रापि बोध्यम्। साम्यात्सादृश्यमूलकम्।

इति चित्रमीमांसागतं तन्निर्मितमपि लक्षणमिह तथैव। तस्मात् 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति, नापह्नुतिः। उपमेयतोपमानतावच्छेदकयोः सामानाधिकरण्यस्य निष्प्रत्यूहं भानात्। तदुक्तं विमर्शिन्याम्—"'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते'। अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वाद्दृढारोपं रूपकमेव, नापह्नुतिः" इति। यदि च प्राचीनमतमुपेक्ष्यालंकाररत्नाकरेणेव मयाप्ययं प्रकारोऽपह्नुतिमध्ये गणित इत्युच्यते, तदा आहार्यतारूप्यनिश्चयस्य समानत्वाद्रूपकभेद एवापह्नुतिरित्यप्युच्यताम्। निरस्यतां च प्राचीनमुखदाक्षिण्यम्। एवमपि चित्रमीमांसागतत्वन्निर्मितापह्नुतिलक्षणस्यात्राव्याप्तिः स्थितैव। अपि च यदि 'नायं शुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र पर्यस्तापह्नुतिरित्युच्यते, तदा तस्यामेव त्वत्कृतचित्रमीमांसागतस्य—

तथैव न प्रवर्तते। उपसंहरति—**तस्मादिति**। दृढारोपमारोपदार्ढ्यसंपादकम्। **न विषमिति**। अत्रेदं चिन्त्यम्—नेदं मुखं चन्द्र इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसंपादकत्वस्य वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः। यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलंकारान्तरत्वं तर्हि प्रकृतेऽपि तुल्यमिति। **प्राचीनेति**। प्रकाशकारादीत्यर्थः। एवमग्रेऽपि। दृष्टान्तोल्लेखेन तदनुरोधेनायं गणित इति सूचितम्। अपह्नुतिः तत्त्वावच्छिन्नम्। ननु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वेन कथमपलापः, अतो दोषान्तरमाह—**एवमपीति**। उक्तरीत्या तथाङ्गीकारेऽपि। दोषान्तरमाह—**अपि चेति**। तस्यामेव

१ अत्रापि विरोधे यत्किञ्चिद्वक्तव्यमित्येव नागेशस्य परिकरबन्धः। 'नेदं मुखम्, किन्तु चन्द्रः' इति प्रसिद्धापह्नुत्युदाहरणे 'मुखं न' इति विषयतावच्छेदकपुरस्कारेण विषयस्य (मुखस्य) निषेधः स्पष्ट एव। 'विषये यन्निह्नुते' इति दीक्षितलक्षणानुसारमपि विषयस्य निषेधो रूपके विरुद्धः। एवं चात्र रूपकसाधनं दुराग्रहमात्रम्। निषेधो रूपकदार्ढ्यसंपादक इत्युक्तिरपि प्रतिपक्षिचक्षुषोरुद्धूलनमात्रम्। 'मुखं न' इति विषयनिषेधे कृते 'उपमेयतावच्छेदकपुरस्कारेण उपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यम्' एव न सिध्यतीति आरोप एव दूरापास्तः, का पुनस्तस्य दार्ढ्यसंपादनाशा? तदिदं गगनकुसुमैः शिरःशेखरनिर्माणेन विवाहसमारोहसाधनं नाम। 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' अत्र तु 'प्रेयसीमुखं सुधांशुः' इति रूपकं वादिप्रतिवादिविधया स्फुटमेव सिध्यति, 'नायं सुधांशुः' इति गगनस्थस्य चन्द्रस्य कृते निषेधः प्रकृतारोपदार्ढ्यायैवेत्यकामेनाप्यभ्युपगन्तव्यमेवेति मार्मिका विमृशन्तु।

'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।
उपरञ्जकतामेति विषयी रूपकं तदा॥'

इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्, विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात्। अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपकलक्षणम्, कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतित्वोक्तिरिति यथाकथंचित्सामञ्जस्यं विधेयमिति दिक्।

'अनल्पजाम्बूनददानवर्षं तथैव हर्षं जनयञ्जनेषु।
दारिद्र्यघर्मक्षपणक्षमोऽयं धाराधरो नैव धराधिनाथः॥'

सावयवारोपेयमपह्नुतिः।

आरोपमात्रोपायत्वे परम्परितापह्नुतिः संभवति। यथा—

'मनुष्य इति मूढेन खलः केन निगद्यते।
अयं तु सज्जनाम्भोजवनमत्तमतङ्गजः॥'

अस्याश्च ध्वनिर्यथा—

'दयिते रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः॥'

अत्र 'नैता रदनत्विषः, किं तु किंजल्कपरम्पराः। न चैतेऽलकाः, अपि त्वलयः' इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती तावत्प्राकट्येनैव निवेदिते। ताभ्यां च 'न त्वं नारी, किं तु कमलिनी' इति तृतीयापह्नुतिर्व्यञ्जन-

पर्यस्तापह्नुताविव। **रत्नाकरादीति**। आदिना दण्डिग्रहणम्। इत्थं हि काव्यादर्शे (२।३०४) तेनोक्तम्—'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्' इति। **यथाकथंचित्सामञ्जस्यमिति**। एतदनन्तरमत्र किंचित्पतितम्। तत्सर्वपुस्तके दुर्लभमेव। अनन्तरं 'विधेयमिति दिक्' इति ग्रन्थः। अवयवरूपकसंकीर्णमुदाहरति—**अनल्पेति**। दानवर्षयो रूपकम्। दारिद्र्यरूपस्योष्मणो नाशने समर्थ इत्यर्थः। **सावयवारोपेति**। अवयवारोपसहितेत्यर्थः। तद्रूपकसहितेति यावत्। **आरोपेति**। आरोपस्येत्यादिः। **दयित इति**। व्याख्यातमिदं प्राक्। तावत् आदौ। अप्राधान्ये ध्वनित्वाभावादाह—

व्यापारेण प्राधान्येन निवेद्यते, तत्संबन्धिवस्तुनिषेधारोपयोस्तन्निषेधारोपनिवेदकत्वस्य न्याय्यत्वात् । तुल्ययोगिता तु गुणतया स्थिता ।

यत्त्वप्पयदीक्षितैरपह्नुतिध्वनावुक्तम्—

"-'त्वदालेख्ये कौतूहलतरलतन्वीविरचिते
विधायैका चक्रं रचयति सुपर्णीसुतमपि ।
अपि स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥'

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः । अत्र हि चक्रसुपर्णलेखनेन 'नायं साधारणः पुरुषः, किं तु पुण्डरीकाक्षः' इति कयाचिद्व्यञ्जितम् । अन्यया तु तस्याप्येतादृशं रूपं न संभवतीत्याशयेन 'नायं पुण्डरीकाक्षोऽपि, किं तु मन्मथः' इति तदुभयमपमृज्य पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम्" इति । तदेतदापातरमणीयम् । यत्तावदुच्यते—'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किं तु पुण्डरीकाक्षः' इति कयाचिद्व्यञ्जितमिति । तत्रापह्नुतेर्द्वौ भागौ—उपमेयनिषेधः, उपमानारोपश्चेति । तयोस्तावदुपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारश्चक्रसुपर्णलेखनेनाभिव्यङ्क्तुं शक्यः,

**प्राधान्येनेति । तदिति ।** अवयवीत्यर्थः । ननु विलास-स्पृहयालुत्वरूपक्रियागुणरूप-धर्मैक्यस्य प्रकृताप्रकृतयोः सत्त्वेन तुल्ययोगितैवेयमत आह—**तुल्येति । त्वदालेख्य इति ।** त्वत्प्रतिकृतिभूतचित्र इत्यर्थः । नायकं प्रति स्वयमुक्तिः । एका तन्वी सखी । चक्रं सुदर्शनम् । सुपर्णीसुतं गरुडम् । अपि अथ । क्वचिदथैव पाठः । अपमार्जनयोग्यत्वाय हेतुगर्भं विशेषणम्—**स्विद्यत्पाणिरिति ।** अपरा तु सखी । तस्यापि पुण्डरीकाक्षस्यापि । तदुभयं चक्रसुपर्णद्वयम् । इत्याशयेन तथा लेखनेन । इति व्यञ्जितमित्यन्वयः । **तत्रेति ।** उच्यत इति शेषः । एवमग्रेऽपि भागोऽभिव्यङ्क्तुं शक्य इत्यनुष-

१ अवयवयोः रदनविद्रु-अलकयोर्निषेधः, किञ्जल्कस्य अलेश्चारोपश्च अवयविभूत-नारीत्वनिषेध—कमलिनीत्वारोपयोर्निवेदकः (उपायः) स्यादित्यस्यैवौचित्यमित्यर्थः । प्रकृतयोः रदनकान्ति-अलकयोः, अप्रकृतयोः केसर-अलिनोश्च विलसन्तीति निमित्तविलासक्रिया-स्पृहयालुत्वरूपगुणधर्मैक्याद् या तुल्ययोगिता प्रतीयते सा गुणीभूता, व्यज्यमाना अपह्नुतिरेवात्र प्रधानमित्याशयः ।

चक्रसुपर्णयोस्तत्संबन्धित्वात्। न तु नायं साधारणः पुरुष इत्युपमेयनिषेधभागोऽपि, व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात्। नाप्यनुभवसिद्धः सः, येन तद्व्यञ्जनायोपायो गवेष्येत। नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते, येनानुभवकलहोऽपि स्यात्। न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्, रूपकोच्छेदापत्तेः। मुखं चन्द्र इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात्। तत्रापि मुखनिषेधावगमे जितमपह्नुत्या।

अथ मुखं चन्द्र इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रताद्रूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृशसाधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकारकरूपकमेव भवितुमीष्टे, नापह्नुतिः। यदपि चोच्यते 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्यादि। तत्र यद्यपि चक्रसुपर्णदूरीकरणेन नायं पुण्डरीकाक्ष इति निषेधः, पुष्पचाप-ध्वजगतमकरयोर्लेखनेन च मन्मथोऽयमित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति, तथापि नासावपह्नुतिः। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इति

---

ज्यते। **व्यञ्जकेति**। चक्रसुपर्णलेखनस्येत्यर्थः। ननु कथं तदनुभवोऽत आह—**नापीति**। स तादृशनिषेधभागः। उक्तपद्य इति शेषः। गवेष्येत अन्विष्येत। ननु विनिगमनाविरहोऽत आह—**नापीति**। **लभ्यत इति**। प्रकृतपद्य इति शेषः। **दुर्घट इति**। तज्ज्ञानस्य तत्र प्रतिबन्धकत्वादिति भावः। सोऽपि निषेधभागोऽपि। अन्यथानुपपत्त्येति भावः। ननु तत्रापि तत्स्वीकारोऽत आह—**तत्रापीति**। रूपकेऽपीत्यर्थः। एवं च तदुच्छेदापत्तिरिति भावः। बाधज्ञानमाहार्यज्ञाने न प्रतिबन्धकमित्याशयेनाह—**अथेति**। **सामेति**। न त्ववच्छेदकावच्छेदेनेति भावः। **आरोप्येति**। आहार्यज्ञानविषयीक्रियमाणतयेत्यर्थः। तदाकारमाह—**असाविति**। चस्त्वर्थे। द्वितीयश्चो व्यङ्ग्यत्वसमुच्चये। ननु निषेधसामानाधिकरण्येनोपमानतादात्म्यारोपसत्त्वात्कथं

---

१ तादृशनिषेधव्यञ्जनस्योपायभूतः शब्दः अर्थो वा उपलभ्येत चेत्तर्हि अत्रोपमेयनिषेधस्यानुभवो भवतीति विवादोऽप्युत्तिष्ठेदित्याशयः।

त्वत्कृतलक्षणस्याप्यत्रासत्त्वात् । अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात् । नहि पूर्वारोपिततामात्रेण प्रकृतत्वं वक्तुं शक्यम् । प्रकृतपदस्यारोपविषयपरतायां 'निषिद्ध्य विषय'मित्यादिना क्त्वाप्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात् । काव्यप्रकाशकृतापि 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा' इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च । प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्, 'प्रकृतस्य निषेधेन' इत्यादिलक्षणं कुर्वता भवतैव तस्या बहिःकरणात् ।

एवमप्युक्तपद्ये कोऽलंकारो व्यङ्ग्य इति चेत् ? विच्छित्तिवैलक्षण्येऽतिरिक्तः, अन्यथा त्वपह्नुतिरेवास्तु । लक्षणं तु तदा प्रसक्तयत्किंचिद्वस्तु-

तदभावोऽत आह—**अत्र हीति** । ननु पूर्वमारोपितत्वात्प्रकृत एव सोऽत आह—**नहीति** । **निषिध्य विषयमित्यादिनेति** । "-'निषिद्ध्य विषयं साम्यादन्यारोप' इति तु क्त्वाप्रत्ययेन लक्षणं नोक्तम् । वक्ष्यमाणोदाहरणे आरोपपूर्वकापह्नवेऽव्याप्तिप्रसङ्गात्" इति तैरुक्तम् । फलं क्वचिदव्याप्तिरूपमनिष्टं फलम् । तत्र चित्रमीमांसायाम् । अपिसूचितं दोषान्तरमाह—**काव्येति** । पुण्डरीकाक्षस्तृपमानमिति भावः । **प्राचीनेति** । प्रागुक्तदण्डिमतेत्यर्थः । इह चित्रमीमांसायाम् । **कुशेति** । ससारकाष्ठाद्यवलम्बनमेवोचितं न कुशादेरिति तथा सर्वसिद्धससारमतावलम्बनमेवोचितं नैकदेशिमतस्येत्यर्थः । तदेवाह—**प्रकृतेति** । एवः प्रत्यासत्तिबोधकः । अन्यलक्षणबहिर्भावोऽपिबोध्यः । विच्छित्तिश्चमत्कृतिः । अतिरिक्तोऽपह्नुत्यन्यो रूपकाख्यः । अन्यथा तु विच्छित्तिविशेषाभावे । ननु प्रागुक्तसर्वमतसिद्धापह्नुतिसामान्यलक्षणानाक्रान्तत्वात्कथं तत्त्वमत आह—**लक्षणं त्विति** । **तदेति** । तत्रापह्नुतित्वाङ्गीकर्तृदण्ड्यादिमत इत्यर्थः । **प्रसक्तेति** । प्रसक्तत्वं च यथाकथंचित्, न तु प्रकृतत्वापेक्षेति भावः । अस्तु तदेत्याभ्यामस्यानभिमतत्वं

१ प्रकृतपदम् आरोपविषयपरमिति भवतैव स्फुटीकरणादिति योजना । अयं भावः—आरोपस्य विषयः प्रकृतः । विषयश्च वर्ण्यतया उपमेयमेव भवति । अत्र तु वर्ण्यो नायकः (राजादिः) । ततश्च पुण्डरीकाक्षस्य पूर्वारोपितत्वेपि वस्तुतो वर्ण्यत्वाभावात् तस्य निषेधे प्रकृतस्य निषेधो न सिध्यतीत्याशयः ।

निषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपत्वमेव । तस्मात्सर्वमेवेदमहृदयंगमं सहृदयानाम् ।

इति रसगङ्गाधरेऽपह्नुतिप्रकरणम् ॥

अथोत्प्रेक्षाप्रकरणम्—

तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयत-

सूचितम्, अतः स्वसिद्धान्तरीत्योपसंहरति—**तस्मादिति**। दीक्षितोक्तं यथाकथंचित्तत्समर्थनं चेत्यर्थः। **अहृदयंगममिति**। अत्रेदं चिन्त्यम्—दीक्षितैर्हि "दण्डी त्वपह्नुतेः साधर्म्यमूलत्वनियममनादृत्य 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्' इति लक्षयित्वा उदाजहार—'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः। चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः ॥' इत्याद्युपक्रम्य 'त्वदालेख्ये' इत्याद्युक्तमिति। तदनुसारेणैव तत्रापह्नुतिध्वनिरुदाहृत इति न किंचिदहृदयंगमम्। प्रकाशविरोधोऽपि न। तत्रोपमेयपदस्य पदार्थोपलक्षणत्वात्। अन्यथा 'केसेसु बलामोडिअ' इत्यत्र 'स्वयं न प्रपलाय्य गतास्त्वद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कंदरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते'—" इति प्रकाशग्रन्थासंगतिः स्यादिति बोध्यम् ॥ इति रसगङ्गाधरमर्मप्रकाशेऽपह्नुतिप्रकरणम् ॥

उत्प्रेक्षां लक्षयति—**अथोत्प्रेक्षेति**। विनिगमनाविरहादन्योन्याभावात्यन्ताभावघ-

---

१ तद्भिन्नत्वेन प्रमितस्य (ज्ञातस्य) पदार्थस्य रमणीयतद्वृत्तितद्धर्मसंबन्धनिमित्तकम् [अर्थात् तस्मिन्पदार्थे वर्तमानश्चमत्कारजनको यस्तत्संबन्धी धर्मः तादृशधर्मं निमित्तीकृत्य] तत्त्वेन संभावनम् उत्प्रेक्षा (एका कोटिः)। संभावनं च अयोग्यत्वाभावानुसंधानविषयीकरणम् (मुखे चन्द्रत्वयोग्यताया अभावो न, अपि तु तादृशयोग्यता अस्तीत्यनुसंधानम्)। तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतत्समानाधिकरणतद्धर्मसंबन्धनिमित्तकं तद्वत्त्वेन संभावनं वा उत्प्रेक्षा (द्वितीया कोटिः)। अयं भावः—तद्भिन्ने अर्थात् अतस्मिन्नपि पदार्थे तत्त्वेन [चन्द्रभिन्नेऽपि मुखे चन्द्रत्वेन] संभावनम् उत्प्रेक्षा, तदिदं संभावनं तादात्म्य(अभेद)संबन्धेन। संभावने च—तस्मिन् (संभावनाविषयीभूते) पदार्थे वर्तमानश्चमत्कारकस्तद्धर्मः आह्लादकत्वादिः निमित्तम्, सेयं धर्म्युत्प्रेक्षा। तदभाववति अर्थात् यो धर्मस्तस्मिन् पदार्थे नास्ति ईदृशे पदार्थे तद्वत्त्वेन संभावनम् [यथा निधिं लावण्यानामिति पद्ये ब्रह्मणि (धर्मिणि) मोहो नास्ति तथापि मोहवत्त्वेन संभावनम्]। तदिदं संभावनं तादात्म्येतरेण समवायादिसंसर्गेण। अत्र च निमित्तं तत्समानाधिकरणः (उत्प्रेक्ष्यमाणधर्मसहचारी) धर्मः। [यथा निधिं लावण्यानामित्यत्र मोहस्य ब्रह्मणि समवायसंबन्धेन संभावनम्। निमित्तं च मोहसमानाधिकरणः अविचार्यकारित्वरूपो धर्मः], सेयं धर्मोत्प्रेक्षा।

२ हन्त नागेशस्यात्रापि प्रतारणपाटवमिति खेदेन वक्तव्यं स्यात्। 'त्वदालेख्ये' इत्याद्युदाहरणं दण्डिमतानुसारमिति स समाधत्ते। किन्तु चित्रमीमांसायां 'साधर्म्यमूला त्वपह्नुतिरिति तेन व्याहृता' अत्रैव दण्डिमतानुवादः समाप्यते। त्वदालेख्ये इत्युदाहरणं दत्त्वा 'इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः' इति दीक्षितानां स्वमतमिदम्। अन्यथा सर्वेष्वलंकारेषु यथा तत्तदलंकारध्वनिरपि दीयते तद्वदपह्नुतावकृते प्रकरणपूर्तिरेव न सिध्येदिति विचार्यं सुधीभिः।

**द्वृत्ति–तत्समानाधिकरणान्यतरतद्धर्मसंबन्धनिमित्तकं तत्त्वेन तद्भि-त्त्वेन वा संभावनमुत्प्रेक्षा ॥**

'लोकोत्तरप्रभाव त्वां मन्ये नारायणं परम्' इत्यत्र तादृशप्रभावस्य नारायणत्वव्याप्यतासंभावनादशायां सामग्र्यभावेनानुमित्यनुदयाज्जायमानायां नारायणेनानेन प्रायशो भवितव्यमिति संभावनायामतिप्रसङ्गवारणाय तद्भिन्नत्वेन प्रमितस्येति संभावनायामाहार्यतां[1] गमयति । एतेन

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥'

इत्यत्र संभावनायाम्, 'धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इत्यत्र भ्रान्तौ च नातिप्रसङ्गः ।

'वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥'

अत्र जगज्जयसंभावनायामतिप्रसङ्गवारणाय रमणीयतद्धर्मनिमित्तकं[2]-

---

टितं लक्षणद्वयं युगपदाह—**तद्भिन्नत्वेति** । **लोकोत्तरेति** । राजानं प्रत्युक्तिः । **तादृशेति** । लोकोत्तरेत्यर्थः । सामग्री निश्चयरूपव्याप्तिज्ञानादिरूपानुमितिसामग्रीत्यर्थः । ननु कथमेतासां वारणमत आह—**संभावनेति** । इदंचेत्यादिः । संभावनायां लक्षणघटकीभूतायाम् । तथा चोक्तसंभावनाऽनाहार्येति नातिप्रसङ्ग इति भावः । अस्य फलान्तरमाह—**एतेनेति** । धाराधरो मेघः । भ्रान्तिरपीयमनाहार्या । अन्यथा कार्याभावापत्तेः । **स्मितेति** । हास्यशोभालेशमित्यर्थः । तदेति पूर्वान्वयि । **दशेति** । पञ्चबाणेन मदनेनेत्यर्थः । **जगज्जयेति** । जगति जयसंभावनायामित्यर्थः । **तद्धर्मेति** ।

१ संभावनाया आहार्यत्वस्वीकारेण—असामान्ये राजनि अलौकिकप्रभाववशाद् या अनाहार्या ( सत्या ) नारायणत्वसंभावना [ नारायणत्वं काममसत्यं परं तत्त्वसंभावना तु सत्यैव ], तस्यामुत्प्रेक्षात्वं न प्रसक्तम् । एवमेव अयं धाराधरः स्यादिति केकिनां संभावना, 'धाराधरोयम्' इति तेषां भ्रान्तिश्च, अनाहार्या । अत एव तु नृत्यरूपकार्यजननम् । ततश्चैवंविधायां संभावनायामुत्प्रेक्षालंकारस्य न प्रसक्तिरिति बोध्यम् ।

२ 'तद्धर्मनिमित्तकं' संभावनम्, इति लक्षणे निवेशात् संभावनं यन्निष्ठं तद्धर्मनिमित्तकत्वमपेक्षितम् । अर्थात् तस्मिन् संभावने विषय–विषयिगतो यो धर्मः स निमित्तं स्यात् । अत्र तु स्मितं संभावनाया उत्थापकमवश्यम्, परं तत् ( स्मितम् ) तद्धर्मः अर्थात् विषयः ( जगत् ), विषयी ( विजितम्, यतो विजितत्वं संभाव्यते ), अनयोर्धर्मः ( एतन्निष्ठः ) नास्तीति नातिव्याप्तिरित्यर्थः ।

मिति। स्मितस्य संभावनोत्थापकत्वेऽपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावान्न दोषः। एतेन—

'प्रायः पतेद्द्यौः शकलीभवेद् ग्लौः सहाचलैरम्बुधिभिः स्खलेद्गौः।
नूनं ज्वलिष्यन्ति दिशः समस्ता यद् द्रौपदी रोदिति हा हतेति॥'

अत्रापि रोदनकारणीभूतकेशग्रहणादिजन्यपापनिमित्तोत्थापितायां स्वर्गपतनसंभावनायां नातिप्रसङ्गः। प्रायः स्थाणुनानेन भवितव्यम्, नूनं पुरुषेणानेन भाव्यम्, दूरस्थोऽयं देवदत्त इवाभाति, इत्यादौ निश्चलत्वचञ्चलत्वादिसाधारणधर्मनिमित्तायां संभावनायामतिप्रसङ्गः स्यात्, अतो रमणीयत्वं धर्मगतमुपात्तम्। रूपकवित्तावतिप्रसङ्गवारणाय संभावनमिति। अत्र च तादात्म्येन संसर्गेण धर्म्युत्प्रेक्षायाः, संसर्गान्तरेण धर्मोत्प्रेक्षायाश्च संग्रहायैकोक्त्या लक्षणद्वयं विवक्षितम्।

सा चोत्प्रेक्षा द्विविधा—वाच्या, प्रतीयमाना च। इव, नूनम्, मन्ये, जाने, अवेमि, ऊहे, तर्कयामि, शङ्के, उत्प्रेक्षे, इत्यादिभिः कयङाचारक्विबादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री, तत्र वाच्योत्प्रेक्षा। यत्र च प्रतिपादकशब्दरहितं तत्सामग्रीमात्रम्, तत्र प्रतीयमाना। यत्र तत्सामग्रीरहितं प्रतिपादकमात्रम्, तत्र संभावनामात्रमेव, नोत्प्रेक्षा।

सापि प्रत्येकं त्रिविधा—स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा, फलोत्प्रेक्षा चेति। तत्र जातिगुणक्रियाद्रव्यरूपाणां तदभावरूपाणां च पदार्थानां तादात्म्येनेतरेण वा संबन्धेन जातिगुणक्रियाद्रव्यात्मकैर्यैस्तैः समुचितैरुपात्तैर-

तद्धर्मसंबन्धेत्यर्थः। ननु स्मितरूपधर्मनिमित्तकत्वमरत्वेनात आह—**स्मितेति**। हास्यस्य तत्सहकारित्वादिति भावः। **जगदिति**। जगद्विजितरूपौ यौ विषयविषयिणौ तन्निष्ठत्वाभावादित्यर्थः। अस्य प्रत्युदाहरणान्तरमाह—**एतेनेति**। ग्लौश्चन्द्रः। गौः पृथ्वी। भूतत्वं केशग्रहणादिविशेषणम्। पापस्य द्यौः पतेदित्यादिविषयविषयिसाधारणत्वाभावादिति भावः। स्थाणुना वृक्षेण। यथाक्रमेण धर्मानाह—**निश्चलेति**। आदिना विलक्षणाकारत्वपरिग्रहः। **रमणीयत्वमिति**। तत्त्वं च कविप्रतिभानिर्वर्तितत्वमिति भावः। ननु ज्ञानमित्येवास्तु अत आह—**रूपकेति**। नन्वेवमपि तदभाववत्त्वेनेत्याद्यधिकमत आह—**अत्र चेति**। उक्तलक्षणवाक्य इत्यर्थः। अलंकारसर्वस्वरीत्या इमा विभजते—**सा चोत्प्रेक्षेति**। **यत्रोत्प्रेक्षासामग्रीति**। सा च रमणीयतद्धर्मसंबन्धादिरूपा। **सापीति**। एवं च द्वादश भेदाः संपन्ना इति भावः। तत्र तासां

नुपात्तैर्निष्पन्नैर्निष्पाद्यैर्वा निमित्तभूतैर्धर्मैर्यथासंभवं जातिगुणक्रियाद्रव्यात्मकेषु विषयेषूत्प्रेक्षणं स्वरूपोत्प्रेक्षा। तत्राभेदेन संसर्गेण धर्मिस्वरूपोत्प्रेक्षा, संसर्गान्तरेण धर्मस्वरूपोत्प्रेक्षेति चोच्यते। उक्तविधेषु पदार्थेषु प्रागुक्तप्रकाराणां पदार्थानां तथाविधैरेव निमित्तैर्यथासंभवं हेतुत्वेन फलत्वेन च संभावनं हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्यते।

एताश्च क्वचिन्निष्पन्नशरीराः क्वचिन्निष्पाद्यशरीराश्चेत्येवमाद्यनल्पविकल्पाः संपद्यन्ते। तथापि दिङ्मात्रमुपदर्श्यते।

आख्यायिकायां जात्यवच्छिन्नस्वरूपोत्प्रेक्षा यथा—

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति। अत्र भागीरथ्यां द्रव्ये जातौ वा हिमगिरिसंबन्धी भुजत्वजात्यवच्छिन्नस्तादात्म्येनोत्प्रेक्ष्यते। तत्र च भागीरथीगतानां श्वैत्यशैत्यलम्बत्वजलधिजठरप्रविष्टत्वानां धर्माणां निमित्ततासिद्धये विषयिहिमगिरिभुजगतत्वमवश्यं संपादनीयम्। तेषां च मध्येऽनुपात्तयोः श्वैत्यशैत्ययोर्हिमगिरिसंबन्धित्वादेव भुजगतत्वं संपन्नम्। इतरयोरपि संपादनाय तनयमैनाकगवेषणं फलमुत्प्रेक्षितम्, तत्साधनताज्ञानस्य लम्बत्वजलधिजठरप्रवेशानुकूलयत्नजनकत्वात्। एवं च विषयिगततादृशगवेषणफलकलम्बत्वजलधिजठरप्रविष्टत्वाभ्यां विषयगतयोः साहजिकलम्बत्वजलधिजठरप्रविष्टत्वयोरभेदाध्यवसानातिशयोक्त्या सा-

तिसृणां मध्ये। **द्रव्येति**। संज्ञाशब्दाभिप्रायमिदम्। एवमग्रेऽपि। उक्तमेव विशदयति—**तत्रेति**। तासां स्वरूपोत्प्रेक्षाणां मध्य इत्यर्थः। हेतूत्प्रेक्षाफलोत्प्रेक्षे आह—**उक्तेति**। जात्यादिष्वित्यर्थः। एवमग्रेऽपि। **अनल्पेति**। बह्वित्यर्थः। **तनयेति**। हिमगिरेरित्यादिः। लम्बत्वप्रविष्टत्वे भुजविशेषणे। **द्रव्ये जातौ वेति**। संज्ञाशब्दवाच्यायां जातिशब्दवाच्यायां वेत्यर्थः। तेषां च उक्तधर्माणाम्। इतरयोरपि उपात्तयोर्लम्बत्वतत्प्रविष्टत्वयोरपि। **तत्साधनतेति**। गवेषणसाधनतेत्यर्थः। **यत्नेति**। अन्यथा गवेषणाऽसंभवादिति भावः। **विषयिगतेति**। विषयिहिमगिरिभुजगताभ्यामित्यर्थः। **तादृशेति**।

१ जातिगुणादीन् निमित्तीकृत्य जातिगुणादिषु विषयेषु जातिगुणादिरूपाणां विषयिणां संभावनं स्वरूपोत्प्रेक्षेति वाक्यस्य सारम्, अवशिष्टानि तत्तेषां विशेषणानीति बोध्यम्।

२ जातिगुणादिषु पदार्थेषु जात्यादिभिर्निमित्तैः जातिगुणादिकस्य पदार्थस्य हेतुत्वेन फलत्वेन च संभावनम्, जात्यादिरूपः पदार्थो जात्यादिरूपं पदार्थं प्रति हेतुः फलं वा यत्र संभाव्यते तत्र हेतुफलोत्प्रेक्षे–इत्याशयः।

३ 'तद्धर्मसंबन्धनिमित्तकम्' इत्यत्र तद् ( विषय-विषयिगत )धर्मस्यैव गृहीतत्वात्।

धारण्यसंपत्तौ निमित्तता। न चात्र फलस्याप्युत्प्रेक्षणात्फलोत्प्रेक्षेति वक्तुं शक्यम्। उत्प्रेक्ष्यमाणफलनिष्पादितनिमित्तोत्थापितायां[1] स्वरूपोत्प्रेक्षायामेव विधेयत्वाच्चमत्कृतेर्विश्रमात्[2], उत्प्रेक्षाप्रतिपादकस्य प्रत्ययस्य फलेनानन्वयाच्च, तयैवात्र व्यपदेशो युक्तः। अनिगीर्णविषया चेयमुपात्तानुपात्तगुण[3]क्रियात्मकनिमित्ता निष्पाद्यविशिष्टशरीरा जात्युत्प्रेक्षा हिमगिरिभुजस्य कविनैव निष्पादितत्वात्।

तादात्म्येन गुणस्वरूपोत्प्रेक्षा यथा—

'अम्भोजिनीबान्धवनन्दनायां कूजन्बकानां समजो विरेजे।
रूपान्तराक्रान्तगृहः समन्तात्पुञ्जीभवञ्शुक्ल इवाश्रयार्थी॥'

अत्रैकाधिकरण्यापन्ने कूजनविशिष्टे बकत्वजात्यवच्छिन्ने विषये पुञ्जीभवनविशिष्टः शुक्लगुणस्तादात्म्येनोत्प्रेक्ष्यते। तत्र बकगतानां कूजननैर्मल्यपुञ्जीभवनानां शुक्लगुणगतत्वम[4]न्तरेण बकशुक्लयोरभेदस्य दुरुपपादत्वात्तत्सिद्धये तेषां विषयिगतत्वं साध्यम्। तत्र नैर्मल्यस्यानुपात्तस्य यथाकथंचिदुत्प्रेक्ष्यमाणे विषयिणि सिद्धत्वात्कूजनपुञ्जीभवनयोर्निष्पादनाय

तनयमेनाकेत्यर्थः। **विषयेति**। भागीरथीत्यर्थः। विनिगमनाविरहादाह—**उत्प्रेक्षेति**। प्रत्ययस्य क्यङः। उपसंहरति—**तयैवेति**। एवं चेत्यादिः। स्वरूपोत्प्रेक्षयैवेत्यर्थः। क्वचित् 'तथैव' इति पाठः सोऽप्युक्तार्थक एव। अत्र भेदानुपपादयति—**अनिगीर्णेति**। भागीरथ्या उपादानात्। **उपात्तेति**। इदं च यथासंभवं बोध्यम्। न तु यथासंख्यम्। निष्पाद्यत्वे हेतुमाह—**हिमेति**। एवं चैकदेशस्य सिद्धत्वेऽपि विशिष्टस्य निष्पाद्यत्वं स्पष्टमेवेति भावः। **अम्भोजिनीति**। सूर्यकन्यायां यमुनायामित्यर्थः। समजः संघः। **रूपान्तरेति**। नीलादीत्यर्थः। **ऐकाधिकरण्यापन्न इति**। समुदायापन्न इत्यर्थः। तत्र तयोर्मध्ये। तत्सिद्धये शुक्लगुणगतत्वसिद्धये। तेषामुक्तधर्माणाम्। **विषयीति**। शुक्लगुणेत्यर्थः। **यथाकथंचिदिति**। नन्वेवं हेतूत्प्रेक्षैवेयं कुतो नात

१ उत्प्रेक्ष्यमाणेन गवेषणफलेन निष्पादिते ये निमित्ते (लम्बत्व-जलधिप्रविष्टत्वे) तदुत्थापितायाम्)

२ प्राधान्यात्।

३ क्रियात्मके लम्बत्वप्रविष्टत्वे उपात्ते, श्वैत्यशैत्ये गुणात्मके चानुपात्ते। अत्र यथासंभवमिति नागेशटीका। क्रियात्मकस्य प्रविष्टत्वस्य (लम्बत्वस्यापि) उपात्ततया यथासंख्यत्वं न घटते इति तस्याशयः।

४ विना।

रूपान्तराक्रान्तगृहत्वमाश्रयार्थित्वं च हेतुत्वेनोत्प्रेक्षितम्[1] । इहापि प्रागवत्साहजिकयोः[2] कल्पिताभ्यामभेदाध्यवसानात्साधारण्यम् । एवमन्यत्राप्यूह्यम् । पूर्वं हि यथा फलस्योत्प्रेक्षणेऽपि न फलोत्प्रेक्षा तथेहापि हेतोरिति ।

क्रियास्वरूपोत्प्रेक्षा यथा—

'कलिन्दजानीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः ।
ध्वान्तेन वैराद्विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः ॥'

अत्र प्रथमान्तविशेष्यकबोधवादिनामभेदसंसर्गेण कलिन्दजानीरार्धमग्न—कृतभूरिशब्दोभयविशिष्टेषु बकेषु विषयेषु ध्वान्तकर्तृकवैरहेतुकनिगरणकर्माभिन्नोत्प्रेक्षितशशिकिशोरतादात्म्योत्प्रेक्षणपूर्वकं[3] क्रोशनकर्तृत्वं धर्म उत्प्रेक्ष्यते । तत्र तादात्म्योत्प्रेक्षणे धर्म्युत्प्रेक्षायां साधारणो धर्मः, संबन्धान्तरेणोत्प्रेक्षणे धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयगतो निमित्तमिति स्थिते प्रकृते क्रोशनकर्तृत्वरूपधर्मोत्प्रेक्षायां तत्समानाधिकरणनिगरणकर्मत्वरूपधर्मस्य विषयगतत्वसिद्धयेऽनुवाद्यतया[4] शशिकिशोर-

आह—**पूर्वं हीति** । **कृतभूरीति** । यो निमज्जति स शब्दं करोतीति लौकिकम् । वादिनामित्यस्य धर्म उत्प्रेक्ष्यत इत्यत्रान्वयः । शानजर्थमाह—**कर्मेति** । तदभिन्नत्वेनोत्प्रेक्षितेत्यर्थः । अत्रोत्प्रेक्षितेत्यधिकम् । तयोरभेदस्य स्वारसिकत्वात् । तत्र उत्प्रेक्षयोर्मध्ये । पूर्वामाह—**तादेति** । द्वितीयामाह—**संबन्धेति** । **विषयेति** । बकेत्यर्थः । तत्कृतचमत्काराभावादाह—**अनुवाद्येति** । उत्प्रेक्ष्यते । बकेष्विति शेषः । नन्वेवमपि

१ अन्याक्रान्तगृहा हि शब्दं कुर्वन्ति पुञ्जीभवन्ति च । एवं आश्रयार्थिनोपि शब्दायन्ते संघीभवन्ति च ।

२ स्वाभाविकयोः पुञ्जीभवननैर्मल्ययोः ( अर्थात् बकनिष्ठयोः ) कल्पिताभ्यां ( शुक्लगुणगताभ्याम् ) पुञ्जीभवननैर्मल्याभ्यां सह अभेदाध्यवसानमित्यर्थः ।

३ ध्वान्तकर्तृकं वैरहेतुकं यद् निगरणं ( गलाधःकरणम् ) तस्य कर्माभिन्नत्वेन ( कर्मत्वेन ) उत्प्रेक्षिता ये शशिकिशोरास्तत्तादात्म्योत्प्रेक्षणपूर्वकम्, अर्थात् बकेषु विषयेषु विषयिणां शशिकिशोराणां तादात्म्येन ( अभेदसंसर्गेण ) संभावनमिति पूर्वं ( मूलभूतोत्प्रेक्षा ) धर्म्युत्प्रेक्षा । तदनन्तरं 'मन्ये क्रोशन्ति' इतिप्रतिपाद्या धर्मोत्प्रेक्षा, इत्याशयः ।

४ क्रोशनं यत्र ( शशिकिशोरेषु ) तिष्ठति तदधिकरणको यो निगरणकर्मत्वरूपो धर्मः तस्य विषय(बक)गतत्वसिद्धये । अयं भावः—निगरणं शशिन एव भवति न बकानाम्, ततश्च बकानां निगरणकर्मतासिद्धये शशिकिशोरतादात्म्यमुत्प्रेक्ष्यते इत्याशयः ।

तादात्म्यमनुपात्तधर्म्यनिमित्तकमुत्प्रेक्ष्यते। तत्र यथा विशिष्टोपमायामुपमानोपमेयविशेषणतद्विशेषणानामार्थमौपम्यम्, एवमत्रापि विषयबकवि-शेषणतद्विशेषणयोरधर्मज्जनयमुनाजलयो[1]र्मूलोत्प्रेक्षाविषयिशशिकिशोरविशेषणतद्विशेषणाभ्यां निगरणध्वान्ताभ्यामभेद आर्थः। ततश्च ध्वान्तकर्तृकनिगरणे सिद्धे[2] मुख्योत्प्रेक्षानिर्वाहः। क्रोशनशब्दयोरपि बिम्बप्रतिबिम्बभावेनाभेदः। तेन कलिन्दजानीराधर्मग्नकृतभूरिशब्दोभयाभिन्ना बका ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः[3] क्रोशनक्रियानुकूलव्यापारवन्त इवेति बोधाकारः। आख्याते भावप्राधान्ये त्वभेदेन क्रोशनक्रियोत्प्रेक्षा। तत्र[4] शाब्दे वृत्ते वकविशेषणतया प्रतीयमानमपि शब्दनं

---

साधारणधर्माभावात्कथं प्रधानोत्प्रेक्षानिर्वाहोऽत आह—**तत्रेति**। तस्मिन्सतीत्यर्थः। **मूलोत्प्रेक्षेति**। मूलोत्प्रेक्षाया विषयी यः शशिकिशोर इत्याद्यर्थः। क्रियोत्प्रेक्षोपपादकत्वात्तस्या मूलोत्प्रेक्षात्वम्। **सिद्ध इति**। बकानामित्यादिः। **मुख्योत्प्रेक्षेति**। क्रियोत्प्रेक्षेत्यर्थः। प्रकारान्तरेणापि साधारण्यं धर्मस्याह—**क्रोशनेति**। शशिकिशोरोभयानुकूलक्रोशेति। 'निगीर्यमाणाभिन्नशशिकिशोराभिन्नाः क्रोशनक्रियानुकूल-' इति शुद्धः पाठः। एवं नैयायिकमतेन बोधमुक्त्वा वैयाकरणमतेनाह—**आख्यात इति**। नन्वभेदेन बके तदुत्प्रेक्षा बाधिता अत आह—**तत्रेति**। उत्प्रेक्ष्यमाणक्रोशनक्रियाया-

---

१ विषयभूता ये बकास्तद्विशेषणम् अधर्मज्जनम्। तस्य (अधर्मज्जनस्य) विशेषणं यमुनाजलम्, एतयोर्द्वयोः-मूलोत्प्रेक्षायाः (प्रधानभूतक्रियोत्प्रेक्षोपपादकतया मूलभूतायाः) विषयिभूतानां शशिकिशोराणां विशेषणं निगरणम् तस्य (निगरणस्य) विशेषणं ध्वान्तम् एताभ्यां सह अभेदः।

२ शशिकिशोराभेदेन बकानामपि ध्वान्तकर्तृकनिगरणे सिद्धे मुख्योत्प्रेक्षायाः क्रोशनोत्प्रेक्षाया निर्वाहः, यतो हि यो निगीर्यमाणो भवति स तद्दुःखात्क्रोशति।

३ बकेषु ध्वान्तनिगरणसिद्ध्या निगीर्यमाणत्वस्य शशिकिशोरत्वस्य चेत्युभयोरभेद इति बोध्यम्।

४ ननु भावप्रधानमाख्यातमिति वैयाकरणानां मते शब्दनक्रियायां क्रोशनक्रियायास्तादात्म्येन संभावनमिति धर्म्युत्प्रेक्षा सेयमित्युच्यते। किन्तु शब्दनम् (विषयः) नात्र पृथङ्निर्दिष्टम्। अपि तु 'कृतभूरिशब्दाः (बकाः)' इति बकानामेव विशेषणीभूतं तत्। एवं च शब्दने (विषये) कथं क्रोशनतादात्म्योत्प्रेक्षा इति शङ्का। मञ्चाः क्रोशन्तीत्यत्र मञ्चेषु विषयिषु मञ्चस्थानां यथा अभेदाध्यवसानम् तथा शब्दकर्तृष्वेव शब्दनस्याध्यवसानं कृत्वा, तस्मिन् शब्दने (विषये) क्रोशनक्रियाया उत्प्रेक्षा साध्यते इति तत्समाधानम्। शाब्दे बोधे निष्पन्ने इत्यनेन सूचितं ग्रन्थकृता यत् शाब्दबोधस्तु पूर्वोक्त एव, वैयाकरणानां मते केवलम् आर्थी सेयं क्रोशनक्रियोत्प्रेक्षेत्याशयः। अत एव 'क्रोशनक्रियायां च तादृशबका विशेषणम्' इत्याद्युक्तम्। अन्यथा क्रोशनरूपव्यापारप्राधान्ये शशिकिशोराणामेव शब्दमर्यादया विशेषणता स्यादिति बोध्यम्।

विषयतयावतिष्ठते, अध्यवसानवशात् । क्रोशनक्रियायां च तादृशबका विशेषणम्, तादृशबकेषु चाभेदेन तादृशशशिकिशोराः, न तु शशिकिशोर एव साक्षात्क्रियायाम् । एवं च बकानामनन्वयापत्तेः । विषयविषयि-विशेषणानां प्राग्वदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतिपत्तिः ।

तथा—

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः ।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः ॥'

अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षेत्येकं दर्शनम् । किरणव्यापने विषये चन्द्रकर्तृकसुधाकरणकलेपनस्य तादात्म्येनोत्प्रेक्षण-मिति द्वितीयम् । तत्र प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपा-त्तनिमित्ता, विषयस्योपादानादुपात्तविषया । द्वितीयेऽपि तस्यैव निमित्तस्या-नुपादानादनुपात्तनिमित्ता, विषयस्य निगीर्णतयानुपात्तविषयेति विशेषः ।

तादात्म्येन द्रव्यस्वरूपोत्प्रेक्षा यथा—

'कलिन्दशैलादियमा प्रयागं केनापि दीर्घा परिखा निखाता ।
मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति ॥'

अत्र यमुनायां नीलत्वदीर्घत्वनिमित्तकमाकाशतादात्म्योत्प्रेक्षणम् ।

---

मित्यर्थः । वृत्ते बोधे निष्पन्ने वा । **अध्यवसानेति** । अध्यवसानं च मञ्चाः क्रोशन्ती-त्यादिवद्विषयिवाचकशब्देनेति बोध्यम् **तादृशेति** । विशेषणद्वयविशिष्टेत्यर्थः । एव-मग्रेऽपि । **तादृशेति** । एकविशेषणविशिष्टेत्यर्थः । क्रियायां क्रोशनेत्यादिः । एवं च एवं सति । एवं च तादृशशशिकिशोराभिन्नकर्तृकं क्रोशनमिति बोध्यम् । अस्या उदाहरणान्तरमाह—**तथेति** । **शम्बरस्येति** । मदनस्येत्यर्थः । प्राग्वदत्रापि मतभे-दमाह—**अत्रापीति** । **तादृशेति** । सुधाकरणकजगन्मध्यकर्मकेत्यर्थः । **चन्द्रेति** । तदभिन्नेत्यर्थः । **करणकेति** । जगन्मध्यकर्मकेत्यपि बोध्यम् । विषयस्य चन्द्रस्य । तस्यैव धवलीकारकत्वस्यैव । विषयस्य किरणव्यापनस्य । **निगीर्णेति** । सुधाभिर्लि-म्पतीत्यनेनेति भावः । **कलिन्देति** । तदाख्यपर्वतादित्यर्थः । इयं दृश्या गर्तरूपा । आ प्रयागं प्रयागमभिव्याप्य । अस्यां परिखायाम् । इदं दृश्यं यमुनारूपम् । ननु प्राग्व-ज्जात्युत्प्रेक्षेयं कुतो न, अत आह—**आकाशेति** । इदं च मञ्जूषायां मतं स्पष्टम् ।

---

१ विषया बकाः तद्विशेषणस्य अर्धमज्जनस्य [ एवं विशेषणस्यापि विशेषणस्य यमुनाजलस्य च ], विषयिणः शशिकिशोराः तद्विशेषणस्य निगरणस्य [ एवं विशेषणस्यापि विशेषणस्य ध्वान्तस्य ] च बिम्बप्रतिबिम्बभावेनाऽभेद इत्याशयः ।

आकाशत्वस्य स्वरूपात्मकत्वाद्द्रव्योत्प्रेक्षेयम्[1]। अत एवाकाशपदाच्छब्दाश्रयत्वाद्यनुपस्थितिदशायामप्याकाशधीः। नीलत्वरूपनिमित्तस्य विषयिणि सिद्ध्यर्थं तृतीयचरणोपादानम्[2]। दीर्घत्वरूपनिमित्तसिद्ध्यर्थं च पूर्वार्धम्।

जात्यादीनामभावोत्प्रेक्षा यथा—

'बाहुजानां समस्तानामभाव इव मूर्तिमान्।
जयत्यतिबलो लोके जामदग्न्यः प्रतापवान्॥'

अत्र जात्यवच्छिन्नाभावो विरोधित्व[3]निमित्तेन तादात्म्येनोत्प्रेक्ष्यते। विनाश इवेत्युक्तौ तु ध्वंसः। 'समस्तलोकदुःखानाम्' इति प्रथमचरणे कृते गुणाभावः।

'द्यौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे।
जगदखिलमपि यथासीन्निर्लोचनवर्गसर्गमिव॥'

नन्वाकाशत्वं शब्दाश्रयत्वादिरूपमिति कुतः स्वरूपात्मकमत आह—**अत एवेति**। तस्य स्वरूपात्मकत्वादेवेत्यर्थः। आदिना शब्दसमवायिकारणत्वपरिग्रहः। विषयिणि आकाशे। **तृतीयेति**। तलस्पर्शे सति प्रतिबिम्बासंभव इति भावः। **सिद्ध्यर्थं चेति**। आकाश एवेति शेषः। गर्तोपरितनाकाशस्य तद्दीर्घत्वारोपादिति भावः। बाहुजानां क्षत्रियाणाम्। जामदग्न्यः परशुरामः। **जातीति**। क्षत्रियत्वेत्यर्थः। **विरोधित्वेति**। जात्यवच्छिन्नेत्यादि। अभावोऽत्यन्ताभावः। अभावपदत्यागेनाह—**विनेति**। क्रियाभावोत्प्रेक्षोदाहरणमाह—**द्यौरिति**। कज्जलवच्छ्यामभेघपङ्क्तिभिस्तथाच्छादितेत्यर्थः।

१ घटपटादिषु घटत्वपटत्वादिकं यथा जातिर्भवति तथा आकाशत्वं जातिर्न, अपि तु आकाशस्वरूपमेव। शब्दाश्रयत्वमाकाशत्वमिति ये न जानन्ति तेषामपि आकाशत्वस्य स्वरूपात्मकत्वादाकाशस्य बोधो भवति। अत एव कलिन्दशैलादित्यत्र पद्ये द्रव्योत्प्रेक्षेत्याशयः।

२ तलस्पर्शे (तलदर्शने) सति तलगतस्य वर्णान्तरस्यापि प्रतीतिर्जातु स्यात्। तदभावे तु निम्नतया नीलत्वैव प्रतिभासेतेत्याशयः। 'तलस्पर्शे सति प्रतिबिम्बस्य संभवो न' इति नागेशविज्ञानं तु लोकोत्तरमेव, कतिपयाङ्गुलिनिम्नेष्वपि जलपात्रेषु प्रतिबिम्बदर्शनात्।

३ जामदग्न्यः क्षत्रियजातेर्विरोधी। ततश्च विरोधित्वेन निमित्तेन जामदग्न्ये (द्रव्ये) क्षत्रियत्वजातेरभावस्तादात्म्येन संभाव्यत इति जात्यभावधर्म्युत्प्रेक्षा सेयमित्याशयः।

अत्रापि चाक्षुषज्ञानसामान्यशून्यत्वेन निमित्तेन पार्यन्तिकः[1] क्रियाभावो धर्मः । एवं द्रव्याभावोत्प्रेक्षापि स्वयमूह्या ।

मालारूपाप्येषा संभवति यथा—

'द्विनेत्र इव वासवः करयुगो[2] विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥'

अत्र राजगतानां द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विषयिषु वासवादिष्वारोपेण साधारणीकरणम्[3] । न चात्रोपमा शक्यनिरूपणा, द्विनेत्रत्वादीनामुक्तेर्निष्प्रयोजनकत्वापत्तेः । न चोपमाया निष्पादकं तेषां साधारण्यम्, तदभावेऽपि परमैश्वर्यादिभिः प्रतीयमानैस्तस्या निष्पत्तेः । असुन्दरत्वादुपमानिष्पादकत्वेन कवेरनभिप्रेतत्वाच्च । नह्यत्र द्विनेत्रत्वादिभिर्धर्मैर्वासवादिसादृश्यं राज्ञः कवेरभिप्राय-

नेत्रशून्यजनसमूहसृष्टिरिवेत्यर्थः । **निमित्तेनेति** । अनुपात्तेनेति भावः । **पार्यन्तिक इति** । यद्यपि सर्गमिति नपुंसकोक्त्या तर्हि जगदन्तरमिवेतज्जगदिति पूर्वं बोधः तथापि तादृशजगदन्तराप्रसिद्ध्या अभावोत्प्रेक्षाबाधापत्त्या चात्रैव धर्मिणि जगति लोचनवर्गस्य सर्गो दानं संसर्गः प्रसरणं वा यत्र दर्शने तदभावो निरा बोध्यते इति दर्शनक्रियाभावरूपो धर्म उत्प्रेक्ष्यते पश्चादित्यर्थः । तदाह—**क्रियाभावो धर्म इति** । एषा उत्प्रेक्षा । करयुगो भुजद्वयम् । क्षमां भूमिम् । 'अध्यारोपेण' इति पाठः । आरोपेणेति तदर्थः । 'अतियुक्त'पाठे तु स एवार्थः । स आरोपेणत्यत्र योज्यः । ननूपमैवात्रास्तु इत्याशङ्कते—**न चेति । साधेति** । उक्तरीत्येति भावः । तस्या उपमायाः । ननूपात्तधर्माभावे प्रतीयमानादरोऽत आह—**असुन्दरेति** । विच्छित्त्यजनकत्वादेरित्यर्थः । **उक्तधर्मस्येति** । उक्तमेव विशदयति—**एवमिति** । राजसदृशस्य द्विती-

१ पर्यन्ते ( पश्चात् ) क्रिया ( दर्शना )भावो धर्मः उत्प्रेक्ष्यते इत्यनुषङ्गः । अयं भावः—अत्र हि पूर्वम् 'लोचनवर्गसृष्टिरहितजगदिव इदम् ( वर्तमानं सचक्षुष्कम् ) जगत्' इति द्रव्योत्प्रेक्षैव प्रतीयते । विचारे कृते तादृशजगतोऽभावात्—पर्यन्ते—लोचनवर्गस्य संसर्गः प्रसरणं वा नास्ति [ अत एव तु पदार्थानां दर्शनं न भवति ] इति जगति ( द्रव्ये ) दर्शनरूपक्रियाया अभावः प्रतीयते इत्याशयः ।

२ करयुगम् अस्यास्तीति करयुगः, अर्शआद्यच् । करयोर्युगं यस्येति वैयाकरणनिकुञ्चितो व्यधिकरणबहुव्रीहिर्वा । नागेशटीका त्वत्र नागेशटीकैव ।

३ द्विनेत्रत्वादीनि राजनि तु सन्त्येव, परं संभावनाया विषयिषु वासवादिषु नान्यारोप्यन्ते येन प्रकृताप्रकृतयोः साम्यं संघटते ।

विषयः। एवं द्विनेत्रत्वादीनां चन्द्रादिष्वारोपोऽप्युपमायां सत्यामनर्थक एव स्यात्। अभेदप्रतिपत्तौ तु सहस्रनेत्रेण सहस्रकरेण विधिसृष्टावेकेन वपुर्विहीनेन जलाकारेण स्वर्गगतेन च तेन तेन कथमस्याभेदः स्यादिति प्रतिकूलधियमपसारयतां विषयिगतानां द्विनेत्रत्वाद्यारोपाणामस्त्येवोपयोगः। अत्रैवेवशब्दस्याभावे[2] दृढारोपं रूपकम्। विषयिगतविशेषणानामभावे उपमा। उभयेषामेकतरस्याप्यभावे[3] शुद्धरूपकमिति विवेकः। एवं स्वरूपोत्प्रेक्षादिगुपदर्शिता।

अथ हेतूत्प्रेक्षा। यथा-

'त्वत्प्रतापमहादीपशिखाविपुलकज्जलैः
नूनं नभस्तले नित्यं नीलिमा नूतनायते॥'

अत्र नीलिमसामानाधिकरण्येनोत्प्रेक्षितस्य[4] हेतुत्वेनोत्प्रेक्षणम्[5]। 'कज्जललेपनैः' इति कृते इयमेव क्रियाहेतूत्प्रेक्षा[6]।

---

यस्य सत्त्वाद्राज्ञि स्वारसिकं द्वितीयत्वमित्याशयेनाह—**चन्द्रादीति**। ननूत्प्रेक्षापक्षेऽपि तदुक्तिवैयर्थ्यमत आह—**अभेदेति**। वासवादीत्यादिः। करेण किरणेन। तेन तेन वासवादिना। अस्य राज्ञः। उभयाभावस्यैकस्मिन्नपि सत्त्वादाह—**एकतरेति**। उपसंहरति—**एवमिति**। **त्वदिति**। राजानं प्रति कव्युक्तिः। उत्प्रेक्षितस्य कज्जलस्य। **हेतुत्वेनेति**। नूतनीकरण इति भावः। **हेतूत्प्रेक्षेति**। नीलिम्नः

---

१ अर्थात् वासवः संभाव्यते परं द्विनेत्रः, एवं विवस्वान् परं द्विकरः इत्यादि।

२ इवशब्दस्याभावे राजा द्विनेत्रो वासवः इत्यादिभिः आरोप्यमाणेषु (वासवादिषु) द्विनेत्रत्वं विहाय अन्यविषयसमभ्रसादृश्यसूचनात् राजतादात्म्यदृढीकरणेन रूपके दार्ढ्यं संपाद्यत इत्यर्थः।

३ द्वयोर्मध्य एकस्याऽप्यभावे, द्वयोरप्यभावे इति यावत्।

४ इह निमित्तभूतेन नीलिमरूपेण समानाधिकरणेन धर्मेण [ यतो हि एकस्मिन्नधिकरणे (आकाशे) नीलिमा कज्जलं च वर्ण्येते ] आकाशे प्रतापरूप-दीपशिखाजनितकज्जलरूपजातिपदार्थस्य धर्मस्वरूपोत्प्रेक्षा।

५ तदनन्तरं नीलिम्नो नित्यनूतनीभवनक्रियां प्रति उत्प्रेक्षितस्यास्य कज्जलस्य हेतुत्वेनोत्प्रेक्षणमत्रोदाहरणतयाऽभिप्रेतम्। 'नूतनीकरणम्' इति नागेशकृतस्तत्वर्थो वैयाकरणैर्विचार्य एव। नूतन इवाचरति (नूतन इव भवति) इतिस्थाने नूतनं करोति इति व्यपदेशे तत्करोतीति णिच्प्रसङ्गात्।

६ 'लेपनैः' इति क्रिया नीलिमनूतनीभवने हेतुरित्यर्थः।

गुणहेतूत्प्रेक्षा यथा—

'परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः।
तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमञ्चति ॥'

अत्र पूर्वार्धे सुखस्य गुणस्य हेतुत्वं तावत्पञ्चम्यैव निर्दिष्टम्। अपरार्धे धर्मिविशेषणतया अनूद्यमानस्य गुणाभावस्य त्वार्थम्[1]। यथा 'भोक्ता भुञ्जानो वा तृप्यति' इत्यादौ भोजनादेः।

यथा वा—

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्त्रपातिरेकात्।
आभूमीतलनतकंधराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥'

क्रियाहेतूत्प्रेक्षा यथा—

'महागुरुकलिन्दमहीधरोदरविदारणाविर्भवन्महापातकावलिवेल्लनादिव श्यामलिता' इति।

द्रव्यहेतूत्प्रेक्षा यथा—

'वराका यं राकारमण इति वलगन्ति[2] सहसा
सरः स्वच्छं मन्ये मिलदमृतमेतन्मखभुजाम्।

---

प्रतिदिनोपचीयमानत्वं निमित्तम्। अञ्चति गच्छति। **अपरार्ध इति**। उत्तरार्ध इत्यर्थः। क्वचित्तथैव पाठः। आर्थत्वे हेतुगर्भं विशेषणमाह—**धर्मीति**। मध्येत्यर्थः। गुणाभावस्य मर्षणाभावस्य। भोक्तेत्यत्र कालसामान्यप्रतीतेर्विशेषोदाहरणमाह—**भुञ्जानो वेति**। नैयायिकोक्तगुणस्यैव ग्रहणमिति भ्रमनिरासायोदाहरणान्तरमाह—**यथा वेति**। **उदयदिति**। उदयन्ती आविर्भवन्ती या लज्जा तस्याः संबन्धात्, आधिक्याद्वेत्यर्थः। भूमिमभिव्याप्य नम्राः कंधराः शाखा येषां तानि। वृक्षाणां समूहरूपाणीत्यग्रिमार्थः। अत्रापि लज्जारूपगुणस्य हेतुत्वं स्पष्टमेव। वेल्लनात्तत्संबन्धात्। अत्र वेल्लनं क्रियेति स्पष्टमेव। श्यामलिता संजातश्यामा। वराकाः कृपणाः। यं चन्द्रम्। मिलदमृतमिति। 'लसदमृतम्'

---

१ अर्थात् मध्यस्य तनिमानं प्रति स्तनगतोन्नतिमर्षणरूपगुणाभाव एव हेतुः। ननु मर्षणाभावस्तु नात्र पृथङ् निर्दिष्टो यस्य हेतुत्वं ज्ञायेत, अत्र हि 'अमृष्यन् (मध्यः)' इति मध्यस्य विशेषणीभूत एव स इति शङ्कायामाह–'आर्थम्' इति। शब्दतोऽनुक्तमपि हेतुत्वम् अर्थवशात्प्रतीयत इत्यर्थः। यथा 'भोक्ता तृप्यति' अत्र भोक्तुर्धर्मिणो विशेषणस्यापि भोजनस्य तृप्तौ हेतुत्वमर्थतो बुध्यते।

२ अवगच्छन्ति, सर्वे गत्यर्था ज्ञानार्था इति।

अमुष्मिन्या कापि द्युतिरतिघना भाति मिषता-
मियं नीलच्छायादुपरि निरपायाद्गगनतः ॥'

अत्रामृतसरोरूपत्वेनोत्प्रेक्षिते चन्द्रमसि नीलत्वेनाध्यवसिते कलङ्के उपरिवर्तिनभोहेतुकत्वमुत्प्रेक्ष्यते । एतेन द्रव्यस्य हेतुत्वेनोत्प्रेक्षणं नास्तीति प्राचां प्रवादो निरस्तः ।

एषामेवाभावानां हेतुत्वोत्प्रेक्षा यथा—

'नितान्तरमणीयानि वस्तूनि करुणोज्झितः ।
कालः संहरते नित्यमभावादिव चक्षुषः ॥'

अत्र कालस्य साहजिके संहारकत्वे चक्षुरभावस्य हेतुत्वेनोत्प्रेक्षा ।

'निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् ।
अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥'

अत्र गुणाभावस्य ।

'जनमोहकरं तवालि मन्ये चिकुराकारमिदं घनान्धकारम् ।
वदनेन्दुरुचामिहाप्रचारादिव तन्वङ्गि नितान्तकान्तिकान्तम् ।'

इति पाठान्तरम् । मखभुजां देवानाम् । अमुष्मिन्सरसि । इयं द्युतिर्नैल्यरूपा । मिषतां पश्यताम् । उपरि । वर्तमानादिति शेषः । निरपायादनश्वरात् । **नीलत्वेनेति** । द्युतिरित्यनेनेति भावः । एषामेव जात्यादीनामेव । **करुणोज्झित इति** । त्यक्तकरुणः । आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः । इदं जात्यवच्छिन्नाभावहेतुत्वोत्प्रेक्षोदाहरणम् । गुणाभावहेतुत्वोत्प्रेक्षोदाहरणमाह—**निःसीमेति** । **गुणेति** । आनन्दरूपेत्यर्थः । हेतुत्वेनोत्प्रेक्षेति शेषः । एवमग्रेऽपि । क्रियाभावहेतुत्वोत्प्रेक्षोदाहरणमाह—**जनेति** । हे कृशाङ्गि आलि, इह चिकुरे तव मुखचन्द्रकान्तीनामसंबन्धादिव इदं दृश्यं केशसमूहरूपं चिकुरवदाकारो यस्य तादृशं जनमोहकरं निबिडा-

१ अमुष्मिम् चन्द्ररूपे सरसि अतिघना नीला द्युतिर्या मिषताम् (पश्यताम्) जनानां भाति, सा उपरि वर्तमानात् नीलाद् गगनात् अर्थात् तत्प्रतिबिम्बहेतुकास्तीत्यर्थः । अत्र कलङ्कं प्रति गगनरूपद्रव्यस्य हेतुत्वमित्युदाहरणाशयः ।

इह द्वितीयार्धे क्रियाभावस्य[1] । प्रथमार्धे तु जात्यवच्छिन्नस्य[2] जात्यवच्छिन्नाभावस्य वा स्वरूपोत्प्रेक्षैव ।

'न नगाः काननगा यद्वदतीषु त्वदरिभूपसुदतीषु ।
शकलीभवन्ति शतधा शङ्के श्रवणेन्द्रियाभावात् ॥'

इह श्रोत्रत्वस्य जातिगुणक्रियाभ्योऽतिरिक्तस्य विवेके क्रियमाणे आकाश[3]स्वरूपतया तदवच्छिन्नाभावस्य द्रव्याभावस्य हेतुत्वेनोत्प्रेक्षा । निमित्तं क्रियाभावः । एवं हेतूत्प्रेक्षादिक् ।

अथ फलोत्प्रेक्षा—

'दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥'

अत्र वक्षोजत्वमवयववृत्ति[4] । जातिस्तल्प्रत्ययार्थः । त्वतलोः प्रकृतिप्रवृ[5]-

न्धकारमहं मन्य इत्यर्थः । यदाशयेनोदाहृतं तमाह—**इहेति** । प्रचारस्य क्रियात्वादिति भावः । तुरुक्तवैलक्षण्ये । एतेन प्रासङ्गिकत्वमस्य सूचितम् । अत एव व्युत्क्रमेणोक्तिः । अन्धकारोऽतिरिक्तः पदार्थ इति मतेनाह—**जात्यवच्छिन्नेति** । तेजोभाव एव स इति मतेनाह—**जात्यवच्छिन्नाभावेति** । क्वचिद्वैपरीत्येन पाठः । द्रव्याभावहेतुत्वोत्प्रेक्षोदाहरणमाह—**न नगा इति** । शष्कुल्यवच्छिन्ननभसः श्रोत्रत्वादाह—**विवेक इति** । भावस्येत्यस्य व्याख्या द्रव्याभावस्येति । तस्य तत्त्वेनोत्प्रेक्षणे निमित्तमिति । **क्रियेति** । शकलीभवनरूपेत्यर्थः । उपसंहरति—**एवमिति** । उक्तप्रकारेणेत्यर्थः । **दिगिति** । उपदर्शितेति शेषः । अथ क्रमप्राप्तां फलोत्प्रेक्षामाह—**अथेति** । तत्रादौ जातिफलोत्प्रेक्षामाह—**दिवेति** । कण्ठदघ्ने कण्ठप्रमाणे । **अवयवेति** । स्तनेत्यर्थः ।

---

१ पूर्वार्धोदितोत्प्रेक्षां प्रति 'अप्रचारात्' इति प्रचाररूपक्रियाभावो हेतुत्वेनोत्प्रेक्षितः । पूर्वोत्प्रेक्षातः असंमिश्रतायां तु अप्रचारादिति नितान्तकान्तत्वं प्रति ( इन्दुरुच्यामप्रचारः अत एव निबिडनीलकान्तिमान् ) हेतुर्योज्यः । इदं क्रियाभावोदाहरणमेव प्रक्रान्तम् ।

२ चिकुरं घनान्धकारं मन्ये इति चिकुरे घनान्धकारस्य ( जातिपदार्थस्य, अन्धकारस्य तेजोऽभावरूपत्वे तु जात्यवच्छिन्नाभावस्य ) तादात्म्येन स्वरूपोत्प्रेक्षा ।

३ श्रोत्रत्वं कर्णशष्कुल्यवच्छिन्नाकाशस्वरूपम्, अत एव द्रव्यरूपम् । तथा च-वृक्षाणाम् ( शैलानां वा ) श्रोत्ररूपद्रव्याभावस्य शतधा शकलीभवनरूप-क्रियाभावं प्रति हेतुत्वम् ।

४ जातिफलोत्प्रेक्षात्वसाधनाय यावत्सु स्तनरूपेष्ववयवेषु वर्तमाना वक्षोजत्वं जातिरित्याह ।

५ प्रकृतिभूतस्य वक्षोजस्य प्रवृत्तिनिमित्तं वक्षोजत्वं तद्रूपे भावे त्वतलोर्विधानात् ।

त्तिनिमित्ते भावे विधानात्। स एव चात्र तपश्चरणक्रियायाः साहजिकजलावस्थानाभिन्नतयाध्यवसितायाः[1] फलत्वेनोत्प्रेक्ष्यते। न चात्र प्राप्तिक्रियामन्तरेण जातेः शुद्धाया अफलत्वात्क्रियाया[2] एव फलत्वमिति वाच्यम्। प्राप्तेः संसर्गतया[3] तद्द्वारैव जात्यादेः फलत्वोपपत्तेः। अन्यथा फलत्वबोधकचतुर्थ्या अनुपपत्तेः। अत एव—'ब्राह्मण्याय तपस्तेपे विश्वामित्रः सुदारुणम्' इत्यादयः प्रयोगाः।

गुणफलोत्प्रेक्षा यथा—

'वियोगवह्निकुण्डेऽस्मिन् हृदये ते वियोगिनि।
प्रियसङ्गसुखायेव मुक्ताहारस्तपस्यति॥'

क्रियाफलोत्प्रेक्षा यथा—

'हालाहलकालानलकाकोदरसंगतिं करोति विधुः।
अभ्यसितुमिव तदीयां विद्यामद्यापि हरशिरसि [ गतः ]॥'

अत्र विरहिवाक्येऽभ्यसनक्रियायास्तुमुना फलत्वं लभ्यते। एवं लक्ष्यानुसारेण यथासंभवमन्यदप्युदाहार्यम्।

इह जात्यादयो हि भेदाः प्राचामनुरोधादुदाहृताः। वस्तुतस्तु नैषां चमत्कारे वैलक्षण्यमस्तीत्यनुदाहार्यतैव। चमत्कारवैलक्षण्यं पुनर्हेतुफल-

---

**स एवेति**। जातिरूपतत्त्वर्थ एवेत्यर्थः। **अफलत्वादिति**। तस्यानित्यत्वादिति भावः। क्रियायाः प्राप्तेः। **संसर्गतयेति**। तथा च लक्षणा नेति भावः। अन्यथा यथाकथंचित्फलत्वानङ्गीकारे। उक्तार्थं द्रढयति—**अत एवेति**। **वियोगेति**। अत्र सुखरूपगुणस्य फलत्वेनोत्प्रेक्षणं स्पष्टमेव। **हालेति**। विषभालनेत्रसर्पाणां संगतिमित्यर्थः। तदीयां विषादीयाम्। प्राचामलंकारसर्वस्वकारादीनाम्। मेवेत्यस्य बोध्यमिति

---

१ प्रकृतिसिद्धं जलावस्थानमेव तपश्चरणक्रियात्वेनाध्यवसीयते। तस्याश्च क्रियाया वक्षोजत्वजातिरूपं फलमुत्प्रेक्ष्यते।

२ ननु वक्षोजत्वप्राप्तिरेव फलं युज्यते, ततश्च वक्षोजतापदेन लक्षणाश्रयायाः क्रियाया एव फलत्वोत्प्रेक्षा सेयं न जातेरिति शङ्का।

३ अत्र प्राप्तिक्रिया संसर्गविधया प्रतीयते [ तथा च न लक्षणेति बोध्यम् ] इत्यानुषङ्गिकी, अर्थात् सावश्यं प्रतीयते। तद्द्वारैव च जात्यादेः फलत्वमुपपद्यते। आनुषङ्गिकी सा फलं न भवितुमर्हति। जात्यादीनां फलत्वे ब्राह्मण्यायेत्यादि प्रमाणम्।

स्वरूपात्मकानां त्रयाणां प्रकाराणामेवेति । प्रागुदाहृतेष्वेव पद्येषु वाचकानामिवादीनां त्यागे प्रतीयमाना, अर्थसामर्थ्यावसेयत्वात् । न तु व्यङ्ग्येति भ्रमितव्यम्, तस्याः प्रकृते प्रसङ्गाभावात् ।

धर्मस्वरूपोत्प्रेक्षा यथा—

'निधिं लावण्यानां तव खलु मुखं निर्मितवतो
महामोहं मन्ये सरसिरुहसूनोरुपचितम् ।
उपेक्ष्य त्वां यस्माद्विधुमयमकस्मादिह कृती
कलाहीनं दीनं विकल इव राजानमतनोत् ॥'

पूर्वार्धोत्प्रेक्षितमोहरूपधर्मसिद्धये[1] द्वितीयार्धेऽविचार्यकारित्वं तत्सामानाधिकरण्येनोपात्तम् । अस्यां च स्वरूपस्य विषयित्वे निमित्तभूतो धर्म उपमायामिव बिम्बप्रतिबिम्बभावादिभिर्भिन्न[2] उपात्तोऽनुपात्तश्च । हेतुफलयोर्विषयित्वे तु यं प्रति हेतुफले निरूपिते[3] स धर्मः कल्प्यमानोऽपि

शेषः । एवं वाच्याप्रपञ्चमुक्त्वा प्रतीयमानामाह—**प्रागिति** । एवं धर्मिस्वरूपोत्प्रेक्षामुक्त्वा धर्मस्वरूपोत्प्रेक्षामाह—**धर्मेति** । सरसिरुहसूनोर्ब्रह्मणः । इह जगति । कलाहीनं क्षीणकलम् । विकल इवेत्यंशे उपमा । **पूर्वार्धोत्प्रेक्षितेति** । ब्रह्मरूपे धर्मिणीति भावः । **उपात्तमिति** । अकस्मादित्यनेनेति भावः । निमित्तांशे प्रागनुक्तं विशेषमाह—**अस्यां चेति** । उत्प्रेक्षात्वावच्छिन्नायामित्यर्थः । स्वरूपस्य धर्मिस्वरूपस्य धर्मस्वरूपस्य वा । **भावादिभिरिति** । आदिना अनुगामित्वादिपरिग्रहः । **एवं च**

१ मोहाभाववति सरसिरुहसूनौ (ब्रह्मणि) मोहवत्त्वस्य (मोहस्य) समवायसंबन्धेन (आत्मधर्मः आत्मनि समवायेन तिष्ठतीति) संभावनमिति धर्मोत्प्रेक्षा । धर्मोत्प्रेक्षायां च समानाधिकरणो धर्मो निमित्तमिति पूर्वानुगमानुसारम् अविचार्यकारित्वं निमित्तम् । यस्मिन् अधिकरणे (ब्रह्मणि) मोहस्तत्रैव अविचार्यकारित्वमपीति तदिदं समानाधिकरणमित्यर्थः ।

२ भिन्नः बिम्बप्रतिबिम्बभावापन्नत्वानुगामित्वादिभेदविशिष्टः ।

३ यथा—त्वत्प्रतापमहादीप० इत्यत्र हेतूत्प्रेक्षायाम्—नभस्तलगतस्य यं नीलिमधर्मं प्रति प्रतापरूपदीपकज्जलं हेतुर्निरूपितः स नीलिमधर्मः कज्जलजनिततया कल्प्यमानोऽपि नभस्तलगतस्वाभाविकनीलिमाऽभिन्नतया अध्यवसीयते । स एव च नीलिमा कज्जलस्य हेतुत्वोत्प्रेक्षणं प्रति निमित्तं भवति । स च (नीलिमा) सर्वदोपात्त एव भवति । अन्यथा [तस्यानुपात्तत्वे] कं प्रति हेतोरन्वयः स्यात्, अर्थात् नीलिम्नः शब्दोपात्तत्वाभावे कज्जलरूपहेतोरन्वयः कथं स्यात् । एवं फलोत्प्रेक्षायामपि—यस्यास्तपश्चरणक्रियायाः फलत्वेन वक्षोजता (प्राप्तिः) उत्प्रेक्ष्यते सोऽयम् (तपश्चरणरूपः) धर्मः स्वभावसिद्धजलावस्थानाभिन्नतया अध्यवसीयते । स एव च उत्प्रेक्ष्यमाणां वक्षोजतां प्रति निमित्तं भवति । इदं निमित्तम् (तपश्चरणम्) यद्यनुपात्तं स्यात्तर्हि वक्षोजताप्राप्तिरूपं फलं प्रति अस्य (निमित्तस्य) अन्वयः कथं स्यादित्याशयः ।

विषयगतसाहजिकधर्माभिन्नतयाध्यवसीयमानो निमित्तं संपद्यते। स चोपात्त एव भवति। अन्यथा कं प्रति हेतुफलयोरन्वयः स्यादिति संक्षेपः।

अत्र च प्राचामर्वाचां चानेकधा दर्शनं व्यवस्थितम्। तत्र प्राचामित्थम्—सर्वत्राभेदेनैव विषयिणो विषये उत्प्रेक्षणम्, न संबन्धान्तरेण। तथा हि धर्मिस्वरूपोत्प्रेक्षायाम् 'मुखं चन्द्रं मन्ये' इत्यादौ तावद्विषयिणश्चन्द्रस्याभेदो विषये मुखे स्फुट एव, नामार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पत्तेः। उपात्तविषया चेयम्। एवम् 'अस्यां मुनीनामपि मोहमूहे' इत्यत्र नैषधपद्ये (७।९४) धर्मस्वरूपोत्प्रेक्षायामपि मुनिसंबन्धिनि धर्मान्तरे विषये[1] दमयन्तीविषयकमोहस्य विषयिणोऽभेदेनैवोत्प्रेक्षा। उत्प्रेक्षायाश्च साध्यवसानत्वाद्[2]विषयस्यानुपादानं संगच्छते। निमित्त[3]धर्मश्च तत्तदङ्गासक्तवृत्तित्वम्। एवम् 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्यादौ

---

चतुर्विध इत्यर्थः। तदाह—**भिन्न इति**। अपिः स्वाभाविकसमुच्चायकः। अत्र च उत्प्रेक्षाविषये। अर्वाचामाधुनिकानाम्। दर्शनं मतम्। तत्र तयोर्मध्ये। **विषय इति**। एतौ च धर्मस्वरूपौ धर्मिस्वरूपौ वेति भावः। तावदादौ। अस्यां दमयन्त्याम्। धर्मस्वरूपोत्प्रेक्षायामपि धर्मान्तरे दर्शनादिरूपे। नन्वेवं कथं विषयस्यानुपादानमत आह—**उत्प्रेक्षेति**। एवं धर्मिस्वरूपोत्प्रेक्षायां तत्त्वमुक्त्वा धर्मस्वरूपोत्प्रेक्षायामप्युपपादयति—**एवमिति**। कस्यापि पद्ये इत्यनेन स्वीयत्वं निरस्तम्। वैया-

---

१ मुनिसंबन्धिनि दमयन्तीकर्मके विलोकने (विषये) मोहस्य (विषयिणः) तादात्म्येनोत्प्रेक्षेत्यर्थः।

२ अर्थात् उत्प्रेक्षायाम् अध्यवसानम् [विषयिवाचकपदोच्चारणेऽपि–विषयस्य विषयिरूपतया आहार्यो निश्चयः] अवश्यं भवति। अत एवात्र विषयिवाचक(मोह)पदोच्चारणेन अनुपात्तेऽपि दर्शनादौ (विषये) मोहस्य (विषयिणः) अभेदो नानुपपन्नः।

३ अर्थात् मुनिकर्तृकविलोकनादौ (विषये) मोहस्य तादात्म्योत्प्रेक्षायाम्–'भृगुः कुचशीली जातः, मुखं नारदमनोहार्यभवत्, व्यासः श्रितोरुः' इति कुचाद्यङ्गासक्तचित्तवृत्तित्वं निमित्तमित्यर्थः। पूर्णपद्यं तु–

'अस्यां मुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैलशीली।
नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः॥'

क[1]स्यापि पद्ये न प्रथमान्तार्थे कर्तरि[2] लेपनकर्तृत्वादेरुत्प्रेक्षणम्, तस्याख्यातार्थविशेषणत्वेनैकदेशत्वात् । नापि लेपनादिकर्तुरभेदेन, तस्य क्रियाविशेष[3]णत्वेनाप्राधान्यात् । किं तु तमःकर्तृकमङ्गकर्मकं लेपनमुत्प्रेक्ष्यते, तमःकर्तृकमञ्जनकर्मकं वर्षणं च । उत्प्रेक्ष्यमाणाभ्यां च ताभ्यां विषयस्य तमःकर्तृकव्यापनस्य निगीर्णत्वादनुपादानम् । अत एव एवमादावियमनुपात्तविषयोच्यते । निमित्तधर्मश्च श्यामीकारकत्वादिरनुपात्त एव । अत एव 'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति लक्षणं विधायोक्तम् 'व्यापनादि लेपनादिरूपतया संभावितम्' इति मम्मटभट्टैः । एवम् ।

'उन्मेषं यो मम न सहते जातिवैरी निशाया-
　मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
　ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥'

करणरीत्या आह—**तस्येति** । प्रथमान्तार्थकर्तुरित्यर्थः । तथा च पदार्थः पदार्थेनेति न्यायप्रसरः । कर्तृत्वादि तु क्रियारूपतया प्रधानमेवेति भावः । एवमग्रेऽपि । **अभेदेनेति** । प्रथमान्तार्थे उत्प्रेक्षणमित्यस्यानुषङ्गः । **तस्येति** । लेपनादिकर्तुरित्यर्थः । वर्षणं चेत्यस्य उत्प्रेक्ष्यत इति शेषः । ननु कुत्र सा अत आह—**उत्प्रेक्ष्येति** । अत एव निगीर्णत्वादनुपादानादेव । एवमादौ इत्याद्युदाहरणे । अत्र संमतिं प्रकाशकृत आह—**अत एवेति** । **एवमिति** । **उन्मेषमिति** । विकसनमित्यर्थः । नायिकां प्रति नायकोक्तिः । यश्चन्द्रः । मम पद्मस्य । हेतूत्प्रेक्षायामपि तत्त्वेनाभिमतायामपि । इदं च

---

१ शूद्रकप्रणीतमृच्छकटिकस्य प्रथमेऽङ्के पद्यमेतत् । 'असत्पुरुषसेवेव दृष्टिर्विफलतां गता' इत्यस्योत्तरार्धम् ।

२ तमसि लेपनकर्तृत्वस्य भेदेन नोत्प्रेक्षा । 'पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन' इति न्यायात् लिम्पतीत्याख्यातस्यैकदेशः कर्ता [ लिम्पतीत्याख्यातेन लेपनं ( क्रिया ) तत्कर्ता चेत्युभयं प्रतिपाद्यते, इति कर्ता आख्यातार्थविशेषणीभूततया एकदेशः ] इवपदस्यार्थे संभावनायां नान्वेतुमर्हतीत्याशयः ।

३ अयं भावः—'तमः लेपनकर्तृ' इति तमसि विषये लेपनकर्तुः विषयिणस्तादात्म्येन नोत्प्रेक्षा, 'भावप्रधानमाख्यातम्' इति यास्कोक्तेरनुसारमत्र लेपनरूपा क्रिया प्रधानम्, कर्ता तु तद्विशेषणीभूतः । ततश्च प्रधानस्यैव ( क्रियायाः ) उत्प्रेक्षायामन्वय उचितो न तु गुणीभूतस्य कर्तुरित्याशयः ।

इत्यादौ प्राचीनपक्षे हेतूत्प्रेक्षायामपि न हर्षरूपं हेतुमात्रमुत्प्रेक्ष्यते लक्ष्मीरूपे विषये, किं तु तद्धेतुकं कार्यं लगनादिरूपं विषयि तादात्म्येन साहजिकलगनादौ विषये। कार्यस्य निमित्ततावादिनापि विषयगततत्समानजातीयेनाभेदाध्यवसानस्यावश्यवाच्यत्वात्। अन्यथा हेतुरूपविषयिधर्मसमानाधिकरणधर्मस्य कार्यरूपस्य विषयावृत्तित्वादुत्प्रेक्षैव न स्यात्। एवम्

'चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥'

तादात्म्यं परमतेऽप्यावश्यकमित्याह—**कार्यस्येति**। लक्ष्मीरूपविषये हर्षरूपहेतुमात्रोत्प्रेक्षायां कार्यमेव निमित्तं वाच्यम्। तस्य तत्त्वसिद्धिरुभयसाधारण्यं विनानुपपन्नेत्यभेदाध्यवसानमावश्यकमिति भावः। समानजातीयेन साहजिकलगनेन। तदेव व्यतिरेकमुखेनोपपादयति—**अन्यथेति**। **हेतुरूपेति**। हर्षरूपेत्यादिः। **धर्मस्य कार्यरूपस्येति**। वास्तवहर्षाधिकरणचेतनवृत्तितत्कार्यस्य लगनादेः पद्मलक्ष्म्यामवृत्तेरिति भावः। फलोत्प्रेक्षायां तत्त्वमाह—**एवमिति**। **चोलस्येति**। चोलनृपस्येत्यर्थः। वनान्ता वनप्रदेशाः। अनुभविष्यतीति पलायितश्चेत्स इति भावः। अक्षराणि भालस्थानि।

१ अयं भावः—लक्ष्मीरूपे विषये 'हर्षात्' इति पञ्चम्या हर्षरूपो हेतुः विषयी [ लक्ष्म्याः हर्षो जातः। अत एव कृतज्ञतावशात् सा पादयोः पतिता इति ] नोत्प्रेक्ष्यते, अपि तु युवत्याः स्वभावसिद्धे पद्मलक्ष्मी( रक्तता )कर्तृके पादलगने ( विषये ) हर्षहेतुकं पादलगनम् ( विषयि ) तादात्म्येनोत्प्रेक्ष्यते। अर्थात् इदं सहजलगनं हर्षहेतुकं लगनमस्तीति अत्रापि अभेदेनैवोत्प्रेक्षेति प्राचामाशयः।

२ अर्थात् येषां नवीनानां मते—लक्ष्मीरूपे विषये हर्षमात्रं हेतुरुत्प्रेक्ष्यते, न तु तादात्म्येन लगने लगनम्, तदनुसारमपि तत्संमतहेतुत्वोत्प्रेक्षणे पादलगनरूपं कार्यमेव निमित्तं वक्तव्यं स्यात्। तादृशं च पादपतनम्—अर्थात् हेतुरूपः ( पादपतनस्य हेतुरूपः ) यो विषयी धर्मः ( हर्षः ), तत्समानाधिकरणः [ हर्षः पादपतनं चेत्युभयमपि पद्मलक्ष्म्यां तिष्ठतीति समानाधिकरणता ] हर्षस्य कार्यरूपो धर्मः पादपतनं, विषये पद्मलक्ष्म्यां न वर्तते। यतो हि पद्मलक्ष्मीरचेतना। अत एव तत्र निजवैरिपराभवजनितहर्षहेतुकं पादलगनं न संभवति। तत्र तु प्राकृतं लगनं वर्तते। ततश्च यावत्कालं पादलगनम् ( निमित्तम् ) पद्मलक्ष्म्यां न संभवेत् तावत् तन्निमित्तजनिता हेतुत्वोत्प्रेक्षैव नोपपद्येत। अतः स्वाभाविकपादलगनेन सह हर्षहेतुकपादलगनस्याभेदाध्यवसानं स्वीकृत्य विषय( पद्मलक्ष्मी )गतता तस्य ( निमित्तस्य ) उपपादनीया स्यात्। तथा च—न प्राचीनैरेव अभेदः स्वीकृतः, अपि तु एवंविधस्थले भेदेनोत्प्रेक्षावादिनाप्युक्तरीत्या अभेदाध्यवसानमङ्गीकर्तव्यं स्यात् [ प्राचीनमतोपन्यासः, पूर्वपक्षः ]।

इत्यादिपरपद्ये फलोत्प्रेक्षायां कण्टकिषु वनान्तेषु विषयेषु न केवलं भालत्वग्विपाटननिमित्तं ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते। किं तु तत्फलकं भालत्वग्विपाटनादिरूपं विषयि कण्टकेज[1]विपाटनादौ विषये तादात्म्येनेति सर्वत्राभेदेनैव विषये विषयिण उत्प्रेक्षणमिति दर्शनम् ।

तत्र विचार्यते—न सर्वत्राभेदेनैवोत्प्रेक्षणमिति नियमे किंचिदस्ति प्रमाणम्, लक्ष्येषु भेदेनाप्युत्प्रेक्षणस्य दर्शनात्—'अस्यां मुनीनामपि मोहमूहे[2]' इत्यादौ। न च मुनिसंबन्धिनि धर्मविशेषे मोहस्याभेदेनोत्प्रेक्षणमिति वाच्यम्। भेदेनोत्प्रेक्षणे बाधकाभावेनेदृशकल्पनाया निरर्थकत्वात्। नह्यभेदेनैवोत्प्रेक्षणमिति वेदेन बोधितम्, यदर्थमयमाग्रहः स्यात्, लक्षणनिर्माणस्य पुरुषाधीनत्वात्। 'लिम्पतीव तमोऽङ्गानि' इत्यत्रापि लेपनादिकर्तृत्वं तमआदिषु विषयेषूत्प्रेक्ष्यत इत्येव युक्तम्। अनुकूलव्यापारात्मकस्य कर्तृत्वस्यैवाख्यातार्थत्वात्। तस्य च प्रथमान्ते विशेष्ये आश्रयतासंसर्गेणान्वयान्न[3]

फलोत्प्रेक्षायां तत्त्वेनाभिमतायाम्। **विपाटनेति**। तस्य तत्कर्तृकत्वादिति भावः। दर्शनात्स्वरसतया प्रतीतेः। प्रागुक्तं तदीयप्रकारं खण्डयति—**न चेति**। ननु लक्षणानुरोधेन तथोच्यतेऽत आह—**लक्षणेति**। नन्वेवमपि लिम्पतीवेत्यादौ नान्यथा निर्वाह इति प्रागुक्तमत आह—**लिम्पतीवेति**। फलमात्रस्य धात्वर्थत्वादाह—**अनुकूलव्यापारेति**। यत इत्यादिः। अन्यथा कृतीत्येवोक्तं स्यात्। एतेन धर्मिव्यवच्छेदः। **आख्यातेति**। तिङित्यर्थः। प्रथमान्ते तदर्थं। नन्वेवं यास्कोक्तिविरोधोऽत आह—

१ कण्टकजनिते स्वाभाविके विपाटनादौ (विषये) तत्फलकं (ललाटाक्षरदर्शनफलकम्) भालत्वग्विपाटनादि (विषयि) तादात्म्येनोत्प्रेक्ष्यते, अर्थात् इदं द्रुमकर्तृकं भालत्वग्विपाटनं ललाटाक्षरदर्शनफलकं विपाटनमस्तीति—सर्वत्राप्यभेदेनैवोत्प्रेक्षणमित्याशयः ।

२ दर्शनादौ, पूर्वं प्रतिपादितमिदम् ।

३ अयं भावः—आख्यातेन अत्र तिङ् गृह्यते। तिङश्च कर्तृत्वमर्थः। कर्तृत्वम् (कृतिः) च लिम्पतीत्यत्र लेपनानुकूलव्यापारात्मकमेव। तस्य (कर्तृत्वस्य अर्थात् व्यापारस्य) आश्रयतासंबन्धेन विशेष्ये प्रथमान्ते (तमसि) अन्वयः। ततश्च 'तमः अङ्गाना लेपनकर्तृ इव' [अङ्गकर्मकलेपनव्यापाराश्रय इव] इति तमसि (विषये) भेदेन लेपनकर्तृत्वस्योत्प्रेक्षेत्याशयः ।

दोषः। 'भावप्रधानमाख्यातम्' इत्यस्य 'भावो व्यापारस्तदर्थकमाख्यातं तिङ्' इत्यर्थकरणान्न विरोधः। 'सत्त्वप्रधानानि नामानि' इत्युत्तरवाक्यगतस्य प्रधानशब्दस्याभिधेयपरत्वात्। फलमात्रार्थस्यापि धातोराख्यातार्थव्यापारव्यधिकरणत्वसमानाधिकरणत्वाभ्यामर्थगताभ्यां सकर्मकाकर्मकत्वव्यवहारः। नामार्थयोर्भेदेनान्वयाभावाच्च भावकृदर्थव्यापारस्य न

---

**भावेति**। नाम्नः प्रातिपदिकस्य द्रव्यमात्रार्थत्वेन तत्प्राधान्यमुक्तम्। अर्थद्वयसत्त्व एव तथोक्तेरौचित्यादतस्तत्रार्थान्तरमावश्यकमित्याशयेनाह—**सत्त्वेति**। ननु धातोर्व्यापारावाचकत्वे सकर्मकत्वाकर्मकत्वविभागोच्छेदापत्तिरत आह—**फलेति**। व्यापारस्योभयत्रान्वयः। **अर्थेति**। चस्त्वर्थे। **अन्वय इति**। आश्रयतासंसर्गेणेति भावः।

---

१ ननु पूर्वं भावप्रधानमाख्यातम् [व्यापारप्रधानम् आख्यातं तिङन्तम्] इति स्वीकृत्य कर्तुरप्रधानत्वमेकदेशत्वं चोक्तम्। इदानीं प्रथमान्तस्य प्राधान्यं कथमुच्यते, इति पूर्वमुपन्यस्तस्य भावप्रधानमाख्यातमित्यस्यार्थान्तरमाह—अर्थात् 'सत्त्वप्रधानानि नामानि' इत्युत्तरवाक्ये 'प्रातिपदिकानि द्रव्यार्थकानि' इति प्रधानपदस्य अर्थ(अभिधेय)मात्रमर्थः, न तु प्रमुखत्वम्। ततश्च पूर्ववाक्येऽस्मिन्नपि प्रधानपदस्याभिधेयार्थकत्वं स्वीकृत्य आख्यातं व्यापारवाचकम् अर्थात् तिङन्तस्थले तिङ एव व्यापारोऽर्थः स्वीकार्य इत्याशयं प्रकाशयति।

२ ननु फलमात्रमेव यदा धातोरर्थः, न व्यापारस्तर्हि फलसमानाधिकरण-व्यधिकरणव्यापारवाचकत्वे यथाक्रममकर्मकत्वं सकर्मकधातुत्वं च न स्यादित्याह—फलमात्रार्थस्यापीति०। आख्यातार्थस्य व्यापारस्य व्यधिकरणः अर्थः (फलम्) यस्य तत्त्वं सकर्मकत्वम्, एवं यापारसमानाधिकरणार्थत्वमकर्मकत्वमिति धातोर्व्यापाराऽवाचकत्वेपि निष्पन्नमित्यर्थः।

३ ननु व्यापारात्मकस्य कर्तृत्वस्य प्रथमान्ते तमसि (विशेष्ये) यथा आश्रयतासंसर्गेणान्वयः [लेपनानुकूलकृत्याश्रयः तमः] पूर्वमुक्तः, तथा भावे विहितस्य कृत्प्रत्ययस्य (घञादेः) अर्थो यो व्यापारस्तस्यापि आश्रयतासंसर्गेण नामार्थेऽन्वयमाशंक्याह—नामार्थ०। पाकः इत्यादिर्नामार्थः। अत एवास्य नामार्थेन (द्वितीयेन प्रातिपदिकेन) भेदेनाऽन्वयो न। अपि तु सिद्धावस्थापन्नक्रियाया अस्याः, 'भवति' इत्यादिसाध्यावस्थापन्नक्रिययैव भेदेनान्वय इत्याशयः।

ननु 'अनुकूलव्यापारात्मकस्य कर्तृत्वस्यैवाख्यातार्थत्वात्' इति पूर्वोक्त्यनुसारं 'लः कर्मणि०' इत्यत्र 'कर्तरि'पदप्रतिपाद्यस्य कर्तृत्वस्य व्यापार एवार्थो यदि स्वीक्रियते तर्हि 'कर्तरि कृत्' इतिसूत्रेपि कर्तृत्वस्य स एवार्थः स्यात्, कर्तरीत्यस्य तत एवानुवृत्तेरिति शङ्कायामाह। अत एव कर्तरि०। अयं भावः—कर्तरि कृदित्यत्र व्यापारविशिष्टे (व्यापाराश्रये) लोकप्रसिद्धे कर्तर्येव कर्तृत्वस्य शक्तिः। लः कर्मणीति सूत्रे तु कर्तृपदस्य कर्तरि विशेषणीभूते व्यापारे शक्तिः। यदि हि लः कर्मणीत्यत्र अनुवृत्तिं दृष्ट्वा 'कर्तरि कृत्' अत्रापि कर्तृपदस्य व्यापारे एव शक्तिः स्वीक्रियेत तर्हि 'कर्तरि कृत्' अर्थात् कर्तरि व्यापारे कृत्प्रत्यया भवन्तीति सामान्यतः कृत्प्रत्ययानां व्यापारे (भावे) विधाने सिद्धे 'भावे' इति सूत्रेण घञादिप्रत्ययानां भावे विधानं व्यर्थं स्यात्। अतः कर्तरि कृदित्यत्र कर्तृत्वस्य व्यापारविशिष्टे एव शक्तिरित्याशयः।

नामार्थेऽन्वयः । अत एव च 'कर्तरि कृत्' इत्यनेन विशिष्टशक्तिबोधकेन न घञादिषु भावग्रहणस्य विशेषणशक्तिबोधकस्य गतार्थत्वम् । शब्दानुवृत्तिपक्षस्वीकाराच्च 'कर्तरि कृत्' इत्यत्र धर्मिपरस्यापि कर्तृग्रहणस्य 'लः कर्मणि–' इत्यत्र धर्मपरतायामपि न दोषः । यद्वा आस्तां फलव्यापारौ धातोः, आश्रयश्च तिङोऽर्थः । परं तु देवदत्तः पचमान इत्यादाविव देवदत्तः पचतीत्यादिष्वपि प्रथमान्तार्थ एव तिङर्थस्याभेदेन विशेषणत्वं युक्तम्, न तु भेदेन धात्वर्थभावनायाम् । सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तेः । सत्यां हि गतौ 'प्रत्ययार्थे प्रकृत्यर्थो विशेषणम्' इत्यस्योत्सर्गस्या-

---

ननु 'कर्तरि कृत्' इत्यतः कर्तरीति 'लः कर्मणि–' इत्यत्रानुवर्तते । तत्र तस्यानुकूलव्यापारार्थकत्वे कृद्विधायकेऽपि तथैव स्यात् । पाचको देवदत्त इत्यादौ सामानाधिकरण्यनिर्वाहस्तु लक्षणयेत्याशङ्कापनोदायाह—**अत एवेति** । तथा सति भावे इति पदं घञादिविधायकस्थं व्यर्थं स्यात्, अधिकारसूत्रस्थकर्तरीत्यनेनैव सिद्धेरिति भावः । नन्वेवं लकारविधायकेऽपि तदर्थकत्वापत्तिरत आह—**शब्दानुवृत्तीति** । चस्त्वर्थे । शब्दाधिकारस्वीकारजगौरवादाह—**यद्वेति** । तिङर्थस्य कर्तुः । **अभेदेनेति** । सामान्यविशेषयोरभेदान्वयादिति भावः । **भङ्गापत्तेरिति** । एकपदोपस्थाप्ययोस्तत्त्वे एकप्रसरताभङ्गापत्तेरिति भावः । युक्त्यन्तरमाह—**सत्यां हीति** । **विशेषणमिति** । प्रकृतिप्रत्ययौ सहार्थं ब्रूतः । तयोः प्रत्ययार्थस्य प्राधान्यमिति व्युत्प-

---

१ अर्थात् कर्तरि कृदित्यतः 'कर्तरि' इति पदमात्रस्यानुवृत्तिः । अनुवृत्तस्य तस्यार्थस्तु पृथगित्याशयः ।

२ पूर्वस्मिन् पक्षे व्यापारस्तिङर्थः, फलमात्रं धातोरर्थः । इदानीं पक्षान्तरमाह । यद्वेति०—

३ अर्थात् तिङर्थस्य कर्तुः प्रथमान्ते विशेष्ये (तमसि) विशेषणत्वं युक्तम्, न तु भावनायाम् (व्यापारं प्रति) कर्तुर्विशेषणत्वम् । धात्वर्थमुख्यविशेष्यकः शाब्दबोधो नोचित इत्याशयः । ततश्च 'तमः लिम्पतीव, लेपनकर्तृ इव (लेपनानुकूलव्यापाराश्रय इव)' इति कर्तृत्वस्यैवोत्प्रेक्षणं प्रतिपाद्यं न तु लेपनस्योत्प्रेक्षणम् ।

४ देवदत्तः पचतीत्यत्र देवदत्तमुद्दिश्य पाककर्तृत्वं विधीयते । 'तमो लिम्पतीव' अत्रापि प्रथमान्तार्थः (तमः) उद्देश्यम्, लिम्पतीति क्रियापदार्थो विधेयः । एवं च तिङ्वाच्यस्य कर्तुरेव प्राधान्यं स्वीकार्यं न व्यापारस्येति भावः ।

५ प्रत्ययस्य तिङः अर्थे (कर्तरि) प्रकृतेः (धातोः) अर्थो व्यापारः विशेषणम् । ततश्च प्रथमान्तविशेष्यकशाब्दबोधे एव उक्तव्युत्पत्तेः पालनं भवतीत्याशयः ।

ष्यनुग्रह एव न्याय्यः। 'भावप्रधानमाख्यातम्' इत्यस्य 'भावनार्थको धातुः' इत्यर्थकरणान्न विरोधः। न च वैयाकरणमतविरोधो दूषणमिति वाच्यम्, स्वतन्त्रत्वेनालंकारिकतन्त्रस्य तद्विरोधस्यादूषणत्वात्। प्रपञ्चयिष्यते चैतदधिकमुपरिष्टादिति प्रकृतमनुसरामः।

एवं च 'लिम्पतीव—' इत्यादौ भेदेन[1]ाभेदेन[2] वा तिङर्थस्यैव प्रथमान्तार्थ एवोत्प्रेक्षणम्। न तु धात्वर्थस्य स्वनिगीर्णे व्यापनादौ, सर्वजनसिद्धाया इवार्थस्य[3] विधेयताया अनुपपत्तेः। तमःकर्तृकं[4] लेपनमिवेत्यस्मादपि

---

त्तेरिति भावः। प्राग्वदत्रापि मते निरुक्तविरोधं प्रकारान्तरेण परिहरति—**भावेति**। पूर्वमाख्यातपदेन तिङ् गृहीतः, इदानीं धातुरिति विशेषः। ननु वैयाकरणमतरीत्या तथा प्रागुक्तमिति तद्विरोधोऽत आह—**न चेति**। पूर्वमतेनाह—**भेदेनेति**। द्वितीयमतेनाह—**अभेदेनेति**। क्रमेणैव द्वयव्यवच्छेद्यमाह—**न त्विति**। **इवार्थस्य विधेयताया इति**। विषयनिष्ठोद्देश्यतानिरूपितमिवार्थसंभावनाविषयिणो लेपनादेः प्रतीयमानं यद्विधेयत्वं तस्य भङ्गापत्तेरित्यर्थः। विषयस्य विषयिवाचकेन तव मते निगीर्णत्वादिति भावः। ननु निगीर्णमेव गृहीत्वा तदभङ्गोऽत आह—**तम इति**।

---

१ प्रथमान्तार्थे तमसि लेपनकर्तृत्वस्य धर्मस्य समवायेन (भेदेन) संभावनम् (उत्प्रेक्षणम्) इति प्रथमे मते तिङर्थस्य कर्तृत्वस्य (धर्मस्य) भेदेनोत्प्रेक्षणम्।

२ प्रथमान्तार्थे तमसि लेपनकर्तुः (लेपनकर्तृत्वस्य) तादात्म्येन [तमः लेपनकर्तृ इव] उत्प्रेक्षणमिति द्वितीयमते अभेदेनोत्प्रेक्षणमित्याशयः।

३ इवार्थस्य अर्थात् संभावनायाः [वास्तवे तु संभावनाविषयिणो लिम्पतीत्यादिक्रियार्थस्य] विधेयताया अनुपपत्तिः। अयं भावः—विषयमुद्दिश्य विषयिणो लिम्पतीत्यादिपदप्रतिपाद्यस्य लेपनादेः इवपदविहिता संभावना (उत्प्रेक्षा) विधेया (तात्पर्यविषया) अत्रास्तीति सार्वजनीनप्रतीतिः। कस्यचिद्विधेयत्वं च उद्देश्यं पुरस्कृत्यैव भवति। अत्र तु भवदभिप्रेतमुद्देश्यं व्यापनं निगीर्णम्। अत एव उद्देश्यबोधकशून्यतया विधेयताया भङ्गः स्यात्।

४ निगीर्णत्वेऽपि (उद्देश्यबोधकशून्यत्वेपि) विधेयताप्रतीतिस्वीकारे 'तमःकर्तृकं लेपनमिव' इति वाक्यादपि विधेयताप्रतीतिः स्वीकार्या आपद्येतेत्याशयः।

उद्देश्यबोधकशून्यवाक्यादुत्प्रेक्षाप्रतीत्यापत्तेश्च । यदि च विषयिसंबन्धिना लेपनादिना विषयसंबन्धिनो व्यापनादेर्निमित्ततासंपत्तये स्वताद्रूप्यसंपादनेन निगीर्णत्वादनुपात्तविषयत्वमध्यवसानमूलत्वं चोच्यते तदा रूपकेऽप्यनुपात्तविषयत्वमुच्यतामध्यवसानमूलत्वं च । 'लोकान्हन्ति खलो विषम्' इत्यादौ खलसंबन्धिनो दुःखदानादेर्विषसंबन्धिहननात्मनाध्यवसानात् । तस्मान्निमित्तांशे[२]ऽतिशयोक्तिरेव । एवम् 'उन्मेषं यो मम न सहते' इत्यत्र लक्ष्मीरूपे विषये लगनहेतुत्वेन हर्ष उत्प्रेक्ष्यते । तत्र साहजिकसंबन्धे तादात्म्येनाध्यवसितं[३] लगनमेव निमित्तम् । तथा—

---

अनुवादपुरःसरं दोषान्तरमाह—**यदि चेति** । **विषयीति** । विषयिणा तमःसंबन्धिनेत्यर्थः । एवं विषयसंबन्धिन इत्यपि व्याख्येयम् । **स्वेति** । लेपनेत्यर्थः । **रूपकेऽपीति** । प्रसिद्धरूपके मुखचन्द्र इत्यादावपीत्यर्थः । विषयानुपादानेनेति भावः । **मूलत्वं च** । **लोकानिति** । इत्यादौ तन्मूलत्वं चोच्यतामित्यर्थः । अत्र हेतुमाह—**खलेति** । उपसंहरति—**तस्मादिति** । हेतूत्प्रेक्षायामाह—**एवमिति** । तत्र तस्यामुत्प्रेक्षायाम् । संबन्धे शोभासंबन्धे । लगनमेव । हर्षहेतुकं लगनमित्यर्थः । उदाहरणा-

---

१ ननु अनुपात्तविषयवाचकपदतया उद्देश्यबोधकपदशून्यत्वमिदं कारणवशादस्ति । यतो हि उत्प्रेक्ष्यमाणं तमःसंबन्धि लेपनं प्रति तमःसंबन्धि व्यापनं निमित्तम् । तादृशनिमित्तता तावन्न प्रतीयते यावत् (व्यापनस्य) स्व(लेपन)तादात्म्यं न भवति । लेपनतादात्म्यं च व्यापनस्य निगीर्णत्वे एव संपद्यते । ततश्चैवंभूतनिमित्ततासंपत्तये सेयमनुपात्तविषयता, अध्यवसान(विषयस्य विषयिरूपतया आहार्यनिश्चय)मूलता चास्तीति पूर्वपक्षिणः उक्तौ आह—यदि चेत्यादि०—अर्थात् नेदं वक्तुं शक्यते । रूपकेऽप्येवमापत्तेः । यतो हि खलसंबन्धिदुःखदानादिः विषय एव विषसंबन्धिहननरूपविषयितयाऽध्यवसीयते । एवं प्रसिद्धरूपके मुखचन्द्र इत्यादौ मुखसंबन्ध्याह्लादकत्वादिर्गुणः चन्द्रसंबन्ध्याह्लादकत्वेनाध्यवसीयते । तथा च रूपकेपि अनुपात्तविषयत्वमध्यवसानमूलत्वं च स्वीकार्यं स्यात् ।

२ अर्थात् लिम्पतीव० इत्यादौ तमसि लेपनकर्तृत्वस्यैव भेदेन अभेदेन वा उत्प्रेक्षणं स्वीकार्यम्, न व्यापने लेपनस्य । परं लेपनकर्तृत्वस्य संभावनायां यदिदमङ्गकर्मकं व्यापनं निमित्तं तदिह नोपात्तम् । अपि तु लेपनरूपेण विषयिणा निगीर्णम्, अतो निमित्तांशे अतिशयोक्तिरेव, नोत्प्रेक्षा । इदमिह तत्त्वम्—प्राचीनैः स्वरूपोत्प्रेक्षायां ये व्यापनलेपने उत्प्रेक्षाया विषय-विषयितया स्वीकृते ते वास्तवे विषयविषयिणोः (तमो-लेपनकर्तृत्वयोः) धर्मौ न तु स्वयं विषयविषयिणौ । अतस्तदंशे अतिशयोक्तिरेव, नोत्प्रेक्षा ।

३ अर्थात् अत्र हर्षहेतुकेन पादाधिकरणकलगनेन स्वाभाविको रक्तिमसंबन्धो निगीर्णतया निहुत इति निमित्तविषये अतिशयोक्तिरेवेत्याशयः ।

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

अत्रापि मौनहेतुत्वेन नूपुरे विश्लेषदुःखमुत्प्रेक्ष्यते । तत्र निश्चलत्वनिमित्तकनिःशब्दत्वाध्यवसितं मौनं निमित्तम्, विश्लेषदुःखसमानाधिकरणत्वे सति नूपुरवृत्तित्वात् । न तु निश्चलत्वनिमित्तके निःशब्दत्वे विषये विश्लेषदुःखहेतुकमौनमभेदेन । उत्प्रेक्षायामिवशब्दान्वितस्योत्प्रेक्ष्यताया उत्सर्गसिद्धत्वात् । विषयस्य निगीर्णतया विषयिणो[2] विधेयत्वानुपपत्तेश्च । निमित्तान्तरगवेषणापत्तेश्च[3] । यद्यप्येककालप्रभवत्वादिरस्ति[4] साधारणो धर्मो निमित्तम् । तथापि तस्याचमत्कारित्वादुपमायामिवोत्प्रेक्षायामप्यप्रयोजकत्वात् । एवं फलोत्प्रेक्षायामपि बोध्यम् । एतेन 'यद्वा हेतुफल-

---

न्तरमाह—**तथेति । सैषेति** । लङ्कात अयोध्यागमनावसरे सीतां प्रति श्रीरामचन्द्रोक्तिः । **भ्रष्टमिति** । पतितमित्यर्थः । तवेति शेषः । मौनं द्विविधम्—निश्चलत्वहेतुकं दुःखहेतुकं च । तयोरभेदमाह—**तत्रेति । निःशब्दत्वाध्यवसितमिति** । निःशब्दत्वे तादात्म्येनाध्यवसितमित्यर्थः । तस्योभयनिष्ठत्वमाह—**विश्लेषेति** । नन्वाकाङ्क्षादिना तत्रैवान्वयोऽस्तु, अत आह—**विषयेति** । ननु निगीर्णमादायैव तदत आह—**निमित्तान्तरेति** । उत्प्रेक्षेतीत्यस्य यदुक्तमित्यत्रान्वयः । द्रविडश्रेष्ठेनाप्पयदी-

---

१ तत्र (विश्लेषदुःखे) निश्चलतायाः कारणेन यन्निःशब्दत्वं तत् निमित्तम्, किन्तु तत् (निःशब्दत्वम्) निगीर्य तत्स्थाने मौनमुपात्तमिति निमित्तांशे सेयमतिशयोक्तिरिति पूर्ववदत्रापि स्वीकार्यमित्याशयः ।

२ अर्थात् विषयिणः (मौनस्य) विधेयतोपपादनाय उद्देश्यस्य (विषयस्य) पूर्वनिर्देश आवश्यकः । उद्देश्यम् (विषयवाचकं निःशब्दत्वादि) तु त्वन्मते निगीर्णमत एव विधेयताऽनुपपत्तिरित्यर्थः ।

३ मौने यद्दुःखं हेतुरुत्प्रेक्ष्यते तत्र निश्चलताहेतुकं निःशब्दत्वं निमित्तम् । तद्धि निःशब्दत्वम् (यन्निगीर्णम्) सांप्रतं भवता उत्प्रेक्षाया विषयत्वेनोपादीयते । ततश्च उत्प्रेक्षायामेतदतिरिक्तं किञ्चिदन्यन्निमित्तमन्वेषणीयं स्यात् । यतो हि प्राचीनानां मते एवंविधस्थले सर्वदैव निमित्तमनुपात्तमेव संभवेत् ।

४ यस्मिन् काले विश्लेषस्तस्मिन् काले एव नूपुरस्य दुःखहेतुकं मौनम्, निश्चलत्वहेतुकं निःशब्दत्वं च भवति । अत एव तदिदं (समानकालप्रभवत्वम्) निमित्तमादाय निःशब्दत्वे विषये (निगीर्णे) मौनस्याऽभेदेन संभावनापि नोपपादयितुं शक्या, एककालप्रभवत्वस्याऽचमत्कारित्वात् । उपमायां यथा चमत्कारिण एव धर्मस्य तथात्रापीत्यर्थः ।

धर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा' इति प्राचां मतमनुसरता द्रविडपुंगवेन[1] यदुक्तं तदपि परास्तम्।

अलंकारसर्वस्वकृता तावदुत्प्रेक्षाया लक्षणमित्थं निगदितम्—"विषयिनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। स च द्विविधः—सिद्धः, साध्यश्च। तत्र साध्यत्वप्रतीतौ व्यापारप्राधान्ये उत्प्रेक्षा इति।" अस्यार्थः—सिद्धत्वं निगीर्णविषयत्वम्। साध्यत्वं च निगीर्यमाणविषयत्वम्। यत्र हि सिद्धत्वं तत्राध्यवसितप्राधान्यम्—यथातिशयोक्त्यादौ। यत्र साध्यत्वं तत्र व्यापारस्याध्यवसानक्रियायाः प्राधान्ये उत्प्रेक्षा[2] इति। एवमभेद[3]गर्भमुत्प्रेक्षालक्षणं विधाय "-'सैषा स्थली यत्र' इत्यत्र नूपुरगतस्य मौनित्वस्य हेतुत्वेन दुःखं गुण उत्प्रेक्ष्यते। तत्र मौनित्वमेव नूपुरगतनिःशब्दत्वाभेदेनाध्यवसितं निमित्तम्।" इत्युक्तम्। एवं 'यत्र धर्म एव धर्मिगतत्वेन' इत्यादिना धर्मोत्प्रेक्षाप्रसङ्गे "लिम्पतीव तमोऽङ्गानि इत्यत्र लेपनक्रियाकर्तृत्वोत्प्रेक्षणे व्यापनादि निमित्तम्।" इत्युक्तम्। तदेतत्सर्वं परस्परविरुद्धम्। नहि दुःखगुणोत्प्रेक्षायामभेदगर्भोऽध्यवसायोऽस्ति। मौनांशे सन्नप्यध्यवसायः सिद्धत्वादतिशयोक्तेरेव विषयो भवितुमर्हति,

क्षितेनेत्यर्थः। अर्वाचां मतमाह—**अलंकारेति**। तत्र तयोर्मध्ये। एवमग्रेऽपि। तत्र दुःखरूपगुणोत्प्रेक्षायाम्। **अध्यवसाय इति**। निःशब्दत्वाभेदेत्यादिः। अध्यवसा-

---

१ पुङ्गवपदस्य वाच्यं श्रेष्ठत्वं यथा प्रतीयते तथा ध्वन्यमान आक्षेपार्थोऽपि न विस्मरणीयः।

२ अयमाशयः—अतिशयोक्त्यादौ विषयी चन्द्रादिरेव विषय( मुखादि )तया अध्यवसित इति तत्र विषयिणः ( उपमानस्य ) प्राधान्यम्। यथा–'चन्द्रे इन्दीवरद्वयम्' इत्यतिशयोक्तौ। यत्र साध्यत्वम् अर्थात् अध्यवसानं सिद्धं नाऽभवत् किन्तु साध्यम् [ सिद्धत्वाय विषयनिगरणक्रिया प्रवर्तमाना ] तत्र तादृशक्रियायाः प्राधान्यम्। अत एव हि तत्र विषयस्य विषयिणि निगरणं न सिद्धमुपलभ्यते, अर्थात् विषयवाचकपदस्य पृथगुपलम्भो भवति। यथा–'मन्ये मुखं चन्द्रः' इत्युत्प्रेक्षायाम्।

३ द्वयोरनयोरलंकारयोर्भेदेऽपि अध्यवसायः उभयत्र परिगृहीतः। अध्यवसायगर्भे च अभेदप्रतिपत्तिरनुप्रविष्टा [ 'विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः' इति पूर्वमुक्तत्वात् ]। अत एवोत्प्रेक्षालक्षणमभेदगर्भम्।

नोत्प्रेक्षायाः । त्वन्मते मौनस्य निमित्तत्वेनानुत्प्रेक्ष्यत्वाच्च । एवं 'लिम्पतीव' इत्यत्र लेपनांशाध्यवसायोऽपि । तस्यापि व्यापनरूपतया स्थितस्य त्वया कर्तृत्वोत्प्रेक्षानिमित्तत्वेनोक्तत्वाच्च । 'व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्' इति त्वयैव बाधकोपन्यासात् । निमित्तांशाध्यवसानं तूपमादावपि स्थितम् । किं च, 'नूनं मुखं चन्द्रः' इत्यादौ कुत्राध्यवसायः, विषयस्य जागरूकत्वात् । न च सिद्धेऽध्यवसाये विषयस्य जठरवर्तित्वम्, साध्ये तु निगीर्यमाणत्वात्पृथगुपलब्धिरिति वाच्यम्, साध्याध्यवसाने मानाभावात् । अन्यथा रूपकादेरप्यध्यवसानगर्भत्वापत्तेः । किं च, अध्यवसानं लक्षणाभेदः । न चात्र विधेयांशे लक्षणास्ति । अभेदा-

योऽपीति । सिद्धत्वादित्यार्हतीत्यन्तानुषङ्गः । प्राग्वदाह—**तस्यापीति** । ननु मया तथोक्तमपि नेदं खण्डितमित्युपलक्षणत्वेनोद्यमत आह—**व्यापनादाविति** । इदमन्यत्रापि दृष्टमित्याह—**निमित्तांशेति** । **लक्षणाभेद इति** । साध्यवसाना सारोपा

१ 'मौनित्वमेव नूपुरगतनिःशब्दत्वाऽभेदेनाध्यवसितं निमित्तम्' इति पूर्वं मौनस्य निमित्तत्वमुक्तम् । ततश्च एतन्मौनं नोत्प्रेक्ष्यं भवितुमर्हति । भवन्मते तु यस्योत्प्रेक्षा तत्रैव अभेदप्रतिपत्तिरावश्यकीति स्पष्टमसंगतिः ।

२ उत्प्रेक्षायामिवशब्दान्वित एव स्वभावतः उत्प्रेक्ष्यो भवति, ततश्च 'लिम्पतीव' इत्युक्त्या तमसि लेपनकर्तृत्वस्योत्प्रेक्षा । न तु व्यापने (विषये) लेपनस्योत्प्रेक्षा । लेपने व्यापनस्याध्यवसायस्तु सिद्धः न साध्यः, अत एव न विधेयः । ततश्च सोयमतिशयोक्तेरेव विषयः । तदिदं व्यापनरूपतया स्थितं लेपनं तु तमसि लेपनकर्तृत्वोत्प्रेक्षायां निमित्तम् । अत एव नोत्प्रेक्ष्यम्, इदं व्यापनादि यदि उत्प्रेक्षायाम् विषयत्वेन परिगृह्येत तर्हि लेपनकर्तृत्वोत्प्रेक्षायां निमित्तमन्यदन्वेषणीयं स्यात् ।

अयं भावः—नूपुरे दुःखस्योत्प्रेक्षायाम्, तमसि लेपनकर्तृत्वस्योत्प्रेक्षायां वाऽभेदोऽध्यवसानं वा नास्ति । निमित्तांशे [ मौने, लेपने वा ] यदध्यवसानं तत्तु अतिशयोक्तेर्विषयः, नोत्प्रेक्षायाः । अत एव सर्वमिदं विरुद्धमित्याशयः ।

३ 'मुखं चन्द्र इवाह्लादयति' अत्र निमित्तमाह्लादकत्वं चन्द्रे मुखे च भिन्नं भिन्नम्, तथापि द्वयोस्तयोः केनचित्सादृश्येनैक्यं संपाद्य समानधर्मत्वं तस्योपपाद्यं भवतीत्याशयः ।

४ विषयवाचकपदस्य पृथगुपलब्धावपि यदि साध्यमध्यवसानं स्वीक्रियेत तर्हि 'मुखं चन्द्रः' इति रूपकेपि तत्प्रसक्तिः ।

दिसंसर्गैराहार्यबोधस्यैव[1] स्वीकारात् । तस्मात्प्राचीनानामाधुनिकानां चोक्तयो न क्षोदक्षमाः ।

एवं प्राप्ते ब्रूमः—तत्र तावद्धर्म्युत्प्रेक्षानिष्कर्षः प्राचीनमतपरीक्षावसरे[2] कृत एव । हेतूत्प्रेक्षायां पञ्चम्यर्थो हेतुः, अभेदश्च प्रकृतिप्रत्ययार्थयोः संसर्ग इति पक्षे विश्लेषदुःखाभिन्नहेतुः पञ्चम्यन्तार्थः । तस्य च प्रयोज्यतासंसर्गेणोत्प्रेक्षणमिवादिना बोध्यते[3] । प्रयोज्यत्वं पञ्चम्यर्थ इति दर्शने निरूपितत्वं प्रकृतिप्रत्ययार्थयोः संसर्गः । आश्रयतासंसर्गेण चोत्प्रेक्षणम्[4] । उभयथापि पञ्चम्यर्थ एवोत्प्रेक्ष्यः, तेनैवेवाद्यर्थान्वयात् । उत्प्रेक्ष्यतावच्छेदकसंबन्धेनोत्प्रेक्ष्यसमानाधिकरणश्च धर्मोऽतिशयोक्त्या मौनाभिन्नत्वेनाध्यवसितनिश्चलत्वादिर्निमित्तम्[5] । बद्धमौनं[6] च विषयः । मौनद्वारकं[7]

---

चेति भेदकरणादिति भावः । अत्र उत्प्रेक्षायाम् । **परीक्षेति** । विचारेत्यर्थः । **उत्प्रेक्ष्यतावच्छेदकसंबन्धेनेति** । स च प्रयोज्यत्वादिः । आदिना निःशब्दत्वपरिग्रहः ।

१ उत्प्रेक्षायाम् अभेद–समवायादिसंसर्गैः आहार्यः ( काल्पनिकः ) बोध एव सर्वानुमतः, न लक्षणा ।

२ अर्थात्तत्र अभेदसंबन्धेनोत्प्रेक्षेति सर्वेषां मतेनापि निर्विवादम् ।

३ विश्लेषदुःखाभिन्नो यो हेतुस्तत्प्रयोज्यमिव मौनं नूपुरस्येत्यर्थः । ततश्च–[ हेतुः पञ्चम्यर्थ इति पक्षे ] त्वच्चरणविश्लेषदुःखाभिन्नहेतुप्रयोज्य( मौन )संभावनाविषयः मत्कर्तृकानद्यतनभूतकालिकदर्शनानुकूलव्यापारप्रयोज्यफलाश्रयो नूपुरः इति बोधः । ( विश्लेषदुःखादिवेत्युक्तावपि अनेन प्रकारेण उत्प्रेक्ष्यतया दुःखस्यान्वयो न प्रतीयत इति विचार्यमेव ) ।

४ ततश्च–[ प्रयोज्यत्वं पञ्चम्यर्थ इति पक्षे ] विश्लेषदुःखनिरूपितप्रयोज्यताश्रय( मौन )-संभावनाविषयो नूपुर इति बोधः ।

५ अयमाशयः—पञ्चम्यर्थः [ प्रयोज्यत्वं हेतुर्वा ] यदा उत्प्रेक्ष्यस्तदा उत्प्रेक्ष्यतावच्छेदकसंबन्धः प्रयोज्यत्वम् आश्रयता वा स्यात् । यतो हि निमित्तभूतस्य धर्मस्य हेतुना स एव संबन्धो भवति यो हेतोरुत्प्रेक्षया भवति । ततश्च प्रयोज्यतासंबन्धेन ( पक्षान्तरे–आश्रयतासंबन्धेन ) उत्प्रेक्ष्यस्य हेतोः ( विश्लेषदुःखस्य ) समानाधिकरणः अर्थात् एकाश्रयः ( सहवासी ) यो धर्मः निश्चलत्वहेतुकनिःशब्दत्वम् ( यो हि अतिशयोक्त्या मौनाभिन्नत्वेनाध्यवसितः ) स चोत्प्रेक्षायां निमित्तम् ।

६ बद्धमौनं वस्तु ( नूपुरम् ) विषयः ( उत्प्रेक्षाया इत्यर्थः ) ।

७ मौनद्वारा मौनेन निमित्तेन बद्धमौनस्य ( नूपुरस्य ) प्रयोज्यत्वं ( सिद्धत्वम् ) संभाव्यते उत्प्रेक्ष्यते । अर्थात् दुःखरूपेण हेतुना प्रथमं मौनमुत्प्रेक्ष्यते, ततो मौनेन हेतुना ( निमित्तेन ) मौनयुक्तस्य ( पदार्थस्य नूपुरस्य ) सिद्धत्वं संभाव्यते ।

च बद्धमौनस्य प्रयोज्यत्वं संभाव्यते। एवं प्रयोज्यधर्मके[1] धर्मिणि सर्वत्रापि धर्मद्वारक एव पञ्चम्यर्थान्वयः। यत्र तु धर्म एव किंचिद्धर्माभिन्नत्वेनाध्यवसितः साक्षाद्विषयस्तत्र विषयतावच्छेदकधर्मो निमित्तम्। यथा तत्रैव 'विश्लेषदुःखादिव मौनमस्य' इति निर्माणे मौनत्वम्[2]। एवं तृतीयार्थेऽपि बोध्यम्।

फलोत्प्रेक्षायां तुमुन्नादेरर्थः फलम्। प्राग्वत्प्रकृत्यर्थप्रत्ययार्थयोरभेदः संसर्गः। तच्च साधनतासंसर्गेणान्वेतीति तेनैव संसर्गेणोत्प्रेक्ष्यते[3], यत्र चोत्प्रेक्ष्यते तदंशे विशेषणतया भासमानो धर्मो निमित्तम्[4]। स च धर्मिणि विषये अभिन्नत्वेनाध्यवसितो धर्मः, तथाभूते च धर्मे विषये तद्विशेषणीभूतोऽन्ये[5]

---

**तृतीयार्थेऽपीति**। हेताविति शेषः। प्राग्वत् प्रागुक्तप्रथमपक्षवत्। तच्च फलं च। तथाभूते च विषयतावच्छेदकधर्माभिन्नत्वेनाध्यवसिते च। **तद्विशेषेति**। विषयताव-

---

१ यस्य धर्मः उत्प्रेक्षया प्रयोज्यः (यथात्र निःशब्दत्वाभिन्नत्वेनाध्यवसितं मौनं पूर्वं संभाव्यते) एवंविधे धर्मिणि (यथात्र बद्धमौने नूपुरे) पञ्चम्यर्थस्य हेतोरन्वयः धर्म (मौन)-द्वारा भवति। उत्प्रेक्ष्यस्य हेतोः पूर्वं धर्मेऽन्वयः, ततस्तादृशधर्मस्य धर्मिण्यन्वय इत्यर्थः।

२ अत्र हि उत्प्रेक्ष्यस्य हेतोः (दुःखस्य) अन्वयः साक्षात् धर्मे (मौने) भवति, अत एवात्र उत्प्रेक्षाया निमित्तं विषयः मौनं तदवच्छेदकधर्मः मौनत्वं भवतीत्याशयः।

३ ततश्च अक्षरदर्शनाभिन्नफलसाधनताप्रयोजक(ललाटचर्मविपाटन)संभावनाविषयाः ललाटचर्मविपाटनानुकूलकृत्याश्रयाः वनान्ता इति बोधः।

४ यत्र अंशे फलोत्प्रेक्षा भवति तस्मिन् (अंशे) विषयस्य विशेषणतया भासमानो धर्मो निमित्तम्। यथा—'चोलस्य' ति पद्ये वनान्तानाम् (विषयभूतानाम्) ललाटत्वग्विपाटनरूपं विशेषणं 'द्रष्टुमिव' इति फलोत्प्रेक्षाया निमित्तम्।

५ अयं भावः—हेतूत्प्रेक्षावत् फलोत्प्रेक्षायामपि धर्मी धर्मश्चेत्युभयमपि उत्प्रेक्षाया विषयो भवति। यत्र धर्मी विषयो भवति तत्र विषयिणो धर्मस्य अभिन्नत्वेनाध्यवसितः विषयस्य धर्मो निमित्तम्। यथा—'द्रष्टुमिवाक्षराणि' अत्र वनान्तेषु ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते। तथा च—वनान्ता इति धर्मी विषयः, अक्षरदर्शनं विषयि, वनान्तस्य (विषयस्य) धर्मः स्वभावतो ललाटत्वग्विपाटनम्। अक्षरदर्शनस्य (विषयिणः) धर्मः अक्षरदर्शनफलकं त्वग्विपाटनम्। अत्र हि साहजिकं विपाटनम् अक्षरदर्शनफलकविपाटनादभिन्नत्वेनाऽध्यवसितम्, तदेव चात्रोत्प्रेक्षाया निमित्तम्। यत्र तु फलोत्प्रेक्षायां धर्मो विषयः स्यात्तत्र विषयस्य विशेषणीभूतोऽन्यो धर्मः (अर्थात् अवच्छेदकधर्मः, यथा हेतूत्प्रेक्षायां 'मौनमस्य' इति पाठे मौनत्वम्) निमित्तम्।

इति विवेकः । एवं च[1] यत्र समासप्रत्ययगुणीभूते विषये हेतुफलान्वयो न साक्षात्संभवति तत्र प्रधान एव विषये तादृशविशेषणद्वारकप्रयोज्यत्व-प्रयोजकत्वाभ्यां संसर्गाभ्यां हेतुफलयोरुत्प्रेक्षा बोध्या । यद्यपि विशेषणे-ऽपि यथाकथंचिद्धेतुफलयोरन्वयाद्विशेषणस्यापि विषयत्वमुचितम् । तथापि विषयविषयिणोरुद्देश्यविधेयभावप्रत्ययस्यानुरोधादियं सरणिराश्रिता[2] । यदि च तस्य नास्त्येवानुरोधस्तदा प्राचां दर्शनमेव रमणीयं स्यात् ।

किं च प्राचां मते हेतुफलोत्प्रेक्षास्थले तद्धेतुकतत्फलकयोः[3] कार्यकारण-योरेव निगीर्णे विषये उत्प्रेक्षणात्स्वरूपस्योत्प्रेक्षायामेव पर्यवसानम्, न हेतु-फलयोः । एवं च विभागश्चिरंतनानामुच्छिन्नः स्यात् । अथ स्वरूपतादात्म्या-विशेषेऽपि हेतुफलाविशेषणकशुद्धस्वरूपोत्प्रेक्षाया हेतुफलविशेषणकस्वरू-पोत्प्रेक्षायामस्ति हेतुफलकृत एव भेद इति चेत् 'तनयमैनाकगवेषणलम्बी-कृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी'

च्छेदकधर्म इत्यर्थः । **समासेति** । समासप्रत्ययाभ्यां गुणीभूते इत्यर्थः । **यथाकथंचि-द्धेतुफलयोरिति** । 'स्वर्गो ध्वस्तः' इत्यादाविव, 'नीलरूपवान् जातः' इत्यादाविव चेति भावः । तस्य तयोरुद्देश्यविधेयभावप्रत्ययस्य । ननु तत्कोटिप्रविष्टत्वेऽपि तस्य न

---

१ प्रयोज्यधर्मके धर्मिणि धर्मद्वारको हेत्वन्वयो यथा पूर्वमुक्तस्तथा समासप्रत्ययगुणीभूते विषये विशेषणद्वारा हेतुफलान्वय इत्याह । एवं चेति० । अयं भावः—समासादेः कारणात् अन्यपदस्य, प्रत्ययस्य वाऽर्थो यत्र प्रधानं स्यात् विषयवाचकपदस्यार्थश्च तस्यैकदेशो भवेत्तत्र विषयेण सह हेतुफलयोः साक्षादन्वयो नोपपद्यमानः प्रधानम् (अन्यपदार्थम्, प्रत्ययस्यार्थम्) एव उत्प्रेक्षाया विषयं विदधाति । विषयतायोग्यं तद्विशेषणं च द्वारीकृत्य प्रयोज्यतासंसर्गेण हेतोः, प्रयोजकतासंसर्गेण च फलस्योत्प्रेक्षा भवति ।

२ विषयस्योद्देश्यत्वं विषयिणश्च विधेयत्वं प्रतीयते, न तदेकदेश[illegible] (विशेषणयोः) इत्यनुरोधादित्याशयः ।

३ सः (वर्ण्यमानः) हेतुः यस्य (कार्यस्य), तत् (वर्ण्यमानम्) फलं यस्य (कार-णस्य), तयोरेव निगीर्णे (अध्यवसिते) विषये उत्प्रेक्षणात् । यथा—सैषा स्थलीति हेतूत्प्रेक्षायां हेतोः (विश्लेषदुःखस्य) नूपुरे (विषये) नोत्प्रेक्षा स्वीक्रियते प्राचीनैः, अपि तु विश्लेषदुःखस्य कार्यभूते (निगीर्णे) निःशब्दत्वे मौनस्य (विश्लेषदुःखरूपहेतोः कार्यभूतस्य) । एवं फलो-त्प्रेक्षायामपि । ततश्च सेयं स्वरूपोत्प्रेक्षैव परिणमेदित्याशयः ।

इति प्रागुदाहृतायां स्वरूपोत्प्रेक्षायां तनयमैनाकगवेषणरूपस्य फलस्योत्प्रेक्ष्यविशेषणकोटिप्रविष्टत्वात्फलोत्प्रेक्षात्वापत्तेः, उत्प्रेक्ष्ये साक्षाद्विशेषणताया अप्रयोजकत्वात्[1]। इत्यलं स्वगोत्रकलहेन।

उत्प्रेक्ष्यमाणेष्वपि[2] यस्य विषयिण उत्प्रेक्षा विधेयतया भासते तदीयोत्प्रेक्षयैव व्यपदेशः, प्राधान्यात्। तेन 'विश्लेषदुःखादिव बद्धमौनम्' इत्यत्र नूपुरगतत्वेन दुःखस्योत्प्रेक्षणेऽपि न तदुत्प्रेक्षया व्यपदेशो न्याय्यः, तस्या अङ्गत्वेनानुवाद्यत्वात्। किं तु पञ्चम्यर्थोत्प्रेक्षया, तस्या एव इवशब्दवेद्यत्वेन विधेयत्वात्। तथा 'चोलस्य' इति पद्येपि वनान्तगतत्वेन न ललाटाक्षरदर्शनोत्प्रेक्षयापि, अपि तु तुमुन्नर्थोत्प्रेक्षया। एवं 'तनयमैनाक—' इत्यादिगद्ये न फलोत्प्रेक्षया व्यपदेशः। नापि 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्र शशिकिशोरतादात्म्योत्प्रेक्षया, तदुत्थापितया ध्वान्तकर्तृकवैरहेतुकनिगरणकर्मतादात्म्योत्प्रेक्षया वा, प्रागुक्तादेव हेतोरिति दिक्।

द्विविधो हि तावद्धर्मोऽपि—स्वत एव साधारणः, साधारणीकरणो-

तत्र साक्षाद्विशेषणत्वमत आह—**उत्प्रेक्ष्ये इति**। 'यस्य विषयिणः' इति पाठः। तस्या नूपुरगतदुःखोत्प्रेक्षायाः। **पञ्चम्यर्थोत्प्रेक्षयेति**। व्यपदेश इत्यस्यानुषङ्गः। एवमग्रेऽपि। **प्रागुक्तादेवेति**। अङ्गत्वेनानुवाद्यत्वादित्यस्मादेवेत्यर्थः। **द्विविधो हीति**। हि यतः स्वत एवेत्यादि द्वैविध्यं प्राप्तोऽतस्तावद्धर्मोऽपि द्विविध इत्यर्थः।

---

१ अथ स्वरूपतादात्म्येत्यारभ्य अलंपर्यन्तस्य प्रघट्टकस्येदं विशदीकरणम्—ननु प्राचां मते तिसृष्वपि उत्प्रेक्षासु स्वरूपस्यैव तादात्म्यम् (अभेदः) समानम्, अर्थात् सर्वत्रैव अभेदेनोत्प्रेक्षणं भवतीत्यविशेषात् उत्प्रेक्षाविभागो न सिध्यतीति नायं दोषः। अस्त्येवं विभागः—हेतुफले यत्र विशेषणीभूते न भवेतामीदृशी स्वरूपोत्प्रेक्षा। यत्र च हेतु-फले विशेषणीभूते, क्रमशस्ते हेतुफलोत्प्रेक्षे इति चेत्, न, तनयमैनाकेत्यादिगद्ये गङ्गायां भुजस्वरूपोत्प्रेक्षणे तनयमैनाकगवेषणरूपफलस्य विशेषणकोटिप्रविष्टतया सेयमपि फलोत्प्रेक्षात्वेन व्यपदेष्टुमापद्येत [ फलं यत्र विशेषणीभूतं सा फलोत्प्रेक्षा इति विभाजनात् ]। ननु उत्प्रेक्ष्यस्य भुजस्य गवेषणम् (फलम्) साक्षाद्विशेषणं नास्ति। यत्र साक्षाद्विशेषणता तत्रैव फलोत्प्रेक्षात्वम् (एवं हेतावपि ज्ञेयम्)। इति कथनं त्वप्रयोजकम्, अर्थात् अत्र अनुकूलस्तर्को नास्तीति न किञ्चिदेतत्।

२ उत्प्रेक्षाणां सांकर्ये कया उत्प्रेक्षया व्यपदेश इति प्रघट्टकमारभते—उत्प्रेक्ष्यमाणेष्विति।

पायेनासाधारणोऽपि साधारणीकृतश्च । स चोपायः क्वचिद्रूपकं क्वचिच्छ्लेषः क्वचिदपह्नुतिः क्वचिद्बिम्बप्रतिबिम्बभावः क्वचिदुपचारः क्वचिदभेदाध्यवसायरूपोऽतिशयः ।

यथा—

'नयनेन्दिन्दिरानन्दमन्दिरं मिलदिन्दिरम् ।
इदमिन्दीवरं मन्ये सुन्दराङ्गि तवाननम् ॥'

अत्र प्रथमार्धगतः प्रथमो धर्मो रूपकेण विषयविषयिसाधारणीकृतः[1] । द्वितीयश्च[2] विलक्षणशोभयोरभेदाध्यवसायेन । केवलशब्दात्मकोऽप्ययं संभवति ।

'अङ्कितान्यक्षसंघातैः सरोगाणि सदैव हि ।
शङ्के पङ्केरुहाणीति शरीराणि शरीरिणाम् ॥'

अयमुपात्त[3] एव भवति । अर्थमयोऽनुपात्तश्चापि भवति । यथा 'द्विनेत्र इव वासवः' इत्यादौ जगदीश्वरत्वादिः । न चात्र द्विनेत्रत्वादिरूप उपात्त एव साधारणो धर्मः । साधारण्यार्थमेव तस्य विषयिण्यारोपादिति वाच्यम् । तस्यारोपेण साधारणत्वे कृतेऽपि असुन्दरत्वेनोत्प्रेक्षोत्थापकत्वविरहात् । साधारणीकरणं तु प्रतिबन्धकनिरासार्थमित्युक्तमेव[4] ।

---

इन्दिन्दिरा भ्रमराः । इन्दिरा शोभा । **प्रथम इति** । नयनेन्दिन्दिरानन्दमन्दिरत्वरूप इत्यर्थः । **द्वितीयश्चेति** । मिलदिन्दिन्दिरत्वरूप इत्यर्थः । **सायेनेति** । विषयेत्याद्यनुषज्यते । अयं केवलशब्दात्मा । **अयमिति** । प्रागुक्तोऽर्थमय इत्यर्थः । नन्वेवं तस्य साधारणत्वकरणं व्यर्थमत आह—**साधारणीति** । **निरासार्थमिति** । इवशब्दस्य

---

१ भ्रमरानन्दमन्दिरत्वरूपो धर्मः नयनेषु भ्रमरत्वरूपणेन आनने इन्दीवरे च साधारणीकृत इत्यर्थः ।

२ मिलन्ती इन्दिरा (शोभा) यस्मिन्निति द्वितीयो धर्मः वास्तवे भिन्नयोरपि शोभयोः अभेदाध्यवसायेन ( अतिशयेन ) विषये मुखे विषयिणि इन्दीवरे च साधारणीकृतः ।

३ अक्षसंघाताङ्कितत्व–सरोगत्वे अर्थभेदेऽपि समानानुपूर्वीघटिते, अत एव विषय–विषयिणोः साधारणधर्मस्थानीये इत्याशयः ।

४ द्विनेत्रत्वादयो धर्मा इन्द्रादिनातादात्म्योत्प्रेक्षाया विरोधिनः [ यतो हि द्विनेत्रत्वादीनि वासवादिषु न सन्ति ], अतः विरोधनिवर्तनाय इन्द्रादिष्वपि आरोपात् द्विनेत्रत्वादिधर्माणां साधारणीकरणमिति पूर्वमुक्तम् ।

'दृष्टिः संभृतमङ्गला बुधमयी देव त्वदीया सभा
काव्यस्याश्रयभूतमास्यमरुणाधारोऽधरः सुन्दरः।
क्रोधस्तेशनिभूरनल्पधिषण स्वान्तं तु सोमास्पदं
राजन्नूनमनूनविक्रम भवान्सर्वग्रहालम्बनम्॥'

अत्रोत्प्रेक्ष्यमाणस्य सर्वग्रहालम्बनस्य धर्मेषु तत्तद्ग्रहाश्रिताङ्कत्वेषु विशेषणीभूतैस्तत्तद्ग्रहैर्विषयस्य राज्ञो धर्मेषु कल्याणाश्रयत्वादिषु विशेषणानां कल्याणादीनां श्लेषेण तादात्म्यसंपादनद्वारा तादृशधर्माणां साधारणतासंपत्तिः[1]।

यथा वा—

'विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः।
कपोलपालिं तव तन्वि मन्ये नरेन्द्रकन्ये दिशमुत्तराख्याम्॥'

संभावनार्थकत्वाय चेत्यपि बोध्यम्। श्लेषोदाहरणमाह—**दृष्टिरिति**। राजानं प्रति कव्युक्तिः। मङ्गलपदेन भूमिजः शुभं च। बुधः पण्डितः सौम्यश्च। काव्यं पद्यं शुक्रश्च। अरुणः सूर्य आरुण्यं च। शनिरशनिश्च। धिषणो गुरुर्धिषणा बुद्धिश्च। सोमास्पदमिति। उमया सहितः सोमश्चन्द्रश्च। यद्वा 'चन्द्रमा मनसो जातः' इतिश्रुतेर्जनकतासंबन्धेन मनसि सोमास्पदत्वमुत्प्रेक्ष्यते। तेन चेश्वरत्वमपि व्यङ्ग्यमित्याहुः। पूर्वमुपात्तोदाहरणं पश्चादनुपात्तोदाहरणमित्यत्र विशेषः। **उत्प्रेक्षेति**। विषयिण इति शेषः। **कल्याणेति**। कल्याणाश्रिताङ्कत्वादिष्वित्यर्थः। श्लेषस्यैवोदाहरणान्तरमाह—**यथा**

१ अत्र हि राजनि (विषये) अभेदसंबन्धेन सर्वग्रहालम्बनस्य (विषयिणः) उत्प्रेक्षा। सर्वग्रहालम्बनस्य (विषयिणः) धर्माः तत्तद्ग्रहाश्रिताङ्कत्वानि [यथा दृष्टेः संभृतमङ्गल(भौम)त्वम्, सभाया बुध(बुधग्रह)मयत्वमित्यादीनि]। एषु धर्मेषु विशेषणीभूतानां तत्तद्ग्रहाणाम् [मङ्गल-बुध-काव्यादीनाम्] राज्ञो धर्मेषु कल्याणाश्रयत्वादिषु विशेषणीभूतैः कल्याणादिभिः सह श्लेषेण (एकपदेन अनेकार्थोपस्थापनरूपेण) तादात्म्यम् (अभेदः) संपाद्यते। अत एव तत्तद्ग्रहाश्रिताङ्कत्वं विषय-विषयिसाधारणधर्मो जात इति तद्द्वारा उत्प्रेक्षासिद्धिः। अयं भावः—मङ्गलबुधादिग्रहाणां राज्ञो धर्मेषु वस्तुतो यद्यपि न प्रवेशस्तथापि शुभार्थको मङ्गलशब्दः श्लेषद्वारा भौमग्रहार्थकाऽभिन्नो जातः। एवंप्रकारेण विशेषणानामभेदे सति तादृशविशेषणघटितधर्माणाम् (संभृतमङ्गलत्व-बुधमयत्वादीनाम्) अपि अभेदेन साधारणधर्मतासंपत्तिर्निष्प्रतिबन्धिकेत्यर्थः।

इहापि विषयविषयिधर्मविशेषणयोरलकालकयोः श्रवणवैश्रवणयोश्च श्लेषेणाभेदे धर्मस्य साधारण्यम् ।

यथा वा—

'नासत्ययोगो वचनेषु कीर्तौ तथार्जुनः कर्मणि चापि धर्मः ।
चित्ते जगत्प्राणभवो यदास्ते वशंवदास्ते किमु पाण्डुपुत्राः ॥'

अत्र पाण्डुपुत्रेषु विषयेषु राजवशंवदतादात्म्योत्प्रेक्षायां राजाश्रितत्वरूपो विषयिधर्मः श्लेषेण विषयाणां तदाश्रितानां चासत्याभावशुक्लगुणपुण्यपरमेश्वराणामभेदसंपादनद्वारा विषयसाधारणीकृतः ।

'स्तनान्तर्गतमाणिक्यवपुर्बहिरुपागतम् ।
मनोऽनुरागि ते तन्वि मन्ये वल्लभमीक्षते ॥'

अत्र वल्लभेक्षणस्य मनस्युत्प्रेक्षायां तन्निमित्तमन्तःप्रदेशाद्बहिरागमनमपेक्ष्यम् । तच्च बहिःप्रदेशसंबन्धरूपं माणिक्यमात्रवृत्ति मनसो न

**वेति** । अलकः अलका च । श्रवणः कर्णः वैश्रवणः कुबेरश्च । राजकन्यां प्रति कव्युक्तिरियम् । प्राग्वदाह—**यथा वेति** । राजानं प्रत्युक्तिरियम् । नासत्यौ नकुलसहदेवौ असत्याभावश्च । अर्जुनः किरीटी धैर्यं च । धर्मो युधिष्ठिरो विध्यर्थश्च । **जगदिति** । वायुपुत्रो भीमो हनूमांश्च । यद्वा पञ्चम्यर्थबहुव्रीहिणा वायुजनकः परमेश्वरः । **राजवशंवदेति** । विषयिणो वर्णनीयराजवशंवदा ये राजानस्तत्तादात्म्येत्यर्थः । विषयाणां पाण्डुपुत्राणाम् । **तदाश्रितानां चेति** । राजाश्रितानां चेत्यर्थः । **विषयेति** । पाण्डुपुत्रेत्यर्थः । अपह्नवोदाहरणमाह—**स्तनेति** । स्तनमध्यगतमाणिक्यस्वरूपेण बहि-

१ विषय( कपोलपालि )संबन्धिधर्मविशेषणयोः अलक—श्रवणयोः, विषयि( उत्तरदिक्)-संबन्धिधर्मविशेषणाभ्याम् अलकापुरी—कुबेराभ्यां सह श्लेषेणाऽभेदे सिद्धे धर्मस्यापि साधारणतासिद्धिरित्यर्थः ।

२ ते (राज्ञः) वशंवदा इति राजाश्रितत्वरूपो विषयिणः (उत्प्रेक्ष्यमाणस्य) धर्मः विषयाणाम् (पाण्डुपुत्राणाम्) साधारणीकृतः । कथम् ? तदाह—विषयाणां पाण्डुपुत्राणाम्, तदाश्रितानां राजाश्रितानां च असत्याभावादीनां श्लेषेण अभेदसंपादनद्वारा । अर्थात् न-असत्यमिति असत्याभावः नासत्य( नकुलसहदेव )रूपः, अर्जुनः श्वेतः अर्जुनात् ( पार्थात् ) अभिन्नः कृतः । इत्येवमादिना । अत्र 'चित्ते यत् जगत्प्राणभवः आस्ते' इत्यस्य राजपक्षे 'जगतां प्राणभूतः भवः शिवः' इत्यर्थः । 'हनूमान्' इति नागेशटीका तु परमेश्वरार्थं ब्रुवतो ग्रन्थकृतो विरुद्धा । वायुजनकः परमेश्वर इत्यपि चङ्क्रमणमेव ।

संभवतीति माणिक्यापह्नुत्या[1] मनोगतं क्रियते। बिम्बप्रतिबिम्बभावस्तु 'कलिन्दजानीरभरेऽर्धमग्ना' इत्यत्रैव निरूपितः।

'माधुर्यपरमसीमा सारस्वतजलधिमथनसंभूता।
पिबतामनल्पसुखदा वसुधायां ननु सुधा कविता॥'

अत्र कवितायां माधुर्यपानयोर्मुख्ययोरसंभवादास्वादश्रवणयोरमुख्ययोरुपचारेण मुख्याभ्यां साधारणीकरणम्। लक्षणया शक्याभेदेन लक्ष्यबोधनात्[2]।

अभेदाध्यवसायमात्रं यथा प्रागुदाहृतायां हेतूत्प्रेक्षायाम्। 'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीताम्' इत्यत्र शाखानीचत्व-कंधरानमनयोरभेदाध्यवसाय एव त्रपाहेतूत्प्रेक्षानिमित्ततयोपात्तस्य कंधरानमनस्य नीचशाखनतकंधरोभयसाधारण्ये[3] बीजम्।

रागतमित्यर्थः। नायिकां प्रति सख्युक्तिः। बिम्बप्रतिबिम्बोदाहरणमाह—**बिम्बेति**। उपचारोदाहरणमाह—**माधुर्येति**। राजानं प्रत्युक्तिः। या माधुर्यस्य परमसीमाऽऽधारभूता सारस्वतरूपसमुद्रमथनजा भुवि तां बहुसुखदां सुधारूपकवितां ननु निश्चयेन पिबेत्यर्थः। उपचारेण लक्षणया। **मुख्याभ्यामिति**। सहाभेदसंपादनद्वारा तयोर्धर्मयोरिति शेषः। ननूपचारेऽमुख्यस्यैव प्रतीत्या मुख्याप्रतीत्या दोषस्तदवस्थ एवात आह—**लक्षणयेति**। मात्रपदेन पौनरुक्त्यं परिहृतम्। पूर्वं रूपकमिश्र उक्त इति भावः।

---

१ माणिक्यं वपुः (स्वरूपम्) यस्य, माणिक्यमिषाद्बहिरुपागतमित्याशयः।

२ अग्निर्माणवक इत्यादौ अग्निरूपमुख्यार्थद्वारा अग्निसदृश इत्यमुख्यार्थ एव लक्षणया प्रतीयते। अत्र तु तद्विपरीतम् अमुख्यार्थ(आस्वाद–श्रवण–)द्वारा मुख्यार्थ(माधुर्य–पान)–बोधनमिति कथमुपपद्येतेति शङ्का। लक्षणया अमुख्यार्थस्य (लक्ष्यस्य) प्रतीतिः शक्यार्थाऽभेदेन भवति, एवं च मुख्यार्थस्य प्रतीतिरपि न दुःसंभवेति समाधानम्।

अत्र पिबतामिति कविसंमतषष्ठ्यन्तार्थान्वये 'या अस्ति तां पिब' इति अगतिकगतेराक्षेपस्य कल्पना जाह्नवीजलेऽवकरप्रक्षेप इव नागेशमहाभागस्येति प्रशस्यतां साहित्याक्रमणपराक्रमनक्रत्वममुष्येत्यलम्।

३ नीचा शाखा यस्य, नता कन्धरा यस्य, एतयोरुभयोः साधारण्ये।

एवं सर्वत्र हेतुफलयोरुत्प्रेक्षणे यस्य हेतुः फलं वोत्प्रेक्ष्यते सोऽनेन[1] प्रकारेण साधारणीकृतो निमित्तमित्यसकृदावेदितम् ।

एवं क्वचिदुपात्तो धर्मो विषयविषयिसाधारण्याभावादसुन्दरत्वाद्वा स्वयमुत्प्रेक्षणं साक्षादुत्थापयितुमसमर्थोऽपि तदुत्थापनक्षमधर्मान्तरोत्थापनेनानुकूल्यविधानादुपयुज्यते । यथा 'धौरञ्जनकालीभिः' इति प्रागुदाहृते पद्ये दिवो जलदालीसमावृतत्वरूपो धर्म उपात्तो जगतो निर्लोचनवर्गसर्गत्वोत्प्रेक्षायां वैयधिकरण्यादप्रयोजकोऽपि स्वप्रयोज्यनिबिडान्धकारप्रयुक्तचाक्षुषज्ञानसामान्यशून्यत्वस्य तथाविधोत्प्रेक्षानिमित्तस्योत्थापनेन[2] ।

विषयोऽप्युपात्तो[3] निरूपित एव । क्वचिदयमपह्नुतोऽपि भवति । यथा—

'जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम् ।
उदयति वदनव्याजात्किमु राजा हरिणशावनयनायाः ॥'[4]

इति रसगङ्गाधर उत्प्रेक्षाप्रकरणम् ।

---

साधारण्यसत्त्वेऽप्याह—**असुन्दरेति** । **उपयुज्यत इति** । एवं च तदानर्थक्यं नेति भावः । तत्राद्योदाहरणमाह—**यथेति** । **तथाविधोत्प्रेक्षेति** । जगतो निर्लोचनवर्गसर्गत्वोत्प्रेक्षेत्यर्थः । अयं विषयः । जगदन्तरं जगन्मध्यम् । राजा चन्द्रः । विषयापह्नवश्चात्र राजतादात्म्यसंभावनादार्ढ्यायेति बोध्यम् ॥ इति रसगङ्गाधरमर्मप्रकाश उत्प्रेक्षाप्रकरणम् ।

---

१ यथा नूपुरे विश्लेषदुःखं मौनस्य हेतुत्वेनोत्प्रेक्ष्यते, अत एव तन्मौनं निःशब्दत्वाभेदेन निमित्तं संपद्यते ।

२ जगति निर्लोचनवर्गसर्गत्वम् [ पर्यन्ते तु दर्शनक्रियाऽभावः ] उत्प्रेक्ष्यते । अस्यामुत्प्रेक्षायां जलदालीसमावृतत्वरूप उपात्तो धर्मः स्वयं निमित्तं न भवितुमर्हति, व्यधिकरणत्वात् [ यत्र जगति उत्प्रेक्षा क्रियते तत्र जलदालीसमावृतत्वं नास्ति, अपि तु दिवि ] । तथापि तादृशोत्प्रेक्षायां निमित्तभूतस्य स्व(जलदावृतत्व)जनितनिबिडान्धकारप्रयुक्तचाक्षुषज्ञानशून्यत्वरूपधर्मस्योत्थापनेन ( यदा जलदावृतत्वं जातं तदैव चाक्षुषज्ञानशून्यता उत्पन्ना ) । [ उपात्तोयं धर्म उपयुज्यते उत्प्रेक्षायामिति पूर्ववाक्यानुषङ्गः ] ।

३ धर्म(निमित्त)वत् उत्प्रेक्षाया विषयोऽपि शब्दोपात्तः पूर्वोदाहरणेषु [ 'तनयमैनाके'त्यत्र उत्प्रेक्ष्यस्य हिमगिरिभुजस्य ( विषयिणः ) विषयो भागीरथी उपात्तः, 'अम्भोजिनीबान्धवे'त्यत्र शुक्लगुणस्य विषयिणो विषयः बकानां समज उपात्तः, एवमादिः ] निरूपित एव । अयं (विषयः) क्वचिदपह्नुतोऽपि भवतीत्याह । क्वचिदयमिति०—।

४ 'मन्ये वदनं राजा' इति वक्तव्ये वदनव्याजादित्युक्तया विषयोऽपह्नुत इत्याशयः ।

अथातिशयोक्तिः

**विषयिणा विषयस्य निगरणमतिशयः । तस्योक्तिः ॥**

तच्च स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवान्यस्य[1] बोधनम् । अत्र च विषये विषयिवाचकपदस्य लक्षणायाः शक्यतावच्छेदकमात्रप्रकारकलक्ष्यविशेष्यकबोधत्वं कार्यतावच्छेदकम् । अतः शक्यासाधारणधर्मस्य लक्ष्यासाधारणधर्मस्य च भानाभानयोर्न विरोधः[2] । परे तु 'मात्रविशेषणं[3] न देयम् । तेन लक्ष्यासाधारणोऽपि धर्मो भासते' इत्याहुः । केचित्तु 'लक्षणया लक्ष्यासाधारणधर्मप्रकारेणैव[4] बोधः । अनन्तरं च व्यापारान्त-

अथातिशयोक्तिं निरूपयति—**अथेति** । योगरूढं तदित्याह—**विषयीति** । निगरणपदार्थमाह—**तच्चेति । स्ववाचकपदेनेति** । लक्ष्यतावच्छेदकं च मुख्यत्वमेवेति प्रागेव निरूपितं मूले । ननु रूपकादभेदस्तत्राह—**अत्र चेति** । अतिशयोक्तावित्यर्थः । एतावानेव विशेष इति भावः । अनन्तरं च लक्ष्यार्थबोधोत्तरं च । **व्यापारेति** । व्यञ्जनयेत्यर्थः । एतानि मतानि पूर्वं निरूपितानि । ननु बाधज्ञानसत्त्वात्कथं

१ 'तमालः मम श्रमान् हरतु' अत्र विषयिवाचक(तमाल)पदेन शक्यतावच्छेदकरूपेण [ शक्यस्तमालार्थः तदवच्छेदकं तमालत्वम्, तथा च तमालत्वेन रूपेण ] अन्यस्य (लक्ष्यार्थस्य) अर्थात् भगवतो बोधनं भवति । अयं भावः—अत्र तमालपदेन लक्षणया भगवतः श्रीकृष्णस्य बोधो भवति परं तमालत्वेन [ शक्यतावच्छेदकरूपेण ], न तु श्रीकृष्णत्वेन । यतो हि अत्र शक्यतावच्छेदक( तमालत्व )मात्रं प्रकारीकृत्य लक्ष्यविशेष्यकः [ लक्ष्यः भगवदर्थः विशेष्यं प्रधानं यत्र ] ईदृशो बोधो लक्षणायाः कार्यम् । अर्थात् विशेष्यतया लक्ष्यस्य श्रीकृष्णस्य बोधो भवति परं तमालत्वमात्र( शक्यतावच्छेदक )प्रकारकतया, न तु ( लक्ष्यतावच्छेदक )-कृष्णत्वप्रकारकतया, प्रकारतायां मात्रपदनिवेशात् ।

२ अर्थात् मात्रनिवेशात् । शक्यासाधारणधर्मस्य तमालत्वस्य भानम्, लक्ष्यासाधारणधर्मस्य श्रीकृष्णत्वस्य अभानम् । विरुद्धया तमालत्वभानसामग्र्या स्व(श्रीकृष्णत्व)धर्मस्य भाननिवारणमुचितमेव । उक्तं पूर्वं साध्यव० लक्षणाप्रकरणे 'निवार्यत एव विरुद्धभानसामग्र्या स्वधर्मस्य भानम्, रजतत्वभानसामग्र्या शुक्तित्वस्य अभानात्' ।

३ मात्रविशेषणाभावे लक्ष्यस्य श्रीकृष्णस्यापि असाधारणधर्मः ( कृष्णत्वम् ) तत्र प्रकारतया भासते । उक्तं पूर्वं साध्यव० लक्षणाप्रकरणे 'मुखत्वेनोपस्थापितस्यापि मुखादेः शाब्दबोधश्चन्द्रत्वादिना भवति' [ पदोपस्थितिशाब्दबोधयोः समानाकारत्वस्य लाक्षणिकबोधातिरिक्तविषयतायाः स्वीकारात् ] ।

४ उपस्थितिशाब्दबोधयोः समानाकारत्वमङ्गीकुर्वतां मते—लक्षणया लक्ष्याऽसाधारणधर्म( श्रीकृष्णत्व )प्रकारेणैव बोधः । अनन्तरं व्यञ्जनया शक्य(तमाल)तावच्छेदकप्रकारेण बोधः । उक्तं पूर्वम्—'व्यञ्जनया एकशब्दोपात्तत्वप्रादुर्भूतया चन्द्रत्वेन बोधः' ।

रेण शक्यतावच्छेदकप्रकारेण लक्ष्यबोधः ।' इत्याहुः । बाधज्ञानस्य च यथा न प्रतिबन्धकत्वं तथोक्तं प्राक्[1] । अत्र चैकपदोपात्तत्वान्नोद्देश्यविधेयभावः ।

उदाहरणम्—

'कलिन्दगिरिनन्दिनीतटवनान्तरं भासय-
न्सदा पथि गतागतक्लमभरं हरन्प्राणिनाम् ।
स्फुरत्कनककान्तिभिर्नवलताभिरावेल्लितो
ममाशु हरतु श्रमानतितमां तमालद्रुमः ॥'

अत्र तमालेन भगवतो निगरणे कलिन्दनन्दिनीत्यादीनि त्रीणि चरणत्रयगतानि विशेषणानि तदनुग्रहार्थं विषयविषयिणोः साधारणधर्मतया साक्षादुपात्तानि । चतुर्थमपि चतुर्थचरणगतमवैयाकरणानां दर्शने[2] । वैयाकरणानां तूपात्तया तमालाभिन्नकर्तृकया श्रमहरणक्रिययोन्नीतं तादृशकर्तृत्वं तथा तयोः स्थितम्[3] । द्वितीये चरणे चोच्चावचयोनिसंचरणस्य पथ्या-

---

व्यञ्जनया तथा बोधोऽत आह—**बाधज्ञानेति** । एवं चाहार्याभेदबुद्धिः । बाधकबुद्धिकालिकस्यैवाहार्यत्वादिति भावः । प्राञ्चस्तु 'कमलमनम्भसि-' इत्यादावाह्लादकत्वादिकं लक्ष्यतावच्छेदकम् । तेन रूपेण प्रथमतो बोधे तद्धर्मावच्छिन्ने कमलाभेदप्रत्ययो व्यञ्जनयानाहार्यः । तद्धर्मावच्छिन्ने कमलाभेदबाधबुद्धेरभावात् । अत एव 'गौणसाध्यवसानायां सर्वथैवाभेदावगमः' इति प्रकाशकृतः । रूपके त्वाहार्य एव । अयमेव रूपकादस्या विशेषः" इत्याहुः । वनान्तरं वनमध्यम् । **गतागतेति** । गमनागमनक्लेशेत्यर्थः । तदनुग्रहार्थं तेन तन्निगरणानुग्रहार्थम् । **दर्शन इति** । तदर्थं तयोस्तत्त्वेन साक्षादुपात्तमिति शेषः । तैः प्रथमान्तार्थविशेष्यकबोधाङ्गीकारादिति भावः । **वैयाकरणानां त्विति** । दर्शन इत्यनुपज्यते । तथा तदर्थं तयोस्तत्त्वेन साक्षात्तथा अनुपात्तम् । **उन्नेति** ।

---

१ लक्षणायां नव्यमतवर्णने 'बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ०' इत्यादिना ।

२ नैयायिकादीनां मते प्रथमान्तार्थविशेष्यकशाब्दबोधे 'श्रमान् हरतु' इतीदं 'प्रार्थनाविषयीभूतश्रमकर्मकहरणाश्रयः' इति कर्तृ( तमाल )बोधकतया कृष्णतमालयोः साधारणधर्मीभवत् चतुर्थमपि विशेषणं ( साक्षादुपात्तमिति पूर्वानुषङ्गः ) ।

३ 'तमालाभिन्नकर्तृका श्रमहरणक्रिया' इति शाब्दबोधोत्तरम् उपात्तया अनया क्रियया कर्तृत्वं संनिहितयोरनयोः ( हरि-तमालयोः ) अनुमितं भवतीति ( अनुमितमिदं कर्तृत्वम् ) तयोः ( हरितमालयोः ) तथा ( साधारणधर्मतया ) स्थितम् ।

दिना, तृतीयेऽपि लताभिर्गोपीनां निगरणम्, तस्मिन्नेवानुग्राहकतया। एवं च सावयवेयमतिशयोक्तिः। यत्र चानुग्राहकं न निगरणान्तरं किं तु शुद्धं साधारणधर्मादि, सा निरवयवा।

यथा—

'नयनानन्दसंदोहतुन्दिलीकरणक्षमा।
तिरयत्वाशु संतापं कापि कादम्बिनी मम॥'

अत्र भगवतो मूर्तिर्निगीर्णा। नामार्थयोरभेदसंसर्गेण विशेष्यविशेषणभावस्य व्युत्पन्नतया रूपके तावदुचितो विषयविषयिणोस्तेन संसर्गेण विशेष्यविशेषणभावः, न तु प्रकृते। विषयितावच्छेदकरूपेण विषयस्यैव भानादभेदसंसर्गस्याप्रसक्तेः[1]। अभेदप्रधानातिशयोक्तिरिति प्रवादस्तु प्रागुक्ते संसर्गारोपरूपके[2] इव विषयितावच्छेदकस्यैव भेदाभावरूपतया निर्वाह्यः। तच्च विषयितावच्छेदकं[3] क्वचित्प्रकृते निगरणदार्ढ्याय विषय-

हीनोत्तमयोनिजन्मेत्यर्थः। **तस्मिन्नेवानुग्राहकतयेति**। भगवतो निगरणे। तदा वेल्लनकर्मत्वतद्धरणकर्तृत्वस्वरूपे साधारणधर्मौ। साधारणत्वसंपादनमेवानुग्राहकत्वमिति भावः। यत्र च यत्र तु। रूपकतो भेदान्तरमाह—**नामार्थेति**। एवेन विषयिव्यावृत्तिः। **विषयीति**। तमालत्वादेरित्यर्थः। **भेदाभावरूपतयेति**। 'आस्ये पूर्णशशाङ्कता' इत्यादावन्योन्याभावस्य प्रतियोगितावच्छेदकधर्मरूपतायाः सर्वतन्त्रसिद्धत्वा-

१ अभेदसंसर्गेण विषय-विषयिणोस्तत्रैव विशेष्यविशेषणभावः यत्र द्वयोः पृथक्तया प्रतीतिः। अतिशयोक्तौ तु विषयस्यैव (हरेरेव) विषयितावच्छेदक(तमालत्व)रूपेण भानात् द्वयोरप्रतीत्या नाऽभेद इत्याशयः।

२ 'मुखं चन्द्रः' इत्यादिषु द्वयोः समानविभक्तिकतायां तु अभेदः (रूपकम्) संसर्गरूपतया स्पष्टं प्रतीयते। किन्तु 'आस्ये पूर्णशशाङ्कता' इत्यादिस्थलेषु 'शशाङ्कता' इति शब्देनाभिधीयमानं विषयितावच्छेदकम् (शशाङ्कत्वम्) एव अभेदरूपं स्वीकृत्य अभेदात्मकरूपकं यथा व्यपदिश्यते तथा अतिशयोक्तिस्थले [तमालो मम श्रमान् हरतु] इत्यादावपि विषयितावच्छेदकम् (तमालत्वादि) एव भेदाभाव(अभेद)रूपतया उपलभ्यत इति अभेदप्रधानताव्यपदेश इत्याशयः।

३ अर्थात् विषयितावच्छेदकं विषयमात्रवृत्तिर्यो धर्मः, स्वम् (विषयितावच्छेदकम्) तत्समानाधिकरणः (अर्थात् विषयिमात्रवृत्तिः) च यो धर्मः, उभाभ्यां शून्यं स्यात्। अयं भावः—विषयितावच्छेदकरूपेण विषयस्य यद्भानं भवति तत्र विषयितावच्छेदकधर्मे ईदृशोऽपेक्षितो यो हि सामानाधिकरण्यसंबन्धेन विषय-विषयिमात्रवृत्तिधर्मशून्यो भवेत्। अर्थात् तत्सहवासी धर्मः उभयसाधारणो भवेत् नैकतरसाधारणः। यथा कलिन्दगिरीत्यत्र तमालत्वं

मात्रवृत्तिधर्म–स्वसमानाधिकरणधर्मशून्यत्वाभ्यां प्रसिद्धम्। यथा 'कलिन्दगिरिनन्दिनी' इत्यादौ तमालत्वादि। क्वचिदप्रसिद्धमपि कल्पितोपमाद्वावुपमानमिव कविना स्वप्रतिभया कल्पितम्, धर्मिण इव धर्मस्यापि कल्पनाया अविरुद्धत्वात्।

यथा—'स्मृतापि तरुणातपम्'।

यथा वा—

'जगज्जालं ज्योत्स्नामयनवसुधाभिर्जटिलय-
ञ्जनानां संतापं त्रिविधमपि सद्यः प्रशमयन्।
श्रितो वृन्दारण्यं नतनिखिलवृन्दारकनुतो
मम स्वान्तध्वान्तं तिरयतु नवीनो जलधरः॥'

दिति भावः। **स्वेति**। विषयिमात्रवृत्तिधर्मेत्यर्थः। **धर्मशून्यत्वाभ्यामिति**। धर्मद्वयशून्यत्वं च सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकम्। 'नवीनो जलधरः' इत्यत्र च भगवद्वृत्तिलोकोत्तरत्वतत्समानाधिकरणनवसुधाकरणकव्याप्तिकर्तृत्वे जलधरत्वेनाऽसमानाधिकरणे, सामानाधिकरण्यसंबन्धेन तदुभयविशिष्टजलधरत्वं कविकल्पितम्। **क्वचिदप्रसिद्धमपीति**। सामानाधिकरण्यसंबन्धेन तादृशधर्मद्वयविशिष्टतया अप्रसिद्धमपीत्यर्थः। अपूर्वश्चन्द्र इत्यादावप्येवम्। मुखमपूर्वश्चन्द्र इत्यादौ कविकल्पितविशिष्टचन्द्रेणाहार्याभेदप्रतीते रूपकम्। केचित्तु 'कविकल्पिततादृशचन्द्रत्वस्य मुखत्वेन विरोधाभावादनाहार्यैव विषयितावच्छेदकप्रकारधीः, रूपकलक्षणे चाहार्यत्वं न देयम्। अतिशयोक्तिरनाहार्यैव। रूपके त्वाहार्या अनाहार्या च धीः' इत्याहुः। अन्ये तु 'प्रस्तुतस्य

सामानाधिकरण्यसंबन्धेन विषय( भगवत् )विषयि( तमाल )मात्रवृत्तिधर्मशून्यम्। यतो हि विषयितावच्छेदकेन ( तमालत्वेन ) समानाधिकरणः कालिन्दीतटकर्मकभासनाश्रयत्व–क्लमहारकत्व–कनककान्तिलतावेष्टितत्वरूपो धर्मो न केवले विषये ( हरौ ) न वा विषयिणि ( तमाले ) वर्तते, अपि तूभयसाधारणः। अनेनेदमेव निगरणदार्ढ्यं यत् विषयितावच्छेदकसमानाधिकरणोऽयं धर्मः उभय( विषयविषयि )बोधनक्षम इति निगरणमिदमभीष्टार्थबोधने दृढम्।

१ स्मरणेऽपि तीव्रातपहारकत्व–चिरस्थायिशरीरकान्तिविद्युच्छतवेष्टितत्व–कालिन्दीतटनीपद्रुमाश्रयकत्वरूपधर्मैः समानाधिकरणं कादम्बिनीत्वं कविकल्पितम्, न लोके प्रसिद्धम्। यतो हि कादम्बिनी वर्षणद्वारा तापहारिणी, भङ्गशीलतनुकान्तिविद्युता ( एकया ) वेष्टिता, वियदाश्रया च। तथा च कल्पितोपमायाम् ( स्तनाभोगे पतन्० ) उपमानम् ( शशाङ्कबिम्बापादानकलम्बनाश्रय उरगः ) यथा कल्पितं तथाऽत्र तादृशधर्मविशिष्टस्य विषयितावच्छेदकस्य कल्पनमपि नानुपपद्यमानमित्याशयः।

अत्र विषयधर्मविशिष्टतया[1] कल्पितेन लोकोत्तरजलधरत्वेन रूपेण भगवतः प्रतिपादने तत्समानाधिकरणत्वेन कल्पितानां विशेषणानामानुगुण्यम्। एवं च निगरणे सर्वत्रापि विषयितावच्छेदकधर्मरूपेणैव विषयस्य भानम्, न[2] विषय्यभिन्नत्वेनेति स्थिते 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इत्युक्त्वा 'अत्रातिशयोक्तौ रूपकविशेषणं रूपके दर्शितानां विधानामिहापि संभवोऽस्तीत्यतिदेशेन प्रदर्शनार्थम्। तेनात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति' कुवलयानन्दे यदुक्तं तन्निरस्तम्[3]" इति नव्याः। प्राञ्चस्तु 'रूपक इवात्रापि विषय्यभेदो भासते। परं तु

यदन्यत्वेमित्यतिशयोक्तिरेषु प्रकृतस्य विविक्ताकारवस्त्वन्तरत्वेनान्यवस्तुत्वेन वाऽध्यवसानमिति तदर्थः। अस्ति हि प्रकृतस्य मुखस्य चन्द्रत्वेनाध्यवसानम्। आहार्यत्वाभावाच्च न रूपकम्' इत्याहुः। **विषयधर्मेति**। लोकोत्तरत्वेत्यर्थः। सामानाधिकरण्यसंबन्धेन तद्वैशिष्ट्यं बोध्यम्। एवं चेत्यस्य निरस्तमित्यत्रान्वयः। विधानां प्रकाराणाम्। **अतिदेशेनेति**। अन्यत्रान्यशब्दप्रयोग इति न्यायादिति भावः। अत्रापि अतिशयोक्तावपि। **तन्निरस्तमिति**। अत्रेदं चिन्त्यम्—काव्यप्रकाशादिरीत्या तदुक्तम्। निर्बाधकत्वात्। किं च त्वयाप्यभेदप्रधानातिशयोक्तिरिति प्राचीनव्यावहारसंगमनाय विषयितावच्छेदकमेवाभेद इत्यवश्यं वक्तव्यम्। एवं च तथैवाभेदातिशयोक्तिरिति व्यवहारो मयापि सूपपादः। 'कोऽयं गलितहरिणः—' इत्यादौ प्रसिद्धविषयितावच्छेदकप्रकारकबोधस्य बाधबुद्धिपराहतत्वात्कोऽयमित्यनेन निरस्तत्वाच्चावश्यं चन्द्रकार्यकारित्वप्रकारकबोधोऽङ्गीकार्यः। एषैव च ताद्रूप्यातिशयोक्तिः। अत्रापि विषयितावच्छेदकप्रकारकधीराहार्यैव। तद्धर्मविशिष्टे शक्यसंबन्धाग्रहोऽपि तथैव। तद्ध-

---

१ नवसुधाकरणकव्याप्तिकर्तृत्वादिरूपो धर्मो विषये (भगवति) एव संभवेत् न जलधरे। ततश्च विषयधर्मविशिष्टतया जलधरत्वस्य (विषयितावच्छेदकस्य) उक्तिः कविकल्पनैव। अत एव हि नवीनत्वोक्तिः। एवंविधनवीनत्वसाधनाय च जलधरत्वसमानाधिकरणानां सुधाकरणकव्याप्तिकर्तृत्वादिविशेषणानामानुकूल्यमेव, तत एव च प्रसिद्धजलधरासाध्यं ध्वान्ततिरस्करणमपि समञ्जसमेवेत्याशयः।

२ अर्थात् कलिन्दगिरि० अत्र लक्षणया हरेर्बोधो भवति परं तमालत्वेन रूपेण, न तु तमालाऽभिन्नत्वरूपेण। विषयस्य निगरणात्।

३ विषय्यभेदो यदा न प्रतीयते तदा अभेदातिशयोक्तिरिति व्यपदेशो नोपपद्यत इत्यर्थः। अत एव हि 'विषयितावच्छेदकरूपेण विषयस्यैव भानादभेदसंसर्गस्याऽप्रसक्तेः' इति पूर्वमुक्तम्।

निगीर्णे विषये इति रूपकादस्या विशेषः । अध्यवसायस्य सिद्धत्वेना-प्राधान्यान्निश्चयात्मकत्वाच्च साध्याध्यवसानायाः संभावनात्मकोत्प्रेक्षाया वैलक्षण्यम्' इत्याहुः[1] । कथं तर्हि 'कमलमिदमनम्बुजातं जयतितमां कनकलतिकायाम्' इत्यादाविदंत्वादेर्विषयतावच्छेदकस्योल्लेखान्निगरणमिति चेत्, न । इदमित्यस्य[2] कमलत्वविशिष्टे विशेषणत्व एवातिशयोक्तिः, उद्देश्यतावच्छेदकत्वे तु रूपकमेव । एवं 'गौरयम्', 'आयुरेवेदम्' इत्यादावपि बोध्यम् । अत एवातिशयोक्तावभेदोऽनुवाद्य[3] एव, न विधेय इति प्राचामुक्तिः संगच्छते । एवमेकः प्रकारोऽतिशयस्य, यत्र भेदेऽप्यभेदः ।

अथ प्रकारान्तरम्—यत्राभेदेऽपि भेदो लोकोत्तरत्वप्रतिपत्त्यर्थः, इदमेव प्रस्तुतस्यान्यत्वमित्यनेनोक्तम् ।

उदाहरणम्—

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।

मैवैशिष्ट्यमपि लक्ष्यस्यारोपितमेवेति बोध्यम् । **अस्या विशेष इति** । आहार्यत्वानाहार्यत्वकृतो विशेष इत्यर्थः । उत्प्रेक्षातोऽत्र वैलक्षण्यमाह—**अध्यवेति** । **इदमिति** । यत इत्यादि । अत एव सर्वथा विषयानुपादानेऽस्या अङ्गीकारादेव । **एवमिति** । उक्तप्रकारेणेत्यर्थः । निरूपित इति शेषः । इदमेव । प्रकारान्तरमेव । **उक्तमिति** । प्रकाशकृतेति शेषः । **अन्या जगदिति** । विद्वद्वर्णनमिदम् । कृतिश्चेष्टा । आर्यहृद्या आकृतिः

१ अतिशयोक्तौ अध्यवसानं सिद्धम्, अर्थात् विषयो निगीर्णो न तु निगीर्यमाणो भवति । अध्यवसितस्य ( विषयिणः ) च प्राधान्यं भवति । उत्प्रेक्षायां तु अध्यवसानं साध्यम् अर्थात् विषयो निगीर्यमाणो भवति । अध्यवसानक्रियायाश्च तत्र प्राधान्यमिति उत्प्रेक्षायामलंकारसर्वस्वलक्षणप्रसङ्गे पूर्वमुक्तम् । ततश्च निगीर्णे विषये अध्यवसायः ( विषयिणोऽभेदप्रतिपत्तिः ) भवतीति रूपकाद्विशेषः ।

२ अतिशयोक्तौ—'अनम्बुजातमिदं कमलं जयति' इत्यत्र इदमिति पदं कमलत्वविशिष्टस्य विषयिण एव विशेषणं न तु 'इदम् ( मुखम् ), अनम्बुजातं कमलम्' इति विषयस्य विशेषणम् । उद्देश्यतावच्छेदकत्वे अर्थात् इदं मुखमुद्दिश्य कमलत्वस्य विधेयत्वे तु रूपकमेव स्यादित्याशयः ।

३ अर्थात् अभेदः पूर्वसिद्धो भवति । सिद्धं तमनूद्य ( उद्दिश्य ) विषयिणा विषयस्य निगरणं विधेयं भवतीत्याशयः ।

लोकोत्तरा च कृतिराकृतिरार्यहृद्या
विद्यावतां सकलमेव चरित्रमन्यत् ॥'

एवमन्यः प्रकारः—यत्रासंबन्धेऽपि संबन्धो वर्ण्योत्कर्षार्थः।

यथा—

'धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥'

अत्र सिंहीवचने समुच्छलनाऽसंबन्धेऽपि समुच्छलनसंबन्धोक्तिः शौर्यातिशायिका।

यथा वा—

'गिरं समाकर्णयितुं यदीयां सदा रसज्ञैरनुभावनीयाम्।
समीहते नित्यमनन्यचेता नभस्वदात्मंभरिवंशनेता ॥'

यथा वा—

'तिमिरशारदचन्दिरतारकाः कमलविद्रुमचम्पककोरकाः।
यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे ॥'

पूर्वत्र निर्णीयमानः, इह तु संभाव्यमान इति विशेषः।

तथान्यः प्रकारः—यत्र संबन्धेऽप्यसंबन्धः।

यथा—

'पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम्।
तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः ॥'

अत्र तोषसंबन्धेऽप्यसंबन्धः।

एवमेवान्योऽपि प्रकारः—यत्र प्रयोजकस्य प्रयोज्यस्य च पौर्वापर्यविपर्ययः। स च द्वयोः सहभावात्, प्रयोजकस्य प्रयोज्यानन्तरभावाद्वेति द्वेधा।

---

शरीरावयवसंस्था च लोकोत्तरेत्यर्थः। चरित्रं व्यवहारः। मध्येजठरमिति। 'पारेमध्ये-षष्ठ्या वा' इति समासः। **यदीयामिति**। प्रकृतवर्णनीयराजकीयामित्यर्थः। **नभस्वदिति**। नभस्वता वायुना आत्मानं बिभ्रति ये सर्पास्तेषां वंशस्य कुलस्य नेता नायकः, शेष इत्यर्थः। अत्र तदाकर्णनसमीहाऽसंबन्धेऽपि तदुक्तिस्तद्वैदुष्यातिशायिका। **चन्दिरेति**। चन्द्रेत्यर्थः। मिलन्ति एकत्र तिष्ठन्ति। तदाननं तस्या वर्ण्याया नायिकाया मुखम्। कलया न तु सर्वांशेन। पूर्वत्र पूर्वयोः। **इह त्विति**। यदीत्यस्य संभावनाबोधकत्वादिति भावः। **यथेति**। पीयूषममृतमेव यूषो मण्डविशेषस्तेन ईषन्न्यूनाम्। **ते**

आद्यो यथा—'प्रतिखुरनिकरशिलातलसंघट्टसमुच्छलद्विद्युद्वल्लीकृतविस्फुलिङ्गच्छटापटलानां वाजिनाम्' इति हयवर्णने समुच्छलनविद्युद्वल्लीकरणयोः सहोत्पत्तिर्गम्यते।

द्वितीयो यथा—

'पुरः[2] पुरस्तादरिभूपतीनां भवन्ति भूवल्लभ भस्मशेषाः।
अनन्तरं ते भ्रुकुटीविटङ्कात्स्फुरन्ति रोषानलविस्फुलिङ्गाः॥'

अत्र भेदद्वये प्रयोजकातिशयकृतः प्रयोज्यशैघ्र्यातिशयो गम्यः।

एवं च 'एतद्भेदपञ्चकान्यतमत्वमतिशयोक्तिसामान्यलक्षणम्' इति प्राचीनाः।

अन्ये तु—'संबन्धेऽसंबन्धः, असंबन्धे संबन्ध इति भेदद्वयं नातिशयोक्तिः। एतादृशातिशयस्य रूपक[3]दीपकोपमापह्नुत्यादिषु स्वभावोक्तिभिन्नेषु

---

वर्णनीयस्य राज्ञः। **समुच्छलनेति**। विस्फुलिङ्गानामित्यादिः। **सहोत्पत्तिरिति**। शतृप्रत्ययेनेति भावः। 'शत्रा समुच्छलन' इति पाठे तु ततः प्रागत्रेति शेषः। वस्तुतः समुच्छलनं तत्र हेतुरिति बोध्यम्। **पुर इति**। राजवर्णनमिदम्। हे भूवल्लभ, पुरः पुरस्तात् पूर्वं पूर्वं शत्रुरूपाणां राज्ञां भस्मरूपाः शेषा अवशेषा भवन्ति। पश्चात्तव भ्रुकुट्येव विटङ्कं कपोतपालिका तस्मात्क्रोधरूपाग्निविस्फुलिङ्गाः स्फुरन्तीत्यर्थः। अत्र भेदद्वये बाधितत्वं परिहरति—**अत्रेति**। स्वभावोक्तौ सर्वथा तदसत्त्वादाह—**स्वभावोक्तीति**।

---

१ संघर्षेण समुच्छलताम् (विस्फुलिङ्गानाम्) विद्युद्वल्लीकृतं छटापटलं यैस्तेषाम् (वाजिनाम्)। पूर्वं विस्फुलिङ्गानां समुच्छलनं भवति ततस्तेषां विद्युद्वल्ली(विद्युन्मयी लता)रूपेण संपादनं भवति। किन्त्वत्र द्वयोः सहभावः।

२ हे भूवल्लभ, पुरस्तात् प्रथमं अरिभूपतीनां शत्रुनृपाणां पुरो नगर्यो भस्मशेषाः (भस्मैव अवशिष्टांशो यासां ताः) भवन्ति, अनन्तरं ते भ्रुकुटीविटङ्कात् (विटङ्कमिव विटङ्कम्, उन्नतप्रदेशस्तस्मात्) रोषाग्निविस्फुलिङ्गाः स्फुरन्तीत्यर्थः। अत्र पुरःपुरस्तादित्येकपदमङ्गीकृत्य पूर्वंपूर्वमिति नागेशकृतं व्याख्यानं वैयाकरणानामतीव हास्यास्पदम्। 'सर्वस्य द्वे' इति सूत्रेण 'पुरःपुर' 'पुरस्तात् पुरस्तात्' इति वा द्विर्भावो युक्तः, न तु असुप्रत्ययान्त-अस्तातिप्रत्ययान्तपदयोः, असांप्रदायिकत्वात्। एवं 'राज्ञां भस्मरूपाः शेषा भवन्ति' इति व्याख्यानमप्यसंगतमेव। यतो हि राज्ञामिति षष्ठ्याः शेषा इत्यत्रान्वये, शेषा इत्यस्य चोद्देश्यसमर्पकत्वे 'राज्ञां शेषाः कीदृशा भवन्ति' इति जिज्ञासायां विधेयसमर्पकपृथक्पदाभावात् वाक्यार्थानिष्पत्तिः। तस्मादेवंविधं व्याख्यानं व्याख्यातुः साहित्यसौधे हठाक्रमणमिव पिशुनयतीत्यलं मार्मिकेषु।

३ मुखं चन्द्र इति रूपके मुखे चन्द्राऽभेदस्य संबन्धो नास्ति तथापि स वर्ण्यते। एवमन्यत्रापि ज्ञेयम्।

प्रायशः सर्वेष्वलंकारेषु सत्त्वात् । नहि यथास्थितवस्तूक्तावस्ति काचिद्विच्छित्तिः । कार्यकारणपौर्वापर्यविपर्ययस्यापि तेनैवं व्याप्ततया भेदान्तरतानापत्तेश्च । तस्माद्विषयिणा निगीर्याध्यवसानं विषयस्य, तस्यैवान्यत्वम्, यद्यादिशब्दैरसंभविनोऽर्थस्य कल्पनम्, कार्यकारणपौर्वापर्यविपर्ययश्चेत्येतदन्यतमत्वमतिशयोक्तित्वम्' इत्याहुः ।

नव्यास्तु—'निगीर्याध्यवसानमेवातिशयोक्तिः । प्रभेदान्तरं त्वनुगतरूपाभावादलंकारान्तरमेव । ननु प्रस्तुतान्यत्वभेदे—भेदेनाभेदस्य, असंबन्धे संबन्ध इति भेदे—संबन्धेनासंबन्धस्य, संबन्धेऽसंबन्ध इति भेदे—असंबन्धेन संबन्धस्य, कार्यकारणपौर्वापर्यविपर्यये च तेनैवानुपूर्व्यस्य च

अन्यत्रापि क्वचिदसत्त्वादाह—**प्रायश इति** । **सत्त्वादिति** । तथा च तेषामप्यतिशयोक्तित्वापत्तिरिति भेदेन तत्कथनासंगत्यापत्तिरिति भावः । ननु तर्हि तत्र कोऽलंकारोऽत आह—**नहीति** । अभ्युपेत्याह—**कार्येति** । तेनैव प्राचीनोक्तभेदद्वयेनैव । अभेदस्येत्यादिषष्ठ्यन्तानां वक्ष्यमाणनिगरणेऽन्वयः । विपर्यये च विपर्यय इति

१ संबन्धेऽसंबन्ध इत्यादिभेदद्वयेनैव । अर्थात् कार्यकारणपौर्वापर्यवैपरीत्यस्य असंबन्धेपि संबन्धो वर्ण्यते । यथा पूर्वं रोषविस्फुलिङ्गाः स्फुरन्ति तदनन्तरमेव अरिपुराणां नाशो वास्तवः । किंतु कार्यशैघ्र्यातिशयसूचनाय तादृशमलंकृत( अवास्तव )वर्णनम् ।

२ काव्यप्रकाशे ये भेदा वर्णितास्त एव वास्तवा इत्याशयः ।

३ भेदेन अभेदस्य निगरणम् । अर्थात् अभिन्नापि मनसःप्रवृत्तिभिन्नत्वेन वर्णितेति भिन्नया ( मनसःप्रवृत्त्या ) अभिन्ना सा स्वगितेति भेदेन अभेदस्य निगरणं जातम् । ततश्च निगीर्याध्यवसानमत्रापि सिद्धम् । एवम् असंबन्धे संबन्ध इति भेदे संबन्धेन असंबन्धस्य निगरणं भवति । यथा गीरध्वनिभिरित्यत्र गर्भे समुच्छलनस्याऽसंबन्धेपि संबन्धो वर्णितः । अर्थात् वस्तुतः असंबन्धो वर्णनीय आसीदत्र संबन्धो वर्णित इति संबन्धेन असंबन्धो निगीर्ण इति फलति । ततश्चात्रापि निगीर्याध्यवसानं सिद्धमिति स्यादिदमप्यतिशयोक्तिः । एवं संबन्धे असंबन्ध इति भेदे—असंबन्धेन संबन्धस्य निगरणं बोध्यम् । कार्यकारणपौर्वापर्यविपर्ययः ( वैपरीत्यम् ) इति भेदे तेनैव कार्यकारणपौर्वापर्यविपर्ययेण आनुपूर्व्यस्य निगरणं जातम् । अर्थात् पूर्वं कारणं ततः कार्यमिति द्वयोः पूर्वापरभावो वर्णनीय आसीत्किन्तु पुरःपुरस्तादिति पद्ये पूर्वं भस्मीभवनं कार्यमुक्तं तदनन्तरं रोषानलोदयो वर्णित इति पौर्वापर्यवैपरीत्येन आनुपूर्व्यम् ( कारणकार्ययोः समुचितः पूर्वापरभावः ) निगीर्णमित्यत्रापि निगीर्याध्यवसानं जातमतो नव्यानामपि मते भेदचतुष्टयमतिशयोक्तौ संनिविष्टमिति पूर्वपक्षः ।

निगरणं रत्नाकरविमर्शिनीकाराद्युक्तप्रकारेण संभवतीति चेत्, न । अन्यत्वादिभिरनन्यवस्तुप्रतीतेरेव चमत्कारित्वम्, न त्वनन्यत्वादिभिः । तेषामनुभवासंगतेः। न चान्यतमत्वमनुगतमिति शक्यते वक्तुम् । विच्छित्तिवैलक्षण्ये सत्यन्यतमत्वस्याप्रयोजकत्वात् । अन्यथोपमारूपकादिकतिपयान्यतमत्वं सकलान्यतमत्वं वा तल्लक्षणम्, उपमादयश्च तद्भेदा इत्येव किं न ब्रूयाः । अलंकारान्तरत्वे गौरवमित्यपि न वाच्यम् । न ह्यत्राक्लृप्तपदार्थकल्पनं येन गौरवं स्यात् । प्रधानोत्कर्षकतारूपस्यालंकारत्वस्य त्वयापि स्वीकारात् । अलंकारविभाजकोपाधिपरिगणनस्य च पुरुषपरिकल्पितत्वात् ।' इत्यपि वदन्ति ।

---

भेदद्वये च । तेनैव कार्यकारणपौर्वापर्यविपर्ययेणैव । **न । अनन्यत्वादिभिरिति ।** तथा च तेन रूपेण कदापि बोधाभावेन तद्रूपस्याभेदस्य भेदेन त्वदुक्तं निगरणमसंगतमिति भावः । तेषामननुगतत्वादिति निगीर्य प्रकृतस्य समेनाध्यवसानं भेदेनाभेदस्य संबन्धेनासंबन्धस्येत्यादिसकलसाधारणस्यैकस्य धर्मस्याभावादतिशयोक्तिलक्षणस्याननुगतत्वापत्तिरिति भावः । **वैलक्षण्ये सतीति ।** तथा च भिन्नभिन्न एवालंकार इति भावः । अभ्युपेत्याह—**अन्यथोपमेति ।** प्रागुक्तरीत्या आह—**कतिपयेति ।** यस्य कस्यचिदतिशयस्य सर्वत्र सत्त्वादाह—**सकलेति ।** तल्लक्षणमतिशयोक्तिलक्षणम् । तद्भेदा अतिशयोक्तिभेदाः । ननु गौरवादाधिक्यं नात आह—**अलंकारान्तरेति ।** क्लृप्तत्वमेवाह—**प्रधानोत्कर्षेति ।** ननु सामान्यतोऽलंकारत्वसत्त्वेऽपि तद्विभाजकोपाधिमध्येऽपाठादाधिक्येन गौरवं तदवस्थमेवात आह—**अलं-**

---

१ अनन्यत् (तद्रूपम्) वस्तु यदि अन्यत्वेन न वर्ण्यते, अपि तु अनन्यत्वेनैव (तद्रूपत्वेनैव) वर्ण्यते तर्हि कश्चमत्कारः ? यथा हि—अभिन्नाया मनसः प्रवृत्तेः भिन्नत्वेन वर्णनमकृत्वा तद्रूपत्वेनैव वर्ण्यते का वा नवीनता ? एवं च भेदेन अभेदस्य निगरणाभावे अनिदं वस्तु भिन्नं न प्रतीयेत, किन्तु तद्रूपमेव प्रतीयेत । ततश्च जायमानश्चमत्कारानुभवोऽसंगतः स्यात् । तस्मादिदं निगरणं स्वतःप्राप्तमेव न नवीनतयाऽलंकारस्यागीयम् । एवमेव संबन्धे असंबन्धनिगरणादिष्वपि बोध्यम् । अत एवंविधं निगरणमलंकारेषु न गणनार्हमित्युत्तरः पक्षः ।

२ ननु निगीर्याध्यवसानं विहाय अवशिष्टं भेदचतुष्टयम् (अभेदेपि भेदः, असंबन्धेपि संबन्ध इत्यादि) अतिशयोक्तेरनुगतलक्षणाऽनाक्रान्तत्वात् नातिशयोक्तिः । अपि त्वलंकारान्तरमेवेति पूर्वमुक्तम् । किन्तु निगीर्याध्यवसानादिपञ्चकान्यतमत्वमतिशयोक्तिरित्युक्तौ तु अनुगमः स्यादिति चेत्, न । भिन्नभिन्नालंकारत्वसिध्यर्थं प्रत्येकविलक्षणा विच्छित्तिरस्ति, ततोऽन्यतमत्वोक्तिमात्रेण नानुगमः सुकर इति हेतोः ।

३ प्रधानोत्कर्षकत्वमलंकारत्वं पूर्वं स्वीकृतम् । ततश्च चतुष्टयस्यास्य अलंकारकतया क्लृप्तस्यैव कल्पनमिति न गौरवमित्याशयः ।

'गगनचरं जलबिम्बं कथमिव पूर्णं वदन्ति विद्वांसः।
दशरथचत्वरचारी द्रुज्वरहारी विधुस्तु परिपूर्णः ॥'

इत्यादौ विषयिणः स्वाभाविकस्थाननिह्नवेन[1] दृढाध्यवसानातिशयोक्तिः।

यत्तु कुवलयानन्दे—

'यद्यपह्नवगर्भत्वं सैव सापह्नुवा मता।
त्वत्सूक्तिषु सुधा राजन्भ्रान्ताः पश्यन्ति तां विधौ ॥'

इत्यत्र पर्यस्तापह्नुतिगर्भामतिशयोक्तिमाहुस्तच्चिन्त्यम्। पर्यस्तापह्नुतेरपह्नुतित्वं न प्रामाणिकसंमतमिति प्रागेवावेदनात्।

यदपि तैरेवोक्तम्—

'संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्।
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम् ॥' इति।

तदपि न। अत्रैव 'स्पृशन्तीवेन्दुमण्डलम्' इति कृते कोऽलंकारः? उत्प्रेक्षेति चेत्, तर्हीवादेरभावाद्गम्योत्प्रेक्षेयमुचिता। इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवेवाद्यभावे गम्योत्प्रेक्षेति नियमस्य सर्वसंमतत्वात्। 'त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम्' इति त्वदुक्तगम्योत्प्रेक्षायाः 'सौधाग्राणि' इत्यस्य चोत्प्रेक्षांशे विशेषानुपलम्भात्। तथा हि 'त्वत्कीर्तिर्' इत्यादौ बहुदूरगमने स्वर्गगमने वा स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षेति[2] नये

कारेति। दृढाध्यवसानातिशयोक्त्युदाहरणमाह—**गगनेति**। गगनगामीत्यर्थः। जलबिम्बं चन्द्ररूपम्। विधुस्तु श्रीरामचन्द्रस्तु। **स्वाभाविकेति**। गगनरूपेत्यर्थः। **निह्नवेनेति**। कथमिवेत्यनेनेति भावः। मूल एव कुठार इत्याह—**पर्यस्तेति**। तैरेव अप्पयदीक्षितैरेव। **तदपि नेति**। सिद्धान्तविरोधादिति शेषः। तमेवाह—**अत्रैवेत्यादिना**। नन्वन्यसंमतत्वेऽपि तथा न मम संमतमत आह—**त्वत्कीर्तिरिति**। **इत्यस्य चेति**। **उत्प्रेक्षाया इति**। षष्ठीति भावः। ननु तस्या भूमण्डले बहुदूरगमनेऽपि स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षा तत्र न संभवतीत्यत आह—**स्वर्गेति**। विशे-

१ अत्र रामचन्द्रो विषयः, विधुर्विषयी। तस्य स्वाभाविकं स्थानम् (गगनम्) कथमिवेत्युक्त्या प्रतिषिध्यते।

२ अभेदसंबन्धेनैवोत्प्रेक्षेति प्राचीनमतानुसारम्।

स्वर्गसंबन्धित्वरूपानुपात्तधर्मनिमित्तेयम् । कीर्तौ स्वर्गङ्गाकर्मकप्रवेशकर्तृत्वोत्प्रेक्षेति[1] नये तादृशगमनरूपानुपात्तधर्मनिमित्ता । विशेषणीभूतभ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षेति नये तु तादृग्गमनतादात्म्याध्यवसितस्वर्गङ्गाप्रवेशरूपोपात्तधर्मनिमित्तेति[2] सर्वथा गम्यैव । 'सौधाग्राणि–' इत्यत्र परमोर्ध्वदेशसंयोगे चन्द्रमण्डलस्पर्शतादात्म्योत्प्रेक्षायां परमोर्ध्वदेशवृत्तित्वरूपानुपात्तधर्मनिमित्ता । तादृशस्पर्शकर्तृत्वोत्प्रेक्षायां तु परमोर्ध्वदेशसंयोगरूपानुपात्तधर्मनिमित्तेति इयमपि गम्योत्प्रेक्षैव । तस्मादुत्प्रेक्षासामग्री यत्र नास्ति तादृशमुदाहरणमुचितम् । यथास्मदीयं 'धीरध्वनिभिर्–' इत्यादि । सुन्दरत्वे सत्युपस्कारकत्वमलंकारसामान्यलक्षणमिहापि न विस्मरणीयम् ।

इयं चातिशयोक्तिर्वेदेऽपि दृश्यते । यथा—

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'

स्मृतौ च—

'या निशा[3] सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

---

षेति कीर्तावित्यादिः । **तादृशेति** । स्वर्गगमनेत्यर्थः । **परमोर्ध्वेति** । गृहाग्राणामित्यादिः । **इयमपि गम्योत्प्रेक्षैवेति** । अत्रेदं चिन्त्यम्—'नूनं मुखं चन्द्रः' इत्यादौ नूनंपदाभावे प्रतीयमानस्य रूपकस्यानापत्तेरुत्प्रेक्षाया आपत्तेश्च । 'त्वत्कीर्तिर्भ्रमणश्रान्ता' इत्यत्र तु बहुदूरगमने स्वर्गगमने वा स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षा कीर्तौ स्वर्गङ्गाप्रवेशकर्तृत्वोत्प्रेक्षा वावश्यं स्वीकार्या । अन्यथा भ्रमणश्रान्तत्वरूपविशेषणवैयर्थ्यापत्तेः । तद्वत्प्रकृते उत्प्रेक्षासाधकं नास्ति येन तथा स्यात् । भ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षायां तु न कश्चिद्दोषः । स्वर्गसंबन्धित्वं स्वर्गगमनं स्वर्गङ्गाप्रवेशरूपोपात्तो वा धर्मो निमित्तमिति बोध्यम् । **उदाहरणमिति** । संबन्धातिशयोक्तेरिति भावः । दुःखयोरि-

---

१ भेदसंबन्धेनाऽप्युत्प्रेक्षेति ग्रन्थकृन्मतानुसारम् ।

२ स्वर्गगमनमेव स्वर्गङ्गाप्रवेशाभिन्नमित्यध्यवसितम् । उपात्तं तदेव न उत्प्रेक्षायां निमित्तमित्याशयः ।

३ पूर्वार्धे–निशेति विषयिणा (उपमानेन) परमार्थचिन्ताऽभावरूपः, जागरणेन (विषयिणा) च प्रमादाभावरूपो विषयो निगीर्णः । उत्तरार्धे–जागरणेन (विषयिणा) वैषयिकप्रवृत्तिः, निशेत्यनेन तटस्थतया निवृत्तिश्च विषयो निगीर्ण इति बोध्यम् ।

अथास्या ध्वनिः—

'देव त्वद्दर्शनादेव लीयन्ते पुण्यराशयः।
किं चादर्शनतः पापमशेषमपि नश्यति॥'

पुण्यपापयोः सुखदुःखभोगमात्रनाश्यतया दर्शनाऽदर्शनाभ्यां तज्जन्यसुखदुःखयो राश्यशेषशब्दाभ्यां च जन्मशतोपभोग्ययोस्तयोरेवाक्षेपादग्रिमाभ्यां पूर्वयोर्निगरणं व्यज्यते। न च पूर्वाभ्यामग्रिमयोरेव निगरणं किं न स्यात्, इति वाच्यम्। नाशोक्तिसामञ्जस्याय नाशकतावच्छेदकावच्छिन्नत्वेन प्रत्ययस्यावश्यकतया तन्निगरणासंभवात्[1]। उपमानेन महता क्षुद्रस्योपमेयस्य महत्त्वाधानाय निगरणस्यौचित्याच्च। एतेन 'तदप्राप्तिमहादुःख—' इत्यादिकाव्यप्रकाशो व्याख्यातः।

इति रसगङ्गाधरेऽतिशयोक्तिप्रकरणम्।

---

त्यस्याक्षेपादित्यत्रान्वयः। तयोरेव सुखदुःखयोरेव। **अग्रिमाभ्यां पूर्वयोरिति**। जन्मशतोपभोग्यसुखदुःखाभ्यां देवदर्शनाऽदर्शनजन्यसुखदुःखयोरित्यर्थः। **न च पूर्वाभ्यामिति**। दर्शनादर्शनजन्यसुखदुःखाभ्यामेव जन्मशतोपभोग्यसुखदुःखयोरित्यर्थः। **नाशकतावच्छेदकेति**। पुण्यराशिनाशकत्वपापराशिनाशकत्वरूपकार्यतावच्छेदकावच्छिन्नकारणतावच्छेदकं सकलजन्मोपभोग्यसुखत्वादिकमेव। न तु दर्शनजन्यसुखत्वादिकम्। तत्तत्सुखानां स्वस्वफलोपहितपुण्यनाशकताया एव क्लृप्तत्वादिति भावः। **उपेति**। जन्मशतोपभोग्यसुखदुःखे उपमानम्। महत्त्वात्। दर्शनादर्शनजन्ये च ते उपमेये। क्षुद्रत्वात्। ध्वनित्वं चात्र प्राचीनरीत्या बोध्यम्॥ इति रसगङ्गाधरमर्मप्रकाशेऽतिशयोक्तिप्रकरणम्॥

१ अयं भावः—पुण्यानि सुखभोगेन, पापानि च दुःखभोगेन नाश्यन्ते, इति पुण्य-पापनाशं प्रति सुखदुःखभोगयोरेव कारणता क्लृप्ता। ततश्च नश्यतीति नाशप्रत्यायनाय दर्शनाऽदर्शनजन्यसुखदुःखनाशकस्य (कारणभूतस्य) जन्मशतोपभोग्यपुण्यपापजन्यसुखदुःखभोगस्य बोध आवश्यक एव, न त्वस्य निगरणमुचितम्। एवं च पुण्य-पापजन्यसुखदुःखभोगद्वारा दर्शनादर्शनजन्यसुखदुःखभोगस्यैव निगरणमुचितम्, न तु एतद्विपरीतमित्याशयः।

अथ तुल्ययोगिता—

**प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता ॥**

औपम्यं चात्र गम्यम्, तत्प्रयोजकस्य समानधर्मस्योपादानात्। वाचकाभावाच्च। अत एवालंकारिकाणामपि सादृश्यं पदार्थान्तरम् न तु साधारणधर्मरूपमिति विज्ञायते। अन्यथा औपम्यस्यात्र गम्यत्वोक्तेरनुपपत्तेः। केचित्तु—'सादृश्यभाव एवातिरिक्तः। सादृश्यं तु तत्तत्साधारणधर्मात्मकमेव। स चेवादिपदानां शक्यतावच्छेदकः। तत्तत्साधारणधर्मवाचकैस्तु तत्तत्साधारणधर्मस्य स्वशक्यतावच्छेदकतत्तद्धर्मरूपेण बोधनेऽपि सादृश्यभावरूपेण बोधो व्यञ्जनसाध्य एव' इत्यपि वदन्ति।

तुल्ययोगितां निरूपयति—**अथेति**। विनिगमनाविरहादाह—**अप्रकृतेति**। ननु नायं नियमोऽत आह—**वाचकेति**। अत एव औपम्यस्यात्र गम्यत्वादेव। अपिना वैयाकरणादिसमुच्चयः। निरूपितं चैतत्कुवलयानन्दव्याख्यायां मञ्जूषायां च। सादृश्यभावः सादृश्यत्वम्। स च सादृश्यभावश्च। **केचिदिति**। अरुचिबीजं तु 'अन्ते

१ अयं सर्वस्याशयः-वक्ष्यमाणे 'प्रिये विषादम्०' इत्युदाहरणे अश्रु-मानयोरौपम्यस्य प्रयोजिका ( कारणभूता ) विगलनक्रिया समानधर्मत्वेनोपात्ता। वाच्येन चानेन साधारणधर्मेण 'लोचनाभ्यामश्रुधारेव मनसो मानो विजगाल' इति द्वयोरुपमा ( सादृश्यम् ) व्यङ्ग्या। अत्र हि गम्यं सादृश्यमस्तीत्युक्त्वा सादृश्यं पदार्थान्तरमेव, न समानधर्मरूपमिति विज्ञायते। यदि हि साधारणधर्मरूपमेव तत् स्यात्तर्हि 'विगलन'रूपसमानधर्मस्य शब्दवाच्यत्वेपि औपम्यस्य गम्यत्वकथनमसंगतं स्यात्।

२ तत्तत्साधारणधर्मरूपे सादृश्ये वर्तमानं सादृश्यत्वमेवातिरिक्तम्, यद्धि इवादीनां शक्योऽर्थो यत्सादृश्यं तदवच्छेदकरूपमस्ति।

३ यथा प्रिये विषादम्० इत्यत्र 'विजगाल' इति पदेन विगलनक्रियारूपसाधारणधर्मस्य ( स्वं साधारणधर्मवाचकं विजगालेति पदं तस्य शक्योऽर्थः विगलनम्, तदवच्छेदकं विगलनत्वम् तद्रूपेण ) बोधनेपि सादृश्यत्वरूपेण बोधनं नास्ति। सादृश्यत्वरूपेण अभिधया बोधनं तत्रैव भवति यत्र इवादीनामुपादानं स्यात्। ततश्चात्र सादृश्यस्य समानधर्मरूपत्वाङ्गीकारेपि इवाद्यभावात् औपम्यस्य गम्यत्वोक्तिः संगच्छते। अस्मिन्पक्षेऽरुचिस्तु-अतिरिक्तस्य स्वीकारोऽत्रापि जात एव, तर्हि सादृश्यमेव पृथक्पदार्थः किमिति न स्वीकर्तव्य इति।

४ 'अन्ते रण्डाविवाहश्चेदादावेव कुतो नहि' इति।

उदाहरणम्—

'प्रिये विषादं जहिहीति वाचं प्रिये सरागं वदति प्रियायाः ।
वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥'

अत्र मानिन्या वर्ण्यत्वात्तदीयत्वेन प्रकृतयोः कर्त्रोरश्रुमानयोर्विगलनक्रिया समानधर्मत्वेनोपात्ता, विलोचनमनसोरपादानयोश्च । कारकाणां सर्वेषामपि क्रियान्वयस्य तुल्यत्वात् । एवं चतुर्णां क्रियारूपधर्मैक्येऽपि द्वयोर्द्वयोरेवौपम्यं प्रतीयते न परस्परं चतुर्णाम् । तदपादानत्वतत्कर्तृत्वरूपे विशेषे सामान्यस्य पर्यवसानात्[1] । शेषमुपरिष्टाद्बोध्यम् ।

'न्यञ्चति वयसि प्रथमे समुदञ्चति किं च तरुणिमनि सुदृशः ।
उल्लसति कापि शोभा वचसां च दृशां च विभ्रमाणां च ॥'

अत्र गुणः[2] । यदि च 'विलसन्त्यहमहमिकया वाचो गतयश्च विभ्रमाश्च

---

रण्डा-' इति न्यायविरोधापत्तिरिति । वदतीति सप्तम्यन्तम् । प्रियाया नेत्राभ्यां हृदश्च जलानां बह्वी धारा मानश्च च्युत इत्यर्थः । **विलोचनेति** । उक्तरीत्या प्रकृतयोरित्यादिः । **दानयोश्चेति** । विगलनेत्याद्यनुषज्यते । ननु कर्त्रोः क्रियान्वयात्तथा संभवेऽपि कथमपादानयोस्तथा । तत्रान्वयस्यैवाभावात् । अत आह—**कारकेति** । द्वयोर्द्वयोरेवौपम्यं प्रतीयत इति । तत्प्रतीतावपि नात्र तत्कृतश्चमत्कारोऽनुभवसिद्धः । किं तु तत्सहकृतैकधर्मान्वयकृत एवेति पृथगलंकारता । न च गम्योपमयैव निर्वाहः । विद्यमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वादिति बोध्यम् । **सामान्यस्य** क्रियान्वयित्वरूपकारकत्वस्य । प्राचां मतेनेदं क्रियोदाहरणमुक्त्वा गुणोदाहरणमाह—**न्यञ्चतीति** । तिरोभूते सतीत्यर्थः । **गुण इति** । शोभारूप इत्यर्थः । आदिपदग्राह्योदाहरणमाह—**यदीति** । ननु केवलस्यैव तत्त्वं कुतो नात आह—

१ अयं सर्वस्याशयः—क्रियान्वयित्वं कारकत्वमिति स्वीकरणात् विगलनक्रियया सह कर्त्रोः अश्रुमानयोर्यथा अन्वयः, तथा विलोचन-मनसोरपादानयोरपि [ मनसो विजगाल ( मानः ), विलोचनाभ्यां विजगाल ( अश्रुधारा ), इति ] । एवं च चतुर्णाम् एकक्रियासंबन्धे समानेऽपि अश्रु-मानयोः, विलोचन-मनसोरेव परस्परम् औपम्यं व्यञ्जनया प्रतीयते, न तु अश्रु-विलोचनयोः, मान-मनसोर्वा । यतो हि विगलनरूपैकक्रियासंबन्धरूपसमानधर्मतायाः सत्त्वेऽपि अश्रुणि कर्तृत्वम्, विलोचनयोश्चापादानत्वम् ( एवं मानमनसोरपि ) इति परस्परं विशेषोपलम्भात्समानधर्मत्वाभाव इति ।

२ अत्र गुणः प्रकृतानां समानधर्मत्वेनोपात्त इत्यनुषङ्गः । एवमग्रेऽपि ।

भृशम्' इत्युत्तरार्धं तदा क्रिया । यदि 'दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम्' इति क्रियते तदा गुणविशिष्टा क्रिया । केवलगुणेन साक्षात्संबन्धाभावात् केवलक्रियायाश्चाहृद्यत्वात् ।

अप्रकृतानामेव यथा—

'न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि ।
मालिन्यमाविरासीद्राकाधिपलवलिकनकानाम् ॥'

अत्र गुणः, आविर्भावक्रियायाः साक्षाद्धर्मिभिरनन्वयात् । 'न्यञ्चति राकाधिपतिर्लवली पुरटं च पुण्डरीकं च' इति कृते क्रिया । 'धवलीभवत्यनुदिनं लवली कनकं कलानिधिश्चायम्' इति कृते गुणविशिष्टक्रिया ।

'त्वयि पाकशासनसमे शासति सकलं वसुंधरावलयम् ।
विपिने वैरिवधूनां वर्षन्ति विलोचनानि च दिनानि ॥'

अत्रोभयसाधारणयोर्गुणक्रिययोरभावाच्छब्दमात्रम् । श्लेषमूलेनाभेदाध्यवसानेन पिण्डीकृतोऽर्थो वा ।

यत्त्वलंकारसर्वस्वकृता, तदनुगामिना कुवलयानन्दकृता च 'गुणक्रियाभिः संबद्धत्वे गुणक्रियारूपैकधर्मान्वयः' इति चोक्तं तदापाततः ।

**केवलेति** । कारकाणां मिथः क्रियाद्वारकसंबन्धादाह—**साक्षादिति** । लवलिः 'हरफारेवडी' । गुणो मालिन्यरूपः । धर्मिभिश्चन्द्रादिभिः । तेषामकारकत्वात् । पुरटं सुवर्णम् । आदिसंग्राह्यान्तरोदाहरणमाह—**त्वयीति । पाकेति** । इन्द्रतुल्य इत्यर्थः । वर्षन्ति वर्षणं कुर्वन्ति । संवत्सरवदाचरन्तीत्यर्थः । **उभयेति** । नेत्रादीत्यर्थः । **शब्दमात्रमिति** । वर्षन्तीति शब्दमात्रमित्यर्थः । तस्य तदुभयवृत्तित्वाभावादाह—**श्लेषेति** । पिण्डीकृत एकीकृतः । यथाक्रमनाह—**गुणेति** । यद्वा जातिक्रियाद्रव्यातिरिक्तं धर्ममात्रं गुण इति वैयाकरणमतेनेदम् । किं च 'न मनागपि निश्चिन्ते' इत्यत्र चिन्ता-

१ विलसनरूपा ।

२ माधुर्यगुणविशिष्टा धारणक्रिया ।

३ ननु प्रत्यर्थं शब्दनिवेश इति नियमेन जलवर्षणेऽर्थे वत्सरसमभवने च भिन्नभिन्नेऽर्थे भिन्नभिन्नशब्दप्रयोगः स्यादित्याह । श्लेषमूलेनेति०—एकपदोपस्थाप्यत्वरूपेणाऽभेदेन वर्षणयोः ( जलस्रवण–वर्षसमभवनयोः ) ऐक्यं जातम् । ततश्च एकीभूतस्य वर्षणस्य ( अर्थस्य ) समानधर्मतया उभयत्र संबन्ध इत्यर्थः ।

'शासति त्वयि हे राजन्नखण्डावनिमण्डलम्।
न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः॥'

इत्यत्राभाव[4]रूपस्यैव धर्मस्यान्वयात्। गुणक्रियेत्युपलक्षणं वा धर्ममात्रस्य। एवम् 'एकस्त्वं दानशीलोऽसि प्रत्यर्थिषु तथार्थिषु' इत्यादावपि दानशीलरूपैकान्वयाल्लक्षणप्रवृत्तिः, यथाकथंचिदनेकत्रैकान्वयस्य चमत्कारिणोऽपेक्षितत्वात्। एतेन—

'हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता।
प्रदीयते पराभूतिर्मित्रशात्रवयोः समा॥'

इत्यादिना तुल्ययोगितायाः प्रकारान्तरं यत्कुवलयानन्दकृता लक्षितमुदाहृतं च तत्परास्तम्। अस्या अपि 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता।' इति पूर्वलक्षणाक्रान्तत्वात्। एकानुपूर्वीबोधितवस्तु[2]कर्मकदानपात्रत्वस्य, परम्परया तादृशशब्दस्य, प्रागुक्तमार्गेणार्थस्य, वा धर्मस्यैक्यात्[3]।

---

भावविच्छेदस्य चिन्तानतिरिक्ततया गुणस्यैव साधारणधर्मत्वमित्यपि वक्तुं शक्यम्। दानेति। द्रव्यस्य पराभवस्य वेति भावः। एतेनेत्यस्यार्थमाह—अस्या अपीति। पूर्वलक्षणाक्रान्तत्वादिति। अत्रेदं चिन्त्यम्—हिताहितविषयकतुल्यव्यवहारकर्तृत्वप्रतीतिकृतचमत्कारे एषा। यथोक्तधर्मिणामेकधर्मान्वयकृत एव यत्र चमत्कारस्तत्राद्येति भेदात्। 'प्रदीयते पराभूतिः' 'यश्च निम्बं-' इत्यनयोः पद्ययोर्न तादृशधर्मान्वयमात्रकृतश्चमत्कारः। किंतु राजनिम्बयोर्हिताहितविषयक-शुभाशुभान्यतरैकजातीयकर्तृकव्यवहारकृत एवेति सहृदयहृदयमेवात्र प्रमाणम्। अत एव 'जगाळ मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधारा' इत्यत्र न तुल्ययोगिता। चन्द्र इव सुन्दरं मुखं इत्यत्र

---

१ अयंभावः—अस्मत्कृतलक्षणे 'गुणक्रियादिरूपैकधर्मान्वयः' इति आदिपदेन गुणविशिष्टक्रिया-शब्द-अभाव-दानशीलेत्यादिविशेषणादीनामन्येषां च संभवतां संग्रहो भवितुमर्हति। 'गुणक्रियाभिः संबद्धत्वे' इत्युक्तौ तु चिन्ताऽभाव इत्यादीनां गुणक्रियात्वाभावात्तुल्ययोगितायां संग्रहो न स्यादित्याशयः।

२ पराभूतिरूपम्।

३ दानपात्रत्वस्य, पराभूतिरूपशब्दमात्रस्य, श्लेषमूलकेनाऽभेदाध्यवसायेनैकीकृतस्याऽर्थस्य वा, धर्मैक्यं वर्तत इति त्रिभिः प्रकारैः पूर्वलक्षणाक्रान्तत्वसाधनम्।

४ चिन्ताऽभावस्याऽभावः चिन्तारूपः स्यात्, न तु चिन्ताऽभाववतो धर्मिणोऽभावः। किंच चिन्तारूपधर्मस्य 'शत्रुमित्रयोः मण्डले' इति मण्डलाभ्यां धर्मिभ्यामभेदान्वयो दुर्घट इति तदिदं नागेशकृतं समाधानमाभासरूपमेव।

'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥'

इत्यत्रापि कटुत्वविशिष्टस्य निम्बस्यैव परम्परया छेदकसेचकपूजकधर्मत्वसंभवात्। न चात्र वृत्तिनियामकसंबन्धेन धर्मिवृत्तित्वं विवक्षितं धर्मस्य, वक्ष्यमाणकारकदीपकादावव्याप्त्यापत्तेः।

अथ चन्द्र इव सुन्दरं मुखमित्याद्युपमायां चन्द्रमुखयोरेकधर्मान्वयादतिव्याप्तिः। न चात्र प्रकृतानामेवाप्रकृतानामेवेत्युक्तत्वान्न तथेति वाच्यम्। प्रागुक्ते 'प्रिये विषादं—' इति पद्ये 'जगाल मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधारा।' इत्युत्तरार्धे कृते प्रकृतयोर्मानवारिधारयोरुपमायां तथाप्यतिव्याप्तेः। चन्द्र इव सुन्दरं मुखमित्यत्रापि वक्ष्यमाणदीपकलक्षणातिव्याप्तेश्च। न चौपम्यस्य गम्यत्वे सतीत्यपि विशेषणीयमिति वाच्यम्।

'चन्द्रांशुनिर्मलं वारि चन्द्रो हंससमद्युतिः।
हंसास्तु शरदि स्मेरपुण्डरीकमनोरमाः ॥'

न दीपकम्। तत्र सादृश्यप्रतीतिकृतचमत्कारस्यैव सत्त्वात्। नन्वेवमलंकारान्तरत्वमेव वक्तुं युक्तम्। इति चेत् सत्यम्। अत एवास्मरसात्कुवलयानन्दकृता 'इयं सरस्वतीकण्ठाभरणोक्ता' इत्युक्तम्। न च तुल्ययोगितायां सादृश्यस्य गम्यतया गम्योपमयैव निर्वाहः। तावन्मात्रकृतचमत्काराभावात्। एकधर्मान्वयकृतस्यापि सत्त्वात्। प्रतीयमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वादिति बोध्यम्। **परम्परया छेदकेति**। स्वकर्मकक्रियाश्रयत्वरूपयेत्यर्थः। **वक्ष्यमाणकारकेति**। 'वसु दातुं यशो धातुमतीव निपुणो भवान्' इत्यादावित्यर्थः। **वक्ष्यमाणदीपकेति**। प्रकृताप्रकृतत्वसत्त्वादिति भावः। इवस्य सत्त्वान्नोक्तदोषद्वयमित्याशयेनाह—**न चेति**। **चन्द्रांशुनिर्मलमिति**। अत्र द्वितीयचरणे नातिप्रसङ्गविषयः, समशब्दस्य सत्त्वात्। तदंशे

१ छेदके सेचके पूजके च कटुत्वविशिष्टो निम्ब एवैको धर्मतया अन्वेति (छेदकस्य कटुः, सेचकस्य कटुः, इत्यादिरूपेण) इत्यर्थः।

२ ननु धर्मिणामेकधर्मान्वयसाधनाय छेदकादिव्यापारजन्यछेदनादिरूपफलभोक्तृत्वसंबन्धेन निम्बश्छेदकादीनां संबन्धी व्यपदेष्टुं शक्यः, किन्तु अत्र धर्मः स एव विवक्षितः यस्य वर्तमानता वृत्तिनियामकसंबन्धेन [वर्तमानताया नियामको यः संबन्धः, अर्थात् 'अनेन संबन्धेन अयं धर्मः धर्मिणि वर्तते' इति] आधाराधेयभावेन स्यात् (यथा प्रिये विषादम्० अत्र विलोचनयोः अश्रु)। निम्बस्तु एवंसंबन्धेन छेदकादिषु न वर्तते इति शङ्का। धर्मस्यैवंवृत्तित्वस्वीकारे वसु दातुमित्यादिवक्ष्यमाणोदाहरणेऽपि-दानादिक्रियाः आधाराधेयभावेन वर्ण्ये राज्ञि न वर्तन्ते। ततश्च तत्राव्याप्तिप्रसङ्गादेवंसंबन्धेन वृत्तित्वं न स्वीकर्तुं शक्यमिति समाधानम्।

इत्यत्र वाचकाभावाद्गम्योपमायां तथाप्यतिप्रसङ्गात्। यदि चात्र न व्यङ्ग्या उपमा, किं तु समासस्य वाच्या, पूर्वपदस्य लक्ष्या चेति सूक्ष्ममीक्ष्यते, तथापि 'हंसास्तु मानसभुवश्चन्द्रा एव न संशयः' इत्यादिरूपकादिष्वतिप्रसङ्गः। न ह्यत्रापि चन्द्रादिसादृश्यविशिष्टे चन्द्रादिपदानां लाक्षणिकत्वादुपमा लक्ष्यैवेति शक्यते वक्तुम्। रूपके लक्षणा नास्तीति प्रागेव प्रतिपादनात् इति चेत्, न। यत्र यथोक्तानां धर्मिणां यथोक्तधर्मान्वय एव चमत्कारी, तत्र तुल्ययोगिता, दीपकं वा। यत्र तादृशधर्मान्वयप्रयुक्तं सादृश्यमभेदो[3] वा, तत्रोपमारूपकादिकमेवालंकारताप्रयोजकम्। सुन्दरत्वे सत्युपस्कारकत्वमित्यसकृदावेदनात्। अन्यथा सादृश्यस्यात्र प्रत्ययात्तदादायोपमाव्यवहारस्याप्यापत्तेरिति दिक्।

एवं च—

'दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु।
अदातृत्वमधैर्यं च दृष्टे भवति भासते॥'

प्रक्रमभङ्गश्च काव्यदोषो बोध्यः। **अतिप्रसङ्गादिति**। तुल्ययोगिताया इत्यादिः। शरदृतुवर्णने सर्वेषां प्रकृतत्वात्। एवमग्रेऽपि बोध्यम्। वैयाकरणमतेनाह—**समासस्येति**। नैयायिकमतेनाह—**पूर्वेति**। **यथोक्तानामिति**। प्रकृतानामेवाप्रकृतानामेव वा प्रकृताप्रकृतानां वेत्यर्थः। **यथोक्तेति**। गुणादीत्यर्थः। **इत्यसकृदिति**। इत्यस्यासकृदित्यर्थः। अन्यथा उक्तव्यवस्थानङ्गीकारे। अत्र तुल्ययोगितायाम्। प्रत्ययाद्गम्यमानत्वात्। अपिना सांकर्यं सूचितम्। एवं च अस्या अतिरिक्तत्वे च।

१ चन्द्रांशुरिव निर्मलम् ( वारि ), पुण्डरीकाणीव मनोरमाः ( हंसाः ), इत्यादौ 'उपमानानि सामान्यवचनैः' इति विहितः समास एव परस्परसादृश्यस्य (उपमायाः) वाचकः। अथवा—चन्द्रांशु इत्यादिपूर्वपदस्यैव तत्सदृशे लक्षणा। ततश्च नात्र व्यङ्ग्या उपमेति न तुल्ययोगिताऽतिप्रसङ्ग इति पूर्वपक्षिणः समाधानम्।

२ नव्यानां मते। ततश्च उपमा लक्ष्या न स्यात्, अपि तु 'हंसाश्चन्द्रा एव' इत्यत्र अभेदस्य वाच्यत्वेन उपमा ( सादृश्यम् ) व्यङ्ग्यैवेति 'हंसाः चन्द्रा एव' इति रूपके तुल्ययोगिताऽतिप्रसङ्गः स्यादेवेति पूर्वपक्षः संपन्नः।

३ चमत्कारीति पूर्वानुषङ्गः।

४ हिमाचलहेमाचलाब्धिषु।

इत्यादौ रशनारूपैषा[1] यथासंख्यावष्टब्धा[2]।

'दृष्टः सदसि चेदुग्राश्चन्द्रचन्दनचन्द्रिकाः ।
अथ त्वं संगरे सौम्याः शेषकालानलाब्धयः ॥'

इत्यत्र च स्वरूपद्वयेन राजविषयकरतिभावभूषणतया स्थिता ।

यत्र च प्रकृतानामेवाप्रकृतानामेव वा क्रियाणामेककारकान्वयः सा कारकतुल्ययोगिता ।

यथा—

'वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान् ॥'

अत्र राज्ञः स्तावकवाक्ये प्रकृतानां क्रियाणामेकेन कर्त्रा साधारणेन धर्मेणौपम्यम्[3] ।

यथा वा—

'दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरंतनमघं चुलुकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति ॥'

---

**रशनारूपैषेति** । दधीचिरिव बलिर्बलिरिव कर्ण इत्यादिप्रतीतेरिति भावः । **यथासंख्येति** । बल्यादिष्वदातृत्वं हिमालयादिष्वधैर्यमिति भावः । राजवर्णनमिदम् । **दृष्ट इति** । इदमपि राजवर्णनम् । हे राजन्, त्वं सभायां दृष्टश्चेच्चन्द्रादय उग्रा दृश्यन्ते । अथ त्वं रणे दृष्टश्चेच्छेषादयः सौम्या दृश्यन्त इत्यर्थः । **स्वरूपद्वयेनेति** । शान्तोग्ररूपेणेत्यर्थः । **रतीति** । कविनिष्ठेत्यादि । धातुं संपादयितुम् । विधातुं कर्तुम् । चुलुकी-

---

१ इदं विशेषणं काशीपुस्तके नास्ति ।

२ इदं काशीपुस्तके नास्ति ।

३ परस्परमौपम्यमाप्तासु सर्वासु क्रियासु एक एव कर्ताऽन्वेतीति कर्तैव साधारणधर्मस्थानीयः । यथा भवान् वसुदाने निपुणस्तथा यशोधानादिषु इति ।

अत्रार्थान्तरन्यासान्विता।

'केऽपि स्मरन्त्यनुसरन्ति च केचिदन्ये
पश्यन्ति पुण्यपुरुषाः कति च स्पृशन्ति।
मातर्मुरारिचरणाम्बुजमाध्वि गङ्गे
भाग्याधिकाः कतिपये भवतीं पिबन्ति॥'

अत्रैकं कर्म क्रियाणां[2] साधारणम्।

व्यङ्ग्यैषा यथा—

'अये लीलाभग्नत्रिपुरहरकोदण्डमहिम-
न्कथा यत्रोदञ्चत्यतुलबलधैर्यस्य भवतः।
अयं को वा तत्र प्रसृमरफणाकोणनिहित-
क्षितिः शेषः श्रीमान्कमठकुलचूडामणिरपि॥'

अत्र को वा इत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्यागणनीयत्वस्य शेषकमठाभ्यामप्रकृताभ्यामन्वयः प्रतीयते[3]।

इति रसगङ्गाधरे तुल्ययोगिताप्रकरणम्।

करोति नाशयति। **न्यासान्वितेति**। कारकतुल्ययोगितेति शेषः। विशेषस्य सामान्येन समर्थनात्तन्मिश्रत्वमिति भावः। अम्बुजमाध्वि कमलमकरन्दरूपे। **अये इति**। श्रीरामवर्णनमिदम्। अत एव तयोरकृतत्वम्। हे राम, यत्र स्थले तव कथा निःसरति तत्र शेषः कूर्मश्च भूधारकः को वा। न कोऽपीत्यर्थः। **इत्यनेनेति**। व्यज्यमानस्येति शेषः। अत एव वाच्येति॥ इति रसगङ्गाधरमर्मप्रकाशे तुल्ययोगिताप्रकरणम्॥

१ कुमतिदूरीकरणादीनां प्रकृतानां क्रियाणाम् एकेन कर्त्रा (गङ्गेन) साधारणधर्मस्थानीयेनौपम्यम्—यथा सत्सङ्गः कुमतिं दूरीकरोति तथा चेतो विमलीकरोतीत्यादि।

२ प्रकृतानां स्मरणादिक्रियाणामेकेन कर्मणा (गङ्गया) साधारणधर्मेणान्वयः परस्परमौपम्यं च—भाग्याधिकाः गङ्गां यथा स्मरन्ति तथा भाग्याधिका गङ्गामनुसरन्ति, पश्यन्तीत्यादि।

३ को वा इति पदेन व्यज्यमानस्य नकिंचिद्गणनीयत्वरूपस्य धर्मस्य अप्रकृतयोः शेषकमठयोः अन्वय इति धर्मस्य व्यङ्ग्यत्वाद् व्यङ्ग्या तुल्ययोगितेत्याशयः।

अथ दीपकम्—

**प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम् ॥**

प्राग्वदेवात्राप्यौपम्यस्य गम्यत्वम्। प्रकृतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति सुन्दरीकरोतीति दीपकम्। यद्वा दीप इव दीपकम्, संज्ञायां कन्। दीपसादृश्यं च प्रकृताप्रकृतप्रकाशकत्वेन बोध्यम्।

उदाहरणम्—

'अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः ।
सुजनस्य च निर्माणं जनयति नहि कस्य संतोषम् ॥'

यथा वा—

'सुधायाश्चन्द्रिकायाश्च संजीविन्या महौषधेः ।
दयादृष्टेश्च ते राजन्विश्वसंजीवनं गुणः ॥'

यथा वा—

'मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते ।
सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥'

अत्राभावः साधारणो धर्मः

अथ दीपकं निरूपयति—**अथेति**। **अत्राप्यौपम्यस्येति**। परंतु प्रकृतमुपमेयमप्रकृतमुपमानमिति बोध्यम् । योगरूढं दीपकपदमित्याह—**प्रकृतेति**। प्रकाशनासंभवादाह—**सुन्दरीति**। नन्वेवमचा भाव्यमत आह—**यद्वेति**। 'संज्ञायां कन्' इति कन्। **अमृतस्येति**। अत्र ललितत्वविशेषणोक्तेः कवितायाः प्रकृतत्वं बोध्यम् । इदं गुणस्योदाहरणम्। क्रियोदाहरणमाह—**सुधाया इति**। अत्र राजवर्णनेन दयादृष्टेरेव प्रकृतत्वम् । अभावोदाहरणमाह—**मृतस्येति** । **विमार्गेति** । परपुरुषगामिन्या

---

१ अमृतादिकर्मकं संबन्धि वा निर्माणम् ।

कस्यचित्प्रकृतत्वे दीपकम्, अन्यथा तुल्ययोगितैव । यत्र क्रिया साधारणो धर्मस्तत्र यावतां कर्त्रादिकारकाणां संनिधानं तेषां स्वसजातीयेनान्येन सह तुल्ययोगिता, दीपकं वा पृथक्पृथग्भवति, औपम्यस्यापि पृथगेव भासमानत्वात् ।

यथा—

'सुजनाः परोपकारं शूराः शस्त्रं धनं कृपणाः ।
कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥'

अत्र कर्तृकर्मणोः । एवं वक्ष्यमाणे 'लावण्येन प्रमदा—' इत्यत्र कर्तृकरणयोः । 'दिवि सूर्य—' इत्यत्र कर्त्रधिकरणयोः ।

अमुनैव न्यायेनानेकासां क्रियाणामेककारकान्वये कारकदीपकम् ।

यथा—

'वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च मादृशान्राजन्नतीव निपुणो भवान् ॥'

अत्र वृत्तिहीनस्य कस्यचिद्दीनस्य वचने वसुदान-स्वत्राणलक्षणयोः क्रिययोः प्रकृतयोः, अरिमर्दनस्य चाप्रकृतस्य, यशोधानस्य चोभयात्मनः साधारणं कर्तृकारकम् ।

---

इत्यर्थः । अत्राह—**कस्यचिदिति** । प्रकरणादिनेति भावः । **कर्त्रादीति** । आदिना कर्मकरणाधिकरणानि ग्राह्याणि । मन्दाक्षं लज्जाम् । **वृत्तीति** । जीवनेत्यर्थः ।

---

१ अयं सर्वस्याशयः-तत्र यावन्ति कर्तृ-कर्मादिकारकाणि संनिहितानि भवन्ति तेषां स्वसजातीयेन अर्थात् कर्तृकारकस्य अन्येन कर्तृकारकेण सह, एवं कर्मणः अन्येन कर्मणा सह तुल्ययोगिता ( यदि तानि प्रकृतान्येव अप्रकृतान्येव वा स्युः ), दीपकं वा ( यदि प्रकृताप्रकृतानि स्युः ) पृथक्पृथक्परिगण्यते । यथा—सुजनाः शूराः कृपणाः कुलवत्यश्चेति कर्तृकारकाणां मोचनरूपैकक्रियासंबन्धात्तुल्ययोगिता ( सर्वेषां प्रकृतत्वे अप्रकृतत्वे एव वा ), कस्यचित्प्रकृतत्वे अन्येषां चाप्रकृतत्वे दीपकं वा व्यपदिश्यते । यतो हि कर्तुरौपम्यं कर्त्रैव, एवं कर्मण औपम्यं कर्मणैवेति औपम्यस्य पृथगेव भासमानतया कर्तृ-कर्मादीनां तुल्ययोगिता-दीपकालंकारव्यपदेशोपि पृथक्पृथगेव भवतीति ।

२ प्रकृताऽप्रकृतानामित्यर्थः ।

यथा—

'वासयति हीनसत्त्वानतिसत्त्वानुद्धतान्विवासयति ।
त्रासयति सकलशत्रून्नीतिविदामग्रणीर्नराधिपतिः ॥'

अत्र कस्यचिद्धीनसत्त्वस्य, सत्त्वाधिकमसहमानस्य वा, शत्रुपरिपीडितस्य वा कस्यचिद्राजानं कंचित्प्रत्युक्तौ सामान्यविशेषरूपायामप्रस्तुतप्रशंसायामेकस्याः क्रियायाः प्रकृतायाः इतरयोश्चाप्रकृतयोः साधारणं तत् । यदि तु प्रागुक्तवक्तृभिन्नस्य कस्यचिद्राजस्तोतुर्नीतिमात्रबोधकस्य चेयमुक्तिस्तदा क्रियाणां प्रकृताप्रकृतरूपत्वाभावात्तुल्ययोगितैव । यत्तु—

'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥'

इति लक्षणमुक्त्वा—

'स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥'

इति द्वितीयं दीपकमुदाहृतं काव्यप्रकाशकृद्भिः । तत्र विचार्यते—प्रथमार्धगतलक्षणेनैव दीपकद्वयस्यापि संग्रहाद्द्वितीयं लक्षणं व्यर्थम् । गुणिनां कारकाणां च गुणक्रियारूपधर्मस्येव क्रियाणामपि कारकरूपधर्मस्य सकृद्वृत्तेः[3] साम्राज्यात् । न च क्रियाणां प्रकृताप्रकृतात्मताविरहेऽपि

---

पद्यक्रमेणोक्तिक्रममाह—**अत्रेति** । अप्रस्तुतप्रशंसाया अनेकविधत्वादाह—**सामान्येति** । पूर्वार्धेन सामान्यतो राजस्तुतिः, उत्तरार्धेन विशेषत इति भावः । **एकस्या इति** । यदीयोक्तिस्तदीयाया इत्यर्थः । तत्कर्तृकारकम् । नीतिविदामग्रणीरित्युक्तत्वादाह—**नीतीति** । धर्मस्य क्रियादेः । प्रकृताप्रकृतात्मनां कारकाणाम् । सैव सकृद्वृत्तिरेव ।

१ निवासरहितान् करोति ।

२ प्रस्तुतं राजविशेषं प्रति सेयमुक्तिः । तत्प्रसङ्गे सामान्यतो राजप्रशंसनात् अप्रस्तुतसामान्येन प्रस्तुतविशेषाख्यानपराऽप्रस्तुतप्रशंसा वाक्यार्थः । तिसृणां क्रियाणाम् (प्रकृताऽप्रकृतानाम्) एकेन कर्तृकारकेणाऽन्वयात्कारकदीपकम् । प्रकृताप्रकृतत्वाभावे तु तुल्ययोगिता । इति सर्वस्याशयः । पूर्वार्धेन उत्तरार्धेनेत्यादिका नागेशोक्तिस्तु भ्रामिकैव ।

३ अनेकेषां गुणिनां गुणरूपैकधर्मसंबन्धात्, अनेकेषां कारकाणां क्रियारूपैकधर्मसंबन्धात्प्रथमलक्षणलक्षितं दीपकं यथा प्रसज्यते तथा अनेकक्रियाणां कारकरूपैकधर्मसंबन्धात् प्रथमलक्षितं दीपकं स्यादेव, पुनः किं फलं द्वितीयलक्षणस्येति सर्वस्याशयः ।

शुद्धप्रकृतत्वे शुद्धाप्रकृतत्वेऽपि वा कारकस्य सकृद्वृत्तेर्दीपकत्वम्[1], क्रियाभिन्नानां तु प्रकृताप्रकृतात्मतायामेव क्रियादेर्धर्मस्येति वैलक्षण्याल्लक्षणद्वयमिति वाच्यम्। कारकतुल्ययोगितोच्छेदापत्तेः[2]। सकलालंकारिकसिद्धान्तविरोधापत्तेश्च। लक्षणद्वयस्याननुगतत्वाच्च[3]। तादृशलक्षणद्वयान्यतरवत्त्वस्य लक्षणत्वे गौरवादुपप्लवप्रसङ्गाच्च[4]। एवं च 'खिद्यति कूणति—' इत्याद्युदाहरणमपि न संगच्छते, क्रियाणां शुद्धप्रकृतत्वात्। किं च दीपकतुल्ययोगितादौ गम्यमानमौपम्यं जीवातुरिति सर्वेषां संमतम्। न चात्र खेदनकूणनादीनामेककारकान्वितानामप्यौपम्यं कविसंरम्भगोचरः। तस्मात्समुच्चयालंकारच्छायाऽत्रोचिता। अस्मदुदीरितानां वसुदानादीनां हीनसत्त्व-

कूणति संकुचति। वेलति श्लिष्यति। **क्रियाभिन्नानामिति**। गुणिनां कारकाणां चेत्यर्थः। **धर्मस्येति**। सकृद्वृत्तेर्दीपकत्वमित्यर्थः। **उच्छेदापत्तेरिति**। त्वद्रीत्या कारकदीपकेनैव तत्र भाव्यमिति भावः। इष्टापत्तावाह—**सकलेति**। तत्रापीष्टापत्तावाह—**लक्षणेति**। अनुगमसत्त्वान्नायं दोषोऽत आह—**तादृशेति**। नन्वगत्या गौरवस्वीकारोऽत आह—**उपप्लवेति**। प्रागुक्तरीत्यान्यतमवत्त्वेन सर्वेषामैक्ये उपमाद्युच्छेदापत्तेरित्यर्थः। एवं च उक्तभेदानङ्गीकारे च। प्रकृताप्रकृतत्वे एव तदङ्गीकारादाह—**क्रियाणामिति**। **कविसंरम्भगोचर इति**। केवलं तादृशनायिकास्वभाववर्णनस्यैव तत्त्वादिति भावः। चकाराभावादाह—**छायेति**। अत्र खिद्यतीत्यादौ। नन्वेवं त्वदुदाहरणेऽप्यौपम्यस्य तदविषयत्वात्कथमेतदुदाहरणत्वमत आह—**अस्मदिति**।

१ कारकस्य सकृद्वृत्तेः, अर्थात् अनेकक्रियाणां कारकरूपैकधर्मसंबन्धात् कारकदीपकत्वमित्याशयः।

२ अनेकासां क्रियाणां प्रकृतत्वे, अप्रकृतत्वे एव वा, कारकरूपैकधर्मसंबन्धात्कारकतुल्ययोगिताऽस्माभिः सर्वैरङ्गीकृता। इदानीं लक्षणद्वयसंगत्यर्थं क्रियाणां शुद्धप्रकृतत्वे, अप्रकृतत्वेऽपि वा यदि कारकदीपकमेवाऽऽख्यायेत (न तुल्ययोगिता) तर्हि कारकतुल्ययोगितायाः उच्छेदः स्यादित्याशयः।

३ उभे अपि लक्षणे एकस्मिन् दीपकस्वरूपे अनुगामिनी (अनुगते) भवेतामेवं दीपकस्वरूपं नास्ति। तत्कथमिदं भेदद्वयं दीपकस्येत्यवगम्यतामित्यर्थः।

४ लक्षणद्वयान्यतरवत्त्वं दीपकत्वं यथा भवताऽऽख्यायते तथा उपमारूपकादिलक्षणान्यतमत्वं दीपकत्वमिति प्रतिपक्षिणा प्रोक्ते, सर्वेषामुपमा-रूपकाद्यलंकाराणां च दीपकभेदत्वसाधने अन्यालंकाराणां व्यपदेशोच्छेदः स्यादित्याशयः।

वासनादीनां च राजकर्तृकाणां पद्यद्वयगतानामौपम्यप्रतीतौ सहृदयहृदयमेव प्रमाणमिति न प्रतिबन्दिदानावसरः। यदि तु स्वेदनादीनामौपम्यं प्रतीयत एवेत्याग्रहस्तथापि क्रियाणां शुद्धप्रकृतत्वात्तुल्ययोगिता स्यादपि, न तु दीपकमित्यास्तां तावत्। यदपि विमर्शिनीकृतोदाहृतम्—

"आलिङ्गितुं शशिमुखीं च सुधां च पातुं
कीर्तिं च साधयितुमर्जयितुं च लक्ष्मीम्।
त्वद्भक्तिमद्भुतरसां हृदये च कर्तुं
मन्दादरं जनमहं पशुमेव मन्ये॥

अत्रालिङ्गनाद्यनेकक्रियाकर्तृत्वेनैक एव जनो निर्दिष्ट इति।" तदपि चिन्त्यम्। आलिङ्गनादीनां क्रियाणां मन्दादरत्वेनैकाश्रयकत्वस्यावश्यकत्वेऽपि परस्परमेकाश्रयकत्वस्यानावश्यकत्वात्। यः शशिमुखीमालिङ्गितुं यश्च सुधां पातुं योऽपि कीर्तिं साधयितुं यश्च लक्ष्मीमर्जयितुं यश्चापि त्वद्भक्तिं कर्तुं मन्दादरस्तं सर्वमपि जनं पशुं मन्ये इति तुमुन्नन्तानां भिन्नकर्तृत्वेऽप्युपपत्तेरेककारकान्वयकृतं क्रियाणामौपम्यं चमत्कारीति न शक्यते वक्तुम्। किं तु शशिमुखीसुधाकीर्तिलक्ष्मीत्वद्भक्तीनां बिम्बप्रतिबिम्बभावकृतम्। नापि चात्रैककर्तृत्वे काचिदर्थस्यास्ति परिपुष्टिः। प्रत्युत प्रातिकूल्यम्। सर्वेषां पशुत्वोक्त्यपेक्षया सकलतादृशक्रियाकरणमन्दादरस्यैकस्य पशुत्वोक्तेररमणीयत्वात्। यदि तु विमर्शिनीकारोक्तिरवश्यं समर्थनीयेत्याग्रहस्तदेत्थं समर्थ्यताम्—क्रियाणां कर्तुरेकत्वाभावेऽपि कर्तृतावच्छेदकस्य

---

**आलिङ्गितुमिति**। ईश्वरं प्रति भक्तोक्तिः। इदं सर्वं कर्तुं यो मन्दादरस्तं जनमहं पशुमेव मन्ये इत्यर्थः। **आवश्यकत्वेऽपीति**। मन्दादरत्वस्य सर्वत्र विशेषणत्वादिति

---

१ अयं सर्वस्याशयः—आलिङ्गनादिक्रियाणां सर्वासां कर्तृरूप एकाश्रयो नास्ति। 'यः आलिङ्गितुं मन्दादरः तं पशुं मन्ये, यः सुधां पातुं मन्दादरस्तं पशुं मन्ये' इत्यादिरूपेण कर्तॄणां भिन्नत्वेपि पद्यार्थस्योपपत्तेः। प्रत्युत एककर्तृत्वापेक्षया, पृथक्पृथक्कर्तॄणामेवंविधानां सर्वेषामेवानौचित्यसूचनाय सर्वेषामेव पशुत्वोक्तिरर्थपरिपोषकरी। ततश्च अनेकासां क्रियाणामेकेन कर्तृकारकेणाऽन्वयो नोपपादयितुं शक्यः। सर्वासां क्रियाणां मन्दादरत्वरूप एकाश्रयोऽवश्यमस्ति परं स कर्ता नास्ति, अपि तु कर्तृविशेषणम्। तथा च कारकदीपकोदाहरणताऽस्य न संगच्छते।

२ 'यः आलिङ्गितुं मन्दादरः, यः पातुं मन्दादर इत्यादिरूपेण मन्दादरत्वं सर्वत्र कर्तृविशेषणमिति तस्यैवैक्येन सकृद्वृत्तिर्निर्वाह्येत्याशयः।

मन्दादरत्वस्यैक्यात्तस्यैव च परम्परासंबन्धेनानेकक्रियासाधारणधर्मस्य सकृद्वृत्तिरस्तीति न दोषः। कारकस्येव कारकविभाजकोपाध्यवच्छेदकस्यापि सकृद्वृत्तेः कारकदीपकत्वेन परिभाषितुं शक्यत्वात्। कारकसकृद्वृत्तेस्त्व-स्माभिरुक्तमेवोदाहरणमनुसर्तव्यम्।

अत्रेदं बोध्यम्—तुल्ययोगितातो दीपकं न पृथग्भावमर्हति, धर्मसकृद्वृत्तिमूलाया विच्छित्तेरविशेषात्। विच्छित्तिवैलक्षण्यस्यैवालंकारविभागहेतुत्वात्। न च धर्मस्य सकृद्वृत्तेरविशेषेऽपि धर्मिणां प्रकृतत्वाप्रकृतत्वाभ्यां[1] प्रकृताप्रकृतत्वेन च तुल्ययोगिताया दीपकस्य विशेष इति वाच्यम्। तत्रापि[2] तुल्ययोगितायां धर्मिणां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च विशेषस्य सत्त्वादलंकारद्वैतापत्तेः। श्लेषेऽपि द्वैतापत्तेश्च। सर्वेषामप्यलंकाराणां प्रभेदवैलक्षण्याद्वैलक्षण्यापत्तेश्च। न च दीपके वास्तवमौपम्यं गम्यम्, उपमानोपमेययोः प्रकृताप्रकृतरूपयोस्तत्र सत्त्वात्। तुल्ययोगितायां च वैवक्षिकम्, उपमानोपमेयस्वरूपाभावात्। अतो वैलक्षण्यमिति[3]

भावः। नन्वेवमपि कारकस्य सकृद्वृत्तेरभावात्कथं तत्त्वमत आह—**कारकस्येवेति**। कारकशब्द उभयपर इति भावः। तर्हि कारकदीपकस्य किमुदाहरणमत आह—**कारकेति**। क्रमेणाह—**प्रकृतत्वेति**। न केवलमत्रैव दोषोऽपि त्वन्यत्रापीत्याह—**श्लेषेऽपीति**। भङ्गाभङ्गभेदादिति भावः। न केवलमेतावदित्याह—**सर्वेषामिति**।

१ तुल्ययोगितायां धर्मिणाम् (गुणिनां कारकाणां च) प्रकृतत्वमेव अप्रकृतत्वमेव वा, दीपके तु प्रकृताप्रकृतत्वमेवेति तुल्ययोगितायाः (तुल्ययोगितातः, तुल्ययोगितापेक्षया इत्यर्थः) दीपकस्य विशेष इति पूर्वपक्षः।

२ यत्किंचिद्विशेषमादाय व्यपदेशसाधने तु—कुत्रचिद्धर्मिणां प्रकृतत्वमेव, कुत्रचित्तु अप्रकृतत्वमिति तुल्ययोगितायामपि अलंकारद्वैतव्यपदेशापत्तिरिति तत्समाधानम्।

३ अयं भावः—दीपके 'सुधायाश्चन्द्रिकायाश्च०' इत्यत्र राजदयादृष्टिः प्रकृता उपमेया। अप्रकृताभिः सुधा-चन्द्रिकादिभिः सह अस्याः सादृश्यं च वस्तुत एव गम्यम्। प्रकृतस्य अप्रकृतेन सह उपमाया औचित्यात्। तुल्ययोगिता तु—केवलप्रकृतानां केवलाप्रकृतानामेव वा भवति। तत्र एकस्यां प्रकृतकोटौ एव, अप्रकृतकोटौ एव वा उपमानोपमेयभावो वक्तुरिच्छयैव कल्पनीयः स्यान्न वास्तव इति तुल्ययोगितादीपकयोः परस्परं विशेषः किं न स्यादिति शङ्का।

वाच्यम्। उपमेयोपमानत्वयोः प्रकृताप्रकृतरूपत्वे मानाभावात्। 'खमिव जलं जलमिव खम्' इत्याद्युपमेयोपमायां प्रतीपे चौपम्यानापत्तेश्च। तस्मात्तुल्ययोगिताया एव त्रैविध्यमुचितम्। प्रकृतानामेव धर्मस्य सकृद्वृत्तिः, अप्रकृतानामेव, प्रकृताप्रकृतानां चेति। एवं च प्राचीनानां तुल्ययोगितातो दीपकस्य पृथगलंकारतामाचक्षाणानां दुराग्रहमात्रमिति नव्याः।

अमुं[2] चालंकारं धर्मस्य गुणक्रियाद्यात्मकस्यादिमध्यावसानगतत्वेन त्रिविधमामनन्ति। यथा—

'न भाति रमणीयोऽपि वैराग्येण विना यतिः।
वैदुष्येण विना विप्रो नरलोकस्त्वया विना॥'

'लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः।
भाति विभवेन भवकान्राजन्भवता च वसुमतीवलयम्॥'

'आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम्।
नरमण्डन रिपुखण्डन भवता भूमण्डलं विभातितमाम्॥'

एवं तुल्ययोगितायामप्यूह्यम्।

वस्तुतस्तु धर्मस्यादिमध्यान्तगतत्वेऽपि चमत्कारवैलक्षण्याभावात्त्रैविध्योक्तिरापातमात्रात्। अन्यथा धर्मस्योपाद्युपमध्योपान्त्यगतत्वे ततोऽपि किंचिन्न्यूनाधिकदेशवृत्तित्वे चानन्तभेदप्रसङ्गात्।

एवं केवलानुगामिसाधारणधर्मतायां दर्शितं दीपकम्। बिम्बप्रतिबिम्बभावेनाप्येतत्संभवति। यथा—

**नापत्तेश्चेति**। वैपरीत्यादिति भावः। गतत्वेन निष्ठत्वेन। रमणीयोऽपि श्रुताचारसंपन्नोऽपि। यतिः संन्यासी। राजवर्णनमिदम्। एवमग्रेऽपि। **मदेति**। मदोत्कर्षेणेत्यर्थः। **वारणेति**। गजेन्द्र इत्यर्थः। भवकानित्यकन्प्रत्ययः। भवानित्यर्थः। 'भगवान्' इत्यपपाठः। **कुण्डलीति**। सर्पसमूहकुण्डलेनेत्यर्थः। नरेत्यादि संबोधनद्वयम्। आमनन्तीति सूचितामरुचिमाह—**वस्तुतस्त्वति**। अन्यार्थवैलक्षण्याभावेऽपि भेदाङ्गीकारे। **उपादीत्यादि**। आदिसमीपेत्याद्यर्थः। उपसंहरति—**एवमिति**। इद-

१ प्रकृतमुपमेयम्, अप्रकृतमुपमानमिति नियमे न मानम्। खमिव जलमित्याद्युपमेयोपमायाम्, सुवर्णं तवाङ्गवर्णमिति प्रतीपे च (यत्र हि उपमेयमेव उपमानं भवति) पूर्वोक्तनियमवैपरीत्याच्चेति समाधानम्।

२ दीपकम्।

'शीलभारवती कान्ता[1] पुष्पभारवती लता ।
अर्थभारवती वाणी भजते कामपि श्रियम् ॥'
'लता कुसुमभारेण शीलभारेण सुन्दरी ।
कविता चार्थभारेण श्रयते कामपि श्रियम् ॥'

इदमेव लतादिष्वन्यतमस्य प्राकरणिकत्वे दीपकस्योदाहरणम्, अन्यथा तुल्ययोगितायाः । अत्र बिम्बप्रतिबिम्बतायां न केवलं क्रियारूपमनुगामिमात्रं चमत्कारकारणम्, अपि तु कुसुमादिबिम्बप्रतिबिम्बकरम्बितम् । इयांस्तु विशेषः—यत्केवलबिम्बप्रतिबिम्बभावेनाप्युपमादीनां भवति निष्पत्तिः । यथा 'कोमलातपबालाभ्र-' इत्यादौ । प्रकृते तु न तथा, अनुगामिनं विना धर्मस्वरूपस्यैवानिष्पत्तेः । न हि बिम्बप्रतिबिम्बमात्रेण धर्मस्य सकृद्वृत्तिः संभवति । तथा 'मृतस्य लिप्सा-' इत्यादिप्रागुक्ते मृतादीनाम्, कारकदीपके कारकतुल्ययोगितायां च 'वसु दातुं-' इत्यादौ क्रियाणां धर्मित्वात्तद्विशेषणानां वस्वादीनां च बिम्बप्रतिबिम्बता बोध्या ।

उत्तरोत्तरस्मिन्पूर्वपूर्वस्योपकारकतायां मालादीपकम् । यथा—

'आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना ।

---

मेव उदाहरणद्वयमेव । **बिम्बेति** । विलक्षणशोभाश्रयणानामित्यादिः । **तुल्ययोगितायां चेति** । अस्याग्रेऽन्वयः । **वस्वादीनां चेति** । चेन मृतादीनां समुच्चयः ।

---

१ वाण्यादिषु यस्याः कस्याश्चन प्रकृतत्वे प्रकृता उपमेयभूता । तदितरयोः कान्तालतयोश्चोपमानत्वम् । एतद्विशेषणीभूतस्यार्थादेस्तु बिम्बत्वम्, शीलादेश्च प्रतिबिम्बत्वं बोध्यमित्याशयः ।

२ गुणरूपस्य क्रियारूपस्य वा एकस्य धर्मस्य अनेकेषु गुणिषु कारकेषु वा यावत् अनुगमनं न प्रकटीक्रियते तावत् अनेकत्र एकधर्मसंबन्धः ( यो हि तुल्ययोगितादीपकयोः स्वरूपाधायकः ) कथं प्रतीयेत ? ततश्चानुगामिना धर्मेण ( यथात्र 'श्रयते कामपि श्रिय'मिति शोभाश्रयणरूपेण ) सहकृत एव बिम्बप्रतिबिम्बभावोऽत्र चमत्कारीत्याशयः ।

३ लिप्सा-दित्सादयो धर्मिणः ( येषु एकधर्मसंबन्धो विवक्षितः ), मृत-कृपण-कुलटादयश्च तद्विशेषणानि । अत एव तेषां बिम्बप्रतिबिम्बभावः । एवं 'वसु दातुम्०' इत्यत्र केवलप्रकृतानां तुल्ययोगितायाम्, प्रकृताप्रकृतानां दीपके वा दान-धानादिक्रियाः धर्मिणः । तद्विशेषणानां वसु-यशोऽरिमर्दनादीनां च बिम्बप्रतिबिम्बभावो बोध्य इत्याशयः ।

दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर
　　क्षोणीनाथ तया भवांश्च भवता भूमण्डलं भासते ॥'

एतच्च प्राचामनुरोधादस्माभिरिहोदाहृतम् । वस्तुतस्त्वेतद्दीपकमेव न शक्यं वक्तुम्, सादृश्यसंपर्काभावात् । किं त्वेकावलीप्रभेद इति वक्ष्यते ।

अस्मिंश्चालंकारद्वये क्रियादेर्धर्मस्यैकरूप्येण धर्मिष्वनन्वयो[1] दोषः । यथा प्रागुक्ते पद्ये 'रसिकाः सामाजिकास्तैः सभा' इति कृते एकवचनान्तैर्धर्मिभिरेकरूप्येणान्वये[2]ऽपि सामाजिकैरनन्वयात् । वचनविपरिणामेनान्वये उपमायामिव स्यादेव दोषः । एवं जहल्लिङ्ग[3]नामार्थस्य धर्मस्य सकृद्वृत्तौ लिङ्गभेदोऽपि दोषः । यथा—

'जगति नरजन्म तस्मिन्वैदुष्यं तत्र सत्कविता ।
कवितायां परिणामो दुष्प्रापः पुण्यहीनेन ॥'

यदि तु 'तपसा नाल्पेन शक्यते लब्धुम्' इत्याख्यातान्तं क्रियते तदा लिङ्गभेदो न दूषणम् । एवमजहल्लिङ्गनामार्थस्य सकृद्वृत्तावपि न दोषः । यथा— 'फलमतिशयितं तपस्यायाः' इति चतुर्थचरणनिर्माणे ।

एवं पुरुषस्यैकरूप्याभावे दोषः । यथा—

'दिवि सूर्यो भुवि त्वं च पाताले पन्नगाग्रणीः ।

**उपमायामिव स्यादेवेति** । तेन धर्मेणोपमा गम्या न स्यादिति भावः । **लिङ्गभेदोऽपीति** । धर्मिणामिति शेषः । एवमग्रेऽपि । **जगतीति** । अत्र दुष्प्राप इति नामार्थो धर्मः । स च जहल्लिङ्गः । तस्य सर्वलिङ्गत्वात् । **न दूषणमिति** । तस्य तत्रान्वयसंभवादिति भावः । एवमग्रेऽपि बोध्यम् । एवमुक्तप्रकारेण । एवं लिङ्गभेददो-

१ धर्मिषु ( गुणिषु कौरवादिषु वा ) धर्मस्य ( गुणस्य क्रियादेर्वा ) एकरूपेण यद्यन्वयो न भवति, अर्थात् एक-द्विवचन-लिङ्गादीनां भेदेन सर्वेष्वपि धर्मिषु एकरूपेणान्वयो यदि नोपपद्यते, तर्हि दोष इत्याशयः ।

२ बहुवचनान्तैः सह भासते इत्येकवचनान्तक्रियारूपधर्मस्येत्याशयः ।

३ विशेष्यनिघ्नतया सर्वलिङ्ग इत्यर्थः ।

दिक्षु दिक्पालवर्गश्च राजपुंगव राजते ॥'[1]

यदि त्वमित्यत्र भवानिति क्रियते तदा न दोषः । एवं कालभेदेऽप्यूह्यम् । एतेन—

'सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरमला कीर्त्या च लोकत्रयम् ॥'

इति प्राचीनानां पद्यं दीपकांशेऽपि सदोषमेव[2] ।

इति रसगङ्गाधरे दीपकप्रकरणम् ।

अथ प्रतिवस्तूपमा—

तत्र तावत्सादृश्यस्य यत्र चमत्कारिता तत्रोपमेत्युक्तम् । तस्यां च साधारणधर्मस्य सर्वेऽपि प्रकारा यथासंभव निरूपिताः । सादृश्योपस्कृतस्य वस्त्वन्तरस्य चमत्कारितायां भेदाभेदान्यतरप्रधाना[3] अन्येऽलंकाराश्च । तेष्वपि साधारणधर्माणां यथावसरं यथासंभवं च स्थितिः प्रदर्शितैव । इदानीं वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मोत्थापिता[4] वाक्यार्थगता प्रतिवस्तूपमा

---

षवत् । एवमुक्तप्रकारेण । अन्यांशेऽपि दोषस्य प्रागुक्तत्वादाह—**अपीति** ॥ इति रसगङ्गाधरमर्मप्रकाशे दीपकम् ॥

प्रतिवस्तूपमां निरूपयति—**अथेति** । अथात्र विशेषं वक्तुं प्रागुक्तं सर्वं संग्रहेणानुवदति—**तत्रेति** । निरूपणीयायां तस्यामित्यर्थः । **अलंकाराश्चेति** । निरूपिता

---

१ सूर्यो राजते, पन्नगाग्रणीः राजते, इत्याद्यन्वयोपपत्तावपि, 'त्वं राजसे' इति स्यान्न तु राजते इति । ततश्च धर्मस्य न सर्वेष्वेकरूपेणान्वय इत्याशयः ।

२ सादृश्यसंपर्काभावान्नेदं दीपकम्, किन्त्वेकावलीप्रभेदः, इति 'आस्वादेन रसः' इति पद्यप्रसङ्गे प्रोक्तमेव । किन्तु दीपकांशेपि नेदं पद्यं निर्दोषम्, शराः अरिशिरः भूमण्डलमित्यादीनां समासादितमित्यनेन सह वचन-लिङ्गभेदाद्विपरिणामं विना नाऽन्वयः । विपरिणामेनान्वये उपमायामिव स्यादेव दोष इत्याशयः ।

३ भेदप्रधाना दीपकतुल्ययोगितादयः । अभेदप्रधाना रूपकपरिणामभ्रान्तिमदुल्लेखादयः । दीपकादिषु प्रकृताप्रकृतयोरेकधर्मान्वयादय एव चमत्कारकाः, गम्यं सादृश्यं हि उपस्कारकमात्रमित्यर्थः ।

४ आश्रयभेदाद्भिन्नयोरपि वस्तुत एकरूपयोर्धर्मयोः पृथक्पदाभ्यां निर्देशो वस्तुप्रतिवस्तुभावः, तदापन्नेन साधारणधर्मेणोत्थापिता । अर्थात् एक एव धर्मः उपमानोपमेयवाक्ययोः पृथक्पदाभ्यां निर्दिष्टो यस्यामीदृशी ।

निरूप्यते । न चास्या वाक्यार्थगतत्वेनैवोपमातो भेद इति भ्रमितव्यम् । 'दिवि भाति यथा भानुस्तथा त्वं भ्राजसे भुवि' इत्यादौ वाक्यार्थेऽप्युपमायाः संभवात् । अत एव भिन्नशब्दोपात्तैकधर्मकत्वेनापि न वैलक्षण्यं वक्तुं शक्यम् । प्रकृते भातिभ्राजतिभ्यां धर्मस्यैकस्यैव प्रतिपत्तेः । तस्माल्लक्षणानुसारेणालंकारान्तरेभ्यो वैलक्षण्यमस्या बोध्यम् ।

अथ किमस्या लक्षणम्—'वाक्यार्थगतोपमात्वम्' इति चेत्, प्रागुक्तवाक्यार्थोपमायामतिव्याप्तेः । न चार्थत्वेन[1] तद्विशेषणीयमिति वाच्यम् । दृष्टान्तालंकारे तथाप्यतिप्रसङ्गात् । वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकत्वेनापि[2] तद्विशेषणीयमिति चेत् । तथापि

'तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥'

इत्यप्रस्तुतप्रशंसायामतिप्रसङ्गादिति । मैवम् । अप्रस्तुतप्रशंसायां वस्तुप्रतिवस्तुभावस्य भिन्नशब्दोपात्तैकप्रतिपाद्यरूपस्यासंभवात्[3] । एवं च—

इत्यनुषज्यते । **भिन्नेति** । अस्या इत्यादिः । अत एवेत्यस्यार्थमाह—**प्रकृत इति** । प्रागुक्ते 'दिवि भाति' इत्यादावित्यर्थः । तत् वाक्यार्थगतोपमात्वम् । एवमग्रेऽपि । तथापि यथातथाशब्दस्य तद्वाचकस्य सत्त्वात्तत्र दोषाभावेऽपि । तथा दृष्टान्ते बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मकत्वेन दोषाभावेऽपि । यापय अतिक्रमय । एवं च

१ अर्थात् आर्थं वाक्यार्थगतोपमात्वं प्रतिवस्तूपमात्वम् । 'दिवि भाति यथा भानुः' इत्यादिपूर्वनिर्दिष्टवाक्यार्थोपमायां यथातथा इत्युपादानात् शाब्दमेवोपमात्वमिति आर्थत्वविशेषणे न तत्रातिव्याप्तिरिति पूर्वपक्षिणः शङ्का । 'सत्पूरुषः खलु' इति दृष्टान्तेऽपि द्वयोर्वाक्यार्थयोरार्थस्यौपम्यस्य सत्त्वात्तत्रातिव्याप्तिः स्यादिति तत्समाधानम् ।

२ वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकम् आर्थमौपम्यं दृष्टान्तः, इतिरूपेणेत्यर्थः । दृष्टान्ते वस्तुप्रतिवस्तुभावतो विपरीतः ( भिन्नयोर्धर्मयोः सादृश्यवशादैक्यरूपः ) बिम्बप्रतिबिम्बभावो भवतीति नातिव्याप्तिः स्यादिति तदाशयः ।

३ भिन्नभिन्नशब्दाभ्यामुपात्तः एकः प्रतिपाद्यः ( वाच्यो धर्मः ) यस्मिन् एवंरूपस्य । अर्थात् यत्र अप्रस्तुतस्यैव मुखतः कीर्तनं भवति, प्रस्तुतं तु व्यञ्जनया प्रतीयते तस्यामेक एव धर्मो भिन्नभिन्नशब्दाभ्यां न निर्देष्टुं शक्यते, द्वयोर्वाच्यत्वे एव तथानिर्देशस्य शक्यत्वात् । ततश्च वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकम् ( आर्थम् औपम्यम् ) इति विशेषिते अप्रस्तुतप्रशंसायां नातिव्याप्तिः । एवं सति वस्तुप्रतिवस्तुभावापन्नेत्यादिविशेषणदानोत्तरमपि तथापीत्यादिना 'तावत्कोकिल०' इत्यत्र मूले अतिव्याप्तिशङ्का लक्षणस्यावतरणिकारूपैवेति बोध्यम् ।

**वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा ॥**

'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम्।
भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥'

इत्यत्र स्मरणालंकारेऽतिप्रसङ्गवारणाय वाक्यार्थगतमिति। अत्रौपम्यस्यार्थत्वेऽपि पदार्थगतत्वमेव, न तु वाक्यार्थगतत्वम्, स्मरणस्य तदसंपर्कात्[1]। पदान्तरकृत्यं तूक्तमेव।

---

अप्रस्तुतप्रशंसायास्तेनैव वारणे च। **वस्तुप्रतिवस्तुभावापन्नेति**। तद्विशेषणानां तापचापादीनां बिम्बप्रतिबिम्बभावे 'तापेन भ्राजते' इत्यादौ क्वचित्सत्यपि साक्षादुपमानोपमेयवृत्तिधर्मौ वस्तुप्रतिवस्तुभावापन्न एव। दृष्टान्ते तु साक्षात्तद्वृत्तिधर्मस्यापि बिम्बप्रतिबिम्बभाव इति दृष्टान्ताद्विशेषः। अत एव वस्त्वित्यादिना दृष्टान्तवारणम्। एकस्यैव धर्मस्य पृथक्छब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः। 'दिवि भाति यथा भानुस्तथा त्वं भासि वै भुवि'[2] इत्यादौ वाक्यार्थोपमायामतिव्याप्तिवारणायार्थमिति। तद्ध्वनयन्वक्ष्यति—**पदान्तरेति। स्मरणस्य तदसंपर्कादिति**। यथा वाक्यार्थोपमायां गगनाधिकरणकभानुकर्तृकशोभाविशिष्टभूम्यधिकरणकत्वत्कर्तृकशोभेति बोधः। वैशिष्ट्यनियामकसंबन्धश्च स्वकर्तृसदृशकर्तृकत्वमेव। संबन्धविशेषतात्पर्यग्राहकौ च यथातथाशब्दौ। नैवं प्रकृते स्मरणान्तर्भावेणोपमानोपमेयभावः। किं तु तादृशपद्मसदृशं तादृशमाननमित्येव। न च वाक्यार्थोपमायां तादृशशोभाश्रयभानुसदृश ईदृशशोभाश्रयस्त्वमिति बोधः, क्रियाविशेषणस्य प्रथमान्तार्थस्योपमानत्वेनान्वयायोगात्। प्रतिवस्तूपमायां तु तादृशसंबन्धद्योतकपदाभावाद्गम्यत्वमौपम्यस्येति विशेषः। यद्वा वाक्यार्थोपमायां तादृशसंबन्धोऽपि यथातथापदद्योत्यत्वात्प्रकार एव। 'यत्र वाक्यद्वयगतानां पदा-

---

१ सरसीरुहं स्मरामीत्युक्त्वा सरसीरुहपदार्थेनैव स्मरणस्य संबन्धो न तु वाक्यार्थेनेत्याशयः। नागेशस्त्वत्र तदसंपर्कादितिप्रसङ्गे वाक्यार्थोपमायाम् 'गगनाधिकरणकभानुकर्तृकशोभासदृशी भूम्यधिकरणकत्वत्कर्तृकशोभा' इति बोधमनुक्त्वा यथातथापदयोः संबन्धविशेषाभ्यारितमुपमानोपमेयभावादिकं जल्पन् अकर्तव्यविषयं मुधैव स्वनामसदृशं वक्रयामास। 'यथा लतायाः स्तबकानतायाः' इत्यत्र यथातथापदयोरुपमानोपमेयभाववाचकत्वस्य पूर्वं स्वयमूरीकरणात्।

२ 'भासि वै' इति तु नागेशस्य भ्रम एव। 'भासि' इत्युभयदलपाठे पृथक्शब्दाभ्यामुपादानाभावाद्वस्तुप्रतिवस्तुभाव एव न स्यात्। ततश्चात्र तद्वारणार्थम् 'आर्थ' विशेषणपर्यन्तमनुधावनं व्यर्थं स्यात्। तस्मात् 'तथा'पदसंबद्धे उपमेयदले 'भ्राजसे' इत्येव पठितव्यम्।

उदाहरणम्—

'आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम्।
कालागुरुर्दहनमध्यगतः समन्ता-
ल्लोकोत्तरं परिमलं प्रकटीकरोति॥'

अत्र विस्तारप्रकटने वस्तुत ऐकरूप्येणाभिमते।

यथा वा—

'विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव।
लोकंपृणैः परिमलैः परिपूरितस्य
कालागुरोः कठिनतापि नितान्तरम्या॥'

र्थानां सर्वेषां परस्परसाम्यं तत्र प्रतिवस्तूपमा' इति शरदागमकृतः। **आपद्गत इति।** अत्रोदाहरणे आपद्गतः सत्पुरुषोऽपूर्वौदार्यवान् स्वकीर्तित्वादित्यर्थविशेषरूपे न कालागुरोर्दृष्टान्तता। यथा पर्वत एतद्वह्निमान् एतद्धूमान् इत्यत्र महानसस्य। तस्मात्कालागुरुरूपदृष्टान्तेन तद्वृत्तिसामान्यधर्मावच्छिन्नयोर्व्याप्तिसिद्धौ 'यत्सामान्ययोर्व्याप्तिस्तद्विशेषयोः' इति न्यायेन पूर्वोक्तविशेषनियमसिद्धिः। उपमा चापद्गतः सत्पुरुषो दहनमध्यगतकालागुरुसदृश इति। साधारणधर्मश्च बिम्बप्रतिबिम्बभावापन्नापूर्वौदार्यलोकोत्तरपरिमलविशेषणकं विस्तारणम्। न वस्तुप्रतिवस्तुभावापन्नम्। एवं वैयधिकरण्येऽपि व्यतिरेक आक्षिप्यते। तत्र च पूर्वोक्तरीत्या एकविशेषेऽपरविशेषस्य दृष्टान्तत्वाभावात्तद्वृत्तिसामान्यावच्छिन्नव्यतिरेक आक्षिप्यते। सिद्धे च तस्मिंस्तद्विपरीतदृष्टान्तेन तादृशसामान्यावच्छिन्नान्वयनियमसिद्धौ यत्सामान्ययोरिति न्यायेन तादृशविशेषावच्छिन्नकाव्योक्तान्वयनियमसिद्धिरिति बोध्यम्। **विश्वाभिरामेति।** जगद्रमणीयेत्यर्थः। गुम्फि-

१ अत्र 'आपद्गतः' 'दहनमध्यगतः' इति उपमेयोपमानविशेषणे। एतद्विशेषणविशेषणयोः आपद्दहनयोर्बिम्बप्रतिबिम्बभावः। किंतु उपमेये (महाशयचक्र०), उपमाने (कालागुरौ) च साक्षाद्वर्तमानौ विस्तारण-प्रकटनात्मकक्रियारूपधर्मौ परस्परं वस्तुप्रतिवस्तुभावापन्नौ। ततश्च वस्तुप्रतिवस्तुभावापन्नः साधारणधर्मो यत्र ईदृशयोः 'आपन्नो महाशयवरः तथा औदार्यं प्रकटयति यथा दग्धः कालागुरुः परिमलं प्रकटयति' इति वाक्यार्थयोर्गम्यमौपम्यमस्तीति प्रतिवस्तूपमालक्षणसंगतिः। एवं द्वितीयोदाहरणेऽपि।

वैधर्म्येणाप्येषा संभवति—

'वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥'

यथा वा-

'गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥'

अत्र शाब्देन दृष्टान्तेन तद्गतः सामान्यावच्छिन्नव्यतिरेकसहचार आक्षिप्यते । तेन च सामान्यावच्छिन्नान्वयनियमसिद्धिद्वारा प्रकृतो विशेषावच्छिन्नान्वयनियमः सिध्यतीति प्रायशः सर्वत्र वैधर्म्ये स्थितिः । एवमन्वयेन प्रतिवस्तूपमायामपि नियमविशेषस्य प्रकृतवाक्यार्थत्वेऽन्वयदृष्टान्तेन

तानां रचितानाम् । लोकंपृणैर्लोकपूरकैः । वंशभव इति । महिमाभावव्याप्यतुम्बीफलरहितवीणादण्डसदृशः सङ्गविशेषाभावव्याप्यपूज्यत्वाभाववान्पुरुष इत्युपमाकारोऽत्र बोध्यः, एवमग्रेऽपि । अत्र उदाहरणद्वये । प्रतिपादितमिदं सर्वमनुपदमेव । मैर्नक्षत्रैः ।

१ अत्र व्यतिरेकघटितो दृष्टान्तः शाब्दोस्ति । तेन च प्रकृतकोटौ ( पूर्वार्धे ) अपि सामान्यावच्छिन्नयोः अर्थात् 'पुरुषः' इत्यादिव्यक्तिविशेषं विहाय सामान्यतः संगविशेष—पूजात्वावच्छिन्नयोर्यौ व्यतिरेकौ ( अभावौ ) तयोः सहचारः ( व्याप्तिः ) आक्षिप्यते । अर्थात् उत्तरार्धगतशब्दोपात्तव्यतिरेकदृष्टान्तेन पूर्वार्धगतप्रकृतकोटावपि [ यत्र पूजाभावः तत्र सङ्गविशेषाभावः ] इति व्यतिरेकः अर्थबलादागतो । तेन ( सहचारेण ) च सामान्यावच्छिन्नयोः [ सामान्यतः सङ्गविशेषपूजयोः ] अन्वयनियम( व्याप्ति )सिद्धिः [ यत्र सङ्गविशेषः तत्र पूजा इति ] । एतत्सिद्धिद्वारा च विशेषावच्छिन्नयोरपि नियमः ( व्याप्तिः ) सिध्यति । अर्थात् यदा सामान्यतः सङ्गविशेषेण सह पूजाया व्याप्तिः सिद्धा तदा 'पुरुषः' इत्यादिव्यक्तिविशेषेऽपि सङ्गविशेषं दृष्ट्वा पूजायाः सहचारे न बाधकमित्याशयः ।

२ एवमेव 'आपद्गतः०' इत्यादौ यत्र अन्वयप्रतिवस्तूपमा तत्रापि सामान्यतः आपद्गतमहाशयेन सह औदार्यप्रकटनस्य व्याप्तिर्गृह्यते । महाशयचक्रवर्तिरूपव्यक्तिविशेषं प्रति नु कालागुरोर्न दृष्टान्तता घटेत [ पर्वतो वह्निमान् धूमात् इत्यत्र महानसस्य यथा ] । एवं च सामान्यतः आपद्गतमहाशयस्य औदार्यस्य च व्याप्तिः परिगृह्यते । ततश्च 'आपद्गतः०' इत्यादिस्थले महाशयचक्रवर्तिरूपं प्रकृतं व्यक्तिविशेषं पक्षकोटौ, कालागुरुरूपम् अप्रकृतं व्यक्तिविशेषं च दृष्टान्तकोटौ निवेश्य सामान्यतः अन्वयव्याप्तिसिद्धिः—'आपद्गतोपि महाशयचक्रवर्ती अपूर्वौदार्यवान् तादृशकीर्तिमत्त्वात्, यथा दहनमध्यगतोपि कालागुरुः अतिशयितसौगन्ध्यवान्' इति । एवं सामान्यतोऽन्वयव्याप्तिसिद्धौ सत्यां महाशयव्यक्तिविशेषेऽपि आपद्गतत्वे सत्यपि गभीराशयत्ववशात् औदार्यप्रकटनस्य व्याप्तिः सिद्धा अर्थात् अन्वयविशेषव्याप्तिः सिद्धा ।

सामान्यान्वयनियमसिद्धिद्वारा तत्सिद्धिः । नियमविशेषरहितकेवलार्थमात्रस्य प्रकृतत्वे त्वप्रकृतवाक्यार्थनिरूपितमौपम्यमात्रं गम्यम्, न तु नियमः, अप्रयोजकत्वात् । यथा 'भैरभ्रे भासते चन्द्रो भुवि भाति भवान्बुधैः' इत्यादौ ।

ननु कथमस्मिन्नलंकारे सर्वत्रौपम्यं गम्यमित्युच्यते । यावता प्रागुपदर्शितायां वैधर्म्यप्रतिवस्तूपमायां वाक्यार्थयोरौपम्यस्य बाधात् । नहि पचतिनपचतीति वाक्यार्थयोः पाकक्रियामात्रसाम्यादौपम्यं गम्यते । निषेधप्रतियोगित्वेनोत्तरवाक्यार्थे तस्या अप्ररोहादिति चेत्, न । अप्रकृतवाक्यार्थाक्षिप्तस्य स्ववैपरीत्यस्यैवौपम्याश्रयत्वात् । न च वाक्यार्थयोरौपम्यमिति यदुक्तं तत्कथं संगच्छतामिति, वाक्यवेद्यस्यैव प्रकृते वाक्यार्थत्वेनेष्टत्वात् । तथा हि—

वाक्यार्थयोर्विधिनिषेधयोः । नचेत्यस्य एवमिति शेषः । वेद्यस्यैवेति । यथाकथंचि-

१ ये तु मन्यन्ते यद् 'आपद्गतः०' इत्यादिप्रतिवस्तूपमोदाहरणेषु व्याप्तिविशेषे न तात्पर्यम्, किन्तु 'यः महाशयो भवति स आपद्गतोपि औदार्यमेव प्रकटयति' इत्यर्थमात्रे तात्पर्यम्, तेषां मते आपद्गतमहाशय-औदार्ययोः नियमः ( व्याप्तिः ) न गम्यः, अप्रयोजकत्वात् ( तथा तात्पर्यस्वीकारे प्रयोजनं नास्ति ) । किन्तु प्रकृताप्रकृतयोरौपम्यमात्रं गम्यम्—'आपद्गतमहाशयः तथा औदार्यं प्रकटयति यथा दग्धोपि कालागुरुः सौगन्ध्यम्' । यथा वा—भुवि बुधैस्त्वं तथा भासि यथा अभ्रे नक्षत्रैश्चन्द्रः इति । [ अत्र हि सादृश्ये तात्पर्यं न व्याप्तौ ] ।

२ अयं भावः—'गुणवान् संगविशेषेण पूज्यते' इति पूर्ववाक्यार्थो विधिघटितः । 'वीणादण्डो महिमानं न प्रयाति' इत्युत्तरवाक्यार्थस्तु निषेधघटितः, अनयोरौपम्यं कथं स्यात्? नहि पचति न पचतीत्यनयोः केवलां पाकक्रियामेव सामान्यमादाय औपम्यं वक्तुं शक्यम् । प्रत्युत उत्तरवाक्यार्थे न पचतीति निषेध उपात्त इति तस्याः ( पाकक्रियायाः ) प्ररोहो न भवतीति तत्क्रियासाम्येन कथं द्वयोरौपम्यम्? एवमेव 'पुरुषः पूज्यते' वीणादण्डो महिमानं न प्रयाति ( न महीयते, न पूज्यते ), अनयोर्वाक्यार्थयोर्या उपमा प्रतिफलितासीत्तस्या उत्तरवाक्यार्थधृतनकारेण निषेधः स्यादिति शङ्का । 'न हि तुम्बीफल०' इति वाक्यार्थेन सह पूर्ववाक्यार्थसंगत्यर्थम् 'तुम्बीफलसहितो वीणादण्डो महिमानं प्रयाति' इति वाक्यार्थ आक्षिप्यते । तेनैव पूर्ववाक्यार्थस्य औपम्यम् 'यथा तुम्बीफलसहितो वीणादण्डो महिमानं याति तथा सङ्गविशेषेण पुरुषः पूज्यते' इति तत्समाधानम् ।

३ ननु वाक्यार्थयोः औपम्यमिति प्रतिज्ञायते । ततश्च उत्तरवाक्यार्थेन 'न महिमानं प्रयाति' इत्यनेन सह कौपम्यम्? अत्र हि 'न महिमानं प्रयाति' इति वाक्यार्थद्वाराऽऽक्षिप्तो योऽन्यो वाक्यार्थः [ तुम्बीफलसहकारेण यथा वीणादण्डो महिमानं प्रयाति इति ] तेनैव सह औपम्यं, न प्रकृतवाक्यार्थेन सहेति शङ्का । वाक्यार्थद्वारा वेद्यः ( आक्षेप्यः ) अपि अत्र वाक्यार्थशब्देन व्यपदिश्यत इति समाधानम् ।

'तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥'

अत्र विरलो जानातीति विधिमुखोऽपि प्रकृतवाक्यार्थः 'पुरुषविशेषं विना न सर्वे जानन्ति' इत्यर्थविशेषमादायैव पर्यवसितो भवतीति निषेधरूपवाक्यार्थस्य[1] तादृशेनैव द्वितीयवाक्यार्थेन सह गम्यते सादृश्यं स्फुटमेव। यत्र तु 'वंशभवः' इत्यादौ प्रागुदाहृते प्रकृतवाक्यार्थो विधिरूपः सङ्गविशेषहेतुकत्वस्य पूजनादौ विधेयत्वादवसीयते[2], तत्रापि हेतुताघटकव्यतिरेकस्य गुणतया प्रतीयमानस्यौपम्यं निर्बाधमिति न दोषः । इयं च वाक्यार्थयोः सामान्यविशेषभावाऽनापन्नयोर्भवति, तत्रैवौपम्यस्य[3] गम्यत्वात् । सामान्यविशेषयोस्त्वौपम्याप्रतीतेः समर्थ्यसमर्थकयोरर्थान्तरन्यासो वक्ष्यते ।

यत्तु कुवलयानन्दकृता वैधर्म्यमुदाहृतम्—

'विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥'

द्वाक्यजन्यप्रतीतिविषयस्यैवेत्यर्थः । **तत्त्वमिति** । अत्रापि मधुव्रतातिरिक्तज्ञानविषयतत्त्वकमकरन्दसदृशं साधारणसकलपुरुषज्ञानाविषयतत्त्वककाव्यमित्युपमाकारो बोध्यः ।

१ 'मधुव्रतं विना मरन्दानां मार्मिकः कोपि नास्ति' इति निषेधरूपवाक्यार्थस्य 'काव्यानां तत्त्वं पुरुषविशेषं विना न सर्वे जानन्ति' इति तादृशेनैव ( पर्यवसितनिषेधरूपेणैव ) सादृश्यं स्फुटमेव गम्यते इत्याशयः ।

२ 'गुणवानपि सङ्गविशेषेण पूज्यते' इति विधिरूपो वाक्यार्थः प्रकृतत्वेन पर्यवसीयते । यतो हि पूजनादौ सङ्गविशेषस्य हेतुत्वं विधेयम् ( तात्पर्यविषयः ), तत्र विधिरूपमेव । एवं च विधिरूपस्यास्य प्रकृतवाक्यार्थस्य 'न हि महिमानं प्रयाति' इति निषेधरूपेण अप्रकृतवाक्यार्थेन औपम्यं कथं स्यादिति तदुपायमाह—हेतुताघटकव्यतिरेकस्येत्यादिना । अयं भावः—पूजां प्रति सङ्गविशेषस्य हेतुत्वे प्रधानतया यथा अन्वयो घटकः [ यत्र सङ्गविशेषो भवति तत्रैव पूज्यत्वम्, इति ], एवं व्यतिरेकोपि [ यत्र सङ्गविशेषो न भवति तत्र पूज्यत्वं न भवति इति ] गौणतया घटकः । एवं च गौणतया प्रतीयमानेन व्यतिरेकेणैव निषेधरूपस्य अप्रकृतवाक्यार्थस्य औपम्यम् [ तुम्बीफलरहितो वीणादण्डो यथा महिमानं न याति तथा सङ्गविशेषेण रहितो न पूज्यते ] निर्बाधमिति ।

३ विशेषस्य सामान्याद् भेदाभावेन सामान्यविशेषभावे सति उपमैव न संघटते इत्याशयः ।

'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
नहि कस्तूरिकामोदः शपथेन विभाव्यते ॥' इति ।

तत्र 'विद्वानेव हि जानाति' इति पद्यं भवतु नाम यथाकथंचिद्वैधर्म्यस्योदाहरणम्, 'यदि सन्ति' इति तु न युक्तम् । वैधर्म्योदाहरणं हि प्रस्तुतधर्मिविशेषोपारूढार्थदार्ढ्याय स्वाक्षिप्तस्वव्यतिरेकसमानजातीयस्य धर्म्य-

---

इयं च प्रतिवस्तूपमा च । **यथाकथंचिद्वैधर्म्यस्येति** । अत्रेदं चिन्त्यम्—यद्यपि 'विद्वानेव–' इत्यस्य एवकारबलेन अविद्वान्न जानातीत्यप्यर्थः । तस्य चोत्तरवाक्यार्थः साधर्म्य एव । तथापि भूतल एव वन्ध्यापुत्र इत्यादिप्रयोगवारणाय भावान्वयस्यापि विवक्षितत्वमस्त्येवेति न दोषः । नहि वन्ध्येत्यनेनाक्षिप्तस्य प्रसवित्र्येव जानातीत्यस्य वाक्यार्थस्योपमानत्वेन विवक्षणाद्वैधर्म्यं बोध्यम् । आक्षिप्तव्यतिरेकसजातीयार्थनिबन्धने वैधर्म्यस्यैवोपात्तस्वस्वव्यतिरेकयोः । स्वव्यतिरेकसजातीयार्थस्यैव निबन्धने तदाक्षिप्ततद्व्यतिरेकेणोपात्तस्योपमाया गम्यत्वेऽपि तत्त्वौचित्यात् । तत्राप्युपात्तभावरूपार्थस्य नहि वन्ध्येत्याक्षिप्तेनोपमाप्रतीतेः सत्त्वात् । यदि सन्तीत्यत्रापि गुणाः स्वयमेव प्रकाशन्ते इति भावान्वयविधर्मभूते कस्तूरिकामोदः शपथेन न ज्ञायते इति वाक्यार्थस्तदाक्षिप्तेन स्वयमेव प्रकाशन्ते इति वाक्यार्थेन भावान्वयवाक्यार्थ एवौपम्यं बोध्यम् । यद्वा यदि सन्तीत्यत्र एवकारस्य क्रियासमभिव्याहृतत्वादत्यन्तायोगव्यवच्छेद एवार्थः । परतो न प्रकाशन्त इत्येतदाक्षेपलभ्यमेव । तत्र हि द्वितीयार्धेन स्वतः प्रकाशन्त एवेत्येतत्समानजातीयार्थवर्णनम् । किं तु परतो नेत्येतत्समानजातीयस्यैव । यत्तु शपथेन न प्रकाशन्ते किं तु स्वत एवेत्यर्थवर्णनं तत्र स्वत एवेत्यंशो न वाच्यः । किं त्वाक्षेपलभ्यः । आक्षेपेण च मार्मिकः को मरन्दानाम्', इति भवदुदाहृतेऽपि मधुव्रतं विना को जानाति, मधुव्रत एव जानातीत्यर्थप्रतीतेर्वैयधिकरण्योदाहरणत्वं न स्यात् । अस्तु वा एवकारापकर्षणेन न परत इति प्रस्तुतवाक्यार्थः । तथापि व्यतिरेकसजातीयार्थनिबन्धनादन्वयसजातीयार्थानिबन्धनाच्च विद्वानेवेत्यादिवदस्यापि वैधर्म्योदाहरणपरता । न त्वाक्षिप्तव्यतिरेकसजातीयार्थानिबन्धन एव वैधर्म्योदाहरणत्वमिति राजाज्ञास्ति । तस्माद्युक्तमित्यन्तं सर्वमयु-

---

१ प्रस्तुतो यो धर्मिविशेषः [ यथा 'तत्त्वं किमपि' इत्युदाहरणे विरलः ] तदुपारूढस्य अर्थस्य ( विरल एव काव्यानां तत्त्वज्ञ इत्यस्य ) दार्ढ्याय स्वेन ( 'मार्मिकः कः' इत्यादिप्रकृतवाक्यार्थेन ) आक्षिप्तो यः स्वव्यतिरेकसमानजातीयः ( प्रकृतार्थप्रतिद्वन्द्वी ) धर्म्यन्तरारूढः अप्रकृतार्थः ( मधुव्रतं विना अन्यो मार्मिको नास्ति इति ) तस्य कथनम् । अर्थात् धर्मिविशेषविषयकम् अन्वयसंबद्धं प्रकृतार्थं दृढीकर्तुम् ( स्पष्टतया बुद्धौ उपारोहयितुम् ) अन्वयसंबद्धप्रकृतार्थेन आक्षिप्तस्य स्वव्यतिरेक( अभाव )संबन्धिनोऽर्थस्य यत्कथनं तदेव वैधर्म्येणोदाहरणमित्याशयः ।

न्तरारूढस्याप्रकृतार्थस्य कथनम्। प्रकृते च यदि सन्ति तदा स्वयमेव प्रकाशन्त इत्यर्थस्य प्रस्तुतस्य व्यतिरेकस्तु असन्त उपायान्तरेणापि न प्रकाशन्त इति। नह्यत्र द्वितीयार्धेन तत्सजातीयोऽर्थो निबध्यते। निबध्यते च स्वयं प्रकाशन्ते, न परेणेत्यस्य प्रस्तुतस्यैव सजातीयः।[1] शपथेन न विभाव्यते, किं तु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्यवसानात्। नहि वैधर्म्ये प्रकृतानुरूप्यं जातुचिद्घटते, व्याघातात्। तस्मात्साधर्म्येणैवेदमुदाहरणं संगतम्, न[2] वैधर्म्येण। न चोपायान्तरनिवृत्त्यघटितप्रस्तुतवाक्यार्थेन कथं नाम तद्घटित उत्तरवाक्यार्थः साधर्म्यमर्हतीति वाच्यम्। स्वयमित्यत्राकृष्टेन एवकारेणैवोपायान्तरनिवृत्तेः प्रस्तुतवाक्यार्थे निवेशितत्वात्। अत्यन्तायोग[3]व्यवच्छेदस्योत्तरवाक्यार्थाननुगृहीतत्वेन क्रियासमभिव्याहारायोगात्।

क्तमिति बोध्यम्। अयुक्तत्वमेवोपपादयति—**वैधर्म्योदाहरणं हीति**। जातुचित् कदाचित्। नन्वेवकारस्यात्यन्तायोगव्यवच्छेदार्थकत्वेन कथमाकर्षणमत आह—**अत्य-**

१ न हि शपथेनेत्युत्तरार्द्धस्य कस्तूरिकामोदः शपथेन न विभाव्यते (प्रतीयते), अपि तु 'स्वयमेव प्रतीयते' इति पर्यवसितोऽर्थः। 'स्वयमेव प्रतीयते' इत्यन्वयघटितोयमर्थः अन्वयघटितस्य (गुणाः स्वयं विकसन्त्येव) प्रस्तुतार्थस्यैव सजातीयः, न तु व्यतिरेकसजातीयः। व्यतिरेकसमानजातीयस्तु तदा भवेत् यदा असन्तः उपायान्तरेणापि न प्रतीयन्ते (प्रकाशन्ते), इत्युच्येत। ततश्च नेदं वैधर्म्योदाहरणमिति सर्वस्याशयः।

२ अयं भावः—'यदि सन्ति इत्यादिपूर्व(प्रस्तुत)वाक्यार्थे उपायान्तरनिवृत्तेः (अन्योपायनिषेधस्य) घटना नास्ति। यतो हि 'गुणाः स्वयमेव प्रकाशन्ते' इत्यनेन तेषां प्रकाशने यदन्यत्साधनं तस्य निषेधो न कृतः। उत्तरवाक्ये तु 'शपथेन न विभाव्यते' इति आमोदस्य प्रकाशने शपथरूपस्य उपायान्तरस्य निषेधोपि कृत इति पूर्वोत्तरवाक्यार्थयोर्वैषम्यात् दीक्षितोदाहरणमिदं साधर्म्येणैवेति कथमुच्यते इति शङ्का। 'स्वयं प्रकाशन्ते' अर्थात् 'अन्य उपायो नावश्यकः' इत्युपायान्तरनिवृत्तिः 'विकसन्त्येव' इति पूर्वं आकृष्टात् एवकाराल्लभ्यत इति समाधानम्।

३ 'विकसन्त्येव' अर्थात् विकासेन सह कदाचिदपि गुणानाम् अयोगो न भवतीति अत्यन्तायोगव्यवच्छेदार्थकः क्रियासमभिव्याहृतः सोयमेवकारः परत्राकृष्टः स्वयमित्यनेन कथमन्वितः स्यादिति शङ्का। एवकारस्य अत्यन्तायोगव्यवच्छेदेऽर्थेऽङ्गीकृते उत्तरवाक्यार्थस्य संगतिर्न, अपि तु 'स्वयमेव' इत्यर्थेऽङ्गीकृते एव, 'आमोदः शपथेन न अनुभाव्यते अपि तु स्वयमेव' इत्यर्थस्यैवानुकूलत्वात्। तस्मादत्र एवकारस्य क्रियया समभिव्याहारो न घटत इति समाधानम्।

'सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् ।
आमोदो नहि कस्तूर्याः शपथेनानुभाव्यते ॥

अत्र स्वतोऽनुभूयत इत्यत्र पर्यवसितेनोत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य यथा साधर्म्यमेव, न वैधर्म्यम्, तथा 'यदि सन्ति—' इति पद्येऽपीति नञ्मात्राश्रयणादेव वैधर्म्यं जगदे, न तु निपुणतरं निरीक्षितमायुष्मता । यदि तु 'यदि सन्ति—' इति पद्यस्य 'नहि कस्तूरिका—' इत्याद्युत्तरार्धं दूरीकृत्य 'वाचा वाचस्पतेर्व्योम्नि विलसन्ति न वल्लयः' इति क्रियते, तदा वैधर्म्यं प्रकृतविपरीतार्थघटनाद्युक्तम् ।

अथ—

'खलास्तु कुशलाः स्वीयहितप्रत्यूहकर्मणि ।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥'

इत्यत्रासंष्ठुलवाक्यार्थेऽतिप्रसङ्गः, कुशलनिपुणपदाभ्यामेकस्यैव धर्मस्योपादानात् । न चात्रौपम्यं न गम्यमिति वक्तुं शक्यम् । निपुणकुशलपदाभ्यां प्रतिपादितेन शब्दसामान्यात्मना धर्मेण खलफणिनोरौपम्यस्य प्रत्ययात् ।

न्तेति । साधर्म्येणैवेदमुदाहरणमित्युक्तदृष्टान्तपूर्वं द्रढयति—**सन्त इति** । विद्यमाना इत्यर्थः । कथं तर्हि तैस्तथोक्तमत आह—**नञिति** । जगदे कथितवान् । आयुष्मता अप्पयदीक्षितेन । **वाचेति** । बृहस्पतेरुक्त्यापीत्यर्थः । स्वसिद्धान्ते आक्षिपति—**अथेति** । **स्वीयहितेति** । स्वीयानां यानि हितानि तत्प्रतिबन्धकर्मणीत्यर्थः । नापी-

१ अयं सर्वस्याशयः—'सन्तः स्वतः०' इति पाठे योऽर्थः स एव 'यदि सन्ति०' अत्र । 'सन्तः०' इत्यादिपाठे च गुणाः स्वतः प्रकाशन्ते परतः (अन्योपायेन) न, कस्तूर्याः आमोदः शपथेन न अनुभाव्यते अपि तु स्वयमेव अनुभाव्यते' इति वाक्यार्थे—पूर्वार्धे अन्वयघटितो यः प्रकृतोऽर्थो वर्णितस्तत्सजातीयस्यैवोत्तरार्द्धे ग्रहणं न आक्षिप्तव्यतिरेकसजातीयस्य । केवलं नञ्शब्दश्रवणादेव वैधर्म्यं (भ्रमात्) प्रोक्तं न तु निपुणं विचारितं दीक्षितेनेति ।

२ पूर्वार्धे परिगृहीतात् 'गुणाः स्वयं विकसन्ति' इति विधिरूपात्प्रकृतार्थात् 'वाचस्पतेर्वाचा व्योम्नि लताः न प्रसरन्ति' इति निषेधरूपोऽर्थः स्पष्टं विपरीत इत्याशयः । वाक्ययोर्द्वयोरर्थसामञ्जस्यं तु प्रकृतवाक्यार्थात् आक्षिप्तेन व्यतिरेकेण (स्वयं विकसन्ति, परतो न विकसन्ति इति) पूर्वमुक्तमेवेति बोध्यम् ।

३ असंष्ठुलः मिथोवैषम्यादरुचिरः, 'अटपटाँग' इति भाषा ।

४ 'स्वजनोपकारप्रतिबन्धने कुशला यथा खलाः, निरपराधप्राणहरणे निपुणास्तथा सर्पाः' इति ।

५ कर्मवाच्यक्रियाया धन्येयं व्याख्या ।

नापि धर्मिणोरौपम्येऽपि विशिष्टवाक्यार्थयोस्तन्न तथेति[1] वाच्यम्, अवयवद्वारा तयोरपि तस्य तथात्वात्। स्वभावसिद्धत्वेनानुपात्तधर्मेणौपम्यस्य[2] गम्यत्वाच्चेति चेत्, मैवम्। साधारणधर्मस्य[3] वस्तुप्रतिवस्तुभावोक्त्या तदितरपदार्थानां बिम्बप्रतिबिम्बभावो घटनाया आनुरूप्यं च विवक्षितम्। प्रकृते च खलफणिनोः प्राणिहितयोश्च सत्यपि बिम्बप्रतिबिम्बभावे हरणप्रत्यूहकरणयोर्नाश-प्रागभावपर्यवसितयोराननुरूप्यान्न[4] बिम्बप्रतिबिम्बभाव इति न दोषः। यद्वा अस्त्वत्र प्रतिवस्तूपमा। परं त्वसंष्ठुलतारूपस्य वाक्यार्थसामान्यदोषस्य सत्त्वादचमत्कारिणी, दुष्टोपमादिवत्[5]। वाक्यार्थो हि गाढतरव्युत्पत्तिनिपुणीकृतान्तःकरणैर्नानाविधपदार्थरचनापरिवृत्तिस[6]मर्थैरेव कविभी रचितः कामपि कमनीयतामाधत्ते, नेतरः।

---

त्यस्य वाच्यमित्यत्रान्वयः। **तन्न तथेति**। औपम्यं गम्यमित्यर्थः। तयोरपि विशिष्टवाक्यार्थयोरपि। **तस्येति**। औपम्यस्य गम्यत्वादित्यर्थः। **स्वभावसिद्धत्वेनानुपात्तेति**। एतद्रूपानुपात्तधर्मेणेत्यर्थः। तादृशौपम्यस्यैकधर्मस्य संबन्धिभेदेन द्विरुपादानरूपवस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकत्वाभावान्न प्रतिवस्तूपमोपयोगितेति चिन्त्यमिदम्। विवक्षितम् अत्रेति शेषः। ननु तयोरभावत्वेनानुरूप्यादस्त्येव बिम्बप्रतिबिम्बभावोऽत आह—**यद्वेति**। घटना अननुरूपेति भावः। **असंष्ठुलतारूपस्येति**। पूर्ववाक्यार्थघटकहितप्रत्यूहकर्मणीति नामार्थविभक्त्यर्थादीनामुत्तरवाक्यार्थघटके प्राणा-

---

१ ननु धर्मिणोः खलफणिनोरेवाऽत्र औपम्यं गम्यम्, धर्मिविशिष्टयोर्वाक्यार्थयोः तत् (औपम्यम्) तथा (गम्यम्) न, इति शङ्का। अवयवयोर्यदा औपम्यं सिद्धं तथा अवयवद्वारा अवयविनोरपि तत् सिद्धमेवेति समाधानम्।

२ उपात्तेन शब्दरूपसामान्यधर्मेणैव नात्रौपम्यम्, अपि तु अनुपात्तेनापि धर्मेणेत्याह—स्वभावसिद्धत्वेनेति०। सर्पाणां निरपराधप्राणहरणं यथा स्वभावसिद्धं तथा खलानां स्वजनहितप्रतिबन्धनम्, इति।

३ अस्त्यत्र कुशलनिपुणरूपस्य साधारणधर्मस्य वस्तुप्रतिवस्तुभावः। किन्तु तदितरेषां खलफणि, प्राणि-हितादीनां सर्वेषां बिम्बप्रतिबिम्बभावो नास्ति। न घटते हरण-प्रत्यूहकरणयोर्बिम्बप्रतिबिम्बतेत्याह।

४ प्राणापहरणस्य प्राणनाशः (ध्वंसः) प्रत्यूहकरणस्य च प्रागभावः [अर्थात् हितस्योत्पत्तेरेव प्रतिबन्धनम्] पर्यवसानेऽर्थः स्यादिति मिथः सादृश्याभावान्न बिम्बप्रतिबिम्बभाव इत्याशयः।

५ उपमानोपमेययोर्जात्या प्रमाणेन लिङ्गसंख्याभ्यां चाननुरूप्यादिदोषकृतापकर्षाद्यथा उपमा अचमत्कारिणी भवति, तथा वाक्यार्थविसंष्ठुलतादोषादियमित्याशयः।

६ रचनायां तत्परिवृत्तौ च।

तथा हि—

'उपासनामेत्य पितुः स्म रज्यते दिने दिने सावसरेषु बन्दिनाम् ।
पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥'

अस्मिन्नैषधीयपद्ये ( १ । ३४ ) द्वयोः क्रिययोरुद्देश्यविधेयभावेन गुण-प्रधानभावमकुर्वता, बन्दिनः षष्ठ्यन्ततया सप्तम्यन्ततया च द्विः परा-मृशता कविना वाक्यार्थः क्रमेलकवदसंष्ठुलतां प्रापितः । यदि च स एव वाक्यार्थः प्रकारान्तरेण निर्मीयते—

'उपासनार्थं पितुरागतापि सा निविष्टचित्ता वचनेषु बन्दिनाम् ।
प्रशंसतां द्वारि महीपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥'

इति, तदा ललनाङ्गसंनिवेश इव कीदृशीं कमनीयतामावहेदिति सहृद-यैराकलनीयम् ।

एवम्—

'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥'

इति कुवलयानन्दोदाहृते आलुवन्दारुस्तोत्रपद्ये वीक्षणमात्रस्यावर्जनीयस्य प्रतिषेधानर्हत्वादिच्छापूर्वकवीक्षणप्रतिषेधस्य च 'सविशेषणे हि—' इति न्यायेनेच्छाप्रतिषेधधर्मपर्यवसायितया यद्यपि धर्मैक्यं सुसंपादम् ।

नपहर्तुमित्यत्राभावादसंष्ठुलतेति भावः । क्रमेलकवत् उष्ट्रवत् । **तवेति** । शिवं प्रति भक्तोक्तिः । इक्षुरकं 'तालमखाना' इति प्रसिद्धौषधीपुष्पम् काशपुष्पमिति कश्चित् । गोक्षुरमित्यन्यः । **आलुवन्दारुस्तोत्रेति** । **अवर्जनीयेति** । अनिष्टेऽपि स्वसामग्री-वशाज्जायमानस्येत्यर्थः । धातोरिच्छापूर्वकवीक्षणे लक्षणया आह—**इच्छापूर्वकेति** । **सुसंपादमिति** । तथा च प्रतिवस्तूपमोदाहरणत्वोक्तिस्तेषां संगतेति भावः ।

१ निविष्टचित्ता० इत्यादिपाठे—पितुरुपासनार्थमागतानां द्वारि राजसामान्यं प्रशंसत-बन्दिनां वचनेषु निविष्टचित्ताम् ( दमयन्तीम् ) उद्दिश्य विनिद्ररोमत्वं वर्णितमिति द्वयोः क्रिया-योरुद्देश्यविधेयतया गुणप्रधानभावः संपन्न इति वाक्यार्थस्य न विसंष्ठुलता । नैषधीयपाठे तु 'सा बन्दिनामवसरेषु रज्यते' 'नलं शृण्वती विनिद्ररोमाऽजनि' इति द्वयोर्वाक्ययोः स्वतन्त्र-त्वान्न गौणमुख्यभाव इत्याशयः ।

२ सविशेषणे ( विशेष्ये ) जातो धर्मसंबन्धो विशेषणेऽपि प्रतिफलतीत्यनुगमात् इच्छापूर्वक-( विशिष्ट )वीक्षणे संबद्धः प्रतिषेधः ( अभावः ) विशेषणभूतायामिच्छायामपि पर्यवसितः । तथा च 'न इच्छति' इति पूर्ववाक्यार्थेन सह 'न वीक्षते' इत्युत्तरवाक्यार्थस्यैक्यं संपन्नमित्ये-कदेशिनः समाधानम् ।

अस्तु वा दृष्टान्तालंकारः । तथापि पादपङ्कजे निवेशितात्मेत्याधारसप्तम्याः स्थितेऽरविन्दे इति सतिसप्तमी वस्तुप्रतिवस्तुबिम्बप्रतिबिम्बभावयोरन्यतरेणापि प्रकारेण नानुरूपा, इत्यसंष्ठुलता स्थितैव । 'स्थितोऽरविन्दे मकरन्दनिर्भरे' इति चेत्क्रियते तदा तु रमणीयम् ।

तस्मादेवंजातीयकेष्वलंकारेषु पूर्ववाक्यार्थघटकनामार्थानुरूपैर्नामार्थैस्तद्घटकविभक्त्यनुरूपाभिर्विभक्तिभिस्तदन्वयानुरूपेण चान्वयेन भाव्यमिति सहृदयहृदयं प्रष्टव्यम् ।

'वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥'

अत्र वहनाधानभजनभरणानां वस्तुत ऐकरूप्यात्प्रतिवस्तूपमेयं मालारूपा ।

इति रसगङ्गाधरे प्रतिवस्तूपमाप्रकरणम् ।

अथ दृष्टान्तालंकारः—

**प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्तः ॥**

---

उक्तप्रकारेण धर्मैक्यानादरे त्वाह—**अस्तु वेति** । **इति सतिसप्तमीति** । इति सत्सप्तमीत्यर्थः । **रमणीयमिति** । तत्राप्याधारसप्तमीसंपत्तेरिति भावः । घटनाया आनुरूप्यं सर्वथा अपेक्षितमित्युपसंहरति—**तस्मादिति** । मालारूपप्रतिवस्तूपमामुदाहरति—**वहतीति** । पटीरजन्मेति । मालारूपेति । पटीरजन्मेव दीप इत्यादिप्रतीतेरित्यर्थः । इति रसगङ्गाधरमर्मप्रकाशे प्रतिवस्तूपमाप्रकरणम् ॥

दृष्टान्तं निरूपयति—**अथेति** । बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिकं वाक्या-

---

१ धर्मैक्यासंपादने वस्तुप्रतिवस्तुभावाभावात् यदि प्रतिवस्तूपमा न स्यात्तथापि दृष्टान्तः स्यादिति पक्षान्तरमाह—अस्तु वा० इति ।

२ पूर्ववाक्यार्थस्य अवयवभूता ये नामार्थ-विभक्ति-अन्वयाः, उत्तरवाक्यार्थेपि तदनुरूपा एव नामार्थविभक्त्यन्वयाः कर्तव्या इति भावः ।

३ वहनादीनां धर्माणां यथा वस्तुप्रतिवस्तुत्वं तथा विषधर-चन्दन, दीप-मषीपटल, विधु-कलङ्क, क्षितीन्द्र-पिशुनजनानां बिम्बप्रतिबिम्बत्वमिति विवेकः ।

तदुक्तम्—'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति ।

उदाहरणम्—

'सत्पूरुषः खलु हिताचरणैरमन्द-
मानन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
रिन्दुर्विकासयति कैरविणीकुलानि ॥'

अत्रानन्दनविकासयोरपि बिम्बप्रतिबिम्बभावः ।

अस्य चालंकारस्य प्रतिवस्तूपमया भेदकमेतदेव यत्तस्यां धर्मो न प्रतिबिम्बितः[1], किं तु शुद्धसामान्यात्मनैव स्थितः । इह तु प्रतिबिम्बितः । विमर्शिनीकारस्तु—'प्रतिवस्तूपमायामप्रकृतार्थोपादानं तेन सह प्रकृतार्थस्य सादृश्यप्रतिपत्त्यर्थम् । दृष्टान्ते तु तदुपादानमेतादृशोऽर्थोऽन्यत्रापि स्थित इति प्रकृतार्थप्रतीतेर्विशदीकरणमात्रार्थम्, न तु सादृश्यप्रतिपत्त्यर्थम् । अतः सादृश्यप्रतीत्यप्रतीतिभ्यामनयोरलंकारयोर्भेदः' इत्याह । तन्न । प्रकृताप्रकृतवाक्यार्थयोरुपादानस्यालंकारद्वयेऽप्यविशिष्टत्वादेकत्र सादृश्यप्रत्ययः, अन्यत्र नेत्यस्याऽऽज्ञामात्रत्वात् । वैपरीत्यस्यापि सुवचत्वाच्च । एतादृशोऽर्थोऽन्यत्रापि स्थित इति प्रकृतार्थप्रतीतिविशदीकरणस्य त्वदभिहितस्य सादृश्यापरपर्यायत्वाच्च । अत

र्थयोरार्थमौपम्यं दृष्टान्त इति निष्कर्षो बोध्यः । करैः किरणैः । कुलानि समूहान् । अपिना इन्दुपुरुषादिसंग्रहः । प्रतिबिम्बित इत्यस्य इतीति शेषः । **तदुपेति** । अप्रकृतार्थोपादानमित्यर्थः । **स्थित इति** । इत्यस्य विशदीकरणेऽन्वयः । स्पष्टार्थं मात्रपदव्यवच्छेद्यमाह—**न त्विति** । अभ्युपेत्याप्याह—**वैपरीत्येति** । इष्टापत्तावाह—**एतादृश इति** । अत एव उक्तरीत्या दृष्टान्ते सादृश्यप्रतीतेरेव । क्वचित्तदभावेऽपि न क्षतिरि-

१ यथा 'आपद्गतः' इत्युदाहरणे उपमेयोपमानोभयकोट्योरपि विस्तारण-प्रकटनयोः शुद्धसाधारणधर्मत्वमेव, न बिम्बप्रतिबिम्बत्वम् ।

२ प्रतिवस्तूपमायां प्रकृतार्थविशदीकरणार्थं, दृष्टान्ते तु सादृश्यप्रतीत्यर्थमित्यपि कामं वक्तुं शक्यमित्यर्थः ।

एव प्रायशः सत्कविनिर्मितेषु लक्ष्येषु प्रकृतवाक्यार्थघटकप्रकृतिप्रत्यया-र्था[1]नुरूपप्रकृतिप्रत्ययार्थघटित एवाप्रकृतवाक्यार्थो दृश्यते । न च भवदु-क्तमपि वैलक्षण्यं नानयोः पृथगलंकारतायां प्रयोजकम् । औपम्याख्यसा-मान्य[2]लक्षणाक्रान्ततया उपमाभेदवदेकालंकारभेदत्वापत्तेरिति वाच्यम् । तवापि दीपकतुल्ययोगितयोरेकभेदत्वापत्तेः । इष्टापत्तिरिति चेत्सैवात्रापि दृश्यताम् । प्राचीनविभागस्य भवतैव शिथिलीकृतत्वात् । औपम्यरूप-सामान्यलक्षणसत्त्वाद्बहूनामलंकाराणामुपमाऽवान्तरभेदत्वापत्त्या सक-लालंकारिकसिद्धान्तभङ्गप्रसङ्गाच्च । "-'अब्धिर्लङ्घित एव वानरभटैः-' इत्यादिमुरारिपद्ये यद्यपि ज्ञानार्थ एको धर्मो निर्दिष्टस्तथापि नैतन्निबन्धनमौ-पम्यं विवक्षितम् । यन्निबन्धनं च विवक्षितं तत्राब्धिलङ्घनादावस्येव दिव्य-वागुपासनादिना प्रतिबिम्बनम्" इति त्वन्मूल[3]ग्रन्थविरोधाच्च । न च यन्निब-

त्याह—**प्रायश इति** । सदित्यनेनासत्कविव्यावृत्तिः । तथा च तत्र तदभावेऽपि न क्षतिरिति भावः । **लक्ष्येष्विति** । दृष्टान्तेत्यादिः । **भवदुक्तमपीति** । धर्मस्य प्रतिबि-म्बनत्वाप्रतिबिम्बितत्वकृतमिति भावः । **एकालंकारेति** । उपमालंकारेत्यर्थः । **एक-भेदत्वेति** । एकालंकारत्वेत्यर्थः । अलंकारभेदो न स्यादिति यावत् । सैव इष्टापत्ति-रेव । नन्वेवं प्राचीनविभागोच्छेदापत्तिरत आह—**प्राचीनेति** । दीपकतुल्ययोगिता-स्थल इति भावः । एवं प्रतिबन्दीमुक्त्वा दोषमाह—**औपम्येति** । बहूनां अनन्वयादी-नाम् । तत्रापीष्टापत्तावाह—**अब्धिरिति** । ज्ञानरूपोऽर्थ इत्यर्थः । यद्यप्येकत्र ज्ञानमे-कत्र संस्पर्श इति भेदस्तथापि बिम्बप्रतिबिम्बभावेनाभेद इति भावः । **यन्निबन्धन-मिति** । अब्धिलङ्घनादिप्रयुक्तमित्यर्थः । औपम्यमित्यस्यानुषङ्गः । **त्वन्मूलेति** । अलं-

१ तथा च दृष्टान्तेपि स्पष्टा सादृश्यप्रतीतिरिति भावः ।

२ दृष्टान्तेऽपि सादृश्यप्रतीतेः स्वीकारे साधारणधर्मकृतमिथोविशेषेऽपि उभयत्र (प्रतिवस्तू-पमा-दृष्टान्तयोः) औपम्यं गम्यमिति समानलक्षणत्वादेकालंकार(उपमा)प्रभेदत्वं द्वयोः स्यात् । यथा साधर्म्यरूपसमानलक्षणशालित्वादुपमाप्रभेदाः सर्वे एकालंकारभेदाः ख्यायन्ते, इति शङ्का । दीपकतुल्ययोगितयोरौपम्यस्य गम्यत्वं त्वयाप्यभिमतमिति त्वन्मतेप्यनयोरेकालं-कारत्वं स्यादिति औपम्यगम्यत्वरूपं समानलक्षणं नैकालंकारताप्रयोजकमिति समाधानम् ।

३ दृष्टान्ते न सादृश्यप्रतीतिरिति त्वया प्रतिज्ञायते । किन्तु दृष्टान्तोदाहरणे अब्धिर्लङ्घितः इत्यत्र "ज्ञानार्थ एको धर्मो निर्दिष्ट इति साधर्म्यमादाय न द्वयोरौपम्यम्, किन्तु 'वाग्देवीं वहव उपासते' 'वानरभटैर्बहुभिरब्धिर्लङ्घितः' इति द्वयोर्बिम्बप्रतिबिम्बरूपं साधारणधर्ममादाय द्वयोरौपम्यम्" इति वदता दृष्टान्तस्थले सादृश्यप्रतीतिस्त्वयापि स्पष्टं स्वीकृतेति तवैव स्वमूल-ग्रन्थस्य विरोधः (पूर्वापरविरोधः) इत्याशयः ।

न्धनं च विवक्षितमित्यत्रार्थालंकारत्वं विशेष्यं शेषपूरणेन योज्यम्, न पुनरौपम्यमिति वाच्यम्[1]। औपम्यं न विवक्षितमित्यत्रैकवारं निष्ठया परामृष्टस्यैव पुनस्तया परामर्शस्य व्युत्पत्तेः 'न चैत्रार्थमोदनः पक्वः, यदर्थं च पक्वः स मैत्रः' इत्यादौ द्वितीयपक्वादिशब्दानामध्याहृतशाकादिपरत्वे असंगतेः स्फुटत्वात्[2]। तस्मादस्मदुक्तेनैव पथा प्राचीनैर्विहितोऽलंकारयोरनयोर्विभागः[3] संगमनीयः। यदि तु न तेषां दाक्षिण्यं तदैकस्यैवालंकारस्य द्वौ भेदौ—प्रतिवस्तूपमा, दृष्टान्तश्च[4]। यच्चानयोः किंचिद्वैलक्षण्यं तत्प्रभेदताया एव साधकम्, नालंकारताया इति सुवचम्।

वैधर्म्येणायं यथा—

'जनयन्ति परप्रीतिं नराः सत्कुलसंभवाः।
नहि कारस्करः क्वापि तापनिर्वापणक्षमः॥'

यथा वा—

'तापत्रयं खलु नृणां हृदि तावदेव
यावन्न ते वलति देव कृपाकटाक्षः।

कारसर्वस्वेत्यर्थः। तया निष्ठया। तत्र हेतुमाह—**न चैत्रार्थमिति। असंगतेरिति।** कव्यभिप्रायाप्रतिपादनादिति भावः। उपसंहरति—**तस्मादिति**। पथा मार्गेण। तेषां प्राचीनानाम्। **एकस्यैवेति**। उपमारूपस्यैवेत्यर्थः। **प्रभेदेति**। उपमाप्रभेदताया एवेत्यर्थः। परप्रीतिं परेषां प्रीतिम्। कारस्करः [ 'कुचला' इति प्रसिद्धो वृक्षः। ]

१ अयं भावः—अत्र 'औपम्यं विवक्षितम्' इति न अनुषङ्गः। किन्तु 'अर्थालंकारत्वं विवक्षितम्' इत्यन्वयः। ततश्च दृष्टान्ते औपम्यस्वीकाररूपः पूर्वापरविरोधः कथं स्यादिति पूर्वपक्षिणः समाधानम्। पूर्वत्र न 'विवक्षितम्' इति निष्ठया' (क्तप्रत्ययेन) यत् 'औपम्यम्' परामृष्टम्, अग्रेपि तस्यैव परामर्शे उचितो न अर्थालंकारत्वस्येति सिद्धान्तिना तन्निरासः कृतः।

२ 'यदर्थं च पक्वः' इति द्वितीयभागेपि पक्वशब्देन पूर्वत्र परामृष्टः ओदन एव संबध्यते, न त्वध्याहृतः शाकादिरित्याशयः।

३ प्रतिवस्तूपमायामुपमानादीनां बिम्बप्रतिबिम्बभावापन्नत्वेऽपि साधारणधर्मस्य वस्तुप्रतिवस्तुभावापन्नत्वम्। दृष्टान्ते तु सर्वेषामेव बिम्बप्रतिबिम्बभावापन्नत्वमिति।

४ तेषाम् (प्राचीनानाम्) विभागकरणे यदि न चातुर्यं तदा द्वयोरेव उपमाप्रभेदत्वं वक्तव्यं स्यादिति भावः।

प्राचीललाटपरिचुम्बिनि भानुबिम्बे
पङ्केरुहोदरगतानि कुतस्तमांसि ॥'

प्रीतिजनन–तापनिर्वापणाभावयोः, तापत्रयावस्थान-तमोदूरीकरणयोश्च वैधर्म्येणात्र[1] बिम्बप्रतिबिम्बभावः ।

इति रसगङ्गाधरे दृष्टान्तप्रकरणम् ।

अथ निदर्शना—

**उपात्तयोरर्थयोरार्थाभेद[2] औपम्यपर्यवसायी निदर्शना ॥**

अतिशयोक्त्यादीनां ध्वन्यमानरूपकस्य च वारणाय उपात्तयोरिति[3] । वाच्यरूपकवारणाय आर्थ[4] इति । आर्थत्वं च प्राथमिकान्वयबोधाविषयत्वम्[5] । यदि च विशिष्टोपमायां विशेषणयोरभेदः प्रतीयते तदा

---

तापत्रयमाध्यात्मिकादिदुःखत्रयम् । वलति प्रविशति । **वैधर्म्येणेति** । उपपादितमिदमधस्तात् । इति रसगङ्गाधरमर्मप्रकाशे दृष्टान्तप्रकरणम् ॥

अथ निदर्शनां लक्षयति—**अथेति** । औपम्यपर्यवसायी औपम्यमूलः । नन्वतिशयोक्त्यादौ नार्थद्वयमत आह—**ध्वन्यमानेति** । नन्वार्थत्वमर्थसंबन्धित्वम् । तथा च वाच्यरूपके दोषस्तदवस्थः । अत आह—**आर्थत्वं चेति । प्रतीयत इति** । तथा च

---

१ कारस्केतरे अन्ये वृक्षास्तापनिर्वापणम् ( प्रीतिम्, सुखम् ) कुर्वन्तीति स्वाक्षिप्तेन सह बिम्बप्रतिबिम्बभावादौपम्यसंगतिरिति पूर्वम् ( प्रतिवस्तूपमायाम्, 'वैधर्म्येणाप्येषा संभवत्यादिना' ) उक्तम् । नृणां कमलानाम्, हृदयस्य कमलोदरस्य, तापत्रयस्य तमसाम्, कृपाकटाक्षस्य भानुबिम्बस्य तु बिम्बप्रतिबिम्बत्वं विदितमेव सहृदयानाम् ।

२ वाक्यार्थयोः पदार्थयोश्चेति द्वयोः संग्रहः ।

३ चन्द्र इन्दीवरद्वयम् इत्यतिशयोक्तौ, 'कस्तूरिकातिलकम्०' इत्यादिरूपकध्वनौ च मुख–चन्द्र–इन्दीवरनेत्रादीनामभेदोऽवश्यमर्थतोऽनुसंधीयते, तथाप्यत्र उपमानमात्रं शब्दोपात्तम्, उपमेयं तु लक्षणाद्वाराऽवरोधमिति नोपात्तत्वमित्यर्थः ।

४ मुखं चन्द्र इत्यादौ वाच्ये रूपके एकविभक्तिनिर्देश्य एवाभेद इति स शाब्दः ।

५ प्राथमिके अन्वयबोधे ( शाब्दबोधे ) तु अभेदो न प्रतीयते पश्चादर्थानुसंधाने तत्प्रतीतिरित्यर्थः । यथा 'त्वामन्तरा०' इत्युदाहरणे 'परिशोधयन्तः गवेषयन्ति' इति कर्त्रोरेव शाब्दोऽभेदः प्रथमतः प्रतीयते, पश्चादर्थानुसंधाने–'अन्तरात्मानं विहाय तीर्थेषु ते परिशोधनं कण्ठतटमदृष्ट्वा धूलिषु चिन्तामणेर्गवेषणरूपम्' इति क्रिययोरेवाभेदे वक्तुस्तात्पर्यं बुध्यते । निसर्गतो भिन्नयोश्चाभेदः पर्यवसाने उपमां व्यनक्तीति लक्षणसंगतिः ।

बिम्बप्रतिबिम्बभावानापन्नत्व[1]मपि प्रधानविशेषणम् । तद्विशे[2]षणानां तु बिम्बप्रतिबिम्बभावो न निवार्यते । इदं च श्रौत्या निदर्शनाया लक्षणम् । आर्थीसाधारणं लक्ष[3]णं तु ललितालंकारप्रकरणे वक्ष्यते ।

उदाहरणम्—

'त्वामन्तरात्मनि लसन्तमनन्तमज्ञा-
स्तीर्थेषु हन्त मदनान्तक शोधयन्तः ।
विस्मृत्य कण्ठतटमध्यपरिस्फुरन्तं
चिन्तामणिं क्षितिरजःसु गवेषयन्ति ॥'

अत्र तवान्यत्र परिशोधनं कण्ठस्थस्य चिन्तामणेर्भूपांसुषु गवेषणं चाभिन्नमिति तत्साहश्यमूला धीः ।

यथा वा—

'अन्यैः समानममरैर्जगदन्तरात्म-
न्ये चन्द्रशेखर वदन्ति भवन्तमज्ञाः ।
ते किं न हन्त तुलयन्ति नभो निरन्तं
वातायनोदरगतैर्विवरान्तरालैः ॥'

पूर्वत्रैक[4]वाक्यगतः, इह तु भिन्नवाक्यगतः । पूर्वत्र वस्तु[5]मात्रयोरौपम्यमू-

तत्रातिव्याप्तिरिति भावः । **प्रधानविशेषणमिति** । तद्विशेषणानां तु प्रधानविशेषणानां तु । **त्वामिति** । ईश्वरं प्रति भक्तोक्तिः । एवमग्रेऽपि । कण्ठ एव तटं तन्मध्ये लभ्यं तमित्यर्थः । तव शिवस्य । **विवरेति** । तद्रूपैरन्तरालैरित्यर्थः । **एकवाक्येति** । क्रिययोरैक्यात् । **भिन्नेति** । तद्भेदात् । भेदान्तरमाह—**पूर्वत्रेति** । **इह त्वौपम्य-**

१ ननु उपात्तयोरर्थयोः (प्रकृताप्रकृतयोः) आर्थोऽभेदः, 'कोमलातपशोणाभ्र०' इत्यादि-विशिष्टोपमायामप्यतिप्रसक्तः, यतो हि कोमलातप–कुङ्कुमालेपयोः, शोणाभ्र–काषायवसनयोश्च अर्थतोऽभेदः । अत एव हि साम्येन द्वयोरुपमा सिध्यति । अत आह बिम्बप्रतिबिम्बभावानापन्नत्वमिति । अत्र अभेदपर्यवसानेऽपि प्रधानयोः प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बभावापन्नत्वमेवेति नातिप्रसङ्ग इत्याशयः ।

२ प्रधानयोः (विशेष्ययोः) बिम्बप्रतिबिम्बभावोऽत्र वर्जितः । प्रधानविशेषणानां न सः (बिम्ब०) वर्जितः । तथा च 'त्वामन्तरा०' इत्यादौ अन्तरात्म–कण्ठतटयोः, तीर्थ–रजसोः, शिव–चिन्तामण्योः, इति विशेषणानां मिथो बिम्बप्रतिबिम्बभावापन्नत्वेपि प्रधानयोः शोधन-गवेषणयोः क्रिययोर्बिम्बप्रतिबिम्बभावाभावान्न दोष इत्याशयः ।

३ व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाऽभेदो निदर्शनेति । अग्रेऽनुसंधेयम् ।

४ शोधयन्तो गवेषयन्तीति द्वयोरर्थयोरेकवाक्यत्वात् ।

५ शोधन–गवेषणयोः ।

लोऽभेदः, इह त्वौपम्य[1]योरौपम्यमूलः स इति विशेषः। एषा वाक्यार्थनिदर्शनेत्युच्यते। विशिष्टार्थयोः प्रकृतैकधर्मि[2]गतयोरार्थाभेदे वाक्यार्थनिदर्शनाया इष्टेः। अस्यां च घटक[3]पदार्थानां बिम्बप्रतिबिम्बभाव आवश्यकः।

पदार्थनिदर्शना यथा—

'अगण्यैरिन्द्राद्यैरिह परमपुण्यैः परिचितो
जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः।
प्रसर्पत्पीयूषाम्बुधिलहरिलीलाविलसितो
दृगन्तस्ते मन्दं मम कलुषवृन्दं दलयतु॥'

अत्र दृगन्ताम्बुधिलहरिलीलयोराश्र[4]यभेदाद्भिन्नयोरपि सादृश्यमूलस्ताद्रूप्याभिमानः। आरोपो वा दृगन्ते लहरिलीलायाः।

यथा वा—

'पाणौ कृतः पाणिरिलासुतायाः सस्वेदकम्पो रघुनन्दनेन।
हिमाम्बुमन्दानिलविह्वलस्य प्रभातपद्मस्य बभार शोभाम्॥'

अत्र हिमाम्बुजनितविह्वलता हिमकणाकीर्णतारूपा वातजनितविह्वलता

---

**योरिति**। तज्ज्ञानयोरित्यर्थः। सः अभेदः। परिचितोऽनुभूतः। **जगदिति**। जगदुत्पत्तिस्थितिसंहारकारक इत्यर्थः। **अत्र दृगन्ताम्बुधीति**। दृगन्तसमुद्रलहर्योर्ये लीले तयोरित्यर्थः। दृगन्तलीलाप्रतिपादकशब्दाभावेन तथा दुर्वचमत आह—**आरोपो वेति**। **पाणौ कृत इति**। सीताविवाहवर्णनम्। श्रीरामचन्द्रेण स्वहस्ते कृतः स्वेदकम्पाभ्यां युक्तो भूसुतायाः सीतायाः पाणिर्हिमाम्बुमन्दवायुभ्यां विह्वलस्य कमलस्य शोभां

---

१ 'अन्यैः समानम्०' अत्र औपम्ययोः (अन्यैः अमरैः समानतायाः, विवरान्तरालैः सह नभसः तुलनायाश्च, इति द्वयोरौपम्यज्ञानयोः) अभेदः।

२ प्रकृताप्रकृतयोर्द्वयोरभेदेऽपि प्रकृते धर्मिणि यथा त्वामन्तरा अत्र शिवे तात्पर्यविषयता।

३ अवयवपदार्थानाम्, यथा त्वामन्तरा० अत्र अन्तरात्म-कण्ठतटादीनाम्।

४ दृगन्तलीला दृगन्ताश्रिता, अम्बुधिलहरिलीला अम्बुधिलहर्याश्रिता अत एव भिन्नयोरपि उज्जृम्भणकृतं सादृश्यमादाय द्वयोरभेदः। स चाऽऽर्थः। शब्दतस्तु दृगन्ताम्बुधिलहर्योः (उपमेयोपमानयोः) एवाभेदः। परम् अर्थतस्तात्पर्यं लीलयोरभेद एवेति।

च विधुतिरूपा । एताभ्यां च सस्वेदता-सोत्कम्पितत्वयोः प्रतिबिम्बनमिति पूर्वस्मादुदाहरणाद्भेदः । प्रभातपदसांनिध्याच्च पद्मस्येषद्विकासमुद्रणयोः प्रत्ययात्पाणावपि तत्सिद्धिः । अस्यां चोपमानोपमेयगतधर्मयोरार्थाभेद-प्रतिपत्तिः । अतः पदार्थनिदर्शनोच्यते । बिम्बप्रतिबिम्बभावस्तूपमानोप-मेययोः सविशेषणत्वे भवति, अन्यथा तु न इति विवेकः ।

ननु वाक्यार्थनिदर्शनायां विशिष्टवाचकशब्दाभ्यां विशेषणयोरप्युपादा-नात् अस्तु नाम उपात्तयोरार्थोऽभेदः । पदार्थनिदर्शनायां तूपमानशोभादेर-न्यतरस्यैवोपात्तत्वम्, न द्वयोरिति चेत् । शोभाशब्देन शोभात्वेन द्वयोरप्यु-पात्तत्वात् । नह्युपमानोपमेयतावच्छेदकरूपेणोपात्तत्वं विवक्षितं येना-व्याप्तिः स्यात् । यद्वा प्रागुक्तलक्षणं वाक्यार्थनिदर्शनाया एव, न पदार्थ-निदर्शनायाः । अस्यास्तु उपमानोपमेययोरन्यतरधर्मस्यान्यतरत्रारोपो

---

दधाविल्यर्थः । विधुतिरूपा कम्परूपा । चस्त्वर्थे । तत्सिद्धिः ईषद्विकासमुद्रणयोः सिद्धिः । अस्यां च पदार्थनिदर्शनात्वेनोदाहृतायां च । **शोभादेरिति** । आदिना लीलापरिग्रहः । **उपमेयतावच्छेदकेति** । तद्विशेषणतयेत्यर्थः । तथा च विवक्षायामाह—**यद्वेति** । अस्यास्तु पदार्थनिदर्शनायास्तु । **उपमानोपमेयेति** । 'आस्ये पूर्णशशाङ्कता'

---

१ यथा प्रभातपद्मं नीहारकणाकीर्णं प्राभातिकवायुना चान्दोलितं तथा सस्वेदः सोत्कम्पश्च सीतापाणिरिति पूर्वोक्तविह्वलताभ्यां सह सस्वेदत्वस्य सोत्कम्पत्वस्य च बिम्बप्रतिबिम्बत्वम् ।

२ पूर्वत्र ( दृगन्तस्ते० ) केवलमभेदः, अत्र तु बिम्बप्रतिबिम्बभावसहकृतः स इति ।

३ यथा 'अन्यैः समानममरैः' इति पद्ये षट्कपदार्थानाम् अमर-विवरान्तरालानाम्, चन्द्रशेखर-नभसोश्च बिम्बप्रतिबिम्बत्वम् । यथा वा 'पाणौ कृतः' अत्र विह्वलत्वयोः सस्वेदत्व-सोत्कम्पत्वाभ्याम् ।

४ अयं भावः—वाक्यार्थनिदर्शनायां कर्तृवाचकपदयोः अभेदः शब्दोपात्तो भवति । यथा—'शोधयन्तः गवेषयन्ति' अत्र शोधनक्रियाविशिष्टस्य गवेषणक्रियाविशिष्टस्य च कर्तु-रुपादानं शब्दतः । विशिष्टस्योपादाने विशेषणस्योपादानमपि भवति । अतः शोधनक्रियायां गवेषणक्रियाया अभेदः उपात्तयोरभेद इति प्रतिपत्तुं शक्येत । पदार्थनिदर्शनायां तु शोभा—लीला-दिपदार्थयोर्मध्ये एकतरस्यैवोपादानं भवति । ततश्च विषयवाचकपदोपादानसापेक्षः अभेदः कथं तत्र व्यपदिश्यतामिति शङ्का ।

५ अन्यतरोपादानेपि शोभात्वेन लीलात्वेन वा उपमेयनिष्ठशोभाया लीलाया अप्युपादानं सिध्यतीति तत्समाधानम् ।

६ उपात्तयोरर्थयोरार्थोऽभेद इत्यादिकम् ।

लक्षणमस्तु । नन्वेवमपि वाक्यार्थनिदर्शनायां रूपकध्वनिना, पदार्थनिदर्शनायां च निगीर्याध्यवसानरूपयातिशयोक्त्या गतार्थतेति चेत्, न। वाक्यार्थनिदर्शनायां रूपकस्य गुणीभूतत्वेने तद्ध्वनित्वायोगात्। अन्यथा गुणीभूतयोपमया रूपकस्यापि गतार्थतापत्तेः। किं च अस्याश्च शरीरं तादृशपदार्थयोः परस्पराभेदमात्रमुभयत्र विश्रान्तम्। रूपकस्य तूपमेयगत उपमानाभेदः, अतिशयोक्तेश्च। निगरणानिगरणाभ्यां च तयोर्विशेष इत्यन्यत्।

एवं च स्फुटमेवास्या रूपकातिशयोक्तिभ्यां वैलक्षण्यम्। अत एव त्वामन्तरात्मनि--' इति पद्ये गवेषयन्तीत्यत्र गवेषयन्त इत्यनूद्य शोधयन्त इत्यत्र

---

इति भवदुक्तरूपकोदाहरणे इदमतिव्याप्तमिति चिन्त्यम्। **रूपकस्य गुणीभूतत्वेनेति**। कर्त्रभेदरूपवाच्यसिद्ध्यङ्गत्वेनेत्यर्थः। **तद्ध्वनित्वेति**। रूपकध्वनित्वेत्यर्थः। द्वितीयशङ्कायां समाधत्ते—**किं चेति**। अस्याश्च पदार्थनिदर्शनायाश्च। **तादृशेति**। उपमानोपमेयेत्यर्थः। **अतिशयोक्तेश्चेति**। उपमेयगत उपमानाभेदः शरीरमित्यर्थः। नन्वेवं रूपकातिशयोक्त्योरैक्यापत्तिरत आह—**निगरणेति**। **तयोर्विशेष इति**। रूपकातिशयोक्त्योर्विशेष इत्यर्थः। उपसंहरति—**एवं चेति**। अस्यां निदर्शनात्वावच्छिन्नायाम्। अत एव उक्तरीत्या ताभ्यां

---

१ 'विश्वत्वं विदुषां गणे०' इत्यादिरूपकध्वन्युदाहरणेषु—विद्वत्–कवि–मङ्गलादिषु बुध–शुक्र–भौमादीनामभेदो यथा व्यज्यते, तथाऽत्रापि वाक्यार्थ-निदर्शनायाम्—'त्वामन्तरा०' इत्याद्युदाहरणेषु शोधनादौ गवेषणादेरभेदः प्रतीयमानोऽस्ति। ततश्च रूपकध्वनिनैव गतार्थत्वे किमित्ययमलंकारः पृथक् स्वीकार्यः। एवं पदार्थनिदर्शनायामपि—'पाणौ कृतः०' इत्याद्युदाहरणेषु प्रभातपद्मरूपस्योपमानस्य शोभया उपमेय( पाणि )शोभा निगीर्णा। उपमानगतशोभायामेव उपमेयशोभाया अपि अध्यवसानमिति सेयमतिशयोक्तिरेव। अनया पदार्थनिदर्शना गतार्था। इति शङ्का।

२ यथा रूपके उपमा गुणीभूता भवति [ मुखं चन्द्र इत्यत्र चन्द्रसादृश्यस्य प्रतीयमानत्वात् ]। एवमत्रापि रूपकं गुणीभूतम्। अयं भावः—'शोधयन्तः गवेषयन्ति' 'समानं वदन्तः तुलयन्ति' इत्यादिरूपेण शब्दोपात्त कर्त्रोरभेदं द्वारीकृत्य क्रिययोः ( शोधन–गवेषणयोः ) अभेदस्तात्पर्यविषयो भवति। अत एव शाब्दाऽभेदजीवातु रूपकं तत्र गुणीभूतं भवतीति वक्तुं शक्यते। गुणीभूतस्य च ध्वनित्वव्यपदेशो न संभवी। इति प्रथम( वाक्यार्थनिदर्शना रूपकध्वनिना गतार्थेति ) शङ्कासमाधानम्।

३ पदार्थनिदर्शनायाम्–शोभादित्वेन द्वयोरुपादानपूर्वकम् [ अर्थात् उपमानगतशोभाया उपादानेपि शोभात्वेन उपमेयशोभाया अप्युपादानम् ] परस्परस्याभेदः परस्परं विश्रान्तो भवति। रूपके अतिशयोक्तौ चापि उपमेये उपमानाभेदः ( मुखं चन्द्र इत्यत्र मुखे चन्द्राभेदप्रत्ययात्, चन्द्रे इन्दीवरद्वयम् अत्रापि मुखाद्युपमेयनिगरणात् उपमेये उपमानाभेदः ], इति निदर्शनयोः रूपकातिशयोक्त्योश्च परस्परं भेदान्नातिशयोक्त्या गतार्थत्वम्। इति द्वितीयशङ्कासमाधानम्।

शोधयन्तीति विधाने, अर्धयोः पौर्वापर्ये च न सौन्दर्यहानिः । रूपकादौ तूच्यमाने व्यङ्ग्यकक्षोद्देश्यविधेयभावस्यापि वाच्यकक्षोद्देश्यविधेयभावानुसारितया उपमाने उपमेयाभेदसिद्धावसामञ्जस्यापत्तेरिति सुधीभिराकलनीयम् ।

अलंकारसर्वस्वकारस्तु—

'त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥'

इति पद्यं वाक्यार्थनिदर्शनायामुदाजहार । आह च—'यत्र तु प्रकृतवाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन तत्र संबन्धानुपपत्तिमूला निदर्शनैव युक्ता' इति । तन्न । वाक्यार्थरूपकस्य दत्तजलाञ्जलित्वापत्तेः । न चेष्टापत्तिः । वाक्यार्थनिदर्शनैव निर्वास्यताम्, स्वीक्रियतां च वाक्यार्थरूपकमिति पर्यनुयोगस्यापि तुल्यत्वात् । युक्तं चैतत् । पदार्थरूपके[2]

वैलक्षण्यमत्त्वादेव । अर्धयोः पूर्वोत्तरार्धयोः । रूपकादौ तूच्यमाने इत्यस्य असामञ्जस्यापत्तेरित्यनेनान्वयः । आदिना अतिशयोक्तिपरिग्रहः । उच्यमाने इत्यस्य तथेत्यादिः । असामञ्जस्यापत्तौ हेतुर्व्यङ्ग्येत्यादि तृतीयान्तम् । **उपमेयाभेदसिद्धाविति** । निदर्श-

१ 'चिन्तामणिं रजस्सु गवेषयन्तस्त्वां तीर्थेषु शोधयन्ति' इत्यादिवाक्यार्थस्थापनेपि निदर्शनायां न दोषः । रूपकध्वनौ तु उद्देश्यविधेयभावव्यत्यासे कृते गवेषणे ( उपमाने ) शोधनस्याभेदो वक्तव्यः स्यात्, यो हि वाच्यरूपकात्स्पष्टं विरुद्धः । वाच्ये हि 'तीर्थेषु शोधयन्तो रजस्सु गवेषयन्ति' इत्युक्त्या शोधने ( उपमेये ) गवेषणस्याभेदः प्रतीयते । यतो हि रूपकस्थले उपमेये ( उद्देश्ये ) उपमानस्याभेदो भवति । उक्तं च पूर्वम् ( रूपकप्रकरणे ) 'अभेदस्य श्रौतत्वार्थत्वाभ्यामुद्देश्यविधेयभावालिङ्गनानालिङ्गनाभ्यां च रूपकनिदर्शनयोर्वैलक्षण्येन' इति । ततश्च रूपके उद्देश्यविधेयभावो नियतो भवति अत्र तु न स इति व्यत्यासे कृते स्पष्टमेवाऽसामञ्जस्यम् । इति रूपकनिदर्शनयोरयमपि परस्परं विशेष इत्याशयः ।

२ इत आरभ्य प्रघट्टकसमाप्तिपर्यन्तस्यायमाशयः—रूपके मुखं चन्द्र इत्यादौ शाब्दोऽभेदारोपो नियतत्वेन दृष्टः । निदर्शनायां न तथा, प्रत्युत 'इन्दुशोभाम्' इत्यादिपदार्थनिदर्शनायाम् उपमानशोभामात्रस्यैवोपादानात् विषयविषय्युभयोपादानसापेक्षः अभेदारोपो नात्र स्फुट इति वक्तुं शक्यम् । ततश्च 'निदर्शनायामभेदारोपोपजीवनं नावश्यकम्, रूपके त्वभेदारोपो जीवातुः' इति सिद्धे 'त्वत्पादनखरत्नानाम्' इत्यत्र वाक्यार्थे वाक्यार्थस्याऽभेदारोपदर्शनाद् रूपकमेव वक्तुमर्हम्, न वाक्यार्थनिदर्शना । ननु रूपके बिम्बनं न भवति, अत्र तु ( त्वत्पाद० ) बिम्बनं दृश्यते इति कथमिदं रूपकमुच्यत इत्याह—रूपके बिम्बनं नास्तीत्यादि० । रूपकप्रकरणे 'रूपके बिम्बप्रतिबिम्बभावो नास्तीति, केनाप्यालंकारिकंमन्येन प्रतारितोऽसि' इत्यादिना पूर्वं निराकृतम् । विमर्शिन्यनुसारम् 'कंदर्पद्विपकर्णकम्बु०' इत्यादिरूपके बिम्बप्रतिबिम्बभावोदाहरणमपि दत्तमिति पूर्वग्रन्थोऽनुसंधेयः ।

मुखं चन्द्र इत्यादौ क्लृप्तस्य श्रौतस्याभेदारोपस्य रूपकजीवातुत्वकल्पनाया औचित्यात्। 'इन्दुशोभां वहत्यास्यं' इत्यादिपदार्थनिदर्शनायामभेदारोपस्याभावात् तज्जीवातुत्वायोगाच्च। रूपके बिम्बनं नास्तीति तु शपथमात्रम्, युक्त्यभावात्। अस्मदुक्तोदाहरणे वाक्यार्थनिदर्शनायाः सावकाशत्वाच्च।

यत्तु तेनैव लक्षणं निर्मितम्—'संभवता असंभवता वा वस्तुसंबन्धेन गम्यमानमौपम्यं निदर्शना' इति। तदपि न। रूपकातिशयोक्त्यादिष्वतिव्यापनात्।

यत्त्वलंकारसर्वस्वकारानुसारिणा कुवलयानन्दकृतोक्तम्—

'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना।
यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता॥' इति।

तत्तु तन्मतदूषणेनैव निवेदितरहस्यमिति न पुनराकुलीक्रियते।

---

नायां तथाभावे तु बीजं चिन्त्यम्। पर्यनुयोगस्य आक्षेपस्य। **कल्पनाया इति।** वाक्यार्थरूपकस्थले इति भावः। ननु तस्य निदर्शनाबीजत्वमेव कुतो न अत आह—**इन्दुशोभामिति। तज्जीवातुत्वेति।** निदर्शनाजीवातुत्वेत्यर्थः। ननु निदर्शनायां बिम्बप्रतिबिम्बभावः, न रूपके इति कथं तेनास्या निरासोऽत आह—**रूपके इति। अस्मदुक्तोदेति।** त्वामन्तरात्मनीत्यत्रेत्यर्थः। रूपकस्य तत्र विषयाभावात् वाक्यार्थद्वयाभावात्। एवं च रूपकविषयभूतं वाक्यार्थनिदर्शनायां यदुदाहृतं यच्चोपपादितं तदसंगतम्। तद्विविक्तोदाहरणसंभवादिति भावः। तेनैव अलंकारसर्वस्वकारेणैव। **अतिव्यापनादिति।** प्रागुक्तरीत्येति भावः। **तत्तु तन्मतदूषणेनैवेति।** अत्रेदं चिन्त्यम्—त्वामन्तरात्मनि लसन्तमिति भवदुदाहृतेऽपि गम्यरूपकेणैव निर्वाहे निदर्शनाया उच्छेदापत्तिः। अन्यथा वाक्यार्थरूपकोच्छेदवद्गम्यवाक्यार्थरूपकोच्छेदापत्तिश्च। न चैवं मुखमिव चन्द्र इति वाच्योपमा, मुखं चन्द्र इति गम्योपमैव स्यादिति रूपकोच्छेद इति वाच्यम्। तत्राभेदप्रतीतिकृतचमत्कारस्यैव सत्त्वात्। सादृश्यकृतस्य तस्याभावाच्च। किंच त्वदुदाहृते कर्त्रो रूपकमेवास्तु। प्रतीयमानोऽपि क्रिययोरभेदो विशिष्टरूपके विशेषणाभेदवन्नालंकारान्तरम्। अन्यथा अलकावृतकामिनीमुखं भ्रमद्भ्रमरसंभारं पद्ममित्यादौ अलकभ्रमरयोरभेदस्याप्यलंकारान्तरत्वं स्यात्। तस्माद्गम्यतामात्रेणालंकारान्तरतेति रिक्तं वचः। ननु प्राचीनैरलंकारान्तरत्वेन परिगणनात् गम्यत्वेऽयम्, वाच्यत्वे रूपकमित्युच्यते तर्हि प्राचीनसेतुविघटनं व्यर्थमेवेति बोध्यमिति।

यदि तु

'त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥'

इति पद्यं निर्मीयते तदा निदर्शना युक्ता । न चास्मदुक्ता[1] वाच्या निदर्शना, इयं तु प्रतीयमानेति वाच्यम् । 'मुखं चन्द्र इव' इति वाच्योपमा 'मुखं चन्द्रः' इति प्रतीयमाना, न त्वलंकारान्तरम् । इत्यस्यापि सुवचत्वात् । एवं चारोपाध्यवसानमार्ग[2]बहिर्भूत आर्थ एवाभेदो निदर्शनाजीवितम् । स च कर्त्राद्यभेदप्रतिपादनद्वारा प्रतिपाद्यते वाक्यार्थनिदर्शनायाम् । अत एव मम्मटभट्टैरुदाहृतम्—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्[3] ॥' इति ।

नन्वत्र निदर्शना नैव संगच्छते । विषयिण उपादानेऽपि विषय[4]स्यानुपात्तत्वात् । उभयोपादानं हि तत्रावश्यकम् । अतो ललितालंकार उचित इति चेत्, ललितालंकारनिराकरणावसर एवैतद्व्यक्तमुपपादयिष्यामः ।

---

यावकैरलक्तकैः । **प्रतीयमानेति** । उपमेत्यस्यानुषङ्गः । उपसंहरति—**एवं चेति** । अत एव अस्यास्तदुभयबहिर्भूतनिमित्तकत्वेन प्रागुक्तभवदीयोदाहरणासंभवादेव । तत्र

---

१ वाक्यार्थयोः सदृशयोरित्याद्याकारिका अस्माभिरुक्ता वाच्येत्याशयः ।

२ अर्थात् यत्र शाब्द आरोपः ( यथा मुखं चन्द्र इति । यथा वा—पादनखानां यद् अलक्तकमार्जनं तत् श्रीखण्डेन विधोः पाण्डुरीकरणम् । यथा वा—या दातुः सौम्यता, सा पूर्णेन्दोरकलङ्कता ) तत्र रूपकमेव । एवमेव यत्र अध्यवसानम् ( यथा—चन्द्रे इन्दीवरद्वयम् ) तत्रातिशयोक्तिरेव । इतो विभिन्नो मार्गः अर्थात् यत्र कर्त्रोरभेदः शाब्दः । यथा यो यावकै रञ्जयति स चन्दनेन इन्दुं पाण्डुरीकरोति । यथा वा—शोधयन्तः गवेषयन्तीत्यादि । रञ्जन-पाण्डुरीकरणादिक्रिययोरभेदस्तु अर्थतोऽवसेयः ( तात्पर्यविषयः ) भवति, तत्र निदर्शना । उक्तमिदं पूर्वम् ( रूपकप्रकरणे 'बिम्बाविशिष्टे०' इत्यादिदीक्षितोक्तलक्षणखण्डने ) ।

३ अल्पमत्या सूर्यवंशवर्णकस्य, उडुपेन सागरतितीर्षोश्चेति कर्त्रोरभेदः शाब्दः । वंशवर्णन-सागरतरणयोश्चाभेदस्तु अर्थावसेयः । अत एवात्र निदर्शनेति मम्मटमनीषितम् । ललितप्रकरणे विस्तरेणेदं द्रष्टव्यम् ।

४ अर्थात् अत्र उडुपकरणकसागरतरणेच्छारूप आरोपस्य विषयी एवोपात्तः । अल्पमतिकरणकवंशवर्णनेच्छारूपो विषयो नोपात्त इति शङ्का । एतत्समाधानं ललितप्रकरणे प्रोक्तम्—'अप्रकृतायास्तादृशेच्छायाः कथनेन प्रकृताया अपि स्वतो बोधो भवतीति वंशवर्णनेच्छारूपो विषयोऽप्युपात्त एवेति' तदाशयः ।

परे तु 'त्वत्पादनखरत्नानां–' इत्यत्र दृष्टान्तालंकारमाहुः। तदप्यसत्। बिम्बप्रतिबिम्बभावापन्नपदार्थघटितस्य निरपेक्ष[1]वाक्यार्थद्वयस्यैव दृष्टान्तत्वात्। तस्मात् 'त्वत्पादनखरत्नानां–' इत्यत्र वाक्यार्थरूपकमेव, न निदर्शनेति स्थितम्। एवमसंभवद्व[2]स्तुसंबन्धनिबन्धना पदार्थ-वाक्यार्थनिदर्शना दर्शिता।

'चूडामणिपदे धत्ते योऽम्बरे रविमागतम्।
सतां कार्यातिथेयीति बोधयन्गृहमेधिनः॥'

अत्र 'कारीषोऽग्निरध्यापयति' 'भिक्षा वासयन्ति' इतिवदानु[3]कूल्ये णिचः प्रयोगात् गिरेश्च सूर्योदयदेशाव[4]च्छिन्नशिरस्कतारूपस्य गृहमेधिगतसदा[5]तिथ्यकरणविषयकबोधानुकूलाचरणस्य संभवात् मया इवान्येनाप्यतिथिसेवा कार्या इत्यौपम्यसद्भावाच्च संभवद्वस्तुसंबन्धमूलापि नि[6]दर्शना संभवति।

निदर्शनायाम्। 'अत्र' इति पाठ उचितः। पदे स्थाने। य उदयाचलः। **अत्रेति**। बोधयन्नित्यत्रेति शेषः। ननु गिरौ आनुकूल्याचरणं कथमत आह—**गिरेश्चेति**। **देशेति**। सूर्योदयप्रदेशावच्छिन्नशिखरतेत्यर्थः। नन्वेवमप्यौपम्याभावोऽत आह—**मया**

१ शाब्दान्वये ययोः परस्परं नापेक्षा, बिम्बप्रतिबिम्बभावेनैव ययोर्योग ईदृशौ वाक्यार्थौ दृष्टान्त इत्यर्थः।

२ एतदवधिप्रोक्तोदाहरणेषु प्रकृताप्रकृते स्वतन्त्रे। परस्परं तयोः संबन्धः अभवन्नपि विच्छित्त्यर्थं कविकल्पितोक्ति। यथा तीर्थेषु शिवस्यान्वेषणमन्यत्। रजस्सु चिन्तामणेर्गवेषणमन्यत्। अत्र एकस्मिन्नन्यस्यारोपः कविकल्पितः।

३ ननु अचेतनस्योदयपर्वतस्य चेतनसाध्यं बोधनकर्तृत्वं कथमित्याह—आनुकूल्ये णिचः० इति। शीतकाले अग्निरध्यापने तथा आनुकूल्यं संपादयति येन 'अग्निरध्यापयति' इति कृतज्ञतावशात्प्रोच्यते। एवमेवात्रापि गिरिकर्तृकं शिखराधिकरणकं सूर्यस्थापनम् आतिथ्योपदेशने तथा आनुकूल्यं संपादयति यथा उदयाचलः आतिथ्यकरणं बोधयतीति वक्तव्यमभूदित्याशयः।

४ सूर्योदयस्थानसंबद्धं शिरः (शिखरं) यस्य (गिरेः) तत्तारूपस्य।

५ सताम् आतिथ्य०।

६ 'बोधयन् धत्ते' इति कर्त्रोरभेदे शब्दतः प्रोक्तेऽपि 'शिरसा रविधारणं गृहमेधिकर्मकबोधनाभिन्नम्।' इति क्रिययोरभेदः आर्थः। औपम्ये पर्यवसानं चेति निदर्शना। शिरसा धारणरूपस्यनिदर्शनेन आतिथ्योपदेशनं गिरेः संभवति इष्टं चेति संभवद्वस्तुसंबन्धनिबन्धना

न च बोधयन्निव बोधयन्निति प्रतीयमानेयमुत्प्रेक्षा 'व्यालिम्पति तमोऽङ्गानि नभो वर्षति कज्जलम्' इत्यादाविवेति वाच्यम् । वस्तुनः संभवेनैव तस्या अप्रसक्तेः इत्याहुः ।

इदं च 'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते' इत्युक्तपथेन धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति मते संगच्छते । यदि तु कृताकृतविभागानुपपत्तेर्यत्नार्थकात्कृञस्तृचि सविषयार्थकधातूत्तरकर्तृप्रत्ययस्याश्रयत्वे निरूढलक्षणया यत्नाश्रयः कर्तृपदार्थः, स एव च कर्तृप्रत्ययानां मुख्यार्थः, अचेतनस्तु भाक्त इति नयपथेन निरीक्ष्यते तदा बोधयन्नित्यत्र प्रतीयमानोत्प्रेक्षा संभवत्येव ।

अमुमेव चाशयं मनसिकृत्य मम्मटभट्टैः 'स्वस्वहेत्वन्वयस्योक्तिः—' इत्यादिलक्षणं निदर्शनान्तरस्य कृत्वा उदाहृते—

'उन्नतं पदमवाप्य यो लघुर्लीलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥'

---

**इवेति** । तस्याः प्रतीयमानोत्प्रेक्षायाः । वैयाकरणमतमाह—**इदं चेति** । नित्यमित्यस्य कर्तृतेत्यत्रान्वयः । कर्तृतैवेति तदर्थः । **कृताकृतेति** । नैयायिकमतमिदम् । नन्वेवं रथो गच्छतीत्यादौ दोषोऽत आह—**अचेतनस्त्विति** । भाक्तो गौणः । **बोधयन्नित्यत्र प्रतीयमानोत्प्रेक्षेति** । सुखार्थविषया । तत्रापि मते लाक्षणिकार्थपरत्वे त्वियमेवेति बोध्यम् । **अमुमेवेति** । नैयायिकरीत्या प्रतीयमानोत्प्रेक्षायास्तत्र तत्सत्त्वेन संभवरूपमित्यर्थः ।

---

१ लोके न यस्य संभवः, किन्तु संभावनम् ( अयोग्यत्वाभावानुसंधानविषयीकरणम् अर्थात् अमुकपदार्थे अमुकधर्मस्य योग्यता असंभविनी नास्तीति निर्धारणम् ) भवति तत्रैवोत्प्रेक्षा । अत्र तु वस्तुनः स्वत एव संभव इति नोत्प्रेक्षाया विषय इत्याशयः ।

२ इदं चेत्यादिना प्रारब्धस्य प्रघट्टकस्यायमाशयः—धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति वैयाकरणानां मते आनुकूल्ये णिचः प्रयोगात् पूर्वोक्तविधया बोधनानुकूलव्यापाराश्रयतया गिरेरपि बोधनकर्तृत्वं संभवतीति शिरसा रविधारणे सताम् आतिथ्यकरणविषयकबोधनस्याभेदः आर्थः संपन्न इति 'चूडामणिपदे०' इत्यत्र संभवद्वस्तुसंबन्धनिबन्धना निदर्शना संगतैव । कृञ्धातोर्यत्नोऽर्थः, कर्तृप्रत्ययस्य ( तृचः ) आश्रयत्वे निरूढा लक्षणा । ततश्च यत्नाश्रयः कर्तेति नैयायिकानां मते अचेतनस्य गिरेः बोधनानुकूलयत्नाश्रयत्वं न घटत इति 'चूडामणि०' इति पद्ये बोधयन्निव बोधयन्निति प्रतीयमानोत्प्रेक्षा संभवत्येव । ( बोधनकर्तृत्वं स्वतो न संभवि इति उत्प्रेक्षाया विषयो जात इत्याशयः ) ।

इति पद्ये इतिपदोत्तरं बोधयन्बोधयितुं वा इत्यस्याभावादुत्प्रेक्षाया असंभवे बोधननिदर्शना युक्ता।

'हालाहलं खलु पिपासति कौतुकेन
  कालानलं परिचुचुम्बिषति प्रकामम्।
व्यालाधिपं च यतते परिरब्धुमद्धा
  यो दुर्जनं वशयितुं कुरुते मनीषाम्॥'

यथा वा—

'व्योमनि बीजाकुरुते चित्रं निर्माति सुन्दरं पवने।
रचयति रेखाः सलिले यस्तु खले चरति सत्कारम्॥'

बीजाकरणं बीजप्रक्षेपपूर्वकं कर्षणम्।

इदं चापरं बोध्यम्—

'यान्ती गुरुजनैः साकं स्मयमानाननाम्बुजा।
तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पन्नाकरोज्जगत्॥'

अत्र 'भावप्रधानमाख्यातं' इति यास्कोक्तरीत्या क्रियाविशेष्यकबोधवादिनां शाब्द एवाभेदारोपः क्रिययोरिति मुखं चन्द्र इत्यादाविव रूपकमु-

---

अन्यथा वैयाकरणरीत्या तत्सत्त्वेऽपि तदप्रसक्त्या तथोक्त्यसंगतिः स्यादिति भावः। क्त्वान्तयोरुदाहृते इत्यत्रान्वयः। प्रकाममत्यन्तम्। **प्रक्षेपेति**। प्रक्षेपस्य पूर्वकमित्यर्थः। तत्फलकम्। तेन सहेति यावत्। 'कृञो द्वितीय-' इति डाच्। भेदान्तरमाह—**इदं**

---

१ अत्र 'पतेदिति बोधयन् दृषत्कणः पतति' इति कर्त्रोरभेदे शाब्देऽपि 'शैलशिखरगत-मारुतविधूत-दृषत्कणकर्तृकं पतनम् उन्नतपदप्राप्तावपि लघुत्वे सति पतनं भवतीति बोधनाऽभिन्नम्' इति क्रिययोरभेद आर्थः, औपम्यपर्यवसायी चेति निदर्शना। ननु बोधनं विषयी नात्र शब्दोपात्तः, ततश्च विषयविषयिद्वयोपादानसापेक्षाऽभेदजीवातुर्निदर्शना कथं स्यादिति तु न शङ्क्यम्। अर्थतोऽवसेयेऽस्मिन्नभेदे विषयविषयिणोरप्यर्थानुसारमेव स्वतोऽवसेयत्वात्। यथा 'क्व सूर्यप्रभवः०'—अत्र विषयस्य प्रतिपत्तिः अर्थबलादेव भवति।

२ मधुरे शृङ्गाररसेऽपि झयूघटितसंयोगपरह्रस्वस्य, रेफघटितसंयोगपरह्रस्वस्य सवर्णझय्-द्वयघटितसंयोगस्य चाप्यसकृत् प्रयोगो गुम्फनसमीक्षामार्मिकस्य पण्डितराजस्य मनाग् विचार्य एव। अथवा तिर्यग्ग्रीवं दर्शनेन योऽयं जगतः संहारसमारम्भस्तदुचितान्येवान्यमून्यक्षराणीत्यलं महाभाग्यस्य कृतौ पौरोभाग्येन।

चितम्। प्रथमान्तविशेष्यकबोधवादिनां त्वार्थः स इति निदर्शनेति भेदः। निष्पत्त्राकरणं च सपुङ्खशरस्यापरपार्श्वे निर्गमनात्पत्त्ररराहित्यकरणम्।

इति रसगङ्गाधरे निदर्शनाप्रकरणम्।

अथ व्यतिरेकः—

**उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः ॥**

प्रतीपादिवारणाय तृतीयान्तं वैधर्म्यपरम्। तत्र चोपमानतामात्रकृत एवोत्कर्षः, न वैधर्म्यकृतः, साधर्म्यस्यैव प्रत्ययात्। अधिकगुणवत्त्वमात्रम्, उपमानगतापकर्षमात्रं वा न व्यतिरेकस्वरूपम्, तयोरुपमेयोत्कर्षाक्षेपमन्तरेणासुन्दरत्वात्। अत एव न सादृश्याभावमात्रम्। उपमा-

---

**चेति**। सः क्रिययोरभेदः। **पत्त्रराहित्येति**। स्वार्थे ष्यञ्। बहुव्रीहिः। पत्त्ररहितकरणमित्यर्थः। 'सपत्त्र' इति डाच्प्रत्ययः॥ इति रसगङ्गाधरमर्मप्रकाशे निदर्शनाप्रकरणम्॥

व्यतिरेकं निरूपयति—**अथेति**। ननु गुणविशेषवत्त्वेनेत्युक्तावपि तत्रातिप्रसङ्ग एव। उपमेयस्योपमानत्वरूपगुणविशेषवत्त्वेनोत्कर्षस्य सत्त्वात्। अत आह—**वैधर्म्येति**। तथा च ततस्तस्य वैधर्म्येणोत्कर्षः स इति लब्धम्। नैवमतिप्रसङ्ग इत्याह—**तत्र चेति**। प्रतीपादौ चेत्यर्थः। उपमेयस्येति शेषः। मात्रपदेनोत्कर्षव्यावृत्तिः। तयोः अधिकगुणवत्त्वोपमानगतापकर्षयोः। मात्रं न व्यतिरेक इत्यनुषज्यते। अत एवेत्यस्यार्थमाह—**उपमा-**

---

१ प्रघट्टकस्यास्यायमाशयः 'हालाहलम्०' इत्यादिषु त्रिष्वपि पद्येषु 'यो दुर्जनं वशयितुमिच्छति स हालाहलं पिपासति' इत्यादिरूपेण कर्त्रोरभेदे शाब्देऽपि, 'दुर्जनवशीकरणेच्छा, हालाहलपानेच्छाऽभिन्ना' इत्यादिक्रिययोरभेदः आर्थः प्रतीयते इति निदर्शना समन्वेति, इति हि प्रथमान्तमुख्यविशेष्यकबोधवादिनां नैयायिकानां मते। यतस्तेषां मते हालाहलं पिपासतीत्यादौ 'हालाहलकर्मकपानेच्छाश्रयः सः' इत्यादिबोधेन कर्त्रोरभेद एव शाब्दः। क्रिययोरभेदस्त्वर्थादवसेय इति निदर्शना घटते। भावप्रधानबोधवादिनां वैयाकरणानां तु मते क्रिययोरभेदस्यैव शब्दबोध्यत्वेन आर्थाऽभेदस्यानुपलब्ध्या न निदर्शना, अपि तु रूपकमिति।

२ उपमानापेक्षया वैधर्म्येणोपमेयस्योत्कर्षो व्यतिरेक इति फलितम्। प्रतीपादौ उपमानापेक्षया उपमेयस्य यद्यप्युत्कर्षः प्रतीयते। यथा 'किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णम्' इति। अत्र हि उपमानात्सुवर्णादङ्गस्य वर्णाधिक्यरूप उत्कर्षः प्राप्यते परं तत्र द्वयोः साम्यमेवेति न तत्रातिप्रसङ्ग इत्याशयः।

३ उपमेयस्याधिकगुणत्वम्, उपमेयापेक्षया उपमानस्यापकर्षो वा यत्र स्यात्तत्रापि उपमेयस्योत्कर्षः अर्थबलेनाक्षिप्यते (अर्थात् उपमेयस्य केवलमधिकगुणत्वमेव न स्यात्प्रत्युत उपमानापेक्षया तस्य वास्तवोऽतिशयः स्यात्), तदेव तत्र चमत्कारोपलब्धिः।

मादुपमेयस्यापकर्षेऽपि तत्संभवात्, तस्य च वास्तवत्वेनासुन्दरत्वात्। उपमेयोत्कर्षविशिष्टत्वेन सादृश्याभावविशेषणे तस्यैवालंकारत्वौचित्यात्।

उदाहरणम्—

'अनिशं नयनाभिरामया रमया संमदिनो मुखस्य ते।
निशि निःसरदिन्दिरं कथं तुलयामः कलयापि पङ्कजम्॥'

अयं चोपमेयोत्कर्षकोपमानापकर्षकयोर्वैधर्म्ययोर्द्वयोरप्युपादानानुपादानाभ्यामेकतरानुपादानेन च तावच्चतुर्धा। सोऽप्युपमायाः श्रौतीत्वार्थीत्वाक्षिप्तत्वैर्द्वादशविधो भवन्सश्लेषनिःश्लेषत्वाभ्यां चतुर्विंशतिप्रकार इति प्राञ्चः[2]।

उदाहरणम्—

'कटु जल्पति कश्चिदल्पवेदी यदि चेदीदृशमत्र किं विदध्मः।
कथमिन्दुरिवाननं त्वदीयं सकलङ्कः स कलङ्कहीनमेतत्॥'

अत्रोभयोरुपादानम्। उपमा च श्रौती। अत्रैव 'कथमिन्दुरिवाननं तवेदं द्युतिभेदं न दधाति यत्कदापि' इति कृते, द्युतिभेदं खलु यो दधाति नित्यम्' इति वा कृते एकतरानुपादानम्। सा च। 'कथमिन्दुरिवाननं मृगाक्ष्या भवितुं युक्तमिदं विदन्तु सन्तः' इति कृते हेतुसामान्यानुपादानम्। सा च। हेतुद्वये हि यस्यैवानुपादानं तस्याक्षेपेणावगतिः। उभयोरप्यनुपा-

---

**नादिति**। तत्संभवात्। सादृश्याभावसंभवात्। इष्टापत्तावाह—**तस्य चेति**। **वास्तवत्वेनेति**। हीनगुणस्योपमेयत्वादिति भावः। विशेषणे तस्य विशेषत्वाकरणे। तस्यैव उपमेयोत्कर्षस्यैव। अधिकनिवेशे प्रयोजनाभावादिति भावः। **संमदिन इति**। सर्वदा नेत्रयो रमणीयया शोभया हेतुना हर्षयुक्तस्य तव मुखस्य रात्रौ निःशोभं कमलं अंशेनापि कथं तुल्यं कुर्म इत्यर्थः। नायकं प्रति तद्वयस्योक्तिः। अत्र सर्वदा सशोभत्वेन हृष्टत्वं वैधर्म्यम्। तत्र रात्रौ तदभाव इति भावः। सोऽपि चतुर्विधोऽपि। **कद्विति**। नायिकां प्रति नायकोक्तिः। चेच्छब्दः शङ्कायाम्। ईदृशं तवाननमिन्दुतुल्यमित्येवंरूपम्। अत्र उक्तभाषणविषये। विदध्मः कुर्मः। स इन्दुः। एतत् आननम्। उभयोः सकलङ्कत्वतद्धीनत्वरूपवैधर्म्ययोस्तादृशयोः। सा च श्रौती च। एवमग्रेऽपि। ननूभयानुपादाने उत्कर्षाप्रतीत्या कथमयं तद्भेदोऽत आह—**हेतुद्वये हीति**। तयोर्मध्ये इत्यर्थः। हि यतः।

---

१ अर्थात् उपमेयोत्कर्षविशिष्टः सादृश्याभावः [ उपमेयस्य अधिकगुणवत्त्वं वा स्यात्, उपमानस्य न्यूनगुणत्वं वा स्यात्, न द्वयोः समता स्यादित्याशयः ] व्यतिरेक इति।

२ मम्मट-विश्वनाथादयः।

दाने तथैव न त्वनवगतिः, व्यतिरेकस्योत्कर्षापकर्षरूपत्वात् । तयोश्च प्रयोजकज्ञानमन्तरेणानवबोधात् । एवम्—

'नयनानि वहन्तु खञ्जनानामिह नानाविधमङ्गभङ्गभाग्यम् ।
सदृशं कथमाननं सुशोभं सुदृशो भङ्गुरसंपदाम्बुजेन ॥'

अत्रोभयोपादानम् । आर्थी च । 'वदनं तु कथं समानशोभं सुदृशो भङ्गुरसंपदाम्बुजेन' [ इति ], 'शाश्वतसंपदम्बुजेन'[1] इति च कृते एकतरानुपादानम् । सा च । 'सदृशं कथमाननं मृगाक्ष्या भविता हन्त निशाधिनायकेन' इति कृते उभयानुपादानम् । सा च । पूर्वार्धे तु निदर्शनैव ।

'कतिपयदिवसविलासं नित्यसुखासङ्गमङ्गलसवित्री ।
खर्वयति स्वर्वासं गीर्वाणधुनीतटस्थितिर्नितराम् ॥'

अत्रेवादेः सादृश्यमात्रशक्तस्य सदृशादेश्च तद्विशिष्टशक्तस्य शब्दस्याभावाच्छ्रुत्यर्थमार्गोल्लङ्घिनी[2] खर्वीकरणेनाक्षिप्तैवोपमा । अत्रैव 'निःसङ्गैरभिलषिता' इत्याद्यचरणनिर्माणे 'संपातदुरन्तचिन्तयाकुलितम्' इति द्वितीयचरणनिर्माणे वा एकतरानुपादानम् । सा च । 'सर्वानर्वाचीनान्निर्वास्य मनोरथाननन्यजुषाम्' इति पूर्वार्धे तदनुपादानमिति ।

तत्रेत्थमत उभयोरुपादानेऽपि तथैवेत्यर्थः । सर्वथा अबोधो नेत्याह—**न त्विति** । उ**त्कर्षेति** । अपकर्षनिरूपितोत्कर्षरूपत्वादित्यर्थः । **प्रयोजकेति** । वैधर्म्येत्यर्थः । श्रौतीमुदाहृत्यार्थीमुदाहरति—**एवमिति** । इह भूवलये नायिकानां नयनानि खञ्जरीटानामनेकप्रकारमङ्गसंबन्धिमोटनसंबन्धिरचनाप्रकारं वहन्तु, परंतु अस्याः सुदृशो नायिकायाः समीचीनशोभं मुखमनियतशोभेन कमलेन कथं सदृशमित्यर्थः । 'भङ्गीम्' इत्युचितः पाठ इति केचित् । **आर्थीति** । इवादेरभावादिति भावः । **शाश्वतेति** । आननविशेषणमिदम् । सा च आर्थी च । एवमग्रेऽपि । आर्थीमुक्त्वा आक्षिप्तामाह—**कतीति** । इदं स्वर्वासविशेषणम् । गीर्वाणधुनी देवनदी । गङ्गातीरस्थितिविशेषणमाह—**नित्येति** । **श्रुत्यर्थेति** । श्रुत्यर्थयोर्यौ मार्गौ तदुल्लङ्घिनीत्यर्थः । अत एवैवोक्तिरग्रे यथासंख्येनात्र पूर्वयोरन्वयः । निःसङ्गैर्योगिभिः । **संपातेति** । स्वर्गाद्भ्रंशेत्यर्थः । सा च आक्षिप्ता

१ 'शाश्वतसंपत् सुदृशो वदनम् अम्बुजेन कथं समानशोभम्' इति । अत्र हि शाश्वतसंपदिति उपमेयोत्कर्षमात्रस्योपादानम्, उपमानापकर्षस्य त्वनुपादानमित्यर्थः ।

२ न श्रौती न वा आर्थीत्यर्थः ।

'क्रूरसत्त्वाकुलो दोषाकरभूस्तोयधिर्यथा।
न तथा त्वं यतो भूप स्थिरधीरसि निर्मलः॥'

अत्रोपमा श्रौती। श्लेषस्तु स्फुट एव।

'राजन्प्रचण्डमार्तण्डमण्डलोद्दण्डशासन।
कथमक्रूरसत्त्वस्त्वं पयोधिरिव गीयसे॥' इति,

'कथं वार्धिरिवासि त्वं यतः स विषभागयम्' इति वा एकतरानुपादानम्।

'महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः।
भवान्सहस्रैः समुपास्यमानः कथं समानस्त्रिदशाधिपेन॥'

अत्रार्थी। त्रिर्दश त्रिदशास्त्रिंशत्, तेषामधिपः। 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहौ, 'बहुव्रीहौ संख्येये-' इति डचि च तत्पुरुषः। वृत्तौ गतार्थत्वात्सुचो[1] न प्रयोगः। त्रयो वा दश वा इति बहुव्रीहिर्वा। 'भवान्सदा रक्षितगोत्रपक्षः समानकक्षः कथमस्य युक्तः' इति, 'कथं निरस्ताखिलगोत्रपक्षः समानकक्षस्तव युज्यते सः' इति वा कृते एकतरानुपादानम्।

---

च। अर्वाचीनान् ऐहिकान्। अनन्यजुषां स्वान्यासेवकानाम्। पूर्वार्धे कृते इति शेषः। **तदनुपेति**। उभयानुपादानमित्यर्थः। आक्षिप्ता चेत्यपि बोध्यम्। इतिरेतद्भेदसमाप्तौ। सश्लेषमुदाहरति—**क्रूरेति**। सत्त्वानि जलजन्तवः। दोषाकरश्चन्द्रः। हे भूप, त्वं तथा दोषस्थानं क्रूरप्राणिव्याप्तश्च न यत इत्याद्यर्थः। 'अन्तःसत्त्वा' इति पाठः क्वचित्। तत्रान्तः अभ्यन्तरे सत्त्वैर्यादोभिराकुलः। अन्यत्र सत्त्वगुणः। तेनाकुलश्चेत्यर्थः। श्रौती। तादृशयथाशब्दसत्त्वात्। प्रचण्डसूर्यमण्डलवदप्रतिहताज्ञः। यतः सोऽयं वार्धिर्विषभागित्यर्थः। यद्वा यतोऽयं सविषं क्रूरत्वं भजति तदेत्यर्थः। **एकतरेति**। उपमानेतीत्यादि तु प्राग्वत्। आर्थ्युपमाकसश्लेषमुदाहरति—**महेन्द्रेति**। परमैश्वर्यवत्तुल्यमित्यर्थः। सहस्रैर्जनैः। **त्रिदशेति**। इन्द्रेणेत्यर्थः। आर्थी, तुल्यशब्दप्रयोगात्। त्रिदशा देवाः। श्लेषेण द्वितीयार्थमाह—**त्रिरिति**। **तत्पुरुष इति**। तेषामधिप इत्युक्तरूप इति भावः। सुजर्थान्तर्भावेण बहुव्रीह्यङ्गीकारादाह—**वृत्ताविति**। तदनन्तर्भावजलाघवादाह—**त्रयो वा दश वेति**। प्रक्रिया पूर्ववत्। अग्रे तत्पुरुषोऽपि प्राग्वत्। आद्ये गोत्रपक्षः स्ववंशपक्षः। द्वितीये गोत्रपक्षाः पर्वतपक्षाः। प्राश्च इत्यनेन

---

१ त्रिः दश इति विग्रहे त्रिशब्दादुत्तरं श्रूयमाणो यः सुच्, सिद्धे बहुव्रीहौ तस्य न श्रवणमित्यर्थः।

इदं तु बोध्यम्—इहोभयानुपादानभेदत्रयं दुरुपपादम् । वैधर्म्यानुपादाने हि किमाश्रयः श्लेषः स्यात् ? न च यत्र द्विजसुरालयमातरिश्वादिशब्दवेद्येषूपमानोपमेयेषु स्वशब्दोपात्त एव श्लेषो व्यतिरेकोत्थापकस्तत्रैतदुदाहरणं सूपपादमिति वाच्यम् । तत्र स्वशब्दवेद्यस्यैव वैधर्म्यस्य संभवात् । इत्थं च चतुर्विंशतिर्भेदा इति प्राचामुक्तिर्विपुलोदाहरणाभिज्ञैर्यथाकथंचिदुपपादनीया । किं चोपमाप्रभेदाः सर्व एवात्र संभवन्तीत्यलं चतुर्विंशतिभेदगणनया ।

नन्वस्यालंकारस्य वैधर्म्यमूलस्योपमाप्रतिकूलत्वमेवोचितम्, न तूपमागर्भत्वम् । तस्याः साधर्म्यमूलकत्वात् । अस्य च तन्निषेधरूपेणैव प्रवृत्तेः । न चेष्टापत्तिः । सिद्धान्तभङ्गप्रसङ्गात् । सत्यम् । यद्गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्गुणपुरस्कारेण तत्सादृश्यस्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात् । यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात् गुणविशेषपुरस्कारोऽनर्थकः स्यात् । धनेनाय-

सूचितामरुचिमाह— **इदं तु बोध्यमिति** । इह प्रागुक्तभेदानां मध्ये । **अनुपादानभेदेति** । अनुपादानरूपभेदत्रयमित्यर्थः । **तन्निषेधेति** । साधर्म्यनिषेधेत्यर्थः । गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वादिति । अत्रेदं चिन्त्यम्—'कथमिन्दुरिवाननं त्वदीयं' इति पद्ये कलङ्कवत्त्वेन तद्राहित्येन वा सादृश्यं न प्रसिद्धमुपपत्तिविषयो वा, यस्य निषेधे कथंशब्देन प्रतिपादिते गुणान्तरसादृश्यं प्रतीतिपथमवतरेत् । किं त्वन्यधर्मेण प्रसिद्धसादृश्यस्यैवेदृशाधिक्यन्यूनत्वप्रतिपादनद्वाराभावः प्रतिपाद्यते । अपकर्षो वा । स चाविशेषात्सर्वधर्मप्रयुक्तस्यैवेति गुणान्तरेण सादृश्यप्रत्यय इति रिक्तं वचः । 'कथं तुलयामः कलयापि पङ्कजम्' इत्यादौ सर्वथैव सादृश्यनिषेधप्रतीतेश्च ।

१ सश्लेषं श्रौत-आर्थ-आक्षिप्तोपमाकं व्यतिरेक(वैधर्म्य)प्रयोजकानुपादानरूपं भेदत्रयमित्यर्थः ।

२ अयं भावः—द्विजः [ पक्षी, ब्राह्मणादिश्च ], सुरालयः [ नाकः, मद्यगृहं च ] इत्यनेकार्था द्विजादिशब्दाः । एषामर्थद्वयमध्ये यथेच्छमेकस्योपमेयत्वमन्यस्योपमानत्वम् । अत्र च पक्षी-ब्राह्मणश्चेति विजातीयार्थोपस्थापकत्वात् श्लेषो व्यतिरेकस्योत्थापक इति वक्तुं शक्यम् । ततश्च स्व(उपमानोपमेयवाचक)शब्दोपात्ते श्लेषे 'किमाश्रयः श्लेषः' इति वक्तुमनवकाशाद् भेदत्रयमिदं सूपपादमेवेति पूर्वपक्षी । एवं सति वैधर्म्यमपि द्विजादिशब्दोपात्तमेव । ततश्च वैधर्म्यानुपादानस्येदं भेदत्रयं कथं व्यपदेश्यं स्यादिति सिद्धान्ती ।

मस्मादधिक इत्युक्ते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात्[1]। एवं च प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोत्थापितेनोत्कर्षेण हतप्रभमिव बन्दीकृतमिव न चमत्कारविशेषमाधातुं प्रभवतीति प्राचामाशयः।

अत्र चालंकारे कचिच्छाब्दसादृश्यनिषेधाक्षिप्तावुपमेयोत्कर्षोपमानापकर्षौ, कचिच्च शाब्देनोपमेयोत्कर्षेणाक्षिप्तावुपमानापकर्ष—सादृश्याभावौ, क्वचित्तादृशेनोपमानापकर्षेणाक्षिप्तावुपमेयोत्कर्ष—तदभावौ तथा। तत्राद्यः[2] प्राचीनरीत्या सभेद उदाहृतः। द्वितीय[3]तृतीयावपि प्रायशस्तावद्भेदावेव। तत्र दिङ्मात्रमुदाह्रियते—

---

तस्माद्ययोरेतादृशन्यूनत्वाधिक्यवर्णनाभावे सादृश्यं पर्यवस्यतीत्येतावतैवोपमागर्भत्वव्यवहारः, सोऽपि 'कुमुदादतिरिच्यते मुखं' इत्यादौ व्यतिरेकस्यालंकारत्वाभावाय। किंच व्यतिरेके गुणान्तरे कथिते गुणान्तरसादृश्यमपि चमत्कारि। यथा देवदत्तेन सदृशो यज्ञदत्तः, धनमस्याधिकमित्यादौ। तत्र विद्यादिकृतसादृश्यस्यापि चमत्कारित्वात्। उत्कटविद्यत्वेन देवदत्तस्य प्रसिद्धत्वात् इति बोध्यम्। **गुणान्तरकृतनिषेधोत्थापीति**। गुणान्तरकृतसादृश्यनिषेधोत्थापीत्यर्थः। **अत्र चालंकारे इति**। व्यतिरेकालंकार इत्यर्थः। तादृशेन शाब्देन। तदभावौ सादृश्याभावौ। तथा चमत्कृतिजनकौ। तत्र तेषां मध्ये। तावद्भेदावेव चतुर्विंशतिभेदावेव। केषांचिदसंभवादुक्तं

---

१ नन्वित्यादिप्रघट्टकस्यायमाशयः—वैधर्म्यं हि साधर्म्यात्प्रतिकूलम्। व्यतिरेकश्च वैधर्म्यमूलः। ततश्च व्यतिरेकः साधर्म्यमूलाया उपमायाः प्रतिकूल इति कथमस्याऽलंकारस्योपमागर्भत्वम्? 'मास्तु उपमागर्भत्वम्' इति तु न शक्यं वक्तुम्, सर्वेषामप्यालंकारिकाणां मते व्यतिरेकस्य औपम्यगर्भत्वस्वीकारात्। इति शङ्का। यं गुणमादाय येन सह यस्य सादृश्यनिषेधः उत्कर्षार्थमुपादीयते [ यथा—'कथमिन्दुरिवाननम्०' अत्र निष्कलङ्कत्वमादाय मुखस्य चन्द्रमसा सादृश्यं निषिध्यते ] ततश्च निष्कलङ्कत्वेन द्वयोः सादृश्यं यद्यपि न प्रतीयेत, किन्तु गुणान्तरेण तत्सादृश्यमवश्यं प्रतीयेत [ यथा अत्रैव शोभाविशेष—आह्लादकप्रकाशशालित्वादिना इन्द्वाननयोः ]। तथा च साधर्म्यप्रत्ययोऽस्त्येवेति तत्समाधानम्। ननु तर्हि वैधर्म्यमूलोऽयमलंकार इति न व्यपदेष्टव्यं स्यात्। भवदुपपत्त्या साधर्म्यस्य प्रत्ययात्, इति तु न शङ्काऽवसरः। गुणान्तरेण (निष्कलङ्कत्वादिना) सादृश्यस्य निषेधे [ चन्द्रः सकलङ्कः, मुखं तु निष्कलङ्कमिति कथं द्वयोः समानता? ] यश्चमत्कारस्तदग्रे (गुणान्तरेण) साधर्म्यकृतचमत्कारस्य सहृदयहृदयेष्वप्ररोहात्।

२ शाब्देन सादृश्यनिषेधेन यत्र आक्षिप्तौ उपमेयोत्कर्ष—उपमानापकर्षौ। यथा—'कथं तुल्यामः कलयापि पङ्कजम्' 'कथमिन्दुरिवाननं त्वदीयम्०' इत्यादिषु शाब्दः सादृश्यनिषेधः। तेन च उपमेयस्य (मुखस्य) उत्कर्षः, उपमानस्य (पङ्कजस्य, इन्दोश्च) अपकर्षश्चाक्षिप्येते।

३ शाब्देन उपमेयोत्कर्षेण उपमानापकर्षः, द्वयोः सादृश्याभावश्च यत्राक्षिप्यते (द्वितीयः)। शाब्देन उपमानापकर्षेण यत्र उपमेयोत्कर्षः सादृश्याभावश्चाक्षिप्यते (तृतीयः)।

'निशाकरादालि कलङ्कपङ्किलाद्गुणाधिकं निर्मलमाननं ते ।
अनल्पमाधुर्यकिरोऽधरादिमा गिरोऽधरा गुप्तरसाः कवीनाम् ॥'

अत्र पूर्वार्धे उपमेयोत्कर्षः शाब्दः । उपमानापकर्ष-सादृश्याभावावाक्षिप्तौ । द्वितीयार्धे उपमानापकर्षः शाब्दः । उपमेयोत्कर्ष-सादृश्याभावावाक्षिप्तौ । एवं क्वचिद्द्वयोस्त्रयाणां वा शाब्दत्वं संभवदपि नातीव हृद्यमिति नोदाहृतम् । क्वचिच्च त्रयमप्याक्षिप्तमेव ।

यथा—

'अपारे किल संसारे विधिनैकोऽर्जुनः कृतः ।
कीर्त्या निर्मलया भूप त्वया सर्वेऽर्जुनाः कृताः ॥'
'अशीतलोग्रश्चण्डांशुरनुग्रशिशिरः शशी ।
उग्रशीतस्त्वमेकोऽसि राजन्कोपप्रसादयोः ॥'

यथा वा—

'स तु वर्षति वारि वारिदस्त्वमुदाराशय रत्नवर्षणः ।
स कुहूरजनीमलीमसस्त्वमिहान्तर्बहिरेव निर्मलः ॥'

अत्रोपमान-तद्विशेषणोपादानसामर्थ्यादाक्षिप्त[1] एव व्यतिरेकः, न तु व्यङ्ग्य इति कदापि भ्रमितव्यम् । सत्यनुपपत्तिलेशे व्यञ्जनाया अप्ररोहात् ।

प्रायश इति । तत्र तयोर्विषये । आलीति संबोधनम् । नायिकां प्रति वयस्योक्तिः । गुप्तरसाः कवीनामिमा गिरस्ते बहुमाधुर्यवर्षकादधरादधराः । अपकृष्टा इत्यर्थः । **शाब्द इति** । गुणाधिकमित्युक्तेरिति भावः । **शाब्द इति** । अधरा इत्युक्तेरिति भावः । एवं उक्तप्रकारेण । त्रयमपि उपमेयोत्कर्षोपमानापकर्षसादृश्याभावरूपम् । अर्जुनाः श्वेताः । **उग्रशीत इति** । यथासंख्यमन्वयः । उदाराशयेति संबोधनम् । कुहूरजनी अमारात्रिः । एवव्यावर्त्यमाह—**न त्विति** । व्यङ्ग्य इति तु कदापि न भ्रमितव्यमि-

१ व्यतिरेकस्य स्वरूपघटकाः ये उपमेयोत्कर्ष–उपमानापकर्ष–सादृश्याभावाः तेऽत्र 'वारिदः वारि वर्षति' इति उपमान–तद्विशेषणाभ्याम् रत्नवर्षकस्य ( उपमेयस्य ) उत्कर्षः, रत्नानामग्रे वारिणो वर्षकस्य ( उपमानस्य ) अपकर्षः, [ अत एव ] द्वयोः सादृश्याभावः, अर्थसामर्थ्यादाक्षिप्यन्ते । अत एवात्र आक्षिप्तो व्यतिरेकः, न तु व्यङ्ग्य इति व्यपदेश्य इत्याशयः ।

इह च राजविशेषणस्य यथाकथंचित्स्तुत्यर्थत्वेऽप्युपमानतद्विशेषणोपादानस्य नृपोत्कर्षमन्तरेणानुपपत्तेर्जागरूकत्वात्। यत्र तूपमानतद्विशेषणोपादानमन्तरेणैवोपमेयविशेषणैः 'सुन्दरो देवदत्तः' इत्यादाविव वस्तुस्थितिप्रकाशनेन कृतार्थैरप्याकूतविशेषेण स्वविलक्षणविशेषणविशिष्टधर्म्यन्तरापेक्षया वर्ण्यस्योत्कर्षः प्रतीयते स व्यञ्जनाविषयः। यथा—

'न मनागपि राहुरोषशङ्का न कलङ्कानुगमो न पाण्डुभावः।
उपचीयत एव कापि शोभा परितो भामिनि ते मुखस्य नित्यम्।

अयं व्यतिरेकध्वनिरर्थशक्तिमूलः।

यत्त्वलंकारसर्वस्वकार उपमानादुपमेयस्य न्यूनत्वेऽपि व्यतिरेकमाह। वैलक्षण्यमात्रस्यैव व्यतिरेकत्वात्। उदाजहार च—

'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम्।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु॥'

यच्च तद्व्याख्याता विमर्शिनीकारः सपूर्वपक्षसिद्धान्तं व्याचख्यौ, तथाहि—'नन्वत्रोपमानादुपमेयस्य न्यूनत्वं व्यतिरेक इति न युक्तम्। तस्य हि वास्तवत्वेनाहृद्यत्वात्। यौवनस्य चास्थिरत्वे प्रतिपाद्ये चन्द्रापेक्षयाधिकगुणत्वमेव विवक्षितम्—यदेतच्चन्द्रवद्यातं सन्न पुनरायातीति। यतोऽत्र चन्द्रवद्गतं सद्यौवनं यदि पुनरागच्छेत्तत्प्रियं प्रति चिरमीर्ष्याद्यनुबन्धो युज्येत।

---

त्यर्थः। **उपमानतद्विशेषणोपादानस्येति**। 'उपमानतद्विशेषणस्य' इति पाठेऽप्ययमेवार्थः। नृपोत्कर्षं तद्बोधनम्। **आकूतेति**। अभिप्रायेत्यर्थः। **स्वेति**। उपमेयविशेषणेत्यर्थः। मात्रपदेन विशिष्य प्रतियोग्यनुयोगिनिवेशव्यवच्छेदः। यातं गतम्। सिद्धान्तमाह—**असदिति। अत इति। तत्तदा युज्येतेति**। कालान्तरेऽपि

---

१ अयमाशयः—'स तु वर्षति०' पद्ये रत्नवर्षणेति विशेषणं वर्ण्यस्य राज्ञः स्तुत्यर्थमुपात्तमित्युपपत्तिः। 'वारिदो वारि वर्षति' इति तु पुनरुक्ततया व्यर्थप्रायमुपमानविशेषणं किमिति कविना उपात्तम्? इति शङ्कायाम्—उपमेयस्य (राज्ञः) उत्कर्षार्थम् (स वारि वर्षति, त्वं तु रत्नानि वर्षसि, इति) इदमुपमानविशेषणमुपात्तमित्येवोपपत्तिर्दीयेत। तथा च उपमेयस्योत्कर्षः (वैधर्म्यकृतः) यो हि व्यतिरेकस्वरूपभूतः स यदाऽऽक्षिप्यते तदैव वाच्यस्य (उपमानविशेषणस्य) उपपत्तिरिति कुतो ध्वनित्वम्? 'न मनागपि०' अत्र तु उपमानं चन्द्रः, तद्विशेषणं वा किञ्चिन्नोपात्तम्। राहुग्रासाभाव—निष्कलङ्कत्व—कमलसवर्णत्वेन पाण्डुताऽभावादीनि उपमेयस्य (मुखस्य) विशेषणान्यपि न स्तुत्यर्थमुपात्तानि, अपि तु यथार्थपरिस्थितिप्रकाशकानीति राहुग्रस्त—सकलङ्क—पाण्डिमाक्रान्त—चन्द्रापेक्षया वर्ण्यस्य मुखस्योत्कर्षः स्वतः प्रतीतो भवतीत्यत्र व्यतिरेको व्यङ्ग्य एव।

इदं पुनर्हतयौवनं यातं सत्पुनर्नागच्छतीतीर्ष्याद्यन्तरायपरिहारेण निरन्तरतयैव प्रियेण सह जनुः सफलयितव्यम् । धिगीर्ष्याम् । त्यज प्रियं प्रति मन्युम् । कुरु प्रसादम् । इति प्रियवयस्योपदेशे प्रियं प्रति कोपोपशमाय चन्द्रापेक्षया यौवनस्यापुनरागमनं न्यूनगुणत्वेन विवक्षितमिति न्यूनत्वमपि व्यतिरेकः । रसपोषकतया चास्यापि हृद्यत्वम्' इति । तदुभयमप्यसत् । अस्मिन्हि प्रियहितकारिण्या वचने चन्द्रादप्यधिकगुणत्वमेव विवक्षितम्, न न्यूनगुणत्वम् । चन्द्रो हि पुनःपुनरागमनेन लोके सुलभः । अत एव न तादृशमाहात्म्यशाली । इदं च पुनर्यौवनमपुनरागमनेनातिदुर्लभतरत्वादत्युत्कृष्टमिति मानादिभिरन्तरायैः शठजनश्लाघनीयैर्विदग्धया भवत्या मुधा गमयितुमसांप्रतमिति तावदुपात्तगुणकृतमुत्कृष्टत्वं स्फुटमेव । सकलसुखनिदानत्वाद्यनुपात्तगुणकृतोऽप्युत्कर्षोऽत्र वाक्यार्थपरिपोषाय सहृदयहृदयसरणिमवतरति । अन्यथा किमित्यस्य कदर्ययौवनस्य कृते मया मानादिरंस्यते, यातु नाम यौवनमिति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः । किं च यत्र क्वापि शाब्द उपमेयस्यापकर्षस्तत्रापि स तस्य वाक्यार्थपर्यवसायितयोत्कर्षात्मना परिणमति । यथा—

---

यौवनस्य प्रियावलोकनादिना सफलीकारः स्यादिति भावः । **हतेति** । दुर्भाग्येत्यर्थः । उक्तहेतोरिति भावः । गुणत्वेन तत्त्वेनैव । गमयितुं यौवनमित्यस्यानुषङ्गः । असांप्रतमयुक्तम् । **निदानत्वाद्यनुपात्तेति** । निदानत्वादिरूपो योऽनुपात्तो गुणस्तत्कृत इत्यर्थः । **अन्यथेति** । उपात्तानुपात्तगुणकृतोत्कर्षानङ्गीकार इत्यर्थः । अस्य पुष्टतापत्तेरित्यत्रान्वयः । **स तस्येति** । उपमेयस्योत्कर्ष इत्यर्थः । 'वाक्यार्थपरिपोषकतयो-

---

१ नन्वित्यादिनाऽऽरभ्यमाणस्य प्रघट्टकस्यास्यायमाशयः—उपमेयस्य न्यूनगुणत्वमहृद्यम् । ततश्च यौवनस्य ( वर्ण्यस्य ) चन्द्रापेक्षया अधिकगुणत्वं विवक्षितम, वक्तुमुचितं च । इह तु न्यूनगुणत्वमेव वर्ण्यस्य प्रोक्तम्, यतो हि चन्द्रः ( उपमानम् ) क्षीणोपि पुनर्वर्धते । इदं तु क्षीणं न पुनर्निवर्तते इति पुनरभिवृद्धेरभावान्न्यूनगुणत्वमेवेति विमर्शिनीकारस्य शङ्का । अपुनरागमनरूपा गुणकृतन्यूनतापि रसपरिपोषकतया हृद्यैवेति न्यूनत्वेऽपि व्यतिरेक उचित एवेति तत्समाधानम् ।

इदमपुनरागमनं न गुणन्यूनता, अपि तु यौवनं न पुनः परावर्तीति अतिदुर्लभतया अत्यन्तं कामनीयत्वेनाऽत्युत्कृष्टत्वमेव । अत एव न्यूनगुणत्वकथनम्, एकमसत् । एतादृशं न्यूनगुणत्वमेव रसपरिपोषाय, इत्यपि न । अनुपात्तैः सुखनिदानत्वादिगुणैरपि यौवनस्योत्कर्षो रसस्य परिपोषायेति, द्वितीयमसत् । इति पण्डितराजाशयः ।

'द्रोहो निरागसां लोके हीनो हालाहलादपि ।
अयं हन्ति कुलं साग्रं भोक्तारं केवलं तु सः ॥'

अत्र हीन इत्यपकर्षो दारुणताधिक्यरूपोत्कर्षात्मना परिणमति ।

एवम्

'इन्दुस्तु परमोत्कृष्टो यः क्षीणो वर्धते मुहुः ।
धिगिदं यौवनं तन्वि क्षीणं न पुनरेति यत् ॥'

इत्यादावुपात्तस्यापुनरावर्तित्वस्य तद्धर्मस्य मानप्रतिकूलतया द्वेषेणैव धिक्कारादिकथनम्, न तु वास्तवापकर्षेण, दुर्लभत्वस्य प्रियसमागमोल्लासकत्वस्य चोत्कर्षस्य स्फुटत्वात् ।

यदपि कुवलयानन्दकृतालंकारसर्वस्वोक्तार्थानुवादकेन न्यूनतायामुदाहृतम्—

"–'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

अत्र सशोकत्वेनाशोकापेक्षयापकर्षः पर्यवस्यति" इति, तदपि चिन्त्यम् । रत्याद्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसारणं यथा शोभाविशेषाय भवति, एवं प्रकृते उपमालंकारदूरीकरणमात्रमेव रसानुगुणतया रमणीयम्, न

त्कर्षात्मना' इति पाठः । अयं द्रोहः । स हालाहलः । हालाहलोऽस्त्री' इति कोषात्पुंस्त्वमपि । तद्धर्मस्य यौवनधर्मस्य । **रक्त इति** । सीतापहारोत्तरं श्रीरामस्याशोकतरुं प्रतीयमुक्तिः । रक्तो रक्तवर्णः अनुरक्तश्च । शिलीमुखा बाणा भ्रमराश्च । **कान्तापादेति** । कामिनीपादाघातेनाशोकस्य पुष्पोद्गम इति प्रसिद्धिः । नायके तु पद्माख्यबन्धाभिप्रायेण । तदुक्तम्—'धृतैकपादा जघने कुर्वत्यन्यपदाहतिम् । शनैः शनैर्निधुवने पद्मबन्धस्तदा मतः ॥' इति । **रत्याद्यनुकूलतयेति** । अत्रेदं चिन्त्यम्—उपमानाद्युपमेये वर्ण्यमानं वैलक्षण्यमेव गुणाधिक्यकृतं व्यतिरेकः । तच्च क्वचिदुपमेयोत्कर्षपर्यवसायि, क्वचित्तदपकर्षपर्यवसायि, क्वचित्तदनुभयपर्यवसायि, । आधिक्यन्यूनत्व-

१ निरपराधानां द्रोहः ।

व्यतिरेकः । अत एवासमालंकारं प्राञ्चो न मन्यन्ते । अन्यथा तत्रालंकारान्तरतया तत्स्वीकारापत्तेः[1] ।

यथा—

'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ॥'

अत एव ध्वनिकृता सहृदयधुरन्धरेण 'सुकविस्तु रसानुसारेण क्वचिदलंकारसंयोगं क्वचिदलंकारवियोगं च कुर्यात्' इत्युक्त्वा 'रक्तस्त्वं—' इति पद्यं सादृश्यदूरीकरणे उदाजह्रे । अत एव च मम्मटभट्टैः 'आधिक्यमात्रं व्यतिरेकः' इत्युक्तम् । निरस्तं च न्यूनत्वं व्यतिरेके इति । तस्मादुपमानादुपमेयस्योत्कर्ष एव व्यतिरेकालंकारः, नापकर्ष इति स्थितम् । यदि तु न्यूनत्वमपि व्यतिरेक इत्याग्रहस्तदेदमुदाहार्यम्—

'जगत्रयत्राणधृतव्रतस्य क्ष्मातलं केवलमेव रक्षन् ।
कथं समारोहसि हन्त राजन्सहस्रनेत्रस्य तुलां द्विनेत्रः ॥'

अत्र धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु सम इति प्रतीतिकृतविच्छित्तिविशेषादलंकारता । एवं च लक्षणेऽपकर्षोऽप्येवंजातीयो देयः ।

यदपि कुवलयानन्दकृतानुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमुक्तम्—

शब्दावप्युत्कर्षापकर्षपरावेव । तत्रापकर्षपर्यवसायि रक्तस्त्वमित्यत्र । अत्रोपमेये सशोकत्वादिगम्यचेतनत्वसहृदयत्वादिभिः शोकरहितत्वशोकसहितत्वाभ्यां च तत्तद्गुणाधिक्यप्रतीतावपि शोकस्य स्वरूपेणापकृष्टत्वाद्विरहिवाक्यत्वाच्च वरमचेतनत्वमेव सम्यक् । न पुनः प्रियावियोगादिजन्यशोकास्पदचैतन्यादीति प्रतीतिपर्यवसानात् विरहानुगुणकविनिबद्धतात्पर्यविषयकोऽपकर्षः पर्यवस्यति । अत एव प्रियावियोगाद्यपि तुल्यमित्यर्थकमावयोः सर्वं तुल्यमिति वाक्यं चरितार्थम् । एतेन रत्याद्यनुकूलेत्यादि उदाजह्रे इत्यन्तमपास्तम् । सशोकत्ववर्णनेऽपि रक्तत्वादिधर्मैः सादृश्यस्य विप्रलम्भपरिपोषकतया चमत्कारिणः सत्त्वेन तदपह्नवस्य कर्तुमशक्यत्वात् । अन्यथा औन्नत्यादिकृतसादृश्यस्यापि प्रतीत्यनापत्तेः । अलंकारवियोगोदाहरणं तु भुवनत्रितयेऽपीत्यादि बोध्यमिति बोध्यम् । **अन्यथा** । उपमादूरीकरणस्याहृद्यत्वे । एवंजातीयः धर्मान्तरकृतसाम्यसमानाधिकरणः ।

१ उपमाया अभावमात्रेऽपि रक्तस्त्वमित्यत्र यथा व्यतिरेकालंकारस्य स्वीकारस्तथा असमोऽपि स्वीकर्तव्यः स्यात् । मम तु मते उपमाऽभाव एव शोभायै, न पृथगलंकारत्वमिति ।

'दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥'

तत्र निपुणं निरीक्षितमायुष्मता। तथा हि—किमत्रोपमानादुत्कर्षरूपो व्यतिरेकोऽनुभयपर्यवसायी; आहोस्वित्सर्वस्वकारादुक्तदिशापकर्षरूपः। नाद्यः। उत्कर्षप्रयोजकधर्मस्यात्रानुपस्थितेः। न च श्लेषेण[1] दीर्घाक्षरस्योपस्थितिरस्त्येवेति वाच्यम्। तस्योपमानवृत्तित्वेनोपमेयानुत्कर्षकत्वात्। अर्था-

न तु प्रागुक्तः साधारण इति भावः। **दृढतरेति**। कृपणस्य दानकथाशून्यस्य। कृपाणस्य च खड्गस्य। आकारतः तद्रूपदीर्घवर्णात् आकृतेश्च केवलं भेदो वैलक्षण्यम्। प्रकारान्तरेण तु साम्यमेव। तदेवाह दृढतरेत्यादिविशेषणत्रयेण। धनव्ययवैमुख्येन दृढतरं निबद्धा मुष्टिर्येन मुष्टिग्राह्यो भागो यस्येति च। कोषो भाण्डागारः पिधानं च। निषण्णस्योपविष्टस्य स्थितस्य च। सहजेन स्वभावेन मलिनस्य मलिनवेषस्य, अनुज्ज्वलस्येति यावत्। कृष्णवर्णस्य च। अत्रेदं वैलक्षण्यं न न्यूनत्वपर्यवसायि नाप्याधिक्यपर्यवसायि किं तु स्ववैचित्र्यमात्रविश्रान्तमिति भावः। **आयुष्मतेति**। अत्रेदं चिन्त्यम्—श्लेषेऽपि नात्राभेदाध्यवसायः सर्वदामाधव इतिवत्। किं तु परस्परान्वितयैव दीर्घाक्षरादवयवसंस्थानाच्च भेद इत्यर्थद्वयमितरान्वयि। किं चाभेदाध्यवसायेऽपि नास्य साधारण्यम्। भेदशब्देन तस्य तिरस्कारेणोपमानिष्पादकत्वाभावेन सकलकलमित्यादिवैलक्षण्यात्। यदपि तस्योपमानवृत्तित्वेनेत्यादि, तदपि न। उपमानत्वं हि सादृश्यप्रतियोगित्वम्। तच्च प्रतीपालंकारविधया कृपाणस्यास्त्येव। दीर्घाक्षरत्वरूपगुणस्याधिक्यस्य तदन्यस्मिन्कृपाणे सत्त्वाच्च। अकलङ्कमुखमदृशो न सकलङ्कश्चन्द्र इत्यादौ व्यतिरेकस्यैवमेव निर्वाह्यत्वात्। यदप्यनुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमित्यादि, तदपि न। उत्कर्षापकर्षोभयापर्यवसायीत्यर्थकानुभयपर्यवसायीति तद्ग्रन्थपाठात्। अनुभयपर्यवसायित्वेन चैतदेवोच्यते यत्प्रकृतानुगुणोत्कर्षापकर्षपर्यवसायित्वाभावेन विद्यमानस्यापि व्यतिरेकस्य नालंकारत्वम्, किं तु वस्तुतामात्रमिति। अलंकारश्चात्र गम्योपमैव, कृपणकृपाणयोः श्लेषलब्धाकृतेः दीर्घाक्षराच्च भेदेऽपि इतरत्सर्वं तुल्यमेवेति पर्यवसानात्। तत्कृतचमत्कारस्यैव सत्त्वाच्चेति बोध्यम्। **उपमेयानुत्कर्षेति**। उपमेयोत्कर्षप्रयोजकत्वाभावादित्यर्थः। **अर्थान्तरेणेति**। तस्येत्यस्यानुषङ्गः। स निर्भरः।

१ श्लेषवशाद् आकृति(अवयवसंस्थान)रूपं द्वितीयार्थं वहतो दीर्घाक्षरस्योपस्थित्या उपमेयस्य (कृपणस्य) उत्कर्षः (अवयवसंस्थानतः कृपणो भिन्नः अन्यथा सर्वापि खड्गसमानता, इति) स्यादिति पूर्वपक्षी।

न्तरेणाकृतिरूपेण सह श्लेषमूलकाभेदाध्यवसायेन साधारणीकरणाच्च[1] । अन्यथा[2] श्लेषमूलकोपमोच्छेदापत्तेः । 'चन्द्रबिम्बमिव नगरं सकलकलम्' इत्यादावपि कलकलसहितत्व—कलासाकल्ययोर्वस्तुतो वैधर्म्यरूपत्वात् । न च सकलकलमित्यत्रोपमायामेव कवेर्निर्भरः, प्रकृते तु भेदशब्दोक्त्या वैलक्षण्ये स इति भ्रमितव्यम् । यद्यत्रोपमाविघटनरूपो व्यतिरेको निर्भरसहः स्यात् आकारशब्दश्लेषोऽनर्थकः स्यात् । कृपणस्य कृपाणस्य भेदो दीर्घाक्षरादेवेत्येव ब्रूयात् । न ह्यत्र व्यतिरेके श्लेषोऽनुकूलः । प्रत्युत प्रतिकूल[3] एव । उपमायां पुनरनुकूलः । प्रतिकूलस्य दीर्घाक्षररूपवैधर्म्यस्य साधारणीकरणात् आकृतिभेदस्य चोपमानोपमेययोरपि सत्त्वात् । एवं हि कवेराशयः—यत्कृपणकृपाणयोस्तुल्यतैव । दृढतरेत्यादिविशेषणसाम्यात् । अक्षरभेदस्त्वाकारभेदत्वादविरुद्ध एवेति सहृदयैराकलनीयम् ।

न द्वितीयः । तस्योक्तिमात्रेणाप्यसंगतेः, अहृद्यत्वाच्च । तस्मादत्र गम्योपमैव सुप्रतिष्ठितेत्यास्तां कूटकार्षापणोद्घाटनम् । प्रकृतमनुसरामः ।

अलंकारान्तरोत्थापितोऽप्ययं संभवति । यथा—

---

**उपमायामिति** । अत्रेत्यस्यानुषङ्गः । **कूटेति** । मिथ्याकार्षापणेत्यर्थः । **अलंकारान्तरोत्थापीति** । श्लेषान्यालंकारोत्थापितोऽपीत्यर्थः । अयं व्यतिरेकः । **अत्रेति** ।

---

१ ननु 'आकारतः' इति उत्कर्षप्रयोजको धर्मः उपमान( कृपाण )वृत्तिः । कथमनेन उपमेयोत्कर्ष इति पूर्वं समाधातुं चेष्टितम् । दृश्यतामाकृतिरूपो धर्मस्तु उपमेयवृत्तिरेव । ततश्च स्यादनेन उपमेयोत्कर्ष इति चेत् । समाधत्ते—श्लेषमूलकाभे०—इत्यादि । अयं भावः—आकारपदेन श्लेषवशात् आकृतिः दीर्घाक्षरं चेत्युभयं गृह्यते । ततश्च श्लेषमूलकेन अभेदाध्यवसायेन दीर्घाक्षररूपोऽर्थः आकृतिरूपार्थेन सह अभिन्नत्वेनाध्यवसितः । एवं च उपमेयोपमानधर्मयोः साधारणतया उत्कर्षप्रयोजकधर्मस्य उपमेयनिष्ठता कथं वक्तुं शक्या ?

२ यदि श्लेषमूलकोऽभेदाध्यवसायो न स्वीक्रियेत तर्हि 'सकलकलम्' इत्यादौ विजातीययोरर्थयोः साधारणधर्मत्वाभावे उपमा कथं स्यात् ।

३ उभयोर्भेदबोधनार्थं केवलं दीर्घाक्षरादित्येव वक्तव्यं पर्याप्तम् । 'आकृतिः दीर्घाक्षरं च' इति श्लेषस्तु उपमायामेवानुकूलः । यतो हि 'आकारतः' इति पदेन दीर्घाक्षरम्, आकृतिश्चेत्युभयं गृह्यते । तत्र अवयवसंस्थानं तु उभय(उपमानोपमेय)निष्ठमस्त्येव । दीर्घाक्षरं तु श्लेषमूलकाभेदाध्यवसायेन पूर्वविधया साधारणीकृतमित्युपमासिद्धिः ।

'ईश्वरेण[1] समो ब्रह्मा पिता साक्षान्महेश्वरः।
पार्वत्या[2] सदृशी लक्ष्मीर्माता मातुः समा भुवि॥
पितास्य[3] काष्ठसदृशः स्वयं पावकसंनिभः॥'

अत्र रूप[4]कानन्वयोपमा उपमेयोत्कर्षस्योपमा एवोपमानापकर्षस्य च हेतवः।

अस्य चालंकारस्य सादृश्यगर्भत्वात् सादृश्यस्य च त्रिविधधर्मोत्थापितत्वात् अत्रापि तत्प्रकारानुगमो बोध्यः। तत्रानुगामिनि धर्मे यथा—

'अरुणमपि विद्रुमद्रुं मृदुलतरं चापि किसलयं बाले।
अधरीकरोति नितरां तवाधरो मधुरिमातिशयात्॥'

अत्रारुण्यम्रदिमानावनुगामिनौ।

बिम्बप्रतिबिम्बभावापन्ने यथा—'जलजं ललितविकासं सुन्दरहासं तवाननं हसति'। अत्र हासविकासयोर्बिम्बप्रतिबिम्बभावः, लालित्यसौन्दर्ययोः शुद्धसामान्यता। श्लेषोपात्तं जडजत्वं स्वाश्रयापकर्ष

रूपकोपमा आद्यार्धे उपमेयस्य पितुरुत्कर्षिका। द्वितीयार्धेऽनन्वयोपमा तादृशमातुस्तथा। तृतीयार्धे शुद्धोपमैव तादृशस्य पितुः स्वस्य चापकर्षिकेत्यर्थः। **उपमा एवेति**। एवेन रूपकादिव्यावृत्तिः। **त्रिविधेति**। अनुगामिबिम्बप्रतिबिम्बभावापन्नशुद्धसामान्यरूपेत्यर्थः। तृतीयस्यापीदमेवोदाहरणमित्याह—**लालित्येति**। **स्वाश्र-**

१ ब्रह्मा तु ईश्वर(शिव)सादृश्यवाही एव, पिता तु साक्षात् शिवः। इति वर्ण्ये (पितरि) उत्कर्षः, उपमाने (ब्रह्मणि) चापकर्ष इति संभूय व्यतिरेकः।

२ लक्ष्म्यां तु पार्वत्याः सादृश्यं वर्तते, माता तु अनुपमेति वर्णीया मातुरुत्कर्षः, उपमानस्य (लक्ष्म्याः) अपकर्ष इति व्यतिरेकः।

३ अस्य पिता काष्ठसदृशः, स्वयमयं तु पावकसदृशः, अत्र उपमेयस्य (पितुः स्वस्य च) उत्कर्षः, उपमानस्य (काष्ठस्य पावकस्य च) अपकर्षः।

४ उपरिप्रोक्तस्य समन्वयमाह—अत्र त्रिषु पद्यार्धेषु अन्तिमेष्वष्टाक्षरेषु यथाक्रममुपात्ताः रूपकम्, अनन्वयः, उपमा चेति (श्लेषान्यालंकाराः) उपमेयोत्कर्षस्य हेतवः। आदिमेष्वष्टाक्षरेषु परिगृहीता उपमाश्च उपमानापकर्षस्य हेतवः, इति। अत्र नागेशटीका तु मूलविसंवादाद्विचार्यैव।

एवं सादृश्यनिषेधालीढो[1] व्यतिरेको निरूपितः । अभेदालीढोऽप्येष संभवति यथा—

'निष्कलङ्क निरातङ्क चतुःषष्टिकलाधर ।
सदापूर्ण महीप त्वं चन्द्रोऽसीति मृषा वचः ॥'

इति रसगङ्गाधरे व्यतिरेकप्रकरणम् ।

अथ सहोक्तिः—

**गुणप्रधानभावावच्छिन्नसहार्थसंबन्धः सहोक्तिः ॥**

हृद्यत्वं चालंकारसामान्यलक्षणागतं सकलालंकारसाधारणमेवेत्यसकृदुक्तम् । तच्चात्र कार्यकारणपौर्वापर्यविपर्ययात्मिकया श्लेषभित्तिकाभेदाध्यवसानात्मिकया केवलाभेदाध्यवसानात्मिकया चातिशयोक्त्याऽनुप्राणने भवतीति वदन्ति[2] ।

'अनुकूलभावमथवा[3] पराङ्मुखत्वं सहैव नरलोके ।
अन्योन्यविहितमन्त्रौ विधिदिल्लीवल्लभौ वहतः ॥'

इत्यादावतिप्रसङ्गवारणायावच्छिन्नान्तम् ।

उदाहरणम्—

'केशैर्वधूनामथ सर्वकोपैः प्राणैश्च साकं प्रतिभूपतीनाम् ।
त्वया रणे निष्करुणेन राजंश्चापस्य जीवा चकृपे जवेन ॥'

**येति** । कमलेत्यर्थः । 'अभेदनिषेधालीढोऽपि' इति पाठः । **यथेति** । चन्द्रस्तु सकलङ्कः उपरागे सातङ्कः षोडशकलः सदा न पूर्ण इति व्यतिरेकः ॥ इति रसगङ्गाधरमर्मप्रकाशे व्यतिरेकप्रकरणम् ॥

सहोक्तिं लक्षयति—**अथेति । गुणेति** । गुणप्रधानभावावच्छिन्नयोरर्थयोः सहार्थसंबन्ध इत्यर्थः । तच्च हृद्यत्वं च **श्लेषेति** । श्लेषमूलकेत्यर्थः । **केवलेति** । निगीर्याध्यवसानरूपयेत्यर्थः । अतिशयोक्त्या तत्सहकारेण । अन्वयानुयोगिना इति शेषः । अनुप्राणने पोषणे । **अन्योन्येति** । अन्योन्यं विहितो मन्त्रो विचारो याभ्यां तौ । अदृष्टदिल्लीशावित्यर्थः । अत्र तादृशार्थसंबन्धसत्त्वेऽपि तयोः समप्राधान्येन गुणप्रधानभावाभाव इति भावः । प्रतिभूपतीनामित्यस्य त्रिषु संबन्धः । जीवा प्रत्यञ्चा । ननु विपर्यय एव

१ पूर्वेषु उदाहरणेषु (अरुणोऽपि विद्रुमद्रुमः तवाधरसदृशो नास्तीति) सादृश्यनिषेधसंबद्धोयम् । 'निष्कलङ्क०' इत्यादौ तु निष्कलङ्कनिरातङ्कचतुःषष्टिकलाधराभिन्नस्त्वम् । अत एव तद्धर्मरहितचन्द्राभिन्नस्त्वमिति अभेदसंबद्धोयं भवतीत्याशयः ।

२ प्राचीनानामिदमभिमतं न ममेत्यग्रे करिष्यमाणं खण्डनं मण्डयति ।

३ कुत्रचित्पुरुषे अनुकूलभावं कस्मिंश्च पराङ्मुखत्वं द्वावपि सहैव वहत इति योजना ।

अत्र चापाकर्षणकार्याणां केशाकर्षणादीनां पौर्वापर्यविपर्ययेणानुप्राणितः सहभावः, निष्करुणत्वेन[1] च पौर्वापर्यविपर्ययः।

यथा वा—

'भाग्येन सह रिपूणामुत्तिष्ठसि विष्टरात्क्रुधाविष्टः।
सहसैव पतसि तेषु क्षितिशासनमृत्युना साकम्॥'

पूर्वं तु कर्मणः सहोक्तिः, इह कर्तुरिति[2] भेदः।

'त्वयि कुपिते रिपुमण्डलखण्डनपाण्डित्यसंपदुद्दण्डे[3]।
गिरिगहनेऽरिवधूनां दिवसैः सह लोचनानि वर्षन्ति॥'

अत्र वर्षण-वर्षवदाचरणयोः श्लेषेणाभेदाध्यवसितिः।

यथा वा—

'बहु मन्यामहे राजन्न वयं भवतः कृतिम्।
विपद्भिः सह दीयन्ते संपदो भवता यतः॥'

पूर्वा कर्तृसहोक्तिः, इयं तु कर्मसहोक्तिर्व्याजस्तुतिसंवलिता।

'पद्मपत्रैर्नृणां नेत्रैः सह लोकत्रयश्रिया।
उन्मीलन्तो निमीलन्तो जयन्ति सवितुः कराः॥'

अत्रोन्मीलननिमीलनयोः पद्मपत्राद्याश्रयभेदेन भिन्नयोरपि[4] प्रकटत्वाप्रक-

कथमत आह—**निष्केति**। 'क्रुधाविष्ट' इति पाठः। 'क्रोधाविष्टः' इत्यपपाठः। तेषु रिपुषु। **क्षितिशासनेति**। द्वितीयभेदोदाहरणमाह—**त्वयीति**। कृतिं क्रियाम्। अत्र शत्रूणां विपन्मित्राणां संपदिति बोध्यम्। तृतीयभेदोदाहरणमाह—**पद्मेति**। कराः किरणाः। **प्रकटेति**। उन्मीलनपदार्थप्रकटत्वादिरूपैकोपाधिवैशिष्ट्येनाभिन्नी-

१ पौर्वापर्यविपर्ययं प्रति च निष्करुणत्वम् (निर्दयतया तथा शीघ्रं प्रत्यञ्चामाचकर्षिथ यथा वैरिवधूनां वैधव्यादिकं सहैव जातम्) हेतुरित्याशयः।

२ राजोत्थानपतनकार्ययोः भाग्योत्थानमृत्युपतनयोः पौर्वापर्यविपर्ययेण सहभावस्यानुप्राणनं तु पूर्ववदिति बोध्यम्।

३ संपदुद्दण्डेति संबोधनान्तः काशीपुस्तकपाठः।

४ सूर्यकिरणानामुन्मीलन-निमीलने वियति प्रसरण-संकुचनरूपे। पद्मपत्र-नेत्रादीनां तु विकास-संपुटीभावादिरूपे। अत एव मिथो भिन्ने। तथापि किरणोन्मीलन-निमीलनाभ्याम् (शब्दोपात्ताभ्याम्) एकोपाध्यवच्छिन्नतया पद्मपत्राद्युन्मीलन-निमीलने अपि अभिन्नतयाऽध्य-

टत्वाद्येकोपाध्यवच्छिन्नतयाऽभिन्नीकृतयोरुपादानमित्यस्त्येकक्रियासंबन्धः । अत एव न श्लेषः । तस्य प्रतिपाद्यतावच्छेदक[1]भेद एव स्वीकारात् । एषूदाहरणेषु सहयोगतृतीयाप्रयुक्तो गुणप्रधानभावः । प्राधान्येन क्रियान्वये तु यथायथं तुल्ययोगिता दीपकं वा भवति ।

सहादिशब्दप्रयोगाभावेऽप्येषा संभवति । 'वृद्धो यूना—' इति निर्देशेन तृतीयायाः साम्राज्यात् । परं त्विवादिशब्दरहितोत्प्रेक्षादिवद्गम्या । अप्रधानभावस्तु शाब्द एव । ननु कथमप्रधानभावः शाब्द इत्युच्यते ? यावता आर्थः क्रियाद्यन्वयितारूपः स स्यात् पदार्थान्तररूपो वा । उभयथाप्यस्य वाचकशब्दाभावादशाब्द[2]त्वमेवेति चेत् न । अस्ति तावत्सखण्डमखण्डं वा प्रधानत्वम् । यद्वशात् अयमस्मिन्नगरे प्रधानं मुख्य इत्यादयो

---

कृतयोरित्यर्थः । आदिना निमीलनपदार्थाऽप्रकटत्वपरिग्रहः । अत एवेत्यस्यार्थमाह— **तस्येति** । श्लेषस्येत्यर्थः । एवं च निगीर्याध्यवसानरूपातिशयोक्तेरयं विषय इति भावः । **प्राधान्येनेति** । द्वयोरित्यादिः । **यथायथमिति** । प्रकृतत्वमात्रादौ प्रकृताप्रकृतत्वे वेत्यर्थः । एषा सहोक्तिः । **निर्देशेति** । अर्थयोगे तृतीया न तु शब्दयोगे इत्यनेन ज्ञापनादिति भावः । **गम्येति** । सहोक्तिरिति शेषः । **शाब्द एवेति** । तत्प्रयोगाभावेऽपीति भावः । यावता यस्मात् । सः अप्रधानभावः । **पदार्थान्तरेति** । अखण्डेत्यर्थः । **चेन्नेति** । तथानङ्गीकारादिति शेषः । तमेवाह—**अस्तीत्यादिना** । **सखण्डमिति** । विशेष्यताख्यविषयतया प्रतीयमानत्वरूपस्येति तस्येत्यर्थः । अप्रधानत्वस्येति तदर्थः । शाब्दक्रियान्वयित्वरूपं वेत्यर्थः । तदभावेऽपि तत्प्रतीतेराह—**अखण्डं वेति** । अनुभवबलादेव वैपरीत्यं नेति भावः । तदाह—**यद्वशादिति** । 'अप्रधानत्वे सहयुक्ते'

---

वसिते । अत एव केवलाऽभेदाध्यवसानात्मिकातिशयोक्त्यनुप्राणनकृतस्य तृतीयभेदस्योदाहरणम् । अत्र हि श्लेषाभावात् केवलभेदाध्यवसानमिति व्यपदेशः । केवलाऽभेदाध्यवसानस्थले निगीर्याध्यवसानपदेन निगरणविवरणं तु नागेशमहोदयस्य प्रमाद एव । "वर्धन्त्युन्मीलन्तो निमीलन्तः इत्यादिष्वेकेनाऽपरनिगरणाभावान्नातिशयोक्तिगन्धोपि" इत्यग्रिमग्रन्थेन प्रबलतया निगरणव्यक्करणात् ।

१ अत्र तु अवच्छेदकयोः उन्मीलनत्व–निमीलनत्वयोः पूर्वविषया अभेद एवेत्याशयः ।

२ क्रियादिभिः सह अन्वये प्रधानत्वात् ( विशेष्यत्वात् ) [ विशेष्यताख्यविषयतया प्रतीयमानत्वम् ] प्रधानत्वं सखण्डम् । पदान्तररूपम् अखण्डं वा प्रधानत्वम् । तदभावः अप्रधानत्वमित्युभयथापि अर्थगम्य एवाऽप्रधानभावः, न तु शब्दवाच्य इति शङ्का ।

व्यवहारा आ पामरमुल्लसन्ति। तदभावरूपे चाप्रधानत्वे 'सहयुक्तेऽप्रधाने' इति शास्त्रेण तृतीयायाः शक्तेर्बोधनात्तस्य कथमशाब्दत्वम्। न च सहार्थेन युक्ते वस्तुतोऽप्रधाने तृतीयेति तस्यार्थः न त्वप्रधानेऽर्थे वाच्ये इति। तथा च नोक्तार्थसिद्धिरिति वाच्यम्। एवं चाप्रधानग्रहणवैयर्थ्यापत्तेः। 'पुत्रेण सहागतः पिता' इत्यादौ पित्रादिभ्योऽन्तरङ्गत्वात्प्रथमोत्पत्तेरेवौचित्यात्। 'पुत्रेण सह पितुरागमनम्' इत्यादौ कारकविभक्तेः प्राबल्याच्च। अन्यथा 'षष्ठी शेषे'इत्यत्रापि विशेषणग्रहणापत्तेः। तस्माद्यथा

---

इति पाठः। 'अप्रधानत्वेऽप्राधान्येन सह' इत्यपपाठः। वक्ष्यमाणग्रन्थविरोधात्। नन्वेवमपि प्रथमाया अविषये दोष एव। अत आह—**पुत्रेणेति**। **कारकेति**। षष्ठ्या इत्यर्थः। नन्वेवमप्युक्तार्थतात्पर्यग्राहकत्वेन तदावश्यकमत आह—**अन्यथेति**। एवमपि तदङ्गीकारे। **आपत्तेरिति**। विशेष्ये षष्ठीवारणतात्पर्यग्राहकत्वेनेति भावः। उपसंहरति—**तस्मादिति**। तत्र हेतुतृतीयायाम्। नन्वप्रधाने इत्युक्तेः समप्रधानत्वे

---

१ मुख्यत्वाभावरूपे अप्रधानत्वे 'सहयुक्ते०' इत्यनेन तृतीया विधीयते [ तृतीयायाः शक्तिर्बोध्यते ], इत्यप्रधानत्वस्य बोधिका तृतीया विभक्तिरिति अप्रधानत्वं शाब्दम् ( शब्दबोध्यम् ) एव संपन्नमिति समाधानम्।

२ अप्रधाने पुत्रादौ [ अप्रधान(पुत्रादि)शब्दोत्तरम् ] तृतीया स्यादित्यर्थः, न त्वप्रधानेऽर्थे वाच्ये इति। एवं च तृतीया विभक्तिः अप्रधानत्वस्य शक्तेर्बोधिकेति न वक्तुं शक्यमिति पूर्वपक्षः।

३ यद्ययमर्थः स्यात्तर्हि सूत्रे अप्रधानग्रहणं व्यर्थम्। ननु 'सहयुक्ते (तृतीया)' एतावन्मात्रोक्तौ सहार्थाऽन्विते पित्रादौ तृतीया मा भूदिति अप्रधानग्रहणम्। किंतु पित्रादिशब्देभ्यः अन्तरङ्गत्वात् प्रथमैव स्यात्, न तृतीयेति प्रधाने तृतीयावारणाय अप्रधानग्रहणं व्यर्थं स्यात्। तस्मात् 'अप्रधानत्वेऽर्थे वाच्ये तृतीया' इत्येव तदर्थ इति तत्समाधानम्।

४ ननु प्रधाने पित्रादौ यत्र अन्तरङ्गत्वात्प्रथमाप्राप्तिस्तत्र निर्वाहेऽपि 'पुत्रेण सह पितुरागमनम्' अत्र प्रथमाविभक्तेरविषयात् अप्रधानग्रहणाभावे प्रधाने पित्रादौ तृतीया केन वार्यतामित्याह—कारकविभक्तेः०—सहार्थतृतीया उपपदविभक्तिः, कर्तृकर्मणोरिति षष्ठी च कारकविभक्तिरिति प्राबल्यात् ( उपपदविभक्तेः कारकविभक्तिर्बलीयसी ) पितृशब्दात् कारकविभक्तिः ( षष्ठी ) एव स्यादिति तत्राप्यर्थसिद्धिः।

५ अप्रधानग्रहणस्य वैयर्थ्यभयात् 'अप्रधानत्वे वाच्ये तृतीया' इत्यर्थकल्पना तावन्न सिध्येत्। पूर्वोक्तार्थे तात्पर्यग्राहकतयैव अप्रधानग्रहणस्य सार्थक्यम्, न तु तदृयर्थमिति चेदाह—षष्ठी शेषे० अयं भावः—संबन्धो द्विनिष्ठो भवति। ततश्च 'राज्ञः पुरुषः' इत्यादौ विशेषणात् राजादिपदादेव षष्ठी भवेत्, न तु विशेष्यात् पुरुषादिपदात् इति तात्पर्यग्राहकतया अत्र सूत्रेपि विशेषणग्रहणं कर्तव्यं स्यात्। तस्मात्तात्पर्यग्राहकतया 'अप्रधान'ग्रहणमिति समाधानाभासो न फलेग्रहिरित्याशयः।

'हेतौ तृतीया' इत्यादिशास्त्रं हेतुशक्तिग्राहकमेवं 'सहयुक्तेऽप्रधाने' इत्यप्रधानशक्तिग्राहकम्। यथैव तत्र प्रकृत्यर्थस्याभेदेन[1] विभक्त्यर्थेऽन्वयस्तथेहापि शक्यो वक्तुम्। धर्मिशक्तावपि[2] कर्मत्वादीनामिवाप्राधान्यस्यापि शाब्दत्वमव्याहतमेव। षष्ठीस्थले[3] तु विशेषणशब्दाभावान्नैवमिति स्फुटमेव वैलक्षण्यम्। एतेन 'अप्रधानग्रहणं शक्यमकर्तुम्' इति वदन्तो मनोरमाकाराः परास्ताः। उक्तप्रकारेण सार्थक्यसिद्धौ मुनिवचनस्य वैयर्थ्यकल्पनाया अन्याय्यत्वात्।

'न च पुत्रेण सहागतः पिता' इत्यादौ पुत्राभिन्नाप्रधानसहित इति बोधस्याप्रामाणिकत्वान्नोक्तार्थसिद्धिरिति वाच्यम्। 'दण्डेन घटः' इत्यादौ दण्डजन्यतावान् घट इति हि सर्वजनीने बोधे 'हेतौ तृतीया' इति मुनिवचनावलम्बेन दण्डाभिन्नहेतुको घटः इति बोधं वदता भवतैवास्याः सरणेर्दर्शितत्वात्। 'भावप्रधानमाख्यातं' इत्याद्यनेकैर्मुनिवचनैस्तत्र तत्र त्वत्कृतबोधवैपरीत्यस्यानुपपत्तेश्चेति[4] कृतमप्रसक्तविचारेण।

शक्तिरिति धर्मिणः शाब्दत्वं न तस्येति प्रागुक्तं विरुध्येत अत आह—**षष्ठीति**। एतेनेत्यस्यार्थमाह—**उक्तेति**। **कृतमिति**। अत्रेदं सर्वं चिन्त्यम्। अप्रधानग्रहणप्रत्याख्यानपरभाष्यविरोधापत्तेः अप्रधानभृत्यैः सह गतो राजेत्यत्र तृतीयानापत्तेश्च। राज्ञा सह सेना गच्छतीत्यादौ तृतीयापत्तेश्च अन्तरङ्गत्वस्य दुर्वचत्वेन तथोक्तेरसांगत्याच्च। बोधस्या-

१ तथा च 'अध्ययनेन वसति' इत्यादौ 'अध्ययनाभिन्नहेतुको वासः' इत्यादिर्बोधः। 'पुत्रेण सहागतः पिता' अत्र तु 'पुत्राऽभिन्नाप्रधानसहितो भूतकालिकागमनानुकूलव्यापाराश्रयः पिता' इति बोधः।

२ ननु अप्रधाने तृतीया इत्युक्त्या अप्रधाने (धर्मिणि) तृतीयायाः शक्तेर्बोधः, न तु अप्रधानत्वे (धर्मे)। भवता च पूर्वमुक्तम्—''अप्रधानत्वे—'सहयुक्तेऽप्रधाने' इति शास्त्रेण तृतीयायाः शक्तेर्बोधनात्तस्य (अप्रधानत्वस्य) कथमशाब्दत्वम्'' इति। चेदाह—धर्मिशक्तावपीति।

३ ननु अत्र 'अप्रधाने अर्थे वाच्ये तृतीया' इति यथा अर्थस्तथा षष्ठीस्थलेऽपि 'विशेषणे षष्ठी भवती'त्यस्य विशेषणत्वे वाच्ये षष्ठी भवतीत्यर्थेन विशेषणस्य शाब्दत्वं व्यपदिश्यतामिति शङ्कायामाह—षष्ठीस्थले०। अत्र यथा 'अप्रधाने' इति शब्दोपात्तस्तथा तत्र विशेषणशब्दो नोपात्तः, अपि तु अर्थाक्षेप्य एवेति न साम्यमित्याशयः।

४ असद्दर्शितबोधस्याऽप्रामाणिकत्वमत्राऽऽशङ्क्यते, किन्तु स्थाने स्थाने भवद्दर्शितबोधवैपरीत्यं मुनिवचनेभ्य इति प्रतिबन्दिविधयाऽऽह—'भावप्रधानमाख्यातम्०'।

प्रकृतत्वाप्रकृतत्वे प्रायेणोपमेयतोपमानतयोर्निर्णायके इत्युक्तत्वादिह न ताभ्यां तयोर्निर्णयः, प्रकृतयोरपि साहित्यसंभवात्। किं तु प्राधान्याप्राधान्याभ्यामिति। हृद्यत्वं चास्या अतिशयोक्तिकृतमित्युक्तम्। यत्र तु सा नास्ति तत्र 'पुत्रेण सहागतः पिता' इत्यादौ न सहोक्तिरलंकारः।

अत्र विचार्यते—'केशैर्वधूनां' इत्यादौ पौर्वापर्यविपर्ययानुप्राणिता सहोक्तिरलंकार इति न युक्तम्। अतिशयोक्तेरेवात्र चमत्कृत्याधायकत्वेन सहोक्तेर्नाममात्रत्वात्। 'तव कोपोऽरिनाशश्च जायते युगपन्नृप' इत्यस्मादतिशयोक्त्यलंकारात् 'तव कोपोऽरिनाशेन सहैव नृप जायते' इत्यत्र गुणभावमात्रकृतवैलक्षण्येऽपि विच्छित्तेरविशेषात् तस्यैव चालंकारविभाजकत्वात्। न च सादृश्यानुप्राणितस्य रूपकादेरप्यपृथग्भावापत्तिः। 'निशाकरसमानोऽयमयं साक्षान्निशाकरः' इत्यादौ विच्छित्तिवैलक्षण्यस्य जागरूकत्वात्। अन्यथा तत्प्रयुक्तस्य व्यतिरेकस्यानुत्थानापत्तेः। अपि च सादृश्यप्रयुक्तरूपकादिषु सादृश्यस्य गुणत्वाच्चमत्कृतिविश्रान्तिधामभ्यो रूपकादिभ्यो यथा न पृथग्व्यपदेश्यत्वं तथा सहभावोक्त्याविर्भूतायाः कार्यकारणपौर्वापर्यविपर्ययात्मिकाया अतिशयोक्तेः सकाशादस्याः सहोक्तेरपृथग्भाव एवोचितः।

नन्वेवं सति सहोक्तेर्निर्विषयत्वं स्यात्। सहोक्त्यन्तरस्याप्यभेदाध्यवसानरूपातिशयेन कवलीकारादिति चेत्, न। अभेदाध्यवसानमूलायां हि

न्यथा इष्यमाणत्वाच्च। सहोक्तिलक्षणं च यत्रैकस्य शाब्दः क्रियान्वयोऽपरस्य सहार्थबलादार्थः सा सहोक्तिरिति काव्यप्रकाशकृतामेवमेवोक्तिः। स्पष्टं चेदं सर्वं मञ्जूषायाम्। संभवादिति अत एव प्रायेणेत्युक्तम्। **किं तु प्राधान्येति**। प्रधानमुपमेयमप्रधानमुपमानमिति बोध्यम्। इतीत्यस्य बोध्यमिति शेषः। अस्याः सहोक्तेः। सा अतिशयोक्तिः। **अतिशयोक्तेरिति**। उक्तरूपेत्यादिः। एवमग्रेऽपि। विच्छित्तेश्चमत्कृतेः। तस्यैव विच्छित्तिविशेषस्यैव। **अपृथगिति**। उपमात इत्यादिः। **इत्यादाविति**। मिथ इति शेषः। अन्यथा तद्वैलक्षण्येऽप्यपृथग्भावे। **तत्प्रयुक्तस्य व्यतिरेकस्येति**। निशाकरसमानत्वेन वर्णितापेक्षया साक्षान्निशाकरत्वेन वर्णिते भासमानस्य साक्षान्निशाकरत्ववर्णनप्रयुक्तस्य व्यतिरेकस्येत्यर्थः। **सहभावोक्त्याविरिति**। अनेनास्य गुणत्वं दर्शितम्। **अभेदाध्यवसानेति**। इदमुपलक्षणं श्लेषमूलाभेदाध्यवसानस्यापि। हि यतः। उपस्क्रियते

१ सादृश्यप्रयुक्ते रूपकादौ यथा सादृश्यस्य अलंकारतया न पृथग्व्यपदेश्यत्वम्, एवं सहभावोक्तिवशादुत्पन्नायाः अतिशयोक्तेः सकाशात्सहोक्तेरप्यपृथक्त्वमेवोचितमित्याशयः।

सहोक्तावभेदाध्यवसानेन सहोक्तिरुपस्क्रियत इति न गुणेन प्रधानस्य तिरस्कारः। अपि तु प्रधानेन गुणस्येत्युक्तदिशा सावकाशैव सहोक्तिः। गुणप्रधानभावश्च[1] निराग्रहैः सूक्ष्मदृशावधानीयः। किं च परस्पराभेदाध्यवसानमात्रमतिशय एव; नातिशयोक्तिः। तस्य श्लेषादावपि सत्त्वात्। सा तूपमानेनोपमेयस्य निगरणम्। एवं च 'वर्षन्ति, उन्मीलन्तो निमीलन्तः' इत्यादिष्वेकेनापरनिगरणाभावान्नातिशयोक्तिगन्धोऽपि। अतिशयमात्रं तु प्रायशः साधारणधर्मांशे बहूनामलंकाराणामुपस्कारकम्। नहि 'शोभते चन्द्रवन्मुखं' इत्यादौ चन्द्रमुखशोभयोर्वस्तुतो भिन्नयोरभेदाध्यवसानमन्तरेणोपमा समुल्लसति। तस्मात् 'कार्यकारणपौर्वापर्यविपर्ययमूलः सहोक्तेरेकः प्रकारः' इति सर्वस्वकारादीनामुक्तिराग्रहमूलैव। अभेदाध्यवसानमूलस्तु प्रकारो भवतु नाम सहोक्तेर्विषयः। यदि तु दीपके तुल्ययोगितायां चोपमानोपमेययोः प्राधान्येन क्रियादिरूपधर्मान्वयः' इह तु गुणप्रधानभावेनैवेति विशेषः सन्नपि विच्छित्तिविशेषानाधायकतया नालंकारान्तरताप्रयोजकः, अपि तु तदवान्तरभेदतायाः[2] इति विभाव्यते, निरस्यते च प्राचीनमुखदा-[3]

संस्क्रियते। ननु स्यादेवं यदि सहोक्तेः प्राधान्यमतिशयोक्तेश्च गुणत्वं निश्चितं स्यात्। तदेव तु न वैपरीत्यस्यापि संभवात्। अत आह—**गुणेति**। श्लेषमूलाभेदाध्यवसानमूलायामपि सावकाशत्वमाह—**किं चेति**। तस्य मिथोऽभेदाध्यवसानस्य। सा तु अतिशयोक्तिस्तु। श्लेषोदाहरणमाह—**वर्षन्तीति**। केवलभेदाध्यवसानोदाहरणमाह—**उन्मीलन्त इति**। **एकेनेति**। उपमानेनोपमेयस्येत्यर्थः। गन्धोऽपि लेशोऽपि। नैवमत्रैव किं त्वन्यत्रापीत्याह—**अतीति**। क्वचिदननुगामित्वाभावादाह—**प्रायश इति**। उपसंहरति—**तस्मादिति**। निर्विषयत्वं परिहरति—**अभेदेति**। इदमुपलक्षणं प्राग्वत्। इह तु सहोक्तौ तु। **तदवान्तरेति**। अलंकारावान्तरेत्यर्थः।

१ 'गिरिगहनेऽरिवधूनां दिवसैः सह लोचनानि वर्षन्ति' इत्यादौ दिवसा अपि वर्षन्ति (वर्षवदाचरन्ति) लोचनान्यपि वर्षन्ति इति सहभाव एव चमत्कारकतया विश्रान्तिधाम। वर्षणवर्षवदाचरणयोरभेदाध्यवसानं तु सहोक्तिसाधनीभूततया अप्रधानमिति स्पष्टं स्थूलदृशामपि।

२ अस्माभिः पौर्वापर्यविपर्ययमूलायाः सहोक्तेरतिशयोक्तावेवान्तर्भावो यथा दर्शितस्तत्प्रातिद्वन्द्व्येन भवतापि सहोक्तेर्दीपके तुल्ययोगितायां वा अवान्तरभेदतयाऽन्तर्भावश्चिकीर्ष्यते तर्हि।

३ प्राचीनानुरोधादेव विषमोऽयमङ्गीकृतः पन्थाः। यदि तु प्राचां संकोचः शिथिलीक्रियते तर्हि।

क्षिण्यं तदा निविशतामियमप्युक्तालंकारेष्वेव। किंचिद्वैलक्षण्यमात्रेणैवालंकारभेदे वचनभङ्गीनामानन्त्यादलंकारानन्त्यप्रसङ्गादिति । सत्यम्, गुणप्रधानभावालिङ्गितस्य सहभावस्यालंकारान्तराद्विच्छित्तिविशेषमनुभवन्तः प्राचीना एव सहोक्तेः पृथगलंकारतायां प्रमाणम्। अन्यथा एवंजातीयोपप्लवेन बहु व्याकुलीस्यात् । नैव प्रमाणीकुर्महे वयं मृषा मुकुलितविलोचनान्प्राचः, निवेश्यतां चेयमलंकारान्तरभवनोदरं वराकी इति तु प्रभुतैव केवला। न सहृदयत्वम्।

एवं क्रियायाः साधारणधर्मत्वे इयमुदाहृता। गुणस्य तथात्वे यथा—

'मान्थर्यमाप गमनं सह शैशवेन
रक्तं सहैव मनसाधरबिम्बमासीत्।
किं चाभवन्मृगकिशोरदृशो नितम्बः
सर्वाधिको गुरुरयं सह मन्मथेन ॥'

अत्र यद्यपि क्रियापि गुणेन सह समानधर्मतामनुभवति तथापि तस्या नान्तरीयकत्वेनासुन्दरत्वाद्गुणस्यैव पर्यवसाने समग्रभरसहिष्णुत्वम् । शोणत्वाऽऽसक्तत्वाभ्यामधिकभारत्वोपदेशकर्तृत्वाभ्यां च भिन्नयोरप्युप-

निरस्यते त्यज्यते। दाक्षिण्यं संकोचः। इयमपि अवशिष्टा द्विविधापि। **किंचिदिति**। उक्तरीत्या अन्वयितेत्यर्थः । वचनभङ्गीनां वचनरचनानाम् । **प्राचीना एवेति**। एवं च एतदनुभवबलेनैव गुणप्रधानभावकृतविच्छित्तिविशेषमाश्रित्य सर्वस्वकाराद्युक्तः कार्यकारणपौर्वापर्यविपर्ययमूलोऽपि सहोक्तेः प्रकार आश्रयणीय इति तत्खण्डनं प्रागुक्तं चिन्त्यमिति बोध्यम्। अन्यथा तदनुभवप्रामाण्यानङ्गीकारे । **व्याकुलीति**। प्रागुपपादितमिदम्। तथात्वे साधारणधर्मत्वे। मान्थर्यं मन्दत्वम्। **क्रियापीति** । प्राप्त्यादिरित्यर्थः। एवं च गुणस्य तथात्वोदाहरणत्वोक्तिरयुक्तेति भावः। **नान्तरीयकत्वेनेति**। तां विना वाक्यार्थासमाप्तेरिति भावः। **समग्रेति**। विच्छित्त्याधायकत्वेत्यादिः। नन्वेवमपि मान्थर्यांशे तथात्वेऽपि रक्ताद्यंशे धर्मयोर्भेदात्कथं तत्त्वमत आह—**शोणत्वेति**। अधरे शोणत्वं मनस्यासक्तत्वं नितम्बेऽधिकभारत्वं कामे उपदेशकर्तृत्वमिति बोध्यम्।

१ पौर्वापर्यविपर्ययमूला तु निरस्तैव पूर्वम्। अवशिष्टा द्विविधा (श्लेषमूलकाऽभेदाध्यवसानमूला, केवलाभेदाध्यवसानात्मिका च) इयमपि उक्तालंकारेषु (दीपकतुल्ययोगितादिषु) एव अवान्तरभेदतया निविशतामिति भावः।

२ यथा गुणः साधारणधर्मस्तथा प्राप्त्यादिक्रियापि साधारणधर्म इत्याशयः।

मेयोपमानगतयोर्निरुक्तगुणयोः श्लेषेण पिण्डीकरणात्सहभावोपपत्तिः[1]। एवं श्लेषाभावेऽपि केवलाध्यवसानेन[2] बोध्यम्।

यत्रैकमेवोपमेयं विलक्षणसहोक्त्यालम्बनं सा मालासादृश्यान्मालासहोक्तिः। वैलक्षण्यं च सहोक्तेः स्वसमानाधिकरणसहोक्त्यन्तरापेक्षया बोध्यम्। 'केशैर्वधूनां' इत्यत्र केशैः सह कोपैः सह प्राणैः सहेत्युपमानभेदेन साहित्यस्यानेकत्वेऽपि कर्षणैक्यात्सहोक्तेरभेदः। सति वा यथाकथंचिद्भेदे न वैलक्षण्यम्, धर्मैक्यात्। धर्मोपमानोभयकृतवैलक्षण्यस्य चात्र विवक्षणात्। 'उन्मीलन्तो निमीलन्तः' इत्यत्र च धर्मवैलक्षण्येऽप्युन्मीलनधर्मोत्थापितसहोक्तिघटकोपमानानां पद्मपत्रादीनामेव निमीलनधर्मोत्थापितायामपि सहोक्तौ घटकत्वान्न मालारूपत्वम्[3]। 'भाग्येन सह रिपूणां—' इति तूदाहरणमेव।

यथा वा—

'उन्मूलितः सह मदेन बलाद्बलारे-
रुत्थापितो बलभृतां सह विस्मयेन।
नीलातपत्रमणिदण्डरुचा सहैव
पाणौ धृतो गिरिधरेण गिरिः पुनातु॥'

---

तृतीयभेदेऽप्येवमेव पिण्डीकरणमित्याह—**एवमिति**। ननु प्रागुक्तसहोक्त्यपेक्षया न वैलक्षण्यमत आह—**वैलक्षण्यं चेति**। तथा च विलक्षणेत्यस्य मिथो भिन्नेत्यर्थः सूचितः। नन्वेवं केशैरित्यत्रापीयं भवेदत आह—**केशैरिति**। ननु धर्मैक्येऽपि तद्भेदेनेयं स्यादेवात आह—**सतीति**। सत्यपीत्यर्थः। **यथाकथंचिदिति**। धर्मोपमानान्यतररूपेणेत्यर्थः। प्रकृताभिप्रायेणाह—**धर्मैक्यादिति**। अत्र मालासहोक्तिलक्षणे। क्वचिद्धर्मवैलक्षण्येऽप्युपमानाभेदान्नैवमित्यभिप्रायेणाह—**उन्मीलन्त इति**। नन्वेवं तर्हि किमस्या उदाहरणमत आह—**भाग्येनेति**। तत्र धर्मोपमानयोर्भेदादिति भावः।

---

१ रक्त-गुर्वादिशब्दश्लेषवशादुपस्थितयोः शोणत्वाऽऽसक्तत्वयोरभेदाध्यवसानादित्यर्थः।

२ उन्मीलन्तो निमीलन्त इत्यादौ उन्मीलनादिपदार्थभूत-प्रकटत्वादिरूपैकोपाधिवैशिष्ट्येनाऽभेदाध्यवसानमित्याशयः।

३ अयं भावः—उन्मीलनं निमीलनं चेति धर्मभेदे सत्यपि पद्मपत्र-नेत्र-त्रिलोकीश्रियादीनि यानि उन्मीलन्ति तान्येव निमीलन्ति इति अलंकारघटकोपमानानामैक्यान्न मालात्वम्। धर्मोपमानभेदे एव तत्स्वीकारात्।

अत्र नीलातपत्रमणिदण्डरुचो गिरिधारणोत्तरकालिकत्वादुत्तरार्धगता पौर्वापर्यविपर्ययानुप्राणितैव सहोक्तिर्निदर्शनानुप्राणिता च। पूर्वार्धगते तु प्रकारद्वयेनापि[2] संभवतः।

इति रसगङ्गाधरे सहोक्तिप्रकरणम्।

अथ विनोक्तिः—

**विनार्थसंबन्ध एव[3] विनोक्तिः॥**

हृद्यत्वं चानुवर्तते। तच्च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति। अरमणीयत्वे यथा—

> 'संपदा संपरिष्वक्तो विद्यया चानवद्यया।
> नरो न शोभते लोके हरिभक्तिरसं विना॥'

उन्मूलितः समूलं खण्डितः। बलारेरिन्द्रस्य। एतेन श्लेषादिप्रकारद्वयव्यावृत्तिः। **निदर्शनेति**। सदृशवाक्यार्थयोरैक्यारोपादिति भावः। गते तु सहोक्ती इति शेषः। **प्रकारद्वयेनेति**। श्लेषभिन्नप्रकारद्वयेनेत्यर्थः॥ इति रसगङ्गाधरमर्मप्रकाशे सहोक्तिप्रकरणम्॥

विनोक्तिं लक्षयति—**अथेति**। 'विनार्थसंबन्ध एव' इति पाठः। तच्च हृद्यत्वं च।

१ 'गिरिधरेण मणिदण्डकान्त्या सह गिरिः पाणौ धृतः' अर्थात् गिरिरपि पाणौ धृतः मणिदण्डकान्तिरपि पाणौ धृता। अङ्गुल्युपरि गिरिधरणकाले ऊर्ध्वीकृतः कान्तिशाली बाहुस्तथा शोभते स यथा उपरि विस्तारितस्य छत्रस्य मणिदण्डो भवेदित्याशयः। एवं च बाहौ मणिदण्डकान्तिरपि स्थिता गिरिश्चापि। किन्तु मणिदण्डकान्तिर्मणिदण्डे तिष्ठेत्, सा कथं पाणौ प्राप्नुयादिति अन्य(उपमान)धर्मस्य अन्यत्र (उपमेये) आरोपात्पदार्थनिदर्शनेति पण्डितराजाशयः। सदृशवाक्यार्थयोरैक्यारोपान्निदर्शनेति नागेशटीका तु आलंकारिकैरुपहसनीयत्वात् फल्गुफुंकारकल्पा। एवमेवास्मिन्पद्ये 'उन्मूलितः' इति पदस्य 'समूलं उत्खातः' [उत्(उत्खात)मूलं करोतीति उन्मूलयति, णिच्] इति व्याख्या उचिता, 'समूलं खण्डितः' इति व्याख्या तु लोकोत्तर आविष्कारः। गोविन्देन गोवर्धनः खण्डित इति क्वापि पुराणे नाद्यावधि श्रुतम्। अहो महाशयत्वमेतस्य।

२ पूर्वं गिरिरुत्खातः ततः पुरंदरदर्पपरिहार इति क्रमो लङ्घित इति पौर्वापर्यविपर्ययमूला। मदस्योन्मूलनं मूलतः प्रध्वंसः, गिरेरुन्मूलनं मूलदेशादुत्खननम्। भिन्नयोरप्यनयोः स्वस्थानत्यागादिना अभिन्नीकृतयोरुपादानमिति केवलाध्यवसानात्मिका।

३ न तु शब्दोच्चारणम्। संबन्ध्येवेति पाठस्तु 'सहार्थसंबन्धः सहोक्तिः' इति प्रक्रमविरुद्धः।

यथा वा—

'वदनं विना सुकवितां सदनं साध्वीं विना वनिताम्।
राज्यं च विना धनितां न नितान्तं भवति कमनीयम्॥'

रमणीयत्वे यथा—

पङ्कैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥'

पूर्वा तु केवला, इयं तु दीपकानुकूला ।

मिश्रिता यथा—

'रागं विना विराजन्ते मुनयो मणयस्तु न ।
कौटिल्येन विना भाति नरो न कबरीभरः॥'

अत्र प्रतिवस्तूपमानुकूला ।

'त्रासैर्विना विराजन्ते शूराः सन्मणयो यथा ।
न दानेन विना भान्ति नृपा लोके द्विपा इव ॥'

अत्र श्लेषमूलोपमानुकूला ।

'यथा तालं विना रागो यथा मानं विना नृपः ।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः ॥'

पूर्वं क्रियागुणादिसंबन्ध आवश्यकः इह तूपमामाहात्म्यादवगते स इति न तथा ।

---

उद्देशक्रमवैपरीत्येनारमणीयत्वे तावदुदाहरति—**यथेति**। सदः सभा । मानसमन्तःकरणम् । पूर्वा अरमणीयत्वोदाहृतत्वावच्छिन्ना । तयोर्नरराजयोर्वर्णनेन तदीयत्वेन सर्वेषां प्रकृतत्वात् । इयं रमणीयत्वोदाहृता । **मिश्रिता यथेति**। विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां मिश्रितेत्यर्थः । रागमनुरागं लौहित्यं च । कौटिल्येन वक्रान्तःकरणेन वक्रतया च । त्रासो भयं दोषश्च । दानं वितरणं मदजलं च । द्विपा गजाः । अत एवाह—**अत्रेति**। इदं पूर्वोदाहरणेऽपि बोध्यम् । दीपकासंसृष्टं विषयं प्रदर्शयन्नरमणीयत्वे उदाहरति—**यथेति**। न शोभते इति सर्वत्र बोध्यम् । तालः संगीतशास्त्रप्रसिद्धो ध्वनिविशेषः । यतिः संन्यासी । सः क्रियादिसंबन्धः । **तथेति**। नावश्यक इत्यर्थः ।

१ पूर्वोत्तरार्धोपात्तयोर्वाक्यार्थयोर्वस्तुप्रतिवस्तुभावापन्नविराजन–भानरूपधर्मैक्यात् ।

इयं च न केवलं विनाशब्दस्य सत्त्व एव भवति, अपि तु विनाशब्दार्थवाचकमात्रस्य। तेन नञ्—निर्—वि—अन्तरेण—ऋते—रहित-विकल इत्यादिप्रयोगे इयमेव।

'निर्गुणः शोभते नैव विपुलाडम्बरोऽपि ना।
आपातरम्यपुष्पश्रीशोभितः शाल्मलिर्यथा॥'

अलंकारभाष्यकारस्तु 'नित्यसंबन्धानामसंबन्धवचनं विनोक्तिः' इत्याह। तस्य मते तु नैतान्युदाहरणानि। इदं तूदाहरणम्—

मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम्।
वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः॥'

अत्र शैत्यस्याविनाभावेऽपि विनाभावो निबद्धः।

यथा वा—

'शैत्यं विना न चन्द्रश्रीर्न दीपः प्रभया विना।
न सौगन्ध्यं विना भाति मालतीकुसुमोत्करः॥'

अलंकारान्तरसमालिङ्गनाविर्भूतमेवास्या हृद्यत्वम्, न स्वतः। तेनालंकारान्तरत्वमपि शिथिलमेवेत्यपि वदन्ति।

अथास्या ध्वनिः—

यथा—

'विशालाभ्यामाभ्यां किमिह नयनाभ्यां फलमसौ
न याभ्यामालीढा परमरमणीया तव तनुः।
अयं तु न्यक्कारः श्रवणयुगलस्य त्रिपथगे
यदन्तर्नायातस्तव लहरिलीलाकलकलः॥'

अत्र त्वद्दर्शनं विना नयनयोः, त्वल्लहरिकोलाहलश्रवणं विना

---

अयमेव पूर्वतो विशेष इत्यर्थः। इयं च विनोक्तिश्च। आदिना ऊनादिसंग्रहः। **निर्गुण इति**। बह्वाडम्बरोऽपि ना पुरुषः निर्गुणः सन्नैव शोभत इत्यर्थः। चेतना बुद्धिः, तस्याः शैत्यं विनैव तेषां प्रतीतिर्भवतीत्यर्थः। **शैत्यस्येति**। मृणालादिभिः। सहेति शेषः। एवं रमणीयत्वे उदाहरणं दत्त्वा अरमणीयत्त्वे उदाहरति—**यथेति**। आलीढा दृष्टा। न्यक्कारस्तिरस्कारः। यदन्तरिति। श्रवणयुगलान्तरित्यर्थः। त्वद्दर्शनं भागीरथीदर्शनम्।

श्रवणयोश्चारमणीयत्वं फलप्रश्न-धिक्काराभ्यां व्यज्यते । तस्य च भावे[1]ध्वन्यनुग्राहकत्वेऽपि ध्वनिव्यपदेश्यत्वमव्याहतम् । अन्यथानुग्राहकत्वलक्षणसंकरोच्छेदापत्तेः । एवं च—

'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥'

इति कस्यचित्कवेः पद्यं विनोक्ति[2]ध्वनिरेव । परंतु परस्परविनोक्तिवशाद्वैलक्षण्यशालि ।

इति रसगङ्गाधरे विनोक्तिप्रकरणम् ।

अथ समासोक्तिः—

**यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः ॥**

साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रकृतधर्मिकव्यवहाराभिन्नत्वेन भासमानप्रकृतधर्मिकव्यवहारत्वमिति चैकोक्तिः । शब्दशक्तिमूलध्वनिवारणाय मात्रेति । तत्र विशेष्यस्यापि श्लिष्टतया प्रकृतेतरधर्म्यु[3]पस्थापनद्वारा तादृशधर्मिकव्यवहारोपस्थापकत्वात् । एवमपि

---

तस्य च व्यज्यमानारमणीयत्वस्य च । **भावेति** । कविनिष्ठगङ्गाविषयकेत्यादिः । अन्यथा अनुग्राहकत्वात्तद्व्यपदेशानङ्गीकारे । एवं च तस्य तद्व्यपदेश्यत्वे च । **वैलक्षण्येति** । पूर्वोदाहरणापेक्षयेति भावः ॥ इति रसगङ्गाधरमर्मप्रकाशे विनोक्तिप्रकरणम् ॥

समासोक्तिं निरूपयति—**अथेति** । वाक्येनोक्तमर्थं सामस्त्येनाह—**साधारणेति** । मात्रपददानफलमाह—**शब्देति** । तत्र शब्दशक्तिमूलध्वनौ । अपिना विशेषणसमु-

---

१ अयं भावः—कविनिष्ठगङ्गाविषयकरतिभावध्वनिः प्रधानम् । तस्य पोषकोयं विनोक्तिध्वनिः । पोषकत्वेपि अस्याः (विनोक्तेः) ध्वनित्वं न व्याहन्यते । यदि पोषकत्वेन ध्वनित्वं व्याहन्येत तर्हि ध्वन्योः परस्परमनुग्राह्यानुग्राहकभावरूपः संकरः उच्छिद्येत (न पृथक्परिगण्येत), भवद्रीत्या अनुग्राहकत्वे सति ध्वनित्वाभावात् ध्वन्योः संकरत्वेन व्यपदेशानवसरात् ।

२ वाञ्छनीयसहयोगयोः कयोश्चिदसहयोगे तौ प्रत्यमर्षादिभावध्वनिः प्रधानम् । तस्य पोषकोयं विनोक्तिध्वनिः । पोषकत्वेपि चास्य भावध्वनित्वं न व्याहतम् । अत एव—एवं चेत्यादिना समुदाहृतम् ।

३ यथा 'राज्ञो मत्प्रतिकूलात्०' अत्र व्यङ्ग्यार्थगोपनार्थमप्रकृतं धर्मिणम् (नृपम्) उपस्थापयदेव राजेति विशेष्यम् अप्रकृतधर्मिकं व्यवहारम् [ राजा ( चन्द्रः ) मे प्रतिकूलः अत एव तद्भयं वारय, ( उपभोगं देहि ) ] उपस्थापयतीति विशेष्यमपि श्लिष्टमित्यर्थः ।

'आबध्नास्यलकाञ्जिरस्यसितमां चोलं रसाकाङ्क्षया-
लङ्कायावशतां तनोषि कुरुषे जङ्गालललाटक्षतम्।
प्रत्यङ्गं[1] परिमर्दनिर्दयमहो चेतः समालम्बसे
वामानां विषये नृपेन्द्र भवतः प्रागल्भ्यमत्यद्भुतम्॥'

इत्यत्र प्रकृतधर्मिकप्र[2]कृताप्रकृतव्यवहारविषयके श्लेषेऽतिव्याप्तेर्वारणाय प्रस्तुताप्रस्तुतत्वे धर्मिविशेषणतयोपात्ते। व्यवहारविशेषणत्वेन तयोरुपादाने तु साधारणविशेषणमात्रश्रुत्युपस्थापिताप्रकृतशृङ्गारवृत्तान्ताभिन्नत्वेन स्थित एवात्र प्रकृतो वीरवृत्तान्त इति स्यादेवातिप्रसङ्गः। न चात्र राज्ञो वर्णनस्य प्रस्तुतत्वात्तद्गतयोर्द्वयोरपि वृत्तान्तयोः प्रस्तुतत्वमिति कथमतिप्रसङ्ग[3] इति वाच्यम्। न स्यादतिप्रसङ्गः, यदि वर्णनमात्रं प्रस्तुतं स्यात्। तत्सङ्ग्रामादौ वीरतामात्रवर्णनप्रस्तावे तु स्यादेवातिप्रसङ्गः।

---

चयः। **तादृशेति**। अप्रकृतेत्यर्थः। अलकाः केशाः, अलका कुबेरपुरी। चोलः कञ्चुकः, देशश्च। साकाङ्क्षयेति पूर्वान्वयि। रसः शृङ्गारः, वीरश्च। अलं कायस्यावशताम्, लङ्काया वशतां च। जङ्गालललाटसमाहारक्षतम्, जङ्गाल-लाटदेशयोर्नाशं चेत्यर्थः। अहो इत्याश्चर्ये। हे नृपेन्द्र, भवतः परिमर्दनिर्दयं चेतः प्रत्यङ्गं प्रत्यवयवं अङ्गमङ्गदेशं च समालम्बते। वामानां सुन्दरीणाम्, वक्राणां शत्रूणां च। **प्रकृतेति**। राजेत्यर्थः। तयोः प्रस्तुतत्वाप्रस्तुतत्वयोः। तत्सङ्ग्रामादौ राजसङ्ग्रामादौ। **मात्रवर्णनेति**। वर्णनमात्रे-

१ प्रत्यङ्गं प्रत्यवयवं परिमर्दनिर्दयं चेतः वहसे (शृङ्गारे), अङ्गम् (अङ्गदेशम्) प्रति परितः प्रपीडननिष्ठुरं चेतः करोषीति (वीरव्यवहारे) नागेशकृतोऽर्थस्तु स्वारस्यतो मूलपाठतश्च विरुद्धत्वादुपेक्ष्य एव।

२ अत्र धर्मी(नृपेन्द्रः) प्रकृतः। तद्द्वारा प्रकृतस्य संग्रामविषयकव्यवहारस्य, अप्रकृतस्य शृङ्गारविषयकव्यवहारस्य च श्लेषेणोपस्थितिः। यदि प्रकृताप्रकृतत्वे व्यवहारविशेषणे स्याताम् (अर्थात् प्रकृतव्यवहारे साधारणविशेषणमात्रबलेन उपस्थितस्य अप्रकृतव्यवहारस्य समारोपः समासोक्तिः इत्यर्थः स्यात्) तर्हि अत्रापि प्रकृते वीरताव्यवहारे अप्रकृतस्य शृङ्गारवृत्तान्तस्य अभिन्नतया भासमानत्वमस्तीति स्यात्समासोक्तेरतिप्रसङ्गः। 'प्रकृतधर्मिके व्यवहारे अप्रकृतधर्मिकस्य व्यवहारस्य समारोपः' इत्युक्तौ तु उभयवृत्तान्तयोः प्रकृतधर्मिणैव संबद्धतया (अप्रकृतधर्मिणोऽनुपस्थित्या) नातिप्रसङ्गसंभव इत्याशयः।

३ राजवर्णनप्रस्तावे द्वावपीमौ राजवृत्तान्तौ प्रस्तुतौ। ततश्च प्रस्तुते अप्रस्तुतस्य (व्यवहारस्य) अभिन्नतया भासनं क्वास्तीति शङ्का। राजवर्णनमात्रस्य न प्रस्तुतत्वम्, किन्तु वीरतावर्णनमात्रस्येति तत्समाधानम्।

'मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥'

इत्याद्यप्रस्तुतप्रशंसायामप्रकृतव्यवहारः साक्षादुपात्तत्वाद्विशेष्येणाप्युपस्थापित एवेति न तत्रातिव्याप्तिः[1] ।

यदि तु जलक्रीडादौ भ्रमरवृत्तान्त एव प्रस्तुतस्तदा भवत्येवेयं समासोक्तिः[2] ।

---

त्यर्थः । क्वचित्तथैव पाठः । मलिनेऽपीत्यादिसप्तम्यन्तानि त्वयीत्यस्य विशेषणानि । उपात्तत्वं विशेष्ये अन्वेति । **विशेष्येणापीति** । अपिना विशेषणपरिग्रहः । तथा च विशेषणमात्रोपस्थापितत्वाभावान्नातिप्रसङ्ग इति मात्रपदस्यैव कृत्यमिति भावः । ननु तर्हि किमिति द्वितीयमिदं दत्तमत आह—**यदि त्विति** । समासोक्तावप्रस्तुतवृत्तान्तसमारोप एव चारुताहेतुरिति प्राञ्चः । तेषामयमाशयः—अयमैन्द्रीत्यादौ श्लिष्टविशेषणप्रतीतप्रस्तुताप्रस्तुतवृत्तान्तयोः श्लेषभित्तिकाभेदाध्यवसायेनाभिन्नयोः प्रस्तुतचन्द्रादिवृत्तिता । तत्र तयोर्वृत्तान्तयोः परस्परं विशेष्यविशेषणभावे कामचारेऽपि प्रस्तुतवृत्तान्तो विशेष्यः । तद्बोधकबोध्याप्रस्तुतस्तु अभेदेन तद्विशेषणम् । एवं चाप्रस्तुताभिन्नप्रस्तुतस्य चन्द्रेणान्वयः । तत्र यद्यपि प्रस्तुतस्य स्वासाधारणधर्मेण चन्द्रेऽन्वययोग्यतास्ति तथाप्यप्रस्तुताभेदमापन्नस्य न सास्तीति तद्रूपावच्छिन्नस्य तस्याप्रकृते धर्मिण्यारोपः । एवं चाप्रस्तुतव्यवहारसमारोपपदेन प्रस्तुतव्यवहारसमारोपपदेन च प्रस्तुतव्यवहारतादात्म्यापन्नसमारोप उच्यते । न च तत्तादात्म्यापन्नत्वेऽपि विशेष्यतायाः प्रस्तुते एव सत्त्वेनारोपं विनाप्यन्वययोग्यतेति वाच्यम् । दृगब्जेन वीक्षते इत्यादौ विशेष्यस्य स्वरूपेणेतरान्वयायोग्यस्येतरतादात्म्यापत्त्या तद्योग्यत्ववत्स्वतोऽन्वययोग्यस्यापीतरतादात्म्यापत्त्या तदयोग्यत्वस्यापि सत्त्वात् । न च रूपकवत्समासोक्तावपि प्रस्तुतेऽप्रस्तुतरूपसमारोप एव चारुताहेतुरस्तु । तद्वाचकपदसमभिव्याहाराभावेन तस्यासंभवात् । न चाक्षिप्तनायकादिना आक्षिप्तरूपकं भवतु । 'निरीक्ष्य विद्युन्नयनैः पयोदः' इत्यत्र पयोदे द्रष्टृपुरुषरूपकाक्षेपकनिरीक्षणवदाक्षेपकाभावात् । न च विशेषणसाम्यप्रतीताप्रकृतवृत्तान्त एवाक्षेपकोऽस्तु । अप्रस्तुतस्य प्रस्तुते विशेषणतया तस्य प्राधान्याभावेनानाक्षेपकत्वात् । एतेनाक्षेपासंभवेऽपि परनायिकामुखचुम्बनस्य श्लेषमर्यादया प्रतीतस्य प्रकृतधर्मिणि चन्द्रे आरोप्यमाणस्य जारासाधारणधर्मत्वेन प्रकृतधर्मिणि जारत्वव्यञ्जकता सुवचा । न च चन्द्रे जारत्वारोपमन्तरेणापि जारव्यवहारारोपसिद्धिरनुपपत्त्यभावान्न जारत्वं गमयेदिति वाच्यम् ।

---

१ अप्रस्तुतस्य भ्रमरस्य वर्णनमिदं प्रणयिन्यनुगम्यमानचपलनायकवृत्तान्तपरतया अप्रस्तुतप्रशंसा ।

२ यदि तु जलक्रीडादौ संमुखोपस्थितं भ्रमरमालम्ब्य चपलनायकपरतया तदिदमभ्यधीयत तर्हि तु प्रस्तुतो धर्मी ( भ्रमरः ) यत्र ईदृशोयं व्यवहारः मलिन—रागादिसाधारणविशेषणोपस्थिताऽप्रस्तुतधर्मिक(नायक)व्यवहाराभिन्नतया प्रतीयत इति समासोक्तिरेवेत्याशयः ।

व्यञ्जनाया अनुपपत्तिं विनापि प्रसरात्। 'गतोऽस्तमर्क' इत्यादौ तथैव दर्शनात्। अन्यथा अर्थापत्त्या गतार्थत्वेन व्यञ्जनावैयर्थ्यप्रसङ्गादित्यपास्तम्। किं चैवं सति वाच्यार्थबोधोत्तरं तद्व्यङ्ग्यप्रतीतिः। सापि न केवलव्यवहारमात्रात्। अपि तु तादृशनायकनायिकासंबन्धविशिष्टव्यवहारज्ञानात्। एवं च वाच्यार्थबोधकालिकचमत्कारबीजमात्रमत्र निरूप्यते इत्यदोषः। अपि च तादृशव्यङ्ग्यस्याधिकचमत्कारकारित्वेन ध्वनिव्यवहारयोग्यता नालंकारशरीरघटकता। एवं च समासोक्तेस्तादृशध्वन्युपस्कारकतयाधिकचमत्कारकारित्वमलंकारत्वं च। न चैवं समासोक्तौ रूपकध्वनिनैव निर्वाहे पृथगलंकारत्वं न स्यादिति वाच्यम्। वाच्यार्थबोधकालिकचमत्कारस्यापह्नोतुमशक्यत्वेनालंकारत्वस्य दुरपह्नवत्वात्। विपरीतं नायकत्वारोपव्यञ्जनस्य समासोक्त्यन्तर्भावं वदतो ध्वनित्वस्य दुर्वारत्वाच्च। तद्व्यङ्ग्यस्याधिकचमत्कारकारित्वेन प्रधानत्वात्। न च श्लिष्टशब्दोपस्थापितयोर्वृत्तान्तयोः परस्परमभेदेनान्वये मानाभावः। सहृदयहृदयस्यैव प्रमाणत्वात्। अत एव 'आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्' इत्यत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थित इति प्रदीपकृतः। प्राचीनानुभवमपलप्यापि यथैकत्र द्वयमिति रीत्या प्रस्तुताप्रस्तुतवृत्तान्तयोर्विशेष्येणैवान्वयः स्वीक्रियते एवमपि वाक्यार्थबोधकाले प्रस्तुते धर्मिणि नाप्रस्तुतजारत्वारोपप्रत्याशा। तथाहि यद्यप्यनयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयात्समप्राधान्यमस्तीति स्वीक्रियते तथाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपः। प्रस्तुतेऽप्रस्तुतवृत्तान्तारोपेणैव सिद्धेः। अप्रस्तुतरूपसमारोपेऽपि प्रस्तुतवृत्तान्तान्वयायोग्यतायास्तदवस्थत्वाच्च। नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणासंगतिः। अप्रस्तुतधर्मिव्यञ्जनस्य त्वयानपेक्षणादिति चेत्, न। स्वरूपतोऽप्रस्तुतवृत्तान्तारोपस्याचमत्कारित्वम् किं त्वप्रस्तुतकामुकादिसंबन्धित्वेनावगम्यमानस्यैव तस्यारोपः। अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन चुम्बनादिना ऐन्द्री चन्द्र इत्येतद्गतस्त्रीलिङ्गपुंलिङ्गसहकृतेन तत्संबन्धिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसंधानात्। विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यञ्जनस्याक्षेपणात्। अप्रस्तुतस्येत्यस्याप्रस्तुतव्यवहारस्येत्यर्थो वा। एतेन वदनचुम्बनस्य पुत्रादिसाधारण्यात्कथं कामुकाभिव्यञ्जकत्वम्। किं च 'अहर्मुखं चुम्बति भानुबिम्बम्' इत्यत्रापि नायकाद्यभिव्यक्त्यापत्तिरित्यपास्तम्। यत्तु चन्द्रऐन्द्रीपदगतलिङ्गाभ्यामभिव्यक्तनायकयोः स्वव्यञ्जकपदोपस्थापिताभ्याममेदेनैवान्वय उचितः समानपदोपात्तत्वप्रत्यासत्तेरिति, तन्न। एवं हि वदता व्यवहारावच्छेदकत्वं तयोः स्वीक्रियते न वा। आद्ये एकस्यार्थस्योभयत्रान्वयोऽव्युत्पत्तिग्रस्तः। अन्त्ये रसाननुगुणत्वम्। यद्यप्यैन्द्र्यादौ नायिकात्वाभाने केवलं व्यवहारावच्छेदकत्वमात्रस्वीकारे बाधः। नायिकात्वानालीढकेवलैन्द्रीमुखचुम्बनरूपस्य व्यवहारस्य नायकासंबन्धित्वात्। नहि दिक्तादात्म्यं विना नायिकायाः पृथङ्मुखं विशेषयितुं सामर्थ्यमस्तीति, तदपि न। मुखशब्दश्लेषसामर्थ्येन ऐन्द्रीमुखमित्यस्य समस्तत्वेऽपि ऐन्द्र्यंशे मोषेण केवलमुखचुम्बनस्योपस्थितेः। तदेतदुक्तं कुवलयानन्दे—श्लेषादिमहिम्ना स्वरूपतः समर्पितेन वदनचुम्बनादिनेति। नह्यैन्द्रीपदशब्दार्थेन दिग्रूपेण वदनरूपमुखपदार्थस्यान्वयो वक्तुं शक्यः सहृदयैः।

तत्र तावत्-

'विबोधयन्करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।
परिपूर्णानुरागेण प्रातर्जयति भास्करः ॥'

---

नन्वेतादृशकुसृष्टिकल्पनापेक्षया विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्त्रीलिङ्गपुंलिङ्गाभ्यामभिव्यक्तनायिकाद्यभिन्नचन्द्रादिघटितप्रकृतवाक्यार्थे स्वावयवतादात्म्यापन्नतदवयवोऽवतिष्ठते इत्येव कल्पयितुं युक्तम् । एवं च नायिकाभिन्नइन्द्रदिशासंबन्धिवदनाभिन्नप्रारम्भकर्मकचुम्बनरूपसंबन्धाश्रयो नायकाभिन्नश्चन्द्र इति बोध इति चेत्, न । एवं हि ऐन्द्र्यां नायिकाभेदप्रतीतौ मुखचुम्बनादौ वदनचुम्बनाद्यभेदप्रतीतावपि वदनचुम्बने साक्षान्नायिकार्थसंबन्धाप्रतीत्या रसोद्बोधानापत्तेः । न च व्यञ्जनया तत्प्रतीतिरस्त्येव, यस्मिन् यदभेदः तत्संबन्धिनि तत्संबन्ध्यभेद इति न्यायेन वा मानसिकी तत्प्रतीतिः तत एव चमत्कार इति वाच्यम् । तदपेक्षया साक्षाच्चमत्कारोपपादकवाच्यार्थबोधव्युत्पादनस्यैवौचित्यात् । ननु व्यञ्जनया अप्रकृतार्थबोधः । शक्तेः प्रकरणादिना नियन्त्रणात् । ततो व्यञ्जनमाहात्म्यादेव प्रकृतवाक्यार्थतादात्म्येनावतिष्ठते इति चेत्, तर्हि वैयञ्जनिकोऽप्रकृतार्थबोधो नायिकाद्यविशेषितो विशेषितो वा ? नाद्यः । रसाननुगुणत्वात् । अन्त्ये स्वपदोपस्थापिताभ्यां लिङ्गाभ्यां नायिकाद्यभेदबोधो व्यर्थोऽसंभवी च । नायिकाविशेषणकव्यवहारबोधनेन कृतार्थत्वात् । अपि च तथा सति जारकर्तृकसानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगाश्रयो जाराभिन्नश्चन्द्र इति बोधकदर्थनमेव स्यात् । तस्माद्व्यञ्जनया शक्त्या वा उपस्थिताप्रस्तुतवृत्तान्तेन व्यञ्जनयोपस्थितनायकादिसंबन्धित्वेन गृहीतेनाभेदमापन्नः प्रस्तुतवृत्तान्तारोपः । प्रकृतविशेष्ये नव्यमते श्लेषस्थलेऽप्रकृतोपस्थितेः शक्त्यैव व्यवस्थापयिष्यमाणत्वेन तन्मते शक्त्यैवात्राप्रकृतार्थोपस्थितिः । प्राचां तु व्यञ्जनयेत्येतावान्विशेषः । एवं च वाच्यार्थबोधोत्तरं यदि चन्द्रादौ नायकत्वादिप्रतीतिरपि सहृदयानुभवसाक्षिकी तदास्तु इत्युपपादितमेव प्राक् । एतेन 'निर्लक्ष्मीकाभवत्प्राची प्रतीचीं याति भास्करे । प्रिये विपक्षरमणीरक्ते का मुदमश्नुते ॥' इत्यत्र पूर्वार्धगतायां समासोक्तौ नायकत्वाप्रतीतावुत्तरार्धे प्रियत्वादिना समर्थनायाः सर्वथैवानुपपत्तिरिति परास्तम् । प्रस्तुतप्राचीवृत्तान्ते आरोप्यमाणाप्रस्तुतखण्डितनायिकाविशेषवृत्तान्तसमर्थनाय तस्यावश्यकत्वाच्च । एवं च सानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगाश्रयश्चन्द्र इत्येव बोधः । एतेन अयमैन्द्रीत्यादौ शक्तिव्यञ्जनाभ्यां प्राचीप्रारम्भसंबन्धाश्रयश्चन्द्रो जारसंबन्धिसानुरागपरनायिकामुखचुम्बनाश्रय इति बोधः । अप्रस्तुतवृत्तान्ताभिन्नत्वेनाध्यवसितस्य प्रस्तुतवृत्तान्तस्य तादात्म्येनाप्रस्तुतारोपविषये प्रस्तुतधर्मिण्यन्वय इति मते तु सानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगजाराभिन्नश्चन्द्र इति बोध इत्यपास्तम् । समासोक्तिर्गुणीभूतव्यङ्ग्येति व्यवहारस्तु प्रकृतव्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध एवेति दिक् । तत्र उदाहरणीयसमासोक्तौ । तावत् आदौ । अस्य इत्यत्रेत्यनेना-

इत्यत्र किरणस्पर्शकरणक-मुकुलितपद्मिनीकर्मक-विकासानुकूलव्यापारवदभिन्नो भास्करो जयतीति वाक्यार्थः शक्त्यैव तावत्प्रतीयते। हस्तस्पर्शकरणक-नायिकाविशेषकर्मकानुनयानुकूलव्यापारवदभिन्न इत्यादिश्चापरोऽर्थ उभयत्रानुषक्तया तयैव शक्त्या, शक्त्यन्तरेण व्यक्त्या वा सर्वथैव प्रतीयत इत्यत्र सहृदया एव प्रमाणम्। एवं च द्वाविमौ वाक्यार्थौ सव्येतरगोविषाणवदत्यन्तासंसृष्टौ यदि स्यातां तदा भगवतो भास्करस्य कामुकत्वं कमलिन्या नायिकात्वं च सकलप्रतीतिसिद्धं विरुद्धं स्यात्। द्विप्रधानत्वेन वाक्यभेदश्चापद्येत। यदि चापरोऽर्थः प्रकृतकर्तर्यारोप्यते तदा कमलिनीविकासकर्ता नायिकानुनयकर्ता च सूर्य इत्येकत्र द्वयमिति विषयताशाली बोधः स्यात्, न तु पूर्वोक्तानुपपत्तिपरिहारः। यदि च श्लेषमूलाभेदाध्यवसानेन कमलिन्यादीनां नायिकात्वादिप्रत्यय उपपाद्यते तथाप्यश्लिष्टपदोपस्थितो भगवान्नायकत्वानाघ्रात एव। पद्मिनीशब्दस्थाने नलिनीशब्दोपादाने सापि नायिकात्वेन कथं नाम प्रतीतिपथमियात्?। तस्माद्विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्वानुगुणं नायिकादिमर्थमाक्षिप्य तेन परिपूर्णविशिष्टशरीरः सन् प्रकृतवाक्यार्थे स्वावयवतादात्म्या-

न्वयः। नैयायिकमतेनाह—**किरणेति**। तावत्प्रतीयते आदौ प्रतीयते। **नायिकाविशेषेति**। खण्डितेत्यर्थः। आदिना नायकपरिग्रहः। अनुषक्तया संबद्धया। तयैव पूर्वार्थबोधिकयैव। तस्य नियन्त्रणादाह—**शक्त्यन्तरेणेति**। अस्यापि दुर्वचत्वादाह—**व्यक्त्या वेति**। व्यञ्जनयेत्यर्थः। एवं च उभयप्रतीतौ च। वैयाकरणमतेनाह—**द्विप्रधानेति**। वाक्यभेदमुद्धरति—**यदि चेति**। **बोधः स्यादिति**। तथा च न वाक्यभेद इति भावः। एवमपि प्रथमदोषानुद्धार एवेत्याह—**न त्विति**। तमप्युद्धरति—**यदि चेति**। **अश्लिष्टेति**। भास्करेतीत्यर्थः। भगवान्सूर्यः। दोषान्तरमाह—**पद्मिनीति**। पद्मिनीशब्दवन्नलिनीशब्दस्याश्लिष्टत्वादिति भावः। **तेनेति**। आक्षिप्तनायिकाद्यर्थेन। यतः परिपूर्णमत एव विशिष्टं शरीरं यस्येत्यर्थः।

१ पृथक् पृथक् सूर्य-नायकोभयतात्पर्यवत्तया वाक्यद्वयं कल्प्येतेत्यर्थः

२ यदि वाक्यार्थौ परस्परमसंसृष्टौ स्यातां तदा सूर्य-कमलिन्योः नायक-नायिकात्वप्रतीतिर्न स्यादित्येको दोषः। वाक्यभेदापत्तिरिति द्वितीयः। 'एकत्र द्वयम्' (सूर्ये एव कमलिनीविकासकर्तृत्वम्, नायिकानुनयकर्तृत्वं चारोप्यते) तदा वाक्यभेदरूपस्य द्वितीयदोषस्य परिहारेपि सूर्यादेर्नायकत्वाद्यप्रतीतिरूपः प्रथमदोषस्तदवस्थ एवेत्याशयः।

पन्नतदवयवोऽभेदेनावतिष्ठते। स च परिणाम इव प्रकृतात्मनैव कार्योपयोगी, स्वात्मना च रसानुपयोगी। अत्र चाप्रकृतार्थस्य पृथक्शब्दानुपादानाद्रूपकाद्वाक्यार्थसंबन्धिनो वैलक्षण्यम्, पदार्थरूपकात्तु स्फुटमेव। आक्षिप्तार्थघटितत्वाच्च वाक्यार्थश्लेषात्। एवं चात्र शक्त्याक्षेपाभ्यां सर्वार्थनिर्वाह इति भामहोद्भटप्रभृतीनां चिरंतनानामाशयः।

'निशामुखं चुम्बति चन्द्र एषः' इत्यादौ निशाचन्द्रशब्दयोरश्लिष्टत्वान्मुख-

स्वेति। अप्रकृतवाक्यार्थेत्यर्थः। एवमग्रेऽपि **तदिति**। प्रकृतवाक्यार्थेत्यर्थः। स च अप्रकृतवाक्यार्थश्च। **स्वात्मना चेति**। चस्त्वर्थे। रूपकाद्भेदकं प्राह—**अत्र चेति** समासोक्तौ चेत्यर्थः। **स्फुटमेवेति**। अस्या वाक्यार्थनिष्ठत्वादिति भावः। वैलक्षण्यमित्यस्यानुषङ्गः। एवमग्रेऽपि। उपसंहरति—**एवं चेति**। उक्तदोषे चेत्यर्थः। क्वचित् श्लेषाभावेऽपि। प्रकारान्तरेण, न विशेषणसाम्यात्तदर्थप्रतीतिः, तत्राक्षेपाभावेनानिर्वाहो भामहादीनां मते इति सूचयितुमाह—**निशेति**। कादाचित्कसंभवादाह—**नियतेति**।

१ वाक्यार्थसंबन्धिनो रूपकाद्वैलक्षण्यमित्यन्वयः। वाक्यार्थरूपके अप्रकृतार्थः (उपमानम्) पृथक्शब्दोपात्तो भवति, यथा 'त्वत्पादनखरत्नानि०' इत्यादौ।

२ मुखचन्द्र इत्यादौ एकस्मिन् पदार्थे अपरपदार्थस्यारोप इति पदार्थरूपकं पदार्थनिष्ठम्। समासोक्तिस्तु वाक्यार्थनिष्ठेति।

३ एतन्मतस्यायं सारः—विशेषण[ यथा 'विबोधयन्०' अत्र विबोधन–करस्पर्श–नलिनी–मुद्रिताननादि ]साम्येन अप्रकृतवाक्यार्थस्य [ खण्डितानुनयकर्तृ-नायकवृत्तान्तस्य ] प्रतीतिः। प्रतीयमानः अप्रकृतवाक्यार्थश्च रसानुगुण्यानुरोधेन स्वानुकूलं विशेष्यम् ( धर्मिणम्, नायकनायिकादिकम् ) आक्षिपति। ततश्च करस्पर्शकरणकं बोधनं नायक-नायिकासंबन्धित्वेन गृह्यते। अर्थात् प्रकृतवाक्यार्थावयवाः [ सूर्य-पद्मिनी-करादयः ] अप्रकृतवाक्यार्थावयवाऽभिन्नाः ( नायक-नायिका-हस्तादिरूपाः ) प्रतीयन्ते। प्रतीयमानः अप्रकृतवाक्यार्थः प्रकृतवाक्यार्थाभिन्नः परिणमतीति निष्कर्षः। अप्रकृतवाक्यार्थश्च प्रकृतवाक्यार्थरूपत्वेन कार्योपयोगी ( वाच्यार्थनिर्वाहकः )। स्वस्वरूपेण ( अप्रकृतत्वेन ) तु रसादिप्रत्यायकः, नायक-नायिकावृत्तान्तस्यैव शृङ्गारप्रत्यायकत्वात्। एवं च 'हस्तस्पर्शकरणक-नायिकाविशेषकर्मकानुनयानुकूलव्यापारवन्नायकाभिन्नः किरणस्पर्शकरणक-मुकुलितपद्मिनीकर्मकानुनयानुकूलव्यापाराश्रयो भास्करः' इति बोधः।

४ अस्मिन् भामहादीनां मते—'श्लिष्टविशेषणैः अप्रकृतवाक्यार्थस्य प्रतीतिः। अप्रकृतवाक्यार्थः ( मुखचुम्बनादिः ) च रसानुगुण्येन नायक-नायिके आक्षिपति। ततश्च अप्रकृतवाक्यार्थः प्रकृतवाक्यार्थात्मको भवति'। किन्तु श्लेषाभावस्थले ('निशामुखम्०' इत्यादौ) न निर्वाहः। तस्मात् 'स्त्रीत्व-पुंस्त्वाभ्याम् ( टाप्-प्रथमाविभक्तिभ्याम् ) नायक-नायिकात्वाभिव्यक्तिर्भवतीति व्यञ्जनाव्यापारेणैव ( न तु आक्षेपेण ) अप्रकृतार्थप्रतीतिः। प्रकृतवाक्यार्थश्च अप्रकृतवाक्यार्थात्मको भवति' इति संशोधनमुपस्थापयति—'निशामुखं चुम्बति०' इत्यादिना।

चुम्बनमात्रस्य च पुत्रादिसाधारण्येन कथं तावन्नियतनायकाक्षेपकत्वम्, कथं वाऽऽक्षिप्तस्यापि नायकादेर्निशाचन्द्रयोरेवाभेदेनान्वयः, न भेदेन चुम्बनादौ। तथात्वे च तयोर्नायकताताटस्थ्ये रसानुद्बोधापत्तेः। तस्मात् 'निशामुखं चुम्बति चन्द्रिकैषा', 'अहर्मुखं चुम्बति चण्डभानुः' इत्यादावप्रतीयमानं नायकत्वं प्रकृते टाप्प्रथमाभ्यां प्रतिपादितेन प्रकृत्यर्थगतेन स्त्रीत्वेन पुंस्त्वेन च स्वाधिकरण एवाभिव्यज्यते। एवं च निशाशशिनोर्नायकत्वसिद्धिः श्लिष्टविशेषणैः, व्यञ्जनव्यापारेणैवाप्रकृतार्थबोधनम्, शक्तेः प्रकरणादिना नियन्त्रणात्। तदित्थं व्यञ्जनमाहात्म्यादेवाप्रकृतवाक्यार्थतादात्म्येन प्रकृतवाक्यार्थोऽवतिष्ठते। गुणीभूतव्यङ्ग्यभेदश्चायमिति तु रमणीयः पन्थाः।

अलंकारसर्वस्वकारस्तु—'विशेषणसाम्याद्धि प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदकत्वेन[1] प्रतीयते। अवच्छेदकत्वाच्च व्यवहारसमारोपः, न तु रूपसमारोपः। रूपसमारोपे त्ववच्छादितत्वेन प्रकृतरूपरूपित्वाद्रूपकमेव स्यात्' इत्याह। तदेतदुक्तिमात्ररमणीयम्। अप्रकृतव्यवहारः प्रकृतकर्तरि नायकादिकस्वकर्तृविशेषित[2] आरोप्यते तदविशेषितो वा? नाद्यः। एवं च सति चन्द्रादेर्नायकव्यवहाराश्रयत्वेन[3] नायकसाम्यं सिध्येत्। तच्च श्लेषादि-

---

ननु कादाचित्क एवास्तामत आह—**कथं वेति**। आक्षिप्तस्याक्षेपकेणैवान्वयनियमादिति भावः। इष्टापत्तिं निराचष्टे—**तथात्वे चेति**। भेदेन मुखचुम्बनादावन्वये चेत्यर्थः। तयोः निशाचन्द्रयोः। **नायकेति**। 'स्त्रीपुंवच्च' इत्येकशेषः। एवमग्रे सर्वत्र। व्यतिरेकं दर्शयति—**निशामुखेति**। **स्वाधीति**। स्त्रीत्वपुंस्त्वाधिकरण एवेत्यर्थः। नन्वेवं क्वचिदाक्षेपेण क्वचिद्व्यञ्जनया निर्वाह इति वैरूप्यं स्यादत आह—**श्लिष्टेति**। तैरपीत्यर्थः। एवेनाक्षेपव्यावृत्तिः। ननु शक्त्यैव कुतो नात आह—**शक्तेरिति**। शक्त्यन्तरं तु दुर्वचमिति भावः। इदं मतमुपसंहरति—**तदिति**। एवः प्राग्वत्। व्यङ्ग्याप्रकृतवाक्यार्थस्य प्रकृतपरिपोषकत्वादाह—**गुणीति**। तुर्भामहादिमतवैलक्षण्यसूचकः।

**स्वेति**। अप्रकृतव्यवहारेत्यर्थः। चो ह्यर्थे। यत इति तदर्थः। **व्यवहाराश्रयत्वेनेति**। सजातीयव्यवहाराश्रयत्वेनेत्यर्थः। तदाश्रयत्वस्य ब्रह्मणापि दुर्वचत्वादिति भावः। अत एवाह—**नायकसाम्यमिति**। तच्च साम्यं च। विशेषणत्वे सतीति शेषः। एवं

---

१ प्रस्तुतस्य असाधारणधर्मरूपेण। अर्थात् अप्रस्तुतव्यवहारावच्छिन्नं प्रस्तुतम् (नायकव्यवहारावच्छिन्नो भास्करः) प्रतीयत इति यावत्। २ नायकादिरूपो यः स्वस्य (अप्रकृतव्यवहारस्य) कर्ता तेन विशेषितः विशेषणयुक्तः (कर्तृविशेषणकः)?। ३ नायकव्यवहाराश्रयो नायक एव भवेत्, न चन्द्रः। ततश्च नायकसदृशव्यवहाराश्रयश्चन्द्रः इति वक्तव्यं स्यात्। एवं च चन्द्रे नायकसाम्यं संपन्नमित्याशयः।

भित्तिकाभेदाध्यवसायेन व्यवहाराभेदं प्रतिपिपादयिषतः कवेरनभिप्रेतमेव । अभिप्रेतं तु नायकत्वम् । तच्च नायकस्य व्यवहारविशेषणत्वे न सिध्यति । किं च 'निशामुखं चुम्बति चन्द्रः' इत्यत्र चन्द्रे नायकव्यवहारसमारोप एव, न नायकत्वारोपः । एवमेव निशायामपि न नायिकात्वारोपः, तुल्यन्यायत्वात् । एवं च मुखचुम्बनमात्रस्य[1] नायिकानिर्मुक्तस्यासुन्दरत्वान्नायकासाधारणव्यवहारत्वायोगाच्च किमारोपेण ? यदि च निशायां स्त्रीलिङ्गव्यङ्ग्यं नायिकात्वमिति निरीक्ष्यते तदा चन्द्रगतपुंलिङ्गव्यङ्ग्यं नायकत्वमपि[2] निरीक्ष्यताम् । न द्वितीयः । नायकसंबन्धित्वेनाज्ञातस्य मुखचुम्बनमात्रस्याहृद्यत्वात् । 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति निदर्शनातो वैलक्षण्यायास्मदुक्त[3]वैधर्म्यस्यैवास्थेयत्वाच्च । शिष्टमनुपदमेव वक्ष्यामः ।

यत्तु सर्वस्वकाराज्ञानुवर्तिना कुवलयानन्दकृता सपूर्वपक्षसिद्धान्तमुक्तम्—"अत्र च विशेषणसाम्यात्सारूप्याद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं

---

सति व्यवहारसमारोपः कश्चिदर्थः स्यादित्याह–**किं चेति** । **व्यवहारसमारोप एवेति** । त्वया वाच्य इति शेषः । एवव्यावर्त्यमाह—**न नायकेति** । रूपसमारोपस्य त्वयानङ्गीकारादिति भावः । तथा सति दोषमाह—**एवं चेति** । व्यवहारमात्रारोपे चेत्यर्थः । **नायिकेति** । नायिकाऽसंबद्धस्येत्यर्थः । **नायकासाधारणेति** । मुखचुम्बनस्य पुत्रादिसाधारण्यादिति भावः । इमं दोषमुद्धरति—**यदि चेति** । **निरीक्ष्येति** । तथा च रूपसमारोपो नेति त्वदुक्तिरसंगतेति भावः । **अस्मदुक्तेति** । अत्र चाप्रकृतेत्यादिनोक्तेत्यर्थः । अत्र समासोक्तौ च । विशेष्ये चन्द्रादौ । सर्वथैव आरोपानारोपान्यतरविषया ।

---

१ भवता नायकव्यवहारः समारोप्यते, न नायकत्वम् । नायिकानिर्मुक्तं मुखचुम्बनमात्रं न नायकस्यासाधारणो धर्मः । ततश्च यावन्नायक-नायिकात्वप्रतीतिर्न भवेत्तावद्रसप्रतीतिः कुतः स्यात् ? ।

२ नायिकात्वारोपवत् नायकत्वमप्यारोप्यतामित्याशयः ।

३ निदर्शनायां शब्दोपात्तयोर्द्वयोः (पदार्थ-वाक्यार्थयोः) आर्थोऽभेदः । समासोक्तौ तु एकः (प्रकृतवाक्यार्थः) शब्दोपात्तः, अन्यो न । अनयोरभेदः । इति निदर्शना-समासोक्त्योर्वैलक्षण्यम् । तथा च समासोक्तौ रूपसमारोपस्वीकारेपि 'रूपके द्वयोरुपात्तत्वम्, समासोक्तौ तु प्रकृतस्यैवोपात्तत्वमिति' द्वयोर्वैधर्म्यं स्यादित्याशयः ।

तत्प्रकृते विशेष्ये तत्समारोपार्थम्। सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात्। ततश्च समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः। न तु रूपक इव प्रस्तुते अप्रस्तुतसमारोपोऽस्ति। 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रत्वारोपहेतुचन्द्रशब्दसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमाः' इत्यादौ समासोक्त्युदाहरणे चन्द्रादौ जारत्वाद्यारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात्। न चेह 'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः' इत्यत्र निरीक्षणानुगुणनयनोपादानं यथा पयोदस्य द्रष्टृपुरुषत्वस्य गमकं तथा किंचिज्जारत्वस्यास्ति। न वा 'त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति' इत्यत्र सेतुमन्थकृत्त्वं विष्णोः कार्यं यथा राज्ञो विष्णुत्वस्य तथा किंचिदस्ति। तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः। यद्यपि विशेषणसमर्पितयोर्द्वयोरप्यर्थयोरविशिष्टं प्राधान्यम्, तथाप्यन्यतराश्रये धर्मिण्यन्यतरारोपस्यावश्यकत्वे, श्रुते प्रकृतव्यवहारधर्मिण्येवाप्रकृतव्यवहारस्यारोप उचितः। तस्य च स्वरूपतो ज्ञातस्यारोपे चारुत्वाभावात्कामुकाद्यप्रस्तुतधर्मिसंबन्धित्वेनावगम्यमानस्य रसानुगुणत्वादारोपः। कामुकादेश्च पदादनुपस्थितस्यापि चुम्बनादिना व्यञ्जितस्य व्यवहारविशेषणत्वम्। तस्मात् 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यत्र जारसंबन्धिताद्दशचुम्बनरूपव्यवहाराश्रयश्चन्द्र इत्येव बोधः" इति।

---

कविसंरम्भेति। स्वप्रतीत्युद्देश्यकशब्दसंदर्भरूपकविव्यापारेत्यर्थः। फलितमाह—ततश्चेति। अप्रस्तुतेति। अप्रस्तुतसंबन्धिव्यवहारेत्यर्थः। अप्रस्तुतेति। अप्रस्तुतरूपेत्यर्थः। तद्वाचकेति। जारवाचकेत्यर्थः। एतेन शाब्द आरोपो न संभवतीत्युक्तम्। नन्वाक्षिप्तनायकादिना आक्षिप्तरूपकं भवत्वत आह—न चेहेति। अस्तीत्यत्रान्वयः। इह रक्त इत्युदाहरणे। जारत्वस्य गमकमित्यस्यानुषङ्गः। एवमग्रेऽपि विनिगमकमाह—श्रुते इति। तथा च श्रुतप्रस्तुतार्थोपस्कारकतया विच्छित्तिविशेषशालित्वमिति

१ राज्ञो विष्णुत्वस्य यथा गमकं तथा न किंचिदस्तीत्यनुषङ्गः।

२ अप्रकृतव्यवहाराश्रये धर्मिणि (अप्रस्तुते) प्रकृतव्यवहारस्य, प्रकृतव्यवहाराश्रये धर्मिणि (प्रस्तुते) अप्रकृतव्यवहारस्य वा आरोप आवश्यकः। अनारोपेण कस्याप्यन्वयाभावे तु असंबद्धाभिधानप्रसङ्गापत्तेरित्यर्थः।

तदेतत्सर्वमसंगतम् । यत्तावदुच्यते 'मुखं चन्द्रः' इत्यत्र मुखे चन्द्रत्वारोप इति, तन्न । नामार्थयोरभेदेनैवान्वयान्मुखे चन्द्रत्वस्यारोपः, न चन्द्रत्वस्य चन्द्रविशेषणस्य । यदप्युच्यते जारादिपदसमभिव्याहारस्य हेतोर्विरहान्न चन्द्रादौ जारत्वारोप इति । तत्र श्रौतारोपे तादृशसमभिव्याहारस्य हेतुत्वम्, न त्वार्थारोपे । अन्यथा रूपकध्वनेरुच्छेदापत्तेः[1] । न च रूपकध्वनावारोप्यमाणासाधारणधर्मोक्तिरारोप्यमाणतादात्म्यव्यञ्जिका, न चेह तथा किंचिदस्तीति वाच्यम् । इहापि परनायिकामुखचुम्बनस्य श्लेषमर्यादया व्यञ्जनमर्यादया वा प्रतीतस्य प्रकृतधर्मिणि चन्द्रे आरोप्यमाणस्य जारासाधारणधर्मत्वेन जारत्वव्यञ्जकतायाः स्फुटत्वात् । एतेन 'विद्युन्नयनैः' इत्यत्र 'त्वं सेतुबन्धनकृत्' इत्यत्र च यथा द्रष्टृत्व—विष्णुत्वगमकं तथेह नास्तीति निरस्तम्[2] । न च जारत्वस्य चन्द्रादावारोपमन्तरेणापि[3] जारव्यवहारारोपः सिध्यन्ननुपपत्तेरभावान्न जारत्वं गमयेदिति वाच्यम् । गमकं हि द्विविधम्—आक्षेपकं व्यञ्जकं च । तत्राक्षेपकमनुपपद्यमानमेव गमयति । व्यञ्जकं तु नानुपपत्तिमपेक्षते । 'गतोऽस्तमर्कः' इत्यादौ तथैव दर्शनात् । अन्यथा अर्थापत्त्या गतार्थत्वेन व्यञ्जनावैयर्थ्यप्रसङ्गात् । किं च त्वयापि हि जारादेरप्रकृतधर्मिणः प्रतीतिरवश्यं वाच्या आरोप्य-

भावः । स्वरूपतः अप्रकृतव्यवहारत्वेन । **चन्द्रविशेषणस्येति** । तादात्म्येन चन्द्रारोपे तादात्म्यस्यापि संबन्धविधया आरोपविषयत्वात् तस्य चन्द्रत्वानतिरेकात् चन्द्रत्वारोपेत्युक्तम् । न तु प्रकारतया चन्द्रतारोपः । अन्यत्र विशेषणत्वेनोपस्थितस्यान्यत्र प्रकारतया आरोपायोगादिति तदाशयाच्चिन्त्यमिदम् । भामहादिमतेनाह—**श्लेषेति** । स्वमतेनाह—**व्यञ्जनेति** । इदं सर्वं पूर्वमेव दूषितम् । **जारेति** । सिध्यन् जारव्यवहारारोप इत्यर्थः । **दर्शनादिति** । अनुपपत्तिं विनापि नानार्थव्यञ्जनदर्शनादित्यर्थः । अन्यथा अनुपपत्तेस्तद्धेतुत्वे । अन्यथा तदप्रतीत्या तद्विशेषणत्वानङ्गीकारे । एवं च तदर्थं तत्प्रतीतौ च सचिवाभ्यां सहिताभ्याम् । अन्यथा ताभ्यां न व्यञ्जनम् किं तु केवलचुम्बनेन तदङ्गीकारे ।

१ रूपकध्वनौ आरोपे सत्यपि तादृशविषयिवाचकपदस्यासंनिधानम्, (व्यङ्ग्यत्वात्) ।

२ परनायिकामुखचुम्बनं जारताया गमकमिहाप्यस्तीति भावः ।

३ जारत्वस्य आरोपं विना यदि जारव्यवहारारोपः न उपपद्येत तर्हि अनुपपद्यमानो जारव्यवहारो जारत्वं गमयेत् । अत्र तु चन्द्रे जारत्वस्यारोपं विनापि जारव्यवहारारोपः (मुखचुम्बनादिः) श्लेषमर्यादया (आदिभागरागोंऽपि श्लेषवशाच्चुम्बनमेव) उपपद्यते । अत एव अनुपपत्तिर्नास्ति । अनुपपद्यमान एव हि गमको धर्मो गम्यं गमयति । इह तु न गमयेदिति शङ्का ।

माणव्यवहारविशेषणार्थम् । अन्यथा स्वरूपतो ह्यप्रकृतव्यवहारारोपे चारुतानापत्तेः[1] । एवं चावश्योपस्थाप्यस्य जारादेस्तादृशचुम्बनकर्तरि चन्द्रादावेव तादात्म्येन विशेषणत्वमुचितम्, न तु व्यवहारे भेदेन[2] । चन्द्रस्य जारभिन्नतावगमे परनायिकावदनचुम्बनस्याहृद्यत्वात् ।

अपि च 'निशामुखं चुम्बति चन्द्र एषः' इत्यत्र स्त्रीलिङ्गपुंलिङ्गाभ्यां मुखचुम्बनरूपार्थसचिवाभ्यां नायिकात्वं नायकत्वं च व्यज्यत इति हि निर्विवादम् । अन्यथा 'निशामुखं चुम्बति चन्द्रिकैषा', 'अहर्मुखं चुम्बति भानुबिम्बम्' इत्यत्रापि नायकप्रतीत्यापत्तेः[3] । एवं च सामानाधिकरण्येनैव संसर्गेण व्यज्यमानं नायकत्वं निशाशशिनोर्नायकत्वारोप[4] एव पर्यवस्यति । "अपरित्यक्तस्वरूपयोर्निशाशशिनोर्नायकताख्यधर्मविशिष्टयोः प्रतीतेः" इति त्वदुपजीव्यग्रन्थविरोधश्च[5] । 'अविनाभावादप्रकृतव्यवहारेणाक्षिप्तेन धर्मिणैव प्रस्तुतो धर्म्यवच्छिद्यते' इति तट्टीकाविरोधश्च । किं च "चुम्बनादिव्यवहारेणाभिव्यक्तस्य नायकस्य व्यवहारविशेषणत्वमेव, न त्वभेदेन चन्द्रादिविशेषणत्वम् । चन्द्रादिपदसमानाधिकरण[6]पदानुपस्थापितत्वात्"

---

एवं च अतिप्रसङ्गभङ्गाय तत्सहिताभ्यां तदङ्गीकारे च । **सामानेति** । स्त्रीत्वपुंस्त्वेत्यादिः । पर्यवसितार्थानङ्गीकारे आह—**अपरीति** । **त्वदुपजीव्येति** । कुवलयानन्दोपजीव्यालंकारसर्वस्वेत्यर्थः । अत एव तदाज्ञानुवर्तिनेति प्रागुक्तम् । अविनाभावात् नियतसंबन्धात् । **तट्टीकेति** । अलंकारसर्वस्वटीका विमर्शिनीत्यर्थः । तदुक्त्यन्तरं खण्डयति—**किं चेति** ।

---

१ उक्तं च त्वया पूर्वम्—'तस्य ( अप्रकृतव्यवहारस्य ) च स्वरूपतो ज्ञातस्यारोपे चारुत्वाभावात्कामुकाद्यप्रस्तुतधर्मिसंबन्धित्वेनावगम्यमानस्य रसानुगुणत्वात्' इति ।

२ भवन्मते व्यवहारस्य विशेषणं कामुकादिः, अर्थात् कामुकसंबन्धिमुखचुम्बनादिव्यवहारः । ततश्च भेदेनैवान्वयः स्यात् । धर्मिणः ( जारादेः ) प्रतीतिस्वीकारे तु चन्द्रेण सह तस्याऽभेदेनान्वयः स्यात् ।

३ नायिका च नायकश्च नायकौ, तयोः प्रतीतिः ।

४ स्त्रीत्वपुंस्त्वयोरधिकरणभूतौ यौ निशाशशिनौ तत्रैव यथाक्रमं नायिकात्वं नायकत्वं चाभिव्यज्यते । एवंविधायाश्चाभिव्यक्तेः निशा-शशिनोर्नायकत्वारोपे एव पर्यवसानम् । ततश्च 'व्यवहारसमारोप एव चारुताहेतुः, न तु रूपसमारोपः' इति त्वदुक्तिः स्पष्टमसंगतेत्याशयः ।

५ अलंकारसर्वस्व-तट्टीकयोर्नायकत्वारोपे एव तात्पर्यम् । ततश्च स्पष्टमुपजीव्यविरोधः ।

६ नायकवाचकपदानुपस्थापितत्वादित्यर्थः ।

इत्युक्तं तत्र तुल्यन्यायत्वान्निशायामपि न नायिकात्वारोपः, अपि तु नायकवदभिव्यक्ताया नायिकाया अपि व्यवहारसंबन्धित्वेनैवावस्थानमिति वक्तव्यम्। तच्च बाधितम्। नायिकात्वानालीढकेवलरात्रिमुखचुम्बनरूपस्य व्यवहारस्य नायकासंबन्धित्वात्। नहि रात्रितादात्म्यं[1] विना नायिकायाः पृथक् मुखं विशेषयितुमस्ति सामर्थ्यम्। अपि च।

'निर्लक्ष्मीकाऽभवत्प्राची प्रतीचीं याति भास्करे।
प्रिये विपक्षरमणीरक्ते का मुदमञ्चति ॥'

इत्यत्र पूर्वार्धगतायां समासोक्तौ भास्करादीनां नायकत्वाप्रतीतावुत्तरार्धे प्रियत्वादिना समर्थनायाः सर्वथैवानुपपत्तेः। अन्यच्च—अप्रकृतव्यवहारः प्रकृतविशेष्ये प्रकृतव्यवहार[2]ताटस्थ्येनारोप्यते, तदभिन्नतया वा? नाद्यः। एवं च प्रकृतविशेष्ये प्रकृताप्रकृतव्यवहारयोरेकत्र द्वयमिति विषयताशाली बोधः स्यात्। स चासिद्ध इत्युक्तमेव। न द्वितीयः। इतोऽपि प्रकृतव्यवहार एवाप्रकृतव्यवहारस्याभेदेनारोपो वरीयान्, न तु भेदसंसर्गेण प्रकृतविशेष्ये, अभेदांशे व्यवहारांशे चारोप[3]स्वीकारप्रसङ्गात्। मम त्वभेदांश-

यदपीत्यर्थः। तदनालीढत्वादेव केवलत्वम्। दोषान्तरमाह—**अपि चेति**। यातीति सप्तम्यन्तम्। अञ्चति प्राप्नोति। आदिना प्राच्यादिपरिग्रहः। **नायकत्वेति**। एकशेषात्त्वः। दोषान्तरमाह—**अन्यच्चेति**। **एवं चेति**। यत एवं सतीत्यर्थः। **स चासिद्ध इति**। अप्रकृतव्यवहारस्य प्रकृतासंबन्धित्वादिति भावः। प्रकृतव्यवहाराभिपन्नाप्रकृतव्यवहारस्य भेदसंसर्गेण प्रकृतविशेष्ये समारोपे प्रकारतया अभेदांशे, विशेष्यतया व्यवहारांशे आरोप इति गौरवादाह—**वरीयानिति**। उपसंहरति।

---

१ अचेतनाया रात्रेर्मुखमप्रसिद्धम्। अत एव रात्रितादात्म्यं कृत्वा नायिकाया विशेषणं भवेन्मुखमित्यर्थः।

२ प्रकृतव्यवहारात्पृथग्भूतस्य अप्रकृतव्यवहारस्यारोप इत्यर्थः। एवं च ताटस्थ्यस्वीकारे प्रकृताऽप्रकृतव्यवहारसंबन्धिविषयताद्वयं वक्तव्यं स्यादित्याशयः।

३ प्रकृते ( धर्मिणि ) अप्रकृतव्यवहारस्य भेदेनाऽऽरोपो भवता स्वीक्रियते। ततश्च प्रकारतया अभेदांशे, विशेष्यतया च व्यवहारांशे आरोपो वक्तव्यः स्यादिति उभयथाऽऽरोपो गौरवमित्याशयः।

मात्र इति स्फुट एव विशेषः। तस्मादप्रकृताभिन्नतया व्यवसितः प्रकृतव्यवहारः स्वविशेष्ये तद्विशेष्याभिन्नतयावस्थिते भासते। तत्राप्रकृतार्थ उपस्कारकतया गुण इति प्रकार एव रमणीयः। स च न वाक्यार्थरूपके 'त्वत्पादनखरत्नानां' इत्यत्रेव विशिष्टस्य विशिष्टे। समासोक्तौ तयोः पृथक्छब्दवेद्यत्वाभावात्। किं तु प्रकृतवाक्यार्थघटकाः पदार्थास्तादात्म्येनाप्रकृतघटकपदार्थालीढा एव वैशिष्ट्यमनुभवन्तो महावाक्यार्थरूपेण परिणमन्तीति सूक्ष्ममीक्षणीयम्। अतिशयोक्ताविवाप्रकृतेन प्रकृतस्य निगरणं तु न वाच्यम्। तस्य शब्दवाच्यत्वात्।

अथास्याः केचन भेदा निगद्यन्ते—

विशेषणसाम्यं श्लेषेण भवति शुद्धसाधारण्येन वा, तदपि धर्मान्तरपुर-

**तस्मादिति**। रमणीय इत्यत्रास्यान्वयः। **स्वेति**। अप्रकृतव्यवहारविशेष्ये अप्रकृत इत्यर्थः। **तदिति**। प्रकृतव्यवहारविशेष्यप्रकृतेत्यर्थः। तत्र प्रकृते। स च आरोपश्च। वाक्यार्थरूपकमेवाह—**त्वत्पादेति**। तयोः प्रकृताप्रकृतवाक्यार्थयोः। वैशिष्ट्यस्यैव वाक्यार्थता। तदाह—**वैशिष्ट्यमिति**। अवान्तरवाक्यार्थयोर्भिन्नत्वादाह—**महेति**। **तस्येति**। प्रकृतस्य विशेषणसाम्यप्रतिपाद्यत्वादित्यर्थः। तदपि द्विधा, तत्साम्यमपि।

१ यथा—'विबोधयन्०' अत्र तस्य (प्रकृतव्यवहारस्य) विशेष्यम् (यः भास्करः) तदभिन्नतया अवस्थिते स्वस्य (अप्रकृतव्यवहारस्य) विशेष्ये (अप्रकृते नायके) [भास्कराभिन्नतया प्रतीते खण्डितानुनयकर्तरि नायके इति यावत्], प्रकृत(भास्कर)व्यवहारः अप्रकृत(नायक)व्यवहाराभिन्नतया भासते।

२ सर्वस्य वक्तव्यस्यायमाशयः—विशिष्टस्य [अप्रकृतवाक्यार्थधर्मि(नायक)विशिष्टस्य व्यवहारस्य] विशिष्टे (प्रकृतवाक्यार्थविशेष्यविशिष्टे प्रकृतवाक्यार्थे) आरोपो न भवति, वाक्यार्थरूपके (त्वत्पाद) इत्यत्र यथा भवति। किन्तु प्रकृतवाक्यार्थावयवीभूताः पदार्थाः सूर्य–नलिनी–किरणादयः अप्रकृतवाक्यार्थावयवीभूतपदार्थ(नायक–नायिका–हस्तादि)रूपाः सन्तः तद्वैशिष्ट्यमनुभवन्तो महावाक्यार्थरूपा भवन्ति। अयं भावः—समासोक्तौ शब्दतः प्रकृतवाक्यार्थघटकानां पदार्थानां प्रत्ययो यद्यपि भवति परं ते (सूर्य–नलिन्यादयः पदार्थाः) अप्रकृतवाक्यार्थावयवनायक–नायिकादिपदार्थाभिन्नतया प्रतीयन्ते। एवं प्रकृतव्यवहारबोधकः प्रकृतवाक्यार्थबोधः पृथग् भवति, अप्रकृतव्यवहारबोधकः अप्रकृतवाक्यार्थबोधश्च पृथग् भवति। परं तौ अवान्तरवाक्यार्थपदवाच्यौ। प्रकृताऽप्रकृतवाक्यार्थयोः संमिलितबोधस्तु महावाक्यार्थरूपेण भवति।

स्कारेण कार्यपुरस्कारेण वेति प्रत्येकं द्विविधम् । तत्र 'विबोधयन्करस्पर्शैः' इत्यत्र धर्मान्तरपुरस्कारेण श्लेषे समुदाहृतमपि विशेषणसाम्यं पुनरुदाह्रियते—

'उत्सङ्गे तव गङ्गे पायं पायं पयोऽतिमधुरतरम् ।
शमिताखिलश्रमभरः कथय कदाहं चिराय शयिताहे ॥'

अत्र शिशुजननीवृत्तान्ताभेदेन स्थितः प्रकृतवृत्तान्तः । श्लिष्टकार्यपुरस्कारेणाप्युदाहृतं 'संगृह्णास्यलकान्निरस्यसि—' इत्यत्र । शुद्धसाधारण्येन धर्मान्तरपुरस्कारेण यथा—

'अलंकर्तुं कर्णौ भृशमनुभवन्त्या नवरुजां
ससीत्कारं तिर्यग्वलितवदनाया मृगदृशः ।
कराब्जव्यापारानतिसुकृतसारान्रसयतो
जनुः सर्वश्लाघ्यं जयति ललितोत्तंस भवतः ॥'

अत्र नवकान्तया क्लेशेन कर्णे क्रियमाणस्योत्तंसस्य वृत्तान्तः प्रत्यग्रखण्डिताधरकामुकवृत्तान्ताभेदेन स्थितः । यथा वा—

'अन्धेन पातभीत्या संचरता विषमविषयेषु ।
दृढमिह मया गृहीता हिमगिरिशृङ्गादुपागता गङ्गा ॥'

अत्र गिरिशृङ्गप्रभववेणुयष्टिव्यवहाराभेदेन ।

कार्यसाधारण्येन यथा—

**धर्मान्तरेति** । कार्यातिरिक्तधर्मपुरस्कारेणेत्यर्थः । कार्यातिरिक्तधर्मप्रतिपादकविशेषणसाम्येनाप्रकृतार्थोपस्थापनम्, कार्यरूपधर्मप्रतिपादकतत्साम्येन वेति द्वैविध्यमिति भावः । उत्सङ्गे ऊरौ मध्ये च । पायं पायं पीत्वा पीत्वा । पयो जलं दुग्धं च । शयिताहे इति लुडुत्तमपुरुषस्यैकवचनम् । रुजाशब्दष्टाबन्तः । **तिर्यग्वलितेति** । अतिवक्रीकृतेत्यर्थः । **अतिसुकृतेति** । अतिपुण्यसाररूपानित्यर्थः । रसयतोऽनुभवतः । हे रमणीकर्णभूषण, सर्वस्तुत्यं तव जन्म जयतीत्यर्थः । नवकान्तया नवोढया । **प्रत्यग्रेति** । इदानीमेव खण्डितोऽधरो येनेत्यर्थः । अन्धेन चक्षुर्हीनेन अज्ञानिना च । पातः पतनं नरकपातश्च । विषयेषु देशेषु नायिकादिषु च । दृढमिति क्रियाविशेषणम् । **व्यवहाराभेदेनेति** । गङ्गावृत्तान्तः स्थित इति भावः । **कार्येति** । कार्यरूपधर्मकृतशुद्धसाधारण्येनेत्यर्थः ।

'देव त्वां परितः स्तुवन्तु कवयो लोभेन, किं तावता[1]
स्तव्यस्त्वं भवितासि, यस्य तरुणश्चापप्रतापोऽधुना[2]।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

कार्यधर्मान्तरयोः संकरेण साधारण्यं यथा—

'उत्क्षिप्ताः कबरीभरं विवलिताः पार्श्वद्वयं न्यकृताः
पादाम्भोजयुगं रुषा परिहृता दूरेण चेलाञ्चलम्।
गृह्णन्ति त्वरया भवत्प्रतिभटक्ष्मापालवामभ्रुवां
यान्तीनां गहनेषु कण्टकचिताः के के न भूमीरुहाः ॥'

अत्र कण्टकचितत्वेन कबरीग्रहणादि संकीर्णम्। समासोक्तौ व्यज्यमानस्याप्रकृतव्यवहारस्योपस्कारकत्वमेव, न प्राधान्यम्। तदुपस्कृतवाच्यस्यैव तु प्राधान्यमित्युक्तम्। तत्र यदि व्यङ्ग्यस्यैव प्राधान्यं स्यात्, न वाच्यस्य, तदा 'देव त्वां परितः स्तुवन्तु–' इति प्रागुदाहृतपद्ये निन्दाव्याजेन स्तुतौ पर्यवसानं[3] न स्यात्। स्तुतिनिन्दयोः प्रकृताप्रकृतव्यवहाराश्रयत्वादिति ध्येयम्।

---

**देवेति**। राजानं प्रति कव्युक्तिः। भवितासि? अपि तु न। दुराचारसंबन्धित्वात्। तदेवाह—**यस्येति**। 'न ना क्रोडो[4] भुजान्तरम्'। आशा दिशः। अगम्यामपि। अमरावतीमपीत्यर्थः। **उत्क्षिप्ता इति**। ऊर्ध्वं क्षिप्ता इत्यर्थः। विवलिता वक्रीकृताः। न्यकृता अधःकृताः। के के न गृह्णन्ति। अपि तु सर्वेऽपीत्यर्थः। अत्र कण्टकचितत्वं कार्योऽन्यधर्मः। रोमाञ्चव्याप्तत्वं कण्टकयुतत्वं च तस्यार्थः। कबर्यादिग्रहणं कार्यरूपो धर्मः। तस्यैव प्रतिपाद्यत्वात्। आदिना पार्श्वद्वयग्रहणादिसंग्रहः। एवं पूर्वोदाहरणेष्वपि यथा-

---

१ लोभेन कवयः स्तुवन्ति, तावता किं त्वं स्तोतव्यो भवितासि? अपि तु नेत्याशयः।

२ प्रभावशालितया सर्वदा नवीनः। अप्रकृतपक्षे तु—प्रगाढयौवनतया कामान्धत्वात्सर्वस्त्रीप्रसक्त इति ध्वन्यते।

३ अत्र हि व्यङ्ग्यस्य अप्रकृतव्यवहारस्य निन्दायाम्, वाच्यस्य प्रकृतस्य (राज्ञः) च स्तुतौ तात्पर्यम्। व्यङ्ग्यस्य प्राधान्यस्वीकारे निन्दायां पर्यवसानं व्यपदिश्येत, न स्तुतौ। वाच्यस्य प्राधान्ये तु स्तुतौ पर्यवसानं सम्यगेवेत्याशयः।

४ क्रोड इति पुंपाठस्तु नागेशस्याद्भुतं पाण्डित्यं सूचयति, 'न ना' इत्यमरे, 'न पुमानङ्करक्षसोः' इति कोषान्तरेषु च मुखतो निषेधात्।

“—‘तन्वी मनोहरा बाला पुष्पाक्षी पुष्पहासिनी ।
विकासमेति सुभग भवद्दर्शनमात्रतः ॥’

अत्र तनुत्वादिविशेषणसाम्याल्लोलाक्ष्यां लताव्यवहारप्रतीतिः । तत्र लतैकगामिविकासाख्यधर्मसमारोपः कारणम् । अन्यथा विशेषणसाम्यमात्रेण नियतलताव्यवहारस्याप्रतीतेः । विकासश्च प्रकृते उपचरितो ज्ञेयः” इत्यलंकारसर्वस्वकार आह, तत्र विचार्यते—नात्र विशेषणसाम्यमात्रेण लताव्यवहारप्रतीतिः, अपि तु लतारूपाऽप्रकृतासाधारणविकासाऽऽरोपमहिम्नेति भवतैवोक्तम् । तथा च विशेषणसाम्यादप्रस्तुतस्य गम्यत्वमिति त्वदुक्तसमासोक्तिलक्षणस्य कथमत्र प्रवृत्तिः ? न च लक्षणे विशेषणसाम्यमात्रगम्यत्वं न विवक्षितम्, अपि तु विशेषणसाम्यगम्यत्वम् । प्रकृते च विकासस्याप्यधिकस्य गमकत्वम्, न त्वेतावता विशेषणसाम्यस्य गमकताहानिरिति वाच्यम् । श्लेषेऽतिव्याप्त्यापत्तेः । न च विशेषणमात्रसाम्यगम्यत्वं विवक्षितम्[1] । एवं च न श्लेषेऽतिव्याप्तिः । नापि ‘तन्वी मनोहरा’ इत्यत्र लक्षणस्यावर्तनमिति वाच्यम् । ‘तन्वी मनोहरा’ इत्यत्र समासोक्तेरेवाभावात् । यत्र साधारणविशेषणमहिम्नाऽप्रकृतस्य स्फूर्तिस्तत्र समासोक्तिः । यत्र त्वसाधारणमहिम्ना, तत्र व्यङ्ग्यरूपकमिति विषयव्यवस्थापनात् । एवं च प्रकृते साधारणविशेषणसत्त्वेऽपि न तन्महिम्ना लतायाः स्फूर्तिः, अपि तु विकासमहिम्नेति व्यङ्ग्यरूपकमुचितम् । यथा—

‘चकोरनयनानन्दि कह्लाराह्लादकारणम् ।
तमसां कदनं भाति वदनं सुन्दरं तव ॥’

यर्थं बोध्यम् । तत्र तयोर्मध्ये । तत्र तद्व्यवहारप्रतीतौ । अन्यथा तत्समारोपस्याकारणत्वे । **विशेषणेति** । तेषामन्यसाधारण्यादिति भावः । कादाचित्कस्य संभवादाह—**नियतेति** । **श्लेषेऽतिव्याप्त्यापत्तेरिति** । तत्र विशेष्यस्य श्लिष्टत्वेऽपि विशेषणसाम्यस्याक्षतेरिति भावः । **विशेषणमात्रेति** । मात्रपदेन विशेष्यसाम्यव्यावृत्तिर्न धर्मान्तरविकासादेरिति भावः । **न श्लेष इति** । तत्र विशेष्यस्यापि श्लिष्टत्वादिति भावः । **समासोक्तेरेवेति** । सर्वस्वग्रन्थसिद्धान्तात्प्रकृतेऽप्रकृतलताप्रतीतावपि क्रियारूपतद्व्यवहारस्य कस्यचिदप्रतीतेर्नात्र समासोक्तिरित्यपि बोध्यम् । एतेन यदपीत्याद्यपि सर्वस्वग्रन्थः परास्त इति दिक् । एवं च उक्तव्यवस्थाङ्गीकारे च । उक्तमेव सदृष्टान्तमाह—**यथेति** । तत्र हि अन्वे-

१ मात्रपदेन विशेष्यसाम्यस्य व्यावृत्तिः, न धर्मान्तरस्य विकासादेः । एवं च विशेष्यस्य अश्लिष्टत्वात् ‘तन्वी०’ अत्र लक्षणस्य समन्वय इत्यर्थः ।

इत्यादौ सुन्दरमिति साधारणविशेषणसत्त्वेऽपि रूपकमेव, तथेहापि। क्वचिद्गुणीभूतं क्वचित्प्रधानमित्यन्यदेतत्। साधारण्येन विशेषणसाम्यमूलायाः समासोक्तेस्तु 'अन्धेन पातभीत्या संचरता—' इत्यादिः प्रागस्माभिरुदाहृतो विषय इति न निरवकाशत्वम्। तत्र ह्यसाधारणधर्मारोपमन्तरेण साधारणविशेषणमहिम्नैवाप्रकृतप्रतीतेः। एतेन 'तदेवं साधारण्येन समासोक्तेर्विशेषणसाम्येऽप्यप्रकृतसंबन्धिधर्मकार्यसमारोपमन्तरेण तद्व्यवहारप्रतीतिर्न भवति' इति विमर्शिनीकृता यदुक्तं तन्निरस्तम्। तस्मादेवं संभवति विषयविभागे 'तन्वी मनोहरा—' इत्यत्र समासोक्तिवचनमहृद्यम्।

यदपि "औपम्यगर्भत्वेनापि विशेषणसाम्यं संभवति। यथा—

'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥'

अत्र हरिणेक्षणामात्रवृत्तेः सुवेषत्वस्य विशेषणस्य महिम्ना दन्तप्रभासदृशानि पुष्पाणीत्यादियोजनां विहाय दन्तप्रभाः पुष्पाणीवेत्याद्युपमितसमासाश्रयेण कृते योजने प्रकृतार्थसिद्धौ सत्यां वृत्त्यन्तरेण त्यक्ताया एव योजनायाः पुनरुज्जीवने पुष्पपल्लवालिवृन्दैरुपमेयैराक्षिप्ताया लतायाः प्रत्ययान्न तद्व्यवहारारोपः। एवं सुवेषेत्यपहाय परीतेति कृते उपमारूप-

नेन्यत्र हि। **धर्मकार्येति**। धर्मकार्ययोः समारोपमित्यर्थः। अयं तदीय उपसंहारग्रन्थः। उपसंहरति—**तस्मादिति**। **प्रकृतार्थेति**। सुवेषत्वरूपेत्यर्थः। वृत्त्यन्तरेण व्यञ्जनया। योजनाया 'उपमानानि' इति समासरूपायाः। **तद्व्यवहारेति**। लताव्यवहारेत्यर्थः। **उपमेति**। यथासंख्यमन्वयः। **पूर्वोक्तरीत्येति**। वृत्त्यन्तरेणेत्याद्युक्तरीत्येत्यर्थः। नन्वेवं कथं विशेषणसाम्यमर्थभेदादत आह—**समासेति**। हरिणेक्षणांशे आक्षिप्तत्वेनाशाब्दत्वादाह—**एकदेशेति**। अत्र उक्तपद्ये। एवमग्रेऽपि। तेनैव अलंकारसर्वस्वकारेणैव। तुल्ययुक्त्या आह—**दन्तप्रभा इति**। तथोक्तं तदा समासोक्तिरित्युक्तम्। स्वयं

१ 'तन्वी०' अत्र व्यङ्ग्यं रूपकं गुणीभूतम्, 'चकोरनयना०' अत्र प्रधानमित्याकूतम्।

२ अयं भावः—हरिणेक्षणामात्रवृत्तिसुवेषत्वविशेषणानुरोधेन 'दन्तप्रभाः पुष्पाणीव' इत्यादिसमासाश्रयणे कृते प्रकृतार्थस्य (नायिकार्थस्य) सिद्धिः। वृत्त्यन्तरेण (व्यञ्जनया) तु त्यक्ताया योजनायाः ('दन्तप्रभासदृशानि पुष्पाणि' इत्याद्याकारिकायाः) पुनरुज्जीवनेपि नात्र नायिकायां लताव्यवहारारोपः (अर्थात् न समासोक्तिः)। विशेषणसाम्यमात्रेण अप्रकृतस्य स्फूर्तावेव समासोक्तेः स्वीकारात्। अत्र तु उपमेयैः अप्रकृतस्य (लतायाः) आक्षेपः। इति।

कसाधकबाधकप्रमाणाभावात्तदुभयसंशयरूपसंकराश्रयेण कृते योजने पश्चात्पूर्वोक्तरीत्या लताप्रतीतेः समासोक्तिरेव। समासभेदेनार्थभेदेऽपि शब्दैक्यमादाय श्लिष्टमूलायामिव विशेषणसाम्यं बोध्यम्। आदावन्ते वा रूपकाश्रयेण दन्तप्रभा एव पुष्पाणीति योजने कृते तु हरिणेक्षणांशे आक्षिप्तलतातादात्म्यकेनैकदेशविवर्तिरूपकेणैवाप्रकृतार्थप्रत्ययोपपत्तेर्नार्थः[1] समासोक्तेरत्र" इति तेनैवोक्तम्, तदपि न विचारसहम्। दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेनाप्यादौ योजने कृते हरिणेक्षणांशे आक्षिप्तलतोपमानिकया एकदेशविवर्तिन्या उपमयैव गतार्थत्वात्समासोक्तेरानर्थक्यादत्राप्रसक्तेः[2]। न चोद्भटमते एकदेशविवर्तिनोरुपमासंकरयोरस्वीकारात्तथोक्तमिति वाच्यम्। अनुपदमेव स्वयं तेन तत्स्वीकारात्।

'हालाहलसमो मन्युरनुकम्पा सुधोपमा।
कीर्तिस्ते चन्द्रसदृशी भटास्तु मकरोद्भटाः॥'

इत्यादौ गत्यन्तराभावात्तेनाप्येकदेशवर्त्युपमाया एव स्वीकरणीयत्वाच्च अवश्यक्लृप्तेनोपपत्तौ भेदान्तरकल्पनानौचित्यात्। तस्मादौपम्यगर्भविशेषणोत्थापितः समासोक्तिप्रकारो न संगच्छते। यत्र श्लिष्टविशेषणेन शुद्धसाधारणविशेषणेन वा सहचरितमौपम्यगर्भविशेषणं तत्र यद्यप्यस्ति समासोक्तिस्तथापि नासावौपम्यगर्भविशेषणोत्थापितस्तृतीयः प्रभेदो भवितुमीष्टे, स्वतन्त्रविषयत्वाभावात्।

यथा—

अलंकारसर्वस्वकृता। **तदिति**। उपमासंकरयोरित्यर्थः। **हालाहलेति**। राजानं प्रति कव्युक्तिः। हे राजन्, तवेति शेषः। **मकरेति**। मत्स्यविशेषेत्यर्थः। तेनापि उद्भटेनापि। राज्ञि रत्नाकरसाम्यस्याशाब्दत्वादाह—**एकेति**। ननु हालाहलेत्यत्र तदावश्यकत्वेऽपि तन्वी मनोहरेत्यत्र समासोक्तिरेव तादृश्यास्त्विमन आह—**अवश्येति**। उपमाभेदेनेत्यर्थः। **भेदान्तरेति**। समासोक्तिरित्यादिः। क्वचित्संभवोऽस्तीत्याह—**यत्रेति**। **स्वतन्त्रेति**। तथा चोक्तान्तर्भाव एवेति भावः। **अम्बरं** वस्त्रमाकाशश्च। तारका नक्षत्रा-

१ एकदेशविवर्तिरूपकेण प्रतीयमानस्य अप्रकृतार्थस्य (लतारूपस्य) उपपत्तिः स्यादेव, अत एव समासोक्तिस्वीकारो नावश्यक इत्यर्थः।

२ यथा एकदेशविवर्तिरूपकेण प्रतीयमानस्य अप्रकृतार्थस्योपपत्तौ समासोक्तिनिरासः, तथा अत्रापि एकदेशविवर्त्युपमया तन्निरास एवोचित इत्याशयः।

'निर्मलाम्बररम्यश्रीः किंचिद्दर्शिततारका।
हंसावलीहारयुता शरद्विजयतेतराम्॥'

अत्र पूर्वार्धगतश्लिष्टविशेषणोत्थापितैव समासोक्तिरुत्तरार्धगतेनौपम्यगर्भविशेषणेन विद्वदुत्थापिता युक्तिस्तदनुगामिना मूर्खेणेवानुमोद्यते। एवं 'दत्तानन्दा समस्तानां प्रफुल्लोत्पलमालिनी' इति पूर्वार्धे कृते शुद्धसाधारणविशेषणोत्थापितैव।

एवं च—

'परिफुल्लाब्जनयना चन्द्रिकाचारुहासिनी।
हंसावलीहारयुता शरद्विजयतेतराम्॥'

इत्यत्रोपमारूपकयोः साधकस्य बाधकस्य चाभावात्संकरालंकारस्वीकर्तृनये तदुभयसंशयात्मक एकदेशविवर्ती संकरालंकार एव। तदस्वीकर्तृनये च यदोपमितसमासस्फूर्तिस्तदैकदेशविवर्तिन्युपमा, विशेषणसमासस्फूर्तौ तथाविधमेव रूपकमिति प्रथमयोजनयैवाप्रकृतार्थावगतेर्द्वितीययोजनायाः 'परिफुल्लाब्जानीव नयनानि' इत्युपमागर्भाया वैयर्थ्यादनुत्थानमेव। यदा तु 'शरद्वर्षासखी बभौ' इति चतुर्थचरणं निर्मीयते तदा तु शरन्मात्र-

ण्यक्षिकनीनिकाश्च। एवेनौपम्यगर्भविशेषणव्यवच्छेदः। विशेषणेन हारसदृशहंसपङ्क्तियुतेत्यनेन। अनुमोदने दृष्टान्तमाह—**विद्वदिति**। श्लिष्टविशेषणोत्थापितामुक्त्वा साधारणविशेषणोत्थापितां तामाह—**एवं दत्तानन्देति**। अत्रापि व्यवहारस्य कस्यचिन्निबन्धनाभावात्कथं समासोक्तिरिति चिन्त्यमिदम्। एतादृशस्थले व्यङ्ग्यरूपकमुपमा वेति तु युक्तमेव प्राग्वत्। एवं च उभयान्तर्भावेन तृतीयभेदानङ्गीकारे च। **उपमेति**। यथासंख्यमन्वयः। **तदिति**। संकरालंकारेत्यर्थः। चस्त्वर्थे। **विशेषणेति**। मयूरव्यंसकेतीत्यर्थः। तथाविधमेव एकदेशविवर्त्येव। 'चरणोऽस्त्रियाम्' इत्युक्तेर्नपुंसकत्वम्। तुरुक्तवैल-

१ विद्वदुत्थापिता युक्तिः यथा विद्वदनुगामिना मूर्खेणाप्यनुमोद्यते, तदनुमोदनं च मूर्खसंबन्ध्येव यथा व्यपदिश्यते, तथा श्लिष्टविशेषणोत्थापिता समासोक्तिः औपम्यगर्भविशेषणेनाप्यनुमोदिता, न तन्मात्रोत्थापिता। मूर्खानुमोदनेन विद्वदुत्थापितत्वं यथा न व्याहन्यते तथा श्लिष्टविशेषणोत्थापितत्वं न निरुध्यत इत्याशयः।

२ श्लिष्टैः शुद्धसाधारणैर्वा विशेषणैरप्रकृतार्थावगतिरेका योजना। औपम्यगर्भविशेषणैरवगतिर्द्वितीया। तत्र प्रथमयैव अप्रकृतार्थप्रत्ययोपपत्तौ सिद्धायां द्वितीययोजनापर्यन्तमनुधावनमेव न भवतीति तस्या अनुत्थानमेवेत्याशयः।

वृत्तेर्वर्षासखीत्वस्योपादानादब्जचन्द्रिकाहंसप्रधानस्योपमितसमासस्यावश्यकत्वात्प्रथमप्रादुर्भूतया नयनह्रासहाराक्षिप्तकामिनीरूपोपमानिकया[1] अत एवैकदेशविवर्तिन्योपमयैव निर्वाह इति निवेदितमपि सहृदयप्रीतये पुनर्निवेदितम् ।

'अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥'

इति कस्यचित्पद्ये प्रावृष एकदेशविवर्तिरूपकेणाङ्गनात्वसिद्धिरिति नोत्तरार्धगतार्थान्तरन्यासानुपपत्तिः । प्रथमचरणे तूपगूहनसाम्यादस्तु नाम समासोक्तिः ।

यत्तु कुवलयानन्दे "सारूप्यादपि समासोक्तिर्दृश्यते । यथा—

'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥'

अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धनसंतानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते" इत्युक्तम्, तदसत् । समासोक्तिजीवातोर्विशेषणसाम्यस्यात्राभावेन समासोक्तिताया एवानुपपत्तेः । न च विशेषणसाम्यात्सादृश्याद्वा यत्राप्रस्तुतव्यवहारः प्रस्तुतेन व्यज्यते सा समासोक्तिरिति लक्षणं निर्मास्यत इति वाच्यम् । समासोक्तौ हि प्रकृतवृत्तान्तोऽप्रकृतवृत्तान्ताभेदेन स्थित इति सर्वसंमतम् । त्वयापि च 'प्रकृतधर्मिण्यप्रकृतव्यवहार आरोप्यते' इत्युक्तम् । एवं स्थिते

क्षण्ये । **एकदेशविवर्तीति** । शान्ततडित्कटाक्षेत्यत्रत्येनेत्यर्थः । **उपगूहनेति** । आलिङ्गनेत्यर्थः । सारूप्यात् सादृश्यात् । **पुरेति** । उत्तरराघवे सीतात्यागानन्तरं कदाचिद्वनं गतस्य श्रीरामस्योक्तिरियम् । क्षितिरुहां तरूणाम् । वनवर्णने वनवृत्तान्ते । तत्सारूप्यात् वनसादृश्यात् । ग्रामादौ वनसादृश्यमाह—**कुटुम्बिष्विति** । कुटुम्बिगतो यो धनसंतानादिसमृद्ध्यसमृद्ध्योर्विपर्यासस्तं प्राप्तस्येत्यर्थः । तत्समाश्रयस्य तादृशकुटुम्बिसमाश्रयस्य । **जीवातोरिति** । चिन्त्यमिदम् । विशेषणसाम्यगम्यसादृश्यगम्यत्वेऽपि तत्त्वानपा-

१ नयनह्रासहारान् दृष्ट्वा कामिन्यर्थः स्फुरति, किन्तु शरत्प्राधान्यानुरोधेन कामिनीव शरदिति उपमानाक्षेपादेकदेशविवर्तिनी उपमा ।

नह्यत्र स्रोतोवृक्षादिविपर्यासो धनसंतानविपर्यासाद्यभेदेन प्रतीयते। नापि वनादौ धनसंतानविपर्यास इति समासोक्त्यन्तैरात्सत्यपि वैलक्षण्ये यद्यसौ समासोक्तिरिति शपथः क्रियते तदा अलंकारान्तरमपि समासोक्तिकुक्षावेव निक्षिप्यताम्।

एवं तर्हि 'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां' इत्यत्र कोऽलंकारः?। अप्रकृतेन वाच्येन प्रकृतव्यवहाराभिव्यक्तिरूपाया अप्रस्तुतप्रशंसाया अत्रासंभवात्प्रकृतस्यैव वाच्यत्वादिति चेत्, साधु पृष्टमायुष्मता। समाधानमस्य सप्रपञ्चमप्रस्तुतप्रशंसाप्रकरण एव निवेदयिष्याम इति। किं चालंकारसर्वस्वकृता 'सादृश्यगर्भविशेषणोत्थापिता सादृश्यमूला समासोक्तिः' इत्युक्तम्। तत्र हि विशेषणसाम्यसत्त्वादुक्तिसंभवोऽप्यस्ति, न तु त्वदुक्तायामिति मूलग्रन्थानवबोधस्तद्विरोधो वा स्फुट एवेति दिक्।

सेयं लौकिके व्यवहारे लौकिकस्य व्यवहारस्य, शास्त्रीये शास्त्रीयस्यारोपेण, एतद्विपर्ययेण च चतुर्धा। तत्राद्या प्रागभिहितैव। द्वितीया

यात्। **नह्यत्र स्रोतोवृक्षादिविपर्यास इति**। न प्रतीयत इत्यत्र शपथातिरिक्तं प्रमाणमन्विष्यतामिति चिन्त्यमिदम्। **विपर्यास इति**। प्रतीयत इत्यस्यानुषङ्गः। **निक्षिप्यतामिति**। तथा च बहुव्याकुली स्यादिति भावः। **समाधानमस्येति**। अप्रस्तुतप्रशंसैवात्रालंकारः। अप्रस्तुतस्य प्रशंसेति न तदर्थः, किंत्वप्रस्तुतेन प्रस्तुतस्य प्रशंसेति। एवं च वाच्येन व्यक्तेन वाऽप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र प्रशस्यते सादृश्याद्यन्यतमप्रकारेण साऽप्रस्तुतप्रशंसेति। न तु वाच्येनैव व्यङ्ग्यमेवेतीति भावः। चिन्त्यमिदम्। युक्त्यसहत्वात्। तथा हि प्रशंसनमत्र किमुत्कर्षाधानं प्रतीतिमात्रं वा। नाद्यः। प्रतीयमानार्थानध्यारोपविषयेष्वप्रस्तुतप्रशंसोदाहरणेष्वव्याप्तेः। नहि ताटस्थ्येनावस्थितोऽप्यर्थ उत्कर्षकर इति युक्तम्। नान्त्यः। प्रकृतेऽभावात्। नह्यत्राप्रस्तुतेन प्रस्तुतस्य प्रतीतिः। वाच्यत्वात्। न चान्यतरत्वेनानयोः संग्रहः। समासोक्तेरेवान्यतरत्वघटितलक्षणकरणे बाधकाभावात्। अतिशयोक्त्यादौ क्लृप्तत्वाच्च। किंचेत्यादिना सर्वस्वकारादिविरोधोद्भावनमप्यसंगतमेव। तच्छिक्षकत्वात्। ईदृशाप्रस्तुतप्रशंसाया अपि तैरनङ्गीकारेण तत्रापि तद्विरोधस्य सत्त्वाच्च, प्राचामाशयस्य प्रागुक्तत्वाच्चेति दिक्। सेयं चतुर्विधा समासोक्तिः।

१ प्रकृतव्यवहारे अप्रकृतव्यवहारारोप इति सर्वसंमत्यनुसारम्।

२ प्रकृतधर्मिणि अप्रकृतव्यवहारस्यारोप इति त्वदुक्त्यनुसारम्।

३ तैस्तैराचार्यैः उदाह्रियमाणा या याऽन्या समासोक्तिरद्यावधि दृष्टा तस्याः अपेक्षया।

४ 'स्थलविशेषे वृत्तान्तद्वयमपि प्रस्तुतं भवति [ एकमतात्पर्यविषयत्वेऽपि पुरः स्थितत्वात्, द्वितीयं वाच्यविधया अवर्ण्यत्वेऽपि वर्णने मुख्यतात्पर्यविषयीभूतत्वात् ] तत्र पुरः स्थिततया प्रकृतकोटौ गणनीयेनापि मुख्यतात्पर्यविषयीभूतत्वाभावादप्रस्तुतोऽप्रस्तुतेन अर्थेन यत्र स्वसदृशं प्रस्तुतं गम्यते सापि समासोक्तिरिति।

यथा—

'गुणवृद्धी परे यस्मिन्नैव स्तः प्रत्ययात्मके ।
बुधेषु सदिति ख्यातं तद्ब्रह्म समुपास्महे ॥'

अत्र वेदान्तशास्त्रसिद्धव्यवहारे व्याकरणसिद्धस्य शतृशानज्व्यवहारस्य । लौकिके शास्त्रीयस्य यथा—

'परार्थव्यासङ्गादुपजहदथ स्वार्थपरता-
मभेदैकत्वं यो वहति गुणभूतेषु सततम् ।
स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥'

अत्र समर्थसूत्रगतमहाभाष्यार्थस्य । तत्र हि 'अथ ये वृत्तिं वर्तयन्ति किं त आहुः' इत्यादिना जहत्स्वार्था वृत्तिरजहत्स्वार्था वृत्तिरिति पक्षद्वयं निरूपितम् । तत्रैवोपसर्जनार्थे अभेदैकत्वसंख्यापि ध्वनिता । प्रकटीकृता च हरिणा—

'यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ॥' इति ।

सामर्थ्यमप्येकार्थीभावबोधकतारूपं तत्रैवोक्तम् ।

शास्त्रीये लौकिकस्य यथा—

'कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम् ।
आगमान्भावयन्भाति वैयाकरणपुंगवः ॥'

अत्र राजव्यवहारस्य । एवं शास्त्रान्तरव्यवहारेऽपि बोध्यम् ।

इयं चालंकारान्तरेषु बहुध्वानुगुण्येन स्थिता । यथा—

---

यस्मिन् शतृशानज्रूपे आनन्दरूपे च । प्रत्ययसंज्ञके चिद्रूपे च परत उत्कृष्टे च । अदेङ्दैच् । सत्त्वादिगुण-वर्धने च देवेषु वैयाकरणेषु च । सत्संज्ञकं सद्रूपं च ब्रह्म शब्दरूपमर्थरूपं चेत्यर्थः । वर्तयन्ति निष्पादयन्ति । **एकार्थीभावबोधकतेति** । एकार्थीभावापन्नार्थबोधकतारूपमित्यर्थः । प्रकृतेः प्रातिपदिकादितः अविद्यायाश्च । परमग्रिमं भिन्नं च । प्रत्ययं तत्संज्ञकं ज्ञानरूपं च कृत्वा । आगमान् तत्संज्ञकान् उपनिषदश्चा-

१ गहनप्रयोजनैः कार्यबीजैः ( सूत्रैः ) प्रजायाः ( प्रकृतेः ) विश्वासं जनयित्वा धनागमान् साधयन् भातीति राजव्यवहारेऽर्थः ।

'स्थितेऽपि सूर्ये पद्मिन्यो वर्तन्ते मधुपैः सह।
अस्तं गते तु सुतरां स्त्रीणां कः प्रत्ययो भुवि॥'

अत्र समर्थ्यत्वेन स्थितार्थान्तरन्यासानुगुण्यमाधत्ते।

'उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह॥'

इह समर्थकत्वेन[2]।

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्रपातिरेकात्।
आभूमीतलनतकंधराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि॥'

अत्र हि परकृतनिजस्तुत्याकर्णनकंधरानमनादिविशेषणसाम्योत्थापितया समासोक्त्या सज्जनव्यवहाराभिन्नतया स्थित एव तरुव्यवहारे भूशाखासंबन्धाभेदाध्यवसितमस्तकमूलनमननिमित्तोत्थापिता[3] त्रपारूपहेतूत्प्रेक्षा संभवति। अन्यथा कितवकृतग्रीवानमनस्यापि त्रपोत्थापकतापत्तेः। इत्युत्प्रेक्षानुगुणा[4] समासोक्तिः। एवम्—

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः।

इत्यत्रापि स्वामिसेवकव्यवहारमूला[5] सुधालेपनोत्प्रेक्षा। अमुयैव दिशा अचेतनव्यवहारे प्रकृते चेतनव्यवहारसंबन्धिस्वरूप–हेतु–फलोत्प्रेक्षायाम्, चेतनव्यवहारे प्रकृते चाचेतनव्यवहारसंबन्धिस्वरूपहेतुफलोत्प्रेक्षायां च समसोक्तिरेव मूलम्।

इति रसगङ्गाधरे समासोक्तिप्रकरणम्।

---

र्थ्यर्थः। राजपक्षे त्वर्थ ऊह्यः। प्रत्ययो विश्वासः। राजप्रियाश्चन्द्रप्रियाः। दिशा रीत्या। स्वरूपहेतुफलानां त्रयाणामुत्प्रेक्षायामित्यर्थः। एवमग्रेऽपि॥ इति रसगङ्गाधरमर्मप्रकाशे समासोक्तिप्रकरणम्।

---

१ समासोक्तिः।

२ राजप्रियाः इत्यादिः समासोक्तिः उत्तमानाम् इत्यादेः सामान्यस्य समर्थिकेति अर्थान्तरन्यासानुगुण्यमाधत्ते।

३ भुवः शाखानां च मिथः संयोगः, भूपर्यन्तलुठच्छाखत्वमित्यर्थः।

४ प्रस्तुततरुधर्मिको व्यवहारः विशेषणसाम्यवशात् अप्रस्तुतसज्जनधर्मिकव्यवहाराभिन्नतया भासते इति पूर्वं समासोक्तिनिष्पत्तौ सत्यां त्रपारूपहेतूत्प्रेक्षा संभवति इत्युत्प्रेक्षानुकूला।

५ सरसुधाकर(प्रकृत)व्यवहारे स्वामिसेवकव्यवहाराभेद इत्यर्थः।

अथ परिकरः—

**विशेषणानां साभिप्रायत्वं परिकरः ॥**

तच्च प्रकृतार्थोपपादकचमत्कारिव्यङ्ग्यकत्वम्। अत एवास्य हेत्वलंकाराद्वैलक्षण्यम्, तत्र[1] व्यङ्ग्यस्यानावश्यकत्वात्। उपपादकता चोपस्कारक-निष्पादकसाधारणी। व्यङ्ग्यस्य गुणत्वाच्च न ध्वनित्वं व्यपदिश्यते।

यथा—

'मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतग्रावभिः।
वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं तिरयाधुना भवभयव्यालावलीढात्मनः ॥'

अत्रात्मनो भागीरथीकर्तृकस्य भवव्यालदंशजनिततापदूरीकरणस्याशंसनं हि वाक्यार्थः। तत्र भगवत्या भवतापनाशिकात्वस्य सुप्रसिद्धत्वात्परिणामेन[2] भवरूपविषयतादात्म्यापत्त्या व्यालजनितसंतापनाशिकात्वं तावत्सूपपादमेव। 'स्थास्नुजङ्गमसंभूतविपहन्त्र्यै नमो नमः' इत्याद्यागमबलाच्च

परिकरं लक्षयति—**विशेषणेति**। तच्च साभिप्रायत्वं च। अत **एवेत्यस्यार्थमाह— तत्रेति**। हेत्वलंकार इत्यर्थः। ध्वनावतिव्याप्तिवारणाय प्रकृतार्थोपपादकेति। परिकराङ्कुरेऽतिव्याप्तिवारणाय विशेषणेति। मीलितं निमीलितम्। स्रस्तं गलितम्। गरुडसंबन्ध्युपलैः रक्तमणिभिश्च। वीचिभिः क्षालितौ कालियाख्यसर्पशत्रुकृष्णपादौ यया तत्संबोधनम्। स्वर्गङ्गे। संसाररूपसर्पदष्टात्मन इत्यर्थः। 'प्रार्थने लोट्' इत्याशयेनाह—**आशंसनमिति**। तत्र वाक्यार्थे। परिणामेन तदलंकारेण। तथा च मयूरव्यंसकादित्वात्समासो बोध्यः। तादात्म्यापत्त्या व्यालरूपविषयिणीति शेषः। **आगमेति**। पुराणेत्यर्थः। आधा-

१ हेत्वलंकारे व्यङ्ग्यसत्ता नाऽनिवार्या। परिकरे तु प्रकृतार्थोपपादकस्य व्यङ्ग्यस्यावश्यकत्वमित्याशयः।

२ ननु रूपके उत्तरपदार्थस्य व्यालस्य प्राधान्ये, संसाररूपव्यालजनिततापनाशकत्वं गङ्गाया आशंसनीयं स्यात्। किन्तु संसारतापनाशिकात्वमेव गङ्गायाः प्रसिद्धम्, न सर्पतापनाशकत्वम्। अत एवाह—परिणामेन इत्यादि। विषयी व्यालः भवरूपविषयात्मकः सन् तापहरणकार्ये कर्मतया उपयोगं प्राप्नोति। अर्थात् विषयी व्यालः विषयस्य भवभयस्यैकात्मा जातः। भवभयनाशकत्वं तु गङ्गाया उपपन्नमेवेत्याशयः।

विषयतादात्म्यं विनापि शुद्धव्यालजनितसंतापनाशिकात्वमपि स्वभावसिद्धमेव। एवं वाच्यार्थस्य सत्यामपि निष्पत्तौ सौन्दर्यविशेषाधानाय साकूतं विशेषणं वीचिक्षालितेत्यादि। अत्र नामान्तरस्य सत्त्वेऽपि कालियाहितशब्दोपादानसामर्थ्याद्भगवतश्चरणे फणागणनृत्यनिःसारीकृतकालिये लोकोत्तरविषहरणशक्तिरुत्पत्तिसिद्धैवासीत्। सा च तयोर्वीचिभिः क्षालनाद्गङ्गायां स्वाश्रयरेणुद्वारा संक्रान्तेति गम्यते। न च शक्तेः पूर्वमेव क्षालनात्कथं चरणेनार्वाक्कालियस्य विषहरणं शक्तिरहितेन संभवतीति वाच्यम्। क्षालितावशिष्टा लेशरूपा शक्तिश्चरणे काचित्स्थितासीत् यया संप्रति कालियस्य विषमहारीत्यप्याकूतान्तर्गतमेवेति नानुपपत्तिः। एवं हि वाच्योपस्कारकतयात्र गुणीभावः, न वाच्यसिद्ध्यङ्गतया।

यथा वा—

'मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव तावकम्।
धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न वीक्षसे॥'

अत्राप्युपेक्षानौचित्यस्य तावकशब्दप्रतिपादितेन स्वामिभृत्यभावेनैव निष्पन्नशरीरस्य प्रकर्षकं धृतशार्ङ्गेत्यादिविशेषणममोघशस्त्रास्त्रसंपन्नस्य समक्षमेव रिपुभिः कृष्यमाणं दासमुपेक्षमाणस्याकीर्तिर्भवित्री तवेत्याकूतगर्भम्। ननु निष्प्रयोजनविशेषणोपादानेऽपुष्टार्थदोषस्योक्तत्वात्सप्रयोजनविशेषणं दोषाभावमात्रं कष्टत्वाद्यभाववद्भवितुमर्हति, न त्वलंकार इति।

नाय तत्करणाय। **नामान्तरेति**। वीचिक्षालितवासुदेवचरणे इत्यादेरित्यर्थः। सा शक्तिः। तयोः पादयोः। स्वशब्देन नाशनशक्तिः। पूर्वमेव कृष्णावतारात्प्रथममेव। अर्वाक् कृष्णजन्मानन्तरम्। एवमग्रेऽपि। उपसंहरति—**एवं हीति**। प्रकारान्तरेण सिद्धायास्तस्या विशेषणेन पोषणे हीत्यर्थः। **मदेति**। विष्णुं प्रति भक्तोक्तिः। त्वत्पुर एव त्वदग्र एव। तावकं माम्। अरिशब्देन चक्रम्। **अपुष्टार्थेति**। अपुष्टार्थत्वेत्यर्थः। एवमग्रेऽपि। **कष्टत्वादीति**। यथा कष्टत्वाद्यभावो दोषाभावमात्रं न त्वलंकारस्तथेत्यर्थः। अत्र

१ यया पूर्वं कालियविषहारकस्य चरणप्रक्षालनं कृतमवश्यं तया चरणगता विषहरणशक्तिरुपलब्धा। अत एव भवव्यालव्यालीढात्मनस्तापहरणे साऽवश्यं समर्थेति चमत्कारि व्यङ्ग्यं प्रकृतार्थोपपादकमित्याशयः।

२ विषयम् अहारि, लेशमात्रेणापि तादृग् विषहरणसामर्थ्यं व्यङ्ग्यातिशयः।

३ निष्पन्नशरीरस्य उपेक्षानौचित्यस्येत्यन्वयः। समर्थः स्वामी शत्रुभिः समक्षे त्रास्यमानस्य निजभृत्यस्य स्वापमानजनिकामुपेक्षां कथं वा कर्तुमर्हेदित्यर्थः।

अत्र विमर्शिनीकारादय आहुः—'विशेषणानां बहुत्वमत्र विवक्षितम्। साभिप्रायविशेषणगतबहुत्वकृत एव चात्र वैचित्र्यातिशयः। एकविशेषणं तु दोषाभावमात्रस्यावकाशः' इति। तदसत्। विशेषणानेकत्वं हि व्यङ्ग्याधिक्याधायकत्वाद्वैचित्र्यविशेषाधायकमस्तु नाम, न तु प्रकृतालंकारशरीरमेव तदिति शक्यं वक्तुम्। वीचिक्षालितकालियाहितपदे इति प्रागुक्ते एकस्यैव विशेषणस्य चमत्कारिताया अनपह्नवनीयत्वात्।

'अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः।
दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम्॥'

अत्रैकैकविशेषणमात्रेणैव सकलवाक्यार्थसंजीवनाच्च।

यत्तु कुवलयानन्दकार आह—"श्लेषयमकादिष्वपुष्टार्थदोषाभावेन तत्रैकस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरत्वोपपत्तिः। यथा—'क्षितिभृतैव सदैवतका वयं वनवतानवता किमहिद्रुहा' इति गोवर्धनपर्वतविषयके नन्दादीन्प्रति भगवद्वाक्ये" इति। तदप्यसत्। यो हीममलंकारं दोषाभावान्तःपातितयालंकारमध्याद्बहिर्भावयति, स किं त्वदुक्तश्लेषयमकादिशब्दचित्रातिरिक्तस्थले साभिप्रायविशे-

परिकरलक्षणे। चो हेतौ। अत्र परिकरे। हि यतः। तत् विशेषणानेकत्वम्। **अयीति**। नायिकावृत्तान्तं नायकं प्रति कश्चिद्वक्ति—**अभावेनेति**। तावतैव साफल्येन श्लेषादेस्तदपवादत्वादिति भावः। **विशेषाभावादिति**। तदापत्तेरित्यर्थः। जायमानतदर्थं तद्विन्यासस्यावश्यकत्वं तत्रेतीति शेषः। **परिकरेति**। परिकरस्यालंकारत्वोपपत्तिरित्यर्थः। उद्भटालंकारसंपत्त्या सहृदयवैमुख्यरूपदूषकतावीजाभावादिति भावः। 'साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्' इति क्वचित्पाठः। **क्षितीति**। यमकोदाहरणमिदम्।

१ त्वं लावण्यस्य जलाशय इति तस्याः त्वदनुप्राणितनयनाया उपसार्य एव त्वमित्येकविशेषणेन वाक्यार्थोपस्करणम्। किञ्च—लवणं शीतलं (जडम्) भवति (यतो हि संतापाधिक्ये शीतलीकरणाय लवणजलमासिच्यते)। अत एव दृढानुरागायास्तस्या विरहवैकल्यं जडाशयत्वं न यथावदवगन्तुं शक्नोषि। किंवा—स्वयं शीतलहृदयस्त्वं विरहानलदन्दह्यमानस्य जनस्य कथंकारं वा हृदयव्यथां परिजानीयाः? इत्युपालम्भेनापि वाक्यार्थस्य विच्छित्तिः। एवमेव—मीनो जलं विना न कथंचिदपि यथा जीवितुं शक्नुयात्तथा तन्नयने त्वद्दूरीभावे न कथंचिदपि जीवेतामिति एकेनैव मीननयनात्वविशेषणेन नायिकागतमखिलमाकूतमाविष्कुर्वता वाक्यमिदं चमत्क्रियते।

षणेषु विच्छित्तिविशेषं मन्यते, न वा? आद्ये[1] दोषाभावमात्रेण विच्छित्तिविशेषस्यालंकारप्रयोज्यस्यालंकारमन्तरेणानिष्पत्तेः सिद्धं सर्वत्र परिकरस्यालंकारत्वम्। द्वितीये अन्यत्रेव यमकादिष्वपि विच्छित्तिविशेषो नास्तीति तेन सुवचत्वात्। तथा हि—

'अनापदि विना मार्गमनिशायामनातुरः।
मृत्तिकाशौचहीनस्तु नरो भवति किल्बिषी ॥'

इत्यत्र पर्युदस्ते[2]ऽप्यापत्कालादौ यथा केनचिन्मृत्तिकाशौचादि क्रियमाणं न

प्रशस्तवनयुक्तेन गोवर्धनेन। अरक्षकेणेन्द्रेणेत्यर्थः। 'अहिर्वृत्रासुरे सर्पे' इति विश्वः। **यमकादीति**। तद्रूपशब्दचित्रेत्यर्थः। सर्वत्र श्लेषादौ तदन्यत्र च। **तेन सुवचत्वादिति**। अत्रेदं चिन्त्यम्—दोषाभावमध्ये एनमन्तर्भावयता एकविशेषणे चमत्कारविशेषस्यानङ्गीकारात्त्वदुदाहरणासंगतिः। यदि त्वनुभवबलात्तत्तद्दोषाभावकृतचमत्कारादप्यधिकचमत्कारोऽस्ति, बाधनङ्गीकारस्त्वप्रयोजक इत्युच्यते, तर्हि समं प्रकृतेऽपि। किं च अपि तु पोषायेति वदता भवतापि श्लेषयमकादिषु विशेषणस्य चमत्कारिताभ्युपेतैव। चमत्कारातिशयजनकतारूपाया एव पुष्टेः काव्ये स्वीकारात्। यदि तु विवक्षितार्थबोध एव पोषः विवक्षितार्थबाधप्रयोजकानुपादानत्वं च पुष्टत्वम्, तथाप्यापत्कालेऽक्रियमाणं मृत्तिकाशौचादि यथा न दोषाय नापि लोकनिन्दायै, क्रियमाणं चाधिकस्तुतयेऽधिकफलाय च भवति, तथा यमकादिषु पुष्टत्वमक्रियमाणं न दोषाय, क्रियमाणं त्वधिकचमत्कारायेति वक्तुं शक्यम्। न च कवेः स्तुतये भवतु, न चमत्कारायेति वाच्यम्। नित्ये फलस्यापि स्वीकारेण तदतिशयस्य तेन जननवदुपपत्तेः इह तु फलं चमत्कार एव। अयि लावण्येत्यत्र तु पुष्टत्वमक्रियमाणं दोषाय, क्रियमाणं तु विवक्षितार्थाबाधरूपपोषायैव, नाधिकचमत्काराय। यथाऽनापद्यक्रियमाणं मृच्छौचादि दोषाय, क्रियमाणं तु नाधिकफलायेत्यतो यमकपर्यन्तानुधावनम्। वस्तुतः संध्यायकरणस्य दोषत्वेऽपि तदभावो न दोषाभावमात्रम्, अपि तु फलायापि, एवं यमकाद्यतिरिक्तेऽपि साभिप्रायैकविशेषणोपादाने दोषत्वाभावश्चमत्कारश्चेत्यलंकारत्वम्। किं च यथा तत्र दोषाभावस्याङ्गवैकल्येऽपि सिद्धे साङ्गतत्करणं फलातिशयायैव, एवं दोषाभावस्य विशेषणानुपादानेऽपि संभ-

१ आद्ये (श्लेषाद्यतिरिक्तस्थले साभिप्रायविशेषणविन्यासे विच्छित्तिविशेषं चेन्मन्यते तर्हि) विच्छित्तिविशेषः अलंकारप्रयोज्यः (अलंकारहेतुकः), अत एव अलंकारं विना दोषाभावमात्रेण तस्य (विच्छित्तिविशेषस्य) निष्पत्तिर्न भवितुमर्हति। अत एव सिद्धं सर्वत्र परिकरस्यालंकारत्वम्। इति योजना।

२ आपत्कालादौ मृत्तिकाशौचस्य पर्युदासः (अपवादः) वर्तते, तथापि यदि केनचित् आपत्कालादौ मृत्तिकाशौचं क्रियते तर्हि न तस्य निषेधः (करणे प्रत्यवायः) इत्यर्थः।

केनापि प्रतिषिध्यते, कर्तुः सामर्थ्यगमकं च भवति, तथा प्रकृतेऽपि दोषनिषेधविधौ पर्युदस्तेऽपि यमकादौ पुष्टतारूप[1]दोषाभावः कविना संपाद्यमानो न दोषाय भविष्यति, अपि तु रसपोषायैवेति। यदि च यमकेऽनुभवं विच्छित्तिविशेषे प्रमाणं ब्रूषे, ब्रूहि तदान्यत्रापि तमेव प्रमाणमिति यमकपर्यन्तानुधावनं निरर्थकमेव। तस्मात्पुष्टार्थतारूपेण दोषाभावेन परिकरालंकारस्य विषयविभागो दुःशक इति प्राप्ते ब्रूमः। सुन्दरत्वे सत्युपस्कारकत्वमलंकारत्वम्। चमत्कारापकर्षकाभावत्वं च दोषाभावत्वम्। तदेतद्धर्मद्वयं विविक्तविषयं यदि दैवादेकस्मिन्विषयविशेषे समाविशेत्तदा का हानिः स्यात्?। उपधेय[2]संकरेऽप्युपाध्यसंकरात्। यथा ब्राह्मणस्य मूर्खत्वं दोषः, विद्या तु दोषाभावश्च भवति गुणश्च, तथेहाप्युपपत्तिः। न च दोषाभावतया प्राप्तस्यापि परिकरस्य किमित्यलंकारेषु गणनागौरवमिति वाच्यम्। उभयात्मकत्वेनेतरवैलक्षण्यज्ञापनार्थतया गणनोपपत्तेः। यथा गुणीभूतव्यङ्ग्यभेदतया संगृहीतापि समासोक्तिरलंकारगणनायां

---

वेन साभिप्रायकविशेषणनिबन्धनोऽपि चमत्कारो दुरपह्नव इति बोध्यम्। तदेतदपि चैकपदार्थहेतुकमित्यादिना ग्रन्थेन कुवलयानन्दे स्फुटमिति दिक्। इत्यत्र मृत्तिकाशौचाभावनिषेधविधौ। पर्युदस्तेऽपि दोषाभाववत्तया प्रतिपादितेऽपि। सामर्थ्यविगमं च सामर्थ्यगमकं च। क्वचित्तथैव पाठः। **दोषनिषेधेति**। अदोषं काव्यमित्यत्र। **पुष्टतेति**। तद्रूपो यो दोषाभाव इत्यर्थः। उपसंहरति—**तस्मादिति**। **विविक्तेति**। परिकरातिरिक्ते सामानाधिकरण्याभावादिति भावः। एकस्मिन् परिकरे। **यथेति**। विद्यायां गुणत्वदोषाभावत्वयोः समावेशेऽपि तयोरसांकर्यं यथेत्यर्थः। **उभयेति**। अलंकारदोषाभावरूपत्वेनेत्यर्थः। **इतरेति**। परिकरान्यालंकारत इत्यर्थः। अस्याग्रेऽप्यन्वयः। अत एवाह—**यथेति**। महाभाष्यकारोक्तं दृष्टान्तमाह—**प्रासादेति**। ऊर्ध्वदेशेत्यर्थः।

१ अपुष्टार्थतारूपस्य दोषस्याभावं कृत्वा पुष्टतैव यदि संपाद्यते तर्हि।

२ अलंकारत्वं दोषाभावत्वं चेति उपाधिद्वयं पृथक्, नानयोः संकरः। एकत्र स्थले (परिकरे) यदि द्वयोरनयोः समावेशस्तर्हि पृथक् साधितयोरुपाध्योर्न संकरः, किन्तु उपधेययोरेव। यथा विप्रस्य मूर्खत्वं दोषः, विद्या च गुणः। कुत्रचित्स्थले (अवसरविशेषे) विद्याया दोषाभावत्वमपि, गुणत्वमपि च यदि प्रसज्यते तर्हि नोपाध्योः (दोषाभाव–गुणत्वयोः) संकर इति सर्वस्याशयः।

पुनर्गण्यते । यथा वा प्रासादवासिषु गणितोऽप्युभयवासी भूवासिगणनायां पुनर्गण्यते तथेहापीति न कश्चिद्दोषः । अन्यथा प्राचां काव्यलिङ्गमप्यलंकारो न स्यात् । तस्यापि निर्हेतुरूपदोषाभावात्मकत्वात् ।

'द्विजराज कलाधार विश्वतापनिवारण ।
कथं मामबलां क्रूरैः करैर्दहसि निर्दय ॥'

इत्यादौ विशेषणाधिक्याद्व्यङ्ग्याधिक्ये चमत्काराधिक्यम् ।

अयं च वाच्यसिद्ध्यङ्गव्यङ्ग्यगर्भत्वेनोपस्कारकव्यङ्ग्यगर्भत्वेन द्विधाभवन् व्यङ्ग्यस्य वाच्यायमानत्व-तद्विपर्ययाभ्यां चतुर्धा ।

आद्यो यथा—

'विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम् ।
कृपातरङ्गाकुल मन्मनोमृगो विगाढुमीश त्वयि गाढमीहते ॥'

अत्र गाहनसिद्ध्यङ्गं कृपेत्यादेः समुद्ररूपं व्यङ्ग्यं वाच्यायमानम् ।

द्वितीयो तथा—

'खर्वीकृतेन्द्रगर्व त्वरया चक्रेण भिन्ननक्रमुख ।
लीलात्तकोलमूर्ते मामुद्धर्तुं कथं न शक्तोऽसि ॥'

अत्र गोवर्धनगजेन्द्रवसुंधराणामुद्धारो वाच्यतास्पर्शशून्य एवोपालम्भ-

विपक्षे बाधकमप्याह—**अन्यथेति** । एवं सत्यपि तस्य तत्त्वानङ्गीकार इत्यर्थः । अत एवापिः प्रयुक्तः । अनेकविशेषणानां साभिप्रायत्वे उदाहरति—**द्विजेति** । चन्द्रं प्रत्युक्तिरियम् । परिकरस्य भेदमाह—**अयं चेति** । **कोलेति** । वराहेत्यर्थः । **वाच्यतास्पर्शेति** । वाच्यायमानतेत्यर्थः । अत एव स्पर्शपदसार्थक्यम् । तद्गमकाभावात्तस्य गूढत्वमिति भावः ॥ इति रसगङ्गाधरमर्मप्रकाशे परिकरप्रकरणम् ॥

१ वाच्यसिद्ध्यङ्गं व्यङ्ग्यं गर्भे यस्य, तत्त्वेन ।

२ समुद्ररूपं व्यङ्ग्यं विना गाहनरूपस्य वाच्यस्य सिद्धिर्न भवति, ततश्च सोयं परिकरो वाच्यसिद्ध्यङ्गव्यङ्ग्यगर्भः । व्यङ्ग्यं (समुद्ररूपम्) न केवलं काव्यभावनापरिपक्वमतिभिरेव, अपि तु साधारणैरपि परिज्ञातुं शक्यमिति वाच्यायमानम् ।

३ विशेषणानां व्यङ्ग्यैर्विना उपालम्भस्य सिद्धिर्न भवति इति वाच्यसिद्ध्यङ्गम् । किन्तु स्फुटगमकाभावाद् व्यङ्ग्यस्य वाच्यायमानत्वं नास्ति । (तद्विपर्यय इत्यर्थः) ।

सिद्ध्यङ्गम्। तृतीयस्तु 'धृतशार्ङ्गगदारिनन्दक' इत्यत्र, चतुर्थः 'वीचिक्षालितकालियाहितपदे' इत्यत्र च बोध्यः।

इति रसगङ्गाधरे परिकरालंकारप्रकरणम्।

---

अथ श्लेषः—

**श्रुत्यैकयानेकार्थप्रतिपादनं श्लेषः ॥**

तच्च द्वेधा। अनेकधर्मपुरस्कारेणैकधर्मपुरस्कारेण च। आद्यं द्वेधा। अनेकशब्दप्रतिभानद्वारा एकशब्दप्रतिभानद्वारा चेति त्रिविधः श्लेषः। तत्राद्यः सभङ्गो द्वितीयो ह्यभङ्ग इति वदन्ति। तृतीयस्तु शुद्धः। एवं त्रिविधोऽप्ययं प्रकृतमात्राप्रकृतमात्रप्रकृताप्रकृतोभयाश्रितत्वेन पुनस्त्रिविधः। अत्राद्ये भेदे द्वितीये च विशेष्यस्य श्लिष्टतायां कामचारः। तृतीयभेदे तु विशेषणवाचकस्यैव श्लिष्टत्वं न विशेष्यवाचकस्य। तथात्वे तु शब्दशक्तिमूलध्वनेरुच्छेद एव स्यात्। विशेषणमात्रश्लिष्टतायामपि प्रकृताप्रकृतधर्मिणोरुपादान एव श्लेषः। प्रकृतधर्मिमात्रस्योपादाने तु समासोक्तेरेव विषयः। तदित्थं प्रकृतमात्रविशेष्यकानेकार्थविशेषणं यत्र स एकः। एवम-

श्लेषं लक्षयति—**अथेति**। तत्र आद्यभेदयोर्मध्ये। अत्र एषां भेदानां मध्ये। आद्ये प्रकृतमात्राश्रिते। द्वितीये अप्रकृतमात्राश्रिते। तृतीयभेदे उभयाश्रिते। **तथात्वे त्विति**। विशेष्यस्यापि श्लिष्टत्वे हीत्यर्थः। अत्र विशेष्यस्य श्लिष्टत्वेऽपि श्लेषाङ्गीकारे शब्दशक्तिमूलध्वन्युच्छेदापत्तिरित्यखण्डार्थः। तृतीये विशेषमाह—**विशेषणेति**। विशेषणस्यैव श्लिष्टतायामित्यर्थः। भेदानुपसंहरति—**तदित्थमिति**। अनुगतं लक्षण-

---

१ उपस्कारकव्यङ्ग्यगर्भः, व्यङ्ग्यस्य (अमोघशस्त्रास्त्रसंपन्नस्य तव समक्षं रिपुभिः कृष्यमाणं दासमुपेक्षमाणस्य तवाऽकीर्तिरित्यस्य) वाच्यायमानत्वं च, स्फुटबोध्यत्वात्।

२ उपस्कारकव्यङ्ग्यगर्भः, व्यङ्ग्यस्य न स्फुटप्रतीयत्वम्।

३ एकेन वर्णानुपूर्वीश्रवणेन।

४ अनेकधर्मपुरस्कारेण [अनेकशब्दप्रतिभानद्वारा, एकशब्दप्रतिभानद्वारा चेति] द्विविधः। एकधर्मपुरस्कारेण चैकविध इति संहत्य त्रिविध इत्यर्थः।

५ तत्र द्वितीयभेदयोः (अनेकशब्दप्रतिभान-एकशब्दप्रतिभान-द्वारा चेति) मध्ये आद्यः (अनेकशब्दप्रति०) सभङ्गः। एकशब्दप्रतिभा० अभङ्गपदवाच्य इत्यर्थः। "आद्यभेदयोः (आद्यौ हि भेदौ अनेकधर्मपुर०, एकधर्मपुर०) मध्ये" इति नागेशटीका तु अज्ञानमूलिका। सभङ्गाऽभङ्गौ द्वावपि अनेकधर्मपुरस्कारेणैव भवतः। यथा अभङ्गे—करकलितचक्र० इत्यत्र करकलित० इत्याद्यानुपूर्व्यां अनेकधर्म (भिन्नभिन्नधर्म) पुरस्कारेणैव अर्थद्वयम्। अहो धन्या टीका!!

६ अर्थश्लेष इति यावत्। एकधर्मपुरस्कारेणानेकार्थप्रतिपादनरूपः।

प्रकृतेत्यादिर्द्वितीयः। पृथगुपात्तप्रकृताप्रकृतोभयविशेष्यकनानार्थविशेषणं तृतीयः। एतदन्यतमत्वं च लक्षणं पर्यवसितम्। क्रमेणोदाहरणानि—

'संभूत्यर्थं सकलजगतो विष्णुनाभिप्रपन्नं
यन्नालं स त्रिभुवनगुरुर्वेदनाथो विरिञ्चिः।
ध्येयं धन्यालिभिरतितरां स्वप्रकाशस्वरूपं
पद्माख्यं तत्किमपि ललितं वस्तु वस्तुष्टयेऽस्तु॥'

अत्राशीःप्रकरणे तुष्टिजननसमर्थत्वेन लक्ष्मी-भगवन्नाभिकमलयोरुभयोरपि प्रकृतत्वात्प्रकृतमात्राश्रितोऽयमेकया श्रुत्या पदद्वयप्रतिभानद्वारा भिन्नधर्मपुरस्कारेणानेकार्थप्रतिपादनात्सभङ्गः। विशेष्ययोरश्लिष्टत्वेऽप्ययं संभवति। यथात्रैव 'पायादाद्यं कमलमथवा योगमायास्वरूपम्' इति तुरीयचरणनिर्माणे।

अयमेवाभङ्गात्मको[2] यथा—

'करकलितचक्रघटनो नित्यं पीताम्बरस्तमोऽरातिः।
निजसेविजाड्य[3]नाशनचतुरो हरिरस्तु भूतये भवताम्॥'

माह—एतदिति। संभूत्यर्थमिति। संभूतिरुत्पत्तिः सम्यगैश्वर्यं च। विष्णुनाभिप्राप्तम्, विष्णुना अभिप्रपन्नं प्राप्तं च। स तादृशो ब्रह्मापि यस्य कमलस्य नालं नालदण्डः, यस्मादलं समर्थो न च। धन्यैर्भ्रमरैः, धनिकपङ्क्तिभिश्च। पद्माख्यं कमलसंज्ञकं कमलासंज्ञकं च। अयं प्रकृतमात्राश्रितः। एवमग्रेऽपि। आद्यं भगवन्नाभिसंबन्धि। करकलितेत्यादि। करो हस्तः किरणश्च। चक्रं सुदर्शनं कालचक्रं च। अम्बरमाकाशो वस्त्रं च। तमो राहुरन्धकारश्च। जाड्यमज्ञानं मूर्खत्वं च। हरिः सूर्यो विष्णुश्च। अयं प्रकृताप्रकृतोभयाश्रितः। जाड्येति। निजसेवीत्यस्येत्यादिः। समर्थ इत्यग्रे शेषो

१ 'विष्णुनाभिप्रपन्नम्, इत्यादिर्वर्णानुपूर्वीश्रुतिरेकैव। किन्तु अर्थानुसारम् 'विष्णुनाभिप्रपन्नम्' 'विष्णुना अभिप्रपन्नम्' इति पदद्वयप्रतिभानं तु पृथक्। अत्र हि लक्ष्मी-भगवन्नाभिकमलेत्यनेकार्थप्रतिपादने धर्मा भिन्ना भिन्ना.। यथा-विष्णुनाभिप्रपन्नम् इति नाभिकमलार्थप्रतिपादने भगवन्नाभिदेशप्राप्तत्वं धर्मः; लक्ष्मीरूपार्थप्रतिपादने तु भगवत्प्राप्तत्वं धर्मः। एवं सर्वत्र पदेषु बोध्यम्। २ अयमेवेत्येवकारेण 'अभङ्गात्मकत्वमेवात्र विशेषः। प्रकृतमात्राश्रितत्वं तु पूर्ववत् (आशीःप्रकरणे-भूत्यर्थसत्ताशालितया विष्णुसूर्ययोरुभयोरेव प्रकृतत्वात्)' इति ग्रन्थकर्तुराशयः। 'अयं प्रकृताप्रकृतोभयाश्रितः' इति नागेशटीका तु नागेशटीकैव। 'एते त्रयोपि प्रकृतविषयाः'। इति स्वयं ग्रन्थकृताऽग्रे स्पष्टीकृतत्वेप्यनवधारणात्। ३ निजसेविनां जाड्यस्य हिमकृतगात्रपिण्डीभावस्य नाशने चतुरः सूर्यः। जाड्यस्य अज्ञानस्य नाशने चतुरो विष्णुः। 'जाड्यमज्ञानं मूर्खत्वं च' इति नागेशकृतोऽर्थस्तु विज्ञानवेद्य एव।

विशेष्ययोरश्लिष्टत्वे यथा 'जाड्यहरणो विष्णुः सूर्यश्च वः पातु' इति तस्यैव श्लेषे कृते ।

अर्थश्लेषो यथा—

'अर्जुनस्य गुरुर्मायामनुजः परमः पुमान् ।
गुञ्जापुञ्जधरः पायादपायादिह कोऽपि वः ॥'

एवमेते त्रयोऽपि प्रकृतविषया एव भेदाः ।

'हरिकरसङ्गादधिकं रमणीयाप्यतुलरागसंवलिता ।
सुन्दरि तवाननाग्रे कमलाभा विगलितप्रतिभा ॥'

अयमप्रकृतमात्रविषयः । प्रकृतस्याननस्य श्लेषाविषयत्वात् । कमलाभेति विशेष्यांशे, अधिकमिति विशेषणांशे च सभङ्गः, अन्यत्राभङ्गः ।

अप्रकृतयोर्विशेष्ययोरश्लिष्टत्वे यथात्रैव 'कमलायाः कमलस्य च शोभा गलिता तवाननस्याग्रे' इत्युत्तरार्धनिर्माणे ।

प्रकृताप्रकृतोभयविषयो यथा—

'अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन ।
अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माजनि माघतुल्यः ॥'

अत्र प्रकृताप्रकृतयोर्भीष्ममाघयोरश्लिष्टत्वाद्विशेषणानां च श्लिष्टत्वाद्भवति तृतीयो भेदः । परं तूपमया संकीर्णः । यदि च 'माघो महात्माजनि

बोध्यः । शुद्धश्लेषं तृतीयमुदाहरति—**अर्थेति** । अर्जुनस्य गुरुरित्यत्र च गुरुपदं श्लिष्टं पर्यायपरिवृत्तिसहं च शिक्षकादिपदोपादानस्यापि संभवादिति बोध्यम् । एवं च गुरुरुपदेष्टा बृहस्पतिश्च । उपसंहरति—**एवमिति** । अप्रकृतविषयमुदाहरति—**हरीति** । हरिर्विष्णुः सूर्यश्च । करो हस्तः किरणश्च । अधि अतिशयेन के इत्यधिकम् । अव्ययीभावः । जले इत्यर्थश्च । सङ्गादिति पञ्चम्यन्तमतुलरागेत्यत्राप्यन्वेति । कमलाभा कमलकान्तिर्लक्ष्मीकान्तिश्च । विगलितप्रतिभा निःसारा । अन्यत्र हरिकरादौ । अत्रैव उक्तपद्य एव । **अलमिति** । अलमत्यन्तम् । हीति निश्चयेन । मानी अभिमानी अत्यन्तं हिमसंहत्या परिदीर्णानि गात्राणि येन स च । फाल्गुनोऽर्जुनो मासश्च । अत्यन्तमाकाङ्क्षितः कृष्णस्य मार्गो येन अत्यन्तमाकाङ्क्षितः कृष्णवर्त्माग्निर्यस्मिन्स च भीष्मो गाङ्गेयः । माघो मासः । **संकीर्ण इति** । तुल्यपदोक्तेरिति भावः । पूर्वं भीष्मस्योद्देश्यत्वं तत्तुल्यत्वस्य विधेयत्वम् , अधुना तद्वैपरी-

हन्त भीष्मः' इत्यप्रकृतांशमपि श्लेषग्रस्तं[1] कृत्वा रूपकं क्रियते, तथापि प्रकृतविशेष्यस्य माघस्याश्लिष्टत्वादखण्डित एव श्लेषः। न चात्र समासोक्तिरिति भ्रमितव्यम्, अप्रकृतधर्मिणोऽपि शब्दवाच्यत्वात्। यत्र त्वप्रकृतव्यवहार एव शब्दशक्तिं सहेतापि[2], न त्वप्रकृतधर्मी, तत्र समासोक्तेरिष्टेः।

अत्र विचार्यते—अयं चालंकारः प्रायेणालंकारान्तरस्य विषयमभिनिविशते, तत्र किमस्य बाधकत्वं स्यादाहोस्वित्संकीर्णत्वमुताहो बाध्यत्वमिति। अत्राहुरुद्भटाचार्याः—"—'येन नाप्राप्ते य आरभ्यते तस्य स बाधकः' इति न्यायेनालंकारान्तरविषय एवायमारभ्यमाणोऽलंकारान्तरं बाधते। न चास्य विविक्तः कश्चिदस्ति विषयो यत्र सावकाशो नान्यं बाधेत। तथाहि अप्रकृतमात्रयोः प्रकृतमात्रयोर्वा तावत्तुल्ययोगितैव जागर्ति। प्रकृताप्रकृतयोस्तु दीपकम्। तदनुमोदिता[3] उपमादयश्च। न च

'देव त्वमेव पातालमाशानां त्वं निबन्धनम्।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥'

इत्यादिकाव्यप्रकाशोक्तौ विविक्तो विषय इति वाच्यम्। रूपकस्यैवात्र

---

त्येनाह—**यदीति**। **श्लेषेति**। गाङ्गेयवद्भयानकस्यापि प्रतीतेरिति भावः। **अखण्डित एव श्लेष इति**। शब्दशक्तिमूलध्वनिना न खण्डित इत्यर्थः। क्व तर्हि समासोक्तिरत आह—**यत्रेति**। अपिः संभावनायाम्। अत्र श्लेषविषये। अत एवाह—**अयं चेति**। श्लेष इत्यर्थः। विविक्तविषयस्यापि वक्ष्यमाणत्वादाह—**प्रायेणेति**। **अभीति**। व्याप्नोतीत्यर्थः। उताहो अथवा। **येनेति**। प्राप्त इति भावे क्तः। येनेति कर्तरि तृतीया। नञ्द्वयस्य प्रकृतदार्ढ्यबोधकत्वम्। तथा च यत्कर्तृकावश्यप्राप्तौ य आरभ्यमाणः स तस्य बाधक इत्यर्थः। तदप्राप्तियोग्येऽचारितार्थ्यं हि बाधकताबीजम्। एवव्यवच्छेद्यं स्पष्टार्थमाह—**न चेति**। नहीत्यर्थः। तावदादौ। अलमत्यन्तम्। पाता रक्षिता, पाताललोकश्च। आशानां मनोरथानाम्, दिशां च। अमराणां देवानां मरुद्-

---

१ माघवर्णने अप्रकृतं भीष्मपदं श्लिष्टम्, भयंकरत्वस्य गाङ्गेयत्वस्य च प्रत्यायकत्वात्।

२ अत्र तु अप्रकृतो धर्मी (भीष्मः) शब्दशक्तिं सहते, अर्थात् अनेकार्थः। इति नात्र समासोक्तिरित्याशयः।

३ तेन दीपकेन अनुमोदिताः। दीपकाश्रिता उपमादयो व्यङ्ग्या भवन्तीत्याशयः।

स्फुटत्वात् । श्लेषोपस्थापितपातालाद्यर्थस्याभेदारोपमन्तरेण लोकत्रयात्मकत्वस्य दुरुपपादत्वात् । कथं तर्हि 'नदीनां संपदं बिभ्रद्राजायं सागरो यथा' इत्यादावुपमायाः प्रत्ययः? । कथं वा तत्रैव यथाशब्दस्थाने किमुशब्ददाने उत्प्रेक्षायाः? । अपर इति कृते च रूपकस्येति चेत्, न । अत्र हि उपमादीनां प्रतिभानमात्रं न तु वास्तवी स्थितिः । नहि श्वैत्येन शुक्तौ रजतत्वं प्रतीयमानमपि वस्तुतोऽस्ति । तस्मादुपमादिप्रतिभोत्पत्तिहेतुः श्लेष एव स्वविषये सर्वत्रालंकारः" इति ।

एतच्चापरे न क्षमन्ते । तथा हि यत्तावदुच्यते येन नाप्राप्त इत्यादि, तत्र प्रागुदाहृते 'पद्माख्यं तत्किमपि ललितं' इत्यस्मत्पद्ये, 'सर्वदोमाधवः पातु यो गङ्गां समदीधरन्' इत्यादिपरकीयपद्ये च श्लेषातिरिक्तः कोऽलंकारः? । तुल्ययोगिता तु सादृश्यप्रत्ययनियता कथमत्र शक्यते वक्तुम्? नहि लक्ष्मीकमलयोर्हरिहरयोर्वा प्रकृते सादृश्यं प्रतिपिपादयिषितम् । नापि चात्रैकश्रुत्यार्थद्वयोपादानं विनान्यत्किंचिच्चमत्कारजनकं येनालंकारान्तर-

णानां च भूमिः स्वर्गः, चमरसंबन्धिपवनाश्रयश्च । **अभेदेति** । प्रथमोपस्थितार्थे इति भावः । तस्माच्छ्लेषस्य सर्वबाधकत्वं सिद्धम् । तत्राक्षिपति—**कथं तर्हीति** । दीनां स्वल्पां संपदं न बिभ्रत्, नदीनां गङ्गादीनां संपदं बिभ्रच्च । तत्रैव प्राचोक्तनदीनामित्यत्रैव । प्रत्ययपदस्याग्रे उभयत्रानुषङ्गः । **प्रतिभानेति** । तथा च प्रातिभासिकत्वं तेषामिति भावः । तदेवोपपादयति—**नहीति** । उद्भटाचार्योक्तं खण्डयति—**एतच्चेति** । तत्रेत्यस्य उच्यत इति शेषः । एवमग्रे सर्वत्र बोध्यम् । सर्वदा उमाधवः । सर्वप्रदो माधवश्च । गङ्गां अगं गां च । वस्तुतः सादृश्यसत्त्वेऽप्याह—**प्रत्ययेति** । ननु तत्प्रतीतिरपि कुतो नात आह—**नहीति** । नन्वलंकारान्तरमस्त्वत आह—**नापीति** । नन्वेकश्रुत्या-

१ राशि लोकत्रयात्मकतासाधनाय पातालादिरर्थः ('त्वं पाताललोकः' इत्याद्याकारकः) रूपकेणैवोपपद्यते । ततश्चात्रापि रूपकमेव आत्मकं जातम् । एवं च श्लेषस्य न विविक्तो विषय इति सर्वालंकारबाधकः श्लेषः ।

२ यदि निरवकाशतया श्लेषः सर्वालंकारबाधकस्तर्हि श्लेषस्थले कथमलंकारान्तरस्य प्रतीतिरित्याशङ्कते—कथं तर्हीति० ।

३ श्वैत्यवशात् शुक्तौ यथा रजतस्य प्रतिभास एव, न तु वास्तवी स्थितिः, तथा 'नदीनाम्०' इत्यादौ उपमाद्यलंकाराणां प्रतिभानमात्रम्, न वास्तवी स्थितिः । वास्तवे तु तत्र श्लेष एवेति-समाधानम् ।

मभ्युपगच्छेम। एकश्रुत्यार्थद्वयोपादानं तु श्लेष एव। एवं च सावकाशत्वाच्छ्लेषस्यालंकारान्तरापवादकत्वं न युक्तम्। अत एवोपमादीनां प्रतिभानमात्रमिति यदुक्तं तदपि न संगतम्। गुणक्रियादेरिव शब्दमात्रस्यापि समानधर्मत्वेनोपमायां तावद्बाधकाभावात्। एवमेवालंकारान्तरस्यापि श्लेषविषये पारमार्थिक्येव सत्ता न प्रातिभासिकी। प्रत्युत श्लेषस्यैव प्रतिभानमात्रमिति वक्तुं युक्तम्। पूर्णोपमाया विषयस्य सर्वस्यापि त्रिविधश्लेषेणाक्रान्तत्वान्निरवकाशतयास्य सावकाशस्य स्वविषये बाधौचित्यात्। तथा 'समरार्चितोऽप्यमरार्चितः' इत्यादौ श्लेषस्य तैमिरिकचन्द्रद्वयवत्प्रतिभानमात्रमेव, न त्वलंकारत्वम्। तज्जीवातोर्द्वितीयार्थस्याप्रतिष्ठानात्। विरोधस्य त्वाभासरूपस्याप्यलंकारत्वम्, न तु श्लेषस्येति स्फुटमेव। तस्मादेवमादौ श्लेषप्रतिभ-

र्थद्वयोपादानेऽप्यन्यालंकारः कुतो नात आह—**एकेति**। उपसंहरति—**एवं चेति**। अलंकारान्तराभावे चेत्यर्थः। **क्रियादेरिवेति**। तदुपमानधर्मवदित्यर्थः। **बाधकाभावादिति**। बाधकताबीजस्य निरवकाशत्वस्याभावादित्यर्थः। श्लेषस्येति शेषः। उत्प्रेक्षादावाह—**एवमेवेति**। प्रत्युत वैपरीत्येन। लुप्तोपमायां सर्वत्र तदसंभवादाह—**पूर्णोपमेति**। तथा च तद्विषये इदमुच्यते, न तु सर्वत्रेति भावः। **त्रिविधेति**। प्रकृतत्वादेवेति भावः। तया पूर्णोपमया। अन्यत्राप्येवमित्याह—**तथेति**। समरे सङ्ग्रामे। तेन वार्चितोऽप्यमरैर्देवैरर्चितः। न मा उपमा यस्य तादृशो राः धनं येषां तैरर्चितः। अनुपमधनार्चितश्चेत्यर्थः। **तैमिरिकेति**। तिमिराख्यनेत्ररोगकृतेत्यर्थः। **अप्रतिष्ठानादिति**। सरलतयाऽप्रतीतेरित्यर्थः। नन्वाभासत्वे श्लेषवद्विरोधस्याप्यलंकारत्वं न स्यादत आह—**विरोधस्य त्विति**। अपिर्वास्तवतत्समुच्चायकः। नन्वेवं तर्हि समरार्चीत्यादौ कोऽलंकारोऽत आह—**तस्मादिति**। उक्तहेतोरित्यर्थः। एवमादौ समरार्चीत्यादौ। एवं सावकाशत्वेन न्यायाविषयत्वमुक्त्वा सामान्यचिन्तापक्षेऽसंभवाद्विशेषचिन्तापक्षेऽतिव्या-

१ उपमा निरवकाशा, अयम् (श्लेषः) तु सावकाशः, अत एव स्वस्य (उपमायाः) विषये सावकाशस्य श्लेषस्य बाधौचित्यमित्यर्थः।

२ अमरप्रातिद्वन्द्व्येन समर(मरणेन सहित)स्य द्वितीयार्थस्य (श्लेषजीवनभूतस्य) या उपस्थितिः सा विरोधे प्रतिसंधानार्थमापाततो भवति। वास्तवे तु समरपदेन संग्रामरूपस्यैवार्थस्य। ततश्च द्वितीयार्थस्य अप्रतिष्ठानान्न श्लेषः। विरोधरूपस्यार्थस्य तु चमत्कारकतया चेतसि प्रतिष्ठानाद्विरोध एवेत्याशयः।

योत्पाद्यो विरोध एवालंकारः, न तु विरोधप्रतिभयोत्पाद्यः श्लेषः । किं च प्रत्येकं तत्तद्रूपपुरस्कारेण कस्याप्यलंकारस्य नास्ति श्लेषविषये नाप्राप्तत्वम्, अलंकारान्तरत्वपुरस्कारेणेति चेत्, एवं तर्हि बाध्यसामान्यचिन्तया स्वविषये प्राप्तस्य सर्वस्यापि बाधापत्तौ श्लिष्टपरम्परितरूपकस्य श्लिष्टसमासोक्तेश्चोच्छेद एव स्यात् । तस्माच्छ्लेषस्य नापवादकत्वम्, संकीर्णत्वं तु स्यात् इति ।

अन्ये तु—"अलंकारा हि प्राधान्येन चमत्काराधायकाः स्वां स्वामाख्यां लभन्ते । त एव परोपकारकतया वर्तमानास्तां त्यजन्ति । यथा—'रराज भूमौ वदनं मृगाक्ष्या नभोविभागे हरिणाङ्कबिम्बम्' इत्यत्र प्रकृताऽप्रकृतात्मनामेकधर्मसंबन्धो दीपकाख्यां भजते, त्यजति च 'राजते वदनं तन्व्या नभसीव निशाकरः' इत्यत्र । अत एवोच्यते—'प्राधान्येन व्यपदेशा भवन्ति' इति । एवं चालंकारान्तरोपस्कारकतया स्थितः श्लेषः

सेश्च न न्यायविषय इत्याह—**किं चेति** । **तत्तद्रूपेति** । उपमात्वरूपकत्वादीत्यर्थः । विषये तद्विषयत्वावच्छिन्ने । एवं च बाध्यविशेषचिन्तापक्षे तदसंभवः । सामान्यचिन्तापक्षे आह—**अलमिति** । ननु मास्त्वस्य तदपवादत्वं परंतु तदग्रिमयोः पक्षयोः कोऽभिमतोऽत आह—**संकीर्णत्वमिति** । तृतीयपक्षाशयेनाह—**अन्ये त्विति** । हि यतः । अत एव, तेषामेव तदाख्यत्वादेव । तां स्वीयाख्याम् । नभोविभागे नभःप्रदेशे । **एकधर्मेति** । राजनरूपेत्यर्थः । **नभसीवेति** । अत्रोपमया वर्ण्यपुष्टिः । उक्तार्थे प्राचीनसंमतिमाह—**अत एवेति** । ईदृशव्यवस्थाङ्गीकारादेवेत्यर्थः । नन्वेतावता प्रकृते किं सिद्धमत आह—**एवं चेति** । उक्तव्यवस्थाङ्गीकारे चेत्यर्थः । कथंकारं कथंकृत्वा ।

१ उद्भटभट्टोद्भूतोयम् (येन नाप्राप्ते य०) न्यायो बाध्य-बाधकयोः सावकाशत्वनिरवकाशत्वे, सामान्यविशेषभावे च प्रवर्तते । तत्र बाधकस्य श्लेषस्य निरवकाशत्वं निरस्तमिति प्रथमप्रकारेण न्यायाऽविषयत्वं तु साधितमेव । सामान्यविशेषभावेन (द्वितीयप्रकारेण) अप्यस्य न्यायस्य नायं विषय इत्याह—'किं च प्रत्येकं तत्तद्रूपेति०' । अयं भावः—उपमात्वं रूपकत्वमिति तत्तत् स्वविशेषरूपं पुरस्कृत्य अलंकारान्तराणि श्लेषविषये न प्रसज्यन्ते, संभवाभावात् । '(श्लेषस्थले निजनिजविशेषरूपं प्रकाशयन्त उपमादयो न संभवन्त्येवेत्यर्थः) श्लेषाद् भिन्नानि अलंकारान्तराणीति बाध्यसामान्यविचारेण यदि अलंकारान्तराणां श्लेषविषये प्रवृत्तिरङ्गीक्रियते तर्हि श्लेषविषये श्लेषभिन्नस्य सर्वस्याप्यालंकारसामान्यस्य बाधेन 'श्लिष्टपरम्परितरूपकस्य' 'श्लिष्टसमासोक्तेः' च प्रलोपः स्यात् [श्लेषेण बाधे सति तत्सङ्कृतयोः रूपकसमासोक्तीति व्यपदेशाऽसंभवात्] । ततश्च बाध्यसामान्यचिन्तापक्षोपि दुरुपपादः । तस्मात् सावकाशनिरवकाशत्व-सामान्यविशेषभावरूपः कतमोपि न्यायस्य विषयो नास्तीत्यर्थः ।

कथंकारं स्वगृहस्थ इव श्लेषालंकारव्यपदेशं वोढुमीष्टामिति बाध्यप्राय एव" इत्यप्याहुः ।

तदित्थं संक्षेपेण श्लेषस्य दिक्प्रदर्शिता । यत्र तु प्रकृताप्रकृतोभयविशेष्ययोरपि श्लिष्टपदोपात्तत्वं स तु ध्वनेर्विषय इत्युक्तम् । स च यथा—

'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।
धनदाग्रमहितमूर्तिर्जयतितरां सार्वभौमोऽयम् ॥'

अत्र राजनि प्रस्तुते उदग्दिग्गजोऽप्रस्तुतोऽपि व्यञ्जनमर्यादया प्रतीयते । तत्राप्रस्तुताभिधानं मा प्रसाङ्क्षीदिति प्रस्तुताप्रस्तुतयोरुपमानोपमेयभावे तात्पर्यं कल्प्यते । इमं च शब्दशक्तिमूलानुरणनरूपं ध्वनिमाहुः । उदाहृतश्च ध्वनिकारैः—

'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥'

मम्मटभट्टैश्च—

'भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।

व्यतिरेके दृष्टान्तः **बाध्यप्राय एवेत्यप्याहुरिति** । सर्वदो माधव इत्यादावलंकारान्तरसंभावनारहिते सावकाशस्य श्लेषस्यालंकारान्तरेण स्वविषये बाध्यत्वमेवेत्यर्थः । प्रतिभामात्रत्वात्प्राय इति । अपिर्विशेषणसमुच्चायकः । **अविरलेति** । व्याख्यातमिदं प्राक् । तत्र तत्प्रतीतौ सत्याम् । **उन्नत इति** । महानुच्चैश्च । प्रोल्लसन्ती धारा यस्य सः । प्रोल्लसन्हारो यत्र च । कालागुरुवन्मलीमसः श्यामः, कालागुरुणा श्यामश्च । मेघसमूहः, स्तनभारश्च । **भट्टैश्चेति** । उदाहृतमित्यस्यानुषङ्गः । **भद्रेति** । अत्र यच्छब्दः प्राकरणिकराजपरः । तत्पक्षे यस्य प्रकृतस्य राज्ञः करः पाणिर्निरन्तरं दानार्थगृहीताम्बुसेकशोभनोऽभूत् । भद्रात्मनः, कल्याणरूपस्य । **दुरधीति** । अनभिभवनीयशरीरस्य । वंशः कुलं तत्रोन्नतिराधिक्यं यस्य । कृतः शिलीमुखानां नाराचानां संग्रहोऽभ्यासदार्ढ्यं

१ अन्यालंकारोपस्कारकः सन् श्लेषो यदा उपस्करणकार्ये वर्तते तदा प्रधानतया उपस्कारकस्य( अलंकारस्य ) व्यपदेशं कथं लभताम् ? प्रधानस्योपस्कारको हि उपस्करणे उपकारकमात्रत्वादप्रधानमेव । स्वगृहे स्थितः अन्यमुपस्कुर्वन् न स्वयमेव प्रधानव्यपदेशं लभते ।

यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥'

कुवलयानन्दकारस्तु—"यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चस्तत्तु प्रकृताप्रकृताभिधानमूलस्योपमादेरलंकारस्य व्यङ्ग्यत्वाभिप्रायं न त्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्याभिधेयत्वेन व्यक्त्यनपेक्षत्वात् । यद्यपि प्रकृतार्थे प्रकरणवशाज्झटिति बुद्धिस्थिते सत्येव पश्चान्नृपतितद्ग्राह्यधनादिवाचिनां राज–करादिपदानामन्योन्यसंनिधानबलात्तद्विषयशक्यन्तरोन्मेषपूर्वकमप्रकृतार्थः स्फुरेत्, नैतावता तस्य व्यङ्ग्यत्वम् । शक्त्या प्रतिपाद्यमाने सर्वथैव व्यक्त्यनपेक्षणात् । पर्यवसिते प्रकृतार्थाभिधाने स्फुरति चेत्कामं गूढश्लेषोऽस्तु । अस्ति चान्यत्रापि गूढः श्लेषः । यथा—

---

येन । **अनुपेति** । अबाधितज्ञानस्य अवारितगतेर्वा अदुष्टहितकर्तुर्वा । **परेति** । शत्रुनिवारकस्य । गजपक्षे भद्रजातीयस्य । अत्युच्चत्वाद्दुःखाधिरोह्यशरीरस्य । विशाला वंशस्य पृष्ठदण्डस्योन्नतिर्यस्य । कृतभ्रमरसंग्रहस्य अनुद्धतधीरगमनस्य । परस्योत्कृष्टस्य वारणस्य गजस्य । करः शुण्डादण्डः । मदजलसेकसुभगोऽभूदित्यर्थः । अत्र राजा वाच्यो हस्ती प्रतीयमानः । ननु प्रकरणेनाभिधाया नियमनादप्रकृतार्थस्य व्यङ्ग्यत्वमेवेति कथं श्लेषोऽत आह—**यदत्रेति** । मूलस्य मूलकस्य । **अलंकारस्येति** । इदमुपलक्षणं वस्तुध्वनेरपि । शनिरशनिरित्यादौ शनिविरुद्धरूपेऽप्रस्तुतेऽशनिशब्देनाभिधया प्रतीयमानेऽपि तन्मूलकस्य 'विरुद्धावपि त्वदनुवर्तनमेकं कार्यं कुरुतः' इति वस्तुध्वनेरशनिशब्दशक्तिमूलस्य संभवात् । एतेन शब्दशक्तिमूलवस्तुध्वनेरुच्छेद इत्यपास्तम् । अत एव विवक्षितार्थमाह—**न त्विति** । **अभिधेयत्वेति** । वाच्यत्वावश्यकत्वेनेत्यर्थः । 'अभिधाया अवश्यंभावेन' इति क्वचित्पाठः । **झटितीति** । एवं च प्रकरणादीनां प्राथमिकबोधत्वमेव प्रतिबध्यतावच्छेदकमिति भावः । **नृपतितद्ग्राह्येति** । नृपतिर्नृपतिग्राह्येत्यर्थः । यथासंख्येनास्य राजकरयोरन्वयः । 'असावुदयमारूढः कान्तिमान्रक्तमण्डलः । राजा हरति सर्वस्वं मृदुभिर्नूतनैः करैः ॥' इत्यादाविति भावः । **अन्योन्यसंनिधानेति** । परस्परार्थसंबन्ध्यर्थवाचकशब्दसमभिव्याहाररूपशब्दान्तरसंनिधीत्यर्थः । **तद्विषयेति** । प्रकृतार्थविषयेत्यर्थः । **नैतावतेत्यस्य** तथापीत्यादिः । एतावता पूर्वापरभावमात्रेण तस्य अप्रकृतार्थस्य पश्चादिति । अप्रकृतार्थ इत्यनुषज्यते । **काममिति** । अप्रकृतस्य द्वितीयस्य शीघ्रमप्रत्ययाद्गूढत्वम् । तदसंभवशङ्कां निरस्यति—**अस्ति चेति** । चो ऽर्थे ।

---

१ सर्वस्वकरणपाठो नागेशस्यैव विदितः । कुवलयानन्दे तु 'लोकस्य हृदयं मृदुलैः' इत्येव पाठः ।

'अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति॥'

अत्र हि समासोक्त्युदाहरणे वृद्धवेश्यावृत्तान्तः प्रतीयते। तत्राभङ्गश्लेष इति सर्वेषामभिमतम्। एवं चाप्रकृतार्थो न व्यङ्ग्यः।" इत्याह।

तत्र विचारयामः—यत्तावदुच्यते उपमादेरलंकारस्यैव व्यङ्ग्यत्वं प्राचीनानामभिप्रेतं न त्वप्रकृतार्थस्येति। एवं सति

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥'

इत्यादिस्तेषां ग्रन्थः कथमायुष्मता समर्थितः?। उपमादेर्व्यङ्ग्यत्वस्य वाचकतानियन्त्रणाऽनपेक्षत्वात्[1]। नह्यनेकार्थस्यापि शब्दस्योपमादिवाचकत्वं प्रसक्तं येन तन्नियन्त्रणाय संयोगाद्यनुसरणमर्थवत्स्यात्[2], द्वितीयार्थवाचकतायामनियन्त्रितायामप्युपमादेर्व्यङ्ग्यत्वस्य निष्प्रत्यूहत्वात्। तस्मात्तद्ग्रन्थानाकलननिबन्धनं तदभिप्रायवर्णनमिति स्फुटमेव।

यदप्युच्यते अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्येत्यादि। तत्र कथमप्र-

---

अन्यत्रापि उदाहरणान्तरेऽपि। **अयमतीति**। माघे रैवतकवर्णनम्। अयं रैवतकगिरिः कठिनाः अत्यन्तमहतीः महाविलम्बमानमेघव्याप्ताः निरन्तरं प्राणिनामगम्यस्वरूपाः परिणतास्तिर्यग्दन्तप्रहारिणो दिक्करिणो दिग्गजा यासु तास्तटीर्बिभर्तीत्यर्थः। 'तिर्यग्दन्तप्रहारी यो गजः परिणतस्तु सः' इति हलायुधः। वृद्धवेश्यापक्षे तु—अयं राजा अतिप्रवयसो जीर्णा महाविलम्बमानस्तनसंबद्धाः सततं कदापि प्राणिनां संगमायोग्यस्वरूपाः। गमने प्राणिनां मरणमेवेति भावः। परिणते दिग्वर्तुलाकारं दशनक्षतं करिका नखक्षतं च यासां तास्तटीस्तत्त्वेनाध्यवसिता वृद्धवेश्या बिभर्तीत्यर्थः। 'दिग्दष्टं वर्तुलाकारं करिका नखरेखिका' इति यादवः। ननु तत्र श्लेष एव नात आह—**तत्रेति**। अयमतीत्यत्रेत्यर्थः। उपसंहरति—**एवं चेति**। तेषां प्राचीनानाम्। दोषान्तरमाह—**द्विती-**

---

१ उपमाद्यलंकारस्य यद्व्यङ्ग्यत्वं जातं न किल तद् वाचकतानियन्त्रणमपेक्ष्य। वाचकतानियन्त्रणे सति न तज्जातमित्यर्थः।

२ अनेकार्थस्यापि 'रामलक्ष्मणौ' इति रामपदस्य प्रसक्तः परशुरामादिरर्थो निषिध्यते, दाशरथिरेव च यथा नियम्यते तथा अनेकार्थस्य शब्दस्य उपमावाचकत्वं न प्रसक्तमासीत् यस्य नियन्त्रणाय संयोगो विप्रयोगश्चेति नियन्त्रकाणामाश्रयणं कृतम्। अर्थात् उपमाव्यङ्ग्यत्वस्थले अनेकार्थनियन्त्रणग्रन्थोद्धरणस्य तदैव सार्थकत्वं स्याद् यदा अनेकार्थशब्दानामुपमावाचकत्वं प्राप्तं स्यात् यद्वि संयोगादिभिर्नियन्त्रितं स्यात्।

कृतार्थस्य शक्त्या प्रतिपादनम् ?। तद्विषये शक्तेर्नियन्त्रणस्य तैरेवोक्तत्वात्। अथ नियन्त्रणं नाम प्रथमं बोधजननमात्रं न तु चरममपि। एवं च प्रकृतशक्त्या प्रकृतार्थबोधे जाते सत्यकृतार्थया द्वितीयशक्त्या प्रकृतेतरार्थबोधे न किंचिद्बाधकमिति चेत् । न । प्रथमं ह्यप्रकृतार्थबोधस्याजननमेव कस्य हेतोः ?। प्रकरणादिज्ञानेन प्रतिबन्धादिति चेत्, प्रकृतार्थबोधोत्तरं सा प्रतिबन्धकता केनापहृता प्रकरणादिज्ञानस्य ?। न च ज्ञानस्याशुविनाशित्वात्तदानीं प्रकरणज्ञानमेव नष्टमिति वाच्यम् । ज्ञानान्तरस्योत्पत्तौ बाधकाभावात्। सैव ज्ञानव्यक्तिः प्रतिबन्धिकेति तु तत्तद्व्यक्तिसहस्रगतप्रतिबन्धकत्वसहस्रकल्पनागौरवग्रस्तमेव। तदपेक्षयान्यत्र क्लृप्तव्यञ्जनाख्यव्यापारस्यैव कल्पयितुं युक्तत्वात्। 'जैमिनीयमलं धत्ते रसनायां महामतिः' इत्यादौ बाधितार्थबोधस्य शक्त्या दुरुपपादत्वाच्च। यदि तु यथाकथंचिदुपपत्तिः स्यादेवमपि तस्य देवदत्तादौ तत्पुत्रवाक्यादप्रादुर्भावस्तच्छयालकाद्युपहासवाक्यात्प्रादुर्भावश्च न स्यात्। वक्तृबोद्धव्यादिवैशिष्ट्यस्य व्यङ्ग्यप्रतिभामात्रहेतुत्वादिति प्राचामाशयः। तत्र किमुच्यते अप्रकृतार्थस्य शक्त्या प्रतिपादनमिति ।

---

**यार्थेति**। तैरेव प्राचीनैरेव । अकृतार्थया अचरितार्थया । सा पूर्वं विद्यमाना। **आश्विति**। त्रिक्षणावस्थायित्वादिति भावः। **ज्ञानमेवेति**। एवं चाश्रयस्यैवाभावात्प्रतिबन्धकत्वं दुर्वचमिति भावः। लाघवादाह—**तदपेक्षयेति** । अन्यत्र गतोऽस्तमर्क इत्यादौ । व्यञ्जनानङ्गीकर्तृमते गौरवाङ्गीकारस्यावश्यकत्वादाह—**जैमिनीयेति**। **बाधितार्थेति**। जैमिनीयसंबन्धिविष्ठामित्यर्थः । यथाकथंचित् तत्र व्युत्पत्त्यन्तराङ्गीकारादिति भावः। तस्य 'महामतिर्जिह्वायां जैमिनीयसंबन्धिविष्ठां धत्ते' इति बाधितार्थस्य। **तत्पुत्रेति**। तत्र तु स तस्यां जैमिनीयं शास्त्रं अलमत्यन्तं धत्ते इत्यर्थप्रतीतिरिति भावः। ननु वक्तृबोद्धव्यादिवैशिष्ट्यात्तथेत्यत आह—**वक्त्रिति** । मात्रपदेन शक्यप्रतिभानिरासः। तथा चावश्यकव्यञ्जनयैव तत्प्रतीतिरिति भावः । अत एवाह—**तत्र किमुच्यते अप्रकृतार्थस्य शक्त्या प्रतिपादनमिति**। अत्रेदं चिन्त्यम्—

---

१ महामतेर्द्विजस्य जिह्वायां विष्ठाया धारणं बाधितम् (अनुपपन्नम्) । अत एव बाधितार्थबोधः शक्त्या न प्रतिपादयितुं शक्यः। व्यञ्जना तु बाधितार्थस्यापि बोधिकेति धर्मिग्राहकमानसिद्धमिति पूर्वम् ( द्वितीयाननारम्भे ) प्रोक्तम्।

यच्चाप्युच्यते "-'अयमतिजरठाः'-इत्यादिसमासोक्ताविव गूढश्लेषोऽस्तु" इति, तदपि गर्भस्रावेण गलितम्। श्लिष्टविशेषणाय, समासोक्तावपि व्यक्त्यैवाप्रकृतार्थप्रतीतिस्वीकारात्। अत एव ध्वनिकृता 'गुणीभूतव्यङ्ग्यभेदः समासोक्तिः' इत्युक्तम्। 'समासोक्त्या श्लेषो बाध्यते' इत्युद्भटप्रभृतिभिश्च। बाधो हि श्लेषस्य तत्राप्रवृत्तिमात्रम्। श्लिष्टशब्दप्रयोगस्तु तत्रोभयार्थतामात्रेणोपपादनीय इति न किंचिदेतत्।

वयं तु ब्रूमः—अनेकार्थस्थले ह्यप्रकृताभिधाने शक्तेरुक्तिसंभवोऽप्यस्ति। योगरूढिस्थले तु सापि दूरापास्ता। यथा—

तत्र झटितीत्युक्त्या प्राथमिकबोधत्वमेव प्रतिबन्धतावच्छेदकमिति बोधितमित्युक्तमेव। एवं चान्योन्यसंनिधानबलादित्यनेनोक्तार्थकेनेदं बोधितं यत्प्रकृतार्थे नियामकद्वयसत्त्वात्प्रथममुपस्थितिः। द्वितीयेऽपि शब्दान्तरसंनिधिरूपनियामकमात्रसत्त्वेन तस्याप्युपस्थितिः किं तु पश्चादिति। सुरभिमांसं भुङ्क्ते इत्यादेः पुत्रादिप्रयुक्तान्नाश्लीलबोधः। श्यालकादिप्रयुक्तादेव च तद्बोध इति व्यवस्थापि वक्तृतात्पर्यग्रहतद्ग्रहाभ्यां सूपपादा। यद्वा वक्तृबोद्धव्यादिवैशिष्ट्यस्य फलबलेन नियन्त्रितशक्त्युल्लासेऽपि हेतुत्वकल्पनान्न दोषः। एतावान्विशेषः—यत्र वक्तृवैशिष्ट्यादिज्ञानं विलम्बेन, प्रकरणज्ञानं च शीघ्रं, तत्र वक्तृवैशिष्ट्यादीनां नियन्त्रितशक्त्युल्लासकत्वम्। यत्र तु युगपदेवोभयं तत्र नियन्त्रणप्रतिबन्धकतोत्तेजकतैव तेषाम्। व्यञ्जनावादिनापि तेषां व्यङ्ग्यप्रतिभाहेतुत्वमवश्यमङ्गीकार्यमेव। तद्वरं व्यञ्जनामनङ्गीकृत्य तेषां शक्त्युल्लासादिहेतुत्वकल्पनमेव। एवं योगरूढपदानां यत्र योगार्थमात्रघटितार्थान्तरबोधकतेष्टा, तत्र तेषां रूढिप्रतिबन्धकतापि, स्वीकार्या, उत्तेजकता वा। एतेन वयं तु ब्रूम इत्याद्युक्तिरप्यपास्ता। किं च शब्दशक्तिमूलध्वनिस्थले संबन्धविशेषरूपव्यञ्जनाया बोधजनकत्वकल्पनापेक्षया क्लृप्तशक्तेस्तत्त्वकल्पनमेवोचितम्। लाघवात्। एवं चाश्लिष्टसाधारणविशेषणायां समासोक्तावेव गुणीभूतव्यङ्ग्यत्वम्, श्लिष्टविशेषणायामप्यारोपांशमादाय वा तत्त्वमिति दीक्षिताशयः। वस्तुतस्तु द्वितीयार्थस्य व्यङ्ग्यत्वेऽपि न तमादाय ध्वनित्वमुचितम्। उपमानादिविवक्षया तस्यापि प्रकृतोपस्कारकत्वेन गुणत्वात्। अन्यथा समासोक्तावपि गुणीभूतव्यङ्ग्यत्वोक्तिरसंगता स्यादित्यलंकारव्यङ्ग्यत्वमादायैव ध्वनित्वमुक्तमिति बोध्यम्। एतेन यदप्युच्यते अयमतीत्यादि, तदपास्तमिति बोध्यम्। अपिना साधारणविशेषणसमुच्चयः। एतेन शक्तिनिरासः। अत एव व्यक्त्यैव तदङ्गीकारादेव। **प्रभृतिभिश्चेति**। उक्तमित्यस्यानुषङ्गः। ननु प्रागुक्तरीत्या तत्र श्लेषस्यैवाभावेन कथं बाध्यत इत्युक्तिरत आह—**बाधो हीति**। तत्र सामासोक्तौ। नन्वेवं श्लिष्टेतिशब्दप्रयोगः कथमत आह—**श्लिष्टेति**।

'चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु ।
विपिनेऽतिचञ्चलानामपि च मृगाणां कथं न तां हरति ॥'

अत्र नैवाश्चर्यकारी चाञ्चल्यगुणरहितानां कमलानां चाञ्चल्यगुणाधिकेन तव लोचनेन शोभायास्तिरस्कारः, आश्चर्यकारी तु हरिणानां तद्गुणयुक्तानां तिरस्कार इति वाच्यार्थे पर्यवसन्नेऽपि रूढिनिर्मुक्तकेवलयोगमर्यादया—मूर्खपुत्राणां धनहरणं नेतृभिश्चौरैः सुशकं न तु गवेरकाणामिति जलज-नयन-मृग-शब्देभ्यः प्रतीयमानोऽर्थः कथं विना व्यञ्जनाव्यापारमुपपादयितुं शक्यते ?। यतो योगशक्ते रूढ्या दृढनिगडनियन्त्रिताया नास्ति स्वातन्त्र्यम् । अत एव पङ्कजादिपदेभ्यः पङ्कजनिकर्तृत्वेन कुमुदशैवलादिबोधो लक्षणयैव । तादृशशक्तिज्ञानानां पद्मत्वप्रकारकबोधस्यैव कार्यतावच्छेदकत्वादित्युक्तं नैयायिकैः । अत एव च 'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' इति वेदान्तवाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवः प्रतिपाद्य ईश्वरो वेति संशये प्राप्ते 'शब्दादेव प्रमितः' इति सूत्रितमुत्तरमीमांसाकारैर्व्यासचरणैः । तस्मात्प्रागुक्तपद्येऽप्रकृतचोरव्यवहारो न शक्तिवेद्यः, अपि तु व्यक्तिवेद्य एव । मुख्यार्थबाधाद्यभावाल्लक्ष्योऽपि न शक्यो वक्तुम् । तात्पर्यार्थबाधस्तु तात्पर्यार्थबोधोत्तरबोध्यः । स एव तु कथं स्यादिति व्यञ्जनैव शरणीकरणीया । नहि चोरव्यवहारोऽत्र वक्तुर्विवक्षित इति ज्ञाने श्रोतुः कश्चिदुपायोऽस्ति ऋते सहृदयतोन्मिपितादस्माद्व्यापारात् ।

इदं पुनरिहावधेयम्—'रागावृतो वल्गुकराभिमृष्टं श्यामामुखं चुम्बति चारु चन्द्रः' इत्यादौ तावत्समासोक्तिरिति निर्विवादम् । चन्द्रपदस्थाने राजेति कृते तु शब्दशक्तिमूलो ध्वनिरिति च । तदत्रोभयत्रापि श्लिष्टविशेपणमाहात्म्यादप्रकृतव्यवहारस्य प्रतीयमानस्य तुल्यत्वात्कथमेकत्र गुणीभावोऽन्यत्र प्राधान्यं च स्यात् । प्रकृतस्य प्राधान्यादप्रकृतस्य तु तदुप-

व्यक्तिर्व्यंजना । अस्मात् व्यञ्जनाख्यात् । वल्गु सुन्दरम् । इति च निर्विवादम् । एकत्र

१ विशेष्यस्यापि श्लिष्टत्वे शब्दशक्तिमूलध्वनिरिति पूर्वं स्थिरीकृतत्वात् ।

स्कारकत्वेनोभयत्रापि गुणभावौचित्यात्। नहि विशेष्यस्य श्लिष्टतामात्रेण व्यङ्ग्यस्य प्राधान्यम्, अश्लिष्टत्वे चाप्राधान्यं शक्यं संपादयितुम्। नायकत्वप्रतीतिरपि क्वचिदर्थशक्तिमूलेन व्यञ्जनेन, क्वचिच्छब्दशक्तिमूलेन तुल्यैव। यैरपि समासोक्तौ प्रकृतधर्मिणि नायकत्वादेः प्रत्ययो नाभ्युपेयते, अपि तु नायकादिव्यवहारस्यैव, ध्वनौ चाभ्युपेयते, तेषामपि व्यङ्ग्यस्यैकत्र गुणत्वमन्यत्र प्राधान्यं च कस्य हेतोः स्यात्? । प्रकृताप्रकृतयोरौपम्यं गम्यमुच्यतामभेदो वा, सर्वथैव तस्य प्रकृतोपस्कारकत्वाद्गुणीभाव एवोचितो न प्राधान्यम्। अन्यथा समासोक्तावपि व्यङ्ग्यस्य प्राधान्यापत्तेः। तस्माच्छ्लिष्टाश्लिष्टविशेष्या समासोक्तिरेवेयम्। पराङ्गरूपगुणीभूतव्यङ्ग्यभेद इत्यपि शक्यते वक्तुं यदि प्राज्ञो न कुप्यन्ति।

सोऽयं श्लेषः सभङ्गोऽभङ्गश्चार्थालंकार एवेत्यौद्भटाः। उभावप्येतौ शब्दालंकारौ, शब्दस्य परिवृत्त्यसहत्वादन्वयव्यतिरेकाभ्यां तदाश्रितत्वावधारणात्। तृतीयस्त्वर्थालंकारः, अर्थमात्राश्रितत्वात्। इति मम्मटभट्टाः। अन्वयव्यतिरेकाभ्यां हि हेतुत्वावगमो घटं प्रति दण्डादेरिवास्तु, न त्वाश्रयत्वावगमः। स तु पुनस्तद्वृत्तित्वज्ञानाधीनः। इह हि सभङ्गश्लेषस्य शब्दद्वयवृत्तित्वं जतुकाष्ठन्यायेन, अभङ्गस्य चार्थद्वयवृत्तित्वमेकवृन्तगतफलद्वयवच्च स्फुटमेवेत्येकस्य शब्दालंकारत्वमपरस्यार्थालंकारत्वम्। यद्यपि द्वितीयस्यापि 'प्रतिप्रवृत्तिनिमित्तं शब्दभेदः' इति नये शब्दद्वयवृत्तित्वाच्छब्दालंकारत्वमुचितम्, तथापि शक्ततावच्छेदकानुपूर्व्यभेदादभेदाध्यवसा-

आद्ये। अन्यत्र अन्त्ये। एवमग्रेऽपि। कस्य कस्मात्। सर्वस्वकारमतमाह—अन्व-

---

१ अप्पयदीक्षितादिभिः समासोक्तौ रूपसमारोपो नाभ्युपेयते, अपि तु व्यवहारसमारोपः।

२ एकधर्मपुरस्कारेण यो भेदः शुद्धाख्यः, यः 'अर्जुनस्य गुरुर्मायामनुजः' इत्यादिना पूर्वमुदाहृतः।

३ अयं भावः—'करकलितचक्रः' इत्याद्यभङ्गस्थले सूर्य-विष्णुरूपार्थद्वय-बोधार्थं 'हरि'-पदस्यैकस्यैव काममावृत्तिरस्तु, परम् उभयत्र 'हरिः' इत्यानुपूर्वी एकैवास्ति। अत एव अभङ्गस्य शब्दद्वयवृत्तितासाधनं न सुशकम्।

नाच्छब्दद्वयवृत्तित्वज्ञानं दुःशकम् । अन्यथा 'प्रत्यर्थं शब्दनिवेशः' इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालंकार एव स्यात् । इत्यलंकारसर्वस्वकारादयः ।

अयं चोपमेव स्वतन्त्रोऽपि तत्र तत्र सकलालंकारानुग्राहकतया स्थितः सरस्वत्या नवं सौभाग्यमावहन्नानाविधेषु लक्ष्येषु सहृदयैर्विभावनीय इति ।

इति रसगङ्गाधरे श्लेषप्रकरणम् ।

अप्रस्तुतेन गम्येन वाच्यस्य प्रस्तुतस्योपस्करणे समासोक्तिरुक्ता । तद्वैपरीत्येनाप्रस्तुतप्रशंसोच्यते—

**अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाणप्रकारान्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते साप्रस्तुतप्रशंसा ॥**

प्रशंसनं च वर्णनमात्रम्, न तु स्तुतिः । 'धिक्नालस्योन्नततां यस्य च्छायापि नोपकाराय ।' इत्यादावव्याप्त्यापत्तेः ।

इयं च पञ्चधा—अप्रस्तुतेन स्वसदृशं प्रस्तुतं गम्यते यस्यामित्येका । कार्येण कारणमित्यपरा । कारणेन कार्यमिति तृतीया । सामान्येन विशेष इति चतुर्थी । विशेषेण सामान्यमिति पञ्चमी ।

आद्या यथा—

'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥'

---

**येति** । एकस्य आद्यस्य । अपरस्य द्वितीयस्य । अयं च श्लेषश्च । इतिः समाप्तौ ॥
इति रसगङ्गाधरमर्मप्रकाशे श्लेषप्रकरणम् ॥

अथ वक्तव्याप्रस्तुतप्रशंसायाः संगतिमाह—**अप्रस्तुतेनेति** ।

---

१ अयमाशयः—अन्वयव्यतिरेकाभ्यां शब्दहेतुकत्वस्य अर्थहेतुकत्वस्य वा प्रत्ययः स्यात् । अयं श्लेषः शब्दाश्रयः, अर्थाश्रयो वा ? इति तु बोधः 'अयं श्लेषः शब्दवृत्तिरर्थवृत्तिर्वा' इति ज्ञाने सत्येव भवेत् । इदानीं दृश्यताम्—सभङ्गः शब्दद्वये वर्तते [ 'संभूत्यर्थम्०' अत्रोदाहरणे 'विष्णुनाभिप्रपन्नम्' अत्र 'विष्णु–नाभिप्रपन्नम्' 'विष्णुना अभिप्रपन्नम्' इति शब्दद्वयप्रतिभानं भवति ] ततश्च शब्दद्वयाश्रितत्वात् शब्दालंकारोऽयम् । अभङ्गे तु अर्थद्वयस्यैव प्रत्ययः, शब्दस्त्वेक एव [ यथा–करकलितचक्र इत्युदाहरणे शब्दस्यैकस्यैव प्रतिभानम्, अर्थस्तु विष्णु–सूर्योभयाश्रयः ] अत एव अर्थाश्रितत्वादर्थालंकारोयम् ।

यथा वा—

'यस्मिन्खेलति सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्यूथाधिपाः पेदिरे।
सोऽयं तुङ्गतिमिङ्गिलाङ्गगिलनव्यापारकौतूहलः
क्रोडे क्रीडतु कस्य केलिरभसत्यक्तार्णवो राघवः॥'

यथा वा—

'पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम्॥'

श्लिष्टविशेषणाप्येषा दृश्यते—

नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि॥

समासोक्तिरत्रानुग्राहिकेति तु न वक्तव्यम्। तस्याः प्रकृतालंकारविरुद्धात्मिकात्वेनानुग्राहिकात्वायोगात्। यत्तु "—'येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः' इत्यत्र समासोक्तेरनुग्राहिका" इति मम्मटभट्टैरुक्तं तत्र विचार्यते—अत्र विशेषणसाम्यमहिम्ना प्रतीयमानः कापुरुषवृत्तान्तः किं प्रस्तुत आहोस्विदप्रस्तुतः?। आद्ये समासोक्तेर्विषय एव नास्ति। 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः' इति समासोक्तेर्लक्षणस्य तैरेवाभिधानात्। परस्या-

---

हरिदिति इन्द्रादय इत्यर्थः। विकचेति। विकसितकमलपङ्क्तीत्यर्थः। भेको मण्डूकः।

१ लोकपालाः पेदिरे प्रापुः।

२ गिलनव्यापारः कौतूहलं यस्य।

३ 'श्लिष्टैर्विशेषणैः अप्रकृतस्य कथनं समासोक्तिः'। अत्र तु कापुरुषवृत्तान्तः प्रस्तुत इति भवता स्वीक्रियते, ततः कथं समासोक्तिः?।

प्रकृतस्येति तदर्थात् । द्वितीयेऽप्रस्तुतप्रशंसाया नास्ति विषयः, 'अप्रस्तुतप्रशंसा सा या सैव प्रस्तुताश्रया' इति तल्लक्षणात् । प्रस्तुत आश्रयः प्रधानं यस्या इति तदर्थात् । तस्माच्छ्लिष्टविशेषणोपक्षिप्तद्वितीयार्थमात्रं समासोक्तिरित्यभिप्रायेण यथाकथंचित्संगमनीयम् ।

इयं च सादृश्यमूलाप्रस्तुतप्रशंसोच्यते । अस्यां च वाक्यार्थः क्वचित्प्रतीयमानार्थताटस्थ्येनैवावतिष्ठते—यथोक्तोदाहरणेषु । क्वचिच्च स्वगतविशेषणान्वययोग्यतामासादयितुं प्रतीयमानाभेदमपेक्षते । यथा—

'समुपागतवति दैवादवहेलां कुटज मधुकरे मा गाः ।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥'

यथा वा—

'तावत्कोकिल दिवसान्यापय विरसान्वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥'

अत्र वृक्षपक्षिणोः संबोधनानुपपत्त्या प्रतीयमानांशतादात्म्यमपेक्ष्यते ।

'मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥'

अत्र त्यागानौचित्यहेतुत्वेन कमलिन्याः स्तुतिरूपं विशेषणमुपात्तम् । तच्च न संभवति । नहि भ्रमरे श्यामत्वादिर्दोषः, कमलिन्याः शोणत्वादिर्वा गुणः, येन स्तुतिः स्यात् । अतो वाच्यार्थस्य प्रतीयमानतादात्म्यं विशेष्यांशे विशेषणांशे चापेक्ष्यते । पूर्वत्रांशेन, इह तु साकल्येनेति विशेषः । क्वचिच्च प्रतीयमानमपि किंचिदंशे वाच्यतादात्म्यम्, वाच्यं च किंचिदंशे प्रतीयमानतादात्म्यमपेक्षते । यथा—

अलिर्भ्रमरः । मम्मटोक्तिमाह—**समेति** । इयं श्लिष्टविशेषणा । अस्यामप्रस्तुतप्रशंसायाम् । **यथोक्तेति** । दिगन्त इत्यादिष्वित्यर्थः । **विशेष्यांशे विशेषणांशे चेति** । संबोधना-

१ अत्र कापुरुषवृत्तान्तः अप्रस्तुतः अर्थात् न वर्णनीयः [ प्राधान्येन वर्णनीयश्चन्द्र एवेत्याशयः ] एवं स्थितौ कथमप्रस्तुतप्रशंसा ? 'प्रस्तुतार्थप्रतिपत्तिपरा अप्रस्तुतवर्णना अप्रस्तुतप्रशंसा' इति लक्षणानुसारम् अप्रस्तुतं वर्णयित्वा प्रस्तुतं बोधयितुमेष्यते तत्राप्रस्तुतप्रशंसा । अत्र तु अप्रस्तुतः कापुरुषस्तस्य वर्णनमेव नेष्यते ! ।

२ विशेष्यस्य भ्रमरादेः संबोधनस्योपपत्तिमात्रं प्रयोजनमित्याशयः । विशेषणांशे तु सर्वोपि वाच्यार्थो नोपपद्यत इति साकल्येन ।

'सरजस्कां पाण्डुवर्णां कण्टकप्रकराङ्किताम्।
केतकीं सेवसे हन्त कथं रोलम्ब निस्त्रपः॥'

अत्र यथा सरजस्कत्वं वाच्यप्रतीयमानयोरपि सेवनानौचित्ये निमित्तम्, न तथा पाण्डुवर्णत्वकण्टकितत्वे। यतः पाण्डुवर्णत्वं केतक्यां न दोषः, प्रत्युत गुण एवेति पाण्डुरत्वांशे केतक्या नायिकातादात्म्यमपेक्ष्यते। नायिकायां च कण्टकितत्वांशे केतकीतादात्म्यम्। पुलकितत्वस्य कामिनीत्यागाननुगुणत्वात्प्रत्युत तत्सेवनानुगुणत्वात्।

कार्येण कारणं गम्यं यथा—

'किं ब्रूमस्तव वीरतां वयममी यस्मिन्धराखण्डल
क्रीडाकुण्डलितभ्रु शोणनयने[1] दोर्मण्डलं पश्यति।
नानाभूषणरत्नजालजटिलास्तत्कालमेवाभव-
न्विन्ध्यक्ष्माधर–गन्धमादनगुहासंबन्धिनो[2] भूरुहाः॥'

अत्र विन्ध्यारण्यतरुभूषणेनारिपलायनं गम्यते। यदि तु वक्ष्यमाणरीत्या पर्यायोक्तालंकारस्यायं विषय इत्युच्यते, तदेदं विविक्तमुदाहरणम्—

'नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि।
यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम्॥'

अत्र पल्लवादितिरस्कारेण कार्येण तदङ्गानां सौकुमार्यातिशयः कारणम्। कार्यकारणभावश्चेह ज्ञानयोः। तेन पारुष्यस्य मृणालगतत्वेन ज्ञायमानस्य स्वरूपतस्तदङ्गसौकुमार्याजन्यत्वेऽपि[3] न क्षतिः।

कारणेन कार्यं गम्यं यथा—

'सृष्टिः सृष्टिकृता[4] पुरा किल परित्रातुं जगन्मण्डलं
त्वं चण्डातप[5] निर्दयं दहसि यज्ज्वालाजटालैः करैः।

नुपपत्त्या विशेष्यांशे, श्यामत्वादेर्विशेषणत्वाद्युपपत्तये विशेषणांशे चेत्यर्थः। रोलम्बो भ्रमरः।

१ शोणनयनतया किंचिदमर्षोदयोत्तरम्, उद्दीपितशौर्यतया भुजमण्डलं पश्यति सति।

२ विन्ध्यमहीधरस्य गन्धमादनस्य च गुहासंबन्धिनः।

३ नायिकाङ्गसौकुमार्येण (कारणेन) मृणाले पारुष्यम् (कार्यम्) नोत्पाद्यते, अपि तु नायिकाङ्गसौकुमार्यज्ञानोत्तरं मृणाले पारुष्यस्य ज्ञानं भवतीत्याशयः।

४ सृष्टिकारक(विधातृ)कर्तृका सृष्टिः, तद्द्वारा इत्यर्थः।

५ प्रचण्डः आतपो यस्य तत्संबुद्धौ हे चण्डकिरण!।

संरम्भारुणलोचनो रणभुवि प्रस्थातुकामोऽधुना
जानीमो भवता न हन्त विदितो दिल्लीधरावल्लभः ॥'

अत्र राजवर्णनाङ्गत्वेन रवेर्भयोत्पादने वर्ण्यत्वेन प्रस्तुते साक्षात्तद-[1]नुगुणत्वादप्रस्तुतेन प्रस्थानेन साक्षात्तदनुगुणं रिपुकर्तृकसूर्यमण्डलभेदनं गम्यते। यदि चात्र कारणं यथाकथंचित्प्रस्तुतमेवेत्युच्यते,[2] तदेदमुदाहरणम्—

'आनम्य वल्गुवचनैर्विनिवारितेऽपि
रोपात्प्रयातुमुदिते[3] मयि दूरदेशम्।
बाला कराङ्गुलिनिदेशवशंवदेन
क्रीडाबिडालशिशुनाशु रुरोध[4] मार्गम् ॥'

अत्र प्रवासान्निवृत्तोऽस्मीति प्रस्तुतमप्रस्तुतेन कारणेन गम्यते।

सामान्ये विशेषो यथा—

'कृतमपि महोपकारं पय इव पीत्वा निरातङ्कः।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥'

अत्र सामान्यार्थेन प्रस्तुतो विशेषो गम्यते। उपमाप्यस्या आनुगुण्येन स्थिता।

विशेषेण सामान्यं यथा—

'पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं[5]
दुष्प्रापं मनसापि यो गुरुतरैः क्लेशैः पदं प्रापितः।

---

१ अत्र सूर्यस्य भयोत्पादनं वर्णितम् [ भवता दिल्लीशो न दृष्टः, अन्यथाऽयं ते गर्वो न भवेदिति ] अत एवेदं प्रस्तुतम्। अनेन सह राजप्रस्थानस्य साक्षादानुगुण्यम् ( गुणसंबन्धेनानुकूल्यम् ) नास्तीति राजप्रस्थानमप्रस्तुतम्। अप्रस्तुतेन राजप्रस्थानरूपेण कारणेन [ रिपुकर्तृकसूर्यमण्डलभेदनं प्रति राजप्रस्थानमेव कारणम् यतो हि युद्धाय प्रस्थिते एव दिल्लीशे शत्रवो म्रियन्ते ] सूर्यमण्डलभेदनं कार्यं प्रस्तुतम् [ प्रस्थानेन सह सूर्यमण्डलभेदनस्य गुणद्वाराऽऽनुकूल्यमस्ति ] व्यज्यते।

२ सूर्यमण्डलभेदनं यदि प्रस्तुतं तर्हि तत्कारणभूतं प्रस्थानमप्यनुगुणतया प्रस्तुतमेवेति यद्युच्यते।

३ मधुरवचनद्वारा प्रस्थानान्निवर्तितेपि रोषवशान्मयि पुनरपि प्रस्थातुमुद्यते सति।

४ मार्जारद्वारा मार्गभेदः कुशकुनमित्याशयः।

५ कविगौरवं त्यक्त्वा बन्दिवत् चाटुस्तुतिपाठकत्वम्।

रूढस्तत्र स चेन्निगीर्य सकलां पूर्वोपकारावलीं
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे ॥'

अत्र दुष्टेषु कृत उपकारः परिणामे न सुखं जनयतीति प्रस्तुतं विशेषेण सामान्यं गम्यते ।

यथा वा—

'हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।
लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम् ॥'

अत्र मर्कटवृत्तान्तेनाप्रस्तुतेन प्रस्तुतमनभिज्ञेषु रमणीयवस्तुसमर्पणं नाशाय भवतीति सामान्यं गम्यते । एवं पञ्चप्रकारेयमप्रस्तुतप्रशंसा प्राचामनुसारेण निरूपिता ।

वस्तुतस्तु प्रथमस्याप्रस्तुतप्रशंसाप्रकारस्य नानाविधत्वं संभवति । यत्रात्यन्तमप्रस्तुतेन वाच्येन प्रस्तुतं गम्यते स प्रकारो निगदित एव । यत्र च स्थलविशेषे वृत्तान्तद्वयमपि प्रस्तुतं सोऽप्येकः । यथा जलक्रीडाप्रकरणे भ्रमरकमलिन्यादिषु पुरःस्थितेषु, नायके च स्वनायिकायामननुरक्ते पार्श्ववर्तिनि, नायिकासख्याः कस्याश्चिदुक्तौ 'मलिनेऽपि रागपूर्णा—' इत्यादि[1]प्रागुदाहृते पद्ये । अथात्र कथमप्रस्तुतप्रशंसा ? । वाच्यार्थस्य प्रस्तुतत्वेनैतल्लक्षणानालीढत्वादिति चेत् । न । अप्रस्तुतशब्देन हि मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो विवक्षितः । स च क्वचिदत्यन्ताप्रस्तुतः, क्वचित्प्रस्तुतश्चेति न कोऽपि दोषः । न च ध्वनिमात्र[2]स्याप्रस्तुतप्रशंसात्वापत्तिरिति वाच्यम् । अत एव तत्र सादृश्याद्यन्य[3]तमप्रकारेणेति विशेषणमुपात्तमिति विभावनीयम् ।

१ 'मलिनेपि' अत्र मुख्यतात्पर्यविषयीभूतः अनुरक्तायामप्यननुरागी नायकः [ यतो हि नायक एवोपालम्भविषयः, न तु मनुष्यभाषाऽनभिज्ञः तिर्यङ् भ्रमरः ] भ्रमरस्तु तदतिरिक्त इति अप्रस्तुतपदव्यपदेश्यः । अप्रस्तुतस्यास्य वृत्तान्तेन नायकवृत्तान्तः प्रख्याप्यते । सोयं भ्रमरो मुख्यतात्पर्यविषयीभूतातिरिक्ततया अप्रस्तुतोऽपि संमुखोपस्थिततया प्रस्तुतः । इति द्वयोः प्रस्तुतत्वेऽपि पूर्वोक्तविधया अप्रस्तुतप्रशंसेत्याशयः ।

२ मुख्यतात्पर्याऽविषयेण वाच्येन मुख्यतात्पर्यविषयोऽर्थो यत्र गम्यते ईदृशस्थले यद्यप्रस्तुतप्रशंसैव स्यात् [ यथा-मलिनेपि० इत्यत्र प्रतिपादितम् ] तर्हि वाच्यद्वारा व्यङ्ग्यप्रतिबोधकं सर्वं ध्वनिकाव्यमप्रस्तुतप्रशंसा स्यादिति शङ्का ।

३ ध्वनौ परिभाषितपञ्चप्रकारैः वाच्येन ( अप्रस्तुतेन ) प्रस्तुतं न प्रशस्यत इति नातिप्रसङ्ग इति तत्समाधानम् ।

एतेन 'द्वयोः प्रस्तुतत्वे प्रस्तुताङ्कुरनामान्योऽलंकारः' इति कुवलयानन्दाद्युक्तमुपेक्षणीयम्। किंचिद्वैलक्षण्यमात्रेणैवालंकारान्तरताकल्पने वाग्भङ्गीनामानन्त्यादलंकारानन्त्यप्रसङ्ग इत्यसकृदावेदितत्वात्। इदं तु बोध्यम्—अत्यन्ताप्रस्तुतस्य[1] वाच्यतायां तस्मिन्नपर्यवसितया अभिधया प्रतीयमानार्थस्य बलादाकृष्टत्वेन ध्वनित्वं न निर्बाधम्। द्वयोः प्रस्तुतत्वे तु ध्वनित्वं निर्विवादमेव। एवं सादृश्यमूलप्रकारे द्वैतम्। कार्यकारणभाव-सामान्यविशेषभावमूलास्तु चत्वारः प्रकारा गुणीभूतव्यङ्ग्यस्यैव[2] भेदाः। अभिधादिस्पर्शलेशशून्यस्य केवलागूरण[3]मात्रस्य ध्वनित्वप्रयोजकत्वात्। अथ

'आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्त।

---

माग्र्यं कात्स्न्र्ये। अत एवेत्यस्य यत इत्यादिः। **उपेक्षणीयमिति**। अत्रेदं चिन्त्यम्—अप्रस्तुतशब्देन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तो गृह्यते इत्यत्र मुख्यत्वं नाम यदि प्रस्तुतत्वं तदा तदुभयोरपि तुल्यमर्थोद्देश्यत्वम्। एवमपि प्राचामप्रस्तुतेनेति पदवैयर्थ्यापत्तिः। एतावता विशेषेणालंकारान्तरत्वानङ्गीकारे साधारणविशेषणमहिम्ना प्रस्तुतस्य स्फूर्त्या समासोक्तिः। असाधारणविशेषणमहिम्ना तत्स्फूर्तौ व्यङ्ग्यरूपकमिति त्वदुक्तविषयविभागस्याप्युच्छेदापत्तिः। दीपकगुम्फयोर्दृष्टान्तप्रतिवस्तूपमयोश्च भेदानापत्तिश्चेति। **प्रस्तुतत्वे तु ध्वनित्वमिति**। इदमपि चिन्त्यम्—'मलिनेऽपि रागपूर्णां' इत्यादौ प्रतीयमानार्थारोपमन्तरेण भ्रमरसंबोधनस्य तस्य तद्वृत्तिश्यामत्वादौ दोषा-

---

१ यथा—'नितरां नीचोऽसि' इत्यादौ अचेतनस्य कूपस्य वाच्यं सान्त्वनं नितरामप्रस्तुतम्। अत एव अभिधा तत्र न पर्यवसिता भवतीति तत्पर्यवसानार्थम् अवमानखिन्नस्य सरसहृदयस्य परगुणग्राहकस्य सुजनस्य (प्रतीयमानस्य) आकर्षो भवतीति व्यङ्ग्यस्य वाच्यवृत्त्याऽऽलिङ्गितत्वात् ध्वनित्वं न व्यपदेष्टुं शक्यम्। मलिनेऽपि रागपूर्णाम्० इत्यादौ तु भ्रमरस्याप्युपस्थिततया प्रस्तुतत्वात् अभिधायां पर्यवसितायां नायकवृत्तान्तस्य (वास्तवेन प्रस्तुतस्य) व्यञ्जनयैव प्रतीतिरिति ध्वनित्वं निर्बाधमेवेत्याशयः। ध्वनित्वे कथमलंकारेषु गणना? इत्यस्योत्तरं तु समाप्तौ ग्रन्थकृतैव दत्तम्।

२ अत्यन्ताप्रस्तुतस्य कार्यस्य कारणस्य वा, सामान्यस्य विशेषस्य वा, वाच्यतायां प्रतीयमानार्थस्य (कारणादेः) आकर्षं विना कार्यकारणोभयज्ञानसाध्या अभिधा न पर्यवसिता भवति। अत एव व्यङ्ग्यस्य अभिधाऽऽलिङ्गितत्वान्न ध्वनित्वम्, अपि तु गुणीभूतव्यङ्ग्यत्वम्।

३ ध्वननमात्रस्य (सूचनमात्रस्येति यावत्)।

संकोचमञ्चति स[1]रस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥'

अत्र क्षीण[2]राजादितदेकावलम्बपुरुषादिवृत्तान्ते प्रस्तुतेऽप्रस्तुतप्रशंसैवेति निर्विवादम्। यदा तु सरोवृत्तान्तो राजवृत्तान्तश्चेत्युभयं प्रस्तुतं तदापि प्राग[3]ुक्तदिशा सैव। यदा तु सरोवृत्तान्त एव प्रस्तुतस्तदा गुणीभूतराजवृत्तान्तरूपव्यङ्ग्येऽस्मिन्पद्ये कोऽलंकारः?। न तावदियम्। प्रस्तुतस्यैव प्रशंसनात्। नापि समासोक्तिः। तज्जीवातोर्विशेषणसाम्यस्य सकलालंकारिकसंमतस्यात्राभावात्। न च विशेषणसा[4]म्यप्रकार इव शुद्धसादृश्यमूलोऽपि तस्या एव प्रकारो वाच्यः। एकध[5]र्मालीढत्वमन्तरेणैकालंकारत्वे

देर्वाच्यस्यानुपपद्यमानतया व्यङ्ग्येनैव तदुपपत्तेश्च गुणीभूतव्यङ्ग्यताया एवौचित्यात्। प्रस्तुताङ्कुरलक्षणं तु मुख्यतात्पर्यविषयीभूतप्रस्तुतस्यातादृशेन प्रस्तुतत्वं प्रापितेन ध्वननमिति बोध्यम्। अथेति शङ्कायाम्। इयमप्रस्तुतप्रशंसा। जीवातोस्तस्यास्तादृशाप्रस्तुतप्रशंसायाः। प्रकारो भेदः। **एकधर्मालीढत्वमिति**। अत्रेदं चिन्त्यम्—अतिशयोक्त्यादिवत्, प्रकृते सादृश्याद्यन्यतमप्रकारनिवेशवच्चान्यतरहेतुकाप्रस्तुतवृत्तान्तारोपलरूपैकधर्मालीढत्वसंभवेन समासोक्तेरेवात्राङ्गीकारे बाधकाभावः। किं चाप्रस्तुतेन प्रस्तुतं प्रशस्यत इत्यस्य कोऽर्थः?। यद्युत्कर्षाधानं तर्हि प्रतीयमानार्थानध्यारोपविषयेषु दिगन्ते श्रूयन्त इत्याद्युदाहरणेष्वव्याप्तिः। नहि तादृस्थ्येन स्थितोऽप्यर्थो वाच्योत्कर्षक इति युक्तं सहृदयसंमतं वा। यदि प्रतीतिमात्रं तर्हि न प्रकृते। न ह्यत्राप्रस्तुतेन प्रस्तुतस्य प्रतीतिः। अप्रस्तुतेन प्रस्तुतार्थप्रतीतिमात्रकृत एव चमत्कार इति तन्मतेऽलं

१ सरः इति संबोधनम्।

२ धनादिक्षीणो राजादिरेव एकमात्रावलम्बनं यस्य पुरुषस्य धनादादेर्वृत्तान्ते।

३ मलिनेऽपि० इति पद्यवत्।

४ यत्र विशेषणसाम्येन ( साधारणैर्विशेषणैः ) अप्रस्तुतव्यवहारः प्रस्तुतेन व्यज्यते तत्र यथा समासोक्तिः स्वीक्रियते, तथैव सादृश्यादपि यत्र अप्रस्तुतव्यवहारः प्रतीयते तत्रापि समासोक्तिर्भवतीति स्वीकरिष्यते। ततश्च सादृश्यादप्रस्तुतप्रतीत्याऽत्र समासोक्त्यलंकारव्यपदेश इति शङ्का।

५ एकस्य ( असाधारणस्य ) धर्मस्य ( लक्षणस्य ) आलीढत्वे ( युक्तत्वे ) एकालंकारत्वं तत्तदलंकारत्वं भवति। तत्तदलंकाराणां जीवातुभूतस्य तत्तदसाधारणलक्षणस्य समन्वये एव तत्तदलंकारत्वं भवतीत्यर्थः। एतद्विनैव तत्तदलंकारत्वस्वीकारे सर्वेऽप्येकालंकारान्तर्गताः स्युः। अत एव विशेषणसाम्यं विना, सादृश्यमात्रेण न स्यात्समासोक्तिरिति समाधानम्।

सर्वेषामेकालंकारत्वापत्तेः । व्यवस्थापकैस्तद्भेदताया अनुक्तेश्च । अत एवालंकारसर्वस्वकारादिभिर्विशेषणवाचिशब्दसाम्यं संरक्ष्यैव समासान्तराश्रयेण सादृश्यमूलत्वं प्रदर्शितम्, न तु तदुपेक्ष्येति चेत् ।

उच्यते—अप्रस्तुतप्रशंसैवात्रालंकारः । अप्रस्तुतस्य प्रशंसेति न तदर्थः । किं त्वप्रस्तुतेनेति । सा चार्थात्प्रस्तुतस्यैव । एवं च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते साऽप्रस्तुतप्रशंसेति । न तु वाच्येनैव व्यङ्ग्यमेवेति । स्यादेतत् । 'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्' इत्यादाविवात्रापि निगीर्याध्यवसानेनैवोपपत्तिः शक्या कर्तुम् । तच्च पदार्थेन पदार्थस्य, वाक्यार्थेन वाक्यार्थस्य वा इत्यन्यदेतत् । अन्वयानुपपत्तिरपि लक्षणाबीजम् । एवं चातिशयोक्त्यैवोपपत्तौ किं सादृश्यमूलाप्रस्तुतप्रशंसयेति ! ननु निगीर्याध्यवसानं हि न तावदत्र संभवति । तत्र हि वाच्यतावच्छेदकरूपेण लक्ष्यस्य प्रतीतिः, इह तु वाच्यताटस्थ्येनार्थान्तरस्येति विशेषात् ।

---

कारान्तरता सूपपादेति । व्यक्तेन व्यञ्जेन । तच्च निगीर्याध्यवसानं च । अन्वयानुपपत्तेर्लक्षणाबीजस्यात्राभावादाह—**अन्वयेति** । **किं सादृश्येति** । अत्रायं समाधिः—वाक्ये शक्त्यभावेन लक्षणा वक्तुमशक्या । किं च लक्षणायां गङ्गायां घोष इत्यादाविव वाच्याभेदप्रतीत्यापत्तिः । सा चानिष्टा । ताटस्थ्येनैव प्रस्तुतार्थप्रतीतेः सहृदयानुभवसिद्धत्वात् । तृतीयस्य लक्षणाहेतोरभावादिति शङ्कां द्रढयितुं शङ्कते—**नन्विति** । तत्र हि रूपकातिशयोक्त्युदाहरणे कमलमित्यादौ हि । इह तु अप्रस्तुतप्रशंसोदाहरणविशेषे प्रागुक्ते ।

१ शुद्धसादृश्यमूलस्य प्रकारस्य तद्भेदतायाः समासोक्तिभेदताया अनुक्तेरित्यर्थः ।

२ आपेदिरे० अत्र व्यक्तेन अप्रस्तुतेन राजवृत्तान्तेन वाच्यं प्रस्तुतम् (सरोवृत्तान्तः) प्रशस्यते इत्यर्थः ।

३ अत्र सरोविषयकवाक्यार्थेन (विषयिणा) राजविषयकवाक्यार्थः (विषयः) निगीर्णः अभिन्नतयाऽध्यवसित इत्यर्थः ।

४ क्षीणराजैकावलम्बं पुरुषं हृदि कृत्वा, मुख्यतात्पर्यविषयत्वात्संमुखोपस्थिततया प्रस्तुतस्य सरोमात्रावलम्बनस्य मीनस्य वृत्तान्तोऽत्र प्रस्तूयते । ततश्च राजवृत्तान्तस्य सरोवृत्तान्तस्य च परस्परमन्वयो नोपपद्यत इत्यर्थः ।

५ कमलमनम्भसि० अत्र कमल-कुवलय-कनकलतादीनि मुख-नयन-नायिकाद्यभिन्नतया प्रतीयन्ते । अत्र तु वाच्यात् (सरोवृत्तान्तात्) व्यङ्ग्यस्य (राजरूपार्थान्तरस्य) ताटस्थ्यम्, अर्थात् सरोवृत्तान्तः पृथक्, राजवृत्तान्तः पृथगिति विशेष इत्यर्थः ।

यत्र तु श्लेषादिना विशेषणसाम्यं तत्र तन्माहात्म्यादस्तु नामाभेदाध्यवसाय इति चेत्, इहापि वाच्यव्यवहाराभिन्नतयैव च प्रस्तुतव्यवहारप्रत्यय इत्यवैलक्षण्यमेवेति सत्यम्। 'यस्मिन्खेलति', 'दिगन्ते श्रूयन्ते' इत्यादौ वाच्यार्थताटस्थ्येनैव व्यङ्ग्यस्य प्रतीतेः सर्वसहृदयसंमतत्वात्। क्वचित्तु संबोधनस्य तत्तद्विशेषणस्य चानुपपत्त्या अभेदांशोऽप्यपेक्ष्यते, न तावता सर्वत्राभेदेन प्रतीतिः। किं चाप्रस्तुतप्रशंसायां प्रस्तुतं व्यङ्ग्यमिति निर्विवादम्। निगीर्याध्यवसाने तु लक्ष्यं स्यात्। अपि च यत्र वाच्यस्यात्यन्ताप्रस्तुतत्वं तत्राभिधाया अपर्यवसानात्स्यादपि कदाचिल्लक्षणाया अवकाशः। यदा तु द्वयोरप्यर्थयोः प्रागुक्तदिशा प्रस्तुतत्वं तदा तु बाधलेशास्फुरणाल्लक्षणागन्धोऽपि नास्ति। कुतः पुनर्निगरणं लक्षणैकदेशः? किं त्वागूरणमेवेति। तत्राप्रस्तुतप्रशंसायाः सादृश्यमूलाया आवश्यकत्वादन्यत्रापि तज्जातीयस्थले सैवोचिता। यदि तु प्रकारस्यास्य ध्वनिप्रभेदत्वात् ध्वनेश्चालंकार्यस्यालंकारत्वानुपपत्तिरिति सूक्ष्ममीक्ष्यते, तदाप्रस्तुतप्रशंसाया भेदान्तरमेव विषय इत्यपि वदन्ति।

इति रसगङ्गाधरेऽप्रस्तुतप्रशंसाप्रकरणम्।

---

**भेदान्तरमेवेति**। सादृश्यमूलातिरिक्तभेदा एवेत्यर्थः। वस्तुतस्तु प्रागुक्तमेवेतीदमयुक्तमित्यरुचिर्वदन्तीत्यनेन सूचिता॥ इति रसगङ्गाधरमर्मप्रकाशेऽप्रस्तुतप्रशंसाप्रकरणम्॥

---

१ यस्यामप्रस्तुतप्रशंसायां श्लिष्टानि विशेषणानि, यथा नितरां नीचोस्मि० इति पद्ये; अत्र द्वयोरभेदाध्यवसायः संभवेत्। यत्र तु न तथा, तत्र ताटस्थ्यमेवेत्यर्थः।

२ वाच्यो यः सरोव्यवहारः तदभिन्नतया प्रस्तुतस्य हृदये मुख्यतात्पर्यविषयीभूततया प्रस्तुतस्य राजव्यवहारस्य प्रत्यय इत्याशयो यथाकथंचिदुपपाद्यः। अन्यथा राजवृत्तान्तः प्रस्तुतपदेन नात्र शक्यो व्यपदेष्टुम्। "यदा तु सरोवृत्तान्त एव प्रस्तुतस्तदा···कोऽलंकारः" इति पूर्वपक्षमुखभागे सरोवृत्तान्तमात्रस्यैव प्रस्तुतत्वोक्तेः।

३ अतिशयोक्त्यैव अर्थोपपत्तिः, अप्रस्तुतप्रशंसया किं फलमिति पूर्वपक्षः एतावद्ग्रन्थान्तम्।

४ यथा—मलिनेपि० इत्यादौ।

५ अतिशयोक्तौ विषयिवाचकपदस्य विषयार्थे लक्षणेति स्वीकारात्।

६ पूर्वपक्षमुखभागे 'यदा तु सरोवृत्तान्त एव प्रस्तुत०' इत्येवकारेण राजवृत्तान्तस्य प्रस्तुतत्वं निरस्तम्। अत्र तु मलिनेऽपि इतिवत् द्वयोरपि प्रस्तुतत्वं स्वीक्रियत इति विशेषः।

७ 'पुरा यत्र स्रोतः' इत्यादौ। ततश्च 'पुरा यत्र स्रोत०' इत्यत्र कोऽलंकार इत्यस्य अप्रस्तुतप्रशंसाप्रसङ्गे उत्तरदानप्रतिज्ञाऽत्र निरूढेति ज्ञेयम्।

८ सादृश्यमूलातः अन्ये कार्यकारणभावमूलादय इत्यर्थः।

अथ पर्यायोक्तम्—

**विवक्षितस्यार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम्।**

येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तः प्रकारो भङ्ग्यन्तरम्। आक्षेपो वा। यथा—

'त्वां सुन्दरीनिवहनिष्ठुरधैर्यगर्व-
निर्वासनैकचतुरं समरे निरीक्ष्य।
केषामरिक्षितिभृतां नवराज्यलक्ष्मीः
स्वामिव्रतात्वमपरिस्खलितं बभार॥'

अत्र सर्वापि शत्रूणां राज्यसंपत्त्वां प्राप्तेति विवक्षितोऽर्थो न तद्रूपेणाभिहितः, अपि तु स्खलितपातिव्रत्या बभूवेत्याकारेण।

यथा वा—

'सूर्याचन्द्रमसौ यस्य वासो रञ्जयतः करैः।
अङ्गरागं सृजत्यग्निस्तं वन्दे परमेश्वरम्॥'

अत्रापि गगनाम्बर इति सूर्यचन्द्रकररज्यमानवस्त्र इत्याकारेण, भस्माङ्गराग इत्यग्निसृज्यमानाङ्गराग इत्याकारेण च निरूपितः।

'अस्यां च गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेण वाच्यता। तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्रेति प्राचीनैर्निर्मितं लक्षणं व्यङ्ग्यत्ववाच्यत्वयोर्विरोधादसंगतमिति नाशङ्कनीयम्। एकस्यैव

**विवक्षितार्थस्य भङ्ग्यन्तरेणेति।** केनचिद्रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतररूपेण यदभिधया प्रतिपादनं तत्पर्यायोक्तमित्यर्थः। मम्मटमतमाह—

१ व्यञ्जनाद्वारा येन रूपेण अर्थो विवक्षितः (प्रतिपादयितुमिष्टः) तस्माद्रूपादतिरिक्तेन चारुतरेण रूपेण (प्रकारेण) आक्षेपेण वा प्रतिपादनम् (अभिधया कथनम्) पर्यायोक्तम्। यथा सर्वापि शत्रूणां संपत्त्वां प्राप्ता इत्येवंरूपेण व्यञ्जनया प्रतिपादयितुमिष्टोऽर्थः तथा नोक्तः। किन्तु तस्मात् (व्यञ्जनापरिगृहीतात्) रूपात् अतिरिक्तेन अभिधाद्वारा प्रोक्तम्—'सुन्दरं त्वां वीक्ष्य राज्यलक्ष्मीः स्खलितपातिव्रत्या बभूव' इति।

२ 'पर्यायेण उक्तं व्यङ्ग्यं यत्र' इति हि स्पष्टमसंगतम्। यद्धि उक्तम् (अर्थात् अभिधया प्रतिपादितम्) तद् व्यङ्ग्यं कथम्? व्यङ्ग्यस्यार्थस्य अभिधया अप्रतिपाद्यत्वात्। इति शङ्का।

प्रकारभेदेन वाच्यत्वव्यङ्ग्यत्वयोरविरोधात्। यथा यावकमहारजनदाडिमीजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न तु वाच्यत्वम्, एवमिहापि' इति मम्मटभट्टाः ।

अलंकारसर्वस्वकारस्तु—'गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् । गम्यस्यैव सतः कथमभिधानमिति चेत्, कार्यादिद्वारेण' इत्याह । तस्यायमाशयः—

'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥'

इति प्राचीनपद्ये राहुशिरश्छेदकारीति व्यङ्ग्यं राहुवधूजनसंबन्धिचुम्बनमात्रावशिष्टरतोत्सवनिर्मातृत्वेन रूपेण प्रकारान्तरेणाभिधीयत इत्यस्यापि विवेचने क्रियमाणे राहुशिरश्छेदकर्तृत्वरूपो धर्मः स्वसमानाधिकरणेन तादृशरूपान्तरेण साक्षादुपात्तेन गम्यत इत्येव पर्यवस्यति । भगवतस्तु पूर्वप्रक्रान्तत्वाद्यच्छब्देनाभिहितत्वाच्च न व्यङ्ग्यत्वम् ।

एवम्—

'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥'

---

१ यद् व्यङ्ग्यं तद् वाच्यं न भवतीति वाच्यत्व-व्यङ्ग्यत्वयोः परस्परं स्यात्स्वरूपतो भेदः । परम् एकस्यैवार्थस्य एकेन प्रकारेण वाच्यत्वम्, तद्भिन्नेन प्रकारेण व्यङ्ग्यत्वं संभवति । यथा-यावक( अलक्तक )महारजन( कुसुम्भ )-दाडिमी-जपाकुसुमानां रूपं रक्तमिति शब्देन वयं वदामः । परं सूक्ष्मेक्षिकया एतेषां रूपे ( रक्तिमनि ) स्पष्टं वैजात्यम् ( यादृशं रक्तं रूपं यावकस्य न तादृशं कुसुम्भस्य ) पश्यामः । किन्तु तत्पश्याम एव । रक्तं रूपं नास्तीति वक्तुं न प्रभवामः । ततश्च दर्शने एतेषां वैजात्यरूपः प्रकारः । कथने च 'रक्तं रूपम्' इति सर्वेषामेकरूपो भिन्नः प्रकारः । एवमेव एकस्यैव वस्तुनः प्रकारभेदेन वाच्यत्वं व्यङ्ग्यत्वं च संभवतीति दृष्टान्ताशयः । पूर्वशङ्कायाः समाधानम् ।

२ भगवान् राहुशिरश्छेदकारीति राहुशिरश्छेदकर्तृत्वं यद् व्यङ्ग्यमासीत् तत् स्वस्य ( शिरश्छेदकर्तृत्वस्य ) समानाधिकरणेन ( एकाधिकरणवासिना, सहवासिना ) साक्षादुपात्तेन ( चुम्बनमात्रशेषं चकार इत्यनेन ) गम्यते अर्थात् अभिधया कथ्यते ।

इति प्राचीनपद्येऽपि शक्रैरावणौ मानमदमुक्तौ जाताविति व्यङ्ग्यमपि मानमदमोकमात्रस्य व्यङ्ग्यत्वे पर्यवस्यति, धर्म्यंशस्याभिधागोचरत्वात् । एवं च यो व्यङ्ग्यांशः स न कदापि रूपान्तरपुरस्कारेणाभिधीयते, यश्चाभिधीयते धर्मी स तु तदानीमभिधाश्रयत्वाद्व्यञ्जनव्यापारानाश्रय एवेति व्यङ्ग्यस्य प्रकारान्तरेणाभिधानमसंगतमेव । तस्मात्कार्यादिमुखेनोक्तमिव पर्यायोक्तम् । तेनाक्षिप्तमित्येवार्थः । प्राचीनैर्धर्मिणोऽपि यद्व्यङ्ग्यत्वमुक्तं तद्वैयञ्जनिकबोधविषयस्य समस्तवाक्यार्थस्यैव व्यङ्ग्यत्वमित्यभिप्रायेण । तत्र च विवेके क्रियमाणे केचिदभिधामात्रस्य गोचराः पदार्थाः, केचिच्च व्यक्तिमात्रगोचरा इति ।

अभिनवगुप्तपादाचार्यास्तु—'पर्यायेण वाच्यादतिरिक्तप्रकारेण व्यङ्ग्ये-

**अस्यां चेति** । पर्यायोक्तौ चेत्यर्थः । हरिरिन्द्र इत्याह—**शक्रैरेति । प्रकारान्तरेणाभिधानमसंगतमेवेति** । अत्राहुः—औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत्तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदाद्व्यङ्ग्यस्याभिधाविषयत्वमस्त्येव ।

१ धर्मिणौ यौ इन्द्रैरावणौ तौ तु श्लोके अभिधया प्रोक्तावेव, अतो धर्मस्य मान-मदमोचनमात्रस्य व्यङ्ग्यत्वम् ।

२ राहुशिरश्छेदकर्तृत्वम् (कारणम्) [ यद्धि व्यङ्ग्यमस्ति ], राहुवधूसंबन्धिना चुम्बनमात्रावशिष्टरतोत्सवरूपकार्येण गम्यते अभिधया कथ्यते इत्यर्थः । अयं भावः—कारणमत्र व्यङ्ग्यमेव । परं तस्य कार्यम् अभिधया प्रोक्तमिति स व्यङ्ग्यः कार्यद्वारा उच्यत इत्याशयः ।

३ सर्वस्वकारमतस्यायं निष्कर्षः—यो गम्यः (व्यङ्ग्यः) तस्य कथनं कथं संभवति? ततश्च भङ्ग्यन्तरेण प्रकारान्तरेण धर्मादिद्वारेण तस्याभिधानमिति तस्यार्थः । यथा हि राहुवधूशिरश्छेदकर्तृत्वम् (कारणम्) व्यङ्ग्यमस्ति परं तस्य विशिष्ट(चुम्बनमात्रशेष)रतोत्सवरूपकार्यद्वारा अभिधानं कृतमिति पर्यायोक्तलक्षणस्य समन्वयः । धर्मिणोत्र व्यङ्ग्यत्वं नास्ति, स तु सर्वत्र वाच्यः [ 'चक्राभिघात०' इत्यत्र 'यः' इति पदेन अभिधया प्रोक्तः । 'यं प्रेक्ष्य०' इत्यत्र च हर्यैरावणौ इति शब्देन प्रोक्तः ] । प्राचीनैः समस्तस्यापि वाक्यार्थस्य व्यञ्जनाबोधविषयत्वमभिप्रेत्य वाक्यार्थान्तर्गतस्य धर्मिणोपि व्यङ्ग्यत्वमुक्तम् । अन्यथा अस्मिन् वाक्यार्थे धर्मी पदार्थः अभिधामात्रगोचरः, तदितराणि कार्यादीनि व्यञ्जनामात्रगोचरा इति ।

नोपलक्षितंमुक्तमभिहितं पर्यायोक्तम्' इति योगार्थं लक्षणं चाहुः। तेषामयमाशयः—यदि पर्यायशब्देन प्रकारान्तरं धर्मान्तरमुच्यते तदा विवक्षितार्थतावच्छेदकातिरिक्तधर्मपुरस्कारेणाभिहितमिति योगार्थः स्यात्। तथा च 'दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः' इत्यादौ रामत्वातिरिक्तधर्मपुरस्कारेण रामस्यैवाभिधानात्पर्यायोक्तप्रसङ्गः। न च व्यङ्ग्यं यत्र तेन प्रकारेणोक्तं तत्पर्यायोक्तमिति वाच्यम्। व्यङ्ग्यस्य योगार्थानन्तर्गतत्वात्। न च योगार्थानन्तर्गतत्वेऽपि लक्षणान्तर्गतत्वं तस्येति वाच्यम्। एवं तर्हि व्यङ्ग्यस्य लक्षणप्रवेशावश्यकत्वे पर्यायशब्देन व्यङ्ग्यस्यैव ग्रहीतुमुचितत्वात्। व्यङ्ग्येन ह्युपलक्षित-

यद्वा व्यङ्ग्यतावच्छेदकापेक्षया वाच्यतावच्छेदकं यत्र चारुतरमिति लक्षणतात्पर्यम्। प्राणाप्राणविवेकेन तथैव तात्पर्योन्नयनादिति। अतिरिक्तप्रकारेणेत्यस्य व्याख्या व्यङ्ग्येनेति। **न च व्यङ्ग्यं यत्र तेनेति**। व्यञ्जनावच्छेदकातिरिक्तधर्मपुरस्कारेण वाच्यमित्यर्थः। प्रकृते च पुण्डरीकाक्षपदस्य भगवति योगरूढत्वेन तस्य न व्यङ्ग्यत्वमिति भावः। **व्यङ्ग्यस्यैव ग्रहीतुमुचितत्वादिति**। सर्वस्वकृदाशयवर्णनावसरो-

१ पर्यायेण (उपलक्षितं सत्) उक्तं पर्यायोक्तम्। पर्यायेण प्रकारान्तरेण [ विवक्षितप्रकारात् अभिधाव्यापारादन्येन व्यङ्ग्येन ] उपलक्षितम् (विशिष्टम्) सत् यत् उक्तं कथनम्। यथा-दशवदन० इत्यत्र वाच्योऽर्थः (रामः) विवक्षितप्रकारात् अभिधाजनितात् रामस्वरूपात् भिन्नेन व्यङ्ग्येन [ रामः पुण्डरीकाक्षः साक्षाद्विष्णुः इत्यनेन ] उपलक्षितः सन् अभिहितः। व्यङ्ग्योपलक्षितस्य वाच्यस्याभिधानं पर्यायोक्तमिति सारम्। एवं च्चात्र उक्तम् (अभिधानम्) वाच्यस्यैव गृह्यते किन्तु तद् व्यङ्ग्योपलक्षितस्येति निर्गलितार्थः।

२ ननु पर्यायेण प्रकारान्तरेण [ व्यञ्जनाव्यापारादतिरिक्तेन अभिधाव्यापारेण ] उक्तम् [ अर्थात् व्यङ्ग्यम् ] यत्रेत्यर्थं कृत्वा 'व्यङ्ग्यस्य भङ्ग्यन्तरेण वाच्यता यत्र' इति लक्षणमस्तु, इति शङ्का। 'पर्यायेण [ विवक्षितप्रकारादन्येन प्रकारेण ] उक्तम्' इति योगलभ्ये अर्थे 'उक्त'-पदेन व्यङ्ग्यस्य अर्थो नोपलभ्यते, अपि तु 'वच' धातुना वाच्यस्यैवार्थः समुचितः इति समाधानम्।

३ यदि लक्षणे व्यङ्ग्यस्य प्रवेश इष्टस्तर्हि पर्यायशब्देन तत्संग्रहं कृत्वा 'पर्यायेण [ प्रकारान्तरेण अर्थात् व्यङ्ग्येन (उपलक्षितम्) ] उक्तम्' इत्यस्मदर्शितः पूर्वोक्तार्थ एव समुचित इत्याशयः।

मुक्तं प्रकारान्तरेणैव भवतीति प्रकारान्तरग्रहणं नात्यावश्यकमिति । अत एवास्माभिराक्षेपो वेति पक्षान्तरमप्युक्तम् । इदं पुनरवशिष्यते—'वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इति सकलप्रसिद्धध्वन्युदाहरणेऽधमनिकटगमननिषेधरूपेण तन्निकटगमनविशिष्टायाः, अधमत्वेन रूपेण वा दूतीसंभोगकर्तुरभिधानात्पर्यायोक्तप्रसंगः प्राचीनपक्ष इवास्मिन्नपि पक्षे[2] भवति । स च व्यङ्ग्यविशेषग्रहणेन[3] तैरिवैतैरपि निरसनीयः । मध्यस्थपक्षे तु नेदमपि दूषणम्[4] ।

तदेवं पक्षाणां निष्कर्षे स्थिते यदस्मिन्प्रकरणे कुवलयानन्दकारेणोक्तं तत्सर्वमविचारितरमणीयमेव । तथा हि यत्तावदुच्यते—"'नमस्तस्मै कृतौ येन मुधा राहुवधूस्तनौ' । अत्र भगवान्वासुदेवः स्वासाधारणरूपेण गम्यो राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेणाभिहितः" इति, तन्न । अत्र हि

---

क्तानुपपत्तिपरिहारायेत्यर्थः । **व्यङ्ग्येन ह्युपलक्षितमिति** । अन्यत्र हि वाच्यं केवलमेव प्रतीयते । तदपेक्षयेदं प्रकारान्तरं यन्नियतव्यङ्ग्यवैशिष्ट्यमित्यर्थः । प्राचीनपक्षे मम्मटोक्तपक्षे । अस्मिन्नपि पक्षे अभिनवगुप्तोक्तपक्षे । **तैरिवैतैरपीति** । विशेषश्च वक्तृवैशिष्ट्यादिसहकारिकारणानपेक्षत्वम् । किं च तत्र व्यङ्ग्यापेक्षया वाच्ये चारुतर-

१ 'व्यङ्ग्येन ( उपलक्षितम् ) उक्तम् पर्यायोक्तम्' इत्यर्थे पर्यायशब्दग्रहणस्य न स्वारस्यम् । अत एव लक्षणे लक्षितं द्वितीयपक्षमुत्थापयति–'अस्माभिः आक्षेपो वेति पक्षान्तरमप्युक्तमिति' । विवक्षितस्यार्थस्य आक्षेपेण प्रतिपादनं पर्यायोक्तम्, अर्थात्, व्यङ्ग्यस्याक्षेपं कृत्वा स्वाभीष्टार्थस्य परिष्करणमित्याशयः ।

२ मम्मटमते अभिनवगुप्तमते च 'निःशेषच्युत०' इति ध्वन्युदाहरणे पर्यायोक्तस्य अतिप्रसङ्गः स्यात्, तथा च ध्वनेरपि गुणीभूतव्यङ्ग्यत्वं मध्यमकाव्यत्वं स्यात् । यतः नायकनिकटगमनविशिष्टाया अपि दूत्याः भङ्ग्यन्तरेण निषेधरूपेण अभिधानम्, अथवा दूतीसंभोगकर्तुः नायकस्य भङ्ग्यन्तरेण अधमत्वेन रूपेण अभिधानमस्ति, इति मम्मटमते—तस्याधमस्यान्तिकं न गतासीति निषिद्धनिकटगमनाया अपि 'तस्यान्तिकं रन्तुं गतासि' इति व्यङ्ग्योपलक्षितमभिधानम्, इति अभिनवगुप्तमते च अतिप्रसङ्गः, इति शङ्का ।

३ पर्यायोक्ते यादृशो व्यङ्ग्यो विवक्षितस्तदपेक्षया निःशेषेतिपद्ये व्यङ्ग्यो विलक्षण इति कृत्वा नात्र तदतिप्रसङ्ग इति समाधानाशयः ।

४ सर्वस्वकारमते कार्यादिद्वारा गम्यस्याभिधानमिति तथात्वाभावान्नातिप्रसङ्ग इत्याशयः ।

राहुवधूकुचौ येन मुधा कृतावित्यभिहितेन राहुवधूकुचवैयर्थ्यकारित्वेन राहुशिरश्छेदकारित्वं व्यज्यत इति तावन्निर्विवादम्। भगवद्वासुदेवत्वं तु विशेषणमर्यादालभ्यं न काव्यमार्गीयव्यङ्ग्यकक्षामारोढुं प्रभवति। अन्यथा 'नमो राहुशिरश्छेदकारिणे दुःखहारिणे' इत्यत्रापि भगवद्वासुदेवत्वव्यङ्ग्यताप्रयुक्तं[1] पर्यायोक्तमलंकारः स्यात्। विशेषणमर्यादालभ्यस्य च धर्मस्य किंचिद्व्यङ्ग्यतास्पर्शः सन्नपि न स काव्यमार्गे गण्यते। असुन्दरत्वात्। अन्विताभिधाने अतिविशेषवपुष इव सामान्यरूपाणां पदार्थानामन्वये[2]। किं च 'राहुस्त्रीकुचनैष्फल्यकारिणे[3] हरये नमः' इत्यत्र भगवतः स्वशब्देनाभिधेयस्य स्वासाधारणरूपेणाप्यगम्यत्वाद्राहुशिरश्छेदका-

रित्वस्य सहृदयसंमतत्वेनाक्षतेः। व्यङ्ग्यमेव हि तत्र वाच्याद्यात। मध्यस्थपक्षे अलंकारसर्वस्वकृदुक्ते प्रकृते। अन्यथा नमो राहुशिरश्छेदेति। चिन्त्यमिदम्। व्यङ्ग्यापेक्षया चमत्कारित्वे इष्टापत्तेः। अतत्त्वे तु चामत्तरेण विशेषणेन व्यावृत्तेः। नासौ काव्यमार्गे गण्यत इति राजाज्ञामात्रमेतत्। मदेनेरावणमुखे इत्यादिप्रकाशोदा-

१ 'राहुशिरश्छेदकारिणे' इति विशेषणेन भगवद्वासुदेवत्वं व्यज्यते (यतो हि राहुशिरश्छेदकारी वासुदेवः), किंत्वेतस्य व्यङ्ग्यकक्षाऽनधिरोहान्न पर्यायोक्तत्वम्।

२ अन्विताभिधानवादिनो मते—अपरपदार्थान्विताऽऽनयनत्वादिसाधारणधर्मेण सामान्यरूपाणाम् आनयनादिपदार्थानां गवादिना अन्वये, अपरपदार्थान्वितानयनादेः अगत्या गवाद्यन्वितानयनादिविशेषरूपोऽर्थः कदाचित् स्यात्, किन्तु गवानयनत्वादिना गवानयनादिरूपोऽतिविशेषभूतोऽर्थस्तु असंकेतितत्वादवाच्य एव भवति। ततश्च अतिविशेषवपुषः (वाक्यगम्यस्य गवानयनादिरूपस्यार्थस्य) व्यङ्ग्यतास्पर्शः सन्नपि असुन्दरत्वात् यथा काव्यमार्गे न गण्यते तथात्रापीति दृष्टान्ताशयः। उक्तं काव्यप्रकाशे (पञ्चमोल्लासे) "तेषामपि मते सामान्यविशेषरूपः पदार्थः संकेतविषयः इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते"।

३ अत्र पर्यायोक्तं सर्वस्यापि संमतम्। परं भगवांस्तु स्व (हरि) शब्देनैव वाच्यो जातः। अत एव स्वस्य असाधारणरूपेण तु सः अगम्य एव। ततश्च पर्यायोक्तत्वसिद्धये राहुशिरश्छेदकारित्वेन रूपेणैव तस्य व्यङ्ग्यत्वं वक्तव्यं स्यात् [ एवं च स्वासाधारणरूपेण गम्य इति दीक्षितोक्तिरसंगतेत्याशयः ]।

रित्वेनैव व्यङ्ग्यत्वमेष्टव्यम्, न स्वासाधारणधर्मरूपेण । न चात्र पर्यायोक्तं नास्तीति कस्यापि संमतम् । यदप्युक्तम् 'सर्वस्वकारस्य लोचनकर्तुश्च सर्वोऽप्ययं क्लेशः किमिति न विद्मः' इति, तत्र यदर्थं तेषां क्लेशस्तत्तु तन्मतनिष्कर्षावसर एव निरूपितम् । यदप्युक्तम् "-'चक्राभिघातप्रसभाज्ञया—' इति प्राचीनोदाहरणे यद्राहुशिरश्छेदावगमनं तत्र प्रागुक्तरीत्या प्रस्तुताङ्कुरे[2] एव । यत्तु प्रस्तुतेन राहोः शिरोमात्रावशेषेणालिङ्गनवन्ध्यत्वाद्यापादनरूपे[3] वाच्ये भगवतो रूपान्तरे उपपादिते भगवद्रूपेणावगमनं तत्पर्यायोक्तस्य विषयः" इति, तदपि न । यदि राहुशिरश्छेदावगमनं त्वत्कल्पितस्य प्रस्तुताङ्कुरस्य विषयः स्यात्तदा किं पर्यायोक्तेन? भगवद्रूपेणावगमनं तु विशेषणमर्यादालभ्यत्वेनासुन्दरम् 'नमो राहुशिरश्छेदकारिणे' इत्यादाविव न कस्याप्यलंकारस्य विषय इत्युक्तमेव[1] ।

हरणे तादृशव्यङ्ग्यस्यैव सत्त्वाच्च । न च नहि । चक्राभिघातमिति णमुलन्तम् । चक्रमभिहत्येत्यर्थः । यत्त्विव्यस्यावगमनेऽन्वयः । असुन्दरमिति । चिन्त्यमिदम् । इष्टापत्तेः । व्यङ्ग्यसौन्दर्यस्याविवक्षितत्वात् व्यङ्ग्यापेक्षया वाच्यस्यैवात्र चारुतरत्वमिति स्पष्टं तदुक्तेः । अत्रैवालंकारे व्यङ्ग्यं नान्यपरमिति ध्वनिकृतः । तादृशविशेषणं हि व्यङ्ग्यमादायैवोपपद्यत इति तदाशयः । 'राहुस्त्रीकुचवैफल्यकारिणे हरये नमः' इत्यत्र राहुशिरश्छे-

१ अत्रालंकारचन्द्रिकाकृतं समाधानमपि वीक्षणीयम्—'यत्तु भगवद्रूपेणावगमनं विशेषणमर्यादालभ्यत्वेनासुन्दरं न पर्यायोक्तस्य विषय इति तदविचारितरमणीयम् । न हि पर्यायोक्ते व्यङ्ग्यसौन्दर्यकृतो विच्छित्तिविशेषः किं तु भङ्ग्यन्तराभिधानकृत एव । व्यङ्ग्यं तु भङ्ग्यन्तराभिधानेनासुन्दरमेव प्रायशो दृश्यते । यथा द्वारान्तस्थमिति विवक्षिते व्यङ्ग्ये अयं देशोऽलंकरणीयः, सफलतामुपनेतव्य इत्यादौ । [illegible]सुन्दरत्वोद्भावनमकिंचित्करमेव । अलंकारसर्वस्वकारग्रन्थविरोधोद्भावनं तु नातिप्रयोजनं [illegible] न शोभते । उपजीव्यत्वोद्भावनमपि [illegible]किंचित्करमेव । श्रुतिविरोध इति परोत्कर्षासहिष्णुत्वमात्रमुद्रा[illegible]तीत्यलं विस्तरेण ।'

२ प्रस्तुतेन नारीरतोत्सवरूपेण कार्येण प्रस्तुतस्य राहुशिरश्छेदरूपकारणस्य द्योतनात् ।

३ शिरोमात्रावशेषतया अधःकायाभावादालिङ्गनवन्ध्यत्वं [illegible]वर्णितम् 'येन राहुस्त्रीजनस्य रतोत्सव एतादृशः कृतः' इति भगवतो रूपान्तरे वर्णिते, तेन (रूपान्तरेण) च भगवतः स्वरूपेण यत् अवगमनं व्यञ्जनं तत्पर्यायोक्तस्य विषयः । अर्थात् व्यञ्जनया गम्यस्य भगवत्स्वरूपस्य 'यो राहुस्त्रीरतोत्सवं चुम्बनमात्रशेषमकार्षीत्' इति व्यङ्ग्यापेक्षयापि चारुतरेण प्रकारान्तरेणाभिधानात्पर्यायोक्तस्य विषय इति ।

प्रस्तुताङ्कुरस्य प्राचीनैरस्वीकाराच्च। स्वीकारे वा प्रस्तुतेन स्वसदृशो[1] वाक्यार्थः प्रस्तुत एव यत्र व्यज्यते, स तस्य विषयोऽस्तु। न तु कार्येण प्रस्तुतेन कारणावगमनम्। अन्यथा 'ह्यप्रस्तुतेन कार्येण प्रस्तुतकारणावगमने अप्रस्तुतप्रशंसैव। प्रस्तुतेन कार्येण प्रस्तुतस्यैव कारणस्यावगमनं तु पर्यायोक्तस्य विषयः' इत्यलंकारसर्वस्वकारादिभिः प्राचीनैः कृतो विषयविभाग उच्छिन्न एव स्यात्। 'राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यते। एवमन्यत्रापि पर्यायोक्तं ज्ञेयम्' इति त्वदुपजीव्यग्रन्थविरोधाच्च। तस्मादत्र राहुशिरश्छेदकारित्वेनावगमः पर्यायोक्तस्य विषयः, न तु भगवद्रूपेणेति सहृदयैराकलनीयम्।

अस्मिंश्चालंकारे व्यङ्ग्यं वाच्यपरम्। अप्रस्तुतप्रशंसायां तु वाच्यं व्यङ्ग्यपरम्। तेनायमलंकारो वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यभेद इति ध्वनिकारानुयायिनः।

यत्तु—

"'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धेव सा द्विधा॥'

इत्युक्तयुक्त्या लक्षणाद्वयाश्रितत्वादनयोरवान्तरोऽपि विषयभेदोऽस्ति" इति

---

द्रूपकारणमात्रावगमने प्रस्तुताङ्कुरः। राहुशिरश्छेदकारित्वेन भगवतोऽवगमने पर्यायोक्तमपि। एतेन नम इत्याद्यग्रिममपि प्रस्तुताङ्कुराभावप्रतिपादकमपास्तम्। राजाज्ञामात्रत्वात्। किं च मुख्यार्थतात्पर्यविषयीभूतार्थेन वाच्येन व्यङ्ग्येन वा वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते साप्रस्तुतप्रशंसेत्यप्रस्तुतप्रशंसालक्षणस्य भवतानुपदोक्तस्य राहुशिरश्छेदकारित्वरूपव्यङ्ग्यांशे सत्त्वेनाप्रस्तुतप्रशंसयैव निर्वाहे किं पर्यायोक्तेनेति नियोगे उत्तरं विभाव्यताम्। न चात्र द्वयोरपि मुख्यतात्पर्यविषयतेति वाच्यम्। एवं तर्हि 'आपेदिरेऽम्बरपथं' इत्यत्रापि यदा द्वयोर्मुख्यतात्पर्यविषयता तदा कोऽलंकार इत्यत्रोत्तरं विभाव्यताम्। अस्मन्मते तु प्रस्तुताङ्कुर एव। भवतापि तत्स्वीकारे प्रकृते तेनैव गतार्थता स्पष्टैव। न चास्मिन्नलंकारे व्यङ्ग्यं वाच्यपरमप्रस्तुतप्रशंसायां तु वाच्यं व्यङ्ग्यपरमतः सा नेति वाच्यम्। 'कस्त्वं भोः—' इत्यादावप्रस्तुतप्रशं-

---

१ स्वसदृशः समानस्वरूपः, न तु कार्येण कारणावगमस्वरूपः।

स्वमूलग्रन्थाशयं वर्णयता विमर्शिनीकारेणोक्तम्, तन्न। नहि 'चक्राभिघातप्रसभाज्ञयैव—' इति पद्ये चुम्बनमात्रशेषरतोत्सवांशे बाधोऽस्ति, येन लक्षणा स्यात्। एवमप्रस्तुतप्रशंसायामप्यप्रस्तुतस्य प्रस्तुते न लक्षणा, किं तु व्यञ्जनैवेति सर्वसंमतम्। अन्[1]यथा पर्यायोक्ते वाच्यस्य प्राधान्यम्, अप्रस्तुतप्रशंसायां तु गम्यस्येति सिद्धान्तस्य भङ्गः स्यात्। लक्षणायां हि लक्ष्यस्यैव प्राधान्यं स्यात्, न वाच्यस्य। 'यत्र वाच्योऽर्थोऽर्थान्तरं स्वोपस्कारकत्वेनागूरयति तत्र पर्यायोक्तम्। यत्र स्वात्मानमेवाप्रस्तुतत्वात्प्रस्तुतमर्थान्तरं प्रति समर्पयति तत्राप्रस्तुप्रशंसा' इति तन्मू[2]लग्रन्थविरोधाच्च। नहि लक्षणा आगूरणं भवति। तस्मात्पर्यायोक्ते वाच्यस्य प्राधान्यम्, अप्रस्तुतप्रशंसायां तु [3]नेति तन्मूलग्रन्थस्य तात्पर्यम्।

इदं तु बोध्यम्—ध्वनिकारात्प्राचीनैर्भामहोद्भटप्रभृतिभिः स्वग्रन्थेषु कुत्रापि ध्वनिगुणीभूतव्यङ्ग्यादिशब्दा न प्रयुक्ता इत्येतावतैव तैर्ध्वन्यादयो न स्वीक्रियन्त इत्याधुनिकानां वाचोयुक्तिरयुक्तैव। यतः समासोक्तिव्याजस्तुत्यप्रस्तुतप्रशंसाद्यलंकारनिरूपणे कियन्तोऽपि गुणीभूतव्यङ्ग्यभेदास्तैरपि निरूपिताः। अपरश्च सर्वोऽपि व्यङ्ग्यप्रपञ्चः पर्यायोक्तकुक्षौ निक्षिप्तः। न ह्यनुभवसिद्धोऽर्थो बालेनाप्यपह्नोतुं शक्यते। ध्वन्यादिशब्दैः परं व्यवहारो

---

सायां व्यङ्ग्यस्य वाच्याङ्गत्वेन तस्या भेदकत्वात्। प्राचीनग्रन्थविरोधस्तु तत्र तद्दूषणप्रवृत्तस्य भूषणमेव। एवं च सर्वस्वलोचनकृतः क्लेशो व्यर्थो दुष्टश्चेत्यपि सम्यगेवेति। कश्चित्तु—"यच्छब्दस्य बुद्धिस्थत्वं शक्यतावच्छेदकमिति मते 'नमस्तस्मै—'इत्युदाहरणम्, तत्तद्रूपेण सर्वनाम्नां शक्तिरिति मते तु 'निवेद्यतां हन्त—' इत्यादि" इत्याह। तैर्भामहा-

---

१ त्वद्रीत्या लक्षणास्वीकारे इत्यर्थः। भवद्रीत्या अप्रस्तुतप्रशंसायामपि लक्षण( स्वसमर्पणरूपलक्षणलक्षणा )स्वीकारे व्यञ्जनायाश्चाभावे 'गम्यस्य प्राधान्यम्' इति सिद्धान्तस्य स्पष्टो भङ्ग इत्याशयः।

२ तस्याः ( टीकायाः ) यो मूलग्रन्थः ( अलंकारसर्वस्वम् ) तस्य।

३ अप्रस्तुतप्रशंसायां तु वाच्यस्य न प्राधान्यम्। एतेन 'सादृश्यमूला अप्रस्तुतप्रशंसा ध्वनिभेदः' इति पूर्वोपपादितं स्वाभिमतं समर्थयति।

न कृतः । नह्येतावतानङ्गीकारो भवति । प्राधान्यादलंकार्यो हि ध्वनिरलंकारस्य पर्यायोक्तस्य कुक्षौ कथंकारं निविशतामिति तु विचारान्तरम् ।

अयं चालंकारः क्वचित्कारणेन[1] वाच्येन कार्यस्य गम्यत्वे, क्वचित्कार्येण कारणस्य, क्वचिदुभयोदासीनेन संबन्धिमात्रेण संबन्धिमात्रस्य चेति विपुलविषयः । तत्र 'त्वां सुन्दरीनिवह–' इति पद्ये पातिव्रत्यस्खलनेन कारणेन तं प्रति प्राप्तिः कार्यं गम्यते । समासोक्तिरत्रोत्थापिका । एतेन 'कार्यात्कारणप्रतीतिवत्कारणात्कार्यप्रतीतेर्वैचित्र्याभावात्' इति टीकाकारोक्तमपास्तम् ।

'अपकुर्वद्भिरनिशं धृतराष्ट्र तवात्मजैः ।
उप्यन्ते मृत्युबीजानि पाण्डुपुत्रेषु निश्चितम् ॥'

अत्र बीजवापेन कारणेन कुलक्षयः कार्यरूपो गम्यते ।

कार्येण कारणस्य गम्यत्वे यथा—

'त्वद्विपक्षमहीपालाः स्वर्बालाधरपल्लवम् ।
पीडयन्तितरां तीव्रदारुणैर्दशनक्षतैः ॥'

अत्र वैरिणां सुरवधूसंभोगेन कार्येण मरणं कारणं गम्यते ।

तदुभयोदासीनेन यथा—'सूर्याचन्द्रमसौ यस्य–' इति पूर्वोदाहृते पद्ये सूर्यचन्द्रकररज्यमानवस्त्रत्वेन न कार्येण, नापि कारणेन, केवलं सहचरितेन गगनाम्बरत्वं गम्यते । एवम्—

'यश्चरणत्राणीकृत[2]कमलासनपन्नगेन्द्रलोकयुगः ।
सर्वाङ्गावरणपटीकृत[3]कनकाण्डः स वामनो जयति ॥'

दिभिः । एवमग्रेऽपि । यत इति पाठः । परं केवलम् । तेन तदुत्थापिततत्कृतचमत्कारसत्त्वेन । अत्र च 'अयं चालंकारः क्वचित्' इत्यादिः 'अन्वेष्टव्या' इत्यन्तो ग्रन्थश्चिन्त्य

१ प्रस्तुतेन प्रस्तुतस्येत्यर्थः । अप्रस्तुतेन प्रस्तुतस्य गम्यत्वे तु अप्रस्तुतप्रशंसेति पूर्वं द्वयोर्भेदस्योक्तत्वात् ।

२ चरणत्राणीकृतम् कमलासन( ब्रह्म )लोकः पन्नगेन्द्रलोकः ( पातालम् )च इति युगं येन । उपरि प्रहितस्य चरणस्य ब्रह्मलोकः, अधः प्रहितस्य पातालम् उपानत्स्वरूपं जातमित्यर्थः ।

३ पटीकृतं हैमं ब्रह्माण्डं येनेत्यर्थः ।

इत्यत्र च्विप्रत्ययेय तद्भेदावगमाद्रूपकासंभवेन पर्यायोक्तं भवितुमर्हति । गम्यं चान्तर्व्याप्तचरणकत्वमन्तर्व्याप्ताङ्गकत्वं च ।

तदेवं संक्षेपतस्त्रिविधः । वाग्भङ्गीनां तु पर्यालोचने एकस्मिन्नेव विषयेऽनन्तप्रकारः संपद्यते, किमुत विषयभेदे । यथा—'इह भवद्भिरागन्तव्यम्' इति विषये 'अयं देशोऽलंकर्तव्यः' इति, 'पवित्रीकर्तव्यः इति, 'सफलजन्मा कर्तव्यः' इति, 'प्रकाशनीयः' इति, 'देशस्यास्य भाग्यान्युज्जीवनीयानि' इति, 'तमांसि तिरस्करणीयानि' इति, 'अस्मन्नयनयोः संतापो हरणीयः' इति, 'मनोरथः पूरणीयः' इत्यादिः । कार्यादीनां त्वारोपेण निष्पत्तिरन्वेष्टव्या ।

एवं च पर्यायोक्तस्य कार्यरूपाप्रस्तुतप्रशंसया विषयापहारमाशङ्क्य कार्यकारणयोरपि प्रस्तुतत्वे पर्यायोक्तम्, कार्यस्याप्रस्तुतत्वे कारणस्य च प्रस्तुतत्वे कार्यरूपाप्रस्तुतप्रशंसेति विषयविवेकः सर्वस्वकृता कृतः । तत्र न्यूनविषयया कार्यरूपाप्रस्तुतप्रशंसया बहुविषयस्यास्य विषयापहारो न सङ्गच्छत एव । परं त्वनेन तस्या विषयापहारमाशङ्क्य विषयविभागः कर्तुमुचितः ।

इति रसगङ्गाधरे पर्यायोक्तप्रकरणम् ।

अथ व्याजस्तुतिः—

**आमुखप्रतीताभ्यां निन्दास्तुतिभ्यां स्तुतिनिन्दयोः क्रमेण पर्यवसानं व्याजस्तुतिः ।**

तृतीयातत्पुरुष–कर्मधारयाभ्यां[2] योगार्थद्वयेन द्वयोरपि शब्दार्थत्वम् ।

---

इति कुवलयानन्दे ध्वनितं तट्टीकायां स्पष्टं तत एव बोध्यमिति दिक् ॥ इति रसगङ्गाधरमर्मप्रकाशे पर्यायोक्तप्रकरणम् ॥

**आमुखेति** । शब्दतो वृत्त्या प्रथमप्रतीताभ्यामित्यर्थः । तदाह **—आमुखेत्या-**

---

१ चरणत्राणीकृतेत्यादिवाच्येन [न कार्येण, नापि कारणेन] अन्तर्व्याप्तचरणकत्वम् (अन्तर्व्याप्तौ चरणौ यस्य तत्त्वम्), अन्तर्व्याप्ताङ्गकत्वं च गम्यते, इत्यर्थः ।

२ 'व्याजेन स्तुतिः' इत्यनेन आमुखप्रतीतया निन्दया स्तुतौ, 'व्याजः (व्याजभूता) स्तुतिः' इत्यनेन आमुखप्रतीतया स्तुत्या निन्दायां पर्यवसानं सूचितमित्यर्थः ।

आमुखेत्यादिविशेषणेन तयोः पर्यवसानाभावं वदन्बाधितत्वमभिप्रैति। अत एव नास्या ध्वनित्वम्। ध्वनौ हि निर्बाधेन वाच्येनाऽऽगूरणमहिम्नार्थान्तरमवगम्यते। न चैवं प्रकृते।

आद्या यथा—

उर्वीं शासति मय्युपद्रवलवः कस्यापि न स्यादिति
प्रौढं व्याहरतो वचस्तव कथं देव प्रतीमो वयम्।
प्रत्यक्षं भवतो विपक्षनिवहैर्द्यामुत्पतद्भिः क्रुधा
यद्युष्मत्कुलकोटिमूलपुरुषो निर्भिद्यते भास्करः॥'

अत्र राजवर्णनप्रस्तावे निन्दा बाधिता स्तुतौ पर्यवस्यति।

द्वितीया यथा—

'किमहं वदामि खल दिव्यमते गुणपक्षपातमभितो भवतः।
गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि॥'

अत्र दुश्चरितोत्कीर्तनप्रस्तावे स्तुतिस्तथाभूता निन्दायाम्।

अत्र चैक एवार्थः केनचिदाकारेणादौ स्तुतेर्निन्दाया वा विषयो भूत्वा प्रकरणादिमहिम्ना प्रकारान्तरेण निन्दायाः स्तुतेर्वा विषयो भवति। तत्र यावानंशो बाधितस्तावानेवाऽन्यथात्वेन पर्यवस्यति। अंशान्तरं तु स्वभावेनैवावतिष्ठते। इयं चालंकारान्तरसंकीर्णा यथा—

'देव त्वां परितः स्तुवन्तु कवयो लोभेन, किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना।

---

**दीति**। अस्या व्याजस्तुतेः। न च नहि। **राजेति**। सूर्यवंशेत्यादिः। तथाभूतबाधिता निन्दायां पर्यवस्यति। अत्र च उभयत्र च। **प्रकारान्तरेणेति**। वस्तुमाहात्म्यादेतद्घटकपदानां लक्षणया आक्षेपाद्वेत्यर्थः। **तावानेवान्यथात्वेनेति**। तत्र च लक्षणैव। एवं च स्तुतेर्लक्ष्यत्वात्तामादाय ध्वनित्वम्। लक्षणायाः प्रयोजनीभूतः स्तुत्य-

---

१ आदावेव निन्दास्तुत्योः प्रतीतिः, पर्यवसाने तु न तयोः प्रतीतिः, प्रत्युत विपरीता प्रतीतिः। ततश्च पर्यवसानप्रतीतया स्तुत्या सह आमुखप्रतीताया बाधितत्वम्। एवम् आमुखप्रतीतायां स्तुतावपि ज्ञेयम्। व्याजस्तुतौ बाधवशात् पर्यवसाने स्तुत्यादेः प्रतीतिः। ध्वनौ तु आगूरण( ध्वनन )महिम्नेति द्वयोर्भेद इत्याशयः।

क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

अत्र चापप्रतापस्य समासोक्त्या विटधौरेयव्यवहाराश्रयत्वप्रतीतिः । तन्मूला च निन्दा स्तुतौ पर्यवस्यति ।

यथा वा—

'अये राजन्नाकर्णय कुतुकमाकर्णनयन
स्फुरन्ती हस्ताम्भोरुहि तव कृपाणी रणमुखे ।
विपक्षाणां वक्षस्यहह तरुणानां[1] निपतति
प्रगल्भाः श्यामानामनुपरतकामाः प्रकृतयः[2] ॥'

अत्रार्थान्तरन्यासपोषिता । ननु कथमत्र व्याजस्तुतिः । वाच्याभ्यामेव निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे तस्या अभ्युपगमात् । नह्यत्र चापप्रतापस्य केवलस्य केवलवसुमत्याद्यालिङ्गनं वाच्यभूतं निन्दास्पदं भवति। समासोक्त्या त्वाविर्भूतो विटव्यवहारो निन्दास्पदमपि न वाच्यः, अपि तु गम्य[3] इति चेत्, आमुखप्रतीतपदेन हि प्रतीतावपर्यवसितत्वमात्रमत्र विवक्षितम्[4] । न तु वाच्यत्वपर्यन्तम्, गौरवात् । प्रकृते

तिशयादिः । व्यङ्ग्यमादाय ध्वनित्वे इष्टापत्तिरेव । एवं च 'उपकृतं बहु नाम—'इत्यादावप्ययमेवालंकार इत्याहुः । **अत्रार्थान्तरेति** । समासोक्तिरप्यत्रेति बोध्यम् । एवं

१ तरुणानां विपक्षाणां वक्षसि ।

२ श्यामानां स्त्रीणाम् (श्यामायितहृदां च) अनिवारितमदनाः प्रकृतयः (स्वभावाः) प्रगल्भाः धृष्टा इति ।

३ प्रस्तुतराजव्यवहारबोधोत्तरं व्यङ्ग्यस्य विटव्यवहारस्य बोधे सति निन्दा प्रतीयते । प्रतीयमाना तु सा निन्दा न वाच्या । एवं च वाच्यया निन्दया स्तुतेर्गम्यत्वाभावात्कथं व्याजस्तुतिरिति शङ्का ।

४ कामं स समासोक्तिलभ्योऽर्थो वाच्यमर्यादागम्यो न स्यात्तथापि समासोक्तिपर्यन्ते राजविषयकेऽर्थे निन्दैव प्रतीयते । प्रतीतेः अपर्यवसानपदेन च निन्दायाः प्रथमं प्ररूढता विवक्ष्यते । एवं चात्रापि समासोक्तिपर्यन्तं निन्दायाः प्रथमं प्रतीतिः । स्तुतेश्च पश्चादिति न कोऽपि दोष इति तत्समाधानम् ।

च किं तावता स्तव्यस्त्वमित्यादिना निन्दाया एवोपोद्बलनात्समासोक्तिसाचिव्येन सैव प्रथमं प्ररूढा पश्चाच्च स्तुतिरिति न कोऽपि दोषः। एवं च

'भाग्यं ते शाल्मलितरो वद किं परिकथ्यते।
द्विजैः फलाशया युक्तैः सेव्यसे यदहर्दिवम्॥'

इत्यत्राप्रस्तुतप्रशंसा[1]संकीर्णाप्येषा भवति। एतेन

'किं वृत्तान्तैः परगृहगतैः, किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः।
देशे देशे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः॥'

इत्यत्र प्राचीनपद्ये "प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा कीर्तिरिति भणि[2]त्योन्मूलिता, न तु प्ररोहं ग[3]मिता" इति यत्सर्वस्वकृतोक्तम्। यच्चापि तद्व्याख्यायां विमर्शिन्याम् 'अनुदाहरणमेवैतत्पद्यं व्याजस्तुतेः' इति ध्वन्यालोचनकारोक्तिकटाक्षेण लक्ष्यीकृत्योक्तं तन्निरस्तम्। 'किं वृत्तान्तैः' इत्यादिना निन्दाया एव प्रथममुन्नयनात्समासोक्तेरुद्गतेर्वाच्यत्वस्यातन्त्रत्वात्[4]। अन्वयक्रमेणादौ वल्लभयैवान्वये तस्याश्च कीर्त्यभिन्नत्वेनावस्थाने सति पश्चात्प्रक-

च अस्याः समासोक्त्यादिपोषितत्वे च। द्विजैः खगैः। विपणिषु हट्टेषु। समयः संकेतः।

१ अत्र अप्रस्तुतप्रशंसापर्यन्तम् [ यद्यपि अप्रस्तुतप्रशंसापर्यन्तं गम्यः सर्वोऽप्यर्थो वाच्यो नास्ति, प्रस्तुतार्थस्य गम्यत्वात्, किन्तु आमुखपदेन अपर्यवसितत्वमात्रं विवक्षितम् ] स्तुतिः प्रतीयते, पश्चान्निन्देति व्याजस्तुतिः।

२ 'हन्त कीर्तिरिति भणित्वा' इति काशीपुस्तकपाठः।

३ अर्थात् वल्लभापदस्य राजमहिषीरूपार्थेन या स्तुतिपर्यवसायिनी निन्दा प्रक्रान्तासीत्सा अन्ते कीर्तिरित्यक्षरैः स्फुटीकृता। अर्थात् कीर्तिरेव सर्वत्र भ्रमतीति प्रथमप्ररूढा सा निन्दा उन्मूलिता, साकूतैरक्षरैर्न प्ररोहं गमितेत्यर्थः।

४ समासोक्तेर्या उद्गतिः (आविर्भूतिः, स्फूर्तिः) तस्या वाच्यत्वं हेतुतया नात्र परिगृह्यते। अर्थात् समासोक्तेर्गम्यत्वेपि प्रथमप्रतीतस्य निन्दाद्यर्थस्य अपर्यवसानमात्राद्व्याजस्तुतित्वं नात्र हीयते इत्याशयः।

रणादिपर्यालोचनवशाद्व्युत्क्रमेणान्वयबोधाच्च । तस्माद्ध्वन्यालोचनकारैरुक्तमुदाहरणं संगतमेव ।

इयं च व्याजस्तुतिर्यस्यैव वस्तुनः स्तुतिनिन्दे प्रथममुपक्रम्येते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति । वैयधिकरण्ये तु न, इति प्राचामलंकारशास्त्रप्रवर्तकानां समयः । अत एव यत्र शब्देनाभिधीयमाना स्तुतिर्निन्दा वा बाधितस्वरूपा निन्दायां स्तुतौ च स्वसमर्पणेन पर्यवस्यतीति तैस्तत्र तत्र स्वग्रन्थेषूपनिबद्धम् । एवं च

'परोपसर्पणानन्तचिन्तानलशिखाशतैः ।
अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥'

इत्यादिषु सांसारिकजननिन्दापर्यवसायिन्यामपि पादपस्तुतौ न व्याजस्तुतित्वम्, प्रथमप्रतीयमानस्तुतेरबाधितत्वात् । एवं निन्दया स्तुतेर्गम्यत्वेऽपि । तथा अन्यस्य स्तुत्यान्यस्तुतौ, अन्यनिन्दायां वान्यनिन्दायां गम्यमानायां नास्या अलंकृतेर्विषयः । पूर्वोक्तादेव हेतोः । यथा—

'ये त्वां ध्यायन्ति सततं त एव कृतिनां वराः ।
मुधा गतं पुराराते भवदन्यधियां जनुः ॥'

अत्र पूर्वोत्तरार्धगताभ्यां ध्यातृस्तुतिनिन्दाभ्यां ध्येयस्तुतिनिन्दयोरवगमः । एवं स्थिते कुवलयानन्दकर्त्रा स्तुतिनिन्दाभ्यां वैयधिकरण्येन निन्दास्तुत्योः स्तुतिनिन्दयोर्वावगमे प्रकारचतुष्टयं व्याजस्तुतेर्यदधिकमुक्तं तदपास्तम् । यदि तु प्राचीनसंकेतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियते

१ सर्वस्व-विमर्शिन्योः खण्डनेन द्विधा समर्थनं लोचनकारोक्तेः । तथा हि—कीर्तिव्यवहारे स्वैरिणीव्यवहाराभेदप्रतीत्या (समासोक्त्या) आमुखप्रतीता निन्दा विस्तार्यत एव, न उन्मूल्यते । समासोक्तिगम्यं तु न प्रतिबन्धकमिति पूर्वमुक्तमेवेत्येकं समर्थनम् । 'वल्लभा देव कीर्तिः' अत्र वलभापदस्य प्रथमं श्रवणेन 'वल्लभा'पदस्य महिषीरूपार्थप्रतीत्या या स्तुतिपर्यवसायिनी निन्दा प्ररूढा, सा अन्ते 'वल्लभा (अभीष्टा) कीर्तिः' इत्यर्थसंपत्त्या स्तुतिपर्यवसायित्वेपि व्याजस्तुतित्वं लभत एव, प्रथमप्ररूढनिन्दात्वस्य व्याजस्तुतेर्बीजस्य अक्षतत्वात् । इति द्वितीयं समर्थनम् ।

२ प्रथमं प्रतीयमाना या पादपानां स्तुतिर्न सा बाधिता । स्तुतिर्बाधिता सत्येव व्याजस्तुतिं प्रयोजयतीत्यर्थः ।

तदा निवेश्यन्तां सर्वेऽपि व्यङ्ग्यप्रकारा गुणीभूतव्यङ्ग्यप्रकारा वा अलंकारोदरेषु। निवेश्यतां वा व्याजस्तुतिरपि योगार्थालीढत्वादप्रस्तुतप्रशंसायाम्। निरस्यतां च कार्यकारणादिविषयकत्वदुराग्रहस्तस्या इति बहुव्याकुली स्यात्। एवं तर्हि पूर्वोक्तं प्रकारचतुष्टयं कुत्रान्तर्भवतु? इति चेत्, व्यङ्ग्यभेदेष्विति गृहाण। नहि व्यङ्ग्यभेदाः सर्वेऽप्यपरिमिता अलंकारप्रकारगोष्पदे अन्तर्भावयितुं शक्यन्ते। यच्चापि कुवलयानन्दकृता निन्दाया गम्यत्वे उदाहृतम्—

"—'अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं
देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति।
गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वाम्, मां च भिक्षाटनम्॥'

अत्र सर्वज्ञः सर्वेश्वरोऽसीति राज्ञः स्तुत्या व्याजरूपया मदीयवैदुष्यादि दारिद्र्यादि जानन्नपि बहुप्रदानेन रक्षितुं शक्तो मह्यं किमपि न ददासीति निन्दा व्यज्यते" इत्युक्तं च। तन्न।

'साधु दूति पुनः साधु कर्तव्यं किमतः परम्।
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि॥'

इत्यनुपदमेव त्वदुदाहृतपद्येनास्यातितमां वैलक्षण्यात्। तत्र हि साधु किमतः परं कर्तव्यमिति वर्णैरुदीरिता साधुकारिणीत्वरूपा स्तुतिः श्रुतमात्रैव बाधिता सती विपरीतेऽर्थे स्वात्मसमर्पणेन पर्यवस्यति। इह तु सर्वज्ञत्वमधीश्वरत्वं च न तथा। राजवर्णनप्रस्तावे राजगताऽज्ञत्वपामरत्वयोरविवक्षितत्वात्। अत एव सर्वज्ञोऽपि मां न रक्षितवानसि इत्युपालम्भरूपापि निन्दा नात्र विवक्षिता। सर्वज्ञस्य समर्थस्य तव दरिद्रोऽहं रक्षितुं योग्य

तैः प्राचीनैः। **व्यङ्ग्यभेदेष्विति गृहाणेति**। अत्रेदं चिन्त्यम्—व्यङ्ग्यभेदेष्वप्यप्रस्तुतप्रशंसापर्यायोक्ताद्यलंकारस्वीकारवदत्राप्यलंकारत्वे बाधकाभावात्। न चाप्रस्तुतप्रशंसैवास्ताम्। विनिगमकाभावात्। नहि लक्ष्य एव व्याजस्तुतिर्न व्यङ्ग्य इत्यत्र शपथातिरिक्तं प्रमाणमस्ति। गुणीभूतव्यङ्ग्यत्वाच्च न ध्वनित्वम्। प्राचीनग्रन्थविरोधस्त्व-

इति स्वविज्ञापनाया एव प्रत्युत विवक्षितत्वात्। अस्तु वा त्वदुक्तोपालम्भरूपा निन्दात्र गम्या। तुष्यतु भवानेवमपि। 'साधु दूति पुनः साधु' इति पद्ये साधुकारिणीत्वमिव नास्मिन्पद्ये सर्वज्ञत्वमधीश्वरत्वं च विद्युदङ्कुर[1]प्रतिभमिति शक्यं वक्तुम्। उपालम्भरूपाया निन्दाया अनुत्थानापत्तेः प्रतीतिविरोधाच्चेति सहृदयैराकलनीयं किमुक्तं द्रविडपुंगवेनेति।

इति रसगङ्गाधरे व्याजस्तुतिप्रकरणम्।

अथाक्षेपः—

'उपमेयस्योपमानसंबन्धिसकलप्रयोजननिष्पादनक्षमत्वादुपमानकैमर्थ्यमुपमानाधिक्षेपरूपमाक्षेपः[2]।'

इति केचिदाहुः। तन्मते चेत्थमुदाहरणं निर्माणीयम्—

'अभूदप्रत्यूहः कुसुमशरकोदण्डमहिमा
विलीनो लोकानां सह नयनतापोऽपि तिमिरैः।

किंचित्कर इत्यसकृदावेदितम्। **द्रविडपुंगवेनेति**। अतिचिरकालं कृतया सेवया दुःखितस्य ततोऽप्राप्तधनस्य भिक्षो राजसेवां त्यक्तुमिच्छत ईदृशवाक्ये वक्तृवैशिष्ट्यादिसहकारेणापातप्रतीयमानस्तुतेर्निन्दापर्यवसायितया विद्युदङ्कुरप्रतिभत्वमस्त्येवेति सम्यगेवोक्तं द्रविडशिरोमणिना। पूर्वोक्तरीत्या स्वस्य भिक्षाटनोक्त्या चकारेण च तत्त्वस्यानुभवसिद्धत्वात्। साधु दूतीत्युदाहरणेऽपि दूत्या दुश्चरितत्वादिवैशिष्ट्यं प्रमाणान्तरेण प्रागेव जानतां वाच्यार्थे बाधज्ञानं स्पष्टमेव। 'कस्त्वं वानर' इत्यत्राप्यतिशयितवीरत्वेन प्रसिद्धहनुमतो निन्दा स्वात्मन्यपर्यवस्यन्ती इतरस्तुतिमादायैव पर्यवस्यति। इतरस्तुतेर्बलादाक्षिप्तत्वाच्च ध्वनित्वमिति दिक्॥ इति रसगङ्गाधरमर्मप्रकाशे व्याजस्तुतिप्रकरणम्॥

शिष्यावधानाय प्रतिजानीते—**अथेति**। **उपमेयस्योपमेति**। अमुमाक्षेपं प्रतीपं

१ साधु दूति० इत्यत्र यथा पर्यवसाने साधुकारिणीत्वमपगच्छति 'दूतिकाधर्मविरुद्धकारिणीं धिक् त्वाम्' इत्येतावत्पर्यन्तं च पर्यन्ते वक्तव्यं भवति, तथा सर्वज्ञत्वमीश्वरत्वं चापि झटिति विद्युद्विलायं लीयते इति न शक्यं वक्तुम्। तथा सति अज्ञं पामरं च प्रति 'दारिद्र्यादि जानन्नपि बहुदानेन रक्षितुं शक्तो न किमपि ददासि' इत्युपालम्भस्य अनुत्थानात्।

२ परमतानुवाद इति नास्मिन्प्रकरणे लक्षणानि स्थूलाक्षराणि।

तवास्मिन्पीयूषं किरति परितस्तन्वि वदने
कुतो हेतोः श्वेतो विधुरयमुदेति प्रतिदिनम् ॥'

यथा वा—

'वसुधावलयपुरंदर विलसति भवतः कराम्भोजे ।
चिन्तामणिकल्पद्रुमकामगवीभिः कृतं जगति ॥'

आद्ये उपमानप्रयोजननिष्पादनं शाब्दम्, द्वितीये त्वार्थमिति भेदः ।

अपरे तु—

'पूर्वोपन्यस्तस्यार्थस्य पक्षान्तरालम्बनप्रयुक्तो निषेध आक्षेपः ।'

इत्याहुः । तेषां मते इदमुदाहरणीयम्—

'सुराणामारामादिह झगिति झञ्झानिलहताः
पतेयुः शाखीन्द्रा[2] यदि तदखिलो नन्दति जनः ।
किमेभिर्वा कार्यं शिव शिव विवेकेन विकलै-
श्चिरं जीवन्नास्तामधिधरणि दिल्लीनरपतिः ॥'

अत्र किमेभिरित्युत्तरार्धेन पूर्वार्धोक्तपक्षप्रतिक्षेपमात्रं पक्षान्तरालम्बनेन क्रियते । यथा वा—

'किं निःशङ्कं शेषे शेषे वयसि त्वमागतो मृत्युः ।
अथवा सुखं शयीथा जननी जागर्ति जाह्नवी निकटे ॥'

अन्ये तु—

"'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥'

विशेषं व्यङ्ग्यरूपमर्थविशेषं वक्तुं विवक्षितस्य प्रकृतार्थस्य निषेधो निषेधसदृशः कथनादिप्रत्याख्यानरूपः । स वक्ष्यमाणविषय उक्तविषयश्चेति द्विविधः" इत्याहुः । तेषां मते इत्थमुदाहार्यम्—

१ अर्थात् मदनविजृम्भणादिप्रयोजनका गुणास्तु तन्वीवदनगुणैरेव गतार्थाः, संप्रति केवलमयं श्वेतमात्रश्चन्द्र इत्याशयः ।

२ कल्पवृक्षाः ।

'रीतिं गिराममृतवृष्टिकिरां[1] त्वदीयां
　तां चाकृतिं कृतिवरैरभिनन्दनीयाम् ।
लोकोत्तरामथ कृतिं करुणारसार्द्रां
　ज्ञातुं न कस्यचिदुदेति मनःप्रसारः[2] ॥'

अत्र करिष्यमाणस्य मनःप्रसारस्य निषेधो वर्णनीयस्यानिर्वाच्यतां बोधयितुम् ।

'श्वासोऽनुमानवेद्यः[3] शीतान्यङ्गानि निश्चला दृष्टिः ।
तस्याः सुभग कथेयं तिष्ठतु तावत्कथान्तरं कथय ॥'

अलंकारसर्वस्वकारादयस्तु—

"प्राकरणिकस्यार्थस्य निषेधोऽप्रतिष्ठितत्वादाभासमात्ररूपः[4] कस्यचिदर्थविशेषस्य विधानं व्यनक्ति स एकः । यश्चाप्राकरणिकस्य विधिस्तादृश एव सन्निषेधे पर्यवस्यति सोऽपर इत्युभयविधोऽप्ययमाक्षेपः ।

तत्र निषेधाभासरूप आक्षेपस्तावद्द्विविधः—उक्तविषयो वक्ष्यमाणविषयश्चेति । उक्तविषयोऽपि द्विविधः—कचिद्वस्तुमात्रनिषेधात्कचिद्वस्तुकथननिषेधात् । वक्ष्यमाणविषयस्तु वस्तुकथननिषेधात्मक एव सामान्यधर्मावच्छिन्नप्रतियोगिताकः शब्दात्समर्प्यमाणोऽपि विशेषरूपेष्टनिषेधात्मना स्थितो निषिध्यमानगतं विशेषान्तरमाधत्ते । सोऽपि द्विविधः—सामान्याश्रययत्किंचिद्विशेषनिरूपणानिरूपणाभ्याम् । तत्र निरूपितेषु यत्किंचिद्विशेषेषु प्रयोजनाभावादप्रवर्तमानो निषेधो वक्ष्यमाणेष्टविषय एव संपद्यते । अनिरूपितेषु तु सुतराम् । चतुर्विधेऽप्यस्मिन्नाक्षेपे इष्टोऽर्थः, तस्य

---

केचिदाहुः । **सोऽपि द्विविध इति** । वक्ष्यमाणविषयोऽपीत्यर्थः । व्यनक्तीत्यस्याग्रे

---

१ अमृतवृष्टिविक्षेपिणीनां गिरां वाणीनाम् । किरः ।

२ तव वचनरीत्यादिकं वर्णयितुमशक्यमिति वर्णनाय ज्ञातुं न कस्यापि मनः प्रसरतीत्यर्थः । 'मनःप्रसादः' इति काशीपुस्तकपाठः ।

३ उक्तविषयस्योदाहरणमिदम् । श्वासादिकं सर्वमुक्त्वापि वक्तुमशक्यतासूचनाय तन्निषेधात् ।

४ अप्रतिष्ठितत्वात् आभासरूपः ।

च निषेधः तस्याप्यसत्यत्वम्, अर्थगतविशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते। तेन नात्र निषेधविधिः। न वा विहितनिषेधः। अपि तु निषेधेनासत्येन विधेराक्षिप्यमाणत्वाद्योगार्थादाक्षेपः। स च प्रागुक्तदिशा चतुर्विधः[१]।

विधिना त्वसत्येन निषेधस्याक्षेपे अपरोऽयमाक्षेपः। अत्रापि अनिष्टोऽर्थः, तस्य विधिः, तस्याप्याभासत्वम्, अर्थगतविशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते।" इत्याहुः।

एतेषां मते चेत्थमुदाहरणं निर्माणीयम्—

'न वयं कवयस्तव स्तवं नृप कुर्वीमहि यन्मृषाक्षरम्।
रणसीम्नि तवावलोकने तरुणार्को दिनकौशिकायते॥'

'मां पाहीति विधिर्विधेयविषयो[२] वाच्यः स्वतन्त्रे कथं
नोपेक्ष्यो भवतास्मि दीन इति गीः श्लाघ्या न संख्यावताम्।
एवं दोषविचारणाकुलतया देव त्वयि प्रोन्मुखे
वक्तव्यप्रतिभादरिद्रमतयः किंचिन्नहि ब्रूमहे॥'

'रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि।
अलमथवा पापात्मन्कृतया कथयापि ते हतया॥'

'श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः।
तस्याः किं वा पृच्छसि निर्दय तिष्ठत्वसौ हता वार्ता॥'

तत्राद्यपद्ये कवेरुक्तौ कवित्वनिषेधो बाधितो मिथ्यावादित्वनिषेधात्मना

---

१ अयं सर्वस्याशयः—आक्षेपस्तावत् निषेधाभास-विध्याभासरूपत्वेन द्विविधः। निषेधाभासः उक्तविषयो वक्ष्यमाणविषयश्चेति प्रथमं द्विविधः। उक्तविषयोपि द्विविधः [ वस्तुमात्रनिषेधात्, वस्तुकथननिषेधात् ]। एवं वक्ष्यमाणविषयोपि द्विविधः [ सामान्याश्रयत्वेकिंचिद्विशेषनिरूपणात्, अनिरूपणात् ]। एवं संहत्य निषेधाभासरूप आक्षेपश्चतुर्विधः। 'न वयम्०' इत्यादीनि चत्वारि पद्यानि क्रमशश्चतुर्णामुदाहरणानि। विध्याभासस्त्वेकविधः, यस्य 'तपोनिधे०' इत्युदाहरणम्।

२ 'मां पाहि' इति विधेय( अधीन )विषयको विधिः ( प्रवर्तनावाक्यम् ) स्वतन्त्रे त्वयि कथं वाच्यः? 'एवं कुरु' इति विधिः वशंवदे एव वक्तुं योग्यो न स्वतन्त्रे त्वयीति भावः। 'अहं नोपेक्ष्यः' इति वाणी संख्यावतां ( विवेकशीलानां पण्डितानाम् ) कृते न श्लाघ्या। ते स्वयं स्वकर्तव्यं विदन्ति, तेभ्य इदं बोधनं नोचितमित्यर्थः। एवं वक्तव्यप्रतिभा( व्युत्पत्ति )शून्यतया वयं न किञ्चिद्वदामः। अत्र हि अभीष्टत्वेपि वस्तुकथनस्य निषेधो बाधितः सन् रक्षणदानयोः अवश्यानुष्ठेयतां व्यनक्ति। 'मां पाहि' इति स्थाने 'मा याहि' इति काशीपुस्तकपाठः।

पर्यवस्यन्नुत्तरार्धगतस्यार्थस्य सत्यत्वरूपं विशेषं व्यनक्ति । एवं द्वितीयपद्ये रक्षणदानयोः कथनस्येष्टत्वान्निषेधो बाधितस्तयोर्विवक्षितत्वे पर्यवस्यन्नवश्यानुष्ठेयताम् । तृतीये खलसंबन्धिवृत्तान्तकथनत्वेन सामान्यरूपेण प्रकृतपैशुन्यादिवृत्तान्तकथनस्य वक्ष्यमाणस्य निषेधः कथ्यमानस्तस्य चिन्तितदुःखप्रदताम् । चतुर्थे कंचन तत्संबन्धिन्या वार्ताया अंशं श्वासतानवादिकं कथयित्वा क्रियमाणो निषेधो वक्ष्यमाणमरणवार्ताविषयः संस्तस्या मुखादनिःसरणीयताम् । एषु निषेधस्याप्रतिष्ठानान्न विहितनिषेधः, नापि निषेधविधिः ।

'तपोनिधे कौशिक रामचद्रं निनीषसे चेन्नय किं विकल्पैः ।
निरन्तरालोकनपुण्यधन्या भवन्तु वन्या अपि जीवभाजः ॥'

अत्र पुत्रस्नेहाकुलस्य दशरथस्य वाक्ये नयेति विधिर्बाधितो मा नयेति निषेधे पर्यवसितोऽन्यथा तु मम प्राणवियोगो भविष्यतीत्यर्थं व्यनक्तीति विध्याभासरूपोऽयमाक्षेपः । एवमुदाहरणेषु स्थितेषु प्राचीनमतानुसारीण्याक्षेपोदाहरणान्येतेषां मतेऽनुदाहरणान्येव । इत्थं च प्राथमिकमतसिद्ध आक्षेपः प्रतीपप्रभेदः । द्वितीयमतसिद्धस्तु विहितनिषेध एव, न पुनराक्षेपः । तत्र निषेधस्यानाभासरूपत्वात् । इति तदाशयः । इतरे तु—

“-'निषेधमात्रमाक्षेपः ।'

चमत्कारित्वं चालंकारसामान्यलक्षणप्राप्तमेव । तच्च व्यङ्ग्यार्थे सति संभवतीति सव्यङ्ग्यो निषेधः सर्वोऽप्याक्षेपालंकारः । एवं चोपमेयकृतोपमानकैमर्थक्य—पक्षान्तरालम्बनकृतप्राचीनपक्षकैमर्थक्य—विशेषप्रतिपादनप्रयोजकोक्तवक्ष्यमाणकथनकैमर्थक्यानामनुपदोक्तनिषेधविध्याभासयोश्च संग्रहः” इत्यप्याहुः ।

अथाक्षेपध्वनिस्तन्मतानुसारेणोदाह्रियते—

'त्वामवश्यं सिसृक्षन्यः सृजति स्म कलाधरम् ।
किं वाच्यं तस्य वैदुष्यं पुराणस्य महामुनेः ॥'

त्रिष्वनुषङ्गः । वैदुष्यं पाण्डित्यम् ।

१ उपमानाधिक्षेपरूपम् उपमानकैमर्थ्यमित्यर्थः ।
२ पूर्वोपन्यस्तस्य पक्षान्तरालम्बनप्रयुक्तो निषेध इत्यर्थः ।

अत्र येषामुपमानकैमर्थ्यमाक्षेपस्तेषां त्वयि सति किं कलाधरेणेत्यंशमादाय, येषां च निषेधमात्रमाक्षेपस्तेषां वृद्धस्य ब्रह्मणो वैदुष्यं नास्तीत्यंशमादाय च ध्वनिः । ननु किं वाच्यं तस्य वैदुष्यमिति वैदुष्योक्तेः सबाधाया झटिति वैदुष्याभावे पर्यवसानात्, उपमानकैमर्थ्यस्यापि झगित्येव प्रतीतेर्वाच्यकल्पत्वात्कथं नाम ध्वनित्वं स्यादिति ? । नैष दोषः । ब्रह्मणो हि त्वां सिसृक्षतः करणपाटवसंपत्त्यर्थमादौ पाण्डुलेखवदिन्दुं निर्मितवतः किं वैदुष्यं वाच्यमिति वैदुष्योक्तेर्निर्बाधत्वादादौ सत्यां विश्रान्तौ पश्चादवश्यं पुराणस्येत्येतदर्थपर्यालोचनेन वैदुष्याभाव—चन्द्रकैमर्थ्ययोः पर्यवसानमिति न ध्वनित्वस्खलनम् । येषां त्वाभासरूप एव निषेध आक्षेपस्तेषां न प्रागुक्त आक्षेपध्वनिः, अपि त्वेयम्[2]—

'त्वां गीर्वाणगुरुं सर्वे वदन्तु कवयस्तु ते ।
समानकक्षस्तेनासीत्येषोऽर्थस्तु मतो मम ॥'

अत्र कवेर्वाक्ये बाधितत्वादाभासरूपो नाहं कविरिति निषेधो गम्यमानो मिथ्यावादित्वाभावरूपेण पर्यवस्यन्नुत्तरार्धार्थस्य सत्यतारूपं विशेषं गमयति । इत्थं स्वस्वाभिमान[3]भेदादाक्षेपाणां भेदात्तद्ध्वनीनां स्थिते विवेके—

'स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान्गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥'

इति पद्यं ध्वनिकारैराक्षेपध्वनित्वेनोदाहृतं 'स्वाभिमताक्षेपानभिव्यक्तेर-

---

१ येन पूर्वं पाण्डुलिपिः कृता, पश्चादतियत्नेन त्वत्सृष्टिरकारि, अवश्यं तस्य ब्रह्मणश्चातुर्यमिति ब्रह्मणो वैदुष्योक्तिर्बाधितैव नास्ति, अपि तु सा युज्यतेऽपि । ततश्च वैदुष्योक्तेर्झटिति वैदुष्यभावे न पर्यवसानमिति वाच्यायमानत्वं ध्वनेर्नास्ति । एवं चन्द्रकैमर्थ्यस्यापि झटिति प्रतीतिर्नास्ति, किन्तु 'त्वां सिसृक्षता येन अभ्यासपाटवार्थं पाण्डुलिपिरूपेण चन्द्रः कृत' इति पूर्वार्धार्थपर्यालोचनोत्तरं पुराणस्येत्येतदर्थपर्यालोचनावसरात्क्रमशः चन्द्रकैमर्थ्यस्य पर्यवसानमिति ध्वनित्वे न बाध इत्याशयः ।

२ त्वामवश्यमित्यादिपद्यं नाक्षेपध्वनिः, तत्र आभासरूपनिषेधस्याभावात् । अपि तु 'त्वां गीर्वाणगुरुम्०' इति वक्ष्यमाणपद्यमाक्षेपध्वनिरित्याशयः ।

३ स्वस्य स्वस्य योऽभिमानः अभिमतिः संमतिस्तद्भेदात् ।

नुदाहरणमेवैतत्' इति निर्युक्तिकं वदन्नलंकारसर्वस्वकृत्परास्तः । नह्याभासरूप एव निषेध आक्षेप इत्यस्ति वेदस्याज्ञा । नापि प्राचामाचार्याणाम् । न चापि युक्तिः । येन ध्वनिकारोक्तमुपेक्ष्य त्वदुक्तं श्रद्दधीमहि । प्रत्युत वैपरीत्यमेवोचितम् । ध्वनिकृतामालंकारिकसरणिव्यवस्थापकत्वात् । नह्यस्मिञ्शास्त्रे आक्षेपादिशब्दसंकेतग्राहकं प्रमाणान्तरमस्ति, ऋते प्राचीनवचनेभ्यः[1] । अन्यथा सकलविपर्यासापत्तेः । यत्तु—

'नरेन्द्रमौले न वयं राजसंदेशहारिणः ।
जगत्कुटुम्बिनस्तेऽत्र न शत्रुः कश्चिदीक्ष्यते ॥'

इति पद्यमलंकारसर्वस्वकारमतेनोदाहृत्येत्थमुक्तं कुवलयानन्दकृता—'अत्र संदेशहारिणामुक्तौ न वयं संदेशहारिण इति निषेधोऽनुपपन्नः संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्सर्वजगतीपालकस्य तव न कश्चिदपि शत्रुभावेनावलोकनीयः किंतु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषमाक्षिपति' इति । तन्न । त्वदुक्तस्य विशेषस्य निषेधाव्यङ्ग्यत्वात्[2] । नहि न वयं राजसंदेशहारिण इत्युक्ते तव न कश्चिदपि शत्रुभावेनावलोकनीयः किं तु सर्वेऽपि राजानो भृत्यभावेन संरक्षणीया इति विशेषोऽवगम्यते । अवगम्यते च जगत्कुटुम्बिन इत्याद्युत्तरार्धे प्रयुक्ते । यो हि निषेधमात्रसामर्थ्याक्षिप्तो विशेषस्तं निषेध आक्षिपतीति युक्तं वक्तुम्, न तु परकीयं विशेषम् । तथा हि राजसंदेशहारिणा

---

सर्वस्वकारः परास्त इति । तद्गुणवक्ता नास्तीति निषेधस्य गुणापरिमितत्वव्यङ्ग्यसहितस्याक्षेपरूपस्य व्यङ्ग्यस्य सत्त्वादिति भावः । अलंकारसर्वस्वकारस्तु—निषेधाभास आक्षेपः । 'नाहं दूती तनोस्तापस्तस्याः कालानलोपमः' इत्युदाहरणमिति । तस्यायं भावः—यो निषेधो बाधितः सन्नर्थान्तरपर्यवसितो विशेषाक्षेपके कस्मिंश्चिद्विशेषे आक्षेप्तव्ये साहाय्यकं करोति स आक्षेप इति तदर्थः । नाहं दूतीत्यस्य दूत्या उक्तौ बाधितत्वाद्दूतीपदेन मिथ्यावादित्वविशिष्टा लक्ष्यते । तन्निषेधश्च सत्यवादित्वे पर्यवस्यति । एवं च तद्बोध्यसत्यवादित्वसहकृतं तनोस्ताप इति वाक्यमिदानीमे-

---

१ ध्वनिकारादिप्राचीनवचनान्येव आक्षेपादि( अलंकार )शब्दानाम् अयमर्थ इति संकेतग्राहकाणि प्रमाणानि, नान्यत्प्रमाणान्तरमित्यर्थः ।

२ 'अनुपपन्नो निषेधो यत्र विशेषमाक्षिपति (व्यनक्ति) तत्रैव (सर्वस्वकारमतानुसारम्) आक्षेपः' इति त्वयैव पूर्वमुक्तम् । अत्र च सोयं विशेषो न निषेधेन आक्षेप्यः ।

प्रयुक्ते न वयं राजसंदेशहारिण इति वाक्ये स्वस्मिन्स्वनिषेधस्य बाधाद्राजसंदेशहारिपदेन लक्षणया राजसंदेशहारिनिष्ठकैतववचनप्रयोक्तृत्वादिधर्मवन्त उपस्थाप्यन्ते । प्रयोजनं च तन्निषेधे सति स्वगतस्य सत्यवक्तृत्वादेः, स्ववचनगतस्य सत्यत्वादेर्वा प्रत्ययः । अयमेव च विशेषस्याक्षेपः । एवं स्थिते किमुच्यते तव न कश्चिदपि शत्रुभावेनेत्यादि । यदि तु पूर्वोक्तादेव बाधाद्राजपदस्य शत्रुलक्षणया न वयं शत्रुसंदेशहारिण इति प्राप्तेनार्थेनासत्स्वामिनः शत्रव एव न भवन्ति किं तु भृत्यभावेन पालनीया इति विशेषोऽवगम्यत इत्युच्यते, तदा तृतीयकक्ष्यारूढो नास्मत्स्वामिन इति निषेध आक्षेपः स्यात्, न तदुत्थापकस्त्वदुक्तो यथाश्रुतनिषेधः, यदि तु परम्परया यथाकथंचिद्विशेषोत्थापकोऽप्याक्षेप इत्युच्यते, तथापि 'संधिकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्' इत्यादेस्त्वद्वचनस्यासंगतिरेव । नहि यथार्थवादित्वेन केवलेन त्वदुक्तो विशेष आक्षेप्तुं शक्यते, किं तूत्तरार्धेनाक्षिप्तः परिपोष्टुम् । तस्माद्यत्र त्वया निषेधस्य पर्यवसानमुक्तं स एव विशेषस्तस्याक्षेप्यः, न तु विशेषान्तरम् । अत एव "—'बालक नाहं दूती—' इत्यत्र दूतीत्वस्य वस्तुनो निषेधेन वस्तुवादित्वादिर्विशेषो व्यज्यते" इत्यलंकारसर्वस्वकृतोक्तं संगच्छते ।

इति रसगङ्गाधरे आक्षेपप्रकरणम् ।

वागत्योज्जीवयेति विशेषमाक्षिपति । अन्यथा संघटनमात्रप्रयोजनकत्वात्रगम एव तस्य स्यादिति तत्कालोचितकैतववचनत्वे वाक्यसंभावना स्यादिति । यत्तु सत्यवादित्वरूपविशेषमादायैवाक्षेपत्वमिति, तन्न । तस्याचमत्कारित्वात् । तनोस्ताप इत्यादिनोक्तविशेषे व्यञ्जनीये सहकारित्वं तु तस्यास्तीत्यनुभवसिद्धम् । तं विना तेनापि तस्यानाक्षेपात् । एतेन 'नरेन्द्रमौले' इति कुवलयानन्दोक्तमपि व्याख्यातम् । एवं 'यत्तु नरेन्द्रमौले' इत्यादि, 'नतु विशेषान्तरम्' इत्यन्तग्रन्थोपि चिन्त्य एवेत्याहुः । तवेत्यादि षष्ठी कर्तुः शेषत्वे ॥ इति रसगङ्गाधरमर्मप्रकाशे आक्षेपप्रकरणम् ॥

१ अर्थात् न वयं राजसंदेशहारिणः इत्यस्य 'न वयं कैतववचनप्रयोक्तारः' इति लाक्षणिकार्थबोधोत्तरम् 'वयं सत्यवादिनः स्मः, अस्मद्वचनं न सत्यम्' इति तत्प्रयोजनीभूतव्यङ्ग्यरूपो विशेष एव आक्षेप्तव्यो भवेत् । 'न कश्चिदपि शत्रुभावेनावलोकनीयः । सर्वे राजानो भृत्यभावेन संरक्षणीयाः' इति तु विशेषो न निषेधेनाक्षेप्यः । अपि तु उत्तरार्धे प्रयुक्ते गम्य इत्याशयः ।

२ एवं स्थिते असत्स्वामिनः शत्रव एव न भवन्ति ( अपि तु भृत्यभावेन पालनीयाः ) इति निषेधस्य आक्षेपालंकारत्वं जातम् । त्वया तु 'न वयं राजसंदेशहारिणः' इति निषेधस्य आक्षेपत्वमुदाहृतम् । तदेतदसंगतमित्यर्थः ।

अथ विरोधमूलालंकाराः—

**एकाधिकरणसंबद्धत्वेन प्रतिपादितयोरर्थयोर्भासमानैकाधिकरणासंबद्धत्वम्[1], एकाधिकरणासंबद्धत्वभानं वा विरोधः ॥**

यद्वा—

**एकाधिकरणासंबद्धत्वेन प्रसिद्धयोरेकाधिकरणसंबद्धत्वेन प्रतिपादनं सः ॥**

स च प्ररूढोऽप्ररूढश्च । प्ररोहश्च बाधबुद्ध्यनभिभूतत्वम्[2] । तद्वैपरीत्यमप्ररोहः । तत्राद्यो दोषस्य विषयः, द्वितीयश्चालंकारस्य । अत एवेमं विरोधाभासमाचक्षते । आ ईषद्भासत इत्याभासः । विरोधश्चासावाभासश्चेति । आमुख एव प्रतीयमानो झगिति जायमानाविरोधबुद्धितिरस्कृत इति यावत् । तत्रापि कार्यकारणादिबुद्ध्यनालीढो विरोधाभासो विरोधालंकारः । तदालीढस्तु विभावनादिर्वक्ष्यमाणः । अस्य च जातिगुणक्रियाद्रव्याणां पदार्थानां मध्ये जातेर्जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्याम्, द्रव्यस्य द्रव्येणेत्यपुनरुक्ता[3] दश भेदाः । क्रिया चात्र न वैयाकरणानामिव शुद्धा भावना । नापि नैयायिकानामिव स्पन्दरूपा । किं तु तत्तद्धातुवाच्या विशिष्टव्यापाररूपा ।

---

प्राग्वदाह—**अथेति** । **संबद्धत्वेन प्रतीति** । शनिरशनिश्चेत्यादिनारणायेदमिति कश्चित् । विनिगमनाविरहादाह—**एकाधीति** । तयोस्तत्त्वेन भाने भ्रममूलकत्वादाह—**यद्वेति** । विषय इत्यस्याग्रेऽप्यनुषङ्गः ।

---

१ कयोश्चित्पदार्थयोः एकेन आधारेण सह संबद्धत्वे कविना प्रतिपादितेऽपि तयोः एकाधाराऽसंबद्धत्वप्रतीतिर्विरोधः । यथा—'कुसुमानि शराः' इत्युक्त्या कुसुमत्वं शरत्वं च कविना एकत्र प्रतिपादितं किन्तु तयोरेकाश्रयसंबन्धित्वं न कुत्रचिद् दृष्टम् ।

२ विरोधो हृदि ईदृशो दृढीभूतो योऽग्रे बाधबुद्ध्या न निवारितो भवेत् स वास्तविको विरोधो दोषः । आपाततः प्रतीयमानः, पश्चाच्च अविरोधबुद्ध्या तिरस्कृतो विरोधस्तु अलंकार इत्याशयः ।

३ यथोत्तरं पूर्वपूर्वस्य त्यागेन अपुनरुक्तत्वं बोध्यम् । यथा—यदि गुणस्य विरोधोदाहरणेषु जातेरपि ग्रहणं स्यात्तर्हि—गुणेन सह जातेर्विरोधो जातिविरोधभेदेषु प्रदर्शित एव । यथा—मृणालजालानि कालायसकर्कशानीति । ततश्च पूर्वपूर्वस्य अपरित्यागे पुनरुक्तत्वं स्यादित्याकूतम् ।

उदाहरणम्—

'कुसुमानि शरा मृणालजालान्यपि कालायसकर्कशान्यभूवन्।

सुदृशो दहनायते स्म राका भवनाकाशमथाभवत्पयोधिः ॥

अत्र पुरः स्फुरन्नपि जात्यादीनां विरोधो विरहिणीदुःखजनकत्वविमर्शनान्निवर्तते।

'त्वयि दृष्टे त्वया दृष्टे भवन्ति जगतीतले।

महान्तोऽप्यणवो राजन्नणवश्च महत्तराः ॥'

'खलानामुक्तयो हन्त कोमलाः शीतला अपि।

हृदयानीह साधूनां छिन्दन्त्यथ दहन्ति च ॥'

'विचारिते महिमनि त्वदीये नित्यनिर्मले।

परमात्मन्गगनमप्याधत्ते परमाणुताम् ॥'

'हर्षयन्ति क्षणादेव क्षणादेव दहन्ति च।

यूनः स्मरपराधीनान्निर्दया हन्त योषितः ॥'

'कान्तारे विलपन्तीनां त्वदरातिमृगीदृशाम्।

देवनानि समाकर्ण्य हरिद्भिरपि चुक्षुभे ॥'

इत्यादि स्वयमूह्यम्।

अत्र जात्यादिरिति धर्ममात्रं विवक्षितम्, उपलक्षणपरत्वात्। तेन 'यः किल बालकोऽपि पुराणपुरुषः', 'विशुद्धमूर्तिरपि नीलाम्बुदनिभः', जगद्धितकृदपि जगदहितकृत्', 'अगोद्धारकोऽपि नागोद्धारकः', इत्यादौ सखण्डो-

कालायसं लोहम्। देव राजन्। हरिद्भिर्दिग्भिः। न च नहि।

१ पयेऽऽसन्-कुसुमत्व-शरत्वजात्योर्विरोधः। मृणालजातेः कार्कश्येन गुणेन। राकाजातेः दहनक्रियया। पयोधित्वजातेः आकाशद्रव्येणेति जातेर्विरोधस्योदाहरणानि। एवमग्रे त्वयि दृष्टे० इत्यादीनि गुणादीनां विरोधोदाहरणानि स्वयं बोध्यानि।

२ तव दृष्टिपाते सति अणवः (लघुतराः) अपि पदार्था महत्तरा भवन्ति। दृष्टे इति भावे प्रत्ययः।

३ जगतः अहितम् अकल्याणम्, अहितान् शत्रून् वा कृणत्ति सः।

४ अगस्य गोवर्धनस्य उद्धारकोऽपि न अगोद्धारक इति विरोधः। नागस्य कालियस्य कुवलयापीडस्य वा उद्धारकर्ता इति तु तत्परिहारः।

५ बालकः, विशुद्धमूर्तिरित्यादिः। अभावः—हितकृत् अहितकृत्। अगोद्धारकः, न अगोद्धारकः इति।

पाद्येरभावस्य च परिग्रहः। वस्तुतो जात्यादिभेदानामहृद्यत्वाच्छुद्धत्वश्लेषमूलत्वाभ्यां द्विविधो ज्ञेयः।

ननु 'हितकृदप्यहितकृत्', 'अगोद्धारकोऽपि नागोद्धारकः' इत्यादौ विरोधस्य प्रतिभामात्रम्, श्लेष एव त्वलंकारः। तस्य स्वविषये प्रायशः सर्वालंकारापवादकत्वादिति चेत्, कविः शृणोति। इदं तु बोध्यम्—यत्रापि शब्दादिर्विरोधस्य द्योतकस्तत्र विरोधः शाब्दः, अन्यत्र त्वार्थ इति तावत्प्राचां सिद्धान्तः। तत्र शाब्दत्वं शब्दकरणक[1]प्रतीतिगोचरत्वं विरोधस्य न घटते। 'त्रयोऽप्यत्रयः' इत्यादौ नियतेषु विशेषणविशेष्यसंसर्गेषु विरोधस्य कुत्राप्यसमावेशात्। न च तदधिकरणावृत्तित्वमिव तत्प्र[2]तियोगिकत्वमपि विरोधः। तथा च प्रकृते नञर्थोत्तरपदार्थयोः प्रतियोगित्वस्य संसर्गत्वात्संसर्ग एव विरोधस्य समावेश इति वाच्यम्। 'सुप्तोऽपि प्रबुद्धः' इत्यादौ तथाप्यसमावेशात्। नहि सुप्तः सुप्तत्वविरु[3]द्धप्रबुद्धत्ववदभिन्न इति शाब्दधीरनुभवसिद्धा, येन लक्षणा[4]दिकुसृष्टौ यतेमहि। अत्राहुः—'सुप्तोऽपि प्रबुद्धः', 'त्रयोऽप्यत्रयः' इत्यादिषु विरोधोदाहरणेषु शब्दद्वयेन शयितत्वजागरितत्वादिधर्मद्वयस्यादावुपस्थितौ संबन्धि[5]ज्ञानादपिशब्दसाचिव्यात्त-

१ शब्दद्वारा ( शब्दश्रवणोत्तरम् ) या प्रतीतिः तद्गोचर( विषय )त्वं विरोधस्य नोपपद्यते। यदि हि शब्दद्वारा विरोधस्य प्रतीतिः प्रतिपद्येत तर्हि विरोधप्रतीतिविषययोर्द्वयोः ( विशेष्यविशेषणयोः यथा कुसुमं विशेषणं शरा विशेष्यम् ) कश्चन मिथः संसर्गोऽवश्यं स्यात्। परं विशेष्यविशेषणयोः ये ये संसर्गा नियतास्तेषु 'त्रयः अपि अत्रयः' इति विरोधस्य न समावेश इति शङ्का।

२ तदधिकरणावृत्तित्वम् [ तस्य यद् अधिकरणं तत्र अवर्तमानत्वम्। यथा बालकत्वस्य अधिकरणं बालकः, तत्र पुराण( वृद्ध )त्वस्य अवृत्तिः इति बालकत्व-वृद्धत्वयोर्विरोधः ] एवमेव तत्प्रतियोगित्वम् ( तत्प्रतिद्वन्द्वित्वम् तद्विरुद्धत्वम् ) अपि विरोधः।

३ सुप्तोपि प्रबुद्ध इत्यादौ सुप्तत्वं च प्रबुद्धत्वं च एकत्र प्रतीयते, न तु सुप्तत्वस्य विरुद्धं यत् प्रबुद्धत्वं तद्वदभिन्न इति बोधः। एवं सति सुप्तत्वविरुद्धस्य प्रबुद्धत्वमात्रस्यैव तत्र प्रतीतिः स्यान्न तु सुप्तत्वस्यापि। अनुभवसिद्धा चोभयोरेकत्र प्रतीतिः। विरोधालंकारलक्षणेपि च तथैव सूचितमित्याशयः।

४ यदि तादृशी ( सुप्तत्वविरुद्धप्रबुद्धत्ववदभिन्न इति ) प्रतीतिरनुभवसिद्धा स्यात्तदैव तदुपपत्त्यर्थं लक्षणाद्यगतिकगतिरवलम्बितव्या भवतीत्यर्थः।

५ इमौ द्वावपि मिथः प्रतिद्वन्द्वितासंबन्धिनौ इति ज्ञानात्, अपिशब्दस्य च सहकारात्।

द्भुतो विरोधोऽपि स्मर्यते। अनन्तरं च प्रतिबन्धकज्ञानसामग्र्या बलवत्त्वाद्विरुद्धाविमौ धर्माविति मानसे वैयञ्जनिके वा विरोधबोधे जाते तेन प्रतिरोधाच्छयितजागरितयोरभेदबुद्धेरनुत्पादाद्द्वितीयशक्त्या प्रादुर्भावितं द्वितीयार्थमादायान्वयबोधः, न तु विरुद्धार्थम्। विरोधधीश्च शिथिलमूला निवर्तमानापि कविसंरम्भगोचरतया चमत्कारकारणमिति प्राचां निष्कर्षः।

नव्यास्तु—'अर्थद्वयप्रादुर्भावं विना विरोधाभास एव न संभवति। तत्रैको विरोधस्योल्लासकः द्वितीयश्चान्वयबोधविषय इति तत्सत्यम्। परं तु अन्वयबोधविषये द्वितीयार्थे विरोधोल्लासकोऽप्यर्थो भेदेऽपि श्लेषभित्तिकाभेदाध्यवसाय इत्युक्तदिशा अभिन्नतया भासते। एवं चाविरुद्धं द्वितीयार्थमादायान्वय-बोधे सत्यपि स्वास्पदीभूतस्य विरुद्धार्थस्य निःशेषतया निवृत्तेरभावादर्धमृतः श्वसन्निव विरोधोऽपि मानसं बोधान्तरमारोहति। अत एव चमत्कारीत्युच्यते। नहि निःशेषतया निवृत्तश्चमत्कारं जनयितुमीष्टे। न चान्तरेण चमत्कारजनकतामलंकारो भवति। तस्माद्विरोधधियो नातीव शिथिलमूलत्वम्, नापि चात्यन्तिकी निवृत्तिः' इत्याहुः।

**निवृत्तिरित्याहुरिति**। वयं तु ब्रूमः—सुप्तोऽपि प्रबुद्ध इत्यादौ समानाधिकरणविभक्त्यर्थयोरभेदः। अपिशब्देन च समभिव्याहृतैकपदार्थतावच्छेदकविरुद्धत्वमपरपदार्थतावच्छेदके द्योत्यते। तत्र गमकद्वयसत्त्वात्प्रकरणादेर्नियामकस्याभावाच्चार्थद्वयमपि युगपदवभासते। तत्राभेदस्य मुख्यवाक्यार्थत्वात्तद्योग्यार्थस्य विरुद्धा-

१ अयं सारः—शयितोपि प्रबुद्ध इत्यादौ प्रबुद्धपदस्य जागरितार्थग्राहिकया एकया शक्त्या परस्परविरुद्धार्थस्य बोधे जाते द्वयोरभेदबुद्धिः प्रतिरुध्यते। परम् प्रबुद्धपदस्य ज्ञानवदर्थविषयिण्या द्वितीयया शक्त्या ज्ञानवदर्थबोधे जाते सुप्तत्वस्य ज्ञानशालित्वरूपद्वितीयार्थेन समन्वयः [ ऐकाधिकरण्यम् ] संघटते, न तु पूर्वजातेन विरुद्धार्थेन ( जागरितत्वरूपेण ) समन्वयः। उपनिबन्धकस्य कवेस्तत्रैव चमत्कारकतयाऽभिनिवेश इति निवर्तमानापि सा विरोधबुद्धिरेव चमत्कारिणीत्यलंकारत्वव्यपदेशहेतुः।

२ अर्थात् प्रबुद्धपदस्य परस्परसमन्वयकारकेण ज्ञानवदर्थेन सह एकपदोपस्थाप्यतारूपस्य अभेदाध्यवसायस्य बलात् विरोधोल्लासकः जागरितत्वरूपोऽर्थोपि अभिन्नतया भासते [ यतो हि सुप्तोपि प्रबुद्ध इत्यत्र द्वयोरप्यर्थयोः प्रबुद्धपदेनैव प्रतीतिः ]। समन्वयेन द्वयोरविरोधे जातेऽपि सहोद्भूता अंशतोऽवशिष्टा विरोधबुद्धिरपि स्वकार्यं संपादयत्येव। प्राचां मते—विरोधधीः शिथिलमूला निवर्तते। नव्यानां मते—न तस्याः शिथिलमूलत्वम्, न चापि निःशेषं निवृत्तिरिति भेदः।

ननु अपिशब्दादीनां प्रयोगे शाब्दो विरोधो भासत इति तथाप्यसंगतम्। निपातानां शाब्दिकनये शक्तेरस्वीकारादिति चेत्, न। निरूढलक्षणाया इव निरूढद्योतनाया अपि शक्तिसमकक्षत्वात्[1]। अथ जात्योर्द्रव्ययोश्च विरोधालंकारो भवितुमीष्टे। 'कुसुमानि शराश्चन्द्रो वाडवो दुःखिते हृदि' इत्यादावारोपमूलस्य रूपकस्यैवोल्लासात्। यदि च सत्यप्यारोपे विरोधाभास उच्यते, उच्यतां तर्हि 'मुखं चन्द्रः' इत्यत्रापि स एव। न च रूपकविषयस्य सर्वस्यापि विरोधेनाक्रान्तत्वान्निर्विषयत्वापत्त्या स्वविषये रूपकं विरोधस्य गुणादौ सावकाशस्यापवाद[2] इति वाच्यम्। 'कुसुमानि शराः', 'मृणालवलयादि दवदहनराशिः', 'चन्द्रो वाडवः', 'शंकरचूडापगा कालिन्दी' इत्यादौ त्वदभीष्टविरोधस्या[3]सिद्धिप्रसङ्गादिति चेत्, सत्यम्। इह हि अलंकारवर्गे यो यत्र सहृदयचमत्कृतिपथमवतरति स एव तत्रालंकार इति निर्विवादम्। एवं च रूपके 'मुखं चन्द्रः' इत्यादौ यद्यप्यस्ति विरोधस्तथापि न स तत्र प्रतिपिपादयिषितः। अपि तु चन्द्रनिष्ठाह्लादकत्वादिस-

श्लेषभित्तिकाभेदाध्यवसायेन विशेषणत्वं विरुद्धार्थस्य तत्रेति युक्तम्। एवं च स्वापविरुद्धजागरणाभिन्नविशिष्टज्ञानाश्रय इति बोधः। यत्र त्वपिशब्दाभावस्तत्र प्रथमतः शाब्दान्वयबोधे जाते सहृदयतावशाद्वितीयार्थोपस्थितौ विरहाद्युद्बोधकसहकृतैकसंबन्धिज्ञानविधया विरोधोपस्थितौ व्यञ्जनयैव तादृशबोधः। अतएवापिशब्दाभावे विरोधो व्यङ्ग्य इत्याहुः। विरोधस्याभासत्वं चाहार्यबोधविषयत्वात्कार्यनिष्पादकत्वाभा-

१ अपिशब्दस्य विरोधवाचकत्वं यदि स्यात्तदैव अपिशब्दप्रयोगे विरोधः शाब्द इति वक्तुं शक्येत। न तथा। निपातानां द्योतकत्वात्। इति शङ्का। निरूढलक्षणावत् निरूढद्योतनावशात् अपिशब्दस्य विरोधबोधकत्वं शाब्दमिति तत्समाधानम्।

२ 'कोमलाः शीतला अपि खलानामुक्तयः साधूनां हृदयं छिन्दन्ति दहन्ति च' इत्यादौ न रूपकातिप्रसङ्गः [ एकस्मिन्नन्यस्यारोपाभावात् ], इति सावकाशो विरोध इत्यर्थः।

३ अभीष्टस्तु विरोधालंकारः किन्तु पूर्वोक्तयुक्त्या अपवादतया रूपकं स्यात्ततश्च स्पष्टमनभीष्टतेत्यर्थः।

कलगुणानां मुखे प्रतिपत्त्यर्थं चन्द्राभेद एवेति स चमत्कारी, न विरोधः। प्रत्युत सन्नपि विरोधो विवक्षितार्थाननुगुणत्वानुदूषित इति नालंकारः, विद्यमानताया अकिंचित्करत्वात्। 'कुसुमानि शराः' इत्यादौ तु विरहिण्यादीनामवस्थाया अत्यद्भुतत्वस्य विवक्षितत्वात्तदानुगुण्यायान्तर्गर्भितोऽप्यार्थो विरोधः समुल्लसतीति स एवालंकारः। न चैवमपि रूपकस्थले विरोधोऽविवक्षितत्वान्मा नामाभूदलंकारः, विरोधस्थले तु 'कुसुमानि शराः' इत्यादौ विरोधोत्थापनार्थमभेदस्यावश्यं विवक्षणीयत्वाद्रूपकापत्तिरिति वाच्यम्। विरोधविवक्षानालिङ्गितत्वस्य रूपकलक्षणे निवेश्यत्वात्।

यद्वा अभेदस्यात्र विरोधोत्थापनार्थमुपात्तस्याचमत्कारित्वाद्रूपकालंकारत्वमयुक्तम्। तत्तदलंकारलक्षणेषु अलंकारसामान्यलक्षणे वा चमत्कारित्वस्योक्तत्वात्। यदि तु विरहिण्याद्यवस्थाया अत्यद्भुतत्वादि न विवक्षितमप्यर्थश्च न गर्भीकृतः, किं तु पीडाजनकत्व–श्यामत्वाद्यतिशयमात्रं विवक्ष्यते, तदात्र रूपकमेव। यदि वा नगरविशेषस्थितेरद्भुतत्वविवक्षया यत्र हि नारीणां मुखं चन्द्र इत्युच्यते, तदा विरोधाभास एवेति ध्येयम्।

ननु 'सुप्तोऽपि प्रबुद्धः' इत्यादौ यथैकेनार्थेन विरोधस्योत्थापनमपरेण च निवृत्तिः, एवम 'गङ्गायां घोषः', 'मञ्चाः क्रोशन्ति', 'कुन्ताः प्रविशन्ति' इत्यादावपि शक्येन तस्योत्थानं लक्ष्येण च निवृत्तिरिति विरोधाभासप्रसङ्गः। न च दृष्टान्ते विरोधोत्थापक–निवर्तकयोरर्थयोः शक्त्यैवोप-

वेनेति। तदनिवेशजलाघवादाह—**यद्वेति**। अत्र कुसुमानीत्यत्र। ननु तर्हि गौरवं तत्प्रयुक्तमस्त्येवात आह—**तत्तदिति**। इतोऽपि लाघवादाह—**अलंकारेति**। **श्यामत्वाद्यतिशयेति**। शंकरचूडापगेत्यत्रेत्यर्थः। **एवेति ध्येयमिति**। एवं च 'विरोधानुपपत्तिश्चेद्गुणद्रव्यक्रियादिषु। अमन्दचन्दनस्यन्दः स्वच्छन्दं दहतीह माम्॥'

---

१ प्रतिपिपादयिषित इति पूर्वेणानुषङ्गः।

२ विवक्षितोऽर्थः चन्द्रगुणानां मुखे स्थापनार्थं द्वयोरभेदः। तदपेक्षया अननुगुणो विरोधः यो हि द्वयोर्विरुद्धतां सूचयित्वा चन्द्रनिष्ठगुणप्रतीतिं प्रतिबध्नाति।

३ विरोधविवक्षाशून्यस्थले एव रूपकं भवतीत्यर्थः। कुसुमानि शरा इत्यादौ तु विरोधविवक्षाया जागरूकत्वान्न रूपकमित्याशयः।

४ प्रबुद्धपदस्यानेकार्थतया द्वयोरप्यर्थयोः शक्त्यैवोपस्थितिरित्यर्थः।

स्थितिः, दार्ष्टान्तिके तु पृथग्वृत्त्येति वैलक्षण्यमिति वाच्यम् । सत्यपि वैलक्षण्ये त्वदुक्तविरोधाभासलक्षणातिप्रसङ्गस्यानिवारणात् । नहि लक्षणे विरोधोत्थापक–निवर्तकयोरेकवृत्तिवेद्यत्वमेकजातीयवृत्तिवेद्यत्वं वा विवक्षितम् । तथा सति 'कुसुमानि शराः' इत्यादौ प्राचीनैरीत्याऽव्याप्तिप्रसङ्गादिति[1] चेत्, विरोधस्यात्र प्रतिभानेऽपि कविसंरम्भागोचरत्वेनाचमत्कारित्वात् ।

अयं च विरोधालंकारः कुवलयानन्दकृता उत्प्रेक्षाशिरस्कोऽप्युदाहृतः । यथा—

'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥' इति ।

विरोधप्रतीत्यनन्तरं यत्रार्थान्तरप्रतिपत्त्या विरोधस्य समाधानं तत्र विरोधाभास इष्यते । यथा—'रिपुराजिरसभावभञ्जनोऽप्यरिपुराजिरसभावभञ्जनः'[2][3] इत्यादौ । इह तूत्प्रेक्षया विरोधसमाधानात्मिकया मुखस्थितया विरोधस्योत्थानमेव भग्नमिति कथमनुत्तिष्ठन्नेव विरोधश्चमत्कारमूलमलंकारभावं वहेत् ।

इति रसगङ्गाधरे विरोधप्रकरणम् ।

---

इति जयदेवोक्तो विरोधो विरोधाभास एवेति बोध्यम् । **अलंकारभावं वहेदिति** । अत्रेदं चिन्त्यम्—प्रतीपभूपैरित्यत्र हि विरुद्धधर्मगततया स्वाश्रयभेदकत्वत्यागोत्प्रेक्षायां विरुद्धतयावभासमानपदार्थानां श्लेषभित्तिकाभेदाध्यवसायेनाविरुद्धतादात्म्यापन्नानां सहवासो निमित्तम् । निमित्तप्रतिपादकं चोत्तरार्धम् । विरोधभानमन्तरेण विरुद्धधर्मैरपीत्याद्युत्प्रेक्षाया अनुत्थानाच्च । एवं च निमित्तांशे विरोधालंकारमुपजीव्यैव विरोधत्यागोत्प्रेक्षा अर्थान्तरानुगृहीता । पश्चात्तत्साधनत्वेन स्थितेत्युत्प्रेक्षाङ्गमत्र विरोध इति । **इति** रसगङ्गाधरमर्मप्रकाशे विरोधप्रकरणम् ॥

---

१ प्राचीनानां मते रूपकादिषु लक्षणा । अत एव शरपदस्य शरसदृशे लाक्षणिकतया विरोधनिवर्तकस्य ( शरसदृशार्थस्य ) वृत्त्यन्तरवेद्यत्वात् विरोधलक्षणस्य अव्याप्तिरित्यर्थः ।

२ रिपुराजेः रसभावौ भनक्ति, राज्यश्रीहारित्वात् ।

३ विरोधपरिहारस्तु—अरेः पुराणाम् अजिराणाम् सभानां च अवभञ्जन इति ।

अथ विभावना—

**कारणव्यतिरेकसामानाधिकरण्येन[1] प्रतिपाद्यमाना कार्योत्पत्तिर्विभावना ॥**

तदुक्तम्—'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति। क्रियाशब्देनात्र कारणं विवक्षितम्। अत्र कारणव्यतिरेकसामानाधिकरण्येन कार्योत्पत्तौ निबध्यमानायामापाततो विरोधः प्रतिभासमानोऽपि तदितर[2]कारणकल्पनया निवर्तते। यथा—

> 'विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः।
> अनन्त[3]मायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः[4] ॥'

अत्र हि दारणे शस्त्रं कारणम्। तदभावेऽपि दारणमुपनिबध्यमानमापाततो विरुद्धमपि कामिनीविलासरूपहेतुकतया पर्यवस्यति।

नन्वत्र यस्य कार्यस्योत्पत्तिर्निबध्यते नहि तदीयकारणत्वेनावगतस्य व्यतिरेकः प्रतीयते। यदीयकारणव्यतिरेकश्च प्रतीयते नहि तस्य कार्यस्योत्पत्तिर्निबध्यते। दारणं चेह पीडाविशेषो विवक्षितः, न तु द्विधाभावः। शस्त्रं च न कामपीडायाः कारणम्, अपि तु द्वैधीकरणस्येति[5]

१ कारणाभावसमानाधिकरणायाः कार्योत्पत्तेः (कारणाभावः स्यात्तथापि कार्योत्पत्तिः स्यात्) प्रतिपादनं विभावनेत्यर्थः।

२ अर्थात् कारणं विना कार्यस्योत्पत्तिरिति विरोधस्य प्रथमम् आभासो भवति, परम् तत्कार्यं प्रति प्रसिद्धस्य वस्तुनः कारणत्वाभावेऽपि अन्यस्य वस्तुनः कारणत्वकल्पनात्तस्य (विरोधस्य) निवृत्तिः। यथा—'शस्त्रं विनैव यूनां हृदयानि दारयन्त्य इन्दीवराक्ष्यो जयन्ति' अत्र दारणं प्रति शस्त्रं कारणं प्रसिद्धम्, अस्याऽभावेपि दारणरूपं कार्यं भवतीति विभावना। इह हि कारणं विना कार्योत्पत्तिरिति आपाततो विरोधस्य प्रतिभास एव। परं तु प्रसिद्धं कारणम् (शस्त्रम्) विहाय कामिनीविलासानां हृदयदारणे कारणत्वकल्पनात् (कारणसत्तयैव कार्योत्पत्तिसाधनात्) तन्निवृत्तिरित्याशयः।

३ अनेकमाया('जादू' इति भाषाप्रसिद्धा)मय्यः मधुराः लीलाः (विलासाः) यासां ताः।

४ इन्दीवरदीर्घाक्ष्यः।

५ अयं भावः—'विनैव शस्त्रम्०' अत्र कामजनितपीडाविशेषं प्रति इन्दीवराक्षीणाम् कारणत्वं साधितम्, तादृशकार्यं प्रति तादृश(स्त्रीरूप)कारणस्य अभावः क्वास्ति? अपि तु इन्दीवराक्ष्यः स्वयं शब्दोपात्ता एव। यादृशस्य शस्त्ररूपकारणस्य च अभावः अत्र प्रतीयते, न तत्(शस्त्र)कृतकार्यस्य (द्वैधीभावरूपस्य) अत्र उत्पत्तिर्वर्णिता। अपि तु कामजनितपीडाविशेषस्यैवेति कारणाभावः कथम्? इति शङ्का।

चेत्, न । मुख्यं हि दारणं द्विधाभावनम् । गौणं च कामादिजनितपीडाविशेषः । तयोर्गौणमुख्ययोर्दारणयोः सादृश्यमूलेनाभेदाध्यवसानरूपेणातिशयेन सति भेदस्थगने, द्विधाभावनकारणमपि[1] शस्त्रं कामपीडाकारणं संपद्यते । तदभावे चात्र कार्याभिन्नतयाध्यवसितस्य पीडाविशेषस्योपनिबन्धनान्न दोषः । एवं चास्मिन्नलंकारे सर्वत्रापि कार्यांशे[2] अभेदाध्यवसानरूपातिशयोक्तिरनुप्राणकतया स्थिता । तया च पायसादिपिण्डवदेकीकृतस्य वस्तुतः सदृशवस्तुद्वयस्यैकावयवसंबन्धिकारणव्यतिरेकसामानाधिकरण्येनापरावयवमादाय पर्यवसानं[3] भवति ।

तत्र च कार्यांशः कारणाभावरूपविरोधिनो बाध्यतयैव स्थितः, न बाधकतया । कार्यांशस्य कल्पितत्वात्कारणाभावस्य च स्वभावसिद्धत्वात् । अत एव कार्यांशो रूपान्तरेण पर्यवस्यति । अत एव च समबलविरोधिद्वयघटिताद्विरोधालंकारादस्य वैलक्षण्यम् । तथा चोक्तम्—

---

प्रागवदाह—**अथेति** । **सादृश्यमूलेनेति** । श्लेषमूलेनेत्यपि बोध्यम् । **कार्याभिन्नतयेति** । शस्त्रकार्यद्विधाभावेनाभिन्नतयेत्यर्थः । **वस्तुतः सदृशवस्तुद्वयस्येति** । इदं षष्ठ्यन्तं पर्यवसानमित्यत्रान्वेति । तत्र सामानाधिकरण्येनेत्यन्तं हेतुः ।

---

१ अर्थात् अभेदाध्यवसानेन गौण–मुख्ययोर्द्वयोः कार्ययोः, तत्कारणयोश्च अभेदबुद्धिर्भवति । ततश्च गौणकारणमपि प्रधानकारणात् ( शस्त्रात् ) अभिन्नमध्यवसितम् । तादृशस्य ( प्रसिद्धस्य ) कारणस्याऽभावेऽपि द्वैधीभवनादभिन्नस्य कामपीडाविशेषरूपस्य कार्यस्योपनिबन्धनमत्र कृतमिति कारणाभावे कार्योत्पत्तिदर्शनाद्विभावनालक्षणस्य समन्वय एवेति तत्समाधानम् ।

२ अर्थात् अतिशयोक्तिः गौणं कार्यमपि प्रधानाभिन्नं दर्शयति । यथा—'विनैव शस्त्रम्०' अत्र कामजनितपीडाविशेषमपि शस्त्रजनितद्वैधीभवनरूपं प्रत्याययति । अत एव विनैव शस्त्रं दारयन्त्य इत्युक्तिर्घटते ।

३ अयं भावः—सदृशे द्वे वस्तुनी संयोज्य यथा एकीक्रियेते [ यथा पयोनिर्मित 'खोआ'–'मावा' द्विविधपिण्डौ एकत्र संयोज्येते ] तथा अत्र द्विविधे अपि कार्ये [ गौण–मुख्ये, यथा विनैव शस्त्रम्० अत्र गौणं कामपीडाविशेषः, प्रधानं द्विधाभावनम् ] अभेदाध्यवसानातिशयोक्त्या एकीकृते । तत्र कारणाभावकोटौ प्रधानकार्यसंबन्धिकारणाभावो गृह्यते । कार्योत्पत्तिश्च गौणस्य कार्यस्य । यथा विनैव शस्त्रम्० अत्र कार्यस्य तु कामजनितपीडाविशेषस्य गौणस्योत्पत्तिः । कारणाभावावगमनकाले तु मुख्यकार्यस्य ( द्विधाभावनस्य ) यत्कारणम् ( शस्त्रम् ) तस्याभावो बुद्धिस्थो भवति । अत एव शस्त्रं विनापि दारणं जनयन्त्यः कमललोचना इति प्रत्ययो भवति ।

'कारणस्य निषेधेन बाध्यमानः फलोदयः।
विभावनायामाभाति, विरोधोऽन्योन्यबाधनम्॥' इत्याहुः[1]।

अथातिशयोक्तिर्न सर्वस्यां विभावनायामनुप्राणिका। किं तु क्वचित्।

'निरुपादानसंभारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥'

इत्यत्र विभावनायामतिशयोक्तेरध्यवसानमूलाया अननुप्राणकत्वा[2]दिति। ननु कारणाभावे कार्योत्पत्तिरसंभवन्ती कविना अभिप्रायविशेषेण निबध्यमाना हि विभावना। न चात्रोपादानान्तराभावे[3] जगत उत्पत्तिः परमेश्वरादसंभवन्ती येन विभावना स्यात्। 'नासदासीत्', 'सदेव सोम्येदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्', 'असद्वा इदमग्र आसीत्ततो वै सदजायत' इत्यादिश्रुतिभ्यः, 'अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्' इत्यादिस्मृतिभ्यश्च सृष्टिकाले भगवदतिरिक्तवस्तुजातप्रतिषेधावगमात्। तस्मादत्र विभावनाया एव संभावना नास्ति क्व पुनरतिशयोक्त्यनुप्राणितत्वव्यभिचार इति चेत्, न। अत्र हि भगवतः सकाशात्के-

१ 'तत्र कार्यांशः०' इत्यादेः संदर्भस्येदं विशदीकरणम्—विभावनायां कारणाभाव—कार्ययोर्विरोधः प्रतीयते (विना कारणं कार्योत्पत्तेर्विरुद्धत्वात्)। तत्र कार्यांशो बाध्यः (दुर्बलः) कारणाभावो बाधकः। यतो हि कार्यमत्र गुणीभूतं गृह्यते (यथा हि विनैव शस्त्रम्, अत्र कामजनितपीडाविशेषः), ततश्च कल्पितत्वाद्बाध्यम्। कारणं तु मुख्यं प्रतीतिगम्यं भवति। अत एव कारणकोटिर्बाधिका। एवं च विभावनायां द्वयोर्मध्ये एकं बाध्यम् अन्यो बाधकः इति दुर्बल—सबलयोर्विरोधः। विरोधालंकारे तु समबलयोः (अत एव बाध्यबाधकत्वाऽव्यपदेश्ययोः विरोध इति द्वयोर्वैलक्षण्यम्। विभावनायां कारणस्य निषेधेन अभावेन फलोदयः (कार्योत्पत्तिः) बाध्यमानः आभातीति कारणस्य निषेधेनेति पद्येऽन्वयः।

२ चित्ररूपं कार्यं प्रति उपकरणसंभारस्य भित्तेश्च कारणत्वम्। तद्विनापि चित्रजननकार्योत्पत्तिरूपायामस्यां विभावनायां कार्यांशे (चित्रे) अभेदाध्यवसानस्य नावश्यकतेत्यर्थः।

३ जगदुत्पत्तौ ब्रह्मैवोपादानम्। ब्रह्मण एव जगद्रूपतया परिणमनात्। एतदुपादानातिरिक्तम् अन्यत् उपादानं नास्तीत्यर्थः। एवं च ब्रह्मोपादानकस्य जगतोऽनित्यत्वं वदन्तो विचार्या एव। भ्रमकल्पितस्य संसारस्य त्ववश्यमनित्यत्वमित्यलं प्रसक्तानुप्रसक्तेन।

वलस्य जगत उत्पत्तिर्न कवेरभिप्रेता। येन तस्या उपादानान्तरव्यतिरेकेऽपि भगवतः सकाशात्संभवादसंभवमूला विभावना न स्यात् । किं तु जगद्रूपस्य चित्रस्य । चित्रस्य च केवलस्योपादानानां मषी—हरितालादीनामाधारस्य भित्त्यादेश्चाभावे केवलाकाशे जागर्त्येवोत्पत्तेरसंभवः[1] । स च तस्य जगद्रूपतानुसंधानात्तत्कारणतदाश्रयव्यतिरेकमादाय[2][3] निवर्तत इति 'निरुपादानसंभारम्' इत्यत्र निष्प्रत्यूहेव विभावनेति भवत्यतिशयोक्त्यनुप्राणितत्वव्यभिचारः । एतेन 'विभावनायां सर्वत्रातिशयोक्तिरनुप्राणिका' इति सर्वस्वकारोक्तिरपास्ता । तथा "-'निरुपादानसंभारम्' इत्यत्र विभावनाया एवाभावात्कुत्र व्यभिचारः" इति वदन् विमर्शिनीकारोऽपि प्रत्युक्त इति । उच्यते—मा स्म भूत्सर्वत्र विभावनायामतिशयोक्तिरनुप्राणिका । आहार्याभेदबुद्धिमात्रमेवानुप्राणकम् । तच्च कचिदतिशयोक्त्या, कचिच्च रूपकेणेति न दोषः[4] ।

यत्तु—"कारणं विना कार्योत्पत्तिरेका विभावना । कारणानामसमग्रत्वे द्वितीया । सत्यपि प्रतिबन्धके कार्योत्पत्तिस्तृतीया । अकारणात्कार्योत्पत्तिश्चतुर्थी । विरुद्धात्कार्यजन्म पञ्चमी । कार्यात्कारणजन्म षष्ठी । क्रमेणोदाहरणानि—

'अप्यलाक्षारसासिक्तं रक्तं तन्व्याः पदाम्बुजम् ।'
'अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ।'
'सातपत्रं दहत्याशु प्रतापतपनस्तव ।'
'शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ।'
'शीतांशोः किरणा हन्त दहन्ति सुदृशो दृशौ[5] ।'
'यशःपयोधिरभवत्करकल्पतरोस्तव ।"

---

१ उत्पत्तेः असंभवः जागर्त्येव ( स्पष्टं प्रकाशत एव ) ।

२ तस्य चित्रस्य जगद्रूपतानुसंधानात् । अर्थात् इदं केवलं चित्रं न, अपि तु जगद्रूपम् ।

३ तस्य जगतः कारणम् ( उपादानसंभारः ), तस्य जगतः आश्रयः ( अन्य आधारः ), अनयोरभावेपि जगतः सृष्टिः परमेश्वरेण अनिर्वचनीयसामर्थ्यात्कृतेति असंभवस्य निरासः ।

४ निरुपादानसंभारम्० अत्र जगच्चित्रमिति रूपकेण आहार्याभेदबुद्धिरित्याशयः ।

५ चन्द्रकिरणाः सुदृशः ( सुनयनायाः ) दृशौ नेत्रे दहन्तीत्यर्थः ।

इति षट्प्रकारां विभावनामुदाजहार कुवलयानन्दकृत्। तत्रेदं वक्तव्यम्—

'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके।'
'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना॥'

इत्यादिभिर्विभावनाप्रकारानालक्षयता विनापि कारणं कार्योत्पत्तिरित्यप्येको विभावनाप्रकार इत्युक्तं भवति। अन्यथा चतुर्थीत्वाद्यसंगतेः[1]। एवं च यथा—'सादृश्यमुपमा भेदे', 'तद्रूपकमभेदो य उपमानोपमेययोः' इत्यादिभिर्लक्षितस्योपमा–रूपकादिसामान्यस्य पूर्णादयः[2] सावयवादयश्च भेदा उक्तास्तथेह किं तद्विभावना[3]सामान्यलक्षणम्? यल्लक्षितस्य विभावनासामान्यस्यामी भवतोक्ताः प्रकारा उपपद्येरन्। कारणं विना कार्योत्पत्तेस्तु प्रकारान्तःपातित्वात्। अथातिशयोक्त्यादिष्विव तादृशसकलप्रकारान्यतमत्वं सामान्यलक्षणमुन्नेयमिति चेत्, एवमपि प्रथमप्रकाराद्द्वितीयप्रकारस्य वैलक्षण्यं दुरुपपादमेव। कारणाभावेऽपि कार्योत्पत्तिरित्यत्र कारणतावच्छेदकसंबन्धेन कारणतावच्छेदका[4]वच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्। प्रकारान्तरस्वीकारापेक्षया तादृशविवक्षाया एव लघुत्वात्। एवं प्रतिबन्धकमपि कारणाभाव एव। प्रतिबन्धकाभावस्य कारणत्वात्। इति तृतीयोऽपि भेदो न विलक्षणः। चतुर्थेऽपि भेदे कारणाभाव आर्थः।

१ अर्थात् 'विनापि कारणं कार्योत्पत्तिः' इति यदि 'प्रथमः प्रकारः' इति कृत्वा न गण्येत तर्हि अकारणात्कार्यजन्मेति प्रकारस्य चतुर्थत्वं नोपपद्येत इत्यर्थः।

२ पूर्णा लुप्ता इति उपमायाः, सावयव–निरवयवादयो रूपकस्य भेदा इत्यन्वयः।

३ अर्थात् पूर्वं विभावनासामान्यस्य लक्षणं वक्तव्यं यस्य हि कारणाभावे कार्योत्पत्त्यादयः प्रकाराः संभवेयुः।

४ अर्थात् अत्र कारणाभावपदेन तादृशः अभावो विवक्षितः यस्य प्रतियोगिता कारणतावच्छेदकसंबन्धेन (अर्थात् कारणत्वरूपमसाधारणं धर्ममादाय) कारणतावच्छेदकाऽवच्छिन्ना भवति। यद् यद् हि कारणत्वावच्छिन्नम् (कारणपदेन व्यपदेष्टुं शक्यम्) सर्वविधस्यापि तस्य कारणस्याभाव इत्याशयः। ततश्च कारणानामसमग्रत्वम् [ समग्रत्वे सत्येव कारणमुच्यते, अत एव असमग्रत्वेऽपि कारणाभाव एव फलति ] प्रतिबन्धकमपि कारणाभाव एव [ प्रतिबन्धकाभावे कार्यजननेन कारणत्वस्य दर्शनात् ] इति 'कारणत्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावे कार्योत्पत्तिर्विभावना' इति लक्षणे सर्वेऽपि प्रकारा एकस्मिन्नेवान्तर्भवन्तीति सिद्धम्।

'शङ्खाद्वीणानिनादोऽयम्' इत्युक्ते वीणां विनैवेति प्रत्ययाद्वैलक्षण्यम्। तस्मादाद्येन प्रकारेण प्रकारान्तराणामालीढत्वात्षट्प्रकारा इत्यनुपपन्नमेव। यदि तु यथाकथंचित्कुवलयानन्दोक्तिः समर्थनीयेत्याग्रहस्तदेत्थं समर्थ्यताम्—तथा हि विनापि कारणं कार्यजन्मेति विभावनायाः सामान्यलक्षणम्। इयं च तावद्द्वेधा—शाब्दी, आर्थी च। शाब्दी त्रिविधा—प्रतिबन्धकातिरिक्तकारणव्यक्तिप्रतियोगिकाभावोक्तिपूर्विका[1], सत्यामपि कारणव्यक्तौ यदवच्छिन्नत्ववैकल्यप्रयुक्तः कार्याभावस्तद्वैकल्योक्तिपूर्विका[2], स च कारणतावच्छेदकधर्मः क्वचित्कारणतावच्छेदकसंबन्धश्च, प्रतिबन्धकोक्तिपूर्विका चेति। आर्थ्यपि त्रिविधा—प्रकृतकार्यसमानजातीयकार्यान्तरस्य कारणात्[3]। प्रकृतकार्यविरुद्धकार्यस्य कारणात्। स्वकार्याद्वा प्रकृतकार्यस्योत्पत्तिरिति एतदर्थकमेव ह्यकारणादित्यादि।

इयं च विभावना द्विविधा—उक्तनिमित्तानुक्तनिमित्ता च। तत्रानुक्तनिमित्ता 'विनैव शस्त्रं' इत्यत्र दर्शिता। विलासानां मन्मथपीडाजनकानामनुपात्तत्वात्। उक्तनिमित्ता यथा—

'यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते॥'

---

**शाब्दी आर्थी चेति**। अत्र केचित्—शाब्दत्वे आद्या। आर्थत्वे उत्तराः पञ्च। तत्र द्वितीये कारणे कारणतावच्छेदकगुणादिवैकल्यदर्शनेन तदवच्छिन्नकारणाभावप्रतीतिरार्थी। अस्तु वा शाब्दी। तथापि स्वरूपतः कारणाभावकथनात्कारणगतधर्मवैकल्यद्वारेण तद्विशिष्टकारणाभावकथने विच्छित्तिविशेषात्। एतेन प्रथमप्रकाराद्वितीयप्रकारस्य

---

१ कारणव्यक्तिः (कारणपदार्थः) प्रतियोगिनी यस्य तादृशोऽभावः (अर्थात् कारणाभावः) कीदृशः? यत्र प्रतिबन्धकस्योक्तिर्न। 'अनेन अलाक्षारसासिक्तं चरणं रक्तम्' अत्र लाक्षारूपकारणव्यक्त्यभावस्योक्तिरिति समन्वयः।

२ अस्त्रैरतीक्ष्णकठिनैरत्र अस्त्रेषु कारणेषु सत्स्वपि तीक्ष्णत्वकठिनत्वरूप(कारणतावच्छेदकधर्म)वैकल्ये (अभावे) सति कार्याभावो भवति, अत एव तादृशधर्म(तीक्ष्णत्वकठिनत्व)-वैकल्योक्तिपूर्विका अत्र विभावना।

३ प्रकृतकार्यं वीणानिनादः तत्समानजातीयं कार्यान्तरं शङ्खनादः, तादृशकार्यान्तरस्य कारणात् (शङ्खात्) कार्यजन्मेति चतुर्थी लक्षिता समन्विता च।

अत्र हि उपात्ते यौवने दाहहेतुत्वं पर्यवस्यति। यत्तु—

"-'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ॥'

अत्र द्वितीयचरणे आसवाभावेऽपि मदस्य प्रतिपादनाद्यौवनस्य चोक्तत्वादुक्तनिमित्ता विभावना। न तु प्रथमतृतीयचरणयोः, संभरणपुष्पयोर्मण्डनमस्त्रं च प्रत्यहेतुत्वात्।" इत्यलंकारसर्वस्वकारादिभिरुक्तं तत्र विचार्यते—विरोधमूला हि विभावनाद्यलंकाराः। विरोधस्यैव विद्युत्प्रभावदापाततः प्रतिभासमानस्य चमत्कारबीजत्वात्। अत्र ह्यासवभिन्नत्वविशिष्टं मदकारणत्वं यौवनस्योक्तम्। एवं च यौवनस्य मदकारणतायाः शब्दैनै[1]वोपात्तत्वात् यागे व्रीहियवयोरिव मदे यौवनासवयोः परस्परनिरपेक्षकारणत्वावगतेर्विरोधस्य लेशतोऽप्यप्रतिभानाद्विभावनैव नास्ति। कुतः पुनरुक्तनिमित्ता विभावना?। न चासवस्य प्रसिद्धमदकारणत्वात्तेन विना मदोत्पत्तिवर्णने विरोधप्रतिभा भवत्येवेति वाच्यम्। भवेत्सा, यदि यौवनस्य मदकारणत्वं कविना साक्षान्न प्रतिपाद्येत। प्रतिपादिते तु तस्मिन्प्रसिद्धकारणातिरिक्ततया कविना प्रतिपादितमिदमपि प्रसिद्धकारणमिव कारणान्तरं भविष्यतीति वैकल्पिककारणताप्रतिभानान्न विरोधप्रतिभानं भवितुमर्हति। तस्मादत्र प्रथमतृतीयचरणयोर्न्यूनाभेदरूपकम्। द्वितीयचरणे तु प्रतीयमानोत्प्रेक्षेति[2] विवेकः। अस्मन्निर्मिते तूदाहरणे दहनस्यैव प्रसिद्धदाहकारणत्वाद्यौवनस्य दाहकारणताया अश्रुतत्वाद्दहनमन्तरेण दाहोत्पत्तिवर्णने विरोध आपाततः प्रतीयत एवेति सहृदयैराकलनीयम्।

वैलक्षण्यं नेत्यपास्तम्। तृतीये प्रतिबन्धकाभावस्य कारणत्वनये तदभावकथनं शाब्दम्। अभावाभावस्य प्रतियोगित्वनये, तस्याकारणत्वनयेऽभावाभावस्यातिरिक्तत्वनये, वा इत्यर्थः। आद्ये भावोक्तेति पूर्वस्माद्विशेषः। चतुर्थ्यां प्रकृतसजातीयकार्यान्तरस्य कारणभिन्नात्कथनमिति कारणाभाव आर्थ एव। पञ्चम्यां च प्रकृतकार्यविरुद्धकार्यस्य कारणात्कथनमिति स आर्थ एव। षष्ठ्यां तु कार्यात्कारणस्येति स एवेत्याहुः॥ इति रसगङ्गाधरमर्मप्रकाशे विभावनाप्रकरणम्॥

१ 'वयः आसवभिन्नं मदस्य कारणम्' इति शब्देनोक्तत्वात्कारण(वयः)द्वारैव मदस्य जननमिति क्व विरोधप्रतीतिरित्याशयः।

२ अस्त्रमिवेति अर्थे तात्पर्यात्।

अथ 'लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति' इत्यत्र विभावनापत्तिः ?, नन्वस्तु, किं नश्छिन्नमिति चेत्। आलंकारिकैरत्र तस्या अनङ्गीकारात्। ननु कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेन कारणाभावो विशेषणीयः। प्रकृते च कारणत्वावच्छिन्नप्रतियोगिताकः प्रसिद्धकारणत्वावच्छिन्नप्रतियोगिताको वाऽभावो न तादृशरूपावच्छिन्नप्रतियोगिताक इति चेत्, 'खला विनैवापराधं भवन्ति खलु वैरिणः' इत्यत्र तथाप्यतिव्यापनात्। अपराधाभावस्य तथात्वात्। न च कार्यांशोऽतिशयोक्त्यालीढत्वेनाभेदनिश्चयालीढत्वेन वा विशेषणीय इति वाच्यम्। 'खला विनैवापराधं दहन्ति खलु सज्जनान्' इत्यादौ तथापि दोषानुद्धारादिति चेत्। मैवम्।

१ अयं भावः—'मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम्। लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति॥' इति पद्ये 'निष्कारणम्' कारणरूप–कारणाभावेऽपि (कारणपूर्वकस्यैव वैरस्य प्रसिद्धत्वात्) वैररूपकार्यजननाद्विभावना स्यादित्यापत्तिः। 'अस्त्वत्र विभावना। काऽस्माकं हानिः' इति तु न वाच्यम्। आलंकारिकैरत्र तस्या अननुमतत्वादिति पूर्वपक्षः।

२ ननु कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वेनेत्यारभ्य एतावत्पर्यन्तस्येदं विशदीकरणम्—'निष्कारणम्' इति कारणाभावे प्रतियोगि कारणम्। ततश्च प्रतियोगिता कारणत्वावच्छिन्ना जाता इति कृत्वा सोयमभावः कारणतावच्छिन्नप्रतियोगिताकस्तु वक्तुं शक्यः। किं तु अत्र कारणपदमुच्चार्यैव कारणाभावः प्रोक्त इति अस्मिन्कारणाभावे कारणतावच्छेदकं रूपं कारणत्वमेवोच्येत। तथा च कारणतावच्छेदकरूपेण (कारणत्वेन) अवच्छिन्ना प्रतियोगिता यस्य अभावस्य इत्युक्तौ कारणत्वस्य अवच्छेदकं कारणत्वमेव जातमिति स्वस्य स्वावच्छिन्नत्वाऽस्वीकारादत्र कारणतावच्छेदकं रूपमेव किञ्चित् न संभवतीति अत्र स्थले विभावनावारणेऽपि 'विनैवापराधं वैरिणः' इत्युदाहरणनिर्माणे, वैरे कारणमपराधः प्रसिद्धः। ततश्चाऽस्मिन्कारणाभावे कारणतावच्छेदकं रूपम् अपराधत्वम्, तेनावच्छिन्ना प्रतियोगिता यस्य ईदृशस्याभावस्य सत्तायामपि वैररूपकार्यजननाद्विभावना स्यात्। तद्वारणाय कार्यपदेन अतिशयोक्त्यालीढम् (अर्थात् अन्याऽभिन्नत्वेन अध्यवसितम्) गृह्यते। अत्र च वैररूपं कार्यं साक्षादेवास्ति, न तु अन्याभिन्नत्वेनाध्यवसितम्। एवं तर्हि 'विनैवापराधं दहन्ति' अत्र पीडा दाहाभिन्नत्वेनाध्यवसितेति 'कारणतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावेऽपि कार्यस्य (अतिशयोक्त्यालीढस्य) उत्पत्तिरत्र जातेति विभावनातिप्रसङ्गः स्यादिति पूर्वपक्षः।

कार्यांशे यद्विषयितावच्छेदकं तदवच्छिन्नकार्यतानिरूपितायाः कारणताया अवच्छेदकमिह ग्राह्यम् । दाहत्वं चेह विषयितावच्छेदकम् । तदवच्छिन्नाभिन्नत्वेन पीडाया अध्यवसानात् । नहि दाहत्वावच्छिन्नकार्यतानिरूपितकारणताया अवच्छेदकमपराधत्वम् । अपि तु दाहत्वावच्छिन्नाभिन्नत्वेनाध्यवसिता या पीडा तन्निष्ठकार्यतानिरूपितकारणताया इति तदवच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्येन कार्योत्पत्तिवर्णनेऽपि नात्र विभावनाप्रसङ्गः[1] । यदि तु 'खला विनैव दहनं दहन्ति जगतीतलम्' इति क्रियते तदा भवत्येव विभावना । एवम्—

'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥'

इति परकीयपद्येऽतिशयोक्त्युदाहरणेऽप्यस्त्येव विभावना । परंतु 'कमलमनम्भसि' इत्यंशे शाब्दी । 'कमले[2] च' इत्यादौ त्वार्थीति संक्षेपः ।

इति रसगङ्गाधरे विभावनाप्रकरणम् ।

अथ विशेषोक्तिः—

**प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्यानुत्पत्तिर्विशेषोक्तिः ॥**

१ अयं भावः—अत्र हि पीडारूपे विषये दाहः ( विषयी ) आरोप्यते । अत एवात्र विषयी दाहः, विषयितावच्छेदकं दाहत्वम् । तादृशदाहत्वावच्छिन्ना या कार्यता तन्निरूपितायाः कारणताया अवच्छेदकं अपराधत्वं नास्ति, अपितु दाहाभिन्नत्वेन अध्यवसिता या पीडा ( वास्तवे तु दाहो भवत्येव न, अपितु मर्मान्तिकपीडैव दाहत्वेनाध्यवसीयते ) तादृशकार्यस्य कारणं योऽपराधः तन्निष्ठकारणताया अवच्छेदकम् । एवं च अपराधत्वस्य साक्षाद्दाहरूपकार्यतानिरूपितकारणतावच्छेदकत्वाभावान्न विभावनातिप्रसङ्ग इति समाधानम् ।

२ कमले अर्थात् विना जलमेव कुवलये स्तः, इति अर्थाक्षेप्यत्वादार्थी । दीक्षितादीनां मते तु—कमलरूपात् अकारणात्कार्योत्पत्तिरूपा चतुर्थी विभावना ।

तत्र सत्यपि कारणसमवधाने कार्यस्यानुत्पत्तौ विरोधः प्रतिभासमानः प्रसिद्धेतरकारणवैकल्यधिया निवर्तते[1] । यथा—

'उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता ।
तदपि न हा विधुवदना मानससदनाद्बहिर्याति ॥'

यथा वा—

'प्रतिपलमखिलांल्लोकान्मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥'

अत्रोपनिषदर्थविमर्शे सकललोकानित्यत्वज्ञाने प्रसिद्धविरतिहेतौ सत्यपि विरत्यनुत्पत्तिवर्णनाद्रागाधिक्यरूपं प्रतिबन्धकं प्रतीयते । इयमनुक्तनिमित्ता । विरत्यनुत्पत्तिनिमित्तस्य प्रतिबन्धकस्यानुपात्तत्वात् । अत्रैव 'रागान्धं चित्तमिदम्' इति निर्माणे उक्तनिमित्ता । केचिदचिन्त्यनिमित्तां तृतीयामामनन्ति । उदाहरन्ति च—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न बलं हृतम्[2] ॥'

अनुक्तनिमित्तायां निमित्तं निमित्ततावच्छेदकरूपेण चिन्त्यमानं[3] प्रतीयते । इह तु न तथा । किं तु भविष्यति किंचिन्निमित्तमित्याकारेणेत्यनुक्तनिमित्तातोऽचिन्त्यनिमित्ताया भेद इति ह्येषामाशयः । अन्ये तु—

१ कारणसांनिध्येऽपि कार्यस्यानुत्पत्तिरिति आपाततो विरोधः प्रतिभासते, परंतु प्रसिद्धस्य कारणस्य समवधानं कामं स्यात्, परम् अप्रसिद्धं कारणम् ( यद्द्वारा कार्यस्योत्पत्तिः संभवति ) नास्तीत्युचितैव कार्यानुत्पत्तिरिति विरोधो निवर्तते । यथा—'उपनिषदः०' अत्र उपनिषदर्थविमर्शजन्यमनित्यत्वज्ञानरूपं प्रसिद्धम् उपरामकारणमस्ति, तथापि विरतिरूपस्य कार्यस्यानुत्पत्तिरिति विरोधमूलिका विशेषोक्तिः [ प्रसिद्धकारणसत्तायामपि अप्रसिद्धं रागाधिक्यरूपप्रतिबन्धकाभावरूपं नास्ति, अपि तु रागाधिक्यं प्रतिबन्धकमस्तीति उचितैव कार्यानुत्पत्तिरिति विरोधसमाधानम् ] ।

२ तनुहरणरूपकारणे सत्यपि बलहरणरूपं कार्यं न जातम् । अत्र हि किमिति बलहरणं न जातमित्यस्य निमित्तं बुद्धिगम्यमित्यर्थः ।

३ 'उपनिषदः०' अत्र अनुक्तमपि रागाधिक्यरूपं निमित्तं निमित्ततावच्छेदकरूपेण चिन्त्यमानं वर्तते ( मार्मिकाणां मनसि स्वयं प्रतिभातं भवति ) । अचिन्त्यनिमित्तायाम् ( 'स एकस्त्रीणि० अत्र ) तु निमित्ततावच्छेदकरूपेण निमित्तं चिन्त्यमानं न भवति । 'अपि तु भविष्यति किञ्चिन्निमित्तम्' इत्याकारेण । इति द्वयोर्भेद इति तात्पर्यम् ।

'नानुक्तनिमित्तायां चिन्त्यत्वं निमित्तविशेषणम्, भेदान्तरकल्पनागौरवप्रसङ्गात्। किं तु चिन्त्यमचिन्त्यं चेति द्विप्रकारकमपि निमित्तं यत्र नोक्तं सानुक्तनिमित्ता। तेनाचिन्त्यनिमित्ता अनुक्तनिमित्तातो न पृथग्भावमर्हति' इत्याहुः।

अत्र च कारणसमवधानं कार्यानुत्पत्तेर्बाध्यमिति[1] बहवः। वस्तुतस्तु कार्यानुत्पत्तिरेवास्मिन्नलंकारे बाध्या।

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥'
'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शंभुना न बलं हृतम्॥'

इति प्राचीनप्रसिद्धोदाहरणेषु कारणसमवधानस्य कामशरीरनाशरूपस्य प्रमाणसिद्धत्वेन बाध्यत्वायोगात्। यतः कामस्य शरीरनाशेऽपि शक्तिबलयोर्नाशः कुतो न जात इत्येव सर्वजनीनः प्रत्ययः, न तु शक्तिबलयोः सतोः कथं शरीरनाश इति।

'दृश्यतेऽनुदिते यस्मिन्नुदिते नैव दृश्यते।
जगदेतन्नमस्तस्मै कस्मैचिद्बोधभानवे॥'

इत्यत्रोदयाभावे जगद्दर्शनस्य, उदयसत्त्वे दर्शनाभावस्य वर्णनेऽपि न विभावनाविशेषोक्ती। नह्यत्र साहजिकसूर्योदयो वर्ण्यते। येन तयोः प्रसङ्गः स्यात्। तथात्वे तूक्तिसंभव[2] एव न स्यात्। किं तु ब्रह्मात्मैक्य[3]बोधसूर्योदयः। तस्य च जगददर्शनमेव कार्यम्। न तु जगद्दर्शनम्।

१ कारणसांनिध्यं कार्यानुत्पत्तिरिति परस्परं विरोधिनौ। अनयोर्मध्ये कारणसमवधानं दुर्बलत्वात् कार्यानुत्पत्त्या बाध्यत इति बहूनां मतम्। कार्यानुत्पत्तिरेव बाध्या, कारणसमवधानं तु प्रबलमिति ग्रन्थकृन्मतम्।

२ यदि वास्तवसूर्यस्योदयो वर्ण्यः स्यात्तर्हि 'अनुदिते सूर्ये जगद् दृश्यते, उदिते तु न दृश्यते' इत्युक्तिरेव न संभवतीत्यर्थः।

३ ब्रह्मणः आत्मनश्च ऐक्यबोध एव सूर्यस्तदुदयः।

तथात्वे तु सूर्योदयस्येवास्याप्युक्तिसंभवो[1] न स्यात् । अत एव व्यतिरेकोल्लासस्ताद्रूप्यरूपकालीढे[2] संगच्छते ।

कारणाभाव–कार्याभावयोर्यत्र प्रतियोगितावच्छेदक[3]विशिष्टवैशिष्ट्येन श्रुत्या प्रतिपादनं तत्र विभावनाविशेषोक्त्योः शाब्दत्वम् । यथा—

'भगवद्वदनाम्भोजं पश्यन्त्या अप्यहर्निशम् ।
तृष्णाधिकमुदेति स्म गोपसीमन्तिनीदृशः ॥'

लोके ह्यसंनिकर्षस्तृष्णाकारणम् । तदभावे संनिकर्षेऽपि तृष्णोपनिबद्धा । तथा संनिकर्षस्तृप्तिकारणम् । तस्मिन्सत्यपि तृप्त्यभावो बोधितः । परंतु कारणाभाव–कार्याभावयोर्न प्रागुक्तप्रकारेण[4] प्रतिपादनमित्यार्थत्वमेव तदुभयसंशयसंकरस्य । अमुमेव चार्थं मनसिकृत्य मम्मटभट्टैः 'यः कौमारहरः' इति पद्यमुदाहृत्योक्तम्—'अत्र स्फुटो न कश्चिदलंकारः' इति । वामनस्तु—'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः' इत्याह । उदाजहार च—'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्' इति । अत्र हि द्यूते राज्यं तादात्म्येनारोप्यते । तत्र सिंहासनरहितं हि द्यूतं सिंहासनसहितराज्यतादात्म्यं कथं वहेदित्यारोपोन्मूलक[5]युक्तिनिरासायारोप्यमाणे

---

प्राग्वदाह—**अथेति** । **ताद्रूप्यरूपकालीढ इति** । वैधर्म्यस्य शब्दोपात्तत्वादभेदस्य प्रतीत्यसंभवादचमत्कारित्वाच्च तद्वृत्तिधर्मवत्त्वस्यैव प्रतीतेरस्य ताद्रूप्यरूपकत्वव्यवहार इति दिक् । **न प्रागुक्तप्रकारेणेति** । प्रतियोगितावच्छेदकवैशिष्ट्येन श्रुत्या प्रतिपादनाभावादित्यर्थः ॥ इति रसगङ्गाधरमर्मप्रकाशे विशेषोक्तिप्रकरणम् ॥

---

१ ब्रह्मणा सह आत्मैक्ये उदिते 'जगद् दृश्यते' इत्युक्तिरेव न संभवतीत्यर्थः ।

२ बोध एव भानुरिति ताद्रूप्यरूपकान्विते पद्येऽस्मिन् प्रसिद्धभानोः ( उपमानस्य ) अपेक्षया उपमेये सोयं विशेष इति व्यतिरेकस्योल्लास इत्यर्थः ।

३ प्रतियोगितावच्छेदकविशिष्टस्य ( प्रतियोगिनः ) वैशिष्ट्येन ( अर्थाद् वैशिष्ट्यपूर्वकम् ) यत्र शब्दतः कारणाभावः कार्याभावश्च प्रतिपाद्यते तत्र तयोः शाब्दत्वमित्यर्थः ।

४ 'पश्यन्त्या अपि अतृप्तिः' इत्यादिप्रकारेण यद्युक्तं स्यात्तर्हि तु तृप्त्यभावः प्रतियोगितावच्छेदकविशिष्टस्य ( तृप्तेः ) वैशिष्ट्यपूर्वकमेव 'अतृप्तिः' इति शब्दद्वारा उपात्त इति शाब्दी विभावनाऽत्राभविष्यत् । एवं विशेषोक्तिरपि ।

५ 'असिंहासनम्' इति यावन्नोच्यते तावद् द्यूते सिंहासनस्यारोप उन्मूलितो भवति ।

राज्येऽपि सिंहासनराहित्यं कल्प्यते । तेन ईढारोपं रूपकमेवेदम्, न विशेषोक्तिः । एवं च—

'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शंभुर्भगवान्बादरायणः ॥'

इति पौराणपद्येऽपि रूपकमेव । तथा गुणाधिक्यकल्पनायामपि तदेव । यथा—'धर्मो वपुष्मान्भुवि कार्तवीर्यः' इत्यादौ । एतेन 'एकगुणहान्युपचयादिकल्पनायां साम्यदार्ढ्यं विशेषणम्' इति विशेषालंकारं लक्षयन्तोऽपि प्रत्युक्ताः ।

इति रसगङ्गाधरे विशेषोक्तिप्रकरणम् ।

अथासंगतिः—

**विरुद्धत्वेनापाततो भासमानं हेतुकार्ययोर्वैयधिकरण्यमसंगतिः ॥**

'स्पृशति त्वयि यदि चापं स्वापं प्रापन्न केऽपि नरपालाः ।
शोणे तु नयनकोणे को नेपालेन्द्र तव सुखं स्वपितु ॥'

अत्र चापस्पर्श-नयनशोणिम्नोर्हेत्वोः स्वापनाशरूपकार्यवैयधिकरण्येऽतिप्रसङ्गवारणाय विरुद्धेत्यादि । इह च विभिन्नदेशस्थयोरेव तयोः कार्यप्रयोजकतया विरोधानवकाशात् । ननु शोणिमाभिव्यक्तस्य रोपस्य कालिकसंबन्धेन हेतुत्वादस्तु नाम कार्यभिन्नदेशत्वम् । चापस्पर्शस्य तु लीलया कृतस्य स्वरूपतो हेतुत्वाभावात्तज्ज्ञानं स्वापनाशे हेतुत्वेनाभ्युपग-

प्रागवदाह—**अथेति** । वैयधिकरण्यं भिन्नदेशत्वम् । **प्रयोजकेति** । यत इत्यादिः ।

१ मालारूपोत्प्रेक्षाप्रसङ्गे पूर्वं प्रोक्तम् ।

२ अत्र हि चापस्पर्शः (कारणम्) नेपालेन्द्रे, स्वापनाशरूपं कार्यं वैरिष्विति भिन्नदेशत्वेपि तदिदं भिन्नदेशत्वं न विरुद्धम्, अपि तु भिन्नदेशतयैवानयोः प्रसिद्धिरिति वैयधिकरण्यस्य विरुद्धत्वेन भासमानस्याभावान्नात्र 'असंगतेः' अतिप्रसङ्गसंभवः ।

३ नेपालेन्द्रेण चापस्पर्शो लीलयापि क्रियते, तादृशात्तु न भयं राज्ञाम् । अत एव स्वरूपतश्चापस्पर्शो न स्वापभङ्गं प्रति हेतुः, अपि तु चापस्पर्शद्वारा 'नेपालेन्द्रस्य रोषो जातः' इति ज्ञानं हेतुः । ज्ञानं च राज्ञामेवेति कारण-कार्ययोरेकाधिकरणत्वमेवेति शङ्का । हेतुपदेन प्रयोजकमप्युच्यते । अत्र च 'नेपालेन्द्रस्य रोषो जातः' इति भ्रमात्मकरोषानुमानं प्रति चापस्पर्शः प्रयोजकः । स च नेपालेन्द्रे, स्वापभङ्गश्च राज्ञु, इति वैयधिकरण्यमेवेति समाधानम् ।

न्तव्यम् । एवं च तस्य कथं वैयधिकरण्यमिति चेत्, न । प्रयोजकस्यापि हेतुपदेनात्र ग्रहणाददोषः । प्रयोजकत्वं च चापस्पर्शस्य भ्रमात्मकरोषानुमितिलिङ्गत्वात् ।

उदाहरणम्—

'अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति ।
प्रहरति हि कुसुमबाणो जगतीतलवर्तिनो यूनः ॥'

यथा वा—

'दृष्टिर्मृगीदृशोऽत्यन्तं श्रुत्यन्तपरिशीलिनी ।
मुच्यन्ते बन्धनात्केशा विचित्रा वैधसी गतिः ॥'

अत्राद्योदाहरणे शुद्धा, द्वितीये तु श्लेषोपबृंहितेति विशेषः । प्रहरतीत्यत्राभेदाध्यवसायलक्षणेनातिशयेनापराधनिमित्तकताडनरूपतयावस्थिते कामपीडने विषय्यंशमालम्ब्य तं प्रति समानाधिकरणतया प्रसिद्धस्य हेतोरपराधरूपस्य वैयधिकरण्यज्ञानात्पुरः स्फुरन्विरोधो विषयांशविमर्शोत्तरं तं प्रति कुसुमश्रीहरणाभिव्यक्तशोभाविशेषस्य भावनोपनीतस्य तद्भावनाया वा हेतुत्वस्य प्रतिसंधानान्निवर्तत इत्यभेदाध्यवसानमनुप्राणकम्, विरोधाभासश्चोत्कर्षकः । एवमन्यत्रापि बोध्यम् ।

अस्यां च 'विभावनायामिव कार्यांशेऽतिशयोक्त्यनुप्राणनमावश्यकम् । अन्यथा विरोधो दुष्परिहर एव स्यात्', इत्यलंकारसर्वस्वकारादीनां मतम् ।

**भ्रमात्मकरोषानुमितीति** । लीलया करणाद्भ्रमात्मकत्वम् । **श्लेषोपबृंहितेति** ।

---

१ अयं भावः—अत्र यूनां वास्तवं ताडनं नाभिप्रेतम्, अपि तु कामपीडारूपोऽर्थः । ततश्च कामपीडारूपे विषये अपराधनिमित्तकताडनरूपविषयिणोऽध्यवसानमत्र भवति । एवं च अभेदाध्यवसानमस्मिन्नलंकारे उत्थापकम् । यस्यापराधस्तस्य दण्डः, इति कारणकार्ययोः समानाधिकरणत्वं प्रसिद्धम् । किन्त्वत्र कुसुमश्रीहरणमपराधः अङ्गानाम्, ताडनं च यूनामिति वैयधिकरण्यरूपः अग्रे स्फुरन् विरोधः अस्मिन्नलंकारे चमत्कारोत्कर्षकः । आपाततो विरोधप्रतीतावपि पर्यन्ते तु वास्तविकः श्रीहरणरूपः अपराध एवात्र नास्ति । अपि तु कुसुमशोभातिरस्कारकः युवकभावनोपनीतः शोभाविशेष एवाभिप्रेतः । एवं च 'नायिकाङ्गानां शोभाविशेषं भावयन्तो युवकाः कामपीडिता भवन्ति' इत्यर्थानुसंधाने सति स विरोधो निवर्तते ।

तच्च 'दृष्टिर्मृगीदृशः' इत्यस्मन्निर्मितोदाहरणे व्यभिचारादसंगतम् । नहि 'मुच्यन्ते बन्धनात्केशाः' इत्यत्र केशबन्धनमुक्त्यंशेऽतिशयोक्तिरस्ति । किं तु श्लेषभित्तिकाभेदाध्यवसानमात्रम् । तस्माद्येन केनापि प्रकारेण कार्यांशेऽभेदाध्यवसानमावश्यकमिति तु संगतम् । यद्यपि 'दृष्टिर्मृगीदृशः' इत्यादौ कारणांशेऽपि श्लेषादिनाऽभेदाध्यवसायः संभवति, तथापि नासौ तदंशे नियतः ।

'खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण ।
खिद्यन्ति हन्त परितस्तद्रूपविलोकिनस्तरुणाः ॥'

इत्यादौ भारजनितखेदांशे तदभावात् । न च तत्रापि जलपूर्णघटादिभारजनितखेदेन सह नितम्बभारजनितखेदस्याभेदाध्यवसायोऽस्त्येवेति वाच्यम् । नितम्बभारजनितखेदस्य स्वस्वरूपेणापि खेदजनकत्वेन भारान्तरजनितखेदाध्यवसायानपेक्षणात् । 'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः' इति प्राचीनानां पद्ये बालात्वस्त्रीत्वाद्यंशे तल्लेशस्याप्यसंभवाच्च ।

यत्तु 'विरोधालंकारे ह्येकस्मिन्नधिकरणे द्वयोः संबन्धाद्विरोधप्रतिभानम्[2], असंगतौ त्वधिकरणद्वये[3] इति तस्मादस्य वैलक्षण्यम्' इति विमर्शिनीकार आह, तदसत् । इहापि तत्तत्कार्यतावच्छेदकधर्मतत्तत्कारणवैयधिकरण्यरूपयोर्धर्मयोरेकस्मिन्कार्यरूपेऽधिकरणे संबन्धादेव विरोधप्रतिभानोत्पत्तेः । तस्माद्विरोधालंकारे उत्पत्तिविमर्शं विनैव विरोधप्रति-

१ श्रुत्यन्त(कर्णान्त-वेदान्त)परिशीलिनी, अत्र कारणांशे (यतो हि श्रुत्यन्तपरिशीलनं कारणम्, बन्धमुक्तिः कार्यम्) अपि अभेदाध्यवसायोऽस्ति, किन्तु सोऽयमनेन यदृच्छया संभूतः । अस्मिन्नलंकारे कारणांशे नियमेनास्यावस्थितिरतु नास्तीत्याशयः ।

२ यथा-'कुसुमानि शराः' अत्र एकत्राधिकरणे कुसुमत्वं शरत्वं च ।

३ 'अङ्गैः सुकुमारतरैः' अत्र यस्यापराधस्तस्य दण्ड एकस्मिन्नेव अधिकरणे संबन्धे उचितेऽपि अन्यस्यापराधः, अन्यस्य दण्ड इति पृथगधिकरणयोर्द्वयोः संबन्धेन विरोधप्रतिभानम् ।

४ एकस्मिन् कार्ये कार्यतावच्छेदकं कारणसामानाधिकरण्यं न भवति [ अर्थात् कार्यरूपे अधिकरणे कार्यतावच्छेदकं कारणं च एकत्र भवति ] । असंगतौ तु कार्यतावच्छेदकधर्मः कारणवैयधिकरण्यम् [ अर्थात् कार्यं तु भवति परं कारणं द्वितीयस्मिन्नधिकरणे भवेत् ] इति विरोधप्रतिसंधानम् ।

भानम् । इह तूत्पत्तिविमर्शपूर्विकैव विरोधप्रतिभोत्पत्तिः इति वैलक्षण्य-मिति । वस्तुतस्तु—व्यधिकरणत्वेन प्रसिद्धयोः समानाधिकरणत्वेनोप-निबन्धने विरोधालंकारः । समानाधिकरणत्वेन प्रसिद्धयोर्द्वयोर्वैयधिकर-ण्येनोपनिबन्धनेऽसंगतिः । प्रागुक्तासंगतिलक्षणे हेतुकार्ययोरिति च समानाधिकरणमात्रोपलक्षणम् । तेन 'नेत्रं निरञ्जनं तस्याः शून्यास्तु वयमद्भुतम्' इत्यत्र निरञ्जनत्वशून्यत्वयोरुत्पादकभावलक्षणसंबन्धानन्त-र्भावेण शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरप्यसंगतिः संगच्छते । यथा-श्रुते तु सा न स्यात् । इत्थं च स्फुट एव विरोधालंकारादसंगतेर्भेदः ।

यस्तु पुनर्विरोधालंकारादतिरिक्तः शुद्धविरोधांशो विरोधमूलेषु सर्वेष्वप्यलंकारेष्वनुस्यूतः, औपम्यांश इवोपमामूलेषु, सोऽलंकाराणां कतिपयानां निर्वर्तकः, नतु स्वयं पृथगलंकारास्पदम्, अलंकाराणां भणितिविशेषमात्ररूपत्वात् । एवं च विमर्शिनीकारोक्तमपि पद्यमनयैव दिशा नीयते तदा न दोषः । यत्तु—

"'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ।
अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥
अपारिजातां वसुधां चिकीर्षन्द्यां तथाऽकृथाः ।
गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराऽकरोः ॥'

अत्र श्रीकृष्णं प्रति शक्रस्योपालम्भवाक्ये भुवि चिकीर्षिततया तत्र

---

१ अर्थात् ययोः उत्पाद्योत्पादकभावसंबन्धो भवति तयोः कार्य-हेत्वोरेव वैयधिकरण्ये असंगतिर्भवतीति न, अपि तु ययोः समानाधिकरणत्वं प्रसिद्धं तयोर्ययोः कयोश्चिदपि वैयधि-करण्ये सति असंगतिर्भवति । तेन निरञ्जनत्व-शून्यत्वयोरपि वैयधिकरण्ये असंगतिः सिध्यति ।

२ यदि हेतु-कार्ययोरित्यस्य उपलक्षणता न स्वीक्रियेत तर्हि उत्पाद्योत्पादकसंबन्धाऽनन्त-र्भूतयोरसंगतौ समावेशो न स्यादित्यर्थः ।

३ व्यधिकरणत्वेन प्रसिद्धयोः सामानाधिकरण्येनोपनिबन्धने विरोधः, समानाधिकरण-त्वेन प्रसिद्धयोर्वैयधिकरण्येनोपनिबन्धे असंगतिरिति ।

४ शुद्धो विरोधांशः [ परस्परं विसंवादरूपः ] विरोधालंकारादतिरिक्तः । स हि विरो-धमूलानां सर्वेषामेवालंकाराणाम् [ विरोधविभावनाऽसंगतिविषमादीनाम् ] एकवर्गीकरण-कारणम्, यथा सादृश्यांशः उपमामूलालंकाराणाम् [ उपमाऽनन्वयाऽसमोदाहरणस्मरण-निदर्शनादीनाम् ] ।

करणीयमपारिजातत्वं दिवि कृतमित्येकाऽसंगतिः । पुरा गोत्राया उद्धारे प्रवृत्तेन वराहरूपिणा तद्विरुद्धं गोत्राणां दलनं खुरकुट्टनैः कृतमिति द्वितीया । यथा वा—

'त्वत्खड्गखण्डितसपत्नविलासिनीनां
भूषा भवन्त्यभिनवा भुवनैकवीर ।
नेत्रेषु कंकणमथोरुषु पत्रवल्ली
चोलेन्द्रसिंह तिलकं करपल्लवेषु ॥'

'मोहं जगत्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर देहभाजाम् ।
निःसीमकान्तिरसनीरधिनामुनैव
मोहं प्रवर्धयसि मुग्धविलासिनीनाम् ॥'

अत्राद्योदाहरणे कंकणादीनामन्यत्र करणीयत्वं प्रसिद्धमिति नोपन्यस्तम् । भवतिना भावनारूपान्यत्र कृतिराक्षिप्यते इति लक्षणानुगतिः" इति कुवलयानन्दकृताऽसंगतेरन्यद्भेदद्वयं लक्षयित्वोदाहृतम्, तन्न । तत्र तावत् 'अपारिजातां वसुधां चिकीर्षन्द्यां तथाकृथाः' इत्यत्र पारिजातराहित्यचिकीर्षया कारणभूतया सह पारिजातराहित्यस्य कार्यस्य विरुद्धवैयधिकरण्योपनिबन्धान्, 'विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः' इति प्राथमिकाऽसंगतितो वैलक्षण्यानुपपत्तेः । आलम्बनाख्यविषयतासंबन्धेन

बन्धनशब्दे श्लेषः । गोत्रायाः पृथिव्याः । गोत्राणां पर्वतानाम् ।

१ व्याध्यादिजनितदौर्बल्यवशात् नेत्राणि परितः कंकणसदृशः श्यामरेखापरिवेषो भवतीत्यर्थः । दौर्बल्ये नेत्रयोः परितः प्रसिद्धमायुर्वेदे मण्डलनम् । ऊरुषु च पत्रयुक्ता वल्ली, भयादरण्ये धावन्तीनां तासां पत्राणि वल्लयश्च ऊरुषु विलग्नाः सत्यः पत्ररचनारूपभूषणायिता भवन्तीत्यर्थः । करपल्लवेषु तिलकम्, श्रमस्वेदप्रोञ्छने मुखगतं तिलकं हस्तेषु भूषणायितं भवतीत्याशयः । 'नेत्रेषु कंकणं जलकणमेव कंकणं भवति,' 'करपल्लवेषु तिलकं तिलयुक्तं कं जलमेव ललाटभूषणमिति' अलंकारचन्द्रिकार्थस्तु सहृदयैस्तुलनीयः ।

२ कार्यमात्रं प्रति विषयतासंबन्धेन ( आलंबनापरनाम्ना ) चिकीर्षा कारणम् ( यत्किंचिद्विषयिणी कर्तुमिच्छा यदि भवेत्तदैव तत्कार्यमुत्पद्येत ) । एते द्वे ( चिकीर्षा कार्यं च ) समानाधिकरणे भवतः । 'अपारिजाताम्०' अत्र तु पारिजातराहित्यस्य चिकीर्षा वसुधालम्बना, पारिजातराहित्यं कार्यं तु दिवि, इति चिकीर्षारूप-हेतोः कार्यस्य च भिन्नदेशत्वात् प्रथमलक्षितया असंगत्यैव गतार्थतेत्याशयः ।

चिकीर्षायाः सामानाधिकरण्येन कार्यमात्रं प्रति हेतुत्वस्य प्रसिद्धेः । न च पारिजातराहित्यस्याभावरूपस्य नित्यत्वात्कारणाप्रसिद्धिरिति[1] वाच्यम् । आलंकारिकनये तस्यापि जन्यत्वस्येष्टेः । लक्षणे कार्यकारणपदयोरुपलक्षणत्वस्योक्तत्वाच्च[2] । 'गोत्रोद्धारप्रवृत्तोऽपि' इत्युदाहरणे तु 'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना' इति पञ्चमविभावनालक्षणाऽऽक्रान्तत्वाद्विभावनयैव गतार्थत्वादसंगतिभेदान्तरकल्पनानुचिता । गोत्रोद्धारविषयकप्रवृत्तेर्गोत्रोच्छेदरूपकार्ये[3] विरुद्धत्वात् । सिद्धान्तेऽपि विभावनाविशेषोक्त्योः संकर एवात्रोचितः । 'नेत्रेषु कंकणं' इत्यादौ कंकणत्व-नेत्रालंकारत्वयोर्व्यधिकरणत्वेन प्रसिद्धयोः सामानाधिकरण्यवर्णनाद्विरोधाभासत्वमुचितम् । एवं मोहनिवर्तकत्व-मोहजनकत्वयोरपीति । ननु तवापि विरोधाभासेनैवोपपत्तेर्विभावनादिकल्पनानर्थक्यमिति चेत्, न । दत्तोत्तरत्वात्[4] ।

इति रसगङ्गाधरेऽसंगतिप्रकरणम् ।

---

**जन्यत्वस्येष्टेरिति** । जन्यत्वेऽपि चिकीर्षायाः कृत्याऽन्यथासिद्धतया कार्यजनकत्वे मानाभावः । अधिकरणान्तर्भावेण चिकीर्षाया अहेतुत्वात् । अन्यत्र चिकीर्षितस्यापि प्रमादादिनान्यत्र करणे व्यभिचारात् । एवं च वैयधिकरण्यं विरुद्धमेव न । किं चात्र न तत्कार्यकारणवैयधिकरण्यकृतचमत्कारः, अपि त्वन्यत्र कर्तव्यस्यान्यत्र करणप्रयुक्त एवेत्यर्थस्य सर्वसंमतत्वेन ततो भेदौचित्यात् । किं च पूर्वोदाहरण इवानयोः कार्यकारणयोर्विरोधस्य दुःसमाधानत्वेन नात्र सः । आपाततो विरुद्धत्वेन भासमानमेवेति तत्पूर्वासंगतिरिति चिन्त्यम् । **पञ्चमविभावनेति** । विरुद्धत्वेन प्रसिद्धयोरेव सेति केचित् । किं चोपालम्भरूपेऽस्मिन्वचसि विरुद्धकृतिभानकृत एव चमत्कारः, तत्र तु विरोधनिवृत्तिकृतोऽपीति महान्विशेषः । **विरोधाभासत्वमुचितमिति** । समानविभक्तिकाभावात्सामानाधिकरण्यस्य शब्दादप्रतीतेरभेदस्याभानाच्च चिन्त्यमिदम् । ययोर्विरोधप्रतीतिस्तयोरर्थान्तरमादायापि सामानाधिकरण्यप्रतीतेश्च ॥ इति रसगङ्गाधरमर्मप्रकाशेऽसंगतिप्रकरणम् ॥

---

१ अभावो नित्य इति तस्य कारणमप्रसिद्धमिति शङ्का । तस्यापि अनित्यत्वमिष्टमिति समाधानम् ।

२ कार्य–हेत्वोरिति समानाधिकरणमात्रोपलक्षणमिति पूर्वमुक्तत्वात् नत्र उत्पाद्योत्पादकमात्रसंबन्धी विचारो नोचित इत्यर्थः ।

३ कार्यं प्रति तद्विषयकप्रवृत्तिः कारणम् । गोत्रोद्धारविषयिका प्रवृत्तिः ( कारणम् ) गोत्रोच्छेदकार्याद्विरुद्धा । ततश्च विरुद्धकारणात्कार्यसंपत्तिरिति पञ्चमी विभावनेनैयमित्यर्थः ।

४ विरोधे तु समबलयोर्द्वयोर्विरोधः । विभावनायां तु कारणाभावेन बाध्या कार्योत्पत्तिरित्यादि वैलक्षण्यं पूर्वमुक्तम् ।

अथ विषमालंकारः—

**अननुरूपसंसर्गो विषमम् ॥**

अनुरूपमिति योग्यतायामव्ययीभावः। अनुरूपं यत्र न विद्यत इति विगृहीतेन बहुव्रीहिणा योग्यतारहितमुच्यते। योग्यता च युक्तमिदमिति लौकिकव्यवहारगोचरता। संसर्गश्च तावद्विविधः—उत्पत्तिलक्षणः संयोगादिलक्षणश्च। तत्रोत्पत्तिलक्षणस्य संसर्गस्यायोग्यत्वं कारणात्स्वगुणविलक्षणगुणकार्योत्पत्त्या। इष्टसाधनतया निश्चितात्कारणादनिष्टकार्योत्पत्तिभिः संयोगादिलक्षणस्यापि। संसर्गिणोरन्यतरगुणस्वरूपतिरस्कार्योन्यतरगुणस्वरूपतया अयोग्यत्वम्। एवं चाननुरूपसंसर्गत्वेन सामान्येनोक्ता वक्ष्यमाणाश्च सर्वे प्रभेदाः संगृह्यन्ते। क्रमेणोदाहरणानि—

'अमृतलहरीचन्द्रज्योत्स्नारमावदनाम्बुजा-
न्यधरितवतो निर्मर्यादप्रसादमहाम्बुधेः।
उदभवदयं देव त्वत्तः कथं परमोल्बण-
प्रलयदहनज्वालाजालाकुलो महसां गणः ॥'

अत्र माधुर्यशैत्याह्लादकत्वप्रसादाद्यनेकगुणयुक्तात्कारणात्तद्विरुद्धगुणयुक्तस्य प्रतापस्योत्पत्तिरित्यननुरूपः कार्यकारणभावः। अभेदाध्यवसानलक्षणेनातिशयेन समवायिकारणरूपतया स्थिते निमित्तकारणे समवेतकार्यरूपतया स्थिते निमित्तिकार्ये वा विषयांशमालम्ब्य स्फुरितो विरोधो विषय्यंशविमर्शोत्तरं निवर्तत इतीहाप्यभेदाध्यवसानस्यानुप्राणकत्वम्,

---

प्राग्वदाह—**अथेति**। तन्त्रान्तरप्रसिद्धार्थनिरासायाह—**योग्यता चेति**। द्विती-

---

१ सर्वस्यायमाशयः—रूपमनु अनुरूपम्। 'अनुरूपम् (अर्थात् योग्यता, 'युक्तमेतत्' इति लोकव्यवहारविषयता) यत्र न विद्यते तौ अननुरूपौ'। अननुरूपयोर्द्वयोः संसर्गः (कारणापेक्षया विलक्षणगुणशालिनः कार्यस्योत्पत्तिः उत्पत्तिलक्षणः, इष्टसाधकात् अनिष्टकार्योत्पत्तिः संयोगादिलक्षणः; इति द्विविधः) द्वयोः संसर्गिणोर्मध्ये एकतरस्य गुणानां स्वरूपस्य च इतरस्य गुण-स्वरूपैः तिरोधानमेव संसर्गस्याऽयोग्यत्वम्।

तदुत्थापितविरोधाभासस्य च परिपोषकत्वम्[1] । अयमेव चांशोऽत्र कविप्रतिभानिर्मितत्वादलंकारताबीजम् ।

इष्टसाधनतया[2] ज्ञातात्कारणादनिष्टकार्योत्पत्तिभिरित्यत्रैकशेषघटित एकशेषो बोध्यः । न इष्टमनिष्टं अनर्थः । तादृशकार्योत्पत्तिश्च । न इष्टकार्योत्पत्तिरनिष्टकार्योत्पत्तिः सा चेत्यनिष्टकार्योत्पत्ती । ते च अनिष्टकार्योत्पत्तिश्च अनिष्टकार्योत्पत्तयः ताभिरिति । अनेनेष्टकार्यानुत्पत्त्यनिष्टकार्योत्पत्ती मिलिते[3] एको भेदः । प्रत्येकं च भेदद्वयम् । इति त्रयो भेदाः संगृहीता भवन्ति । इष्टं च—स्वस्य किंचित्सुखसाधनवस्तुप्राप्तिर्दुःखसाधनवस्तुनिवृत्तिश्च परस्य दुःखसाधनवस्तुप्रापणं सुखसाधननिवृत्तिश्चेति चतुर्विधम् । तेनेष्टाप्राप्तिघटिते भेदद्वयेऽपि चातुर्विध्यम् । अनिष्टं

---

यस्य तदाह—**इष्टेति** । एवं मध्याह—**संसर्गिणोरिति** । तमेवाह—**अनेत्यादि** । **अनिष्टकार्योत्पत्तिश्चेति** । आद्ये नञा इष्टकार्योत्पत्तिशब्देन समासः, द्वितीये इष्टश-

---

१ प्रतापस्य समवायिकारणं हि परे, यत्तामनेनम् अभिभवन( दमन )रूपं कार्यमुत्पद्यते । किन्त्वत्र निमित्तकारणे ( राजनि ) समवायिकारणेन अभेदः अध्यवसीयते । अत एव राजैव समवायिकारणम् ( राज्ञ एव प्रतापस्योत्पत्तिः ) इत्यभेदाध्यवसानोत्तरम् विषयस्य ( आरोपविषयस्य निमित्तकारणस्य ) अंशम् आलम्ब्य विरोधस्य स्फूर्तिर्भवति, अर्थात् 'राजा तु माधुर्यप्रसादादिगुणयुक्तः तस्मात् एवं तीव्रः प्रतापः कथमुत्पन्नः ?' इति विरोधो हृदि जागर्ति । अनन्तरं तु आरोपविषयिणः ( समवायिकारणस्य, अभिभवनीयपरसमूहस्य ) अंशे विचारिते स विरोधो निवर्तते—'समवायिकारणभूताः शत्रव एवंभूता एव । अत एव उचितैव एतादृशकार्योत्पत्तिः' इति । एकः पक्षः ।

निमित्तिकार्ये ( निमित्तकारणसंबन्धिनि कार्ये ) समवेतकार्यस्य अभेदाध्यवसाने जाते—विषयांशमालम्ब्य स्फुरितो विरोधो विषय्यंशविमर्शे निवर्तते ( इति पूर्ववत् ), इति द्वितीयः पक्षः । एवं च इहापि ( अस्मिन्नलंकारेऽपि ) अतिशयोक्तिरुत्थापिका, विरोधश्च चमत्कारपरिपोषक इति सर्वस्याशयः ।

२ उत्पत्तिलक्षणं प्रथमं संसर्गं विविच्य संयोगादिलक्षणं द्वितीयं संसर्गं विवृणोति 'इष्टसाधनतया ज्ञातात्' इत्यादिना ।

३ अनर्थभूतकार्योत्पत्तिश्च इष्टकार्यानुत्पत्तिश्चेत्यर्थबोधिके ते ( अनिष्टकार्योत्पत्ती ) च अनिष्टकार्योत्पत्तिश्च इति अनिष्टकार्योत्पत्तयः इति पूर्वं त्रिसृणामेकशेष उक्तः । तत्र 'ते च' इति द्विवचनेन मिलितयोरेको भेद इति सूचितम् ।

च—स्वस्य दुःखसाधनवस्तुप्राप्तिः, परस्य सुखसाधनवस्तुप्राप्तिः, दुःखसाधनवस्तुनाशश्चेति त्रिविधम् । स्वस्येष्टाप्राप्तिस्तु गणितेति नानिष्टे गण्यते । तेनानिष्टप्राप्तिघटिते भेदद्वयेऽपि त्रैविध्यम् ।

दिङ्मात्रं तूपदर्श्यते—उदाहरणम्—

'दूरीकर्तुं प्रियं बाला पद्मेनाताडयद्रुषा ।
स बाणेन हतस्तेन तामाशु परिषस्वजे ॥'

अत्र प्रियदूरीकरणरूपेष्टार्थं प्रयुक्तेन पद्मताडनरूपेण कारणेन प्रियदूरीकरणं तु दूरापास्तम्, प्रत्युत तत्कर्तृकपरिष्वङ्गरूपानिष्टस्योत्पत्तिः । यथा वा—

'खञ्जनदृशा निकुञ्जं गतवत्या गां गवेषयितुम् ।
अपहारिताः समस्ता गावो हरिवदनपङ्कजालोकात् ॥'

पूर्वोदाहरणे वास्तवमेवानिष्टम्, इह तु सकलेन्द्रियहरणं यद्यपि लोकेऽनिष्टप्रायमेव तथापि तत्पुरस्कारेणेह चमत्कृतिराहित्याद्गोहरणपुरस्कारेणैव चमत्कारात् श्लेषमूलकाभेदाध्यवसाने सकलसुरभिहरणरूपानिष्टात्मना स्थितं तदिति विशेषः । गवेष्यमाणगवीरूपेष्टाप्राप्तेरनुक्तत्वात्केवलानिष्टप्राप्तेरिदमुदाहरणम्, पूर्वं तूभयस्येति विशेषो न वाच्यः । समस्तगवीहरणेन सामान्येन गवेष्यमाणाया अपि गोरपहारस्य प्रत्ययात् ।

---

ब्देनेति । सुखसाधनवस्तुनाशश्चेतीति । अत्रापि परस्येत्येव बोध्यम् । गाव

१ 'इष्टकार्यानुत्पत्ति' गणनायाम् इष्टाऽप्राप्तिरन्तर्भूतैवेत्यर्थः ।

२ मदनबाणार्पितेन तेन (पद्मेन) हतः सः (प्रियः) ।

३ पूर्वोदाहरणे—अभीष्टं प्रियदूरीकरणं तु दूरे, प्रियपरिष्वङ्गस्य अनिष्टस्याऽवाप्तिरिति वास्तवमेवानिष्टम् । अत्र तु श्लेषमूलाऽभेदेनाऽनिष्टं यतो हि 'एकस्या गोः आनयनार्थं गतायाः सकलगवी(धेनु)हरणं जातम्' इत्येव काव्यमार्गे चमत्कारकम्, न तु इन्द्रियहरणम् । किन्तु वास्तवे गोप्या न सकलधेनवो हारिताः, अपि तु इन्द्रियाण्येव । अत एव अत्र श्लेषमूलभेदाध्यवसानवशात् गोपदेन उभयार्थबोधो भवतीति आरोपितानिष्टप्राप्तिरित्याशयः ।

४ दूरीकर्तुमिति पद्ये प्रियदूरीकरणस्य इष्टस्य अनवाप्तिः, अनिष्टस्य (परिष्वङ्गस्य) प्राप्तिश्चेति उभयमुक्तम् । अत्र तु सकलगवीहरणरूपस्य अनिष्टस्यैवाप्तिः, न तु गवेष्यमाणगवीरूपस्य इष्टस्य अनवाप्तिः प्रतीयते इति द्वयोरुदाहरणयोर्मिथो भेद इति पूर्वपक्षः । अत्राप्युभयं प्रतीयते इति तत्समाधानम् ।

एवमिष्टाप्राप्त्यनिष्टप्राप्त्युभयकृता संसर्गस्याननुरूपता सामान्येनोक्ता। पूर्वोक्तचतुर्भेदाया इष्टाप्राप्तेः पूर्वोक्तत्रिभेदेनानिष्टेन संसृष्टावियमेव द्वादशविधा । तत्र स्वस्य सुखसाधनवस्त्वप्राप्ति–दुःखसाधनवस्तुप्राप्तिरूप उभयभेदस्तावदुदाहृतः । स्वस्य दुःखसाधनवस्त्वनिवृत्ति–दुःखान्तरसाधनावाप्तिरूपद्वयं यथा—

'रूपारुचिं निरसितुं रसयन्त्या हरिमुखेन्दुलावण्यम् ।
सुदृशः शिव शिव सकले जाता सकलेवरे जगत्यरुचिः ॥'

अत्र यद्यपि ब्रह्मदर्शनोत्तरं ज्ञातायामपि जगति वैराग्यलक्षणायामरुचौ भगवद्वदनलावण्यदर्शनाद्रूपारुचिर्विलक्षणा या काचित्सा निवृत्तैवेति वक्तुं शक्यते, तथापि जगदरुचित्वेन सकलारुचीनामभेदाध्यवसायाद्रूपारुचिनिवृत्तेरप्रत्यय एव । अन्यथा सुखहेतोर्वैराग्यलक्षणाया अरुचेर्दुःखान्तरसाधनत्वं दुरुपपादं स्यादिति भवत्युभयोदाहरणम् ।

परस्य दुःखसाधनानवाप्तिः स्वस्य दुःखान्तरसाधनप्राप्तिरित्युभयं यथा—

'पुरो गीर्वाणानां पुलकितकपोलं प्रथयतो
भुजप्रौढिं साक्षाद्भगवति शरं संमुखयितुम् ।
स्मरस्य स्वर्बालानयनसुममालार्चितमहो
वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥'

परस्य सुखसाधनाऽनिवृत्तिः स्वस्य दुःखसाधनप्राप्तिरित्युभयं यथा—

'न मिश्रयति लोचने सहसितं न संभाषते
कथासु तव किं च सा विरचयत्यरालां भ्रुवम् ।

१ दुःखदवस्तुनः अनिवृत्तिः दुःखान्तरसाधनावाप्तिश्चेत्युभयस्योदाहरणमिति प्रतिज्ञा । किन्तु यदा वैराग्यरूपाऽरुचिर्जाता तदा वैराग्यवशाद् रूपाऽरुचिरपि निवृत्तैव । एवं च रूपाऽरुचिरूपस्य दुःखदवस्तुनः अनिवृत्तिः कथमिति शङ्का । 'जगत्यरुचिर्जाता' इति कथने अरुचित्वेन सकलानामरुचीनामुत्पत्तिरेव प्रतीयते, न तु रूपाऽरुचेर्निवृत्तिः । एवं च 'एका रूपाऽरुचिस्तु निवृत्तैव न, स्वकलेवरसहिते सकले जगति अरुचिः ( ततोऽप्यधिका ) जाता' इति उभयोदाहरणता घटते एवेति तत्समाधानम् ।

विपक्षसुदृशः कथामिति निवेदयन्त्या पुरः
प्रियस्य शिथिलीकृतः स्वविषयोऽनुरागग्रहः ॥'

अत्र कयाचित्प्रौढनायिकया सपत्न्यां प्रियेणाज्ञातयौवनात्वेनैव विदितायां तदनुरागप्रतिबन्धार्थं प्रियस्य पुरस्तदीयदुर्गुणानावेदयन्त्या चिकीर्षितोऽर्थो न संपादितः, स्वस्मिन्ननुरागक्षतिश्च संपादितेति[1] यद्यपि सुखसाधननिवृत्तेर्दुःखसाधनरूपत्वान्न पृथग्गणनोचिता, तथापि दुःखसाधननिवृत्तौ सुखस्येव सुखसाधननिवृत्तौ प्रतिनियतकारणं जन्यत्वेन दुःखस्यानैयत्यात्[2]पृथगुपादानम्। एवमष्टावन्येऽप्युभयभेदा ऊह्याः। केवलेष्टाप्राप्तिर्यथा—

'प्रभातसमयप्रभां प्रणयिनि ह्रुवाना रसा-
दमुष्य नयनाम्बुजं सपदि पाणिनामीलयन्।
अनेन[3] खलु पद्मिनीपरिमलालिपाटच्चरैः
समीरशिशुकैश्चिरादनुमितो दिनेशोदयः ॥'

अत्र प्रियतमकर्तृकप्रभातविषयकज्ञानाभावः कामिन्याः सुखसाधनतयेष्टः। स च तया साध्यमानोऽपि न सिद्ध इतीष्टाप्राप्तिरेव। यद्वा तादृशज्ञानं[4] तस्या दुःखसाधनम्, तन्निवृत्तिरूपं चेष्टं साध्यमानमपि न तथेति[5] सैव। एवं च द्विप्रकारापीष्टाप्राप्तिरेवात्र संभवति। प्रकारान्तरं चास्या अप्यूह्यम्। केवलानिष्टप्राप्तिर्यथा—

'मुकुलितनयनं करिणो गण्डं कण्डूयतो विषद्रुतटे।
उदभूदकाण्डदहनज्वालाजालाकुलो देहः ॥'

---

१ प्रौढया सपत्न्या अनुरागप्रतिबन्धार्थं दुर्गुणबुद्ध्या 'न मिश्रयति लोचने' इत्यादिकं नवोढाचेष्टितमुक्तम्। किन्तु नवोढायाः सुखसाधनस्य (प्रियप्रेम्णः) निवृत्तिस्तु न जातैव, प्रत्युत तामज्ञातयौवनां ज्ञात्वा तस्यां प्रेमप्रकर्षः प्रौढायां चानुरागशैथिल्यं जातमिति स्वस्य दुःखसाधनप्राप्तिरधिकप्रतिकूला जातेत्याशयः।

२ दुःखसाधननिवृत्तौ यथा सुखं नियतम्, तथा सुखसाधननिवृत्तौ दुःखस्य नैयत्यं नेत्याशयः।

३ नयनेन्द्रियव्यापारस्थगने अपरेन्द्रियस्य घ्राणस्य प्राबल्यात् अनेन (प्रियेण) समीरशिशुकैः बालपवनैः (हेतुभिः) सूर्योदयोऽनुमित इत्यर्थः।

४ प्रियस्य प्रभातविषयकम्।

५ न सिद्धमिति पूर्वानुषङ्गः।

अत्र नेष्टप्राप्तिः । मुकुलितनयनमित्यनेन कण्डूयनजन्यसुखस्य प्राप्तेः[1] किं त्वनिष्टप्राप्तिरेव । अस्या अपि भेदद्वयं यथायथमूह्यम् । ग्रन्थविस्तरभयान्नेहोदाह्रियते । एते चेष्टसाधनत्वेन निश्चितात्कारणादनिष्टकार्योत्पत्तीनां सर्वेऽपि प्रभेदा वक्ष्यमाणविषादनालंकारसंकीर्णा एवेति तत्प्रकरणे निरूपयिष्यामः ।

यत्तु—'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति विषमभेदलक्षणं निर्माय 'अपिशब्दसंगृहीततया इष्टानवाप्तिश्चेति प्रत्येकमपि विषमपदेनान्वयः' इत्युक्तं कुवलयानन्दकृता, तन्न । अव्युत्पत्तेः । अस्मिन्ग्रामे देवदत्तस्य द्रव्यस्यापि लाभोऽस्तीत्यादौ द्रव्यशब्दोत्तरापिशब्दसमुच्चितस्य विद्यादेर्द्रव्यान्वयिन्येवान्वयाद्द्रव्यस्य लाभो विद्यायाश्च लाभ इति धीरिति निर्विवादम् । प्रकृते त्वनिष्टस्याप्नोतिनान्वयः, इष्टानवाप्तेश्च तच्छब्दपरामृष्टेन विषमेणेति वैषम्यात् । प्रत्युत लक्षणवाक्येऽपिशब्दोऽनिष्टां धियमुत्पादयति । अनिष्टस्यावाप्तिरिष्टस्य चेति प्रतीतेः । चकारसमुच्चितया इष्टानवाप्त्या अनिष्टावाप्तेरेकवारं मिलितायास्तत्पदपरामृष्टेन विषमेणान्वयाद्वाक्यावृत्त्या वारान्तरे च प्रत्येकमन्वयाद्भेदत्रयसंग्रह इति तु स्यादपि । न त्वपिशब्दैर्विकत्थनम्[2] । यदपि तेनैवोदाहृतम्—'भक्ष्याशयाऽहिमञ्जूषां

इन्द्रियाणि । **न त्वपिशब्दविकत्थनमिति** । अपिशब्दस्यावाप्तिपदोत्तरमुत्कर्षेणान्वये

१ सुखस्य प्राप्तेः परिवर्ते अनिष्टप्राप्तिरेवेत्याशयः ।

२ सर्वस्यापि खण्डनप्रघट्टकस्यायमाशयः—'इष्टार्थसमुद्यमात् अनिष्टस्यापि अवाप्तिः तत् अर्थात् विषमम्' अत्र अपिना इष्टस्य अनवाप्तिरपि यत्संगृह्यते नेदं व्युत्पत्तिलभ्यम् । अपिशब्देन संगृहीतस्य ( आक्षिप्तस्य ) अर्थस्य तत्रैवान्वयो भवति, वाक्ये अपिशब्दोत्तरं पठितस्य पदार्थस्य यत्रान्वयो भवति । यथा 'अत्र देवदत्तस्य द्रव्यस्यापि लाभः' इति वाक्ये अपिशब्देन विद्यादेः समुच्चयोऽवश्यं भवति परं तस्यान्वयस्तत्रैव भवति यदग्रेऽयमपिशब्दः पठितस्तस्य यत्र भवति । अत्र हि 'द्रव्यस्यापि लाभः' इति अपिशब्दः द्रव्यशब्दोत्तरं पठितः । द्रव्यशब्दस्य च देवदत्तेनान्वयः । ततश्च 'देवदत्तस्य द्रव्यस्य विद्यादेश्च लाभः' इत्यर्थबोधः । प्रकृते तु अपिशब्देन इष्टानवाप्तिः संगृह्यतेऽवश्यम् । किन्तु, 'प्रत्येकमपि विषमपदेनान्वयः' अर्थात् द्वयोरपि विषमपदेनान्वयः क्रियते यो नोचितः । यतो हि अपिशब्दः अनिष्टशब्दोत्तरं पठितः । ततश्च अपिना इष्टानवाप्तेः संग्रहेऽपि 'अनिष्टस्य अवाप्तिः इष्टस्य च अवाप्तिः ( विषमम् )' इति प्रतिकूलोऽर्थः कामं स्यात् । तस्मात् अपिशब्दविकत्थनम् ( अपिशब्देन इष्टावाप्तेः संग्रह इति मिथ्याभिशंसनम् ) त्यक्त्वा 'अवाप्तिश्च' इति चकारेण इष्टानवाप्तिं संगृह्य वाक्यभेदेन आकाङ्क्षितोऽर्थः ( विषमस्य भेदद्वयप्रतिपादनम् ) संपादनीयः । यथा—'इष्टार्थसमुद्यमात् अनिष्टस्यावाप्तिर्विषमम्' 'इष्टार्थसमुद्यमात् इष्टस्यानवाप्तिश्च विषमम्' इति ।

दष्ट्वाऽऽखुस्तेन भक्षितः' इति। अत्र क्त्वाप्रकृतिक्रियाकर्तृकर्तृकोत्तरकालवर्तिक्रियान्तरस्याप्रयुक्तत्वादगम्यमानत्वाच्च प्रविष्ट इति पदाकाङ्क्षितया न्यूनपदत्वम्। यदपि केवलेष्टानवाप्तौ तेनैवोदाजह्रे—

'खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नविततबाहुषु गोपेषु हसन्हरिर्जयति॥'

इति। तदपि न रमणीयम्। अत्र भरभुग्नविततेत्यादिना बाहुगतास्थिसंधिभङ्गरूपानिष्टप्राप्तेः साक्षादुपात्तत्वात्सर्वाङ्गचूर्णीभाव—गर्वापहाररूपायाश्च स्फुटं गम्यमानत्वात्कथमिष्टाप्राप्तिमात्रमित्युच्यते। एतेन 'शैलपतनरूपानिष्टावाप्तिस्तु भगवत्कराम्बुजस्पर्शमहिम्ना न जाता' इति यदुक्तम्, तदप्यसारमेव। अनिष्टानामुक्तत्वात्।

एवमुत्पत्तिलक्षणसंसर्गस्याननुरूपत्वं निरूपितम्। संयोगादिलक्षणसंसर्गस्याननुरूपत्वं यथा—

'वनान्तः खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुः श्रयति भयहर्तुः सपदि या।

तु न किंचिदधिकम्। **क्रियान्तरस्याप्रयुक्तत्वादिति**। तेन भक्षित इत्यन्वये, खिद्यच्चिन्त्यम्। **अत्रेति**। भर इत्यादिः। **बाहुगतास्थिसंधीति**। तस्याऽधात्वर्थत्वात्, भगवत्करस्पर्शमहिम्ना तस्याप्यजातत्वाच्च नेदं युक्तम्। यत्तु कुटिलीभवनं तत्रातर्कितोत्कटपर्वतधारणे तस्य संभावितत्वेन तदङ्गीकृतत्वात्, गर्वेण गोपानामप्रवृत्तेश्च। खिन्नोऽसीत्युक्त्या तथैव लाभाच्च। इति रसगङ्गाधरमर्मप्रकाशे विषमप्रकरणम्॥

१ क्त्वाप्रत्ययप्रकृतिभूतायाः क्रियायाः ('दष्ट्वा' इति दंशनक्रियायाः) यः कर्ता आखुः तत्कर्तृकस्य उत्तरकालवर्तिनः क्रियान्तरस्य (दष्ट्वा अर्थात् पूर्वं दंशनं कृत्वा तदुत्तरकालं 'प्रविष्टः') इत्यादेः अप्रयुक्तत्वात्—अस्य गम्यमानतापि नास्ति अर्थात् आक्षेपोपि न भवितुं शक्नोति, ततो न्यूनपदत्वं दोष इत्याशयः। अत्र 'अनिष्टस्याप्यवाप्तिः' इत्यत्र अपिर्भिन्नक्रमः। 'भक्ष्याशयाऽहि०' अत्र 'प्रविष्टः' इति 'गम्यमानः' इत्यलंकारचन्द्रिकाया यथाकथंचित्समाधानं सुधीभिरवधेयम्।

अहो सेयं सीता शिव शिव परीता श्रुतिचल[1]-
त्करोटीकोटीभिर्वसति खलु रक्षोयुवतिभिः ॥'

अत्र सतीशिखामणेर्भगवत्या राघवधर्मपत्न्याः परमप्रभावयुक्तत्वाद्राक्षसीभिरनाश्यत्वेऽपि रक्षःकर्तृकनाशस्वरूपयोग्यतावच्छेदक[2]मनुष्यत्वजातियोगेन स्वरूपस्य रक्षोदर्शनेन सौन्दर्यसौकुमार्यादीनां गुणानां च नाश्यत्वेन विरुद्धत्वात्समानाधिकरणसंयोगरूपः संसर्गोऽननुरूपः । ननु—

'क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम् ।
क्व मृगाः क्व च कस्तूरी धिग्विधातुर्विदग्धताम् ॥'

इत्यादौ वस्तुकथनमात्रे विषमालंकारप्रसङ्गः । न चेष्टापत्तिः । वस्तुवृत्तस्य लोकसिद्धत्वेनालंकारत्वायोगात् । यतो बहिरसन्तः कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलंकारपदास्पदम् । नच 'यथा पद्मं तथा मुखम्' इत्यादौ सादृश्यस्य लोकसिद्धत्वात्कविप्रतिभानुत्थापितत्वेऽपि कथमलंकारत्वमिति वाच्यम् । सादृश्यरूपे सादृश्योत्थापके वा अभिन्नधर्मेऽभेदांश[3]स्य कविप्रतिभामात्राधीनत्वात् । नहि पद्ममुखयोः शोभारूपो धर्मो जात्यादिवद्वस्तुत एकोऽस्ति । यो हि जात्यादिरूपो वस्तुत एकस्तदुत्थापितं सादृश्यमलंकारबहिर्भूतमेव । यथा—'पद्ममिवास्या मुखं द्रव्यम्' इत्यादौ । एवं च 'वनान्तः खेलन्ती' इति पद्यप्रतिपाद्यायाः सीता—राक्षसवधूसंसर्गाननुरूपताया लौकिकीत्वेन कविप्रतिभानपेक्षत्वान्नालंकारत्वम् । एतेन—

१ श्रुत्योः कर्णयोर्मध्ये चलन्त्यः (कम्पमानाः) करोटीकोटयः शिरोऽस्थिकोणा यासां ताभिः ।

२ रक्षःकर्तृकनाशस्वरूपयोग्यतावच्छेदकभूता (अर्थात् मनुष्यत्वजातौ राक्षसजातिद्वारा कर्तुं शक्यस्य नाशस्य स्वरूपतो योग्यता वर्तत इति रक्षःकर्तृकनाशस्य स्वरूपेण योग्यो यः मनुष्यस्तदवच्छेदकभूता) या मनुष्यत्वजातिः तस्या योगेन सीतायाः स्वरूपं गुणाश्च नाशयितुं शक्या इति सीता-राक्षस्योः समानेऽधिकरणे संयोगः अननुरूप इत्याशयः ।

३ सादृश्यप्रयोजके अभिन्ने धर्मे (समाने धर्मे) अभेदांशः अर्थात् द्वयोरभिन्नतास्थापनं कवेः कार्यम् । पद्मशोभा—मुखशोभयोर्भिन्नत्वेपि हि कविना अभिन्नत्वं स्थाप्यते । ततश्च लोके यत्सादृश्यं प्रसिद्धं तन्मूलभूतस्याभेदांशस्य कविप्रतिभाधीनत्वादलंकारत्वे न बाधकमित्याशयः ।

'अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला।
क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं
स्वमाकूतं धाता कमपि निभृतं पल्लवयति॥'

इत्यलंकारसर्वस्वकृतोदाहृतमपि प्रत्युक्तम्। इयमेव च पद्यान्तरेऽपि कविप्रतिभानुत्थापितार्थके सरणिरिति। सत्यम्। एवं तर्हि

'क्व सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा।
क्व रक्षःखदिराङ्गारमध्यसंवासवैशसम्॥'

इति पद्यमुदाहरणं गृहाण। अत्र हि केवलसीतायाः केवलराक्षसीनां च संसर्गस्याननुरूपतायां सत्यामपि न सा कवेर्विवक्षिता[1]। किं तु या कुसुमसारखदिराङ्गारसंसर्गस्याननुरूपता 'सेति स्फुटमेवास्यामलौकिकत्वात्कविप्रतिभापेक्षित्वम्।

इति रसगङ्गाधरे विषमालंकारप्रकरणम्।

अथ समालंकारः—

**अनुरूपसंसर्गः समम्॥**

संसर्गः पूर्ववद्द्विविधः। तत्रोत्पत्तिलक्षणस्य संसर्गस्यानुरूपत्वं कारणात्स्वसमानगुणकार्योत्पत्त्या, यादृशगुणकवस्तुसंसर्गस्तादृशगुणोत्पत्त्या, यत्किंचिदिष्टप्राप्त्यर्थं प्रयुक्तात् कारणात्तत्प्राप्त्या च। उत्कटेष्टान्तरप्राप्तौ तु प्रहर्षणं[2] वक्ष्यते। संयोगादिलक्षणस्यापि संसर्गिणोरन्यतरगुणस्वरूपानुग्राह्यान्यतरगुणस्वरूपतयाऽनुरूपत्वम्। एवं चानुरूपसंसर्गत्वेन सामान्यलक्षणेन सर्वे भेदाः संगृहीता भवन्ति। यथा—

'कुवलयलक्ष्मीं हरते तव कीर्तिस्तत्र किं चित्रम्।
यस्मान्निदानमस्या लोकनमस्याङ्घ्रिपङ्कजस्तु भवान्॥'

१ सा विवक्षितेत्यनुषङ्गः।
२ इष्टप्राप्तौ समम्, वाञ्छितादप्यधिकप्राप्तौ प्रहर्षणमित्याशयः।

यथा वा—

'मन्त्रार्पितहविर्दीप्तहुताशनतनूभुवः।
शिखास्पर्शेन पाञ्चाल्याः स्थाने दग्धः सुयोधनः॥'

पूर्वं कारणकार्यधर्मयोः श्लेषेणैक्यसंपादनम्, इह तु मरण-दाहयोरभेदाध्यवसानरूपेणातिशयेनेति विशेषः।

द्वितीयो भेदो यथा—

'वडवानलकालकूटलक्ष्मीमकरव्यालगणैः सहैधितः।
रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम्॥'

लक्ष्मीरप्यत्र मारकत्वेनैव कवेर्विवक्षिता।

तृतीयो यथा—

'नितरां धनमाप्तुमर्थिभिः क्षितिप त्वां समुपास्य यत्नतः।
निधनं समलम्भि तावकी खलु सेवा जनवाञ्छितप्रदा॥'

[ अत्र मरण-बहुधनयोः श्लेषेणैक्ये बहुधनरूपेष्टात्मना वाञ्छितार्थाप्तिरूपसमालंकारचमत्कारः। ] अत्र व्याजस्तुतौ मुखे धनप्राप्तिरूपस्तुतिस्फूर्तिदशायां समालंकारस्तावदप्रत्यूह एव। मरणप्राप्तिप्रतीतिदशायां तु व्याजस्तुतेरेव पूर्णाङ्गतया तया विषमालंकारो बाध्यते।

---

प्रागवदाह—अथेति। स्थाने युक्तम्। मुखे प्रारम्भे। अत्रेति। यत इत्यादिः।

---

१ लोकवन्दनीयचरणकमलाज्जनिता कीर्तिः कुवलय( लोक )लक्ष्मीं हरदेव। कुवलयेत्यत्र श्लेषः।

२ अतिशयेन कारण-कार्यधर्मयोरैक्यसंपादनमित्यनुषङ्गः। कारणस्य हुताशनस्य शिखास्पर्शेन यथा दाहः ( दाहजनितं मरणम् ), तथैव तत्कार्यस्य ( तज्जनितायाः पाञ्चाल्याः ) शिखा( वेणी )स्पर्शेन मरणमिति गुणसाम्यात्समम्।

३ 'अत्र मरण-' इत्याद्येकस्मिन्नेव पुस्तके समुपलभ्यते।

४ आमुखे स्तुतेः प्रतीतिः पर्यवसाने तु निन्दाया इति व्याजस्तुतिर्यदात्र स्वीकृता तदा मरणप्राप्तिप्रतीतिरपि निन्दात्मकतया व्याजस्तुतेरेवाङ्गम् [ पर्यवसाने तस्या अपेक्षितत्वात् ] अत एवात्र मरणप्रतीत्या पूर्णाङ्गया व्याजस्तुत्या विषमालंकारो बाध्यते।

यत्तु कुवलयानन्दकृता—

'उच्चैर्गजैरटनमर्थयमान एव
त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् ।
उच्चाटनं त्वमपि लम्भयसे तदेव
मामद्य नैव विफला महतां हि सेवा ॥'

इत्युदाहृत्य, 'अत्र व्याजस्तुतौ यद्यपि स्तुत्या निन्दाभिव्यक्तिविवक्षायां विषमालंकारः, तथापि प्राथमिकस्तुतिरूपवाच्यकक्षायां समालंकारो न निवार्यते' इत्युक्तम् तत्रोदाहरणे मामुच्चाटनं लम्भयसे इति द्विकर्मकत्वं कथम् ? 'गति–' आदिसूत्रस्य प्राचीनरीत्या नियमविधित्वपक्षे लभेरण्यन्तकर्तुः कर्मत्वस्य व्यावर्तनात् । यदा तु—

'परत्वादन्तरङ्गत्वादुपजीव्यतयापि च ।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता ॥'

इति नवीनरीत्या अपूर्वविधित्वमुच्यते, श्रौतं णिजन्तार्थक्रियायाः प्राधान्यमपवादस्यैव न्याय्यत्वादिति । अत्रेदं चिन्त्यम्—महतां सेवा विफला नेति स्तुतिः । ततो दूरनिरसनप्रापणरूपार्थान्तरपरिग्रहेण विषमावस्फूर्तिपूर्वकनिन्दायां पर्यवसानम् ।

---

१ 'हरिः शत्रून् स्वर्गमगमयत्' इत्यादौ प्रयोजककर्तुः (हरेः) व्यापारस्य शाब्दं प्राधान्यम् (प्रेरणार्थस्य णिचः श्रवणात्) अन्यानधीनत्वरूपमार्थमप्यस्त्येवेति तादृशव्यापारजन्यस्य फलस्याश्रयभूतानां शत्रूणां कर्तुरीप्सिततमं कर्मेत्यनेनैव कर्मसंज्ञायां सिद्धायां गतिबुद्धीतिसूत्रं नियमविधायकम्–'णिजर्थेनाप्यमानस्य प्रयोज्यकर्तुर्यदि कर्मत्वं भवति तर्हि गत्यादीनामेव' तेन 'पाचयति देवदत्तेन' इत्यादौ न कर्मत्वम् । ततश्च गत्याद्यर्थत्वाभावादत्र पद्ये (मां लम्भयन् इत्यत्र) कर्मत्वमनुपपन्नमेव । नवीनानां मते—शत्रूनगमयदित्यादौ कर्तुरीप्सितेति कर्मसंज्ञां बाधित्वा परत्वात् अन्तरङ्गत्वात् उपजीव्यत्वात् (कर्तृसंज्ञायां सत्यां कर्मत्वं भवति) च शत्रूणाम् (प्रयोज्यकर्तृणाम्) कर्तृत्वमेव स्यादिति अप्राप्ताया द्वितीयायाः सिद्धये गतीत्यादिसूत्रस्य विधायकत्वं स्वीक्रियते । अर्थात् प्रयोजककर्तुः प्रेरणव्यापारस्य शाब्दमपि प्राधान्यं तिरस्कृत्य प्रयोज्यकर्तृणां शत्रूणामार्थमपि पूर्वजातं व्यापारप्राधान्यं बहुमन्यते [ तदैव व्यापाराश्रयाणां कर्तृसंज्ञा स्यात् ] तदा (गतिसूत्रस्य विध्यर्थत्वे) 'उच्चाटनं मां लम्भयसे' इति लभेरण्यन्तावस्थायाः कर्तुः कर्मत्वस्य अप्रसक्तिरेवेत्याशयः ।

मुत्सृज्याऽऽर्थं पूर्वक्रियाया एव प्राधान्यमनुरुध्यते तदा त्वप्रसक्तिरेवेति । उच्चाटनं मया लम्भयसे इति तु भाव्यम् । एवमपि लभेर्यथाकथंचिद्द्व्यर्थतां संपाद्य प्रयोग उपपाद्यते, तथापि 'प्राथमिककक्षायां समालंकारो न निवार्यते' इत्यनेन 'द्वितीयकक्षायां विषमालंकारोऽस्तु नाम' इत्यागूरितमसदेव । तादृशवैषम्यस्य निन्दारूपस्य व्याजस्तुतिविषयत्वेन तयापवादस्यैव न्याय्यत्वात् । न च वैपरीत्यम्, परिपूर्णचमत्कारभूमेर्व्याजस्तुतेस्त्वयाप्यनपह्नवात् ।

संयोगादिलक्षणस्यानुरूपता द्वेधा—स्तुतिपर्यवसायिनी, निन्दापर्यवसायिनी च । आद्या यथा—

'अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन्विश्वोद्धर्त्रीं गदविदलितः सिद्धभिषजम् ।
तृषार्तः पीयूषप्रकरनिधिमत्यन्तशिशुकः
सवित्रीं प्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥'

अनाथत्वादिविशिष्टस्य स्नेहार्द्रत्वादिविशिष्टेन संसर्गस्यानुरूपता भागीरथीस्तुतिपर्यवसायिनी । द्वितीया यथा—

'युक्तं सभायां खलु मर्कटानां शाखास्तरूणां मृदुलासनानि ।
सुभाषितं चीत्कृतिरातिथेयी दन्तैर्नखाग्रैश्च विपाटनानि ॥'

---

परस्परविषयपरिहारेण **यथाकथंचिद्द्व्यर्थतामिति** । 'नवेति विभाषा' इति सूत्रे हरति भारमित्यत्राप्राप्तौ 'हृक्रो–' इति 'विभाषा' इति भाष्योक्तेर्यथाकथंचिद्द्व्यर्थानां तत्राग्रहाच्चिन्त्यमिदम् । उच्चाटनं मां लम्भयसे इति तु संयोगानुकूलव्यापारानुकूलव्यापारार्थकवहसमानार्थकत्वात् ण्यन्तलभेः 'अकथितं च' इति सूत्रेण बोध्यम् । संयोगानुकूलव्यापारो हि लभेरर्थः । गत्यादिनियमश्च पाचयत्योदनं देवदत्तेनेत्यादिव्याप्त्या चरितार्थः । द्वयोः सावकाशत्वात्संकर एवोचितश्चेति । **गदेति** । रोगसहित इत्यर्थः ॥ इति रसगङ्गाधरमर्मप्रकाशे समालंकारप्रकरणम् ॥

---

१ उच्चैः (गजैः) अटनस्य स्थाने उच्चाटन(स्वस्थानान्निरसन)रूपं वैषम्यं निन्दापर्यवसायकत्वाद्व्याजस्तुतेरङ्गम् (आमुखे प्रतीता स्तुतिर्निन्दापर्यवसायिनी यत्र, तत्र व्याजस्तुतिः)। ततश्च अपवादतया विषमं बाधित्वा व्याजस्तुत्यैव व्यपदेश उचित इत्यर्थः ।

२ अर्थात् विषम एवास्तु, मा भूद्व्याजस्तुतिरिति शङ्का । पूर्णचमत्कारशालिन्या व्याजस्तुतेरपह्नवस्त्वयापि न साध्य इति तत्समाधानम् ।

अत्राप्रस्तुतगतत्वेन स्थिता निन्दा तदाक्षिप्ते प्रस्तुते पर्यवस्यति[1]। एवं यथा विषमालंकारस्त्रिभेदस्तथा तद्विपरीतभेदत्रययुक्तः समालंकारोऽपि प्रपञ्चितः।

यत्तु—'विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम्' इति विषमालंकारं लक्षितवता, 'तद्विपर्ययः समम्' इति समालंकारं लक्षयित्वा—"तत्पदेनात्र विषमालंकारसंबन्धी विरूपसंघटनारूपश्चरम एव भेदो गृह्यते। तद्विपर्ययस्यैव चारुत्वात्। न त्वाद्यभेदद्वयम्। तद्विपर्ययस्य कारणादनुरूपकार्योत्पत्तिरूपस्य, वाञ्छितार्थप्राप्तिरूपस्य च वस्तुसिद्धतया चारुताविरहात्। एवं चानुरूपसंघटनात्मक एव समालंकारः। न तु विषमालंकार इव भेदत्रयात्मकः" इत्यलंकारसर्वस्वकृतोक्तम्। विवेचितं च विमर्शिनीकृता—'कारणादनुरूपकार्योत्पत्तिर्हि लोकप्रसिद्धा। नहि तस्या उपनिबन्धश्चारुतामावहति' इति। तदुभयमसत्। वस्तुतोऽननुरूपयोरपि कार्यकारणयोः श्लेषादिना धर्मैक्यसंपादनद्वाराऽनुरूपतावर्णने, वस्तुतोऽनिष्टस्यापि तेनैवोपायेनेष्टैक्यसंपत्ताविष्टप्राप्तिवर्णने[2], च चारुताया अनुपदमेव दर्शितत्वात्। तस्मात्सममपि त्रिविधमेव।

इति रसगङ्गाधरे समालंकारप्रकरणम्।

अथ विचित्रालंकारः—

**इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीताचरणं विचित्रम् ॥**

विपरीतत्वं च प्रतिकूलत्वम्। यथा—

'बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते[3] कर्मपाशा-
नन्तःशान्त्यै मुनिशतमताऽनल्पचिन्तां[4] वहन्ति।

विचित्राधिकालंकारौ स्पष्टौ।

१ यादृशाः कपयस्तादृशमेव तेषां सत्कारणमित्यनुरूपसंसर्गेण आपाततः अप्रस्तुतानां मर्कटानां निन्दा, किन्तु तेषां तात्पर्यविषयत्वाभावात्प्रस्तुतेषु ( 'पञ्चायत्त' सभायां कलहपरेषु महाशयवरेषु )' सा पर्यवस्यति।

२ अनिष्टस्यापि श्लेषादिना उपायेन यत्र इष्टैक्यम् ( इष्टाऽभेदः, इष्टत्वम् ) संपाद्यते तत्र वास्तवे अननुरूपयोरपि अनुरूपता अलंकारत्वास्पदमिति कृत्वा 'समं' भवतीत्याशयः।

३ यज्ञप्रभृतीन्।

४ मुनिशतमतानाम् अनल्पां चिन्ताम्।

तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥'

अत्र प्रथमचरणगतं विचित्रं रूपकानुप्राणितम्[1], यज्ञादिकर्मकरणस्य यज्ञादीनां पाशत्वासिद्धौ बन्धमुक्तिविपरीतत्वासंगतेः। द्वितीयचरणगतं तु शुद्धम्, शान्तौ चिन्तायाः स्वरूपेणैव विपरीतत्वात्।

यदि तु इष्टैषिणो भ्रान्तत्वाभिव्यक्तेस्तुल्यत्वात्स्वतः सिद्धे इष्टे तदनुकूलाभासप्रयोगोऽपीष्टैषिकर्तृको विचित्रमित्युच्यते[2], लक्षणे च विपरीतपदस्थानेऽननुकूलपदं न्यस्यते तदा इदमप्युदाहरणम्। यथा—

'विष्वद्रीचा[3] भुवनमखिलं भासते यस्य धाम्ना
सर्वेषामप्यहमयमिति प्रत्ययालम्बनं यः[4]।
तं पृच्छन्ति स्वहृदयगतावेदिनो विष्णुमन्या-
नन्यायोऽयं शिव शिव नृणां केन वा वर्णनीयः[5] ॥'

अत्र जीवरूपेण सकललोकप्रत्यक्षसिद्धस्य परमेश्वरस्य प्रतिपत्त्यर्थं परान्प्रति प्रश्नोऽनुकूलाभासः[6]। मुख्यमनुकूलं तु स्वहृदयमेव। 'यत्साक्षादपरोक्षात्' इति वचनात्। न च कारणाननुरूपं कार्यमिति विषमभेदोऽयं वाच्यः,

१ यज्ञप्रभृतिकर्मसु पाशत्वाऽऽरोपे एव बन्धोन्मुक्तिरूपस्य इष्टस्यापेक्षया विपरीताचरण मुमुक्षुकर्तृकं पाशायितानां कर्मणामनुष्ठानं संगतं भवतीति रूपकमत्रोपजीव्यमित्यर्थः।

२ अयं भावः—इष्टैषिणो भ्रान्तत्वसूचनाय सयत्नद्वारा इष्टस्य साधनार्थं तदनुकूलाभासप्रयोगः (वास्तवे स प्रयोग इष्टसाधनानुकूलो नास्ति, किन्त्वस्माकं तथा भासते) 'विचित्रम्' इति लक्षणे पूर्वं निर्दिष्टः। इदानीं (स्वयत्नं विनापि) स्वतः सिद्धेऽपीष्टे, इष्टेच्छुककृतः तदनुकूलाभासप्रयोगोऽपि विचित्रमित्युच्यते। यतो हि उभयत्र इष्टेच्छुकस्य भ्रान्तत्वसूचनं समानम्। एवं सति लक्षणे 'इष्टाऽननुकूलाचरणं विचित्रम्' इत्युचितम्।

३ विष्वक् सर्वतः अञ्चति प्रसरति तत् विष्वद्रङ् तादृशेन (सर्वतो व्यापिना) यस्य तेजसा।

४ अस्मदिदंपदार्थाभेदरूपस्य प्रत्ययस्य (बोधस्य) य आश्रयः।

५ स्वहृदयगतं न विदन्ति तच्छीला नराः। तं विष्णुम् (व्यापकम्) अन्यान् पृच्छन्ति।

६ जीवरूपेण स्थितस्य परमेश्वरस्य प्रत्यक्षरूपमिष्टं स्वतःसिद्धम्। तदर्थमनुकूलप्रयोगः स्वहृदयान्वेषणम्। तद्विहाय अन्यान् प्रति प्रश्नः अनुकूलाभासप्रयोग इत्याशयः।

विषमे पुरुषकृतेर्[1]अनपेक्षणात्। कार्यकारणगुणवैलक्षण्येनैव तद्भेदनिरूपणाच्च।

इति रसगङ्गाधरे विचित्रालंकारप्रकरणम्।

---

अथाधिकालंकारः—

**आधाराधेययोरन्यतरस्यातिविस्तृतत्वसिद्धिफलकमितरस्यातिन्यूनत्वकल्पनमधिकम्॥**

यथा—

'लोकानां विपदं धुनोषि, तनुषे संपत्तिमत्युत्कटा-
मित्यल्पेतरजल्पितैर्जडधियां भूपाल मा गा मदम्।
यत्कीर्तिस्तव वल्लभा लघुतरब्रह्माण्डसद्मोदरे
पिण्डीकृत्य महोन्नतामपि तनुं कष्टेन हा वर्तते॥'

अत्र ब्रह्माण्डस्यातिसूक्ष्मत्वकल्पनेन कीर्तेराधेयायाः परममहत्त्वं फलितम्। तेन च व्याजस्तुतिः परिपोष्यते।

'गिरामविषयो राजन्विस्तारस्तव चेतसः।
सावकाशतया यत्र शेते विश्वाश्रयो हरिः॥'

अत्र सावकाशतयेत्यनेन कल्पितया आधेयन्यूनतया[2] आधारस्य महत्त्वं पर्यवस्यति। यदि तु सावकाशतयेति विशेषणं विश्वाश्रय इत्यत्रापि योज्यते, तदा शृङ्खला[3]रूपस्याधाराधिकालंकारस्येदमेवोदाहरणम्।

'ब्रह्माण्डमण्डले भान्ति न ये पिण्डीकृता अपि।
परस्परापरिचिता वसन्ति त्वयि ते गुणाः॥'

१ तत्र कार्यकारणभावः प्राकृतः, न पुरुषसंबन्धजनितः। अत्र तु कल्पितः। किंच तत्र कार्यकारणयोर्मिथो गुणवैलक्षण्यमेव विषयः। अत्र तु इष्टसाधनाय विपरीता कृतिः।

२ आधेयो हरिर्हृदयापेक्षया संकुचितः, अत एव हृदये भूयान् अवकाशोऽवशिष्टः।

३ संपूर्णविश्वस्य आश्रयदानेपि अवकाशोऽवशिष्ट इति हरिरूपस्याधारस्याधिक्यम्। स हरिर्हृदये सावकाशं शेते इति हृदयस्याधिक्यमिति परस्परं संबन्धात्।

अत्रोभयविधस्या[1]प्यलंकारस्य सामानाधिकरण्यम्। लक्षणे कल्पनमित्यनेन यत्राधाराधेययोरन्यतरस्य न्यूनत्वमधिकत्वं च वास्तवं तत्र नातिप्रसङ्गः। एवं च—

'क्वा[2]हं तमोमहदहंखचराग्निवार्भू-
संवेष्टिताण्डघटसप्तवितस्तिकायः।
क्वेदृग्विधाविगणिताण्डपराणुचर्या-
वाताध्वरोमविवरस्य च ते महित्वम्॥'

इति श्रीभागवतदशमस्कन्ध (१४।११) गतं ब्रह्मस्तुतिपद्यमस्यालंकारस्यानुदाहरणमेव। दिक्कालानवच्छिन्नस्य पारमेश्वरस्य भूम्नः सर्ववेदसिद्धत्वेन कविप्रतिभानुल्लिखितत्वात्। एतेन—

'द्यौरत्र क्वचिदाश्रिता, प्रविततं पातालमत्र क्वचि-
त्क्वाप्यत्रैव धरा धराधरजलाधारावधिर्वर्तते।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेभिः स्थितै-
र्दूरे पूरणमस्तु शून्यमिति य[3]न्नामापि नास्तं गतम्॥'

इत्यलंकारसर्वस्वकारेण यदुदाहृतं तदपि प्रत्युक्तम्।

इति रसगङ्गाधरेऽधिकालंकारप्रकरणम्।

---

१ पूर्वार्धे आधेयानाम् (गुणानाम्) आधिक्यम्। उत्तरार्धे आधारस्य (राज्ञः)।

२ ननु ब्रह्माण्डशरीरस्य तव (ब्रह्मणः) अपि ईश्वरत्वमिति शङ्कायामाह—क्वाहमिति। तमः प्रकृतिः। महान् महत्तत्त्वम्। अहमहंकारः। खम् आकाशः। चरो वायुः। अग्निः। वार् जलम्। भूश्च। एभिः संवेष्टितः अण्डाकारः सोऽयं घट एव सप्तवितस्तिपरिमितः (स्ववितस्तिभिः) कायो यस्य ईदृशः अहम् (ब्रह्मा) क? ते महत्त्वं च क? कथंभूतस्य ते। ईदृग्विधानि अविगणितानि यान्यण्डानि तान्येव परमाणवः, तेषां चर्या परिभ्रमणम् तदर्थं वाताध्वानः गवाक्षायितानि (गवाक्षे यथा वायुरवारितो भ्रमति तथा त्वद्रोमविवरेषु अगणितानि ब्रह्माण्डानि भ्रमन्ति) रोमविवराणि यस्य। अहमेकतमब्रह्माण्डरूपः कदाचित् स्यां किन्तु तव विश्वव्यापिनः शरीरस्य अनन्तानां रोम्णाम् अनन्तेषु विवरेषु न जाने कियन्ति ईदृग्विधानि ब्रह्माण्डानि भ्रमन्ति। ततस्तवैश्वर्यस्याग्रे कोऽहमित्याशयः।

३ आकाशस्यान्तःस्थितैः एभिः (धरादिभिः) तत्पूरणस्य का कथा, अद्यापि आकाशं 'शून्यम्' इति व्यपदेशो न विरमतीत्याशयः।

अथान्योन्यालंकारः—

**द्वयोरन्योन्येनान्योन्यस्य विशेषाधानमन्योन्यम् ॥**

विशेषश्च क्रियादिरूपः। यथा—

'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया।
अलिकेन च हेमकान्तिना विदधे कापि रुचिः परस्परम् ॥'

अत्र गुणरूपविशेषाधानम्, रुचेर्गुणत्वात्। न च विधानरूपक्रियात्मकविशेषाधानमिह शङ्क्यम्। भावनासामान्यरूपस्य[1] विधानस्याचमत्कारित्वेनाविशेषत्वात्।

'परपूरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता।
अविशत्परकामिनीभुजंगीभयतः सत्वरमेव सोऽपि तस्याः ॥'

अत्र क्रियारूपविशेषाधानम्।

यत्तु-

"-'यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः।
तथा प्रपापालिकापि धारां वितनुते तनुम् ॥'

अत्र प्रपापालिकायाः पथिकेन स्वासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषन्त्या विरलाङ्गुलिकरणतश्चिरं पानीयपानानुवृत्तिसंपादनेनोपकारः कृतः। तथा प्रपापालिकयापि स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणतश्चिरं पानीयदानानुवृत्तिसंपादनेनोपकारः कृतः।"

इति कुवलयानन्दकार आह। तन्न। तावदियं पदरचनैवायुष्मतो ग्रन्थकर्तुर्व्युत्पत्तिशैथिल्यमुद्गिरति। तथा हि—स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वशब्दस्य प्रपापालिकाविशेषणघटकत्वेन प्रपापालिकाबोधकत्वमेव न्याय्यम्, न पान्थबोधकत्वम्। एवं स्वमुखावलोकनमभिलषत इत्यत्रापि पान्थबोधकत्वमेव, न त्वदिष्टप्रपापालिकाबोधकत्वम्। एवं स्थितेऽर्थासंगतिः स्पष्टैव। न च सर्वनाम्नां बुद्धिस्थप्रकारावच्छिन्ने शक्तत्वादिष्टबोधोपपत्तिरिति वाच्यम्। तदिदमस्मद्युष्मदादिष्विव तत्तद्विशेषव्युत्पत्तेरपि[2] कल्पनीय-

---

१ विधानं क्रिया। अत एव भावना( क्रिया )सामान्यरूपमिदम्, यस्यान्योन्यं संघटने न चमत्कारः। क्रियाविशेषस्तु ( यथा अग्रे 'अविशत्' ) चमत्कारकः।

२ तत्तदिदंशब्दादिषु यथा विशेषव्युत्पत्तिः कल्प्या ( न बुद्धिस्थप्रकारा० ) तथात्रापि कल्पनस्यावश्यकत्वेत्यर्थः।

त्वात्। सा च प्रकृते यद्विशेषणघटकत्वेन स्वनिजादयः शब्दा उपात्तास्तद्बोधका इत्येवंरूपा। तेन 'स्वदाररतानां विप्राणामहं भक्तः, देवदत्तस्य पुत्रः स्वमातृभक्तः' इत्यादौ मदीयदाररतानामिति, देवदत्तमातृभक्त इति च न कस्याप्यभ्रान्तस्य स्वरसवाहिनी प्रतीतिः। अत एव—'निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः' इत्यत्र 'दण्डपादगता तनुः प्रतीयते। भवानीगता तु सा अपेक्षिता' इति व्युत्पन्नशिरोमणिभिर्मम्मटभट्टैः काव्यप्रकाशेऽभिहितम्। न चेदं श्रुतिकाटवादिवत्काव्यमात्रविषयं[1] दूषणमिति वाच्यम्। शाब्दव्युत्पत्तौ काव्यस्यानन्तर्भावात्। मदीयदाररतानामिति, देववत्तमातृभक्त इति च तात्पर्येण प्रागुक्तवाक्यप्रयोक्तुरनुपहसनीयतापत्तेश्च। किं च[2] परस्परोपकारो हि स्वव्य-

प्रागवदाद—अथेति। अनुपहसनीयतापत्तेश्चेति। अत्रेदं चिन्त्यम्—स्वश-

१ अत्र हि 'स्व'शब्दस्य न काव्ये प्रयोगः। अपि तु लक्षणसमन्वयवचनिकायाम्। तथा न नात्र दोषप्रसक्तिरिति पूर्वपक्षी। शाब्दव्युत्पत्तौ काव्यं न अन्तर्भवति अर्थात् शाब्दी व्युत्पत्तिरपि काव्ये एव अनुरोद्धव्या, तस्या उल्लङ्घने सति काव्यमात्रे दोषः, अन्यत्र न। इति नायं नियमः। सर्वत्रैव तस्याः अनुरोध्यत्वादित्येकं समाधानम्। 'स्वदाररतानां विप्राणामहं भक्तः' इत्यादिवाक्यद्वयं 'मदीयदाररतानाम्०' इत्यादितात्पर्येणोच्चारितं स्पष्टमुपहसनीयमेव प्रज्ञावताम्। किन्तु काव्यमात्रदूषणतास्वीकारे तु वाक्यद्वयम् अनुपहसनीयं स्यादिति द्वितीयं समाधानम्।

२ किं चेत्यादेः प्रघट्टकस्येदं विशदीकरणम्—परस्परोपकारो हि स्वस्मात् (उपकारात्) व्यधिकरणः (विरुद्धे आधारे स्थितः) यो व्यापारस्तत्साध्य एव चमत्कारी। अर्थात् प्रपापालिकाकृतेन व्यापारेण पथिकस्योपकारो वर्ण्यो न प्रपापालिकायाः। एवं पथिककृतेन व्यापारेण प्रपापालिकाया एव उपकारश्चमत्कारको न पथिकस्य। स्वव्यापारेण स्वोपकारस्तु तुषारस्य शिशिरीकरणमिव स्वतःसिद्धतया नान्यव्यापारमपेक्षते। अत्र तु विरलाङ्गुलिता (कराङ्गुलीनां परस्पराद्विश्लिष्टता) संपादनद्वारा पथिकेन प्रपापालिकाया उपकारः कृतः, एवं धारातनूकरणेन प्रपापालिकया पथिकस्योपकारः कृत इत्युदाह्रियते। किन्तु पानीयपानव्याजेन सुचिरं सुन्दरीमुखावलोकनमिच्छता पथिकेन विरलाङ्गुलितया आत्मकर्तृकचिरदर्शन एव उपकारः कृतः, न प्रपापालिकाकर्तृके आत्मकर्मकचिरदर्शने। एवमेव प्रपापालिकयापि धारातनूकरणेन आत्माभिलाषसाधन एव उपयोगः कृतो नान्यस्य। किन्तु अन्योन्यालंकारस्य समन्वयस्तदैव भवेद् यदा एकस्य व्यापारेण अपरस्योपकारः स्यात्तस्मादनुदाहरणमेवैतदित्याशयः।

धिकरणव्यापारसाध्य एव चमत्कारित्वाल्लक्षणघटकः, न तु स्वसमानाधिकरणतत्साध्योऽपि । तत्र हि तुषारशिशिरीकरणन्यायेनान्यव्यापारस्यानावश्यकतया चमत्कारिताविरहात् । इह हि धारातनूकरणाङ्गुलिविरलीकरणयोः कर्तृभ्यां स्वस्वकर्तृकचिरकालदर्शनार्थं प्रयुक्तयोस्तत्रैवोपयोगश्चमत्कारी, नान्यकर्तृकचिरकालदर्शन इत्यनुदाहरणमेवैतदस्यालंकारस्येति सहृदया विचारयन्तु ।

इति रसगङ्गाधरेऽन्योन्यालंकारप्रकरणम् ।

---

अथ विशेषालंकारः—

**प्रसिद्धमाश्रयं विना आधेयं वर्ण्यमानमेको विशेषप्रकारः । यच्चैकमाधेयं परिमितयत्किंचिदाधारगतमपि युगपदनेकाधारगततया वर्ण्यते सोऽपरो विशेषप्रकारः ॥**

युगपदिति विशेषणाद्वक्ष्यमाणे पर्याये[1] नातिव्याप्तिः । एवं च ग्रन्थान्तरगतानि लक्षणान्यतिप्रसक्तान्येव ।

**"यच्च किंचित्कार्यमारभमाणस्यासंभाविताशक्यवस्त्वन्तरनिर्वर्तनं स तृतीयो विशेषप्रकारः । एवं चैतदन्यतमत्वं विशेषालंकारसामान्यलक्षणम्"**

इति प्राञ्चः ।

तत्र प्रथमः प्रकारो द्विविधः—आधारान्तरगतत्वेनाधेयं[2] वर्ण्यमानम्, निराधारत्वेन च । क्रमेणोदाहरणानि—

---

ब्दादयो यद्विशेषणघटकास्तद्विशेष्यान्विततद्विशेष्येतराबोधका इति व्युत्पत्तेः समभिव्याहृतपदार्थे तद्बोधकत्वव्युत्पत्तेरेव चानुभवबलेन स्वीकारः । नहि पथिकस्तद्विशेष्यान्वित इति । **अनुदाहरणमेवैतदिति** । स्वस्वोपकारसत्त्वेऽपि परस्परोपकारोऽप्यस्त्येव । स न चमत्कारकारीति तु रिक्तं वचः । किं च यथातथाशब्दव्यत्यासेन पूर्वोत्तरार्धव्यत्यासेन चास्य पुनः पाठे परस्परोपकारस्यैव चमत्कृतस्य प्रतीतेस्तदभिप्रायेणोदाहरणत्वमेव । अपि च प्रकरणादिसहायेनापि परस्परोपकारप्रतीतिश्चमत्कृतैवेति चिन्त्यमिति दिक् ॥

इति रसगङ्गाधरमर्मप्रकाशेऽन्योन्यालंकारप्रकरणम् ॥

प्रागवदाह—**अथेति** ।

---

१ पर्यायेऽपि एकमाधेयमनेकेषु आधारेषु वर्ण्यते । किन्तु न समकालम्, अपि तु क्रमेण ।

२ अर्थात् स्वकीयमाधारं त्यक्त्वा अन्यस्मिन्नाधारे । यथा नृपाधारा कीर्तिः दिङ्मौलिगतत्वेन ।

'अये राजन्नाकर्णय कुतुकमाकर्णनयन
त्वदाधारा कीर्तिर्वसति किल मौलौ दशदिशाम् ।
त्वदेकालम्बोऽयं गुणगणकदम्बो गुणनिधे
मुखेषु प्रौढानां विलसति कवीनामविरतम् ॥'

अत्र दिङ्मौलिगतत्वेन ।

'युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद्विनाशः ।
इदं तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्तिः ॥'

द्वितीयः प्रकारो यथा—

'नयने सुदृशां पुरो रिपूणां वचने वश्यगिरां महाकवीनाम् ।
मिथिलापतिनन्दिनीभुजान्तःस्थित एव स्थितिमाप रामचन्द्रः ॥'[1]

तृतीयः प्रकारो यथा—

'कोदण्डच्युतकाण्डमण्डल[2]समाकीर्णत्रिलोकीतलं
रामं दृष्टवतां रणे दशमुखप्राणापहारोद्यतम् ।
दुर्दर्शोऽपि नृणामभूदुरुमरुद्वेगप्रचण्डीकृत-[3]
ज्वालाभिर्जगतीतलं कवलयन्कालानलो गोचरः ॥'

अत्र रामदर्शनं कुर्वतां कालानलदर्शनरूपाशक्यवस्त्वन्तरनिर्वर्तनम् ।

ननु—

'लोभाद्वराटिकानां विक्रेतुं तक्रमानिशम[4]टन्त्या ।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥'

इति वक्ष्यमाणप्रहर्षणविषमालंकारयोगे[5] तृतीयप्रकारस्यातिव्याप्तिः । दधिविक्रयमारभमाणाया नीलमणिप्राप्तिवर्णनादिति चेत्, न । अत्र चाशक्यवस्त्वन्तरनिर्वर्तने तदभेदाध्यवसाननिबन्धनत्वं विशेषणम् । 'कालानलो वीक्षितः' इत्यनुपदमुदाहृते विशेषालंकारे यथा अशक्यवस्त्वन्तररूप-

१ सुदृशां नयनादिषु स्थितिमापेत्यन्वयः ।

२ काण्डमण्डलं बाणसमूहः ।

३ उरुणा महता मरुद्वेगेन वायुवेगेन प्रचण्डीकृताभिः ।

४ आनिशम् रात्रिं यावत् । 'अविरतमटन्त्या' इति भामिनीविलासे पाठः ।

५ प्रहर्षण-विषमालंकारयोर्योगे ( संकरे ) ।

कालानलवीक्षणं राम--कालानलयोस्तद्दर्शनयोर्वा अभेदाध्यवसानेन निर्वर्तितम्, न तथा 'दधि विक्रेतुमटन्त्या' इत्यत्र महेन्द्रनीलमणिदर्शनमित्यदोषः। न च भगवति नीलमण्यभेदाध्यवसानेन निर्वर्तितमेव तदिति वाच्यम्। किंचित्कार्यमारभमाणस्येत्यत्र यत्कार्यं विशेषणतया प्रविष्टं तेन सहाशक्यवस्त्वन्तरस्याभेदस्य विवक्षितत्वात्। प्रकृते च तक्रविक्रयेण सह नीलमणेरभेदस्यानध्यवसानात्। न चातिशयोक्त्या विशेषालंकारतृतीयप्रकारस्य गतार्थत्वं वाच्यम्। एतदुदाहरणे रामस्य विषयस्य कालानलेन विषयिणा निगरणाभावात्। नापि रूपकेण। विषयविषयिणोः सामानाधिकरण्यविरहेणारोपासिद्धेः। न च स्मृत्या। कालानलस्य वीक्षणकर्मत्वश्रवणेन स्मृतिकर्मत्वासिद्धेः। तस्मादशक्यवस्त्वन्तरकरणं विशेषालंकारस्यैव प्रभेद इति प्राचामाशयः।

अत्र विचार्यते---विशेषालंकारस्यायं प्रभेद इति कथं विज्ञायते। नहि रूपकादिवदलंकारस्यास्य किंचित्सामान्यलक्षणमस्ति, येन तदाक्रान्तत्वेनाशक्यवस्त्वन्तरकरणत्वस्य तत्प्रकारतामभ्युपगच्छेम। न चान्यतमत्वमेव तथाविधमस्तीति वाच्यम्। अनेनैव प्रकारेणेतरालंकारभेदत्वस्यापि सुवचत्वात्। अनुगतलक्षणं विना प्राचीनोक्तिराज्ञामात्रमेव राज्ञामिति तदपेक्षया पृथगलंकारतोक्तिरेव रमणीया। अपि च 'येन दृष्टोऽसि देव त्वं तेन दृष्टो हुताशनः,' 'तेन दृष्टा वसुंधरा' इत्यादौ वस्त्वन्तरस्य हुताशनवसुधादर्शनादेरशक्यासंभावितत्वयोरभावात्प्रकृतालंकारासंभवेन निदर्शना स्वीक्रियते यदि, तदा 'येन दृष्टोऽसि देव त्वं तेन दृष्टः सुरेश्वरः' इत्यादौ विशेषालंकारेऽपि सैव शरणीक्रियताम्। नहि हुताशन इत्यत्र सुरेश्वर इत्यत्र च विच्छित्तिभेदोऽस्ति[3]। एवं च प्राचीनानुसारेण 'कोदण्डच्युत--' इत्यादि

---

१ सर्वस्याऽयमाशयः--विशेषालंकारे रामदर्शनमेव कालानलदर्शनाऽभिन्नत्वेनाध्यवसीयते। यतो हि अलंकारलक्षणे 'प्रकृतकार्याऽऽरम्भे एव अन्यकार्यनिर्वर्तनम्' इत्यनेन प्रकृतकार्ये अशक्यकार्यस्याऽभेदो विवक्षितः। 'दधिविक्रयं कुर्वत्या नीलमणिर्लब्धः' अत्र तु दधिविक्रये नीलमणेर्नाभेदाध्यवसायः। इति न प्रसङ्गस्तृतीयप्रकारातिप्रसक्तेः।

२ एतदन्यतमत्वमितिवत् प्रतिपक्षिणा उपमा-रूपकाद्यन्यतमत्वं विशेषत्वमित्युक्तौ उपमादिप्रभेदत्वमस्य स्यादित्यर्थः।

३ 'तेन दृष्टो हुताशनः' इत्यादौ वर्णनकृतो योऽतिशयः स एव 'दृष्टः सुरेन्द्रः' अत्रापि। उपमानोपमेयभावकृतचमत्कारस्य समानत्वात्।

यदस्माभिरुदाहृतं तदपि न विशेषसरणिमारोढुमीष्टे। एतेन 'त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्' इत्यादि कुवलयानन्दोक्तमुदाहरणं गतार्थम्। तस्मादिदमुदाहरणम्—

'किं नाम तेन न कृतं सुकृतं पुरारे
दासीकृता न खलु का भुवनेषु लक्ष्मीः।
भोगा न के बुभुजिरे विबुधैरलभ्या
येनार्चितोऽसि करुणाकर हेलयापि ॥'

अत्र यावत्त्रिवर्गप्राप्तिरशक्यकरणम्[1]। नह्यत्र भगवदर्चनेन सुकृतकरणादीनां सादृश्यं विवक्षितम्, येन निदर्शनादि संभाव्येत। किं तु कार्यकारणभावः। एवं चेदानीमशक्यवस्त्वन्तरनिर्वर्तने अभेदाध्यवसाननिबन्धनत्वं न विशेषणम्। न च 'दधि विक्रेतुमटन्त्या' इत्यत्रातिव्याप्तिः। द्वयोः संकरस्य तत्रेष्टेरिति[2] वदन्ति।

इति रसगङ्गाधरे विशेषालंकारप्रकरणम्।

अथ व्याघातः—

**यत्र ह्येकेन कर्त्रा येन कारणेन कार्यं किंचिन्निष्पादितं निष्पिपादयिषितं वा तदन्येन[3] कर्त्रा तेनैव कारणेन तद्विरुद्धकार्यस्य निष्पादनेन निष्पिपादयिषया वा व्याहन्यते स व्याघातः ॥**

अत्र व्याघाते पूर्वकर्त्रपेक्षया कर्त्रन्तरस्य वैलक्षण्यप्रत्ययाद्व्यतिरेकसिद्धिः फलम्। कर्तृत्वं चेह कार्योद्देशेन प्रवर्तमानत्वम्। प्रयोजनं चास्या विवक्षाया अनुपदमेव वक्ष्यामः। उदाहरणम्—

**उदाहरणं गतार्थमिति** । अशक्यवस्त्वन्तरकरणकृताधिकचमत्कारसत्त्वादिदं चिन्त्यम् ॥ इति रसगङ्गाधरमर्मप्रकाशे विशेषालंकारप्रकरणम् ॥

प्राग्वदाह—**अथेति**। व्याहन्यते बाध्यते। लुब्धो न विसृजतीत्युदाहरणे तात्का-

---

१ 'किं नाम०' इति पद्ये त्रिषु चरणेषु यथाक्रमं धर्मार्थकामानां वर्णनमित्याशयः।

२ इष्टत्वादित्यर्थः। प्रहर्षणेन सह विशेषालंकारस्यापि सांकर्यमित्यभ्युपगमः कृत इत्याशयः।

३ तत् कार्यम् अन्येन व्याहन्यते स व्याघात इत्यर्थः।

'दीनद्रुमान्वचोभिः खलनिकरैरनुदिनं दलितान्[1] ।
पल्लवयन्त्युल्लसिता नित्यं तैरेव सज्जनधुरीणाः ॥'

इह श्रुतिप्रतिपादितवचनत्वरूपैकधर्मपुरस्कारेणाभिन्नीकृतयोः परुषमधुरवचनयोरेकत्वाध्यवसानात्पुरः स्फुरन्विरोधः प्रातिस्विकरूपेण तत्तत्कार्यहेतुताविमर्शान्निवर्तत इति विरोधमूलत्वम्[2] । इदं तु नोदाहरणम्—

'पाण्डित्येन प्रचण्डेन येन माद्यन्ति दुर्जनाः ।
तेनैव सज्जना रूढा यान्ति शान्तिमनुत्तमाम् ॥'

अत्र दुर्जनसज्जनयोर्मद—शमकर्तृत्वेऽपि न तदुद्देशेन[3] प्रवृत्तिरिति लक्षणगतकर्तृविशेषणेनासंग्रहः । न चास्य व्याघातोदाहरणत्वे को दोष इति वाच्यम् । आश्रयविशेषस्वभावसाचिव्येनैकस्यैव[4] कारणस्य विरुद्धकार्यद्वयजनने बाधकविरहाद्व्याहतेरेवाभावादुदाहरणत्वासंगतेः । नहि लोकसिद्धोऽर्थः काव्यालंकारास्पदं भवितुमर्हति ।

अपरो व्याघातो[5] यथा—

'विमुञ्चसि यदि प्रिय प्रियतमेति मां मन्दिरे
तदा सह नयस्व मां प्रणययन्त्रणायन्त्रितः ।
अथ प्रकृतिभीरुरित्यखिलभीतिभङ्गक्षमा-
न्न जातु भुजमण्डलादवहितो बहिर्भावय ॥'

१ दीना एव द्रुमाः तान् । खलसमूहैः ( कर्तृभिः ) वचोभिः ( करणैः ) ।

२ परुषवचन-मधुरवचने यद्यपि परस्परं भिन्ने किन्त्वत्र 'वचोभिः' 'तैरेव' ( वचोभिरेव ) इति उभयत्र वचनत्वरूपस्य एकस्यैव धर्मस्योपादानादभेदाध्यवसायः । तथा च 'वचोभिरेव दलनम्, वचोभिरेव च पल्लवनम्' इति प्रथमं विरोधस्य स्फूर्तिः । ततः 'परुषं वचनं भिन्नं यस्य कार्यं दलनम्, मधुरं च भिन्नं यस्य कार्यं पल्लवाद्युद्भेदनम्' इति विमर्शे स निवर्तते । इत्यस्याप्यलंकारस्य विरोधमूलकत्वम् ।

३ स्वभावतो मादन-शमनजनकत्वेपि अत्र तदुद्देशेन न तयोः प्रवृत्तिः । लक्षणे च 'कर्तृत्वं कार्योद्देशेन प्रवृत्तत्वम्' गृह्यते, इति नात्रालंकारत्वप्रसक्तिरित्यर्थः ।

४ एकमेव कारणं स्वाश्रयस्य ( यस्मिन्नाधारे तत् कारणं तिष्ठति ) स्वभावसहकारात् परस्परविरुद्धमपि कार्यद्वयमुत्पादयितुं शक्नोतीति बाधाऽभावे व्याघातत्वमेव नेत्याशयः ।

५ पूर्वे निष्पादितस्य व्याहननम्, द्वितीये व्याघाते निष्पादयितुमिष्टस्येति भेदः ।

इदं दण्डकां प्रविविक्षुं भगवन्तं दाशरथिं प्रति भगवत्या जानक्या वाक्यम् । उभयविधेऽप्यस्मिन्व्याघाते पूर्वकर्तुरभीष्टव्याहननं तुल्यमिति प्राचां[1] सिद्धान्तः । तथा च तेषामुदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥' इति ।

अत्र विचार्यते—व्यतिरेक एवात्रालंकारः । जयिनीर्विरूपाक्षस्य वामलोचना इति तस्यैव प्रकाशनात् । न चात्र व्यतिरेकोत्थापकतया व्याघातः स्थित इति वाच्यम् । एवमपि तस्यालंकारताया असिद्धेः । न ह्यलंकारोत्थापकेनालंकारेणैव भवितव्यमित्यस्ति नियमः । 'आननेनाकलङ्केन जयतीन्दुं कलङ्किनम्' इत्यादाविव वस्तुमात्रेणापि व्यतिरेकोत्थापनोपपत्तेः । नह्यस्योक्तप्रकारव्यतिरेकनिर्मुक्तो विषयोऽस्ति येन स्वातन्त्र्यमभ्युपगच्छेम । तस्मादलंकारान्तराविनाभूतालंकारान्तरवदिहाप्यवान्तरोऽस्ति विच्छित्तिविशेषोऽलंकारभेदक[2] इति प्राचामुक्तिरेवात्र शरणम् ।

यत्तु—

'लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया ।
दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥'

इति कुवलयानन्द उदाहृतम्, तन्न[3] ।

---

१ अभीष्टव्याहननस्य तुल्यत्वान्न प्राचां मते निष्पादन-निष्पिपादयिषणकृतो भेद इत्याशयः ।

२ अयं सर्वस्याशयः—व्यतिरेक एवात्रालंकारः । व्यतिरेकोत्थानस्य मूलं व्याघातो भवन्नपि नालंकारपदवाच्यः स्यात्, अलंकारोत्थापकः अलंकार एव भवेदिति नियमाऽभावात् । इति पूर्वपक्षः । व्याघातालंकारस्थले नियमेन व्यतिरेकः फलभूतो भवेदिति पूर्वमुक्तम् । ततश्च—यथाऽन्ये अलंकाराः अलंकारान्तरसंबद्धा अपि पृथग्विच्छित्तिविशेषवशात् पृथग्व्यपदेशभागिनः [ यथा अनन्वयाऽसमौ ] तथा अत्रापि उत्थापकस्य व्याघातस्य अवान्तरविच्छित्तिवशात् प्राचामभिमतमलंकारत्वम् । इति सिद्धान्तः ।

३ लुब्धस्य 'मम दारिद्र्यं मा भूदिति' तात्कालिकदारिद्र्यस्य शङ्का । दातुस्तु 'अग्रिमजन्मनि दारिद्र्यं मा भूदिति' जन्मान्तरीयदारिद्र्यस्य शङ्का । इति कारणभेदान्न व्याघातप्रसक्तिरिति ग्रन्थकृत् । द्वयोरपि अभेदाध्यवसानात् व्याघातलक्षणस्य समन्वय एवेत्यलंकारचन्द्रिकाकारः ।

एवं श्लेषातिशयोक्त्याद्युपायोन्मीलितेन किंचिदंशाभेदाध्यवसानेनामुख एव प्रादुर्भावितो यो विरोधो विच्छित्तिमात्रात्मा क्षणप्रभावदननुवर्तमानस्तन्मूलका विरोधाभासादयो व्याघातान्ता अलंकारा निरूपिताः। ते च नानारूपं वैचित्र्यं भजन्तो विरोधाभासस्यैव प्रभेदाः, न तु ततोऽतिरिक्ताः, काञ्चनस्येव कङ्कणादय इत्येके। रूपकदीपकादीनामौपम्यगर्भाणामुपमाभेदत्वापत्तेर्बहु व्याकुली स्यादिति परस्परच्छायामात्रानुसारिणो भिन्नविच्छित्तयो भिन्ना एवेत्यपरे।

इति रसगङ्गाधरे व्याघातप्रकरणम्।

---

अथ शृङ्खलामूला अलंकाराः—

तत्र,

**पङ्क्तिरूपेण निबद्धानामर्थानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्, उत्तरोत्तरस्य वा पूर्वपूर्वस्मिन्संसृष्टत्वं शृङ्खला॥**

तच्च कार्यकारणता–विशेषणविशेष्यतादिनानारूपम्। इयं च न स्वतन्त्रोऽलंकारः, वक्ष्यमाणप्रभेदैर्गतार्थत्वात्। नह्यस्यास्तैर्विना विविक्तो विषयोऽस्ति। यथा हि रूपकादिष्वनुप्राणकतया स्थितोऽप्यभेदांशः समानधर्मांशो वा न पृथगलंकारः एवं प्रकृतेऽपीत्याहुः। तदपरे न क्षमन्ते। सावयवादिभेदै रूपकस्य[2], पूर्णालुप्तादिभिरुपमायाश्च गतार्थत्वात्स्वतन्त्रालंकारता न स्यात्। नहि विशेषनिर्मुक्तं सामान्यमस्ति येन विविक्तो विषयः स्यात्। तस्माच्छृङ्खलाया एव कारणमालादयो भेदा इति। मतयोरनयोस्तत्त्वमुपरिष्टाद्विवेचयिष्यामः।

---

लिकजन्मान्तरीयदारिद्र्यशङ्कयोरभेदाध्यवसानाच्च लक्षणाऽसमन्वय इत्याहुः॥ इति रसगङ्गाधरमर्मप्रकाशे व्याघातप्रकरणम्॥

---

१ अर्थात् आमुखे एव क्षणप्रभायाः (विद्युतः) इव आभासितस्य विरोधस्य विच्छित्ति-(शोभाचमत्कार)विशेष एव स्वरूपमवशिष्यते, न स स्वयमग्रेऽनुवर्तेत इत्यर्थः।

२ सावयव-निरवयव-परम्परितादिभेदेभ्यो यथा रूपकसामान्यं पृथक्परिगण्यते तथा कारणमालादिभेदेभ्यः पृथक् शृङ्खलालंकारस्य गणनेत्यपरेषां मतम्।

**सैव शृङ्खला आनुगुण्यस्य कार्यकारणभावरूपत्वे कारणमाला ॥**

तत्र पूर्वं पूर्वं कारणं परं परं कार्यमित्येका । पूर्वं पूर्वं कार्यं परं परं कारणमित्यपरा । यथाक्रमेण यथा—

'लभ्येत पुण्यैर्गृहिणी मनोज्ञा तया सुपुत्राः परितः पवित्राः ।
स्फीतं यशस्तैः समुदेति नूनं तेनास्य नित्यः खलु नाकलोकः ॥'

'स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः ।
समृद्धिमल्पेतरभागधेयं भाग्यं च शंभो तव पादभक्तिः ॥'

इह च यत्रादौ कारणोक्तिरेव स्तूयते तदा पुनस्तस्य कारणं तस्यापि कारणमिति, तत्कस्यचित्कारणं तदपि कस्यचिदिति वा कारणमाला युक्ता । यदा तु कार्योक्तिस्तदा तस्य कार्यं तस्यापि कार्यमिति, तत्कस्यचित्कार्यं तदपि कस्यचिदिति वा युक्ता । सर्वथैव यः शब्दः कार्यकारणतोपस्थापक आदौ प्रयुक्तः स एव निर्वाह्यः । एवंक्रमेण निबन्धनमाकाङ्क्षानुरूपत्वाद्रमणीयम् । अन्यथा तु भग्नप्रक्रमं स्यात् ।

यथा प्राचीनानां पद्यम्—

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥'

अत्र जितेन्द्रियत्वं विनयस्य कारणं श्रुत्वा जितेन्द्रियत्वस्यापि किं कारणमिति, विनयः कस्य कारणमिति वा आकाङ्क्षोदेति । कारणस्यैव श्रुतिवशात्पूर्वमुपस्थितेः । कारणं तु ज्ञातम्, कार्यं पुनरस्य किमिति क्वचिदाकाङ्क्षा तु कार्यत्व–कारणत्वयोः संबन्धिपदार्थत्वात्कारणश्रुत्युत्तरमेकसंबन्धिज्ञानाधीनकार्यत्वोपस्थित्या संगमनीया । न त्वसौ सार्वत्रिकी । एवं च विनयः कस्य कारणमित्याकाङ्क्षायां गुणप्रकर्षो विनयादवाप्यत

कारणमाला स्पष्टा ॥

१ कार्यकारणभावानुगुणा ( अनुकूला ) शृङ्खला कारणमालेत्यर्थः ।

२ एकसंबन्धिज्ञानमपरसंबन्धिनः स्मारकमित्यनुगमानुसारं कारणरूपस्य एकस्य संबन्धिनः श्रवणानन्तरम् अपरस्य संबन्धिनः कार्यस्याप्युपस्थितिरित्यर्थः ।

इति वाक्यं यद्यपि फलतः परिपूरकं भवति, तथापि न साक्षादित्यहृदयंगममेव[1]। तथा गुणप्रकर्षात्किमाप्यत इत्याकाङ्क्षायां गुणाधिके पुंसीति[2] च। अत्र च कथितपदत्वं न दोषः। प्रत्युत पदान्तरेण तस्यार्थस्योक्तौ रूपान्तरेण स्थितस्य नटस्येव प्रत्यभिज्ञाप्रतिरोधकत्वाद्विवक्षितार्थसिद्धेरकुण्ठितत्वविरहाद्दोषः[3] स्यात्। शब्दादुपस्थितेऽर्थे प्रवृत्तिनिमित्तमिव[4] शब्दोऽपि विशेषणतया भासते। तथा चोक्तम्—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति। तत्तच्छब्दस्य विशिष्टश्चार्थः स्वरूपेणाभिन्नोऽपि विशेषणभेदाद्विलक्षणः प्रतीयते कुण्डगोलकादिवत्[5]। ननु कुण्डगोलकादिपदेषु मृतामृतभर्तृकत्वादिरूपविशेषणघटितं प्रवृत्तिनिमित्तमित्यस्तु भिन्नाकारः प्रत्ययः। ताम्रः शोणो रक्त इत्यादौ तु ताम्रादिशब्दानां शक्तत्वेन शक्यतानवच्छेदकत्वाच्छक्यतावच्छेदकस्य च गुणगतजातिविशेषस्याभिन्नत्वादभिन्नाकारः प्रत्यय एवोचित[6] इति चेत्, सत्यम्।

---

१ प्रतीतिरूपेण फलेन परिपूरकं भवति, साक्षात्परिपूरकं न, इत्यहृदयंगमम्। साक्षात्परिपूरकं हि 'विनयो गुणप्रकर्षस्य कारणम्' इति वाक्यम्। 'गुणप्रकर्षो विनयादवाप्यते' इति तु फलबलात्परिपूरकमित्याशयः।

२ गुणाधिके पुंसीति वाक्यं फलतः परिपूरकं भवति, न साक्षादित्यहृदयंगममेवेत्यनुषङ्गः। साक्षात्परिपूरकं तु 'गुणप्रकर्षाज्जनानुरागः (अवाप्यते)' इति।

३ प्रत्यभिज्ञायाः 'इदमेव तत्' इति परिचयस्य प्रतिरोधवशात् विवक्षितार्थसिद्धेः कुण्ठितत्वाभावो न भवति अथात् विवक्षितार्थसिद्धिः कुण्ठिता भवतीति दोषः स्यात्।

४ 'गौः' (अस्ति) इत्यस्यार्थे प्रवृत्तिनिमित्तं गोत्वं यथा विशेषणं तथा गोशब्दोऽपीत्यर्थः।

५ पर्यायशब्दानां विशिष्टोऽर्थः स्वरूपतः एकः (एकरूपः) प्रतीयतां नाम, किन्तु विशेषणस्य (विशेषणभूतस्य तत्तत्पर्यायशब्दस्य) भेदाद्विलक्षणः प्रतीयते। यथा कुण्डगोलकौ द्वावपि जारजन्मानौ तथापि कुण्ड-गोलकेति शब्दरूपविशेषणभेदाद् द्वयोरर्थो विलक्षण एव।

६ नन्वित्यादेः संदर्भस्यायमाशयः—कुण्डशब्दस्यार्थे 'जीविते भर्तरि जारजातत्वम्' प्रवृत्तिनिमित्तम्। गोलकार्थे तु—'मृते भर्तरि जारजातत्वम्' ['अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इत्यमरः] इति प्रवृत्तिनिमित्तभेदाद्भिन्नाकारः अर्थबोध उचित एव। ताम्रः शोण इत्यादौ तु ताम्रादयः शब्दाः शक्ताः। अत एव शब्दभेदे शक्तानां (शब्दानाम्) भेदः स्यात्। शक्यतावच्छेदकम् [रक्तगुणगतो जातिविशेषः] तु एकमेव [शक्तं पदम्। अर्थः शक्यः। प्रवृत्तिनिमित्तभूतस्तदसाधारणधर्मः गोत्वादि शक्यतावच्छेदकम्] इति शक्यतावच्छेदकभेदाऽभावात् एक एव अर्थबोध उचित इति पूर्वपक्षः।

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥'

इत्यत्र वैलक्षण्यशून्यतारूपस्यैकरूप्यस्य यथा प्रत्ययः, न तथा 'उदेति सविता ताम्रो रक्त एवास्तमेति च' इत्यत्र, इति सकलानुभवसिद्धम् । एवं च प्रवृत्तिनिमित्तभिन्नस्यापि शब्दस्य यदि शक्यविशेषणत्वं वैलक्षण्यान्यथानुपपत्त्यानुभवबलेन च सिद्धं तदा तदनुगुणैव व्युत्पत्तिः शब्दानां कल्प्यते । सा च वृत्तिसंबन्धेनार्थविशिष्टशाब्दज्ञानत्वेन शब्दविशिष्टार्थोपस्थितित्वेन च सामान्यकार्यकारणभावरूपा । घटत्वादितत्तत्प्रवृत्तिनिमित्तप्रकारकबोधत्वेन तु वृत्तिसंबन्धेन घटविशिष्टपदज्ञानत्वादिना च विशेषतोऽपरः कार्यकारणभावः । विशेषसामग्रीसहिताया एव सामान्यसामग्र्या जनकतेति न कश्चिद्दोषः । यद्वा वृत्तिसंबन्धेन घटादिविशिष्टपद-

१ 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यत्र 'उदेति सविता ताम्रो रक्त एवास्तमेति च' इत्यत्र च अर्थबोधे मिथो वैलक्षण्यस्य अन्येन प्रकारेण उपपत्तिर्न भवतीति प्रवृत्तिनिमित्तम् (गोत्वादि) तु शक्यस्य विशेषणं भवत्येव परं प्रवृत्तिनिमित्ताद् भिन्नः शब्दोपि शक्यं प्रति विशेषणं भवतीति सिद्धमित्याशयः ।

२ वृत्तिसंबन्धेन अर्थविशिष्टं शब्दज्ञानं कारणम्, वृत्तिसंबन्धेन शब्दविशिष्टा अर्थोपस्थितिश्च कार्यम् [ वृत्तिसंबन्धेनेति विशेषणस्य तात्पर्यं तु शब्दार्थयोर्वैशिष्ट्यं वृत्ति( वर्तमानता )संबन्धेन बोध्यमित्यर्थे ] । अर्थात् अर्थवृत्ति ( अर्थे वर्तमानम् ) शब्दज्ञानम्, एवं शब्दविशिष्टा अर्थोपस्थितिः अर्थात् शब्दे वर्तमाना अर्थोपस्थितिरिति सामान्यतः शब्दत्वस्य अर्थत्वस्य च निवेशात्सोयं सामान्यकार्यकारणभावः ।

३ घटत्वादि तत्तत्प्रवृत्तिनिमित्तं प्रकार( विशेषण )भूतं [ शक्यार्थबोधे शक्यतावच्छेदकं घटत्वादिरूपं प्रवृत्तिनिमित्तं विशेषणं भवति ] यत्र ईदृशः कम्बुग्रीवादिमद्व्यक्तिरूपशक्यस्य ( अर्थस्य ) बोधः कार्यम्, वृत्तिसंबन्धेन (अर्थात् घटार्थे वर्तमानं पदज्ञानम्) घटरूपशक्यविशिष्टं पदज्ञानं कारणम् । इति विशेषतः कार्यकारणभावः ।

४ अर्थात् तत्तद्विशेषसामग्रीबोधे उपयोगादेव सामान्यबोधसामग्र्या उपयोगः 'निर्विशेषं न सामान्यम्' इत्याशयः ।

५ पूर्वबोधे घटादिपदस्यैव विशेषणतया निवेशः, न घटत्वादिशक्यतावच्छेदकस्येत्युभयसंग्रहार्थमाह । यद्वेति०—वृत्तिसंबन्धेन घटादिरूपशक्यार्थविशिष्टं पदज्ञानं कारणम् । घटादिपदम्, घटत्वम् (प्रवृत्तिनिमित्तं शक्यतावच्छेदकम्) चेत्युभयं प्रकारभूतं यत्र, घटरूपः शक्यश्च विशेष्यभूतो यत्र ईदृशी पदार्थोपस्थितिः कार्यम् । इति । पदार्थोपस्थितौ यदा घटादिपदं विशेषणं तदा शाब्दबोधेऽपि घटादिपदस्य विशेषणत्वं स्वीकार्यमेवेत्यर्थः ।

ज्ञानत्वेन घटादिपद-घटत्वोभयप्रकारकघटादिविशेष्यकोपस्थितित्वेन च कार्यकारणभावः। पदार्थोपस्थितिशाब्दबोधयोः समानाकारत्वाच्छाब्दबोधेऽपि पदभानम्। अनुभवबलाच्च प्रामाणिकं गौरवं न दोषाय। एतदभिसंधायैवोक्तम्—'न सोऽस्ति' इत्यादि।

इति रसगङ्गाधरे कारणमालाप्रकरणम्।

अथैकावली—

**सैव शृङ्खला संसर्गस्य विशेष्यविशेषणभावरूपत्वे एकावली॥**

सा च पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वे विशेषणत्वे चेति द्विधा। तत्राद्ये[1] उत्तरोत्तरविशेषणस्य स्थापकत्वापोहकत्वाभ्यां द्वैविध्यम्। स्वसंबन्धेन विशेष्यतावच्छेदकनियामकत्वं स्थापकत्वम्। स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वमपोहकत्वम्। उदाहरणम्—

'स पण्डितो यः स्वहितार्थदर्शी हितं च तद्यत्र परानपक्रियाः।
परे च ते ये श्रितसाधुभावाः सा साधुता यत्र चकास्ति केशवः॥'

अत्र स्थापकम्।

'नार्यः स यो न स्वहितं समीक्षते न तद्धितं यत्र परानुतोषणम्।
न ते परे यैर्नहि साधुताऽऽश्रिता न साधुता सा नहि यत्र माधवः॥'

प्राग्वदाह—**अथेति। परानपेति**। परानपकार इत्यर्थः। तेषां शृङ्खलावयवानां

१ विशेष्यत्वे। पूर्वपूर्वस्य यत्र विशेष्यत्वम्, उत्तरोत्तरस्य च यत्र विशेषणत्वं तत्र तद्विशेषणं स्थापकम् (स्वस्य संयोगे सति विशेष्यतावच्छेदकस्य अर्थात् स्वासाधारणधर्मस्य स्थिरीकरणं भवति)। यथा—'स पण्डितो यः स्वहितार्थदर्शी', अत्र पण्डित इति पूर्वं विशेष्यम्। उत्तरं 'स्वहितार्थदर्शी' इति विशेषणम् (स्थापकम्)। यतो हि स्वहितार्थदर्शी इति विशेषणस्य संबन्धो यदा भवति तदैव विशेष्यतावच्छेदकस्य पाण्डित्यस्य स्थापनम् (हितार्थदर्शी एव पण्डितः, नान्यः इति)। अपोहकं तु—स्वस्य (विशेषणस्य) व्यतिरेके (अभावे) विशेष्यतावच्छेदकस्यापि अभावबुद्धेर्जनकं भवति। यथा—'नार्यः स यो न स्वहितं समीक्षते' अत्र पूर्वस्य आर्यस्य विशेष्यत्वम्। उत्तरं 'यो न हितं समीक्षते' इति विशेषणम् (अपोहकम्)। यतो हि स्वस्य (स्वहितसमीक्षणरूपविशेषणस्य) अभावे विशेष्यतावच्छेदकस्य आर्यत्वस्यापि अभावबुद्धिरुदेति (यो हितसमीक्षको नास्ति स आर्यो नास्तीति)।

अत्रापोहकं पूर्वपूर्वस्योत्तरोत्तरम् । यद्यपि स्थापकेऽप्यपोहकत्वं गम्यते यो न स्वहितार्थदर्शी स न पण्डित इत्यादि, तथा अपोहकेऽपि स्थापकत्वम्, यो हितं समीक्षते स आर्य इत्यादि, तथापि शब्देन नोच्यत इत्यदोषः ।

'धर्मेण[1] बुद्धिस्तव देव शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकैश्च नीता भुवनेषु कीर्तिः ॥'

इह पूर्वेण पूर्वेण स्वाव्यवहितमुत्तरोत्तरं विशेष्यते । अस्मिंश्चैकावल्या द्वितीये भेदे पूर्वपूर्वैः परस्य परस्योपकारः क्रियमाणो यद्येकरूपः[2] स्यात्तदायमेव मालादीपकशब्देन व्यवह्रियते प्राचीनैः । तथा चोक्तम्—'मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्' इति । तत्र मालाशब्देन शृङ्खलोच्यते दीपकशब्देन दीप इवेति व्युत्पत्त्या एकदेशस्थं सर्वोपकारकमुच्यते । तेनैकदेशस्थसर्वोपकारकक्रियादिशालिनी शृङ्खलेति पदद्वयार्थः । एवं च दीपकालंकारप्रकरणे प्राचीनैरस्य लक्षणाद्दीपकविशेषोऽयमिति न भ्रमितव्यम्, तस्य सादृश्यगर्भतायाः सकलालंकारिकसिद्धत्वात् । इह च शृङ्खलावयवानां पदार्थानां[3] सादृश्यमेव नास्तीति कथंकारं दीपकतावाचं श्रद्दधीमहि । तेषां प्रकृताप्रकृतात्मकत्वविरहाच्च । विवेचितं चेदं सोदाहरणं दीपकप्रकरणेऽस्माभिरिति नेहातीवायस्यते । एतेन 'दीपकैकावलीयोगान्मालादीपकमिष्यते' इति यदुक्तं कुवलयानन्दकृता तद्भ्रान्तिमात्रविलसितमिति सुधीभिरालोचनीयम् ।

इति रसगङ्गाधर एकावलीप्रकरणम् ।

पदार्थानाम् । **तद्भ्रान्तिमात्रेति** । तत्रापि दीपकशब्दस्योपकारकपरत्वम् । अत एव तैर्दीपकप्रकरणात्पृथगेकावल्युत्तरमुक्तोऽयमित्येतदुक्तिरेव भ्रान्ता ॥ इति रसगङ्गाधरमर्मप्रकाश एकावलीप्रकरणम् ॥

१ पूर्वपूर्वस्य विशेषणत्वमुदाहरति—धर्मेण बुद्धिरिति ।

२ अर्थात् पूर्वपूर्वम् (विशेषणम्) उत्तरोत्तरस्य (विशेष्यस्य) एकरूपेण उपकारकम् । यथा—संग्रामाङ्गणमागतेनेत्यादिपद्ये 'कोदण्डेन शरा आसादिताः, शरैः अरिशिरः आसादितम्', इत्यादौ पूर्वस्य कोदण्डादिविशेषणस्य उत्तरं शरादिं विशेष्यं प्रति आसादनरूपेण एकेन प्रकारेण उपकारिता ।

३ यथा—कोदण्ड-शर-अरिशिरः-भूमण्डलादीनां न मिथः सादृश्यमित्यर्थः ।

अथ सारः—

सैवं संसर्गस्योत्कृष्टापकृष्टभावरूपत्वे सारः ॥

तत्रापि पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कर्षापकर्षाभ्यां द्वैविध्यम् ।

'संसारे चेतनास्तत्र विद्वांसस्तत्र साधवः ।
साधुष्वपि स्पृहाहीनास्तेषु धन्या निराशयाः ॥'

इमं चालंकारमेकानेकविषयत्वेन पुनर्द्विविधमामनन्ति । एकविषयतायामवस्थादिभेदाश्रयणमावश्यकम् । उत्कर्षापकर्षयोर्भेदनियतत्वात् । नह्यवस्थादिभेदकं विना किंचिदपि वस्तु स्वापेक्षया स्वयमधिकं न्यूनं वा भवितुं प्रभवति । एकविषय उत्तरोत्तरोत्कर्षो यथा—

'जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते खलु कनकाचलेन सार्धम् ॥'

अत्र पूर्वपूर्वावस्थाविशिष्टाभ्यां कुचाभ्यामुत्तरोत्तरावस्थाविशिष्टयोस्तयोरेवोत्कर्ष इत्येकविषयत्वम् । यद्यपि परिमाणभेदेन द्रव्यभेदोऽपि मतविशेषे शक्यते वक्तुम्, तथापि कुचत्वेनाभेदाश्रयणेन तत्राप्येकविषयत्वं सूपपादम् । यदि च वक्ष्यमाण एकाश्रये क्रमेणानेकाधेयस्थितिरूपः पर्यायोऽत्र प्रतीयते तदा सोऽप्यस्तु । नहि तेन पूर्वपूर्वापेक्षयोत्तरोत्तरोत्कर्षरूपः सारोऽन्यथासिद्धः शक्यः कर्तुम् ।

अनेकविषयः स एव यथा—

'गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ।
जगदण्डादपि गुरवः प्रलयेऽप्यचला महात्मानः ॥'

वेदेऽप्ययमलंकारो दृश्यते—

---

प्रागवदाह—अथेति । तत्रापि पुनरपि । इति रसगङ्गाधरमर्मप्रकाशे सारप्रकरणम् ॥

---

१ मुह्वल्व ।

२ संबोधनम् ।

३ पूर्वपूर्वावस्थाविशिष्टकुचापेक्षया उत्तरोत्तरावस्थाविशिष्टौ कुचौ उत्कृष्टौ इत्यर्थः । एकस्यैव कुचपदार्थस्य अवस्थाभेदेन उत्तरोत्तरोत्कर्ष इति सारालंकारः ।

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥'

पूर्वं तु गुणकृत उत्कर्षः, इह तु स्वरूपमात्रकृत इति विशेषः । न चात्र गुणकृत उत्कर्षो वाच्यः । पुरुषस्य निर्गुणत्वेनाभ्युपगमात् । न च तत्रापि विनाशरहितत्वादिर्गम्यमानो गुण उत्कर्षक इति वाच्यम् । तस्य तादृशाधि[१]करणभिन्नत्वे मानाभावात् । अनयैव दिशापकर्षोऽप्युदाहार्यः ।

इदं तु बोध्यम्—एकविषये शृङ्खलाया अचारुत्वात्तदनुप्राणितः सारो न चारुतां धत्ते । तस्याः स्वाभाविकभेदापेक्षित्वेनावस्थादिकृतभेदेऽनुल्ला[२]सात् । अत एवास्मिन्विषये[३] वर्धमानकालंकारोऽन्यैरङ्गीकृतः । तल्लक्षणं च 'रूपधर्माभ्यामाधिक्ये वर्धमानकम्' इति कृतम् । तस्मात्कारणमालादिर्यथा शृङ्खलैकविषयः, न तथा सारः शक्यो वक्तुम्, एकविषयेऽलंकारान्तराभ्युपगमप्रसङ्गात्[४] । 'गुणस्वरूपाभ्यां पूर्वपूर्ववैशिष्ट्ये सारः' इति तु लक्षणं सारस्य युक्तम् । स च क्वचिच्छृङ्खलानुप्राणितः, क्वचित्स्वतन्त्र इत्यनेकविषयत्वमेकविषयत्वं च सुस्थम् । एवं शृङ्खलाविषयाणामलंकाराणां विच्छित्तिवैलक्षण्यस्यानुभवसिद्धत्वात्पृथगलंकारत्वे सिद्धे शृङ्खलाया विरोधाऽभेदसाधर्म्यादिवदनुप्राणकतैवोचिता, न पृथगलंकारता । तथात्वे[५]ऽभेदादीनामपि पृथगलंकारतापत्तेः । पूर्णालुप्तादौ तु न विच्छित्तिवैलक्षण्यम्[६], अपि तूपमाविच्छित्तिरेवेति संप्रदायः । ननु केयं विच्छित्तिः ?

---

१ विनाशरहितत्वं गुणः स्वाधिकरणात्पुरुषाद् भिन्नो न अविनाशिनः पुरुषात् स गुणः (विनाशराहित्यम्) अभिन्नः तद्रूप इत्यर्थः ।

२ अवस्थाभेदेन एकस्योत्कर्षे ।

३ एकस्य अवस्थाभेदेन उत्कर्षे वर्धमानकं भवति, न शृङ्खला । शृङ्खलाविषयास्त्वलंकाराः सदा शृङ्खलारूपा एव भवन्ति नान्यथेत्याशयः ।

४ एवं लक्षणे कृते शृङ्खलामात्रविषयत्वाभावे (वर्धमानकत्वे) व्यभिचारो नायातीत्यर्थः ।

५ अङ्गत्वेपि यदि पृथगलंकारत्वं स्यात्तदा ।

६ शृङ्खलापेक्षया शृङ्खलाविषयाणामेकावल्याद्यलंकाराणां विच्छित्तिवैलक्षण्यात्पृथगलंकारता । शृङ्खलायास्त्वनुप्राणकत्वमात्रम् । पूर्णा लुप्ता इत्यादीनां तु न विच्छित्तिवैलक्षण्यमिति न पृथगलंकारत्वम् । अपि तु उपमाकृतविच्छित्त्या उपमाप्रभेदत्वमेवेत्याशयः ।

उच्यते—अलंकाराणां परस्परविच्छेदस्य वैलक्षण्यस्य हेतुभूता जन्यतासंसर्गेण काव्यनिष्ठा कविप्रतिभा, तज्जन्यत्वप्रयुक्ता चमत्कारिता वा विच्छित्तिः।

इति रसगङ्गाधरे सारप्रकरणम् ॥

अथ काव्यलिङ्गम्—

**अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम् ॥**

उपपादकत्वं च तन्निश्चयजनकज्ञानविषयत्वम्। अनुमानार्थान्तरन्यासयोर्वारणायानालिङ्गितान्तम्। उपमादिवारणायोपपादकत्वेनेत्यन्तम्। पञ्चम्यादिशब्दप्रतिपादितहेतुत्वकस्य हेतोरेव वारणायोपपादकत्वेन विवक्षित इति। न तु शब्दात्तेन रूपेण बोधित इत्येतदर्थफलकम्। तेन 'भयानकत्वात्परिवर्जनीयो दयाश्रयत्वादसि देव सेव्यः' इत्यादौ नायमलंकारः। गम्यमानहेतुत्वकस्यैव हेतोः सुन्दरत्वेनालंकारिकैः काव्यलिङ्गताभ्युपगमात्। तच्च सुवन्ततिङन्तार्थत्वाभ्यां तावद्द्विविधम्। आद्यमपि शब्दान्तरार्थविशेषितशरीरम्, शुद्धैकसुबन्तार्थरूपं चेति द्वेधा। अत्राप्याद्यं साक्षात्परम्परया वा वाक्यार्थविशेषितम्, सुबन्तार्थमात्रविशेषितं चेति द्विभेदम्। तिङन्तार्थभूतमपि साक्षात्परम्परया वा वाक्यान्तरार्थविशेषितम्, सुबन्तार्थमात्रविशेषितं चेति द्विप्रकारम्। शुद्धभेदस्तु तिङन्तार्थस्य न संभवति, क्रियायाः कारकविशेषितत्वावश्यंभावात्। शिष्टमग्रे निरूपयिष्यते। उदाहरणम्—

---

प्रागवदाह—अथेति। तच्च काव्यलिङ्गम्। अत्रापि अनयोरपि। व्रातं समूहः।

---

१ परस्परविच्छेदहेतु( जन्यतासंसर्गेण )काव्यनिष्ठप्रतिभाजन्यत्वहेतुका चमत्कृतिरित्यर्थः।

२ प्रकृतार्थोपपादकतया वक्तुमिष्टः (न तु हेतुतया शब्देन प्रतिपादितः) अर्थः (हेतुरूपः) काव्यलिङ्गमित्यर्थः।

३ हेत्वलंकारे हेतुत्वं पञ्चम्यादिशब्दैः प्रतिपादितं भवति। अत्र तु उपपादकहेतुत्वं गम्यमानमेव भवति न तु शब्दप्रतिपाद्यम्। तस्मात् हेत्वलंकारवारणाय 'प्रकृतार्थोपपादकत्वेन विवक्षितः' (अर्थात् यस्य उपपादकत्वं न शब्देनाभिहितम्, अपि तु स उपपादकतया वक्तुमिष्टः) इत्युक्तिः। तेन च 'भयानकत्वात्०' इत्यादौ हेतुत्वस्य पञ्चम्या उक्तत्वात् न काव्यलिङ्गालंकारत्वमिति सर्वस्याशयः।

४ केवलमेकं सुबन्तरूपमेव हेतुर्न, तत्र अन्यशब्दार्था अपि विशेषणभूताः स्युरिति।

'विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै-
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरन्ती लोकानामनवरतमेनांसि कियतां
कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥'

अत्र ह्यनन्यसाधारणतया प्रतिपादितस्य भगवत्या भागीरथ्या उत्कर्षस्यापाततोऽघटमानस्योपपादनायानवरतसकललोकपापहरणसमानाधिकरणः श्रमाभावः सुबन्तमात्रार्थविशेषितः सुबन्तार्थो विशेषवपुर्हेतुत्वेनोपात्तः[1] ।

'त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब त्वमथ करुणाक्रान्तहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥'

अत्र सकलदेवतीर्थदर्पदलनस्य सिद्धये स्वात्मपवित्रीकरणं वक्त्रा निबद्धम् । तच्च क्षुद्रत्वात्तादृशसिद्ध्यसमर्थं[2] विशेषकान्तरमाकाङ्क्षतीति तीर्थकर्तृकत्रपाकरणम्, कपालिप्रभृतिकर्तृककर्णमुद्रणं चेति वाक्यार्थद्वयं स्वात्मरूपकर्मद्वारा विशेषकमुपात्तम् । तद्विशिष्टं च तादृशपवित्रीकरणं भागीरथ्युपारूढं तादृशकार्योपपादनसमर्थमिति भवति हेतुः[3] ।

'पद्मासनप्रमुखनिर्जरचित्तवृत्ति-
दुष्प्रापदिव्यमहिमन्[4]भवतो गुणौघान् ।
तुष्टूषतो मम नितान्तविशृङ्खलस्य
मन्तुं[5] शिशोः शिव न मन्तुमिहासि योग्यः ॥'

१ अत्र 'अश्रान्ता' इति विशेषवपुः सर्वापेक्षया विशिष्टः सुबन्तार्थो हेतुत्वेनोपात्तः, यो हि 'एवंभूतानि एनांसि हरन्ती' इत्यादिसुबन्तमात्रार्थैः ( न तु कुत्रचित्तिङन्तार्थो मिश्रितः ) विशेषितः ।

२ एकमात्रस्य आत्मनः ( जगन्नाथकवेः ) पवित्रीकरणं तादृश( सकलदेव-तीर्थदर्पदलन )-सिद्धये असमर्थम् । अत एव विशेषकान्तरम् ( विशेषयति विशिनष्टि वा यत् ईदृशमन्यत् ) ।

३ साक्षात्परम्परया वा वाक्यार्थ( तीर्थत्रपाकरण–कर्णमुद्रण )विशेषितः स्वात्मपवित्रीकरणरूपः सुबन्तार्थः सकलदेव-तीर्थदर्पदलनोपपादकहेतुत्वेनोपात्त इत्युदाहरणम् ।

४ निर्जराणां चित्तवृत्त्या दुष्प्रापो दिव्यमहिमा यस्य तत्संबुद्धौ ।

५ मन्तुम् ( अपराधम् ) मन्तुं योग्यो नाऽसि ।

अत्र शिशुत्वं शुद्धैकसुबन्तार्थोऽपराधक्षमाकरणे हेतुः। तथा दिव्यमहिमत्वमचिन्त्यमाहात्म्यं सुबन्तार्थविशेषितसुबन्तार्थरूपं ब्रह्मादिचित्तदुष्प्रापत्वे। एवं तादृशपरमेश्वरगुणकर्मकस्तवो[1] मन्तौ। तादृशस्तवे च विशृङ्खलत्वमिति शुद्धसुबन्तार्थोदाहरणे विशिष्टसुबन्तार्थस्याप्युदाहरणम्।

'तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञापुरपथमनीयन्त विबुधाः।
इदानीमौदास्यं यदि भजसि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः॥'

अत्र निराधार इत्यादिनाभिव्यक्ते वक्तृनिष्ठसकलकर्तृकद्वेषे आत्मकर्तृकावज्ञापुरपथनयनरूपः सुबन्तार्थविशेषितस्तिङन्तार्थ[2] उपपादकः।

'विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतया।
तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः॥'

अत्रापि पृथिवीविवेकनाशोपपादने तिङन्तार्थस्य धारणस्य सुबन्तार्थविशेषितस्य तस्यैव जनधारणात्मनो वा असामर्थ्यात्साधुवञ्चनरूपपूर्ववाक्यार्थविशेषितं धारणं[3] हेतुः। विशेषणत्वं च कर्मणि विशेषणत्वात्परम्परया बोध्यम्। एते च भेदाः प्राचीनकल्पितपदार्थ—वाक्यार्थभेदद्वयवचातुर्यमात्रेण कल्पिताः, न तु वैचित्र्यविशेषेण।

अथानुमानादस्य को विशेषः? ननु व्याप्यत्व—पक्षधर्मत्वाभ्यां ज्ञायमानमेवार्थसाधकमनुमानम्, स्वरूपेण ज्ञायमानं प्रकृतार्थोपपादकं काव्य-

१ तादृशपरमेश्वरस्य गुणाः कर्मभूता यत्र ईदृशः स्तवो मन्तौ हेतुरित्यर्थः। एवमग्रेऽपि विशृङ्खलत्वं हेतुरित्यनुषङ्गो बोध्यः।

२ वक्तरि (कवौ) तिष्ठति एतादृशे सकलदेवकर्तृके द्वेषे 'तव आलम्बात् अवज्ञापथम्' इत्यादिसुबन्तार्थविशेषितः 'अनीयन्त' इति तिङन्तार्थः।

३ 'पृथिवि तव विवेको यातः' इति विवेकनाशोपपत्तौ 'दधासि' इति धारणरूपकेवलतिङन्तार्थस्य, 'तान् जनान् दधासि' इति सुबन्तार्थविशेषितस्य तिङन्तार्थस्य वा सामर्थ्यं नास्ति [ जनानां धारणं पृथिव्याः स्वभाव एव अतो जनधारणेन न विवेकहीनत्वं सिद्ध्यति ]। अतः 'ये साधून् विश्वास्य वञ्चयन्ति तान् खलजनान् दधासि' इति पूर्ववाक्यार्थविशेषितं तिङन्तार्थरूपं धारणमत्र हेतुरित्यर्थः।

लिङ्गमिति विशेष इति चेत् न, उपपादकं हि सत्यां युक्तौ । सा तु सति व्यभिचार–पक्षावृत्तित्वयोरन्यतरस्यापि ज्ञाने न संभवति[1] । यथा 'विनिन्द्यान्युन्मत्तैः' इत्युदाहृतपद्ये तादृशश्रमाभाव उत्कर्षव्यभिचरितो भागीरथ्यवृत्तिर्वेति ज्ञाने जात्वपि न सर्वोत्कर्षः सेद्धुमीष्टे । सेद्धुमीष्टे च सर्वोत्कर्षाव्यभिचरितो भागीरथीवृत्तिश्चेति ज्ञाने । एवं हेतोः सर्वत्राप्युपपाद्याव्यभिचरितज्ञान[2] एवोपपत्तिः । अन्यथा तु इदमेवमनेवं वा स्यादिति संदेह एव । तस्मादुपपत्ति–समर्थनादिविलक्षणशब्दप्रयोगा आलंकारिकाणामनुमितिसरणिमेवाभिनिविशन्ते । न च समर्थना दृढप्रत्ययः, न त्वनुमितिरिति वाच्यम् । स हीन्द्रियसंनिकर्षाभावान्न प्रात्यक्षिकः । अनुमितिसामग्र्या बलवत्त्वान्न शाब्दः[3] । अत एव न मानसोऽपीति । सत्यम्, काव्यलिङ्गं प्रकृतार्थोपपादकम । उपपत्तिश्चानुमितिरेव । व्यभिचारित्वेऽपि हेतोस्तदानीं व्यभिचारास्फूर्तेः । तथापि नानुमानालंकारस्यात्र विषयः । श्रोतुर्यल्लिङ्गकानुमितिबुबोधयिषया[4] कविः काव्यं निर्मिमीते तल्लिङ्गमनुमानालंकृतेर्विषयः, काव्यव्यापारगोचरीभूतानुमितिकरणमिति निष्कर्षः । काव्यलिङ्गज्ञानजानुमितिस्तु न कविना श्रोतुर्बुबोधयिषिता । अत एवासौ न काव्यव्यापारगोचरः । श्रोतुः केवलं कारणवशाज्जायत इति नास्त्येवात्र जायमानायामप्यनुमितावनुमानालंकृतेर्विषयः । 'तस्मिन्मणिव्रातमहान्धकारे' इति वक्ष्यमाणपद्ये तु बुबोधयिषितैवानुमितिरित्यस्त्यनुमानविषयः । अपि च कविनिबद्धप्रमात्रन्तरनिष्ठा ह्यनुमितिरनुमानालंकृतिं प्रयोजयति । श्रोतृनिष्ठा महावाक्यार्थनिश्चयानुकूला तु काव्यलिङ्गमिति

१ व्यभिचारः ( हेतु–साध्ययोरव्याप्तिः ), पक्षे ( पर्वतादौ ) अवृत्तित्वम्, अनयोर्मध्ये अन्यतरस्य ( एकस्य ) अपि ज्ञाने न संभवति ।

२ हेतुः उपपाद्येन ( यस्यार्थस्य उपपादनं क्रियते तेन ) सह अव्यभिचरितत्वज्ञाने अर्थात् उपपाद्यस्य हेतोश्च व्याप्तिः ( सहचारः ) इति ज्ञाने एव ।

३ शाब्दे प्रत्यये शब्दसामग्री प्रबला स्यात् । एवमेव मानसेऽपि आन्तरिकसामग्री ।

४ यत् लिङ्गं यस्याम् ईदृशी याऽनुमितिस्तस्या बोधयितुमिच्छया । अर्थात् यं पदार्थं काव्यव्यापारजनितायामनुमितौ कविर्हेतुं करोति स हेतुः [ काव्यव्यापारगोचरीभूताया अनुमितेः करणम् ( असाधारणकारणम् ) ] अनुमानालंकारस्य विषय इत्यर्थः ।

महान्विशेषः। एवं च काव्यलिङ्गातिप्रसङ्गवारणायानुमानलक्षणप्रविष्टानुमितौ काव्यव्यापारगोचरत्वं विशेषणं देयम्।

यत्तु 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थकम्' इति कुवलयानन्दकारो लक्षणमकार्षीत्तदपि सामान्यविशेषभावानालिङ्गितत्वविशेषणरहितं चेदर्थान्तरन्यासे स्यादेवातिप्रसक्तम्। यदपि,

"-'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥'
'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि॥'

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुः। उत्तरत्र तु संबोधने व्यापारयन्त्य इति मृगीविशेषणत्वेनानेकपदार्थो हेतुरुक्तः" इत्यलंकारसर्वस्वकृतोक्तम्, अनुमोदितं च कुवलयानन्दकृता। तदुभयमसत्। अनुमानार्थान्तरन्यासविषये हेत्वलंकारो नेति तावत्सर्वसंमतम्। अन्यथा तयोरुच्छेदापत्तेः। अयं चानुमानस्यैव विषयः। चतुर्थचरणे दैवरूपे पक्षे नायिकाङ्गसादृश्यदर्शनजन्यसुखासहिष्णुत्वरूपसाध्यस्य चरणत्रयवेद्येन

मात्रमवधारणे। उपसंहरति—**एवं चेति**। **अन्विति**। यत इत्यादिः। **न्यासे स्यादेवातिप्रसक्तमिति**। प्राचीनमते समर्थनीयेत्यनेनैव वारणात्। मतान्तरे तु सामान्यविशेषभावानालिङ्गितत्वं विशेषणं देयमित्यर्थान्तरन्यासप्रकरणे तद्ग्रन्थ एव स्फुटम्।

१ अयं सर्वस्याशयः-अनुमानालंकारे अनुमितिः (हेतुद्वारा पक्षे साध्यस्य निश्चयरूपो व्यापारः) काव्यव्यापारगोचरत्वात् (काव्यरचनायां निबद्धत्वात्) कविद्वारा श्रोतॄणां बोधयितुमिष्टा भवति। एवंविधाया अनुमितेर्लिङ्गम् अनुमानालंकारस्य विषयः। काव्यलिङ्गे तु कारणसामग्रीवशादनुमितिर्जायमानापि न सा कवेः श्रोतृभ्यो बोधयितुमिष्टा भवति। तादृश्याः (काव्यव्यापारस्य अविषयीभूतायाः, कविना बोधयितुं नाभिलषितायाः) अनुमितेः (उपपत्तिसमर्थनादिपदवाच्यायाः) हेतुः काव्यलिङ्गस्य विषयः। किञ्च-अनुमाने काव्यश्रोतृभ्योऽतिरिक्तः अन्योऽपि प्रमाता (अनुमानजन्यज्ञानाश्रयः) मध्ये भवति, यथा 'तस्मिन्मणिव्रात०' इत्यत्र कोकाः। काव्यलिङ्गे तु श्रोतैव केवलः उपपादकहेतुना अर्थं समर्थयति।

तत्तदङ्गसादृश्याधारविघटकत्वेन हेतुना सिद्धेः स्फुटत्वात् । दैवं नायिकाङ्गसादृश्यदर्शनजन्य–मदिष्टसुखासहिष्णु, तत्तन्नायिकाङ्गसादृश्याधारविघटकत्वात्, मदीयशत्रुभूतयज्ञदत्तादिवदिति च प्रयोगः । मृग्यश्चेति द्वितीयपद्ये यद्यपि संबोधने वक्तृनिष्ठे मृगीनेत्रव्यापारो ज्ञायमान उत्पादकः, तथापि नासावुत्पादकता अनुमितिकरणताया अतिशेत इत्यनुमानालंकार[1] एव युक्तः । इयांस्तु विशेषः—यत्पूर्वपक्षेऽनुमितिर्गम्या, इह पुनर्बुध्यतेर्वाच्या[2] । मृग्यो दक्षिणानिलसंपर्कवत्यः, दक्षिणाभिमुखविलक्षणनेत्रव्यापारवत्त्वादिति च प्रयोगः । वैलक्षण्यं चोत्पक्ष्मेत्यादिनोक्तं बोध्यम् ।

अत्र वदन्ति—काव्यलिङ्गं नालंकारः । वैचित्र्यात्मनो विच्छित्तिविशेषस्याभावात् । स हि जन्यतासंसर्गेण कविप्रतिभाविशेषः, तन्निर्मितत्वप्रयुक्तश्चमत्कृतिविशेषो वेत्युक्तम् । न चानयोरन्यतरस्याप्यत्र संभवः । हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वायोगात् । अत एव चमत्कृतिरपि दुर्लभा । श्लेषादिसंमिश्रणेन विच्छित्तिविशेषोऽत्राप्यस्तीति तु न वाच्यम् । तस्य श्लेषाद्यंशप्रयोज्यत्वेन काव्यलिङ्गस्यालंकारतायास्तथाप्यसिद्धेः । यत्र तूपस्कारकवैचित्र्याद्विलक्षणं तदुपस्कार्यवैचित्र्यं तत्रास्तु नामोपस्कारकादुपस्कार्यस्य पृथगलंकारत्वम् । यथातिशयोक्तेर्हेतुफलोत्प्रेक्षयोः[3] । यत्र तूपस्कारकवैचित्र्य एव विश्रान्तिस्तत्रोपस्कार्यमनलंकार

**इह पुनर्बुध्यतेर्वाच्येति** । अत्रेदं चिन्त्यम्—एवं हि काव्यलिङ्गमात्रे गम्यानुमानस्य सत्त्वेन तदुच्छेदापत्तेः । तस्मादनुमितेर्बोधने गम्यत्वे चेदमिति व्यवस्थाश्रयणान्न

१ अयं भावः–मृग्यश्चेत्यत्र सहृदयद्वारा ज्ञायमानो मृगीणां नेत्रव्यापारः रामनिष्ठ–सम्यग्बोधनरूपकार्यस्य ( फलस्य ) उत्पादकः । ततश्च नासौ अनुमानस्य विषयः । अनुमानस्य विषयो हि ज्ञाप्य-ज्ञापक( साध्यसाधक )भावः । न पुनः कार्यकारणभावः । इति पूर्वपक्षः । इयं वास्तविकी उत्पादकता नास्ति, अपि तु अनुमापकतैवेति समाधानम् ।

२ अर्थात् समबोधयन्निति 'बुध' धातुना अभिधीयते ।

३ हेतूत्प्रेक्षायाः फलोत्प्रेक्षायाश्च अतिशयोक्तिद्वारैव उपस्करणम् ( अहेतुरपि हेतुत्वेनाध्यवसीयते ) । किन्तु उपस्कारक( अतिशयोक्ति )वैचित्र्यापेक्षया उपस्कार्यस्य ( उत्प्रेक्षायाः ) वैचित्र्यं पृथक् अनुभूयते इति पृथगलंकारत्वमित्याशयः ।

एव। यथा प्रकृते। एवं तर्हि बहूनामलंकारत्वेन प्राचीनैरूरीकृतानामनलंकारतापत्तिरिति चेत्, अस्तु। किं नश्छिन्नम्। तस्मात् 'निर्हेतुरूपदोषाभावः काव्यलिङ्गम्' इत्यपि वदन्ति।

इति रसगङ्गाधरे काव्यलिङ्गप्रकरणम्।

अथार्थान्तरन्यासः—

**सामान्येन विशेषस्य विशेषेण सामान्यस्य वा यत्समर्थनं तदर्थान्तरन्यासः॥**

समर्थनं चेदमेवमनेवं वा स्यादिति संशयस्य प्रतिबन्धक इदमित्थमेवेति दृढप्रत्ययः। निश्चय इति यावत्। तत्र प्रकृतयोः सामान्यविशेषयोः समर्थ्यत्वम्, अप्रकृतयोर्विशेषसामान्ययोः समर्थकत्वं प्रायशो दृश्यते। तच्च तावत्साधर्म्यवैधर्म्याभ्यां द्विविधम्। उदाहरणम्—

'करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः।
कथमालि शृणोषि सादरं विपरीतग्रहणा हि योषितः॥'

अत्र संबोध्यकर्तृकस्य तदीयकुचवृत्तिकरिकुम्भतुलासादरश्रवणस्यानौचित्यं प्रतिपाद्यते। तच्च तस्यानिष्टसाधनत्वे संगच्छते। अनिष्टसाधनत्वमपि तादृशश्रवणमिष्टसाधनमिति बुद्ध्या श्रवणं कुर्वाणायाः कान्ताया भ्रान्तात्वं विना दुरुपपादमिति स्त्रीत्वेन भ्रान्तात्वं प्रतिपाद्यते। तच्च संबोध्यस्त्रीविशेषभ्रान्तत्वरूपस्य विशेषस्य सामान्यं समर्थकं च।

'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम्।
मूर्च्छां गतो मृतो वा रोगानपहरति पारदः सकलान्॥'

---

दोषः। अत्र मध्ये अन्तरितः गता इति क्रिया अन्तर्भावितण्यर्था। तादृशक्रियाकर्मीभूतेन्दीवरादयो दैवनिष्ठत्वात्तत्सादृश्यदर्शनजन्यमुखासहिष्णुत्वोपपादकाः। मज्जितत्वाद्युपपादकानि त्वन्नेत्रसमानकान्तीत्यादिकानीति बोध्यम्॥ इति रसगङ्गाधरमर्मप्रकाशे काव्यलिङ्गप्रकरणम्॥

---

१ समर्थकहेतुविन्यासो हि काव्यलिङ्गमुपस्करोति। अत्र हि उपस्कारकस्य तादृशहेतुविन्यासस्यैव वैचित्र्यम्, न उपस्कार्ये काव्यलिङ्गे। इत्यनलंकारतैवाऽस्येत्यर्थः।

अत्र विपद्गतसद्गुणकर्तृकोपकारस्य सामान्यस्य प्रकृतस्य मूर्च्छितमृतपारदकर्तृकं रोगापहरणं विशेषः, उदाहरणतया समर्थकं च । पारदवृत्तान्ते प्रकृते तु पूर्वार्धोत्तरार्धयोर्व्यत्यासे कृते सामान्यस्य विशेषसमर्थकताप्यत्रैव संभवति—

'अहन्नेको रणे रामो यातुधानाननेकशः ।
असहाया महात्मानो यान्ति कांचन वीरताम् ॥'

अत्र विशेषस्य सामान्यं समर्थकम् । वैपरीत्ये तु सामान्यस्य विशेषः । 'असहाया—' इत्याद्युत्तरार्ध[1]मपास्य 'नूनं सहायसंपत्तिमपेक्षन्ते बलोज्झिताः' इति कृते विशेषो वैधर्म्येण सामान्यस्य । अर्ध[2]वैपरीत्ये दुर्बलवृत्तान्ते प्रकृते तु वैपरीत्यम् । अस्मिन्नलंकारे समर्थ्यसमर्थकभाव आर्थः शाब्दश्चालंकारताप्रयोजकः । न तु काव्यलिङ्ग इव हेतुहेतुमद्भाव इवार्थ एव । हि यत् यतः इत्यादेः प्रतिपादकस्याभावे आर्थः । स तु कथितः 'मूर्छां गतो मृतो वा' इत्यत्र । तत्सत्त्वे शाब्दः । सोऽपि 'विपरीतग्रहणा हि' इत्यत्र ।

यथा वा—

'अबला हि नाराचसमपतितपाषाणपरिप-
रपरित्यागस्नेहः प्रभवितुमशक्यः खलु यथा ।
तथा चैवं प्रेमा दुरितनिवहेष्वम्ब जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥'

अत्र भगवत्या भागीरथ्याः स्तोतुश्च वृत्तान्तयोर्विशेषयोः समर्थकस्य चतुर्थचरणप्रतिपाद्यस्य सामान्यस्य समर्थकता यत इत्यनेनोच्यते ।

ननु सामान्यार्थो विशेषार्थसमर्थक इत्यस्य सामान्यं[3] व्याप्तिज्ञानं विशेषा-

१ अथ च पूर्वार्धोत्तरार्धयोर्व्यत्यासे 'नूनं सहाय०' इत्यादिपद्यविधाने कृते 'न बलवन्तु न अपेक्षन्ते' इति निषेधात्मकतया वैधर्म्येण (पूर्वोक्तो वैपरीत्येन) विशेषः उत्तरार्धगतः ('एको रामोऽहन्०' इति), पूर्वार्धगतस्य सामान्यस्य समर्थक इत्यर्थः ।

२ अर्थात् 'नूनं सहायसंपत्ति०' इति यथावस्थितमुत्तरार्धं कृत्वा 'अहन्नेक०' इति पूर्वार्धे स्थापिते तु वैपरीत्यम् अर्थात् प्रकृतस्य विशेषस्य सामान्यं वैधर्म्येण समर्थकम् ।

३ अर्थात् सामान्यं व्याप्तिज्ञानम् 'यत्र यत्र धूमस्तत्र तत्र वह्निः' इति विशेषभूताया अनुमितेः 'अस्ति पर्वते वह्निः' इत्यस्याः प्रयोजकम् ।

नुमितिप्रयोजकमित्येवार्थः पर्यवस्यति । अन्यथा स्वभावादेर्दुष्परिहरत्वादिव्यभिचारज्ञानदशायां तादृशार्थस्य समर्थकत्वाप्रतिपत्तेः । प्रतीतिविशदीकरणं समर्थकेन क्रियते, नानुमानमिति प्राचीनप्रवादस्त्वविचारितरमणीय इति नायं भेदोऽनुमानादतिशेते । अतिशेते च विशेषार्थेन सामान्यार्थसमर्थनरूपोऽधिकरणविशेषारूढसहचारज्ञानाहितव्याप्तिज्ञानदार्ढ्यात्मेति चेत्, कविः शृणोति । न चैवमपि विशेषस्य सामान्यसमर्थनं नार्थान्तरन्यासभेदो भवितुमीष्टे । प्रागुक्तोदाहरणालंकारेणैव गतार्थत्वादिति वाच्यम् । इवादिप्रयोगाभावस्यैवात्र ततो वैलक्षण्यात् । एवमपि वाचकाभावादार्थोऽयमुदाहरणालंकारोऽस्तु, न त्वर्थान्तरन्यासभेद इति चेत्, इदमस्ति वैलक्षण्यम्—सामान्यार्थसमर्थकस्य विशेषवाक्यार्थस्य द्वयी गतिः । अनुवाद्यांशमात्रे विशेषत्वम्, विधेयांशस्तु सामान्यगत एवेत्येका । अनुवाद्यविधेयोभयांशेऽपि विशेषत्वमित्यपरा । तत्राद्या उदाहरणालंकारस्य विषयः, द्वितीया त्वर्थान्तरन्यासभेदस्य । एवं च 'मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः' इत्युदाहरणालंकारगते विशेषे उपकारमेव कुरुत इति

१ अधिकरणविशेषं आरूढं यत् सहचारज्ञानम् [ यथा पारदे-'मूर्च्छा-विपद्गतोऽपि सद्गुणः पारदः उपकारसहचरित एव' इति ] तेन आहितस्य व्याप्तिज्ञानस्य दार्ढ्यात्मकः अर्थात् विशेषस्थले सहचारं दृष्ट्वा सामान्यस्थले व्याप्तिज्ञानं दृढीभवति यथा पारदे ( विशेषे ) सद्गुणोपकारयोः सहचारं दृष्ट्वा ( सामान्यस्थले ) 'सद्गुणशाली विपद्गतोऽपि उपकारक एव' अर्थात् सद्गुणोपकारयोः संकटदशायामपि सहचरितत्वम् ( व्याप्तत्वम् ) एवेति दार्ढ्यं भवति । एवंविधं विशेषद्वारा सामान्यस्य समर्थनमेव नवीनम्, यतो हि अनुमाने व्याप्तिज्ञानं सामान्यं भवति । अत्र तु विशेष इति ।

२ विशेषेण सामान्यस्य समर्थनमर्थान्तरन्यासः ( सामान्येन विशेषसमर्थनं अनुमानालंकारः ) इति पूर्वं स्थापिते, न चैवम्० इत्यादिना तस्यापि उदाहरणेऽन्तर्भावं शङ्कते । विशेषकर्तृकं सामान्यकर्मकं समर्थनम् ( विशेषद्वारा सामान्यस्येत्याशयः ) इति तदर्थः ।

३ 'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः' इत्युदाहरणालंकारे मूर्च्छादिगतं पारदमुद्दिश्य उपकारकारकत्वं विधीयते । तथा च अनुवाद्यांशः पारदो विशेषः । उपकारकारकत्वं तु सद्गुणशालिनि पुरुषे सामान्ये यदासीत्तदेव । अर्थान्तरन्यासे तु 'उपकारमेव कुरुते विपद्गतः सद्गुणो नितराम् । मूर्च्छां गतो मृतो वा रोगानपहरति पारदः सकलान् ॥' इत्यत्र मूर्च्छादिगतं पारदमनूद्य रोगापहारकत्वं विधीयते । ततश्च पारदः रोगापहरणं चेत्युभयस्यापि विशेषत्वमेवेत्याशयः ।

प्राचीनसामान्यार्थगतैव यथोक्तरूपेण क्रिया विधेया । 'रोगानपहरति पारदः सकलान्' इत्यर्थान्तरन्यासगते तु पृथगुपात्तविशेषरूपेणेति । लक्षणे त्वस्य विशेषेणेत्यत्रोभयांशविशेषो ग्राह्यः । तेनोदाहरणालंकृतौ नातिप्रसङ्गः । यदि चायमल्पो विशेषो नास्योदाहरणालंकारात्पृथगलंकारतां साधयितुं प्रभवति, अपि तु तद्विशेषतामित्युच्यते, तदा उदाहरणालंकारोऽर्थान्तरन्यासस्य, दृष्टान्तस्य प्रतिवस्तूपमा, रूपकस्यातिशयोक्तिश्च विशेषः । उपमैव चार्थी स्मरणभ्रान्तिमत्संदेहा इत्यपि सुवचं स्यात्, तत्रापि विशेषस्याल्पत्वात् । किं चोदाहरणालंकारो न प्राचां मनःसंतोषमावहति, उपमयैव तैस्तस्य निरासात् । अतस्तेषां विशेषेण सामान्यस्य समर्थनमर्थान्तरन्यासं विना नान्यत्र प्रवेष्टुमीष्ट इति ।

अत्र हि प्रतिज्ञा–हेत्ववयवयोरिवाकाङ्क्षाक्रमप्राप्तं समर्थ्यसमर्थकवाक्ययोः पौर्वापर्यमिति न मन्तव्यम् । नह्यत्र समर्थकं समर्थ्यानुपपत्त्युत्थापितायामाकाङ्क्षायां सत्यामेवाभिधीयत इत्यस्ति नियमः । अनुपपत्तेरभावेऽपि प्रतीतिवैशद्यार्थं कविभिस्तस्याभिधानात् । एवं च वैपरीत्येऽपि न दोषः । यथा—

'दीनानामथ परिहाय शुष्कसस्यान्यौदार्यं वहति पयोधरो हिमाद्रौ ।
औन्नत्यं विपुलमवाप्य दुर्मदानां ज्ञातोऽयं क्षितिप भवादृशां विवेकः ॥'

प्रागवदाह—अथेति । कविः शृणोतीति । कविनिबद्धप्रमात्रन्तरनिष्ठा ह्यनुमितिरनुमानालंकारस्य विषय इत्यादिना काव्यलिङ्गालंकारे दत्तोत्तरत्वादिति भावः ।

---

१ अनुवाद्ये विधेये च उभयत्र यत्र विशेषस्तत्रैवार्थान्तरन्यासः, तेन उदाहरणे नातिप्रसङ्गः ( विशेषद्वारा यत्र सामान्यस्य समर्थनं तत्रार्थान्तरन्यासः इति स्यात्प्रतमेतत्पर्यन्तम् ) ।

२ अर्थात् उदाहरणालंकारस्यैवायम् ( अर्थान्तरन्यासः ) प्रभेद इत्युच्यते ।

३ ततश्च दृष्टान्त–प्रतिवस्तूपमादिषु परस्परं विशेषस्याल्पत्वेपि दृष्टान्तादेः प्रतिवस्तूपमादयो न प्रभेदाः सिद्ध्यन्ति तथात्रापि उदाहरणालंकारस्य अर्थान्तरन्यासो न विशेषः किन्तु पृथगलंकार एवेत्याशयः ।

४ अनुमाने यथा 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यं पूर्वम्, 'धूमात्' इत्यादीनां हेतुतदवयववाक्यानां पश्चान्निर्देशः तथा अर्थान्तरन्यासे नास्तीत्यर्थः ।

अत्र दानेनासंभावितस्य विदुषो राजानं प्रति कोपवचने पूर्वार्धगतो विशेष उत्तरार्धगते सामान्ये प्रस्तुते समर्थकः। एवमप्रकृतैः प्रकृतस्य समर्थनमुदाहृतम्। प्रकृतेन प्रकृतसमर्थनं यथा—

'कस्तृष्येन्मार्मिकस्तन्वि रमणीयेषु वस्तुषु।
हित्वान्तिकं सरोजिन्याः पश्य याति न षट्पदः॥'

जलक्रीडायां दूरं गच्छेति वदन्तीं कामिनीं प्रति नायकस्योक्तिरियम्। अस्यां वृत्तान्तद्वयमपि प्रकृतम्। क्वचित्प्रकृतेनाप्रकृतस्य समर्थनं संभवति। परंतु तदप्रकृतं प्रान्ते प्रकृतपर्यवसन्नं भवति। आपाततस्तु तस्याप्रकृतत्वम्, सर्वथैवाप्रकृतस्य समर्थनाऽप्रसक्तेः। यथा—

'प्रभुरपि याचितुकामो भजेत वामोरु लाघवं सहसा।
यदहं त्वयाधरार्थी सपदि विमुख्या निराशतां नीतः॥'

अत्र कामुकयोः प्रक्रान्तेन वृत्तान्तेन विशेषेण दातृयाचकवृत्तान्तोऽप्रस्तुतः सामान्यात्मा समर्थ्यते[1]।

यत्तु 'कारणेन कार्यस्य कार्येण वा कारणस्य समर्थनम्' इत्यपि भेदद्वयमर्थान्तरन्यासस्यालंकारसर्वस्वकारो न्यरूपयत्, तन्न। तस्य काव्यलिङ्गविषयत्वात्। अन्यथा 'वपुःप्रादुर्भावात्—' इति सकलालंकारिकसिद्धं काव्यलिङ्गोदाहरणमसंगतं स्यात्। अपराधे वाक्यार्थद्वयस्य[2] कारणत्वेनार्थान्तरन्यासोदाहरणतापत्तेः। यदपि विमर्शिनीकार आह— "विशेषेणापि सामान्यसमर्थने यत्र सामान्यवाक्यार्थस्योपपादनापेक्षत्वं तत्रार्थान्तरन्यासः। यत्र पुनः स्वतःसिद्धस्यैव विशदीकरणार्थं तदेकदेशभूतो विशेष उपादीयते तत्रोदाहरणालंकारः। यथा 'निमज्जतीन्दोः किरणेष्विवाङ्कः' इत्यत्र" इति। तदपि न।

'निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्॥'

---

१ अप्रकृतस्यापि दातृ-याचकवृत्तान्तस्य 'बलादधरं ग्रहीतुं प्रभुरपि त्वद्वशीकृतत्वात् तवाग्रेऽहं याचकः' इति प्रकृते पर्यवसानं भवति, अप्रकृतस्य समर्थनाऽनावश्यकत्वादिति बोध्यम्।

२ अपराधद्वयरूपं कार्यं प्रति 'पूर्वजन्मनि नाहं प्रणतवान्' 'संप्रति नमन् जन्मान्तरेऽशरीरतया अनतिमान् स्याम्' इति वाक्यार्थद्वयं कारणमित्यर्थः।

इति प्राचीनसंमतोदाहरणे सामान्यवाक्यार्थस्यासंदिग्धत्वेनोपपादनानपेक्षत्वात् । नहि दोषेण भ्रमो भवतीत्यर्थे पामरस्याप्यस्ति संशयः, येनोपपादनापेक्षा स्यात् । अस्त्येव तर्कस्थल इवाहार्योऽत्रापि संशय इति चेत्, त्वदुक्तोदाहरणालंकारेऽपि तस्य[1] साम्राज्यात् । तस्मादस्मदुक्तैव व्यवस्थानुसर्तव्या[2] ।

कुवलयानन्दकारस्तु—"'यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः' 'अनन्तरत्नप्रभवस्य—' इत्यादि ।

'कर्णारुंतुदमन्तरेण रणितं गाहस्व काक स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ।
धन्यानि स्थलसौष्ठवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालतिलके पङ्के न शङ्केत कः ॥'

पूर्वमुपमारीत्या इह त्वर्थान्तरन्यासरीत्या विकस्वरालंकारः" इत्याह । तदपि तुच्छम् । 'उपकारमेव कुरुते' इत्युदाहरणालंकारोक्तास्मदुदाहरणे प्राथमिकविशेषस्याभावात्[3] त्वदुक्तो विकस्वरालंकारो न संभवतीति कश्चिदलंकारस्त्वयापि वाच्यः । एवं चार्थान्तरन्यासस्य तस्य[4] चार्थान्तरन्यासप्रभेदयोश्च संसृष्ट्यैवोदाहरणानां त्वदुक्तानां गतार्थत्वे नवीनालंकारस्वीकारानौचित्यात् । अन्यथोपमादिप्रभेदानामनुग्राह्यानुग्राहकतया संनिवेप्रभेदयोश्च संसृष्ट्यैवेति । शृङ्खलाकृतचमत्कारस्याधिकस्य सत्त्वाच्चिन्त्यमिदम् ॥

इति रसगङ्गाधरमर्मप्रकाशेऽर्थान्तरन्यासप्रकरणम् ॥

---

१ आहार्यः संशयस्तत्रापि संभवत्येवेत्याशयः ।

२ यत्र अनुवाद्यांशमात्रे विशेषत्वं तत्रोदाहरणम् । यत्र उभयत्र विशेषस्तत्रार्थान्तरन्यास इति ।

३ अत्र 'विपद्गतः सद्गुणः उपकारमेव कुरुते' इति प्रथमं सामान्यम्, न विशेष इत्यर्थः । किन्तु विकस्वरे कोटित्रयम्—पूर्वं विशेषः, ततः सामान्यम्, पुनर्विशेषः, इति । पण्डितराजोदाहरणे तु—'उपकारमेव कुरुते' इति सामान्यम्, 'अत्र (अस्मिन्नर्थे) मूर्च्छितो मृतो वा पारदो निदर्शनम् (एकदेशः)' इति विशेषः, इति कोटिद्वयमेवेति विचार्यं विवेचकैः ।

४ तस्य उदाहरणस्य । अर्थात् अर्थान्तरन्यासस्य उदाहरणस्य च संसृष्ट्या, अर्थान्तरन्यासप्रभेदयोः उदाहरणस्य च संसृष्ट्यैव गतार्थत्वे इत्याशयः ।

श्लेऽलंकारान्तरकल्पनापत्तेः। 'वीक्ष्य रामं घनश्यामं ननृतुः शिखिनो वने' इत्यत्राप्युपमापोषितायां[1] भ्रान्तावलंकारान्तरत्वप्रसङ्गाच्च।

इति रसगङ्गाधरेऽर्थान्तरन्यासप्रकरणम्।

अथानुमानालंकारः—

अनुमितिकरणमनुमानम्॥

अनुमितिश्चानुमितित्ववती[2]। अनुमितित्वं चानुमिनोमीति मानससाक्षात्कारसाक्षिको जातिविशेषः। व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यज्ञानं[3] वानुमितिः। तस्याश्च करणं[4] व्याप्तिप्रकारकलिङ्गनिश्चय इत्येके। व्याप्यत्वेन निश्चीयमानं लिङ्गमित्यपरे। इदं च साधारणमनुमानम्। अस्य च कविप्रतिभोल्लिखितत्वेन चमत्कारित्वे काव्यालंकारता। यथा—

'तस्मिन्मणिव्रातहतान्धकारे पुरे निशालोपविधानदक्षे।
सद्यो वियुक्ता दिवसावसानं कोकाः सशोकाः कथयन्ति नित्यम्॥'

अत्र कथनं स्फुटबोधः। स चानुमित्यात्मकः कोकवियोगरूपस्य लिङ्गस्य[5] व्याप्यत्वेन निश्चयात्करणादुत्पद्यते। तत्र चान्धकारविशे-

---

प्राग्वदाह—अथेति। विनिगमनाविरहादाह—व्याप्तीति। साधारणं तन्त्रान्त-

---

१ 'घन इव श्यामः' इत्युपमा। विकस्वरो यथा पृथक्, तथात्रापि पृथगलंकारत्वं प्रसज्येत न तु उपमापोषितभ्रान्तिमत्त्वमित्यर्थः।

२ मनुष्यत्वं यस्मिन् स मनुष्यः, तथा अनुमितित्वं जातिर्यस्यां साऽनुमितिरित्यर्थः।

३ व्याप्तिम् (साध्य-हेत्वोः सहचारम्) विशेषणीकृत्य पक्षस्य (पर्वतादेः) धर्मोऽयमिति (धूमः पर्वतेऽस्ति ततस्तद्व्याप्यो वह्निरपि साधयितुं शक्यः) निश्चयाज्जनितं 'वह्निमान्' इत्यादि ज्ञानम्।

४ आसाधारणं कारणम्।

५ यदा यदा कोकवियोगो भवति तदा तदा दिवसावसानं दृश्यते इति इति कोकवियोगस्य लिङ्गस्य दिवसावसानव्याप्यत्वनिश्चयः। एतद्रूपात् लिङ्गात् (हेतोः) 'संप्रति दिनावसानम्, कोकयोः सशोकत्वात् (वियोगात्)' इति स्फुटबोधो जात इत्यलंकारः।

षाभावस्य तत्सामान्याभावत्वेनाध्यवसाने सति निशालोपविधानदक्षतासिद्धौ दिवसावसानसिद्ध्यभावप्रयुक्ता दिवसावसानानुमितिरित्यस्ति कविप्रतिभोल्लिखितत्वम्। वक्ष्यमाणमुन्मीलितमिति न मन्तव्यम्। तस्याप्यनुमानताया एव स्थापयिष्यमाणत्वात्। यथा वा—

'अम्लायन्यदरातिकैरवकुलान्यग्लासिपुः सत्वरं
दैन्यध्वान्तकदम्बकानि परितो नेशुस्तमां तामसा[2]ः।
सन्मार्गाः प्रसरन्ति साधुनलिनान्युल्लासमातन्वते
तन्मन्ये भवतः प्रतापतपनो देव प्रभातोन्मुखः॥'

पूर्वत्र लिङ्गलिङ्गि[3]नोः शुद्धत्वम्, इह तु रूपकानुप्राणितत्वमिति विशेषः। कविप्रतिभोल्लिखितत्वं पुनः स्फुटमेव। इह यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र मन्ये शङ्के अवैमि जाने इत्यादिपदानामनुमितिबोधकत्वम्, यत्र तु सादृश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकतेति विवेकः। तेन

'मन्मथामात्यमायान्तमहं मन्ये महा[4]महम्।
चक्षुश्चमत्कृतिं धत्ते यदहो किल कोकिलः॥'

इत्यादावनुमैव, नोत्प्रेक्षा[5]।

---

रादिसाधारणम् शङ्कते—**वक्ष्येति**। इह अनुमानालंकारे। पुनस्त्वर्थे। उभयत्रेति

---

१ मणिभिरन्धकारविशेष एवापनीयते न सर्वः, किन्त्वत्र मणिनाशितान्धकारविशेषे सामान्यतोऽन्धकारत्वमध्यवसाय तदभावे अन्धकारसहचरिताया निशाया अप्यभावेन दिवसावसानज्ञानस्य नास्त्युपायः। ततश्च कोकवियोगरूपस्य लिङ्गस्य दिवसावसानव्याप्यत्वनिश्चये सति एतद्रूपात्कारणात् दिवसावसानस्य अनुमितिः (लक्ष्या, कथयन्तीति लक्षकपदोपादानात्)। अन्यस्मिन् अन्यस्याभेदाध्यवसानात् कविप्रतिभाकृतचमत्कृतिरित्यलंकारत्वमस्येत्याशयः।

२ तमःसंबन्धिनः पदार्था उलूकादयः।

३ अरातिकैरवकुलम्लानतादेः लिङ्गस्य, प्रताप-तपनव्याप्यत्वनिश्चयरूपात्कारणादनुमानमिति बोध्यम्।

४ महान् उत्सवो यत्र। कामामात्यो वसन्तः।

५ अत्र उपमानोपमेययोः सादृश्यनिमित्तं नास्ति। तत्तु यथा—'लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः', यथा वा—'अस्या दोहदशालिन्या मुखमापाण्डुरप्रभम्। सत्यं राजेति मन्येऽद्य यद्भुवं भोक्तुमिच्छति॥' इत्यादिषु द्वयोः सादृश्यं सूच्यते (पूर्वत्र पद्मस्य पादस्य च, उत्तरत्र मुखस्य राजपर्यायस्य चन्द्रस्य च। द्वितीयोदाहरणे राजपदेन नृपरूपोऽप्युत्प्रेक्ष्योऽर्थः। राजा पृथिवीं भुङ्क्ते पालयत्येव। गर्भिण्या मुखमपि भुवं (मृत्तिकाम्) भोक्तुमिच्छतीति सादृश्यात्)।

अत्रेदं बोध्यम्—मन्ये इत्यादिवाचकपदोपादाने वाच्यमनुमानम्। यथानन्तरोक्ते। वक्तिकथयतीत्यादिलक्षकपदोपादाने लक्ष्यम्। यथा 'कोकाः सशोकाः' इत्यादौ। तदन्यतरानुपादाने साध्याक्षिप्तायामनुमितौ प्रतीयमानम्। यथा 'अम्लायन्—' इति पद्ये 'तद्भावी तव देव संप्रति महोमार्तण्डबिम्बोदयः' इति चतुर्थचरणनिर्माणे। साध्यस्याप्यनुपादाने लिङ्गमात्रोपादानेन यत्रागूर्यमाणं साध्यं तत्र ध्वन्यमानम्। यथा—

'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम्।
आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः॥'

अत्र शरदागमस्य साध्यस्यानुमानं ध्वन्यते। एवमेषा व्यवस्था न प्रागुक्ते करणमनुमानमिति नये संगच्छते। करणस्य ज्ञायमान[1]लिङ्गत्वपक्षे वाच्यतायाः केवलाया आपत्तेः। लिङ्गज्ञानत्वपक्षे वाच्यत्वलक्ष्यत्वयोरनापत्तेः। अतोऽनुमितिरेवानुमानम्। तस्याश्च वाच्यत्वलक्ष्यत्वप्रतीयमानत्वध्वन्यमानत्वानां साम्राज्यम्, ल्युटश्च करण इव भावेऽपीति।

इति रसगङ्गाधरेऽनुमानप्रकरणम्।

---

अथ यथासंख्यम्—

**उपदेशक्रमेणार्थानां संबन्धो यथासंख्यम्।**

पदार्थानतिवृत्तिरूपे [2]यथार्थेऽव्ययीभावः। संख्याया अनतिवृत्तिश्च

---

भावः। भावेऽपीति। विधिरिति शेषः॥ इति रसगङ्गाधरमर्मप्रकाशेऽनुमानप्रकरणम्॥

---

१ ज्ञायमानं लिङ्गम् अनुमितेः करणम् (कारणम्) इति स्वीकारे हेतु(लिङ्ग)वाचकपदोपादाने अनुमानं वाच्यमित्येव व्यपदेशः स्यात्, लक्ष्यत्वादेर्न प्रतीतिः। लिङ्गज्ञानम् अनुमितेः करणम् इति पक्षे ज्ञानं न वाचकं न च लक्षकमिति वाच्यत्व-लक्ष्यत्वयोरनापत्तिः। एवं च करणमनुमानमित्युभयथापि न समञ्जसम्। अनुमितिरनुमानमिति स्वीकारे तु मन्ये इत्याद्युपादाने वाच्यत्वम्, वक्तीत्याद्युपादाने लक्ष्यत्वमित्यादिव्यवस्थया अनुमितेर्वाच्यत्व-लक्ष्यत्वादीनि सम्यक् संभवन्तीति सर्वस्याशयः। ल्युटश्च यथा करणे (अनुमीयते अनेनेति) साम्राज्यं तथा भावेपीति पूर्वानुषङ्गः। 'विधिः इति शेषः' इति नागेशटीका तु तत्त्वानवबोधादविधिरेव, असंबद्धाक्षेपस्य पण्डितराजमीमांसामार्गे कुत्राप्यस्पर्शात्।

२ संख्यामनतिक्रम्य यथासंख्यम्।

प्रथमस्य प्रथमेनैव द्वितीयस्य द्वितीयेनैवेत्यादिक्रमेण संबन्धे भवतीति योगार्थ एव लक्षणम् । यथा—

'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः ।
संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥'

अत्र यौवनोद्गमनितान्तशङ्किताः संकुचन्ति, शौर्यबलकान्तिलोभिता विकसन्तीति प्रथमद्वितीयक्रिययोः क्रमेण प्रथमद्वितीयविशेषणावच्छिन्नेन कर्त्रान्वयः । स च शाब्दः, समासाभावेन शब्दानामप्यन्वयात् । भावसंधिश्चात्र[1] प्रधानम् । यथा वा—

'द्रुमपङ्कजविद्वांसः सर्वसंतोषपोषकाः ।
मुधैव हन्त हन्यन्ते कुठारहिमदुर्जनैः ॥'

इह दीपकानुप्राणकम् । यथा वा—

'वृन्दापितृगहनचरौ कुसुमायुधजननहननशक्तिधरौ ।
अरिशूललाञ्छितकरौ भीतिं मे हरिहरौ हरताम् ॥'

इहोभयत्राऽऽर्थः । पूर्वं समासेन समासान्वयेऽवयवानामन्वयस्य पार्थिकत्वात् । इत्यादिरपरिमितोऽस्य विषयः । अथ क्रमेणान्वयबोधे किं नियामकम् । अत्र केचित्—"योग्यताज्ञानमेव नियामकम् । तथाहि 'वृन्दापितृगहनचरौ' इत्यत्र हरौ श्मशानचारित्वस्य, हरे वृन्दावनचारित्वस्य च बाधितत्वादन्वयबोधाभावे हरौ वृन्दावनचारित्वस्य, हरे श्मशानचारित्वस्य च योग्यत्वादन्वयबोधो जायमानः क्रमिकान्वयबोधे पर्यवस्यति । एवमन्यत्रापि" इत्याहुः ।

अन्ये तु—"योग्यताज्ञानस्य नियामकत्वे क्रमभङ्गस्य दोषता न स्यात् । 'कीर्तिप्रतापौ भातस्ते सूर्याचन्द्रमसाविव' इत्यादौ कीर्तौ चन्द्रसादृश्यस्य प्रतापे सूर्यसादृश्यस्य च व्युत्क्रमोक्तस्यापि योग्यतावशादेव प्रतीत्युपपत्तेः । नहि क्रमिकमेव योग्यम्, अपक्रममयोग्यम्, येन तव

प्रागवदाह—अथेति । संबन्धे सतीति शेषः । पूर्वतो विशेषमाह—इहेति । वृन्दा तदाख्यं वनम् । पितृगहनं श्मशानम् । अरिः सुदर्शनः । आर्थविषये शङ्कते—अथेति ।

१ शङ्कौत्सुक्यभावयोरित्यर्थः । प्रधानस्य तस्य यथासंख्यमिदमलंकारकमित्याशयः ।

मुख्यार्थहतिः स्यात्। भवति चानुभवसिद्धा सा। तस्मादन्वयिसमसंख्यपदार्थज्ञानस्य यथासंख्यान्वयबोधत्वं कार्यतावच्छेदकं वाच्यम्। एवं च 'कीर्तिप्रतापौ' इत्यत्र च यथाश्रुतानां यथासंख्यान्वयबोधो बाधनिश्चयपराहत इति मुख्यार्थहतिसद्भावात्क्रमभङ्गस्य दोषत्वसाम्राज्यम्। नन्वन्वयिसमसंख्यपदार्थानां यदि यथासंख्यान्वयबोधो व्युत्पत्तिसिद्धस्तदा 'यथासंख्यमनुदेशः समानाम्' इति सूत्रं व्यर्थं स्यात्। तदुदाहरणेषु 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इत्यादिषु लौकिकसामग्रीबलादेव यथासंख्यान्वयबोधोपपत्तेः। योग्यतामात्रबलात् तथाबोधोपपादकमते तु शास्त्रमात्रचक्षुष्कैः प्रकृतिविशेषप्रत्ययविशेषसंबन्धरूपाया योग्यताया अज्ञानात्तेषां यथासंख्यान्वयबोधार्थं 'यथासंख्यं' इति सूत्रमिति चेत्, न। ममापि प्रागुक्तव्युत्पत्तिरहितानां तादृशबोधार्थं सूत्रसार्थक्यात्" इत्याहुः।

इदं तु बोध्यम्—यथासंख्यान्वयबोधो यथातथास्तु नाम। नात्रागृह्णीमः। यथासंख्यमलंकारपदवीमेव तावत्कथमारोढुं प्रभवतीति तु विचारणीयम्। नह्यस्मिँल्लोकसिद्धे कविप्रतिभानिर्मितत्वस्यालंकारताजीवातोर्लेशतोऽप्युपलब्धिरस्ति, येनालंकारव्यपदेशो मनागपि स्थाने स्यात्। अतोऽपक्रमत्वरूपदोषाभाव एव यथासंख्यम्। एवं चोद्भटमतानुयायिनामुक्तयः

---

१ ये पदार्थाः अन्वयिनः (अन्यैः सह अन्वयं लभन्ते) परस्परं च समसंख्याः तेषां पदार्थानां ज्ञानरूपस्य कारणस्य (समसंख्यपदार्थज्ञाने सत्येव यथासंख्यमन्वयो भवति), यथासंख्यमन्वयबोधः कार्यम् (अन्वयबोधत्वं च कार्यतावच्छेदकम्)।

२ अर्थात् शास्त्रेणैव येषां शब्दसाधुत्वग्रहस्तेषां मते लोमादीनां 'श'प्रत्ययस्यैव योग्यता पामादीनां 'न'प्रत्ययस्यैव योग्यतास्तीति ज्ञानस्याभावात् यथासंख्यान्वयार्थं यथासंख्यसूत्रमित्यर्थः।

३ नन्वित्यादेः शङ्कासमाधानप्रबद्धकस्यायमाशयः—अन्ये त्विति मतानुसारं यदि व्युत्पत्तिसिद्ध एव यथाक्रमान्वयस्तर्हि व्युत्पत्त्यनुसारं लोकप्रसिद्धत्वादेव यथासंख्यान्वये सिद्धे पाणिनिसूत्रस्य वैयर्थ्यं स्यात्। अस्मन्मतानुसारं तु योग्यताज्ञानमेव यथासंख्यान्वये नियामकमिति स्वीकारे तु शास्त्रैकचक्षुषां शास्त्रं विना नेदं ज्ञानमुपपद्यते यत् लोमादीनां 'श'प्रत्ययस्यैव योग्यता इत्यादि। ततश्च सूत्रं विना यथासंख्यान्वयस्य अनुपपन्नत्वाद्यथासंख्यसूत्रं चरितार्थमिति 'केचित्'मतानुसारिणां पूर्वपक्षः। येषां तादृशव्युत्पत्तेर्ज्ञानं नास्ति तदर्थमस्मन्मतेपि सफलं सूत्रमिति 'अन्य'मतानुयायिनां समाधानम्।

४ यथासंख्यस्यालंकारतावादिनां तेषां कथनं कूटकार्षापण( अनृतरजतरूप्य )वदित्याशयः।

कूटकार्षापणवद्रमणीया एव । एतेन यथासंख्यमेव क्रमालंकारसंज्ञया व्यवहरतो वामनस्यापि गिरो व्याख्याताः इति तु नव्याः ।

इति रसगङ्गाधरे यथासंख्यप्रकरणम् ।

अथ पर्यायः-

क्रमेणानेकाधिकरणमेकमाधेयमेकः पर्यायः । क्रमेणानेकाधेयकमेकमधिकरणमपरः[1] ॥

एतदन्यान्यत्वं च सामान्यलक्षणम्, न तु योगार्थमात्रम् । अतिप्रसक्तेः । 'परावनुपात्यय इणः' इति पाणिनिस्मृत्या अनुपात्ययमात्रस्य घञुपाधित्वेनोक्तेः[2] । नाप्यन्यत् । अन्यतरत्वाघटितस्य[3] निर्वक्तुमशक्यत्वात् । अत्राद्यलक्षणे प्रागुक्तविशेषालंकारद्वितीयभेदेऽतिप्रसङ्गवारणाय क्रमेणेति । तत्र चाधेयस्य युगपदनेकाधारसंबन्धान्नातिप्रसङ्गः । द्वितीयलक्षणे वक्ष्यमाणसमुच्चयालंकारातिव्याप्तिवारणाय[4] तदिति विवेकः । उदाहरणम्—

'आयाता कमलासनस्य भवनाद्द्रष्टुं त्रिलोकीतलं
गीर्वाणेषु दिनानि कानिचिदथो नीत्वा पुनः कौतुकात् ।
भ्रान्त्वा भूवलये महाकविकुलोपास्या तवास्याम्बुजे
राजन्संप्रति सत्यधामनि गिरां देवी सुखं वर्तते ॥'

---

स्थाने युक्तः । **नव्या इति** । वस्तुतस्तु यथासंख्यसूत्रबलात्पाणिनीयप्रयोगे पार्ष्ठिकतयान्वयबोधे द्वन्द्वादेः साधुत्वेऽपि नान्यत्र साधुत्वम् । किं तु समुदितान्वयबोधमात्र एवेति तदभिप्रायकास्ते प्रयोगा असाधव एव । अलंकारस्तु द्वितीयरीत्या व्यस्ते चरितार्थ इति बोध्यम् ॥ इति रसगङ्गाधरमर्मप्रकाशे यथासंख्यप्रकरणम् ॥

प्राग्वदाह—**अथेति** ।

---

१ एकमाधेयं क्रमेण अनेकेष्वधिकरणेषु स्यात्स प्रथमः, एकस्मिन्नधिकरणे क्रमेण अनेकान्याधेयानि इति द्वितीयपर्याय इत्याशयः ।

२ अर्थात् परि उपसर्गपूर्वात् 'इण्'धातोः घञ्प्रत्ययविधौ निमित्तम् अनुपात्ययः (क्रमप्राप्तस्य अनतिक्रमणम्) । तथा च योगार्थमात्रे पर्यायलक्षणे स्वीकृते क्रमप्राप्ते सर्वत्रापि पर्यायत्वं प्रसज्येतेत्यर्थः ।

३ अन्यतरस्य (अनेकेषु एकमाधेयं पर्याय इत्यादेः) पर्यायत्वं तु न वक्तुं शक्यम्, तदितोऽपरस्य (एकस्मिन्नधिकरणे क्रमादनेकाधेयानि इत्यादेः) अपि पर्यायस्य रात्स्यादित्याशयः ।

४ अर्थात् क्रमेणेति । समुच्चये हि युगपदेव एकस्मिन्ननेकक्रियादयो भवन्ति ।

अत्र प्रथमचरणगतमधिकरणमार्थम् । विश्लेषावधिपञ्चम्यां विश्लेषस्यो-पश्लेषमन्तरेणासिद्ध्या औपश्लेषिकाधिकरणस्याक्षेपगम्यत्वात्[1] । कमलासनस्य भवने स्थित्वा आयातेति ल्यब्लोपपञ्चम्यामपि ल्यबन्तार्थक्रियाधिकरणे पञ्चम्या लाक्षणिकत्वादवाच्यतैव[2] । 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकस्य निरूढलक्षणासमर्पकतेति राद्धान्तात् । इतरचरणत्रयगतं तु शाब्दम् । यथा वा—

'मकरालयस्य कुक्षौ स्थित्वा सदनेऽमृताशिनां च चिरम् ।
संप्रति निर्दोषे ते राजन्वदनाम्बुजे सुधा वसति ॥'

पूर्वमवरोहः[3] इह त्वारोहः, पूर्वं पूर्वत्यागेऽरुचिबीजोपादानं चेति विशेषः। अपरः पर्यायो यथा—

'विदूरादाश्चर्यस्तिमितमथ किंचित्परिचया-
दुदञ्चचाञ्चल्यं तदनु परितः स्फोरितरुचि[4] ।
गुरूणां संघाते सपदि मयि याते समजनि
त्रपाघूर्णत्तारं नयनयुगमिन्दीवरदृशः ॥'

अत्र क्वचिदनपावृते स्थलविशेषे गुरूञ्शुश्रूषमाणायाश्चिरप्रोषितमसंभावितागमनं प्रियमकस्मादालोकितवत्याः कस्याश्चिन्नयनयुगरूप एकस्मिन्नधिकरणे विशेषणीभूतानां स्तिमितत्वादीनामाधेयानां युगपदसंभवात्कारणक्रमवशाच्च क्रमिकत्वम् । यथा वा—

१ विश्लेषस्य योऽवधिः (भवनमिति) तस्मात्कृताया पञ्चम्यां 'विभागः संयोगं विना नोपपद्यते' इति 'पूर्वं कमलासनस्य भवने आसीत्' इति भवनरूपः औपश्लेषिक आधारः अर्थबलाल्लभ्य इत्यर्थः ।

२ ननु भवनादिति नापादाने पञ्चमी येन विभागात्संयोग आक्षिप्येत, अपि तु ल्यब्लोपपञ्चमी । तथापि अधिकरणस्य आर्थत्वम् अथाद् वाच्यत्वाभावमाह । अयं भावः—ल्यब्लोपे इति वार्तिकं "-'भवनात्' इत्यादिपञ्चम्याः 'भवने स्थित्वा', कर्मणि तु 'भवनं दृष्ट्वा' इत्याद्यर्थे लक्षणा" इत्यर्थबोधकं, न पञ्चमीविधायकम् । तथा च भवने इत्याधारार्थस्य लक्षणयैव लाभ इत्यवाच्यत्वमेव तस्य ।

३ अवरोहः उपरितो नीचैरागमनम् । आरोहो नीचैस्तः उपरिगमनम् । अरुचिस्तु—क्रूरा मकराः सन्तीति तत्त्यागोत्तरं देवानां समीपे आगमनम्। तेपि अमृताशिन इति स्वस्य अशनेन समापनमेव स्यादिति भयान्निर्दोषे मुखे आगमनम् ।

४ प्रसारिता रुचिः कान्तिर्यस्य तत्, विकासितमिति यावत् ।

'प्रथमं श्रितकञ्जकोरकाभावथ शोभामनुभूय कन्दुकानाम् ।
अधुना श्रयितुं कुचौ यतेते दयिते ते करिशावकुम्भलीलाम् ॥'

अत्रापि कुचत्वेनैकीकृते कुचरूपेऽधिकरणे परिमाणविशेषाणाम् । यदि च कुचयोः पूर्वपूर्वस्वरूपापेक्षया उत्तरोत्तरस्वरूपस्योत्कर्षः प्रतीयते तदा एकविषयः सारोऽप्यस्तु, विषयभेदाच्च न बाध्यबाधकभावः । यत्तु—

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।
अधुना मृगशावाक्षि हृदयेऽप्येष दृश्यते ॥'

इति कुवलयानन्दकृता विकासपर्यायो निजगदे, तच्चिन्त्यम् । एकसंबन्धनाशोत्तरमपरसंबन्धे सत्येव पर्यायपदस्य लोके प्रयोगात्, 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः' इति काव्यप्रकाशोदाहृते, 'प्रागर्णवस्य हृदये—' इत्यादिसर्वस्वकारोदाहृते च तथैव दृष्टत्वाच्च अस्मिन्नलंकारलक्षणेऽपि क्रमपदेन तादृशविवक्षाया औचित्यात् । तस्मादत्रैकविषयः सारालंकार उचितः, यं रत्नाकरादयो वर्धमानकालंकारमामनन्ति स चायुष्मता नोट्टङ्कित एव । इदं तु बोध्यम्—

'प्रथमं चुम्बितचरणा जङ्घाजानूरुनाभिहृदयानि ।
आश्लिष्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥'

अत्र न तावत्पर्यायः, उत्तरोत्तरसंबन्धस्य पूर्वपूर्वत्यागपूर्वकत्वाविवक्षणात् । यतोऽत्र मुखविषयकभावनायाः सर्वाङ्गविषयकत्वं वक्तुरभिप्रेतम्, न तु मुखमात्रविषयकत्वम् । अत एव खेलत्वित्युक्तम्, न तु मज्जत्विति । तथा—

पूर्वं नयनयोर्लग्ना ततो मग्ना मनस्यभूत् ।
अथ मैव प्रियस्यासीत्सर्ववेदनगोचरा ॥'

इत्यत्रापि । नापि सारः, उत्तरोत्तरस्योत्कर्षापकर्षयोरभावात् । तस्मादेवमादौ शुद्धक्रमालंकारोऽतिरिक्त इत्यप्याहुः ।

वस्तुतो द्वित्वादाह—**कुचत्वेनेति** । विशेषणानामुक्तरीत्या क्रमिकत्वमिति शेषः । **सारालंकार उचित इति** । अत्रेदं चिन्त्यम्—भेदप्रतीतौ सत्यामेव सार इत्यस्य प्राचीनसंमतत्वेन तदभावात् । अत्र हि रागयोः श्लेषेणाभेदाध्यवसायात् । वर्धमानकरूपालंकारान्तरस्वीकारापेक्षया पर्यायपदार्थस्य साधारण्यमाश्रित्यानेन संग्रहस्यैवोचितत्वाच्च । अत एव प्रकाशकृतापीदं पद्यं पर्याय उदाहृतम् । इत्य-

इहान्यदप्यवधेयम्—यत्राधाराधेयतत्संबन्धक्रमेषु क्वचिदपि कविकल्पनापेक्षा तत्रैवायमलंकारः । यत्र तु सर्वांशे लोकसिद्धत्वं न तत्र कश्चिदलंकारः । अत एव 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्' इति काव्यप्रकाशकृता, 'प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम्' इति सर्वस्वकृता च निदर्शितम् । अत्रोभयत्राप्याधारभेदाद्भिन्न आधेयः कविना एकताध्यवसानेनैकीकृतः । अस्मदुक्तोदाहरणेषु तु क्रमोऽपि कल्पितः । नहि ब्रह्मलोकस्थया देवतया, पयोधिस्थया सुधया च, वाचो वाङ्माधुर्यस्य चाभेदो लोकसिद्धस्तादृशः क्रमो वा । एवं स्थिते 'अधुना पुलिनं तत्र यत्र स्रोतः पुराभवत्' इति कुवलयानन्दगतमुदाहरणं 'यत्र पूर्वं घटस्तत्राधुना पटः' इति वाक्यवल्लौकिकोक्तिमात्रमित्यनुदाहार्यमेव ।

इति रसगङ्गाधरे पर्यायप्रकरणम् ।

---

अथ परिवृत्तिः—

**परकीययत्किंचिद्वस्त्वादानविशिष्टं परस्मै स्वकीययत्किंचिद्वस्तुसमर्पणं परिवृत्तिः ॥**

क्रय इति यावत् । सा च तावद्द्विविधा—समपरिवृत्तिर्विषमपरिवृत्तिश्चेति । समपरिवृत्तिरपि द्विविधा—उत्तमैरुत्तमानां न्यूनैर्न्यूनानां चेति । विषमपरिवृत्तिरपि तथा—उत्तमैर्न्यूनानां न्यूनैरुत्तमानां चेति । क्रमेणोदाहरणानि—

'अङ्गानि दत्त्वा हेमाङ्गि प्राणान्क्रीणासि चेन्नृणाम् ।
युक्तमेतन्न तु पुनर्लोचनाम्बुरुहद्वयम् ॥'

अत्र पूर्वार्ध एव समपरिवृत्तिः, उत्तरार्धे तु विषमैव ।

---

**आपि** । नोक्तरीत्या पर्याय इति शेषः । **लौकिकोक्तिमात्रमिति** । अत्रेदं चिन्त्यम्—गभीरजलस्य स्रोतस्त्वेनाल्पजलविद्यमानतायां सुशकगमनत्वेन कविना पुलिनत्वारोपे उदाहरणत्वं सम्यगेव ॥ इति रसगङ्गाधरमर्मप्रकाशे पर्यायप्रकरणम् ॥

प्राग्वदाह—**अथेति** । तथा द्विधा ।

---

१ चरणस्था तरलगतिः ( शीघ्रपदविन्यासः ) भिन्ना, लोचनयोस्तरलत्वम् ( अधीरत्वम् ) च भिन्नं तथापि एवमादीनामेकत्वाध्यवसानमित्याशयः ।

'अस्थिमालामयीं दत्त्वा मुण्डमालामयीं तनुम् ।
गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन ॥'
'गरिमाणमर्पयित्वा लघिमानं कुचयुगात्कुरङ्गदृशाम् ।
स्वीकुर्वते नमस्ते यूनां धैर्याय निर्विवेकाय ॥'
'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः ।
सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्वरम् ॥'

एषु दानादानव्यवहारः कविकल्पित एव, न तु वास्तवः । यत्र वास्तवस्तत्र नालंकारः । यथा—'क्रीणन्ति प्रविकचलोचनाः समन्तान्मुक्ताभिर्बदरफलानि यत्र बालाः ।'

इदं चापरं बोध्यम्—अत्र परस्मै स्वकीययत्किंचिद्वस्तुसमर्पणमित्येतावत्पर्यन्तं लक्षणे विवक्षितम्, न तु स्वकीययत्किंचिद्वस्तुत्यागमात्रम् । 'किशोरभावं परिहाय रामा बभार कामानुगुणां प्रणालीम्' इत्यत्रातिव्याप्त्यापत्तेः । न चेदं लक्ष्यमेवेति वाच्यम् । पूर्वावस्थात्यागपूर्वकमुत्तरावस्थाग्रहणस्य वास्तवत्वेनानलंकारत्वात् । एवं स्थिते 'विनिमयोऽत्र किंचित्त्यक्त्वा कस्यचिदादानम्' इत्यलंकारसर्वस्वकृता यल्लक्षणं परिवृत्तेः कृतम्, यच्च 'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्' इत्युदाहृतम्, तदुभयमप्यसदेव ।

इति रसगङ्गाधरे परिवृत्तिप्रकरणम् ।

---

बिम्बफलं तत्सदृशम् । प्रविकचेति । प्रविकसितेत्यर्थः । प्रणाली मार्गः । यौवनोद्गमरूपा ॥ इति रसगङ्गाधरमर्मप्रकाशे परिवृत्तिप्रकरणम् ॥

१ त्वत्पुरं काशी ।

२ कर्मणः शेषत्वे षष्ठी ।

३ अधरम् ( अपकृष्टम् ) समर्प्य सुरसानि फलानि, अथवा अधरम् नास्ति धरा यत्र तादृग् दत्त्वा सुष्ठु रसा ( भूमिः ) यत्र तादृशानि पुण्यफलानि हरन्तीति न्यूनैरुत्तमानां परिवृत्तिः ।

४ अर्थात् स्वकीययत्किञ्चिद्वस्तुत्यागोत्तरं परस्मै स्वकीययत्किञ्चिद्वस्तुसमर्पणे सत्येव परिवृत्तिः ।

५ अत्र परस्मै न दानं न परस्मादानम् ।

अथ परिसंख्या—

**सामान्यतः प्राप्तस्यार्थस्य कस्माचिद्विशेषाद्व्यावृत्तिः परिसंख्या ॥**

नियमोऽप्यस्मिन्दर्शने निरुक्तलक्षणाक्रान्तत्वात्परिसंख्यैव । पाक्षिकप्राप्ति–युगपत्प्राप्तिरूपस्यावान्तरविशेषस्याविवक्षणात् । अत एव वैयाकरणानां मते परिसंख्यापि नियमशब्देनोच्यते । तथा हि—'कृत्तद्धितसमासाश्च' इत्यत्र समासग्रहणं नियमार्थमिति हि तेषां सिद्धान्तः । तत्र हि समासे पाक्षिक्याः प्रातिपदिकसंज्ञायाः प्राप्तेरभावात्कथं नाम पराभिमतो नियम उपपद्यते । युगपद्धि समास–समासेतरपदसंघातयोः 'अर्थवत्'–सूत्रं प्राप्तमिति परिसंख्या भवितुमर्हति । पूर्वतन्त्रे तु नियमपरिसंख्ययोर्भेदेन परिभाषणम् । यदाहुः—

'विधिरत्यन्तमप्राप्ते, नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥'

---

प्राग्वदाह—**अथेति** । न्यूनतां निराचष्टे—**नियमोऽपीति** । अस्मिन्नलंकारशास्त्रे । पूर्वतन्त्रे पूर्वमीमांसायाम् । यदाहुर्वार्तिककाराः ।

---

१ आरम्भतः प्रघट्टकस्यास्येदं विशदीकरणम्—सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषात् ( अर्थात् कंचिद्विशेषं हेतूकृत्य, तद्विशेषात् ) व्यावृत्तिः ( निषेधः ) परिसंख्या, इति लक्षणव्याप्तत्वान्नियमस्यापि 'परिसंख्या'न्तर्भुक्तत्वमेवेति पृथक् नियमालंकाराऽप्रदर्शनकृतं न्यूनत्वं नाऽऽशङ्कनीयम् । ननु द्वयोः कथमैक्यम् ? पाक्षिकप्राप्तौ नियमः, युगपत्प्राप्तौ परिसंख्या, इति पूर्वमीमांसादर्शनम् । तत्रोच्यते—अवान्तरो विशेषो नात्र विवक्षितः । अस्माकमेव न, वैयाकरणानामपि मते नियम–परिसंख्ययोर्न भेदः । यतो हि कृत्तद्धितेतिसूत्रे समासग्रहणं नियमार्थम् । अयमाशयः—राजपुरुष इति समुदायस्य अर्थवत्त्वात् धातु–प्रत्यय–प्रत्ययान्तभिन्नत्वाच्च अर्थवत्सूत्रेणैव प्रातिपदिकत्वे सिद्धे नियमार्थं समासग्रहणम्—'यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव' । अत एव राज्ञः पुरुष इति वाक्यस्य अर्थवत्त्वेन प्राप्तावपि समासस्यैवेति नियमात्प्रातिपदिकत्वं नेत्यर्थः । यदि तु मीमांसावत् पाक्षिकप्राप्तौ ( 'नियमः पाक्षिके सति' ) एव नियमत्वं स्यात्तर्हि समासे प्रातिपदिकसंज्ञाया न वैकल्पिकी ( पाक्षिकी ) प्राप्तिः, ततः कथं समासग्रहणस्य नियमत्वं व्यपदिश्येत । अस्माकमिव वैयाकरणानामपि तन्त्रे नियमपरिसंख्ययोरैक्ये तु राजपुरुष इति समासे, राज्ञः पुरुष इति वाक्ये च सामान्यतः प्राप्तस्य अर्थवदिति प्रातिपदिकसंज्ञारूपस्यार्थस्य समासग्रहणरूपाद्विशेषाद् व्यावृत्तिः क्रियते, अत एव सोयं नियमोपि परिसंख्या ।

विधिः—'स्वर्गकामो यजेत' इत्यादिः । यागादेः प्रकारान्तरेणाप्राप्तेः । नियमः—'व्रीहीनवहन्ति, समे देशे यजेत' इत्यादिः । पुरोडाशनिर्माणफलोपधायकतावच्छेदककोटिप्रविष्टाया वितुषतायाः संपादकत्वेनावहननस्य प्राप्तेर्नखविदलनसमवधानकालावृत्तित्वेन, यागाधिकरणतया समदेशप्राप्तेर्विषमदेशसमवधानकालावृत्तित्वेन, च पाक्षिकत्वात् । परिसंख्या—'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते', 'पञ्च पञ्चनखा भक्ष्याः' इत्यादिः । रशनाग्रहणलिङ्गेनाश्वाभिधानीगर्दभाभिधान्योरादानस्य युगपत्प्राप्तत्वात् इत्यलमप्रकृतचिन्तया ।

इयं च तावद्द्विविधा—शुद्धा प्रश्नपूर्विका च । द्विविधाप्यार्थी शाब्दी चेति चतुर्विधा । यथा—

'सेवायां यदि साभिलाषमसि रे लक्ष्मीपतिः सेव्यतां
चिन्तायामसि सस्पृहं यदि चिरं चक्रायुधश्चिन्त्यताम् ।
आलापं यदि काङ्क्षसे मधुरिपोर्गाथा तदालप्यतां
स्वापं वाञ्छसि चेन्निरर्गलसुखे चेतः सखे सुप्यताम् ॥'

अत्र यदिघटितवाक्यैर्निवेदितस्य रागप्राप्तस्य सेवादेः कर्मतायाः परमेश्वरे विषयान्तरे च प्राप्तत्वेन लोडर्थघटितवाक्यार्थवैयर्थ्यप्रसङ्गाद्विषयान्तरं न सेव्यतामित्यादिरूपा विषयान्तरे तत्तत्क्रियाकर्मत्वव्यावृत्तिस्तात्पर्यविषयतया कल्प्यमानत्वादार्थी शुद्धा च ।

---

द्वितीये आह—**यागेति** ।

१ अवहननेनापि वितुषता संपद्यते नखविदलनेनापि । 'व्रीहीनवहन्ति' इत्युक्त्या अवहननस्य प्राप्तिः, नखविदलनस्यापि यदा समवधानं तदा तस्या अवृत्तितया पाक्षिकत्वम् । एवं समे देशे इत्यत्रापि बोध्यम् ।

२ अयं भावः—सेवनकर्मता रागप्राप्ता (यतो हि संसारे वर्तमानेन निसर्गतः किञ्चिदासेव्यते एव)। एवं च सेवनकर्मत्वं सामान्यतो लक्ष्मीपतावपि प्राप्तमेव । पुनः 'लक्ष्मीपतिः सेव्यताम्' इति लोटा विधानं किंफलकम् ? ततश्च–तद्वैयर्थ्यनिवारणरूपाद्विशेषात् सामान्यतः प्राप्तस्य विषयादीनां सेवनकर्मत्वस्य व्यावृत्तिः क्रियते, इति परिसंख्या । एवं द्वितीयचरणादिष्वपि संगमनीयम् । लक्ष्मीपतिः सेव्यतामित्यनेन विषयान्तरं न सेव्यतामित्यर्थतो बुध्यते, न मुखतः प्रोच्यते । तथा च सा व्यावृत्तिरार्थी । प्रश्नपूर्वकत्वाभावात् शुद्धा । इत्याशयः ।

'किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः
किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः।
किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे
कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः॥'

अत्र हरिपादभजनादिकमेव तीर्थादिकं नान्यदित्यर्थस्तात्पर्यमर्यादया प्रतीयत इत्यार्थी प्रश्नपूर्विका च।

तीर्थं गङ्गा तदितरदपां निर्मलं संघमात्रं
देवौ[1] तस्याः प्रसवनिलयौ नाकिनोऽन्ये वराकाः।
सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्य-
त्तां यो नित्यं नमति स बुधो बोधशून्यस्ततोऽन्यः॥'

अत्र मात्रादिपदैस्तीर्थत्वादिव्यावृत्तिः[2] प्रतीयत इति शाब्दी शुद्धा।

'किं मित्रमन्ते सुकृतं न लोकाः किं ध्येयमीशस्य पदं न तोकाः।
किं काम्यमव्याजसुखं न भोगाः किं जल्पनीयं हरिनाम नान्यत्॥'

अत्र शाब्दी प्रश्नपूर्विका चेति प्राचां मतम्। अन्ये तु 'व्यावृत्तेरार्थत्व एव परिसंख्यालंकारः, अन्यथा तु शुद्धा परिसंख्यैव। यथा हेतुत्वस्यार्थत्व एव हेत्वलंकारः, अन्यथा हेतुमात्रम्। अतो भेदद्वयमेवास्याः' इत्याहुः।

अपरे तु "व्यावृत्तेरार्थत्वेऽपि नालंकारत्वम्। 'पञ्च पञ्चनखा[3] भक्ष्याः,

---

एवं सति पूर्वविरोधं परिहरति—**प्राचीनेति**॥ इति रसगङ्गाधरमर्मप्रकाशे परिसंख्याप्रकरणम्॥

---

१ तस्याः (गङ्गायाः) यौ प्रसव-स्थानभूतौ तावेव देवौ। अन्ये नाकिनो देवाः वराकाः दीनाः।

२ 'अपां संघमात्रम्' इति मात्रपदेन 'इतरत् तीर्थं न' इति व्यावृत्तिर्बोध्यते। एवम् 'अन्ये वराकाः' इत्यनेन 'अन्ये देवा न' इति व्यावृत्तिः प्रतीयते। ततश्च शब्दबोध्यत्वात्सेयं शाब्दी। अप्रश्नपूर्वकत्वात् शुद्धा।

३ पञ्चनखाः पञ्च (शशकी शल्लकी गोधादयः) भक्ष्याः, इत्यनेन 'अन्ये पञ्चनखा न भक्ष्याः इति व्यावृत्तिः प्रतीयते इति अत्रापि परिसंख्यालंकारः स्यात्।

समे यजेत, रात्रसत्य' इत्यादावपि तदापत्तेः । किं तु कविप्रतिभानिर्मिता या तादृशव्यावृत्तिस्तस्याः । यथा—'यस्मिन्शासति वसुमतीपाकशासने महानसेषु संतापः, शरधिहृदयेषु सशल्यता, मञ्जीरेषु मौखर्यम्, भेरीषु ताडनम्, कामिनीनां कुन्तलेषु कौटिल्यम्, गतिषु मान्द्यम्' इत्यादौ । अत्र हि प्रथमान्तार्थः[2] कविप्रतिभया एकीकृत इति तद्द्वारा तत्प्रतियोगिकव्यावृत्तिर्निर्मिता । एवं च 'सेवायां यदि साभिलाषमसि' इत्यत्र नान्यः सेव्य इत्यर्थस्य प्रतीतेः परिसंख्यास्तु, न तु परिसंख्यालंकारः । व्यावृत्तेर्वास्तवत्वेन कविप्रतिभानपेक्षणात् । 'किं तीर्थं हरिपादपद्मभजनम्' इत्यत्र तु प्रश्नपूर्वकं दृढारोपरूपकम् । अन्यथा 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' इत्यत्रापि परिसंख्यापत्तेः । 'किं शास्त्रं' इत्यंशे तु परिसंख्यामात्रम् । 'तीर्थं गङ्गा तदितरदपां निर्मलं संघमात्रम्' इत्यत्रापि परिसंख्यैव शुद्धा । प्रागुक्ताद्धेतोरनार्थत्वात्[3] । तस्मात् 'महानसेषु संतापः' इत्यादिकमेवास्या उदाहरणम्" इत्याहुः ।

इति रसगङ्गाधरे परिसंख्याप्रकरणम् ।

---

अथार्थापत्तिः—

**केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिः ॥**

न्यायश्च कारणम् । सा च प्रकृतेन प्रकृतस्य, अप्रकृतेनाप्रकृतस्य, प्रकृतेनाप्रकृतस्य, अप्रकृतेन प्रकृतस्येति तावच्चतुर्भेदा प्रत्येकमर्थान्तरस्य साम्यन्यूनाधिक्यैर्द्वादशविधा । ततो भावत्वाभावत्वाभ्यां चतुर्विंशतिभेदा । दिङ्मात्रेणोदाह्रियते—

'लीलालुण्ठितशारदापुरधियामस्मादृशानां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेद्बालिशाः ।

---

प्राग्वदाह—**अथेति** ।

---

१ आर्थत्व एवालंकारत्वमिति पूर्वानुषङ्गः ।

२ महानसे तापः पृथक्, मनःसु च तापोऽन्यः, इति द्वयोः पार्थक्येऽपि अभेदाध्यवसानेन एकीकरणादतिशयकृतश्चमत्कारः । महानसे तापः इत्यनेन मनःसु न ताप इति बोधादार्थी व्यावृत्तिः ।

३ हेतुत्वस्य आर्थत्वे यथा हेत्वलंकारस्तथा व्यावृत्तेरार्थत्व एव परिसंख्या, अत्र तु शब्दतः प्रोक्तिरित्यर्थः ।

४ आपतनम् उपस्थितिरिति यावत् ।

अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः
सिंहानां च सुखेन मूर्धनि पदं धास्यन्ति शालावृकाः ॥'

अत्र प्रकृतेनाप्रकृतस्यापाद्यमानस्य साम्यं मालारूपता च ।

'यदि ते चरणाम्बुजं हृदा वहतो मे न हतो विपद्गणः ।
अथ चण्डकरेण मण्डिते दिनमध्येऽपि जितं तमोगणैः ॥'

अत्र न हत इति विद्यमानतारूपात्प्रकृतार्थाज्जितमित्यापाद्यमानस्याप्रकृतार्थस्य सर्वोत्कर्षेण वर्तनरूपस्याधिक्यम् । न चात्र विपद्गणस्यावस्थानमात्रेण तमोगणानामवस्थानमापादयितुमुचितम्, न तु जयः अनानुरूप्यात्, इति शङ्क्यम् । भगवच्चरणसंनिधाने यद्येकस्य विपद्गणस्य स्वास्थ्यं तदा समुचित एव बहूनां तमोगणानां सूर्यसंनिधाने जय इति न दोषः ।

'सदैव स्नेहार्द्रे सुरतटिनि निष्किञ्चनजने
यदि त्वं नाधत्से सुरभिरिव वत्से मयि कृपाम् ।
तदा चिन्तारत्नत्रिदशपतिभूमीरुहमुखा
ददीरन्नर्थिभ्यः किमिति कणभिक्षामपि जडाः ॥'

अत्राभावेनाभावापादनम् । स्नेहार्द्रजाह्नवीरूपप्रकृतार्थापेक्षया चिन्तारत्नादीनां जडत्वेन न्यूनत्वं चैतेष्वापाद्यमानमप्रकृतम् ।

'मामनुरक्तां हित्वा यदि राजन्पुरुषसिंह यातोऽसि ।
मुक्त्वा वनमिदमेष्यति वनलक्ष्मीमत्र किं चित्रम् ॥'

---

१ असाधारणधियामग्रे बालिशानां चापल्यं यदि भवति तर्हि फणिनामग्रे पक्षिशावकानामपि चापल्यमग्रे भविष्यतीति प्रकृतेन बुद्धिमद्वृत्तान्तेन अप्रकृतस्य फण्यादिवृत्तान्तस्य उपस्थितिरिति अर्थापत्तिः । असामान्यबुद्धीनामग्रे मूर्खाणां चापल्यं फणिनामग्रे विहगशिशूनामिवेति द्वयोः साम्यम् । अप्रकृतानि बहूनि निर्दिष्टानि (फणि-शकुन्तौ, दन्तावल-शशौ, सिंह-शृगालौ) इति मालारूपतेत्यर्थः ।

२ अयं भावः—प्रकृते तु 'न हतः' अर्थात् विद्यमान एवेति विद्यमानत्वमात्रं प्रतिपाद्यते, आपाद्यमाने (तुल्यन्यायत्वादूह्यमाने) अप्रकृते तु 'जितम्' इत्युच्यते । अत एव अप्रकृते आधिक्यमित्यर्थः ।

३ चिन्तामणि-कल्पवृक्षादयः ।

४ इदं वनम् (कर्तृ) वनलक्ष्मीं त्यक्त्वा एष्यति गमिष्यति इत्यर्थः ।

इयं राज्ञा नलेन मुक्ताया अरण्ये दमयन्त्या ध्यानोपनीतं तमेव प्रत्युक्तिः । अत्रापाद्यमानो वनवृत्तान्तोऽपि संनिहितत्वात्प्रकृत एवेति द्वयमपि प्रकृतम् । पुरुषसिंहापेक्षया वनस्य नपुंसकत्वान्न्यूनत्वम् । अत एव किं चित्रमित्युक्तम् ।

'उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥'

अत्राप्रकृतेन ब्रह्माण्डादनेन समस्तभूतानामनित्यत्वं कैमुतिकन्यायेन प्रकृतं प्रतिपाद्यते ।

'न भवानिह मे लक्ष्यः क्षत्रवर्णविलोपिनः ।
के वा विटपिनो राम कुलाचलभिदः पवेः ॥'

रामं प्रति जामदग्न्यस्येयमुक्तिः । अत्र प्रतिवस्तूपमा महावाक्यार्थः । तस्याश्च दलद्वयमुपमेयवाक्यार्थ उपमानवाक्यार्थश्च । तत्रोपमेयवाक्यार्थगतायामर्थापत्तावापाद्यमानस्तन्निमित्तभूतश्चेत्युभावप्यर्थौ प्रकृतौ । उपमानवाक्यार्थगतायां त्वप्रकृताविति । अनया दिशान्यदप्यूह्यम् ।

अत्र विचार्यते—नेयं वाक्यवित्संमतायामर्थापत्तौ निविशते । आपादकस्यार्थस्यापतितमर्थं विनानुपपत्तेरत्राभावात् । नाप्यनुमाने । आपततोऽर्थस्यापादकासमानाधिकरणत्वेन व्याप्यत्व-पक्षधर्मत्वयोर्दूरापास्तत्वात् । न

तत्र अर्थापत्त्यलंकारे ।

१ ब्रह्माण्डानाम् अदनेन भक्षणेन ।

२ 'क्षत्रलोपिनो मे भवान् न लक्ष्यः' इति प्रकृतवाक्यार्थः 'अचलभेदकस्य वज्रस्याग्रे वृक्षः किम्' इत्यप्रकृतवाक्यार्थः । अकिञ्चिद्गणनीयत्वरूपस्य एकस्यैव धर्मस्य भिन्नशब्दाभ्यां प्रतिपादनाद्वस्तुप्रतिवस्तुभावः, द्वयोश्च आर्थमौपम्यमिति प्रतिवस्तूपमा महावाक्यार्थरूपेत्याशयः ।

३ क्षत्रवर्णस्य विलोपेन भवतोपि विलोपः स्यादित्यर्थ आपाद्यते । अत्र आपाद्यमानो रामविलोपरूपोऽर्थः, तन्निमित्तभूतश्च क्षत्रविलोपरूपः एतौ द्वावपि जामदग्न्योक्तौ प्रकृतौ । अचलभेदेन वृक्षभेदनमापाद्यते इति उपमानगता अर्थापत्तिरिति बोध्यम् ।

४ यथा रात्रिभोजनं विना पीनत्वस्याऽनुपपत्तिः ।

५ साध्यमानो वह्निः साधकस्य धूमस्य सहचरित एव ( यत्र धूमस्तत्र वह्निः ) उपलभ्यते । अत्र तु आपतन् ( आपाद्यमानः ) अर्थः आपादकस्य असमानाधिकरणो भवतीति नानुमानमित्यर्थः ।

च येन कारणेनैकार्थसिद्धिस्तेनैव लिङ्गेनापरार्थानुमानमिति वाच्यम्। अर्थान्तरसिद्धेरनुमित्यात्मकताविरहात्। यतोऽयमर्थोऽपि भवितुमर्हतीति बुद्धेराकारः, न तु भवत्येवेति। नापि यद्यर्थातिशयोक्तौ। तस्या विपरीतार्थ एव द्वयोर्विश्रान्तेः। न चेह तथा, आपादकस्य सिद्धत्वादापततश्च संभाव्यमानत्वाद्यथाश्रुत एव विश्रान्तेः। तस्माद्येन न्यायेनैकोऽर्थः सिद्धस्तेनैव न्यायेनापरोऽप्यर्थः सेद्धुमर्हतीत्येवंरूपेयमर्थापत्तिः। अस्यां चार्थान्तरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तदालंकारत्वम्। यथा 'फणिनां शकुन्तशिशवः' इत्यादौ। अन्यथा तु कैमुतिकन्यायतामात्रम्। यथा 'उदुम्बरफलानीव' इत्यादौ। प्राचीनरीत्या तु प्रागिदमुदाहृतमस्माभिः। अत एव तत्र कैमुतिकन्यायेनेत्युक्तम्। एवं च 'कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः', 'अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी' इत्यादि सर्वस्वकृता यदुदाहृतं तन्नातीव हृदयंगमम्।

यत्तु—'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति कुवलयानन्दकृता अस्या लक्षणं निर्मितं, तदसत्। कैमुतिकन्यायस्य न्यूनार्थविषयत्वेनाधिकार्थापत्तावव्याप्तेः। यथा—

'तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम्।
शनैः सवितुरप्यग्रे तमः स्थास्यत्यसंशयम्॥'

---

१ यथा कंचिदर्थं कारणीकृत्य कश्चिदर्थः साध्यते (आपाद्यते) तथा लिङ्गीकृतेन तेन अन्योऽर्थोऽनुमीयतेऽपि। अर्थात् एकेन अर्थेन अर्थापादनं अनुमानं च स्यादितिशङ्का। एवमर्थसिद्धिः (अर्थापत्तिः) नानुमितिरूपा। यतो हि अर्थापत्तिरूपाया बुद्धेः 'अयमर्थोऽपि भवितुमर्हति' इत्याकारः। अनुमितेस्तु 'भवत्येव' इति निश्चयपर्यवसायी आकार इति न द्वयोरैक्यमिति समाधानम्।

२ मम्मटादिसंमता यातिशयोक्तिस्तस्यां द्वयोः (प्रकृताप्रकृतयोः) उक्तविपरीतेऽर्थे एव विश्रान्तिः, यथा—'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥' अत्र चन्द्रस्य अकलङ्कं वपुर्न भवति, अत एव तदानुगुण्येन मुखं साम्यपराभवं नाप्नोति इत्येव कवेस्तात्पर्यम्।

३ नतु अनुमितिरूपा, तस्या भवत्येवेति निश्चयात्मकत्वात्।

४ कैमुतिकन्यायसिद्धत्वेन कविप्रतिभाकल्पितत्वाभावादित्यर्थः।

अत्र शनैःशब्दमहिम्ना राजाग्रे दारिद्र्यस्थित्यपेक्षया सूर्याग्रे तमोऽवस्थानं दुःशकमेवेत्यवगतमपि न्यायसाम्या[1]दापाद्यते, न तु कैमुतिकन्यायेनेति ।

इति रसगङ्गाधरेऽर्थापत्तिप्रकरणम् ।

अथ विकल्पः—

**विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः ॥**

एकस्मिन्धर्मिणि स्वस्वप्रापकप्रमाणप्राप्तयोरत एव तुल्यबलयोर्विरुद्धयोर्विरुद्धत्वादेव युगपत्प्राप्तेरसंभवात्पाक्षिक्येव प्राप्तिः पर्यवसन्ना । अयं च समुच्चयस्य प्रतिपक्षभूतो व्यतिरेक इवोपमायाः । अत्र च विकल्प्यमानयोरौपम्यमलंकारताबीजम्, तदादायैव चमत्कारस्योल्लासात् । अन्यथा तु विकल्पतामात्रम् । यथा 'जीवनं मरणं वास्तु नैव धर्मं त्यजाम्यहम्' इत्यादौ । अत्र जीवनमरणयोर्नौपम्यस्य प्रतीतिः । उदाहरणम्—

'प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् ।
यमं भजस्व रामं वा यथेच्छसि तथाचर ॥'

**न तु कैमुतिकन्यायेनेति** । अत्रेदं चिन्त्यते—तवाग्रे यदीत्यत्र वक्ष्यमाणसंभावनायद्यर्थातिशयोक्तिर्वालंकारः । न च यद्यर्थातिशयोक्तावापाद्यापादकयोर्विपरीतार्थविश्रान्तत्वम् । इह त्वापादकस्य सिद्धत्वादापाद्यस्य संभाव्यमानत्वमिति विशेष इति वाच्यम् । न्यूनत्वाधिक्यादिभिरर्थापत्तिभेदस्य त्वया कल्पनवत्तस्या एव तथाविधभेदस्य कल्पने क्षत्यभावात् । न च कैमुत्येन सिद्धिरपि तद्भेद एवास्तु । प्राचामनुरोधेन भिन्नतयोक्तेः । [ न च ] कैमुत्यकृतश्चमत्कारोऽपि तद्भेदकताया एव साधकोऽस्त्विति वाच्यम् । तत्कृतचमत्कारस्यालंकारभेदजनकताया दुरपह्नवात्वेति दिक् ॥ इति रसगङ्गाधरमर्मप्रकाशेऽर्थापत्तिप्रकरणम् ॥

प्रागवदाह—**अथेति** । सा च न शाब्दीत्याह—**एकस्मिन्निति** । भजनेषु त-

---

१ अस्मल्लक्षणे 'न्यायसाम्यात्' अर्थात्कारणसाम्यादित्युक्तम् । तथा च 'तवाग्रे यदि द्विजन्मनां दारिद्र्यं स्थितं तर्हि सूर्यस्याग्रे तमोपि स्थास्यति' इत्यसंभूतमपि तवाग्रे दारिद्र्यस्थितिरूपकारणसाम्यात् आपाद्यते । कैमुतिकन्यायेन तु न्यूनमेव ( आखुभिर्यदि दण्डो भक्षितस्तर्हि कोमलानामपूपानां भक्षणं किम्, इति ) आपाद्यते न अधिकम् ।

अत्रार्पणतर्पणभजनेषु मानरक्षणप्रमाणेन[1] यथाक्रमं कर्मतया प्राणगृध्रयमानाम्, जीवनरक्षणप्रमाणेन सीताद्विजरामाणां प्राप्तानां यौगपद्यासंभवात्पर्यायेण प्राप्तिः । कर्मणोः क्रियाफलेनैव समानधर्मेणौपम्यम् । नन्वत्र यथार्पि–तर्प्यादिधात्वर्थफलरूपधर्मैक्यात्[2]कर्मणोरौपम्यं गम्यते, तथा 'जीवनं मरणं वा' इत्यादौ सत्तारूपधर्मैक्याज्जीवनमरणयोः कर्त्रोरपि तद्गन्तुं[3] युज्यत इति चेत्, युज्यते, न तु गम्यते । अथ तत्कुतो हेतोः ? कवितात्पर्यविरहादिति गृहाण । नह्यत्र मरणं जीवनं च समानमिति कवेरभिप्रेतम् । किं तु 'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्थाः' इतिवत् धर्माद्धेतोर्मरणमपि ज्यायः, न तु धर्मत्याग इति निषिद्धगतद्वेषाधिक्यम् । तदर्थं[4] च मरणस्योपात्तत्वादविवक्षिताधिकरणकतया औपम्यस्यानिष्पत्तिरेव ।

क्वचिल्लुप्तं समानधर्ममादायाप्यौपम्यस्य गम्यत्वेऽयमलंकारः । यथा भगवद्गीतासु 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' अत्र महीभोग–स्वर्गप्राप्त्योरुत्तमत्वेनौपम्यं विवक्षितम् । तथा च धात्वर्थयोरयं[5] विकल्प इत्येके । आख्यातार्थयोरित्यपरे । सर्वथैव न महीस्वर्गयोरिति स्थितम् । तयोः कारकत्वेनैव क्रियान्वयं विना विकल्पासंगतेः । न च धात्वर्थयोरेकस्य कर्तृरूपसाधारणधर्मस्योक्तत्वात्कथं लुप्तेति[6] वाच्यम् ।

---

१ यदि मानरक्षणं तेऽभीष्टं तर्हि प्राणान् अर्पय, गृध्रान् तर्पय (स्वमांसेन), यमं भजस्व । यदि जीवनरक्षणं ते प्रमाणं तर्हि सीताम् अर्पय, द्विजान् तर्पय, रामं भजस्व । प्राण-सीतयोः, गृध्र-द्विजयोः, यम-रामयोश्च अर्पयेत्यादिक्रियाकर्मभूतयोः परस्परमौपम्यम्, अत एव चमत्कारादलंकारत्वम् । अर्पण-तर्पणादिव्यापारजन्यमन्यसात्करणादिक्रियाफलं द्वयोः (प्राण-सीतयोः) मिथः समानत्वमित्यौपम्यमित्याशयः ।

२ धात्वर्थभूतं यत्फलम् (फल-व्यापारौ धात्वर्थ इति सिद्धान्तात्) तद्रूपस्य धर्मस्यैक्यात् ।

३ तत् औपम्यं गन्तुं प्रतीतिविषयीभवितुं युज्यते ।

४ अर्थात् धर्मत्यागस्य द्वेषाविषयत्वज्ञापनार्थमेव मरणस्योपादानं किन्तु 'मरणं जीवनं वा अस्तु' इति समानकोटिकतया साम्येन द्वयोरधिकरणम् (अधिकृतिः, स्वीकारः) न विवक्षितम् । (न विवक्षितम् अधिकरणं ययोस्तौ अविवक्षिताधिकरणकौ, तत्तया) ।

५ महीकर्मको भोगः, स्वर्गकर्मिका प्राप्तिश्च धात्वर्थः । महीकर्मकभोगाश्रयः स्वर्गकर्मकप्राप्त्याश्रयः इति आख्यातार्थः । स्वर्गमह्योः कर्मकारकतया कारकाणां च क्रियान्वयस्यावश्यकत्वात् क्रियान्वये सत्येव विकल्पत्वं, न तयोः केवलयोरित्याशयः ।

६ लुप्तं समानधर्ममादाय औपम्यमिति कथमुक्तम् ? इति शङ्का ।

कर्तृरूपसाधारणधर्ममादायौपम्यस्यात्र सुन्दरस्यानिष्पत्तेः। अन्यथा 'हतो वा नरकं गन्ता जित्वा वा भोक्ष्यसे महीम्' इत्यत्राप्यौपम्यप्रत्ययापत्तेः।

यत्तु—

"-'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥'

अत्र विकल्पः। उत्तमत्वाच्च तुल्यप्रमाणश्लिष्टत्वम्" इत्यलंकारसर्वस्वकृतोक्तम्। तच्चिन्त्यम्। भवार्तिशमने तनु—नेत्रद्वन्द्वयोर्द्वयोरपि युगपत्कर्तृत्वे विरोधाभावाद्विकल्पानुत्थानात्। 'विरोधे विकल्पः' इति हि तेनैवोक्तम्। न च तनुमध्ये नेत्रयोः प्रविष्टत्वात्पृथगभिधानानौचित्येऽपि यत्पृथगभिधानं तद्वक्तुस्तनु—नेत्रद्वन्द्वयोर्विरोधमभिप्रेतं गमयतीति वाच्यम्। वास्तवस्यैव विरोधस्य विकल्पोत्थापकत्वेन वैवक्षिकस्याप्रयोजकत्वात्[1]। विकल्पस्यात्रासुन्दरत्वाच्च[2]। वस्तुतस्तु 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादाविवात्रापि श्लेषमूलोपमैवालंकारः। तनुर्वेति तनुरिवेत्यर्थः। 'वा स्याद्विकल्पोपमयोः' इति वाशब्दस्येवार्थकत्वाभिधानात्। न च लिङ्गवचनभेद उपमायां दोष इति वाच्यम्। साधारणधर्मस्योपमानसामानाधिकरण्ये उपमेयसामानाधिकरण्ये च यत्र वैरूप्यं तत्रैव लिङ्गवचनभेदस्य दोषताया अभ्युपगतेः। यथा—'हंसीव धवलश्चन्द्रः सरांसीवामलं नभः'। अत्र हंसी धवला, चन्द्रो धवलः, सरांस्यमलानि, नभो ह्यमलमिति साधारणधर्मस्योपमाने उपमेये च द्वैविध्येनैव प्रतीतेरुपमायाः सम्यगनिष्पत्तेः। नन्वेवं सति 'सरांसीव नभः' इत्यादौ

द्विषयो मानोऽहंकारः। तत् औपम्यम्। तत् अगमनम्। लुप्तोपेति। धर्मेत्यादिः। दिगर्थोऽन्यतोऽवसेयः॥ इति रसगङ्गाधरमर्मप्रकाशे विकल्पप्रकरणम्॥

---

१ भवार्तिशमनं प्रति द्वयोः कर्तृत्वं वास्तवे तु न विरुद्धम्। द्वयोः पृथगभिधानेन विरोधो विवक्षितः। तथा च विवक्षया कल्पितस्य विरोधस्य विकल्पोत्थापने न प्रयोजकत्वम्। अर्थात् कल्पितो विरोधो विकल्पं प्रति न कारणमित्याशयः।

२ भगवदङ्गेषु एकमात्रस्य शरणीकरणं द्वितीयस्य विरोधोद्भावनं न सुन्दरमित्याशयः।

लुप्तोपमायां कथं वचनभेदो दोष इति चेत्, तत्रापि प्रतीयमानसाधारणधर्मस्य वैरूप्यादेवेत्यभ्युपगमात्। न च प्रतीयमानस्य धर्मस्य स्वशब्दा[2]नालिङ्गिततया सुतरां लिङ्गानालिङ्गनेन नास्ति वैरूप्यमिति शक्यम्। शब्दालिङ्गितस्यैवार्थस्य प्रतीतेरिष्टेः। यदाहुः—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति। यद्वा श्रुतार्थापत्ता[3]वभ्युपगम्यमानायां शब्द एव कल्प्यते, अर्थस्तु तेनाभिधीयत इत्यस्ति वैरूप्यम्। एवं स्थिते राजते भासते इत्यादितिङन्तप्रतिपाद्ये साधारणधर्मे यथा लिङ्गवचनभेदो न दोषस्तथात्रापीति। अत एव 'यस्मिन्नतिसरसो जनो जनपदाश्च' इति तुल्ययोगितापि संगच्छते। अन्यथा उपमागर्भत्वात्तस्या उपमाया दुष्टत्वे दुष्टतापत्तेः। श्लिष्टे धर्मलिङ्गसंख्याभेदादि नैव दूषणमिति प्रतिप्रसवान्नेति दिक्।

इति रसगङ्गाधरे विकल्पप्रकरणम्।

---

अथ समुच्चयः—

**युगपत्पदार्थानामन्वयः समुच्चयः॥**

---

प्राग्वदाह—**अथेति**।

१ नन्वत्र अमलमिति पदम् उपमेयमात्रसंबद्धम्। साधारणधर्मस्तु लुप्तः, आक्षेपगम्य इत्यर्थः। ततश्च धर्मसामानाधिकरण्ये कथं वैरूप्यदोष इति शङ्का। आक्षिप्तस्यापि धर्मस्य 'सरांसि' इति बहुवचनेन, 'नभः' इति एकवचनेन च सहसमावेशे वैरूप्यमेवोत्पद्यतेति स दोष एव। इति समाधानम्।

२ यत्र प्रतीयमानो धर्मस्तत्र प्रतीयमानसाधर्म्यसामर्थ्या उपमानिष्पत्तिर्भवति, नतु तत्र धर्मवाचकशब्दस्य साक्षाद्योगो येन तत्संबन्धिलिङ्गकृतवैरूप्यस्यावसरः स्यादिति शङ्का। अर्थस्य प्रतीतिः ( शाब्दबोधः ) शब्दरूपं विशेषणमादायैव भवति, नान्यथेति समाधानम्।

३ श्रुतात् शब्दात् यत्रार्थस्य आपादनं यथा 'द्वारम्' इति शब्दात् 'पिधेहि' क्रियापदस्य, ( शब्दाध्याहार इत्यर्थः )।

४ नेत्रे, तनुः इत्यत्र 'भक्तिप्रह्वविलोकनप्रणयिनी' इति नपुंसकलिङ्गद्विवचनं स्त्रीलिङ्गैकवचनं चापीत्यनयोः सामानाधिकरण्यं संपद्यत इति लिङ्गवचनभेदो न दोषायेत्याशयः।

५ अतिशयितानि सरांसि येषु ते अतिसरस इत्यर्थः।

युगपदिति क्रमव्यावृत्त्यर्थम्, न त्वेकक्षणप्रतिपत्त्यर्थम् । तेन किंचित्कालभेदेऽपि न समुच्चयभङ्गः । स तावद्विविधः—धर्मिभेद-धर्म्यैक्याभ्याम् । धर्म्यैक्येऽपि द्वैविध्यम्—कारणत्वातिरिक्तसंबन्धेनैकधर्म्यन्वये, कारणतया एकधर्म्यन्वये चेति । एवं त्रिविधेऽस्मिन्नाद्ययोर्भेदयोर्गुणानां क्रियाणां गुणक्रियाणां च, तृतीये रमणीयानामरमणीयानां रमणीयारमणीयानां समन्वयः । न चास्मिन्वक्ष्यमाणसमाध्यलंकारत्वमाशङ्क्यम् । समाधौ हि एकेन कार्ये निष्पाद्यमानेऽप्यन्येनाकस्मिकमापतता कारणेन सौकर्यादिरूपोऽतिशयो यत्र संपाद्यते स विषयः । अस्मिंस्तु समुच्चयप्रभेदे यत्रैककार्यं संपादयितुं युगपदनेके खले कपोता इवाहमहमिकया संपतन्ति, कार्यस्य च न कोऽप्यतिशयः सः । क्रमेणोदाहरणानि—

'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः ।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥'
'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलयुवजनचूडामणिशासनेन मदनेन ॥'

अत्राद्ये गुणानां द्वितीये क्रियाणां च यौगपद्येन भिन्नधर्म्यन्वयः ।

'आताम्रा सिन्धुकन्याधवचरणनखोल्लासिकान्तिच्छटाभि-
र्द्योतन्नाजालैर्जटानां त्रिपुरविजयिनो जातजाम्बूनदश्रीः ।
स्वाभाव्यादच्छमुक्ताफलरचितलसद्गुच्छसच्छायकाया
पायादायासजालादमरसरिदघव्रातजातश्रमान्नः ॥'
'देव त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥'

---

सिन्धुकन्याधवो लक्ष्मीपतिः ।

१ पदार्थानामन्वये क्रमिकत्वं न स्यादित्येव व्यावर्त्यते, न त्वेकस्मिन्नेव क्षणे सर्वेषां पदार्थानामन्वयः स्यात्तदैव समुच्चयो भवतीति विवक्ष्यते इत्यर्थः । २ धर्मिभेद—कारणत्वातिरिक्तसंबन्धेन एकधर्म्यन्वययोः । ३ कारणतासंबन्धेन एकधर्म्यन्वये । ४ अमरसरित् आयासानां जालो यस्मिन् ईदृशात् अघव्रातजातात् श्रमात् नः पायादित्यन्वयः । ५ वसुमतीक्रोडाभ्यन्तरीकरण-दिक्समालिङ्गनादीनां क्रियाणामेकस्मिन् धर्मिणि चापप्रतापेऽन्वयात्समुच्चयोऽयमुदाहृतः । अस्य हि पर्यन्ते व्याजस्तुतौ पर्यवसानमिति द्वयोः संकरः । यथात्रैव पद्ये चापप्रतापस्य विटव्यवहारप्रतीत्या समासोक्तेरपि संकरः पूर्वमुदाहृतः (व्याजस्तुतौ) ।

अत्राद्ये गुणानां द्वितीये क्रियाणामेकधर्म्यन्वयः । यद्यपि हरिचरणनख-संसर्गसमये नास्ति हरजटासंसर्ग इति रक्तपीतवर्णयोर्यौगपद्यस्यासंभवः, तथापि साहजिकश्वैत्येन सह तयोः प्रत्येकं तस्य संभवोऽस्त्येवेति न दोषः ।

'समुत्पत्तिः पद्मारमणपदपद्मामलनखा-
न्निवासः कंदर्पप्रतिभटजटाजूटभवने ।
अथायं व्यासङ्गः पतितजननिस्तारणविधे-
र्न कस्मादुत्कर्षस्तव जननि जागर्ति जगतः ॥'

अत्र त्रिष्वेकेनाप्युत्कर्षजननसंभवे त्रयोऽप्युत्कर्षजननार्थं स्पर्धयेवापतन्तो रमणीयाः ।

'पाटीरद्रुभुजंगपुंगवमुखोद्भूता वपुस्तापिनो
वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः ।
श्रोत्रे हन्त किरन्ति कूजितमिमे हालाहलं कोकिला
बाला बालमृणालकोमलतनुः प्राणान्कथं रक्षतु ॥'

अत्रापि त्रयोऽपि जीवनाशार्थमापतन्तोऽरमणीयाः ।

'जीवितं मृत्युना लीढं संपदः श्वासविभ्रमाः ।
रामाः क्षणप्रभारामाः शल्यान्येतानि देहिनाम् ॥'

अत्र जीवितादयः स्वाभाव्याद्रमणीया इति निःसारयितुमशक्याः विशेषणमाहात्म्याच्चारमणीया इति दुःखजनकाश्च, अत एव शल्यतुल्याः । रमणीयाऽरमणीयशब्दे कर्मधारय आश्रीयते, न द्वन्द्वः, सहचरभिन्नत्वदोषापत्तेः । एवमरमणीयरमणीयानामप्येककार्यजननार्थमापततां समुच्चयः संभवति ।

---

तयो रक्तपीतवर्णयोः । प्रतिभटः शत्रुः शिवः । पाटीरद्रुश्चन्दनवृक्षः । हालाहलरूपं कूजितम् ।

---

१ उत्कर्षजननरूपकार्यात्मके एकस्मिन् धर्मिणि कारणभूतानां तादृशोत्पत्ति-निवास-व्यासङ्गानां युगपदन्वय इति तृतीयः ( कारणतासंबन्धात्मकः ) भेद इत्यर्थः ।

२ रमणीयाश्च ते अरमणीयाः अर्थात् रमणीयाः सन्तोपि ये अरमणीयाः संपद्यन्ते यथा जीवितादयो निसर्गात् रमणीया अपि मरणभयसंस्पृष्टत्वादिविशेषणसंबन्धात् अरमणीयाः संपद्यन्ते इत्याशयः ।

'शरीरं ज्ञानजननं रोगो विष्णुस्मृतिप्रदः ।
विपद्वैराग्यजननी त्रयं सुखकरं सताम् ॥'

शरीरादयो हि स्वाभाव्यादरमणीया अपि भेदकमाहात्म्याद्रमणीयाः । न च रमणीयानां समुच्चये अरमणीयानां च समालंकारेण, रमणीयारमणीयानां च विषमालंकारेण च संकीर्णत्वान्नैते प्रभेदा युक्ताः समुच्चयस्य । संकरस्य प्रभेदताप्रयोजकत्वविरहात् । अन्यथा सर्वेषामलंकाराणामनन्तभेदत्वापत्तेरिति वाच्यम् । 'समुत्पत्तिः पद्मारमण–' इत्यत्र, 'पाटीरद्रु-भुजंग–' इत्यत्र च समालंकारस्याविवक्षितत्वात् । नहि हरिचरणनखसंभूति–हरजटाजूटनिवास–पतितनिस्तारणव्यासङ्गानां परस्परं योगो योग्य इति कवेरभिप्रेतम् । किं तु भगवत्या भागीरथ्या उत्कर्षं जनयितुं त्रयोऽपि जागरूका इति । नापि मलयानिलरसालद्रुमकोकिलकूजितानाम् । किं तु त्रयोऽपि बालायाः प्राणनाशार्थं बद्धपरिकरा इति । अत एव हन्तेति खेद उपपद्यते । समालंकारस्याभिप्रेतत्वे तु त्रयाणां योगस्य युक्तत्वात्खेदोऽनुपपन्न एव स्यात् । अथ बालाया मारकत्रितययोगोऽननुरूप इति विषमाभिप्रायेण खेदोपपत्तिरिति चेत्, एवमपि त्रयाणां योगांशे समालंकारस्यात्यन्तमप्रतीतेर्विषमस्य च बाह्यबालांशमादाय प्रतिष्ठानात्समुच्चयस्यासंकीर्णतैव । एवं 'जीवितं मृत्युना लीढम्' इत्यादौ जीवितादे रमणीयस्य मृत्युलीढत्वादिना अरमणीयत्वेऽपि न मृत्य्वालीढत्वादिकमयुक्तमिति कवेरिह

भेदकं विशेषणम् । समुच्चये इत्यस्याग्रेऽप्यनुषङ्गः ॥ इति रसगङ्गाधरमर्मप्रकाशे समुच्चयप्रकरणम् ॥

१ एषु सम–विषमालंकारयोर्मिश्रणं भवति, तथा च समत्वेन विषमत्वेन चैव व्यपदेशो युक्तः, न तु समुच्चयप्रभेदस्य ( रमणीयानाम्, अरमणीयानां वा समुच्चय इत्यादेः ) पृथक्कल्पनाकारगौरवं सोढव्यम् । ननु यत्र समविषमयोः संकरः समापतति स नवीनः प्रभेद इति चेत्, एवं संकरसमापातेन सर्वत्रानन्तभेदप्रसक्तिः । तस्मात् समो वा विषमालंकारो वाऽस्तु इति पूर्वपक्षः ।

२ त्रितयस्य बालाकर्मकमारणे यदि योगस्तर्हि त्रयाणामनुरूपसंसर्गमादाय समालंकारत्वमपि स्यात्, किन्तु समालंकारो नात्र सहृदयैः प्रतीयते । 'बालाया मारकत्रितययोगोऽननुरूपः' इति विषमस्तु समुच्चयस्य ये ये घटकास्तद्बहिर्भूतं 'बाला'रूपमंशमादाय संभवति । अयं भावः–प्राणनाशं प्रति मलयानिलादीनामेकत्रान्वये समुच्चयः । तथा च 'प्राणनाशरूपं कार्यम् मलयानिलादीनि कारणानि' समुच्चयस्य घटकाः । 'बालाया मारकत्रितययोगोऽननुरूपः' इति विषमे 'बाला' समुच्चयघटकेभ्योऽतिरिक्तैवेति द्वयोर्घटकभेदात्संकराभाव एवेत्याशयः ।

विवक्षितम्। रमणीयानामचिरस्थायित्वस्योत्सर्गतः सिद्धेस्तस्य च स्वाभिलषिताननुगुणत्वाच्छलयत्वप्रयोजकत्वम्। अतस्तृतीयप्रभेदस्यापि न विषमसंकीर्णत्वेनान्यथासिद्धिः। एतेन 'सद्योगासद्योगसदसद्योगैर्न समुच्चयः प्रभेदवान्। समविषमसंकरेणैवान्यथासिद्धेः' इति रत्नाकरोक्तमपास्तम्।

इति रसगङ्गाधरे समुच्चयप्रकरणम्।

अथ समाधिः---

**एककारणजन्यस्य कार्यस्याकस्मिककारणान्तरसमवधानाहितसौकर्यं समाधिः॥**

तच्च कार्यस्यानायासेन सिद्ध्या साङ्गसिद्ध्या च। पूर्वापेक्षया विशेषस्तूक्त एव। उदाहरणम्---

'आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती
मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति।
ऊहापोहमिमं सरोजनयना यावद्विधत्तेतरां
तावत्कामनृपातपत्रसुषमं बिम्बं बभासे विधोः॥'

अत्र रात्रिसंनिधानादपि सिद्ध्यतो मानविनाशस्य चन्द्रोदयादनायासेन सिद्धिः। यथा वा---

'स्मरदीपदीप्तदृष्टेर्घनान्धकारेऽपि पतिगृहं यान्त्याः।
झटिति प्रादुरभूवन्सख्यादिव चञ्चलाः परितः॥'

इहाकस्मिके निष्प्रत्यूहपतिगृहयानस्य कारणान्तरसमवधाने हेतोरुत्प्रेक्षणादुत्प्रेक्षालीढः। पूर्वस्तु शुद्धः।

'नवप्रसङ्गं दयितस्य लोभादङ्गीकरोति स्म यदा नताङ्गी।
श्लथं तदालिङ्गनमप्यकस्माद्घनो निनादैर्घनतां निनाय॥'

अत्र घनध्वनिभिरालिङ्गनस्य साङ्गतासिद्धिः। पूर्वपद्यद्वये त्वनायासेन कार्यसिद्धिः।

---

प्राग्वदाह---**अथेति**। सुषमा परमा शोभा। चञ्चला विद्युतः। घनो मेघः। घनतां निबिडताम्।

---

१ 'रमणीयस्य जीवितस्य मृत्युलीढत्वम् अयुक्तम्' इति विवक्षायामेव विषमो भवेदित्यर्थः।

२ समवधानेन आहितं सौकर्यं समाधिरित्यर्थः।

'कथय कथमिवाशा जायतां जीविते मे
मलयभुजगवान्ता वान्ति वाताः कृतान्ताः ।
अयमपि बत गुञ्जत्यालि माकन्दमौलौ
मनसिजमहिमानं मन्यमानो मिलिन्दः ॥'

अत्र जीवितनाशं प्रति वातवान–चञ्चरीकगुञ्जितयोरहमहमिकया हेतुत्वादेकस्याकस्मिकत्वाभावान्न प्रकृतालंकारस्य विषयः । किं तु कर्तृरूपभिन्नधर्मिकेण वातगुञ्जनक्रिययोः समुच्चयेन जीवितनाशरूपैककार्यात्मकैकधर्मिकस्तयोरेव कारणयोः समुच्चयः [१]संकीर्णः ।

इति रसगङ्गाधरे समाधिप्रकरणम् ।

---

अथ प्रत्यनीकम्—

**प्रतिपक्षसंबन्धिनस्तिरस्कृतिः प्रत्यनीकम् ॥**

अनीकेन सदृशं प्रत्यनीकम् । सादृश्यस्य यथार्थत्वेनैव संग्रहे पुनः सादृश्यग्रहणाद्गुणीभूतेऽपि सादृश्येऽव्ययीभावः । लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते । तदशक्तौ प्रतिपक्षसंबन्धिनः कस्यचित्तिरस्कारः क्रियते । स चानीकसदृशतया प्रयुज्यमानत्वात्प्रत्यनीकमुच्यते[२] । अत्र च

---

माकन्दश्चूतः ॥ इति रसगङ्गाधरमर्मप्रकाशे समाधिप्रकरणम् ॥

प्रागवदाह—**अथेति** । अनीकं सैन्यं व्यूहरचनाकारम् । संबन्धी प्रतिपक्षेत्यादिः ।

---

१ जीवितनाशरूपे कार्यात्मके एकस्मिन्धर्मिणि वात–गुञ्जनकारणयोर्युगपदन्वय इति (कारणतया एकधर्म्यन्वयरूपः) एकः समुच्चयः । तेन सह वात–गुञ्जनक्रिययोः एकत्र जीवितनाशे अन्वयरूपः समुच्चयः (यस्य हि कर्तृरूपौ धर्मिणौ भिन्नौ स्तः) संकीर्णः । भिन्नधर्मिकेण एकधर्मिकः समुच्चयः संकीर्ण इति द्वयोः समुच्चययोः संकर इत्याशयः ।

२ अनीकेन सैन्येन सदृशं प्रत्यनीकम्, अव्ययीभावः । अनीकेन (सैन्येन) यथा प्रतिपक्षस्य तिरस्कारः क्रियते तथा इदं साक्षात्प्रतिपक्षतिरस्कारे असमर्थतया प्रतिपक्षसंबन्धिनः (प्रतिपक्षोपजीव्य–मित्रादेः) तिरस्कारः प्रत्यनीकमित्याशयः । ननु 'अनीकेन सदृशम्' इत्यव्ययीभावः सादृश्ये कथं व्यपदिश्यते ? 'सदृशम्' इत्युक्तौ सादृश्यवतः प्राधान्यं भवति, नतु सादृश्यस्य, तस्य गुणीभूतत्वात् । अत उच्यते–'गुणीभूतेपि सादृश्येऽव्ययीभावः' इति । अयमाशयः–अव्ययं विभक्तीतिसूत्रे यथार्थेषु सादृश्यस्य संग्रहे जाते, पुनः 'सादृश्य'ग्रहणेन गुणीभूतेपि सादृश्ये अव्ययीभावो भवति । अत एव 'सदृशः सख्या ससखि' इत्युदाह्रियते । इति पूर्वोक्तस्य सारः ।

प्रतिपक्षगतं बलवत्त्वम्, आत्मगतं दुर्बलत्वं च गम्यते। संबन्धी च तदुपजीव्योपजीवकमित्रादिभेदादनेकविधः। यथा—

'रे रे मनो मम मनोभवशासनस्य
पादाम्बुजद्वयमनारतमामनन्तम्।
किं मां निपातयसि संसृतिगर्तमध्ये
नैतावता तव गमिष्यति पुत्रशोकः॥'

'जितमौक्तिकसंपदां रदानां सहवासेन परां मुदं ददानाम्।
विरसादधरीकरोति नासामधुना साहसशालि मौक्तिकं ते॥'

पूर्वत्रोपजीव्यस्य, इह तूपजीवकस्य तिरस्काराद्वैरस्यार्थत्व—शाब्दत्वाभ्यां च वैलक्षण्यम्[1]। एवमन्यदप्यूह्यम्।

अत्र विचार्यते—हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारान्तरं भवितुमर्हति। तत्र द्वितीयोदाहरणे तावद्धेत्वंशः शाब्दः उत्प्रेक्षांशमात्रमार्थम्। प्रथमोदाहरणे तु द्वयमप्यार्थम्[2]। पुत्रमारकसेवकत्वेन कारणेन वैरस्य तस्य स्वात्मकर्मकगर्तमध्यनिपातनेन कार्येण हेतुतायाश्च स्फुटं प्रतीतेः। अस्मिन्नलंकारे हेतुत्वं निश्चीयमानम्, हेतूत्प्रेक्षायां तु संभाव्यमानमित्यस्ति विशेष इति चेत्, प्रतीयमानहेतूत्प्रेक्षाया अनुत्प्रेक्षात्वापत्तेः। वाचकस्येवादेरभावाद्धेतुत्वस्य निश्चीयमानतायास्तत्रापि वक्तुं शक्यत्वात्[3]।

'यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥'

---

१ मनोभव(स्वपुत्र)वैरिणि शिवे प्रतिकर्तुमप्रभवत् मनः शिवस्मरणकर्तुः (स्मरणोपजीव्यस्य) तिरस्कारं करोति। अत्र हि 'मनोभवशासने'त्यर्थानुसंधानान्मनसः शिवेन सह वैरं गम्यते इत्यार्थम्। स्व(मौक्तिक)पराजयकारिणां दन्तानां प्रतीकारे असमर्थं मौक्तिकं दन्तशोभोपजीविनीं नासां तिरस्करोति। 'जितमौक्तिके'ति वैरं शाब्दमिति सर्वस्याशयः।

२ अर्थात् पूर्वोक्तोदाहरणद्वये 'पुत्रमारकसर्तीय' मित्यादिना हेतुनैव 'गर्ते पातयती'त्यादिकल्पनास्तीत्याशयः।

३ अर्थात् यत्र प्रतीयमाना हेतूत्प्रेक्षा भवति तत्र हि संभावनावाचकस्य इवादेरभावः, हेतुत्वं च निश्चीयमानं भवति। इदानीं तत्स्थाने (प्रतीयमानहेतूत्प्रेक्षास्थाने) निश्चीयमानहेतुत्वात् प्रत्यनीकं स्यादित्याशयः।

इत्यलंकारसर्वस्वकृतोदाहृते प्राचीनपद्येऽपि भगवद्वैरानुबन्धादिव भगवद्भ-क्तसदृशमिन्दुं राहुर्बाधत इति प्रतीतेरुत्प्रेक्षैव गम्यमाना ।

'मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति ।

त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥'

इति कुवलयानन्दकारेणोदाहृते तु पद्ये हेत्वंश उत्प्रेक्षांशश्चेत्युभयमपि शाब्दमिति कथंकारमस्यालंकारस्योदाहरणतां नीतमिदमायुष्मतेति न[1] विद्मः । प्रतिपक्षगतबलवत्त्व—स्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षान्त-रादस्य वैलक्षण्यम् । नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे, तदविना-भावित्वात् । किं तु तदवान्तरविशेषीभवितुम् । नहि पृथिव्यवान्तरभेदा-द्घटात्पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति ।

इति रसगङ्गाधरे प्रत्यनीकप्रकरणम् ।

अथ प्रतीपम्—

**प्रसिद्धौपम्यवैपरीत्येन वर्ण्यमानमौपम्यमेकं प्रतीपम् ॥**[2]

तद्वैपरीत्यं च तदुपमानोपमेययोरुपमेयोपमानत्वकल्पनया, न प्रकारान्तरेण ।

'तत्प्रतिपक्षशङ्कितेऽस्मिन्निति चेत्, न' इति पाठः । **न विद्म इति** । मत्सरादिवेति हेतूत्प्रेक्षासत्त्वेऽपि तद्धेतुकप्रतिपक्षीयबाधेनैतद्विषयत्वाच्चिन्त्यमिदम् ॥ इति रसगङ्गाधरमर्मप्रकाशे प्रत्यनीकप्रकरणम् ॥

प्रागवदाह—**अथेति** ।

---

१ स्थाने स्थाने अविकलं निःशब्दमपहरन्नपि नागेशो यां स्वविस्तृत्यमाण्याऽधरीकरोति साऽलंकारचन्द्रिका तु प्रतिवदितुं प्रयतते—'अत्र मत्सरादिवेति हेत्वंशे उत्प्रेक्षासत्त्वेऽपि तद्धेतुक-प्रतिपक्षिसंबन्धिबाधनं प्रत्यनीकालंकारस्य विविक्तो विषय इति बोध्यम् । अत एव मम्मटभट्टैरपि—'त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥' इत्युदाहृतम् । एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारा-न्तरं भवितुमर्हतीति कस्यचिद्वचनमनादेयम् ।'

२ अर्थात् उपमानस्य उपमेयत्वम्, उपमेयस्य चोपमानत्वमिति कल्पनपूर्वकं वर्ण्यमानम् औपम्यम् ( सादृश्यम् ) प्रथमं प्रतीपम् ।

उपमानोपमेययोरन्यतरस्य किंचिद्गुणप्रयुक्तमद्वितीयतोत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यमपरं द्विविधम् ॥

उपमानस्य कैमर्थ्यं चतुर्थम् ॥

सादृश्यविघटनं पञ्चमम् ॥

तत्राद्ये प्रभेदे प्रसिद्धौपम्ये यदुपमेयं तस्यैवोपमानत्वादाधिक्यस्य, यच्चोपमानं तस्योपमेयत्वान्न्यूनत्वस्य च प्रत्ययः फलम् । इदमेव चौपम्यस्याविशेषेऽप्युपमालंकारादस्य वैलक्षण्ये बीजम् । औपम्यप्रतिष्ठानं च निषिध्यमानसादृश्याद्व्यतिरेकात् । नन्वौपम्यस्योपमानोपमेयसाधारण्येऽपि यदेकस्याधिक्यमपरस्य न्यूनत्वं च गम्यते तत्कस्य हेतोरिति चेत्, शृणु । उपमाने हि साधारणधर्मसंबन्धोऽनूद्योपमेये विधीयत इति तावन्निर्विवादम् । विध्यनुवादौ च साध्यत्वसिद्धत्वाभ्याम् । ते च क्रमेण न्यूनत्वाधिक्ये उपमानोपमेययोः प्रयोजयतः । लोकेऽपि निश्चितविद्यो यथा पूज्यते तथा नानिश्चितविद्य इति स्फुटमेव । ते च साध्यत्वसिद्धत्वे वक्तृविवक्षाधीने

---

ननु ते अप्युपमावदेवात्रात आह—ते च साध्यत्वेति ।

---

१ सादृश्यं निषिध्य यो व्यतिरेकः (विशेषः) दर्श्यते तस्मादेव द्वयोरौपम्यं स्थिरीभवति । यदा हि एकस्मादपरस्य कश्चन विशेषः प्रदर्श्यते तदा प्रतीयते यत् अयं विशेष एव विशेषः, अन्यत्सर्वं साम्यमिति । यथा 'किं जल्पसि०' अत्र सुवर्णे अग्निपातनकृत एव विशेषः, अन्यत्तु अङ्ग-सुवर्णयोः साम्यमेवेति प्रतीयते ।

२ 'चन्द्र इव मुखं चमत्करोति' इत्यादौ यथा चन्द्रश्चमत्करोति तथा मुखं चमत्करोति इति प्रत्ययेन साधारणधर्मस्य (चमत्कारस्य) संबन्धः पूर्वमुपमाने । अत एवायं संबन्धः सिद्ध इत्युच्यते । ततः 'तथा मुखं चमत्करोति' इति चन्द्रादनूदितः स संबन्धो मुखे विधीयते, अत एव साध्यः । सिद्धो यत्र धर्मस्तस्य उत्कृष्टत्वम्, साध्यो यत्र तस्य तदपेक्षया अपकृष्टत्वम् इति स्थितिः । प्रथमप्रतीपे मुखमिव चन्द्रश्चमत्करोतीत्यत्र मुखे अनूदितश्चमत्कृतिधर्मः उपमेये चन्द्रे (प्रतीपत्वात्) विधीयते । अत एव ते साध्यत्व-सिद्धत्वे एव क्रमेण अर्थात् उपमानतया अन्यत्र प्रसिद्धस्य चन्द्रस्य न्यूनत्वम् उपमेयतया प्रसिद्धस्य मुखस्य आधिक्यं प्रयोजयतः (उत्पादयतः) । साधारणधर्मस्य साध्यत्वं सिद्धत्वं वा वक्ता यथेच्छति तथैव प्रयुङ्क्ते । ततश्च—सादृश्यं हि द्वयोः समानं भवति, कथमेकस्याधिक्यमेकस्य न्यूनतेति 'ननु' इत्यादिना शङ्का । पूर्वोक्तप्रकारेण साध्यत्व-सिद्धत्ववशादाधिक्यं न्यूनत्वमिच्छावशात्संभवतीति तत्समाधानम् इति ग्रन्थकाशयः ।

इति नात्र दोषः । द्वितीयतृतीययोर्भेदयोस्तु फलं स्फुटमेव । चतुर्थस्य तु निषिध्यमानवस्तुगतसकलगुणवत्त्वप्रतिपत्तिः । पञ्चमस्य प्रथमवदिति । उदाहरणम्—

'किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णमिति ।
तद्यदि पतति हुताशे तदा हताशे तवाङ्गवर्णं स्यात् ॥'

अत्र पूर्वार्धोपमागम्यं सुवर्णवर्णाधिक्यं तिरस्कृत्य द्वितीयार्धे प्रतीपं बालाङ्गवर्णस्याधिक्यं गमयति । हुताशपातं विना प्रतीपमपि दुर्लभम्, उपमा तु स्वप्नेऽपि न संभवतीति मुग्धत्वहताशत्वाभ्यां गम्यते ।

'माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता
रत्नानामहमेक एव भुवने को वापरो मादृशः ।
इत्येवं परिचिन्त्य मा स्म सहसा गर्वान्धकारं गमो
दुग्धाब्धे भवता समो विजयते दिल्लीधरावल्लभः ॥'

निभाल्य भूयो निजगौरिमाणं मा नाम मानं हृदये विधासीः ।
गृहे गृहे पश्य तवाङ्गवर्णा मुग्धे सुवर्णावलयो लुठन्ति ॥'

उपमानकैमर्थ्यस्य तूदाहरणमाक्षेपप्रकरण एव गदितम् 'अभूदप्रत्यूहः' इत्यादि । पञ्चमो यथा—

'करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः ।
कथमालि शृणोषि सादरं विपरीतार्थविदो हि योषितः ॥'

अत्र कथं शृणोपीत्यनेन तुलैव न संभवतीति गम्यते । अर्थान्तरन्यासोऽप्यमुमेवार्थं पुष्णाति ।

तदेवं पञ्चविधं प्रतीपं प्राचामनुरोधान्निरूपितम् । वस्तुतस्तु—आद्यास्त्रयोऽप्युपमायामेवान्तर्गता भेदाः । चतुर्थः केषांचिदाक्षेपः । पञ्चमस्त्वनुक्तवैधर्म्ये व्यतिरेके । तथाहि—निष्पद्यमानं सुन्दरं वा सादृश्य-

---

१ अद्वितीयतागर्वनिवारणपूर्वकं तिरस्कारः ।

२ अर्थात् उपमेयस्याधिक्यम्, उपमानस्य न्यूनत्वमिति प्रत्ययः । अत एव असमानतया द्वयोः सादृश्यं विघटितमिति वक्तनावसरः ।

३ अङ्गं सुवर्णवर्णम् अर्थात् सुवर्णसदृशमिति ।

४ व्यतिरेकेपि उपमेयस्योत्कर्षः, केवलं वैधर्म्यकथनमधिकम् । इहापि उपमेयस्य तथा उत्कर्षो यथा उपमेयस्यात्युत्कर्षवशात्साम्यमपि विघटितं भवति ।

त्युपमा। नह्याद्ये प्रतीपे 'मुखमिव कमलम्' इत्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वास्ति येनोपमातो बहिर्भावः स्यात्, सौन्दर्यविशेषस्य त्वयाप्यभ्युपगमात्। विशेषस्य सामान्यानिवारकत्वात्। न च प्रसिद्धकमलादिप्रतियोगिकमेव सादृश्यमुपमेति राज्ञामाज्ञास्ति। न चोपमाविरुद्धवाचिनः प्रतीपशब्दस्य माहात्म्यादेव तादृशं सादृश्यमुपमेति शक्यं वक्तुम्, उपमाविशेषविरुद्धवाचकत्वेनापि तदुपपत्तेः। एवं चाद्यं प्रतीपं प्रसिद्धोपमावदुपमाविशेष एव। अत एव द्वितीयतृतीयावपि भेदावुपमाविशेषावेव। उपमानोपमेययोस्तिरस्कारस्तूपमान्तराद्वैलक्षण्यं प्रयोजयेत्, न तूपमासामान्यात्, तदनुस्यूतत्वेनैव तत्प्रतीतेः। नहि द्राक्षा माधुर्यातिशयेन पार्थिवान्तराद्विलक्षणेत्यपार्थिवी भवति। अपि च यद्युपमानोपमेययोस्तिरस्कारोऽलंकारताप्रयोजकः स्यात्, पुरस्कारोऽपि तथा स्यात्। यथा—

'एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिना-
मित्येवं परिचिन्त्य मा स्म मनसि व्याधानुतापं कृथाः।
भूपानां भवनेषु किं च विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षाः खलाः॥'

---

तत्सुवर्णम्। अङ्कुशेतिन्यायेनाह—**प्रतीपेति**।

१ उपमेये मुखे आधिक्यम् (विशिष्टं सौन्दर्यम्) इति त्वयापि प्रतीपे स्वीकृतमित्यर्थः।

२ अर्थात् कमलादि(उपमान)प्रतियोगिकम्। अयं भावः—उपमाविरुद्धवाची प्रतीपशब्दः अस्मिन्नलंकारे गृहीतः, अत एव अस्मादलंकाराद्विपरीतं कमलादि(उपमान)प्रतियोगिकं सादृश्यमेव उपमायां ग्राह्यमिति पूर्वपक्षः। प्रसिद्धोपमाविशेषस्य (यत्र हि कमलादिप्रतियोगिकमेव सादृश्यं गृह्यते) प्रतिद्वन्द्वीभूतोऽयमलंकार इत्यनेनापि प्रतीपशब्दग्रहणस्य स्वारस्यं सफलीभवति। तथा च प्रतीपशब्दमात्रबलादेवं कल्पना न भवितुमर्हति यत् कमलादिप्रतियोगिकं सादृश्यमेव उपमा, विवक्षानुसारं मुखप्रतियोगिकं कमलानुयोगिकं सादृश्यमप्युपमा संभवतीति सिद्धान्ते समाधानम्।

३ ननु द्वितीयतृतीययोः न केवलमुपमैव, अपि तु तिरस्कारोऽप्यधिकः प्रतीयते। अत एव कथमुपमायामन्तर्भाव इति शङ्कायामाह—उपमानोपमेययोस्तिरस्कारस्तु०।

४ उपमानुस्यूत एव तत्र तिरस्कारः प्रतीयते, अर्थात्प्रतिद्वन्द्विनस्तिरस्कारेण सहकृतापि सा उपमैव नालंकारान्तरमित्यर्थः।

अत्रौपम्यप्रदर्शनस्य नोपमानतिरस्कारः फलम्, तस्य गर्वितत्वेनाविवक्षणात् । किं तु तदनुतापनाशः । एवं च फलवैलक्षण्यमात्रेणालंकारान्तरत्वं ब्रुवता अस्याप्यलंकारान्तरत्वमभ्युपेयं स्यात्, प्रतीपषष्ठप्रभेदत्वं वा । किं च त्वदुक्तप्रतीपभेदानामपि परस्परवैलक्षण्येन पृथक्पृथगलंकारत्वं स्यात्, न प्रतीपप्रभेदत्वम् । प्रतीपस्य सकलप्रभेदसाधारणसामान्यलक्षणाभावात् । अन्यतमत्वं तु दूषणसहस्रग्रस्तत्वादलक्षणमेवेत्यसकृदुक्तम्[1] । उपमालक्षणं तु सकलसाधारणम् । चतुर्थः प्रभेदस्तु येषां मते नाक्षेपस्तेषामस्तु नाम प्रतीपालंकारः । पञ्चमस्य तु गतिरुक्तैव[2] प्रभेदस्य ।

इति रसगङ्गाधरे प्रतीपप्रकरणम् ।

अथ प्रौढोक्तिः—

**कस्मिंश्चिदर्थे किंचिद्धर्मकृतातिशयप्रतिपिपादयिषया प्रसिद्धतद्धर्मवता संसर्गस्योद्भावनं प्रौढोक्तिः ॥**

संसर्गश्च सन्नसन्वा साक्षात्परम्परया वा ।

'वल्मीकोदरसंभूतकपिकच्छूसहोदराः[3] ।
हा पीडयित्वा निघ्नन्ति सज्जनान्दुष्टदृष्टयः ॥'

अत्र कपिकच्छूसहोदरत्वेन मारकत्वं न प्राप्नोति, अपि तु पीडाजनकत्वमात्रम् । कवेस्तु पीडां जनयित्वा मारयन्तीत्येवंरूपोऽतिशयो विवक्षितः ।

लक्षणाभावादिति । चिन्त्यमिदम् । तिरस्कारफलकोपमानापकर्षबोधानुकूलव्यापारस्य प्रतीपसामान्यलक्षणत्वसंभवात् । स च वाच्यो व्यङ्ग्यो वेत्यन्यत् ॥ इति रसगङ्गाधरमर्मप्रकाशे प्रतीपप्रकरणम् ॥

प्राग्वदाह—अथेति । कपिकच्छूर्वृश्चिकः ।

१ अर्थात् एवमेव प्रतिपक्षिणा उपमाद्यन्यतमत्वं प्रतीपत्वमित्युक्ते उपमादयः सर्वेऽस्य प्रभेदाः स्युरित्यापत्तिः ।

२ अनुक्तवैधर्म्ये व्यतिरेकेऽन्तर्भाव इत्यर्थः ।

३ यथा कपिकच्छूम् ('कौंछ' इति ख्यातायामौषध्याम् । वृश्चिक इति नागेशटीका तु विवादैकपण्डितानां पदार्थज्ञानस्य सुन्दरं निदर्शनमात्रम् । एवं लवली 'राय आँवळे' इत्यपि ) मारकतारूपातिशयप्रतिपादनेच्छया मारकतया प्रसिद्धेन सर्पेण सह 'वल्मीकोदरसंभूत' इति विशेषणतया संसर्गस्योद्भावनम् ।

अतो वल्मीकोदरसंभूतत्वं सर्पाधिकरणवृत्तितारूपं कपिकच्छूविशेषणं मारकतावच्छेदकत्वेन स्वप्रतिभया कविना कल्पितम्। यथा वा—

'मन्थाचलभ्रमणवेगवशंवदा ये
दुग्धाम्बुधेरुदपतन्नणवः सुधायाः।
तैरेकतामुपगतैर्विविधौषधीभि-
र्धाता ससर्ज तव देव दयाद्दगन्तान्॥'

अत्र दृगन्तेषु न केवलं संजीवकत्वादयोऽमृतमात्रगुणा एव कवेर्बुबोधयिषिताः, अपि तु निखिलजनवशीकारत्वादयोऽन्येऽपीति सुधाकणेष्वौषधीसंसर्गो विशेषणतयातिशयार्थमुपात्तः। उत्पाद्योत्पादकभावश्चात्र न लोकसिद्धः, अपि तु कविमात्रनिबद्धः। यथा वा—

'त्वदङ्गणसमुद्भूता सिक्ता कुङ्कुमवारिभिः।
त्वदङ्गतुलनां याति कदाचिल्लवलीलता॥'

अत्र केवलाया लवल्या उपमानताभरसहनसामर्थ्यस्याभावात्तस्य सिद्धये नायिकासामानाधिकरण्य–कुङ्कुमजलसंयोगयोरुपादानम्। अत्र च धर्मिविशेषसंसर्गादतिशयो धर्म्यन्तरगतो यद्यागूरणविषयस्तदैवायमलंकारः। वाच्यवृत्त्या तत्तत्प्रयुक्तत्वेनाभिहितश्चेत्समालंकारस्यैव विषयः। यथा—

'त्वत्तो जन्म हिमांशुशेखरतनुज्योत्स्नानिमग्नात्मनो
दुग्धाम्भोनिधिमुग्धवीचिवलयैः साकं परिक्रीडनम्।
संवासः सुरलोकसिन्धुपुलिने वादः सुधांशोः करैः
कस्मान्नोज्ज्वलिमानमञ्चतितमां देव त्वदीयं यशः॥'

अत्र यशसो धवलतातिशयस्तत्तद्धर्मिसंबन्धप्रयुक्तत्वेन कथित इति तदंशे सम एवालंकारः। अंशुकृतश्चन्द्रे चन्द्रकृतश्च भगवति भगवत्कृतो राजनीत्येवमुत्तरोत्तरमुपचीयमानो राजगतस्त्वनुक्तत्वात्प्रौढोक्तेरेव विषयः।

लवली 'रायआंवळे' 'हरफारेवडी'। इति प्रसिद्धा। आगूरणं व्यञ्जनम्।

१ सर्पस्य अधिकरणम् (आधारः) यद् वल्मीकं तस्मिन् वर्तमानतारूपम्।

२ त्वदङ्गणे समुद्भूतेति।

३ शिवतनुज्योत्स्नायां निमग्नः आत्मा यस्य तस्मात्।

एवं च

'शशशृङ्गधनुर्लसत्करा गगनाम्भोरुहमालिकाधराः ।
तनयैः[1] सह भाविजन्मनां तव खेलन्ति नरेन्द्र वैरिणः ॥'

इत्यादावेकस्य मिथ्यात्वसिद्ध्यर्थं[2] मिथ्याभूतवस्त्वन्तरकल्पनं मिथ्याध्यवसित्याख्यमलंकारान्तरमिति न वक्तव्यम्, प्रौढोक्त्यैव गतार्थत्वात्। 'केशाः कलिन्दजातीरतमालस्तोममेचकाः' इत्यादौ प्राचीनकृतप्रौढोक्त्युदाहरणे यथा तमालेषु श्यामत्वातिशयार्थं श्यामत्वाधिकरणीभूतकालिन्दीसंबन्ध उद्भाव्यते, तथा वैरिष्वपि मिथ्यात्वसिद्धये मिथ्यात्वाधिकरणशशशृङ्गादिसंबन्ध इत्यस्यापि सुवचत्वात्। तत्र श्यामत्वातिशयः इह तु मिथ्यात्वमात्रं न तु तस्यातिशयः सिद्ध्यतीति वैलक्षण्यं तु न वाच्यम्। तमालस्तोमे प्रमाणान्तरेण सिद्धेऽपि श्यामत्वे कालिन्दीसंसर्गोद्भावनं पुनः श्यामत्वसाधनेनातिशयागूरकमेव[3] स्यात्। वैरिषु तु मिथ्यात्वस्यासिद्धत्वाच्छशशृङ्गादिसंबन्धैर्मिथ्यात्वस्य सिद्धिरित्यार्थसमाजाधीनेयमतिशयसिद्धिर्वैलक्षण्यं न प्रयोजयति। यत्तु 'वेश्यां वशयेत्स्रजं वहन्'[4] इति कुवलयानन्दकृता मिथ्याध्यवसितेरुदाहरणं निर्मितं तत्तु निदर्शनयैव गतार्थम्। निदर्शनागर्भात्र मिथ्याध्यवसितिरिति तु न युक्तम्। मिथ्याध्यवसितेरेव मिथ्यात्वात्। यदि च मिथ्याध्यवसितिरेवालंकारान्तरं स्यात्, सत्याध्यवसितिरपि तथा स्यात्। यथा—

'हरिश्चन्द्रेण संज्ञप्ताः प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥'

अत्र हरिश्चन्द्रयुधिष्ठिरनिगमसंबन्धाद्गुणानां सत्यत्वं प्रतीयते। एवम्

शङ्कते—तत्रेति। तमालेति। यत इत्यादिः। शङ्कते—निदर्शनेति। अत्र वेश्यामित्यत्र। युक्त्यन्तरमप्याह—यदि चेति। धर्मसूनुर्युधिष्ठिरः।

१ ये इदानीं न जाताः अपि तु येषां जन्म अग्रे भविष्यति तेषां पुत्रैः सह।

२ असामान्यप्रभावशालिनो राज्ञो वैरिण एव न सन्ति इति सिद्ध्यर्थं शशशृङ्गादिधारणकाडनं न मिथ्याकल्पनम्।

३ सिद्धे तस्मिन् (यथात्र श्यामत्वे) पुनर्यत् साधनं तत् अतिशयव्यञ्जनाय। वैरिषु तु मिथ्यात्वं प्रमाणान्तरेणाऽसिद्धम्, अत एव तत्र मिथ्यात्वमेव साध्यते नातिशय इत्युभयोर्वैलक्षण्योद्भावनं न प्रयोजनाय, आर्थसमाजाधीना उभयत्रैवातिशयसिद्धिरिति समाधानाशयः।

४ स्रग्वहन-वेश्यावशीकरणयोर्वाक्यार्थयोः औपम्यपर्यवसायी आर्थोऽभेद इति।

'मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्थातुं योग्यास्तवोक्तयः ॥'

अत्रापि सुधासमुद्रादिसंबन्धादुक्तिषु माधुर्यातिशयः प्रतीयमानः कस्यालंकारस्य गोचरः स्यात् ? अतोऽलंकारान्तरं स्यात् । मम तु प्रौढोक्त्यैव गतार्थतेत्यास्तां तावत् ।

इति रसगङ्गाधरे प्रौढोक्तिप्रकरणम् ।

अथ ललितम्—

**प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन निरूप्यमाणोऽप्रकृतव्यवहारसंबन्धो ललितालंकारः ॥**

'आददानः परद्रव्यं विषं भक्षयसि ध्रुवम्' इत्यादिनिदर्शनावारणाय तृतीयान्तम् । अप्रस्तुतप्रशंसावारणाय प्रकृतधर्मिणीति । यथा—

'क्व वा रामः कामप्रतिभटललाटंतपबल-
स्तव कामी वीरा रणशिरसि धीरा मखभुजाम् ।
दिधक्षोस्त्रैलोक्यं प्रलयशिखिनः पद्ममथन-
प्रगल्भैः प्रालेयैः प्रशममसि कर्तुं व्यवसितः ॥'

अत्र प्रकृते धर्मिणि रावणे परदत्तपुरोडाशादिकमश्नतां देवानामग्रे धीरैः कुम्भकर्णादिभिर्वीरैर्भगवतो रामस्य पराभवमिच्छन्नित्येवं कण्ठरवेण ताद-

---

आस्तां तावदिति । चिन्त्यमिदम् । मिथ्यात्वकल्पनकृतचमत्कारस्थानपह्नवनीयत्वेन पृथगलंकारतासिद्धेः । किं च कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलंकारपदभाज इति तव सिद्धान्तात्सत्यत्वप्रतीत्यर्थं कल्पितस्याप्यर्थस्य तत्कल्पितत्वाभावेन शब्दमात्रादलंकारत्वासंभवादिति दिक् ॥ इति रसगङ्गाधरमर्मप्रकाशे प्रौढोक्तिप्रकरणम् ॥

प्राग्वदाह—**अथेति** ।

---

१ अत्र प्रकृतधर्मिणि (वर्ण्यमानपुरुषे) विषभक्षणरूपाऽप्रकृतव्यवहारसंबन्धोऽस्ति परम परद्रव्याऽऽदानरूपप्रकृतव्यवहारोल्लेखपुरस्सरमिति नातिव्याप्तिः ।

२ कामप्रतिभटः शम्भुः ।

३ मखभुजां रणशिरसि धीराः तव वीराः क्वेत्यन्वयः ।

४ पद्मानामेव संहारे समर्थैः प्रालेयैः हिमैः ।

शेच्छारूपं प्रकृतव्यवहारं विषयमनुक्त्वैव तादृशप्रालेयकरणकतादृशाग्निप्रशमनव्यवसायरूपोऽप्रकृतव्यवहारो विषय्युपात्तः । विषयोपादाने तु निदर्शनैव । यथा वा—

'नान्यास्ति किं भूमितले सुरूपा सीतैव वा किं भवतोऽनुरूपा ।
आकर्षता चन्दनशाखिशाखां प्रबोधितोऽयं भवता फणीन्द्रः ॥'

अत्रापि राघवसंबन्धिनायिकाहरणप्रयुक्तं तदीयक्रोधोद्बोधमनुक्त्वैव चन्दनसंबन्धिशाखाकर्षणप्रयुक्तं फणीन्द्रप्रबोधनमुपन्यस्तम् । न चात्र भेदेऽप्यभेद इत्यतिशयोक्त्या गतार्थतेति वाच्यम् । तत्र हि पदार्थेन पदार्थस्यैवाभेदाध्यवसानं 'कनकलतायां विराजते चन्द्रः' इत्यादौ दृष्टम्, न तु व्यवहारेण व्यवहारस्येत्यविषय एवायमतिशयोक्तेः । नापि सादृश्यमूलयाप्रस्तुतप्रशंसया । धर्म्यंशेऽप्रस्तुतत्वविरहात् । नापि निदर्शनया । एकधर्मिगतव्यवहारद्वयोपादान एव तस्या इष्टेः । अत एव 'उपात्तयोः' इति तल्लक्षणे विशेषणमुक्तम् । प्रकृते च प्रकृतव्यवहारस्यानुपात्तत्वादलंकारान्तरमेव । एवं च

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

इत्यत्र काव्यप्रकाशकारो यन्निदर्शनामुदाहार्षीत्तदसंगतमेव । ललितस्यावश्याभ्युपगम्यत्वान्निदर्शनाया अत्राप्राप्तेश्च । तदित्थं ललितस्यालंकारान्तरत्वमुरीकुर्वतामाशयः ।

प्रशंसया गतार्थता इत्यस्यानुषङ्गः । एवमग्रेऽपि । एवं चेत्यस्यार्थं स्पष्टयति—**ललितेति** । पदं स्थानम् । पुनरस्त्वर्थे ।

१ निदर्शनायां शब्दोपात्तयोर्व्यवहारयोर्मध्ये एकस्मिन्नन्यारोपः । यथा—'तीर्थेषु त्वां शोधयन्तः कण्ठगं चिन्तामणिं रजस्सु गवेषयन्ति' अत्र शोधन-गवेषणयोर्द्वयोरेवोपात्तत्वम् । ललिते तु 'प्रालेयैः प्रलयाग्नेः प्रशमं प्रचिकीर्षसि' इत्यप्रकृतव्यवहार एवोपात्तः । 'दुर्बलानां देवानामग्रे वीरायमाणैर्निशाचरैरसामान्यवीरस्य राघवस्य पराभवमिच्छसि' इति प्रकृतव्यवहारस्तु नोपात्तः । केवलं प्रकृतधर्मी ( रावणः ) अवश्यमुपात्त इत्याशयः ।

२ 'मन्मत्या सूर्यवंशवर्णनम् उडुपेन सागरतरणमिव' इति निदर्शनाशरीरं स्यात्किन्तु 'मन्मत्या सूर्यवंशवर्णनम्' इति प्रकृतव्यवहारो नात्रोपात्त इत्याशयः ।

अन्ये तु "ललितं नालंकारान्तम्, निदर्शनयैव गतार्थत्वात् । नन्वेकधर्मिगतप्रस्तुताप्रस्तुतव्यवहारद्वयोपादानजीविता निदर्शना कथमप्रस्तुतव्यवहारमात्रोपादाने पदमाधत्तामिति चेत्, श्रूयतामायुष्मता । इह तावदलंकाराः प्रायशः श्रौता आर्थाश्च संभवन्ति । तत्र श्रौतेभ्य आर्था न पृथगलंकारत्वेन गण्यन्ते । किं तु पृथग्भेदत्वेन, तदलंकारसामान्यलक्षणेन क्रोडीकरणात् । इदं पुनर्वाक्यार्थनिदर्शनास्वरूपम्—व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाभेदः । तत्र व्यवहारद्वयवद्धर्म्यभेदस्य प्रतिपादनं श्रौतमेवापेक्षितमिति न नियमः । किं तु प्रतिपादनमात्रम् । तेन 'परद्रव्यं हरन्मर्त्यो गिलति क्ष्वेडसंचयम्' इत्यत्र व्यवहारद्वयवद्धर्मिणोरभेदस्य श्रुत्या प्रतिपादन इव 'धिक्परस्वं तथाप्येष गिलति क्ष्वेडसंचयम्' इत्यत्राऽऽर्थप्रकृतव्यवहारवद्धर्मि-श्रौताप्रकृतव्यवहारवद्धर्मिणोरार्थाभेदस्य प्रतिपादनेऽपि वाक्यार्थनिदर्शनात्वमक्षतम् । एकत्र श्रौतीत्वमपरत्रार्थीत्वमिति तु विशेषो न वार्यते । पदार्थनिदर्शनास्वरूपं तूपमानोपमेयधर्मयोरभेदाध्यवसायमूल उपमेय उपमानधर्मसंबन्ध इति पृथगेव । एतदुभयान्यतरत्वं च प्राचीनरीत्या सामान्यलक्षणम् । यदि तु ललितं पृथगलंकारः स्यात् लुप्तोपमादिरप्युपमादेः पृथक्स्यात्, त्वदुक्तयुक्तेस्तुल्यत्वात् । नन्वतिशयोक्तिरेवं सति रूपक एव विलीयेत । विषय-

१ व्यवहारद्वयवन्तौ यौ धर्मिणौ तदभेदप्रतिपादनेन आक्षिप्तो व्यवहारद्वयस्य परस्परमभेदः । यथा 'त्वामस्तरा०' अत्र धर्मिणौ शिव-चिन्तामणी । तयोरभेदेन 'नीचेषु शिवकर्मैकशोधनम्' 'रजस्सु चिन्तामणिकर्मैकारोपणम्' इति व्यवहारद्वयस्य परस्परम् अभेदः आक्षिप्यते इति ।

२ आर्थ( अर्थावसेय )प्रकृतव्यवहारवान् धर्मी च, श्रौतोऽप्रकृतव्यवहारवान् धर्मी चेति द्वन्द्वः । तयोर्धर्मिणोरार्थस्य अभेदस्य । अत्र 'गिलति क्ष्वेडसंचयम्' इत्यप्रकृतो धर्मी एव श्रुत्या ( शब्देन ) प्रतिपादितः । 'परद्रव्यं हरन्' इत्येवरूपेण प्रकृतो धर्मी तु शब्देन नोपात्तः, अपि तु अर्थावसेयः । तथापि वाक्यार्थनिदर्शनात्र भवतीत्याशयः ।

३ यथा इन्दीवरलीला-नेत्रलीलयोर्भिन्नत्वेऽपि द्वयोरभेदमध्यवसाय ( आहार्यरूपेण निश्चित्य ) उपमेये ( नेत्रे ) उपमानधर्मस्य इन्दीवरलीलायाः संबन्धः । एवं च एवंविधवाक्यार्थ-पदार्थान्यतरस्वरूपशालिनी निदर्शनेति लक्षणं पर्यवसन्नमित्यर्थः ।

४ क सूर्यप्रभव इत्यादौ प्रकृतव्यवहारस्य अर्थावसेयत्वमात्रेण यदि निदर्शना न, किन्तु पृथगलंकारः एवं तर्हि 'कमलमिव मुखम्' अत्रापि मनोज्ञत्वादिर्धर्मो न श्रौतः अपि त्वर्थावसेयः । एवं च नेयमप्युपमा स्यात्, अपि तु पृथगलंकार इत्याशयः ।

विषयिणोर्द्वयोरप्युपादाने श्रौतं रूपकम्, विषयिमात्रोपादाने त्वार्थमित्यस्यापि सुवचत्वात् । सत्यम् । यत्र ह्यलंकारशरीरमुभयत्राप्यविलक्षणं तत्रैकालंकारव्यपदेशो युक्तः । यथा सादृश्यं निष्पाद्यमानमुपमाशरीरं[1] लुप्तोपमादिष्वविलक्षणमेवेति तत्राप्युपमयैव व्यपदेशो न्याय्यः, नालंकारान्तरेण । लुप्तत्वपूर्णत्वादिस्तु न तच्छरीरनिविष्ट इति स्वयं व्यावर्तमानोऽपि नोपमात्वव्यावर्तकः, तथान्यत्रापीति स्थितिः । एवं च विषयतावच्छेदकरूपेण[2] भाते विषये विषयितावच्छेदकावच्छिन्नाभेदस्य रूपकशरीरस्य विषयितावच्छेदकरूपेणाऽऽभासमानविषयात्मकादतिशयोक्तिस्वरूपाद्विलक्षणत्वेन द्वयोरेकालंकारत्वं न युक्तम् । निदर्शनाललितयोस्तु स्वरूपावैलक्षण्यं प्रदर्शितमित्येकालंकारत्वमेव" इत्याहुः ।

'आहार्यनिश्चयविषयीभूतो[3] विषये विषय्यभेदो रूपकस्वरूपमुच्यते । न निवेश्यते च विषयतावच्छेदकादि, गौरवात् । एवं चातिशयोक्तिर्निगीर्याध्यवसानरूपाया रूपकभेदत्वमस्तु नाम । का नो हानिः । एवमपह्नुतेरपि । विषयतावच्छेदकनिह्नवानिह्नवनिगरणानि रूपकस्यैवावान्तरविशेषाः' इति तु नव्याः । एतन्मतरीत्या तु ललितस्य निदर्शनातः पृथगलंकारत्वं मनोरथललितमेवेति । एवं च 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्'

१ निष्पाद्यमानं सादृश्यम् (सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमा) उपमायाः शरीरम् । तच्च लुप्तादिष्वपि समानमेवेति पूर्णा--लुप्तादिषु न भेदः ।

२ यथा मुखं चन्द्र इत्यत्र विषयो मुखमिति विषयतावच्छेदकरूपेण मुखत्वावच्छेदकरूपेण (अर्थात् मुखत्वेन) भाते (प्रतीते) मुखे विषयितावच्छेदकं चन्द्रत्वं तदवच्छिन्नस्य चन्द्रस्याभेद इति रूपकशरीरम् । विषयितावच्छेदकरूपेण अर्थात् चन्द्रत्वेन आभासमानो विषयो यत्र तदात्मकमतिशयोक्तिशरीरम् । विषयी (चन्द्रः) एव विषयत्वेन (मुखत्वेन) भासते इत्यर्थः ।

३ विषये विषयिण आहार्यः अभेदनिश्चयो रूपकम् । विषयतावच्छेदकरूपेण प्रतीते विषये विषयिणः अभेदो रूपकमित्यादिरूपेण विषयतावच्छेदकादिनिवेशस्तु गौरवान्न क्रियते इत्यर्थः । रूपके यथा विषयिणोऽभेदः एवमतिशयोक्तावपि, इति रूपकस्यैव प्रभेदः अतिशयोक्तिः । एवम् अपह्नुतावपि विषये विषय्यभेदः (विषयतावच्छेदकस्य निह्नवादयस्तु अवान्तरभेदनाख्यापकाः) । एवं च अतिशयोक्त्यपह्नुत्यो रूपकस्यैव प्रभेदत्वमिति नव्यानामाशयः ।

इत्यत्र निदर्शना साधु संगच्छते। क सूर्येत्यादिना स्वमति–सूर्यप्रभववंशयोरत्यन्ताननुरूपत्वकथनोत्तरमुडुपकरणकसागरतरणेच्छाया अप्रकृतायाः कथनेन तादृशमतिकरणकवर्णनेच्छायाः प्रकृतायाः प्रतिपत्तेः।

यत्तु—"‘अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य’ इति पद्ये कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालंकारः" इति कुवलयानन्दकार आह। तदत्यन्तमसंगतम्। अत्र कथमन्यस्य दशामन्यो नेतुं शक्य इति वसन्तमुक्तवनदशां निःश्रीकत्वलक्षणामनायीति हि पर्यवसन्नोऽर्थः। तत्र निःश्रीकत्वरूपकार्यद्वारा कारणस्य राजकर्तृकत्यागकर्मत्वस्याभिधानं पर्यायोक्तेर्विषयः। दशयोरेकत्वाध्यवसानं तु पदार्थनिदर्शनाया अतिशयोक्तेर्वेत्यन्यदेतत्। एवं च पदार्थनिदर्शनोपबृंहितस्य पर्यायोक्तस्यैवात्र विषयः, न ललितस्य। किं च त्वदुक्तं ललितालंकारलक्षणमपि नात्र संभवति। तच्च "‘प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम्’ प्रस्तुते धर्मिणि वर्णनीयं वाक्यार्थमवर्णयित्वा कस्यचिदप्रस्तुतस्य वाक्यार्थस्य वर्णनं ललितम्" इत्यादिना ग्रन्थेन भवता विवेचितम्। इह च प्रस्तुते धर्मिणि देशविशेषे राजकर्तृकत्यागकर्मत्वरूपस्य वर्ण्यस्यार्थस्यावर्णनेऽप्यप्रस्तुतस्य वसन्तकर्तृकत्यागकर्मत्वस्याप्यवर्णनात्कथं संगच्छेताम्। यदि पुनः ‘अकारि देशः कतमस्त्वयाद्य निरस्तचन्द्रः कठिनाशयेन’ इति पद्यं स्यात्तदा स्यादपि तव मनोरथः। न च तादृशवनदशाया अप्रस्तुताया देशविशेषे वर्णनमस्त्येवेति वाच्यम्।

१ अर्थात् उपात्तया उडुपकरणकसागरतरणेच्छया अनुपात्ताया अपि मतिकरणकवंशवर्णनेच्छाया अर्थबलात् प्रत्येयत्वमिति निदर्शनात्वमेवेत्याशयः।

२ पदार्थनिदर्शनात एव एकत्वाध्यवसानं ग्रन्थकर्तुरभीष्टम्, अग्रे ‘पदार्थनिदर्शनोपबृंहितस्य पर्यायोक्तस्य’ इति सिद्धान्तितत्वात्।

३ अयं भावः—राजरूपेण कर्त्रा स्वाध्युषितो देशविशेषः (कर्मभूतः) परित्यक्तः इति प्रकृतमवर्णयित्वा तत्परिवर्ते ‘वसन्तेन कतमो देशः परित्यक्तः’ इत्यप्रकृतस्य वर्णनमभविष्यत्तर्हि लक्षणसमन्वयोऽभविष्यत्। अत्र तु ‘वसन्तमुक्तस्य वनस्य दशामनायि’ इति उच्यते। अर्थात् अप्रकृतस्यापि त्यागविषयकं वर्णनं नोपात्तम्। ततः कथं लक्षणस्यानुगम इत्याशयः।

दशाशब्देन तद्दशासदृशस्य दशान्तरस्य लक्ष्यत्वेन तस्याप्रस्तुतत्वायोगात्। अन्यथा पदार्थनिदर्शनोच्छेदापत्तेः । एवम्

'रामो विजयते यस्य क्षणात्सामर्षवीक्षणात् ।
दावाग्निदग्धकान्तारलीलां लङ्कापुरी दधौ ॥'

इत्यादौ ललितस्यालंकारान्तरतामभ्युपगच्छतामपि मते न तस्य विषयः, किं तु निदर्शनायाः । अत एव

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥'

इति प्राचां निदर्शनोदाहरणमपि संगच्छते । तत्र तु रश्मिरज्जुनियन्त्रितपार्श्वद्वयसंलग्नसूर्यचन्द्रोऽयं गिरिरित्येवं प्रकृतधर्म्यारूढतया प्रकृतार्थानुपादानाल्ललितमेव स्यात् । प्रकृतव्यवहारस्य लेशतोऽप्यकीर्तने केवलं प्रकरणादिना गम्यत्वे ललितम्, अन्यथा निदर्शनेति चेत् 'क सूर्यप्रभवः' इत्यस्मात्कथं निदर्शना तर्हि निर्वासितेति सर्वमसमञ्जसमेव ।

इति रसगङ्गाधरे ललितालंकारप्रकरणम् ।

**ललितमेवेति** । न तु र(?)संभावितमपीत्यर्थः । **कथं निदर्शना तर्हि निर्वासितेति** । वसन्तकर्तृकत्वात्कर्मत्वस्यावर्णनेऽपि तादृशवनदशारूपस्याप्रस्तुतस्यावर्णनात् । घटकतया तस्यापि वर्णनाच्च । निदर्शनायामुभयोरुपादानं नियतम्, अत्र तु नेति भेदः । अत एव क सूर्य इत्यादौ वाक्यार्थनिदर्शना । वेति दिक् ॥ इति रसगङ्गाधरमर्मप्रकाशे ललितालंकारप्रकरणम् ॥

---

१ देशदशा वनदशा न भवितुमर्हति, द्वयोर्भिन्नत्वात् । ततश्च अत्र दशापदेन वनदशासदृशी दशा ( देशगता ) लक्षणया विवक्षिता । एवं च सादृश्यवशात् वनदशाऽपि बुद्धिविषया भवतीति न सा अप्रस्तुतपदवाच्येत्याशयः ।

२ पदार्थनिदर्शनास्थले-प्रकृते धर्मिणि ( नेत्रयुगले ) प्रकृतलीलायाः परिवर्ते नीलाम्बुजन्मनः अप्रकृतस्य लीला ( व्यवहारः ) वर्ण्यते इति ललितप्रसक्त्या निदर्शनोच्छेद इत्याशयः ।

३ रामो विजयते० अत्र यदि निदर्शना, तर्हि अनायि देशः अत्रापि सा । दशा-लीलापदग्रहणेन द्वयोः साम्यात् । यद्येवंविधेषु न पदार्थनिदर्शना तर्हि तस्या उच्छेद एवेत्याशयः ।

अथ प्रहर्षणम्-

**साक्षात्तदुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थलाभः प्रहर्षणम् ॥**

इदं च सामान्यलक्षणं त्रिविधप्रहर्षणसाधारणम् । तत्राकस्मादभीप्सितार्थलाभ इत्येका विधा, वाञ्छितार्थसिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकतरार्थलाभ इत्यपरा । उपायसिद्ध्यर्थाद्यत्नात्साक्षात्फलस्य लाभ इति तृतीया । अस्यामेवाव्याप्तिनिरासार्थं लक्षणे साक्षादित्युक्तम् । क्रमेणोदाहरणानि—

'तिरस्कृतो रोषवशात्परिष्वजन्प्रियो मृगाक्ष्या शयितः पराङ्मुखः ।
किं मूर्च्छितोऽसाविति कांदिशीकया कयाचिदाचुम्ब्य चिराय सस्वजे ॥'

अत्र यत्नसामान्यशून्यस्यापीष्टलाभः ।

'केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः
सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः ।
जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि
श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममाधीयत ॥'

अत्र भामिन्या रोषनिवारणाय यत्ने क्रियमाणे रोषनिवारणादप्यधिकतरसुखप्रदः कामुकस्य भामिनीकर्तृकः स्वकरकर्मकस्तत्कुचाधिकरणक आसङ्गः । न चात्र तृतीयभेदः शङ्क्यः । व्यजनवीजनसमये कामुकस्य माननिवारणस्यैव मुख्योद्देश्यत्वेन तदुपेयकुचस्पर्शादिफलान्तरस्यानुपस्थितेः । यथा वा—

'लोभाद्वराटिकानां विक्रेतुं तक्रमानिशमटन्त्या ।
लब्धो गोपकिशोर्या मध्येरथ्यं महेन्द्रनीलमणिः ॥'

अत्र प्रहर्षणद्वितीयभेदः स्फुट एव । अननुरूपसंबन्धमादाय विष-

प्राग्वदाह—**अथेति** । तत्र तयोर्मध्ये । यथासंख्येनाह—**विधेति** । मात्रस्यानु-

१ इङ्गितैः आलीः अपास्येत्यन्वयः ।

२ स्वकरः कर्म यस्मिन्, कुचौ अधिकरणं यत्र, ईदृशः आसङ्गः । भामिन्या प्रियकरः स्वकुचयोरासञ्जितः (आहितः) इत्यर्थः ।

३ तक्रार्थमाहिण्डमाना बल्लववल्लभा क, महान् इन्द्रनीलमणिश्च केति ।

मालंकारश्च । तत्र महेन्द्रनीलमणिरित्यतिशयोक्त्यालीढयोर्[1]विषयविषयिणोरुभयोरपि प्रहर्षणेऽनुगुणत्वम् । वाञ्छिताधिकार्थत्वस्य मणि-भगवदुभयसाधारणत्वात् । विषमे तु नीलमणिरूपस्य विषयिमात्रस्य । यतो वराटिकार्थिनो यथा महेन्द्रनीलमणेः कोटिमूल्यस्य संसर्गोऽननुरूपो न तथा भगवत्संसर्गो भवितुं प्रभवति[2] । न चाज्ञानिनां भगवत्संसर्गोऽननुरूप एवेति वाच्यम् । एवं तर्हि तक्रविक्रयकर्तृत्वेनैवाज्ञानित्वलाभे वराटिकालोभरूपहेतूपन्यासस्यानतिप्रयोजनकत्वापत्तेः । यादृशवाञ्छितसिद्ध्यर्थं यत्नः क्रियते तादृशवाञ्छितसिद्धौ तु समालंकार एव ।

'तद्दर्शनोपायविमर्शनार्थं मया तदालीसदनं गतेन ।
तत्रैव सालक्ष्यत पक्ष्मलाक्षी दाक्षायणीमर्चयितुं प्रयाता ॥'

अत्र तद्दर्शनोपायसिद्ध्यर्थं प्रयुक्तात्तत्सखीसदनगमनयत्नात्साक्षादेव तद्दर्शनलाभः । यत्तु—

'चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥'

इति पद्यम् 'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्' इति प्रहर्षणद्वितीयप्रभेदं लक्षयित्वोदाहृतं कुवलयानन्दकृता । तदसत् । वाञ्छितादधिकार्थस्य संसिद्धिरिति लक्षणे संसिद्धिपदेन निष्पत्तिमात्रं न वक्तुं युक्तम् । सत्यामपि निष्पत्तौ वाञ्छितुस्तल्लाभकृतसंतोषा[3]नतिशये प्रहर्षणशब्दयोगार्थासंगत्या तदलंकारत्वायोगात् । किं तु लाभेन कृतः संतोषातिशयः । एवं च प्रकृते चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकजलकरणकविश्वपूरणेन हर्षाधिक्याभावात्प्रहर्षणं कथंकारं पदमाधत्ताम् । वाञ्छिता-

गुणत्वम् । विमर्शनं विचारः सिद्धिर्वा । वाञ्छितादिति । यत इत्यादि । पदं

१ इन्द्रनीलमणिपदेन विषयिणः इन्द्रनीलमणेः, आरोपविषयस्य भगवतः श्रीकृष्णस्य चोभयोरपि बोधोऽनुगुणः, उभयोरपि वाञ्छितार्थाधिकत्वादित्याशयः ।

२ दीनानामपि भगवत्संसर्गस्यानुरूपत्वादित्यर्थः ।

३ अर्थात् अधिकलाभेन वाञ्छितुः संतोषोऽप्यधिकः स्यात्तदेव द्वितीयं प्रहर्षणम् । अत्र तु चातकस्य न कश्चिदधिकः संतोष उपलभ्यते, तस्य त्रिचतुरकणमात्रार्थित्वादित्याशयः ।

ऽधिकप्रदत्वेन दातुरुत्कर्षो भवंस्तु न वार्यते। अत एव हन्त हन्तेत्यादिनार्थान्तरन्यासेन स एव पोष्यते। लोभाद्वराटिकानामित्यस्मदीये तूदाहरणे वाञ्छितुर्वाञ्छितार्थादधिकवस्तुलाभेन संतोषाधिक्यात्तदुक्तम्।

इति रसगङ्गाधरे प्रहर्षणप्रकरणम्।

अथ विषादनम्—

**अभीष्टार्थविरुद्धलाभो विषादनम्॥**

अस्य चाभीष्टार्थलाभार्थं कारणप्रयोगो यत्र न कृतः केवलमिच्छैव कृता जातश्च विरुद्धार्थलाभः सः, यत्र चेष्टार्थं प्रयुक्तेऽपि कारणे तस्मान्न विरुद्धार्थलाभः, अपि तु स्वकारणवशात्स च विविक्तो विषयः[1]। यत्र त्विष्टार्थं प्रयुक्तात्कारणादेव विरुद्धार्थलाभस्तत्र तादृशकारण—विरुद्धार्थयोरुत्पादकोत्पाद्यभावलक्षणसंसर्गस्याननुरूपत्वाद्विषमम्, इष्यमाणविरुद्धार्थलाभसत्त्वाच्च विषादनमिति संकीर्णतैव। एवं चास्य विषमभेदैर्गतार्थतेति नाशङ्कनीयम्, विषमरहितस्याप्येतद्विषयस्य दर्शयिष्यमाणत्वात्। यथा—

'स्वस्व्यप्रतिमग्नमानसतया मत्तो[2] निवृत्ते जने
चञ्चूकोटिनिराकृतार्गल इतो यास्याम्यहं पञ्जरात्[3]।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः॥'

अत्र हि विषमप्रभेदस्य नास्ति विषयः, इष्टार्थं कारणप्रयोगाभावात्।

---

स्थानम्। चिन्त्यमिदम्। चातकवृत्तान्तस्याप्रस्तुतत्वात्तद्व्यङ्ग्यदातृयाचकवृत्तान्ते पर्यवसानेन संतोषातिशयस्य दुर्वारत्वात्॥ इति रसगङ्गाधरमर्मप्रकाशे प्रहर्षणप्रकरणम्॥

प्राग्वदाह—**अथेति**। अस्य चेतस्य विषय इत्यत्रान्वयः। वारणकरो गजशुण्डादण्डः। एकस्य विषादनस्य॥ इति रसगङ्गाधरमर्मप्रकाशे विषादनप्रकरणम्॥

---

१ इष्टार्थं प्रयुक्तात्कारणान्न विरुद्धार्थलाभः, अपि तु विरुद्धार्थलाभोपयुक्तकारणादेव, तत्र न विषादनमित्यर्थः।

२ मत्सकाशात्।

३ निराकृतार्गलो यास्यामि इति विचार एव कृतः, निस्सरणार्थं यत्नप्रयोगस्तु न कृतः, अत एव न विषमम्। किन्तु अभीष्टार्थविरुद्धलाभ इति विषादनमेवेत्याशयः।

इष्टार्थप्रयुक्तकारणेन सह विरुद्धार्थस्योत्पाद्योत्पादकभावलक्षणसंसर्गस्याननुरूपत्वं हि तच्छरीरम् । तस्माद्विषादनमेवाप्रस्तुतप्रशंसाघटकतयावस्थितम्[1] ।

'चेलाञ्चलेनाननशीतरश्मिं संवृण्वतीनां हरिदृश्वरीणाम्[2] ।
गोपाङ्गनानां स्मरजातकम्पादकाण्डसंपातमियाय नीवी ॥'

अत्रेष्टस्याननगोपनस्य विरुद्धोऽर्थो नीविस्खलनम्, कारणीभूतत्रपासंधानपरिपन्थित्वात् । तच्च सात्त्विककम्परूपात्स्वकारणादेवोत्पन्नम्, न तु गोपनानुकूलयत्नात् । नापीष्टसाधनत्वेन प्रयुक्तात्कारणादिष्टानुत्पत्तिरत्रास्ति । चेलाञ्चलावरणेनाननगोपनरूपस्येष्टस्योत्पत्तेः । अतो विषादनमेवात्र, न विषमम् ।

अत्रेदं बोध्यम्—इष्टसाधनत्वेन निश्चितादनिष्टोत्पत्तिरिति यो विषमस्य भेदः प्राक्प्रत्यपादि सोऽनेन विषादनेन ग्रस्तत्वादस्यैव[3] प्रभेदो भवितुमीष्टे, न तु विषमस्येति कश्चिद्यदि ब्रूयात्स प्रष्टव्यः—न विषमस्येति यदुक्तं तत्कस्य हेतोः ? विषादनेनेव विषमेणापि कार्यकारणसंसर्गाननुरूपतालक्षणेन ग्रस्तत्वात् । न चानैकस्यान्यापवादकत्वं युक्तम् । द्वयोरपि सावकाशत्वात्, भिन्नविषयत्वाच्च । विरुद्धलाभांशो विषादनस्य, विरुद्धलाभेष्टार्थप्रयुक्तकारणयोः संसर्गाननुरूपतांशश्च विषमस्य विषय इत्यवोचाम । तस्मात्तत्र किंचिदंशे विषमम्, किंचिदंशे विषादनमित्युभयोरपि समावेशो बोध्यः ।

इति रसगङ्गाधरे विषादनप्रकरणम् ।

अथोल्लासः—

**अन्यदीयगुणदोषप्रयुक्तमन्यस्य गुणदोषयोराधानमुल्लासः ॥**

तत्र गुणेन गुणस्य, दोषस्य वा । दोषेण गुणस्य, दोषस्य वेति चतुर्धा । आधानं च तद्वत्तावुद्धिः । क्रमेणोदाहरणानि—

प्रासवदाह—**अथेति ।**

१ अप्रकृतेन शुकवृत्तान्तेन प्रकृतस्य नवाशपुरुषस्य वृत्तान्तो बुबोधयिषितः अत एव अप्रस्तुतप्रशंसाया विषादनमिदं घटकम् (अवयवभूतम्) ।

२ हरेर्दर्शनकर्त्रीणाम् । वन्नन्तात् स्त्रियां ङीप् ।

३ तत्र 'अभीष्टार्थविरुद्धलाभ'रूपविषादनलक्षणमुपलभ्यते । अतोऽनेन ग्रस्तत्वं ततश्च विषादनस्य स प्रभेद इत्यर्थः ।

'अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि विरहशस्त्रक्षतहृदाम्।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरा-
त्पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम्॥'

अत्र लहरीणां पावनत्वातिशयेन पवमानस्य पावनत्वगुणान्तरं वर्णितम्।

'विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः।
अयं तु न्यक्कारो जननि मनुजस्य श्रवणयो-
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः॥'

अत्र श्रीभागीरथीरमणीयत्वगुणेन तद्रूपशब्दविमुखयोर्नयनयोः श्रवणयोश्च नैष्फल्यधिक्काररूपौ दोषौ। यथा वा—

'हिंसाप्रधानैः खलु यातुधानैर्याऽनीयताऽपावनतां सदैव।
रामाङ्घ्रियोगादथ सापि वन्या विन्ध्यस्य धन्याऽऽस्त मुनेः सतीव॥'

अत्र दोषेण दोषः पूर्वार्धे, द्वितीयार्धे तु गुणेन गुण इति विशेषः। यथा वा—

'भूषितानि हरेर्भक्तैर्दूषितानि पराङ्मुखैः।
स्वकुलं नगरं देशो द्वीपं सर्वा च मेदिनी॥'

अत्रोत्तरोत्तरव्यापकतया तथेति विशेषः।

व्यतिकरः संबन्धः। पवमानो वायुः। न्यक्कारो धिक्कारः। वन्या वनसमूहः। मुनेरिति। गौतमस्याहल्येवेत्यर्थः।

१ पुष्पाणां सौरभ्यं हरति यः स एव क्षणादेव विरहरूपेण शस्त्रेण आहतहृदयानां वियोगिनां प्राणानपि हरति, सोऽपि वायुस्त्वल्लहरीणां संबन्धात्त्रिभुवनं पुनातीत्यर्थः।

२ तस्याः भागीरथ्याः रूपे शब्दे च विमुखयोः।

३ या विन्ध्यस्य वन्या (वनसमूहः) यातुधानैः सदैव अपावनताम् अनीयत सापि (वन्या) मुनेः सतीव (अहल्येव) रामचरणसंयोगात् धन्या अस्ति अभवदित्याशयः।

४ कुलात् नगरं नगराद्देश इत्येवमुत्तरोत्तरव्यापकतया तथा अर्थात् हरिभक्तानां गुणैः भूषणरूपगुणाधानम्, पराङ्मुखानां दोषेण च दोषाधानमित्याशयः।

'श्वपाकानां व्रातैरमितविचिकित्साविचलितै-
र्विमुक्तानामेकं किल सदनमेनःपरिषदाम्[1] ।
मुदा मामुद्धर्तुं जननि घटयन्त्याः परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥'

अत्र वक्तृगतपापरूपदोषप्रयुक्तस्तदुद्धर्त्र्याः श्रीगङ्गायाः श्लाघ्यत्वं गुणः । यथा वा—

'श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम् ।
अपि श्रावंश्रावं मम तु पुनरेवंविधगुणा-
नृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥'

इहापि प्राग्वदेव[2] । किं तु व्यङ्ग्यः स इति विशेषः । 'काव्यलिङ्गेन गतार्थोऽयम्, नालंकारान्तरत्वभूमिमारोहति' इत्येके । 'लौकिकार्थमयत्वादनलंकार एव' इत्यपरे ।

इति रसगङ्गाधर उल्लासप्रकरणम् ॥

अथावज्ञा—

**तद्विपर्ययोऽवज्ञा ॥**

तस्योल्लासस्य विपर्ययोऽभावः । अन्यस्यान्यदीयगुणदोषप्रयुक्तगुणदोषाऽऽधानाभाव इति पर्यवसितोऽर्थः । यथा—

'निष्णातोऽपि च वेदान्ते वैराग्यं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥'

श्वपाकाश्चण्डालाः । परिकरं कटिबन्धनम् । श्ववृत्तिः सेवा । त्वत् त्वाम् । भूमिं स्थानम् ॥
इति रसगङ्गाधरमर्मप्रकाश उल्लासप्रकरणम् ॥

प्राग्वदाह—**अथेति** ।

१ श्वपाकवृन्दैरपि त्यक्तानाम् एनःपरिषदाम् पापसमष्टीनां सदनम् ।

२ वक्तृगतदोषप्रयुक्तं तदुद्धर्त्र्यां श्लाघ्यत्वगुणाधानम् । श्वपाकानामिति पद्ये 'श्लाघां कर्तुं कथं समर्थः' इति गुणाधानं वाच्यम् । इह तु 'त्वदृते को निरीक्षेत' इत्यनेन 'घोरपातकिष्वपि दयालोस्तव श्लाघा अशक्या' इत्यादिरूपेण व्यङ्ग्यमित्यर्थः ।

अत्र पूर्वार्धे प्रपञ्चानित्यत्वबोधकतारूपवेदान्तशास्त्रगुणप्रयुक्तस्य खले वैराग्यरूपगुणाधानस्य, उत्तरार्धे द्रवत्वरूपजलनिधिगुणप्रयुक्तस्य मैनाके मार्दवरूपगुणाधानस्य च विपर्ययो वर्णितः।

'मध्येगलं विहरतां[1] गरलं निकामं
नागाधिपः शिरसि, भालतले हुताशः।
ध्याता भवज्वलनमध्यगतैस्तथापि
तापं तदैव हरते हर ते तनुश्रीः॥'

अत्र तापकतारूपगरलादिदोषप्रयुक्तस्य भगवन्मूर्तौ क्रूरत्वादिदोषाधानस्याभावः। न चात्रातद्गुणो वक्ष्यमाणोऽलंकार इति वाच्यम्। यतो यमुनाजलस्थराजहंसादेर्यथा यमुनाजलगतश्यामत्वाग्रहणं न तथा भगवन्मूर्तेर्गरलादिगतक्रूरत्वाग्रहणं विवक्षितम्। अपि तु तादृशक्रूरत्वप्रयुक्तस्य क्रूरत्वान्तरस्यानाविष्करणमित्यस्ति विशेषः। 'निष्णातोऽपि–' इत्यादौ तु तद्गुणस्याप्रसक्तिरेव।

'भद्राणि मा कुरु विषादमनादरेण
मात्सर्यमन्दमनसां सहसा खलानाम्।
काव्यारविन्दमकरन्दमधुव्रताना-
मास्येषु यास्यसि सतां विपुलं विलासम्॥'

अत्र पूर्वार्धेऽनादररूपखलदोषप्रयुक्तस्य कविवाण्यां विषादरूपदोषस्य निषिध्यमानत्वादप्रतिष्ठानेनाभावः शाब्दः, वाणीगतरमणीयतारूपगुणप्रयुक्तस्य खले संतोषरूपगुणाधानस्याभावः पुनरार्थ इत्युभयविधाप्यवज्ञा। उत्तरार्धे तु सहृदयगुणेन सरसतारूपेण वाण्या उल्लासरूपगुणाधानमित्युल्लास एव। विशेषोक्त्यैव गतार्थत्वादवज्ञा नालंकारान्तरमित्यपि वदन्ति।

इति रसगङ्गाधरेऽवज्ञाप्रकरणम्।

विहरतामित्यस्याग्रेऽपि यथायथमनुषङ्गः। भवेति। संसाराग्निदग्धैरित्यर्थः। पुनस्त्वर्थे॥ इति रसगङ्गाधरमर्मप्रकाशेऽवज्ञाप्रकरणम्।

१ विहरतु, लोट्।

२ दयया आर्द्रीभावस्य।

अथानुज्ञा—

उत्कटगुणविशेषलालसया दोषत्वेन प्रसिद्धस्यापि वस्तुनः प्रार्थनमनुज्ञा ॥

यथा—

'प्रणिपत्य विधे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे ।
जनुरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभाजाम् ॥'

अत्र हरिभक्तिलालसया कृषीवलकुलजन्मनः प्रार्थनम् ।

[ इति रसगङ्गाधरेऽनुज्ञाप्रकरणम् । ]

अथ तिरस्कारः—

एवम्—

दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः ॥

यथा—

'श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा-
मदभ्राम्यद्भृङ्गावलिमधुरसंगीतसुभगाः ।
निमग्नानां[1] यासु द्रविणरसपर्याकुलहृदां
सपर्यासौकर्यं हरिचरणयोरस्तमयते ॥'

अत्र हरिचरणभजनच्युतिभयाद्राज्यसुखस्य तिरस्कारः ।

अमुं च तिरस्कारमलक्षयित्वाऽनुज्ञां लक्षयतः कुवलयानन्दकृतो विस्मरणमेव शरणम् । अन्यथा 'भवद्भवनदेहली—' इति तदुदाहृतपद्ये 'किमित्यमरसंपदः' इत्यंशे तिरस्कारस्य स्फुरणानापत्तेः । ननु कथमनयोरलंकारयोः संभवः? यावता प्रार्थनमिच्छा तिरस्कारश्च द्वेषः । तत्र दोषे इष्टसाधनताज्ञानरूपकारणाभावादिच्छा न युक्ता । गुणे च द्विष्टसाधनता-

प्रागवदाह—**अथेति** । अद्धेति स्फुटावधारणयोः । तत्त्वातिशययोरित्येके ॥ [ इति रसगङ्गाधरमर्मप्रकाशेऽनुज्ञाप्रकरणम् ॥ ]

१ राजलक्ष्मीषु निमग्नानां धनरसप्रचलितचित्तानां जनानाम् ।

२ सामञ्जस्याभावादुपपत्तिरेव नास्तीत्यर्थः ।

ज्ञानाभावाद्द्वेषोऽपि तथा। वैपरीत्यं[1] तु कारणसत्त्वादुचितमिति चेत्, मैवम्, दोषगुणयोर्गुणदोषांशमादायेष्ट-द्विष्टसाधनताज्ञानयोः सत्त्वात्त्वदुक्तं[2] कारणं तावदव्याहतम्। उत्कटद्विष्टाननुबन्धीष्टसाधनताज्ञानस्योपायेच्छां[3] प्रति, उत्कटेष्टाननुबन्धिद्विष्टसाधनताज्ञानस्य चोपायद्वेषं प्रति कारणत्वस्य वाच्यत्वाद्वैपरीत्यमपि नोचितम्। अन्यथा सुखदुःखोभयसाधनेषु चान्द्रायणकलञ्जभक्षणादिषु हरीतकी-दधित्रपुसभक्षणादिषु चेच्छाद्वेषयोरनियम एव स्यात्। अत्र च[4] पुरुषकालप्रवेश आवश्यकः। उत्कटतत्पुरुपीयता-

तथा न युक्तः। शङ्कते—**वैपेति**। **दोषेति**। यत इत्यादिः। यथासंख्यमत्र। दधियुक्तं त्रपुसं 'फूट' इति प्रसिद्धम्। 'दधित्रपुसं प्रत्यक्षो ज्वरः' इति महाभाष्योक्तेः। **अत्र चेति**। उक्तकार्यकारणभावे पुरुषकालयोरित्यर्थः।

१ अर्थात् दोषे अनिष्टसाधनताज्ञानसत्त्वाद् द्वेषः (त्यागः), गुणे च इष्टसाधनताज्ञानसत्त्वात्प्रार्थनमुचितमित्याशयः।

२ अयं भावः—संसारे न किमपि वस्तु सर्वथा दुष्टम्, नापि सर्वथा गुणविशिष्टम् अपि तु सर्वत्र कश्चन गुणः कश्चन दोषश्चावश्यं भवति। तदनुसारं दोषेपि यो गुणांशः, गुणेपि च यो दोषांशस्तमादाय दोषे इष्टसाधनताज्ञानस्य, गुणे च द्विष्ट(अनिष्ट)साधनताज्ञानस्य सत्त्वात् प्रार्थनादेः कारणमव्याहतमित्याशयः।

३ वैपरीत्यम् (दोषस्य तिरस्कारो गुणस्य प्रार्थनमिति) तु उचितमिति सांप्रतं खण्डयति, उत्कटद्विष्टेत्यादि०। उत्कटद्विष्टं पदार्थं न अनुबध्नाति अर्थात् उत्कटद्विष्टे अवर्तमानस्य इष्टसाधनताज्ञानस्य [उपायेच्छां प्रति कारणत्वं वाच्यमित्यादिना अग्रेऽनुषङ्गः]। अयं भावः—चान्द्रायणव्रतात् सुखमपि (परिणामे) भवति, दुःखमपि (अनुष्ठानवेलायाम्)। एवं कलञ्ज(विषास्त्रहतमृगादिमांस)भक्षणात् सुखमपि (आदौ) भवति, दुःखमपि (परिणामे)। एवमेव हरीतकीभक्षणात् सुखमपि (परिणामे), दुःखमपि (आदौ)। दधित्रपुसभक्षणात् सुखमपि (आदौ), दुःखमपि (परिणामे)। किन्तु चान्द्रायण-हरीतक्यादिविषये इच्छैव, कलञ्ज-दधित्रपुसादिविषये द्वेष एव नियतः। यतो हि चान्द्रायणादीनामुपायेच्छां प्रति इष्टसाधनताज्ञानं कारणम्। एवं कलञ्जभक्षणादीनामुपायद्वेषं प्रति अनिष्टसाधनताज्ञानं कारणम्। एवमेव दोषे यो गुणांशस्तमादाय इष्टसाधनताज्ञानसत्त्वात्प्रार्थनम्, गुणे यो दोषांशस्तमादाय द्विष्टसाधनताज्ञानसत्त्वात्तिरस्कार उपपद्यते। अतो वैपरीत्यं नोचितमित्याशयः।

४ ननु समयानुरोधेन इच्छाद्वेषौ भवतः। कस्मिंश्चित्समये इष्टमप्यनिष्टम्, कस्मिंश्चिच्च समये अनिष्टमपीष्टं भवति। एवं ग्राहकवशादपि। कस्यचित्किञ्चिदिष्टम्, कस्यचिच्च तदेवानिष्टम्। अत एव इच्छाद्वेषयोः कारणताविषये कालपुरुषयोर्निवेश आवश्यक इत्याह—'अत्र च पुरुष-कालप्रवेश आवश्यकः' इति।

त्कालिकद्विष्टाननुबन्धितत्पुरुषीयतात्कालिकेच्छाविषयफलसाधनताज्ञानं तत्पुरुषीयोपायेच्छां प्रति कारणम् । एवमुत्कटतत्पुरुषीयतात्कालिकेष्टाननुबन्धितत्पुरुषीयतात्कालिकद्वेषविषयफलसाधनताज्ञानं तत्पुरुषीयोपायद्वेषं प्रति । तेन पुरुषान्तरीयं कालान्तरीयं च द्विष्टमिष्टमादाय न दोषः ।

इदं तु बोध्यम्—फले उत्कटेच्छया उपायेऽप्युत्कटेच्छैव जायते । एवं फले उत्कटद्वेषेणोपायेऽपि द्वेष एव । एवं च सुखदुःखोभयसाधनेषु चान्द्रायणादिषु यदि स्वसामग्रीवशात्प्रथमं सुखे उत्कटेच्छा तदा तत्साधनेषु चान्द्रायणादिष्वपि सैव । अथ स्वसामग्रीवशात्प्रथमं दुःखे उत्कटद्वेषस्तदा चान्द्रायणादिषु स एव, उत्कटसामग्र्या बलवत्त्वकल्पनात् । उत्कटत्वं च प्रकृते इच्छाद्वेषगतो विषयिताविशेषः । एकसाधनजन्ये इष्टानिष्टरूपे फलद्वये एककालावच्छेदेनैकत्रोत्कटेच्छा अपरत्रोत्कटद्वेषश्च न संभवति । तथा सति चान्द्रायणादिष्वेकस्मिन्नेव समये इच्छाद्वेषयोर्द्वयोरप्यापत्तेः । एवं च बलवदनिष्टाननुबन्धित्वं बलवदिष्टाननुबन्धित्वं चोपायेच्छाद्वेषयोः कारणतावच्छेदके न देयमेवेत्याहुः ।

अन्ये तु फलेच्छा-फलसाधनताज्ञानयोर्द्वयोरुपायेच्छां प्रति, फलद्वेष-फलासाधनताज्ञानयोरुपायद्वेषं प्रति च कारणत्वम् । उत्कटसामग्र्या बलवत्त्वाच्चेष्टानिष्टोभयसाधने न दोष इत्यपि वदन्ति । एवं चेष्टानिष्टोभय-

---

प्रति कारणमित्यस्यानुषङ्गः ॥ इति रसगङ्गाधरमर्मप्रकाशे तिरस्कारप्रकरणम् ॥

---

१ अयं सर्वस्याशयः—केचन इच्छां प्रति बलवदनिष्टाननुबन्धित्वम् (अर्थात् इष्टसाधकत्वम्), एवं द्वेषं प्रति बलवदिष्टाननुबन्धित्वम् (अनिष्टसाधकत्वम्) कारणमाहुः । इदं न घटते । चान्द्रायणादिषु सुखजनकतया अनिष्टाननुबन्धित्वज्ञानस्य, दुष्करसाधनतया इष्टाननुबन्धित्वज्ञानस्य च सत्त्वादेककालावच्छेदेन इच्छाद्वेषयोर्द्वयोरपि संभवः स्यात् । न च भवति । तस्मात् बलवदनिष्टाननुबन्धित्वादि न कारणतावच्छेदकम् । किन्तु सामग्र्या उत्कटत्वम् इच्छां द्वेषं प्रति च कारणम् । यदि सुखरूपे फले उत्कटेच्छा तदा तदुपायेषु चान्द्रायणादिषु उत्कटेच्छा । यदि च दुःखरूपे फले उत्कटद्वेषस्तदा तदुपायेषु चान्द्रायणादिष्वपि उत्कटद्वेष इति ।

साधने दोषे गुणे च गुणेन दोषेण च मिश्रिते सहृदयानामिच्छाद्वेषयोरुचितैवोत्पत्तिः, हरितकीकदलेभक्षणयोरिवेति।

[ इति रसगङ्गाधरे तिरस्कारप्रकरणम्। ]

अथ लेशः—

**गुणस्यानिष्टसाधनतया दोषत्वेन, दोषस्येष्टसाधनतया गुणत्वेन च वर्णनं लेशः ॥**

यथा—

'अपि वत गुरुगर्वं मा स्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥'

'नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥'

पूर्वत्र गुणस्य दोषत्वेन वर्णनमात्रम्, उत्तरत्र तु दोषस्य गुणत्वेन वर्णनमर्थान्तरन्यासानुविद्धम्।

'स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥'

अत्र दोषोऽपराधः। तथा चापराधत्वेन गुणानां दोषत्वमुक्तं भवति। न चायमलंकारो व्याजस्तुत्या उभयरूपया गतार्थ इति शङ्क्यम्। मुखप्रतिपादितार्थवैपरीत्येनात्र सर्वत्र पर्यवसानाभावात्। नहि 'अपि बत गुरु-

प्राग्वदाह—**अथेति। उभयेति।** स्तुतिनिन्दारूपयेत्यर्थः। मुखं प्रारम्भः। सा-

१ हरीतक्यां विस्वादतारूपे दोषे सत्यपि कोष्ठशोधनगुणवशादिच्छा। एवं कदलीफले स्वादुतारूपगुणे सत्यपि विष्टम्भकतादोषाद् द्वेष उपपद्यत इत्याशयः।

गर्वं' इत्यत्र कस्तूर्याः स्तुतौ कवेस्तात्पर्यम्, अपि तु जनकप्राणापहारित्वेन निन्दायामेव । अत एवाप्रस्तुतकस्तूरीवृत्तान्ताभिव्यक्ते[1] प्रस्तुतवृत्तान्तेऽपि तस्यामेव विश्रान्तिः । एवं 'नैर्गुण्यमेव साधीयः' इत्यत्र शाख्यन्तराणां निन्दा न विवक्षिता, किं तु मुख्यावस्थानम् । गुणिनः स्वगुणैर्दुःखितस्य वाक्येऽस्मिन्निर्गुणानां निन्दाया अवक्तव्यत्वात्, प्रत्युत स्तुतेरेव वाच्यत्वात् । 'स्खलन्ती स्वर्लोकात्' इति पद्ये भागीरथीस्तुतिप्रकरणपठिते यद्यस्ति भागीरथीस्तुतौ तात्पर्यं तदा व्याजस्तुतिरप्यस्तु । तस्याः सावकाशत्वेनैतद्बाधकत्वायोगात् ।

'रवितुरगदिग्गजेषु स्वर्णाचलजलधिधनदकोषेषु[2] ।
सत्स्वेव राजपुंगव किं दातास्मीति गर्वमावहसि ॥'

अत्र पर्यन्ते प्रतीयमानस्य रवितुरगादिपरिसंख्यानपदार्थातिरिक्तसकलवस्तुदानरूपस्य गुणस्य दोषत्वेनावर्णनात्, तत्त्वेन वर्ण्यमानस्य च रवितुरगाद्यदानस्यागुणत्वाद्गुणदोषयोर्भिन्नविषयत्वेनावस्थानेन लेशस्पर्शलेशरहिता व्याजस्तुतिरिति स्फुटमेव सावकाशत्वम् । अत एव लेशोऽपि न व्याजस्तुतेर्बाधक इति प्रागुक्तजाह्नवीस्तुतौ द्वयोरपि समावेशः ।

इति रसगङ्गाधरे लेशप्रकरणम् ।

वकाशत्वमेवाह—**रवीति** । अत एव भिन्नविषयत्वादेव ॥ इति रसगङ्गाधरमर्मप्रकाशे लेशप्रकरणम् ॥

१ अप्रस्तुत( कस्तूरी )वृत्तान्ते तु निन्दायां पर्यवसानमस्त्येव । किन्तु प्रस्तुतेऽपि ( यत्र हि स्वगुणेन स्वोपजीव्यस्य हानिर्जायते तत्रापि ) निन्दायामेव पर्यवसानमित्यर्थः ।

२ स्वर्णाचलेन ( सुमेरुणा ) रविः प्रकटित इति रवेः कोषः, जलधिः तुरगस्य ( उच्चैःश्रवसः ), धनदः दिग्गजस्येति स्वर्णाचल-जलधि-धनदाः कोषाः ( उत्पादकाः ) येषाम् ईदृशेषु रवितुरगदिग्गजेषु सत्स्वेव 'अहं दातास्मि' इति गर्वं किं वहसि । स्वर्णाचलादिभिः रवितुरगादयः पदार्था लोकाय वितीर्णा इति पश्यतोऽपि तव गर्वो वृथेति वाच्यार्था निन्दा। रवि-तुरगातिरिक्ताः अन्ये सर्वेऽपि पदार्थास्त्वया लोकाय दत्ताः, स्वर्णाचलादिभिस्तु केवलं रव्यादय एव पदार्था इति राजप्रशंसायां पर्यवसानाद्व्याजस्तुतिः । अत्र लेशस्तदैव स्यात् यदा राजकर्तृकस्य सकलवस्तु( रवितुरगातिरिक्त )वितरणस्य दोषत्वम्, सूर्योच्चैःश्रवःप्रभृतीनामदानरूपदोषस्य गुणत्वं वर्णितं स्यात् । किन्त्वत्र न तथा । अत एव लेशालंकाररहिता शुद्धा व्याजस्तुतिः । ततश्च अन्यत्रान्यत्र लब्धावकाशाया व्याजस्तुतेः लेशसहिते स्खलन्ती० इति पद्ये यदि संभवस्तदा द्वयोः समावेश एव न तु बाध्यबाधकभाव इति सर्वस्याशयः ।

अथ तद्गुणः—

**स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः ॥**

यथा—

'नीतो नासान्तिकं तन्व्या मालत्याः कुसुमोत्करः ।
बन्धूकभावमानिन्ये रागेणाधरवर्तिना ॥'

यथा वा—

'अधरेण समागमाद्रदानामरुणिम्ना पिहितोऽपि शुद्धभावः ।
हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः[1] ॥'

अत्राद्ये मालतीकुसुमोत्करस्याधररागरक्ततया बन्धूकभावोपपत्तेस्तद्गुणः । द्वितीयेऽपि पूर्वार्धे स्पष्ट एव तद्गुणः । परं तूत्तरार्धगतेन प्रतिप्रसवतुल्येन हासेनापोह्यमानत्वाद्भङ्गुरः । यदि तु हासेनाधरसितीकरणद्वारा[2] तदरुणिम्नो बाधस्तदा तत्राप्यपरस्तद्गुणः । इमं केचित्पूर्वरूपमामनन्ति । यद्यप्युल्लासेऽप्यन्यदीयगुणेनान्यस्य गुणाधानमस्ति, तथापि तत्रान्यदीयगुणप्रयुक्तं[3] गुणान्तरं चूर्णादिक्षारताप्रयुक्तं हरिद्रादेः शोणत्वमिवाधीयते । प्रकृते तु जपाकुसुमलौहित्यं स्फटिक इवान्यदीयगुण एवान्यत्रेति ततोऽस्य भेदः ।

इति रसगङ्गाधरे तद्गुणप्रकरणम् ।

प्राग्वदाह—**अथेति** । पूर्वरूपं तदाख्यम् ॥ इति रसगङ्गाधरमर्मप्रकाशे तद्गुणप्रकरणम् ॥

१ जाता पक्षपुष्टिः ( उपोद्बलनम् ) यस्य सः ।

२ यावत्कालम् अरुणिमजनकस्य अधरस्य श्वैत्यं न भवेत्तावत् रदानां शुद्धभावो न संभवी । अत एव अधरस्यापि श्वैत्यं जनयित्वा हासेन रदानां श्वैत्यमुत्पादितम् । ततश्चात्रापि अधरेण ( अरुणीभूतैर्दन्तैश्च ) स्वगुणं त्यक्त्वा हासस्य श्वैत्यगुणो गृहीत इति तद्गुण एवेत्याशयः ।

३ उल्लासे अन्यदीयगुणसंबन्धेन गुणान्तरस्याधानम्, यथा क्षारसंबन्धेन हरिद्रायामारुण्यम् । तद्गुणे तु पूर्ववस्तुनो गुण एव वस्त्वन्तरे संक्रामति यथा जपालौहित्यं स्फटिके । इति पण्डितराजाशयः । उल्लासावज्ञालंकारयोर्मध्ये गुणशब्दो दोषप्रतिपक्षवाची । तद्गुणातद्गुणयोस्तु गुणशब्दो रूपरसगन्धादिगुणवाचीति अप्पयदीक्षितादिभिरपरोऽपि द्वयोर्भेदो दर्शितः ।

अथातद्गुणः—

तद्विपर्ययोऽतद्गुणः ॥

यथा—

'कुचाभ्यामालीढं सहजकठिनाभ्यामपि रमे
न काठिन्यं धत्ते तव हृदयमत्यन्तमृदुलम् ।
मृगाङ्कानामन्तर्जननि निवसन्ती खलु चिरं
न कस्तूरी दूरीभवति निजसौरभ्यविभवात् ॥'

अत्र पूर्वार्धे परगुणाग्रहणं शाब्दम्, स्वगुणत्यागाभावस्त्वार्थः । उत्तरार्धगते दृष्टान्ते तु स्वगुणत्यागाभावः शाब्दः, परगुणाग्रहणं[1] त्वार्थम् । न चायमवज्ञाया नातिरिच्यते । उल्लासविपर्ययो ह्यवज्ञा । तद्गुणविपर्ययश्चातद्गुण इति प्रतियोगिभेदादेव भेदस्य सिद्धेः । 'अत्र गुणाग्राहकापेक्षया[2] संनिहितस्य गुणवत उत्कृष्टत्व-समत्वाभ्यां द्वैविध्यम्' इति सर्वस्वकारः । तस्यायमाशयः—अपकृष्टसंबन्धिगुणाग्रहणस्य साहजिकत्वेन वैचित्र्यानाधायकत्वादनलंकारतैवेत्यपकृष्टत्वेन तृतीयविधा तु न संभवतीति । अन्ये तु—'अवान्तरचमत्कारविशेषस्याभावाद्[3] द्वैविध्यमपि न' इति वदन्ति । अन्ये तु—'सति गुणग्रहणहेतावुत्कृष्टगुणवस्तुसंनिधाने तद्गुणग्रहणरूपकार्याभावात्मकोऽयमतद्गुणो विशेषोक्तेरवान्तरभेदः, न त्वलंकारान्तरम् । कार्यकारणभावो नात्र विवक्षितः । किं तु संनिधानेऽपि तद्गुण-

प्राग्वदाह—**अथेति** । उक्तस्वरूपात्स्वरूपान्तरमाह—**सतीति** । शङ्कते—**कार्येति** ।

१ अङ्कानां सौरभ्याभावस्य गुणस्य अग्रहणमित्यर्थः ।

२ येन (वस्तुना) परकीयगुणो न गृहीतः तदपेक्षया यस्य गुणो न गृहीतस्तस्य उत्कृष्टत्व-समत्वभेदेन अतद्गुणेऽपि भेदद्वयमित्याशयः ।

३ उत्कृष्टत्व-समत्वकृतः अवान्तरचमत्कारविशेषो नोपलभ्यत इत्याशयः ।

ग्रहणाभाव इत्येतावन्मात्रम् । अतो विशेषोक्तेरतद्गुणो भिन्न इति तु न युक्तम् । संनिधानेऽपीत्यपिना विरोधोऽपि विवक्षित इति गम्यते । अन्यथा जीवातोरभावादलंकारतैव न स्यात् । स च कार्यकारणभावाविवक्षणे न भवतीति कथमुच्यते न विवक्षित इति' इत्यप्याहुः[1] ।

इति रसगङ्गाधरेऽतद्गुणप्रकरणम् ।

अथ मीलितम्—

**स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याद्भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम्[2] ॥**

संग्रहश्च—

'भेदाग्रहेण लिङ्गानां लिङ्गैः प्रत्यक्षवस्तुनः ।
अप्रकाशो ह्यनध्यक्षवस्तुनस्तन्निमीलितम् ॥'

सामान्यवारणाय अनध्यक्षेति । तत्राध्यक्षस्यैव[3] वस्त्वन्तरस्याग्रहणम् । तद्गुणे वस्त्वन्तरगुणानां भिन्नत्वेनाग्रहणेऽपि वस्त्वन्तरस्य ग्रहणमस्त्येवेति न तत्र प्रसङ्गः । उदाहरणम्—

सर्वालस्य मत इत्यादिः । स च विरोधश्च ॥ इति रसगङ्गाधरमर्मप्रकाशेऽतद्गुणप्रकरणम् ॥

नागेशस्तु—अर्थेति । लिङ्गानामन्यदीयलिङ्गानाम् । इति रसगङ्गाधरमर्मप्रकाशे मीलितप्रकरणम् ॥

१ अतद्गुणे कार्यकारणभावो न विवक्षितः, किन्तु संनिहितस्य गुणग्रहणाभावः । अतः कार्यकारणभावराहित्ये विशेषोक्तौ नास्यान्तर्भावः, अपि तु अतद्गुणः पृथक् इति पूर्वपक्षी । अपिना बोध्यो विरोधः कार्यकारणभावस्वीकारे एव (उत्कृष्टगुणस्य वस्तुनः संनिधानं कारणमस्ति तथापि गुणग्रहणरूपं कार्यं न जातम्) संपद्यते, नान्यथेति 'अपरे'षां समाधानम् ।

२ स्फुटमुपलभ्यमानस्य वस्तुनो लिङ्गेषु (अनुमापकचिह्नेषु) अस्फुटवस्तुनो लिङ्गानि साम्यवशान्निलीनानीव, अतस्तानि लिङ्गानि स्वकारणं नानुमापयन्ति । यथा अप्रत्यक्षस्य सुरतस्य सूचकानि स्वेदश्वासादीनि लिङ्गानि प्रत्यक्षस्य जलकुम्भानयनश्रमस्य लिङ्गेषु (स्वेदादिषु) मिलितानि, अतः सुरतलिङ्गानि स्वेदादीनि स्वकारणं सुरतं नानुमापयन्तीत्याशयः

३ मीलिते अप्रत्यक्षवस्तुनो लिङ्गैर्न ग्रहणम्, सामान्ये तु (बलवत्सजातीयमिश्रणेन) प्रत्यक्षस्यापि वस्तुनो न ग्रहणमिति भेदः ।

'जलकुम्भमुम्भितरसं[1] सपदि सरस्याः समानयन्त्यास्ते ।
तटकुञ्जगूढसुरतं भगवानेको मनोभवो वेद ॥'

अत्र सुरतगमकानां स्वेदकम्पनिःश्वासानां जलकुम्भानयनत्वराजनितैस्तैर्भेदस्याग्रहात्सुरतस्याप्रकाशः । यथा वा—

'सरसिरुहोदरसुरभावधरितबिम्बाधरे[2] मृगाक्षि तव ।
वद वदने मणिरदने ताम्बूलं केन लक्षयेम वयम् ॥'

अत्र प्रियेण ताम्बूलं कुतो न गृह्णासीत्युक्ते एतावन्तं समयं ताम्बूलानि भुक्त्वैव समागतास्मीत्युक्तवतीं प्रति तस्येयमुक्तिः । पूर्वोदाहरणे प्रत्यक्षवस्तुलिङ्गान्यागन्तुकानि[3], अत्र तु साहजिकानीति विशेषः ।

इति रसगङ्गाधरे मीलितालंकारप्रकरणम् ।

---

अथ सामान्यम्—

**प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाग्रहणं सामान्यम् ॥**

मीलिते तु निगूह्यमानवस्तु न प्रत्यक्षविषय इति न तत्रातिव्याप्तिः ।

उदाहरणम्—

'यस्मिन्हिमानीनिकरावदाते चन्द्रांशुकैर्वल्यमिव[4] प्रयाते ।
पुच्छाश्रयाभ्यां विकला इवाद्रौ चरन्ति राकासु चिरं चमर्यः ॥'

---

प्रागवदाह—**अथेति** । निलयनं गोपनम् । तासां निलयनं च विविक्तस्थम-

---

१ पूरितजलमित्यर्थः ।

२ अधरितबिम्बः ( अल्पगुणः ) अधरो यस्यास्तादृशे ( वदने ) ।

३ पूर्वत्र कुम्भानयनकाले श्वासादीनि जातानि, अत्र तु अधररागः स्वाभाविक एवेत्याशयः ।

४ चन्द्रांशुभिः सह अभेदभावं प्रयाते यस्मिन् पर्वते ( हिमालये ) पुच्छेन आश्रयेण ( आधारेण पर्वतेन ) च रहिता इव चरन्ति । हिमाचल-चमरीपुच्छे प्रत्यक्षभूते तथापि बलवता सजातीयेन चन्द्रिकारूपेण ते स्वान्तर्गृहीते इति चन्द्रिकाभिन्नत्वेन तयोरग्रहणमित्यर्थः । सामान्यमुत्प्रेक्षाया अङ्गमिति द्वयोरङ्गाङ्गिभाव इत्यर्थः ।

अत्र चन्द्रिकान्तः पृथक्त्वेन हिमाचल-चमरीपुच्छयोरदर्शनादुत्प्रेक्षोत्पत्तिरिति तस्यां सामान्यं गुणः।

केचित्तु--"प्रागुक्तलक्षणे 'भिन्नत्वेनाग्रहणं' इत्यपहाय 'भिन्नजातीयत्वेनाग्रहणं' इति वक्तव्यम्। तेन व्यक्तिभेदग्रहेऽपि सामान्यमेवालंकारः। यथा--

'स्तबकभरैर्ललिताभिश्चलिताभिर्मारुतैर्नृप लताभिः।
वृतमुपवनमेवासीदरिमहिलानां महावनं भवतः॥'

अत्र महावनमिति महावनकार्यस्य निलयनस्य संपादनात्। तच्च तासां प्रत्यक्षेण त्वदीयैर्भटैर्लताभिः सह तत्तद्व्यक्तितया[1] भिन्नत्वेन ग्रहेऽपि भिन्नजातीयत्वेनाग्रहणान्निष्पद्यते। पूर्वमते त्वत्रालंकारान्तरमभ्युपेयं स्यात्" इत्याहुः।

ननु भेदाग्रह एव मीलित-सामान्य-तद्गुण-साधारण एकोऽलंकारोऽस्तु। किमलंकारत्रयेण? मीलिते तावत्प्रकृताप्रकृतधर्मिगुणानां भेदाग्रह उपपादित एव। सामान्ये केषांचिद्गुणगुणिभेदाग्रहः, केषांचित्क्वचिदयं[2] क्वचिज्जातिमात्रभेदाग्रहश्च। तद्गुणेऽपि रक्तगुणे[3] रञ्जकगुणभेदाग्रहः। न चावान्तरभेदसत्त्वान्नैकालंकारत्वमुपपद्यत इति वाच्यम्। लुप्तोपमादितः पूर्णोपमादेः पृथगलंकारतापत्तेः[4]। तस्माद्भेदाग्रहस्य त्रयो मीलितादयोऽवान्तरभेदा इति युक्तम्, न तु पृथगलंकारा इति चेत्, उच्यते--एवं तर्ह्यभेदोऽप्येकोऽलंकारः। तदवान्तरभेदा रूपकपरिणामाद्यतिशयोक्तिप्रमुखा इत्यपि शक्यते वक्तुम्। विच्छित्तिभेदस्तु प्रकृतेऽपि तुल्यः।

१ लतासु महिलासु च पृथग्व्यक्तित्वस्य भानं भवति, परम् इमा अपि लता एवेति लताभिन्नजातीयत्वेनाग्रहणमित्यर्थः।

२ अयम् अर्थाद् गुणगुणिभेदाग्रहः। क्वचिच्च व्यक्तिभेदग्रहेऽपि भिन्नजातीयत्वेनाग्रहणं यथा लतासु महिलासु च।

३ यो रञ्जितो भवति तस्य गुणेषु रञ्जनकारिणो गुणानामभेदः। यथा--नीतो नामान्तिकम्॥ अत्र मालत्याः शुक्लगुणेन सह अधरस्य रक्तिमगुणस्याभेदग्रहात् रक्तत्वप्रतिभासनम्।

४ यदा पूर्णा--लुप्तयोरेकालंकारत्वं तदा अवान्तरभेदेन पृथगलंकारत्वं न भवतीति सिध्यति, इत्याशयः।

यत्तु—"मीलितरीत्या भेदाग्रहे प्राप्ते केनचिद्धेतुना भेदज्ञाने सति मीलितप्रतिद्वन्द्वि उन्मीलितम् । सामान्यरीत्या जातिभेदाग्रहे प्राप्ते केनचिद्धेतुना सति वैजात्यग्रहे सामान्यप्रतिद्वन्द्वि विशेषकं चेत्यलंकारद्वयम् । यथा—

'हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥'—"

इति कुवलयानन्दकृदाह । तन्न । अनुमानालंकारेणैव गतार्थत्वादनयोरलंकारान्तरत्वायोगात् । न चात्र प्रत्यक्षसामग्र्या बलवत्त्वेनानुमितेरनुदयान्नानुमानालंकृतिः शक्यनिरूपणेति वाच्यम् । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानस्यैवानुमानालंकारलक्षणवाक्यगतेनानुमितिपदेन ग्रहणात् । अत एव तत्रास्माभिः पक्षान्तरमुक्तम् । प्रकृते च विशेषदर्शनहेतुकस्य प्रत्यक्षस्यैव तथात्वात् । नहि प्रमाणविभाजकानां नैयायिकानामिवालंकारिकाणामपि सरणिः, येन प्रत्यक्षत्वानालिङ्गितामनुमितिं परिभाषेमहि । न चैवंविधे विषये नानुमितिपदप्रयोगोऽभ्यर्हितानामिति वाच्यम् । तथाप्युन्मीलितादिवत्परिभाषाया अनिर्वारणात् । अस्तु वानुमितित्वजातियुक्तैवानुमितिः । तथापि प्रकृते प्रतिबन्धकवशात्तस्या अनुदयेऽपि तत्कारः । गतार्थत्वादिति । चिन्त्यमिदम् । नैयायिकादिसंमतानुमितित्वजात्याक्रान्तस्यैव निबन्धनेऽनुमानालंकारस्वीकारात् । प्रकृते च भेदविशेषस्फूर्तौर्विशेषदर्शनहेतुप्रत्य-

१ 'मग्न'मिति कुवलयानन्दस्थः पाठः ।

२ साध्य-हेत्वोः सहचारज्ञानेन सह पक्षधर्मतायाः ( अयं पक्षस्य पर्वतादेरपि धर्मोऽस्तीति ) ज्ञानाद् जातं यद् वह्निमत्त्वस्य ज्ञानं तदेव अनुमानालंकारलक्षणे अनुमितिपदेन ग्राह्यमित्यर्थः ।

३ अनुमानत्वात् । शीतगुणरूपविशेषदर्शनहेतुकम् ( अर्थात् शीतगुणरूपं विशेषं दृष्ट्वा ) यशसः सकाशात् हिमाद्रेर्यत् अतिरिक्तताज्ञानं ( प्रत्यक्षम् ) तदेवात्र अनुमानपदेन गृह्यते, न तु नैयायिकपरिभाषितमिदमनुमानम् । नैयायिकस्वीकृते एवानुमाने प्रत्यक्षसामग्री प्रतिबन्धिका । अतिरिक्तताप्रत्यक्षरूपे अस्मत्परिभाषिते अनुमाने तु प्रत्यक्षं न प्रतिबन्धकमिति अनुमानेनैव गतार्थत्वमित्याशयः ।

४ 'उन्मीलितम्' इत्यादयः परिभाषाः ( संज्ञाविशेषाः ) यथा क्रियन्ते तथा अनुमानमित्यपि आलंकारिकाणां परिभाषेत्यर्थः । तथा च नात्र नैयायिकानामविकृता अनुसृतिरित्याशयः ।

रणस्याप्रत्यूहत्वेनानुमानत्वमव्याहतम्। नहि सत्यप्यग्नौ मणिमन्त्रादिभिः प्रतिबद्धो दाहो न भवतीति दाहकरणमग्निर्नेति वक्तुं शक्यम्। फलायोगेव्यवच्छेदस्तु न करणतायाः प्रयोजकः अपि तु व्यापार एवेति। एतेन 'विशेषदर्शनस्य कोट्यन्तरभानप्रतिबन्धकत्वेन चक्षुःसंयोगादिरूपस्वसामग्रीवशादेवोत्पन्ने तादृशप्रत्यक्षे हेतुतायां मानाभावात्पारिभाषिक्यप्यत्र नानुमितिः। अतस्तत्करणमनुमानं कथं नाम स्यात्' इति परास्तम्। यदप्युक्तम्—

"तद्गुणरीत्यापि भेदानध्यवसायप्राप्तावुन्मीलितं दृश्यते। यथा—

'नृत्यद्भर्गाट्टहासप्रसरसहचरैस्तावकीनैर्यशोभि-
धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंहक्षितीन्द्र।
नेदृक्चेदेष नाभीकमलपरिमलप्रौढिमासादयिष्य-
द्देवानां नाभविष्यत्कथमपि कमलाकामुकस्य प्रबोधः॥'—" इति।

---

१ अनुमितिकरणमनुमानमिति स्वीक्रियते। अनुमितेरनुदयेऽपि अनुमितेः करणस्य (असाधारणकारणस्य शीतादेः) अक्षतत्वादनुमानं स्यादेवेत्यर्थः।

२ अर्थात् फलेन नित्यसंबद्धता यदा भवति तदैव करणता भवति, एवं च दाहरूपं फलं यत्र न भवति तत्र अग्नेः करणतापि न भवतीति तु न शक्यते वक्तुम्। व्यापार एव (अर्थात् फलजनकव्यापारवत्त्वेव) करणत्वं प्रयोजयति। व्यापारवत्त्वं तु अग्न्यादेरस्त्येवेति 'करण'त्वसिद्धौ न प्रतिबन्धकं किञ्चिदित्यर्थः।

३ अयं भावः—मुखे पद्मापेक्षया चन्द्रोदयेऽप्यमुद्रणरूपं विशेषं चक्षुःसंयोगेन दृष्ट्वा कोट्यन्तरस्य (पद्मस्य) प्रतिबन्धनं भवति। ततश्च तादृशचक्षुःसंयोगादिरूपप्रत्यक्षसामग्र्यैव मुखत्वस्य प्रत्यक्षं जातम्, अमुद्रणरूपेण हेतुना नात्र अनुमानं साधितम्। यदा चाऽनुमानं न, तदा तत्करणमनुमानं कथं स्यादिति पूर्वपक्षः। पूर्वविधया फलस्याऽजननेऽपि व्यापारवत्त्वस्य वर्तमानत्वेन करणत्वं यदा अक्षतं तदा अनुमानमपि स्यादेवेति तस्योत्तरम्।

४ अन्यदीयगुणेन स्वगुणाभिभवाद्यत्र द्वयोर्गुणयोर्भेदाऽनिश्चयप्राप्तौ केनचिद्धेतुना भेदज्ञानादुन्मीलितम्। यथा धावल्यगुणेन श्रीकृष्णगतनीलस्फूर्तौ भेदाग्रहे प्राप्ते परिमलेन वैशिष्ट्यज्ञानादुन्मीलितम्।

५ ईदृक् अर्थात् कीर्तिवत् शुक्ल एष कमलापतिः (श्रीकृष्णः) नाभिकमलगतस्य परिमलस्य प्रौढिम् अत्यन्तसमृद्धिं यदि न आसादयिष्यत् तर्हि देवानां मध्ये कमलापतेः परिज्ञानं नाऽभविष्यत्, सर्वदेवेषु सोपि संमिलितोऽभविष्यत् इत्यर्थः। अत्र स्वस्य नीलगुणं त्यक्त्वा संनिहितस्य यशसो धावल्यगुणः श्रीकृष्णेन गृहीत इति तद्गुणेन द्वयोः (यशःश्रीकृष्णयोः) भेदाऽस्फूर्तौ जातायां परिमलेन यशसोऽपेक्षया श्रीकृष्णस्य वैशिष्ट्यज्ञानादुन्मीलितमिति अप्पयदीक्षितमतम्। तद्गुणविधया नीलगुणस्य धावल्यगुणेन सह योऽभेदो जातः (गुणयोर्भेदाऽनिश्चयः तद्गुणः) स परिमलेन कथं निवार्येत (परिमलेन गन्धकृतो विशेषः ज्ञाप्येत न तु वर्णनिवृत्तिः) ततश्च तत्प्रतिद्वन्द्विता अर्थात् तद्गुणप्रतिद्वन्द्विता उन्मीलितस्यात्र कथमिति पण्डितराजकृतं तत्खण्डनम्।

तदपि न । तद्गुणे हि गुणयोर्भेदानध्यवसायः, न तु वस्तुनोरिति निर्विवादम् । अत्र नाभीकमलपरिमलेन भगवत्त्वेन भगवज्ज्ञाने जातेऽपि तदीयगुणे नीलिमनि यशोगुणधावल्यभेदानध्यवसायरूपस्य तद्गुणस्य निर्बाधत्वात्कथंकारं तत्प्रतिद्वन्द्विता उन्मीलितस्योच्यते ? यदि चैकस्मिन्वस्तुनि संनिहितवस्त्वन्तरगुणवद्भेदानध्यवसायस्तद्गुणजीवितमित्युच्यते, तथाप्यत्र तद्गुणो निर्बाधः । भगवतः श्वेतभिन्नत्वेन ज्ञानस्योपायशून्यत्वेनायोगात् । न च नीलत्वव्याप्यभगवत्त्वज्ञानमेवोपायः । प्राङ्नीलोऽपि कारणविशेषमहिम्ना संप्रति श्वेतो जात इति बुद्धेः प्रत्यक्षानुगृहीतायास्तथाप्यनपायात् । अत एव त्वदुपजीव्येनालंकारसर्वस्वकृता उन्मीलितविशेषकयोश्चैव न कृता । अतः प्राचीनैः कृतविभागेष्वलंकारेष्विदंप्रथमोत्प्रेक्षितस्य यावदलंकारस्य शक्योऽन्तर्भावः कर्तुम् । न तावत्पृथगलंकारत्ववाचोयुक्त्या विगलितशृङ्खलत्वमात्मनो नाटयितुं सांप्रतं मर्यादावशंवदैरार्यैरिति ।

यत्तु—

'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥'

---

क्षरूपत्वात्तादृशप्रत्यक्षस्य चक्षुःसंयोगादिरूपस्वसामग्रीवशादेवोत्पत्तेस्तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावाच्च । **वशंवदैरार्यैरिति** । नह्यत्र तद्गुणरीत्येत्यनेन तद्गुणो नास्तीत्युच्यते । किं तु तद्रीत्या देवान्तरेभ्यो विष्णोर्भेदानध्यवसायप्राप्तौ केनापि निमित्तेन भेदाध्यवसाय इत्येतावन्मात्रमिति न कश्चिद्दोषः ॥ इति रसगङ्गाधरमर्मप्रकाशे सामान्यालंकारप्रकरणम् ॥

---

१ अर्थात् गुणयोरभेदः तद्गुणो न, अपि तु एकस्य वस्तुनः गुणवता (वस्तुना) सह अभेदः, (अर्थात् गुणिनोरभेदस्तद्गुणः) । अत्र तु गुणयोरभेदः, न तु गुणिन इति पूर्वपक्षी । भगवान् श्वेतभिन्न इति ज्ञानम् उपायशून्यम् अर्थात् श्वेतभिन्नत्वज्ञानस्य न कश्चिदुपाय इति गुणिनोरभेदस्य तद्गुणत्वस्वीकारेऽपि न तन्निवृत्तिरिति सिद्धान्तः ।

२ यत्र यत्र श्रीकृष्णत्वं तत्र तत्र नीलत्वं ततश्च भगवत्त्वज्ञाने सति नीलत्वमप्यवगम्येतेति शङ्का । नीलोपि कारणविशेषात् श्वेतो जात इति परस्तान्निश्चयादिति समाधानम् ।

३ नवीनतया कल्पिताः सर्वेऽप्यलंकाराः प्राचीनाङ्गीकृतेष्वलंकारेषु अन्तर्भावयितुं शक्या इत्यर्थः ।

४ मर्यादावशंवदैः आर्यैः आत्मनो विशृङ्खलत्वम् नाटयितुं न साम्प्रतं न युज्यते इत्यर्थः ।

५ सामान्यालंकारप्रसङ्गेन तद्विषये काव्यप्रकाशोक्तं खण्डयति–'यत्तु' इत्यादिना ।

इत्यत्र सामान्यमुदाहृत्य काव्यप्रकाशे 'निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते। प्रतीतस्य त्यागायोगात्[1]' इत्युक्तम्। अत्रोत्तरप्रतिपत्त्या तिरस्कृतत्वात्पूर्वप्रतीतेर्न चमत्कारित्वम्, किं तूत्तरप्रतीतेरेवेति तयैव व्यपदेशो न्याय्यः। अन्यथा व्यतिरेके[2]ऽप्युपमापत्तेः। विरोधाभासस्तु पूर्वोत्तरप्रतीतिद्वयात्मक इति भवति चमत्कारी।

इति रसगङ्गाधरे सामान्यालंकारप्रकरणम्।

अथोत्तरालंकारः—

**प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम्॥**

प्रश्नश्च ज्ञीप्सा। भावे नङो विधानात्। सा ज्ञान[3]विषयेच्छा। सा चोत्तरवाक्याद्विषयीभूते ज्ञाने जाते निवर्तते। ननु जिज्ञासा ज्ञानेष्टसाधनताज्ञानसाध्या। जाते हि ज्ञानेष्टसाधन[4]ताज्ञाने तद्रूपस्यैव विषयीभूतज्ञानस्य सिद्धत्वात्कथमुत्पत्तुमर्हतीति। मैवम्। 'किमेकं दैवतं लोके'

---

१ वेत्रत्वग्वर्णसदृशगौरवर्णेन सह चम्पकपुष्पस्य वर्णोऽभिन्नो जातः, इदानीं भृङ्गपातरूपे भेदनिमित्ते सत्यपि अभेदो न निवृत्तः। अपि तु भृङ्गपातजनितः सांप्रतिको भेद एव द्रढयति यत्पूर्वमभेदो जात इति। पूर्वमुत्पन्नस्य (अभेदस्य) इदानीमनुत्पादः कथं स्यात्? अत एव भेदनिमित्ते उपस्थितेपि अभेदो न व्युदस्यते। इति काव्यप्रकाशाशयः। उत्तरकालिक्या भेदप्रतीत्या पूर्वबुद्धिस्तिरोहिता। अत एव पूर्वबुद्धेर्न चमत्कारिता। चमत्कारेण च व्यपदेशः। अत एव भेदप्रतीतिरेव न्याय्येति पण्डितराजाशयः।

२ शैला इवोन्नता इत्यादौ सज्जन-शैलयोरुन्नतत्वेन सादृश्यबुद्धिः प्राक्कालिकी। सज्जनेषु कोमलत्वरूपा भेदबुद्धिस्तु परकालिकी। यदि उत्तरप्रतीत्या पूर्वप्रतीतिर्नापनीयेत तर्हि उपमयैव व्यपदेशः स्यादित्यर्थः। विरोधाभासे तु द्वे अपि प्रतीती स्वीक्रियेते यथा "विनापि तन्वि०" अत्र हाररहितत्व-हारित्वबुद्धी। अतस्तत्र परबुध्या पूर्वबुद्धेस्तिरस्कारावसर एव नेत्याशयः।

३ ज्ञानं विषयो यस्याः ईदृशी इच्छा, जिज्ञासेति यावत्।

४ ज्ञानस्य इष्टसाधनताज्ञानेन (इदं ज्ञानं मे इष्टसाधनमिति) ज्ञानेन साध्या। ज्ञानस्य इष्टसाधनताज्ञाने जाते जिज्ञासाविषयीभूतस्य ज्ञानस्यैव सिद्धिर्जाता, अतः जिज्ञासा (प्रश्नः) एव नोदयेत्। अयं भावः—जिज्ञासा कस्यचन विषयस्य ज्ञातुमिच्छा। अस्यां जिज्ञासायाम् (प्रश्ने) प्रवृत्तिस्तदैव भवेद् यदा अयं जिज्ञास्यो विषयो मे इष्टसाधनमिति ज्ञानं भवेत् (यतो हि इष्टसाधनताज्ञानमेव प्रवृत्तौ प्रयोजकम्)। जिज्ञास्यस्य परिज्ञानोत्तरमेव च 'इदमिष्टसाधनं न वा' इति ज्ञानं भवति। तथा च यदा ज्ञानस्येष्टसाधनताज्ञानं संपन्नं तदा विषयीभूतस्य ज्ञानस्यापि सिद्धिर्जाता इति स्वीकर्तव्यं स्यात्। एवं च प्रश्नविषयीभूतस्य ज्ञानस्य सिद्धौ सत्यां प्रश्न एव प्रतिबद्ध इति शङ्का।

इत्यादिप्रश्नवाक्यादेकदैवतत्वव्याप्यधर्मप्रकारकं ज्ञानमिष्टसाधनमिति ज्ञानजन्या प्रयोक्तृगता तादृशं ज्ञानं मे जायतामितीच्छानुमीयते। सा च प्रष्टुः कुतश्चिद्दैवतत्वप्रकारकोपस्थितावेकसंबन्धिज्ञानाधीनायां दैवतत्वव्याप्यधर्मत्वेन रूपेण तादृशधर्मोपस्थितौ च सत्यां तस्यां गृहीतेन दैवतत्वव्याप्यधर्मप्रकारकज्ञानत्वेन सामान्येन भाविन्युत्तरवाक्यजन्यज्ञाने इष्टसाधनताज्ञानादुत्पद्यते। तस्याश्च तादृशप्रकारकज्ञानत्वेन सामान्यरूपेण

---

प्राग्वदाह—अथेति। तादृशेति। तद्याप्येत्यर्थः। इतीति। व्यञ्जयमित्यस्या-

१ एकदैवतत्वव्याप्यो धर्मः (शिवत्व—विष्णुत्वादिर्विशेषधर्मः) प्रकारो यत्र [अर्थात् एकं दैवतं किम् इति प्रश्नात्मकबोधे एकदैवतत्वव्याप्यो धर्मः (विष्णुत्वादिः) प्रकारः दैवतज्ञानं च विशेष्यम्] ईदृशं ज्ञानं मे इष्टसाधनमिति ज्ञानेन जन्या (अर्थात् एतादृशज्ञानोत्तरम्) तादृशम् (एकदैवतत्वव्याप्यधर्मप्रकारकम्) ज्ञानं मे जायतामितीच्छा 'किमेकं दैवतं लोके' इति प्रश्नवाक्यादनुमीयते [यदीदृशीच्छा नाऽभविष्यत्तर्हि किमित्यमुं प्रश्नमकरिष्यत् ?)। सा चेच्छा (एकदैवतजिज्ञासा) कुतश्चित् अर्थात् कस्माच्चिदाधारात् एकसंबन्धिज्ञानाधीनायाम् [एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति संबन्धिज्ञानात् दैवतत्वप्रकारिकायाम् उपस्थितौ (स्मृतौ) जातायाम् अर्थात् दैवतविषयके ज्ञाने जाते], एवमेव दैवतत्वव्याप्याः शिवत्व-विष्णुत्वादयोऽपि सन्तीति दैवतत्वव्याप्यधर्मत्वेन रूपेण व्याप्यधर्माणामप्युपस्थितौ (स्मृतौ) जातायाम्, एतादृश्या उपस्थितेर्मध्ये परिज्ञातं यत् दैवतत्वव्याप्यधर्मप्रकारकज्ञानत्वेन रूपेण सामान्यज्ञानं (यद्धि उत्तरभूतवाक्यात् 'विष्णुर्दैवतम्' इत्याद्याकारेण जनिष्यते) तस्मिन् इष्टसाधनताबुद्धौ सत्यां सा उत्पद्यत इत्यर्थः। अयमाशयः—एकं दैवतं किम् इति प्रश्ने दैवतत्वव्याप्यस्य एकस्य (प्रधानस्य) धर्मस्य (विष्णुत्वादेः) ज्ञानं मे इष्टसाधनमिति सामान्यतो दैवतत्वव्याप्यधर्मप्रकारकज्ञाने इष्टसाधनताबुद्धौ सत्यामपि जिज्ञासा उत्पत्तुं शक्नोति। अर्थात्—सामान्यतो दैवतत्वव्याप्यैकधर्मप्रकारकज्ञाने इष्टसाधनताबुद्धौ जिज्ञासाया उत्पत्तिः। 'विष्णुर्दैवतम्' इति दैवतत्वव्याप्यविशेषधर्मप्रकारकज्ञाने जाते च सा निवर्तते इति निष्कृष्टार्थः।

२ ननु यद्विषयकः प्रश्नः तद्विषयकमेवोत्तरमुचितम्। अत्र तु दैवतत्वव्याप्यधर्मप्रकारकं सामान्यज्ञानं विषयीकृत्य प्रश्नः। विष्णुर्दैवतमिति विशेषधर्मज्ञानं विषयीकृत्य उत्तरमिति शङ्कायामाह—तस्याश्चेत्यादि। तस्याः (जिज्ञासायाः) विष्णुर्दैवतम् शिवो दैवतम् इत्यादीनि ज्ञानान्येव [येषां ज्ञानानां दैवतत्वव्याप्यधर्मांशे प्रकारता अवच्छिन्ना नास्ति (अर्थात् विष्णुत्वं शिवत्वं वा प्रकार इति धर्मांशे परिमाणं न शक्यते कर्तुं यतो हि दैवतत्वव्याप्यधर्मा अनन्ताः)] तादृश(दैवतत्वव्याप्यधर्म)प्रकारकज्ञानत्वेन सामान्यरूपेण विषयः (विषयभूतानि) भवन्ति। ततश्च तैरेव (विष्णुर्दैवतमित्यादिभिर्ज्ञानैरेव) सा जिज्ञासा प्रतिबध्यते। अयं भावः—एकं दैवतं किम् इति जिज्ञासायां विष्णुर्दैवतम्, शिवो दैवतम्, इत्यादीनि विशेषज्ञानान्यन्तर्भूतानि यतस्तस्याः तान्येव विषयाः। अतः उत्तरवाक्यगतैस्तैरेव तस्याः शान्तिर्जायते। ततश्च एक एव जिज्ञासा-उत्तरयोर्विषयो जात इति पूर्वशङ्कायाः समाधानम्।

विष्णुर्दैवतमित्यादीनि ज्ञानान्येव दैवतत्वव्याप्यधर्मांशे निरवच्छिन्नप्रकारताभाञ्जि विषय इति तैरेवोत्तरवाक्यादुत्पन्नैः सा प्रतिबध्यते । जनकीभूत[1]ज्ञानं विषय एव तस्या न भवतीति न तत्सिद्धिः प्रतिबन्धिकेति न दोषः । तच्चोत्तरं द्विविधम्—उन्नीतप्रश्नम्, निबद्धप्रश्नं च ।

क्रमेणोदाहृणानि—

'त्वमिव पथिकः प्रियो मे विटपिस्तोमेषु गमयति क्लेशान् ।
किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि ॥'

अत्र कस्यचित्पान्थस्य[2] पुरंध्याः कंचित्पथिकान्तरं प्रत्युत्तरेण तत्कर्तृकः कुशलप्रश्नोऽनुमीयते कुशलमपृष्टायाः कुशलोक्तेरयोगात् ।

'किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः ।
कथय तथापि मुदे मम कथयिष्यति याहि पान्थ तव जाया ॥'

अत्राद्यप्रश्नस्य हेतुं चेद्वदसि तदा प्रतिकरिष्यामीति व्यङ्ग्यम् । उत्तरस्य तु—न मया पतिव्रतया हेतुर्वक्तुं परपुरुषं प्रति योग्यः, न च त्वया प्रतिकर्तुं शक्य इति । द्वितीयप्रश्नस्य[3] त्वलं पातिव्रत्येनाविदग्धजनहठमात्रविलसितेन । स्वपरसंतोष एव संसारसार इति । द्वितीयोत्तरस्य[4] तु—या मम दशा सैव तव जायाया अपि दशास्ति । सैव प्रतिक्रियताम् । नहि स्वकीयं सदनं दह्यमानमुपेक्ष्य कश्चित्परसदनाग्निं प्रतिकरोति । अथ यदि परोपकारः स्वकीयां क्षतिमपि सोढ्वा करणीय इत्यस्ति मनीषा, तदा तवैवंविधोपकारे प्रवृत्तस्य जायायाः केनचिदन्येन भवादृशेनोपकारः[5] करणीय इति त्वयैव तस्या ममेव परपुरुषपराङ्मुख्या विरहो दूरीकर्तव्य इति ।

१ 'विषयीभूतज्ञानस्य सिद्धत्वाज्जिज्ञासैव नोत्पद्येत' इति शङ्काया निष्कृष्टमुत्तरमाह—जनकीभूतज्ञानमित्यादि० । जिज्ञासाया जनकीभूतं ज्ञानम् (इष्टसाधनताज्ञानम्) तस्याः (जिज्ञासायाः) विषय एव न, अपि तु विष्णुर्दैवतमित्यादीनि ज्ञानानि तस्या विषयः । अत एव तेषां ज्ञानानां सिद्धिरेव तस्याः प्रतिबन्धिकेत्यर्थः ।

२ प्रवासिनः कस्यचित् साध्व्याः स्त्रिया इत्यर्थः ।

३ कथय तथापि मुदे ममेत्यस्य ।

४ याहि, तव जाया कथयिष्यतीत्यस्य ।

५ त्वत्सदृशोऽन्यः पान्थस्तव जायायाः संतोषं करिष्यतीत्यर्थः ।

उन्नीतप्रश्ने सकृदुत्तरस्य चारुत्वम्, निबद्धप्रश्ने तु प्रश्नोत्तरयोरसकृदुपन्यासे तदिति प्राञ्चः । अयं चोत्तरालंकारो द्विविधोऽपि प्रश्नोत्तरयोरन्यतरस्योभयोश्च साभिप्रायत्वेन निरभिप्रायत्वेन च चतुर्विध इत्यष्टधा ।

'प्रियो हृदयवर्ती मे न मां मुञ्चति जातुचित् ।
उत्तरे नावकाशोऽस्ति दूरतस्ते मनोरथः ॥'

अत्र केनचित्पान्थेन कांचित्साध्वीं प्रति कुत्र तव प्रियोऽस्तीति कृतः प्रश्न उन्नीतः प्रियनैकट्ये तद्भञ्जनेन तदनैकट्ये च स्वाच्छन्द्येनावयोर्विलासो मान्मथो भविष्यतीत्यभिप्रायगर्भितः । अन्यथा 'दूरतस्ते मनोरथः' इत्यस्यासंगत्यापत्तेः । उत्तरं तु स्फुटत्वात्तद्गर्भितम् ।

'सुवर्णस्य कृते तन्वि देशं देशमटाम्यहम् ।
तस्य दुष्प्रापताहेतोश्चिन्ताक्रान्तं मनो मम ॥'

अत्र कस्य हेतोश्चिन्ताक्रान्तं ते मन इति कस्याश्चित्स्फुटार्थं ग्रामीणायाः प्रश्ने कस्यचिन्नागरिकस्योत्तरं 'रूपं यदि ददासि तदा मम चिन्ता गमिष्यती'त्यभिप्रायगर्भम् ।

'रोगस्य ते चिकित्सां निदानमालोच्य सुन्दरि करिष्ये ।
मा हन्त कातरा भू रसक्रियायां नितान्तनिपुणोऽस्मि ॥'

अत्र 'नापृष्टः कस्यचिद्ब्रूयात्' इत्यादिनीत्या वैद्यकर्तृकप्रतिज्ञोन्नीतः प्रश्नो—'वैद्य, रोगस्य मे चिकित्सां करिष्यसि ?' इत्याकारो विदग्धनायिकारूपाया वक्त्र्या वैशिष्ट्यात्संभोगरूपेणाभिप्रायेण गर्भितः । उत्तरमपि तेनैवाभिप्रायेण गर्भितम् । प्रश्नोत्तरयोर्द्वयोरपि निरभिप्रायत्वे 'त्वमिव पथिकः' इति कथितमेवोदाहरणम् । एते ह्युन्नीतप्रश्नभेदाः । एवं निबद्धप्रश्नभेदा अप्युदाहार्याः । 'किमिति कृशासि' इति पद्यमपि चतुर्णां निबद्धप्रश्नभेदानामुदाहरणभावमर्हति वक्तृवैदग्ध्यावैदग्ध्यव्यवस्थयेति ।

अत्राहुः—अलंकारे ह्यस्मिन्प्रश्नोत्तरगतमसकृदुपनिबद्धत्वं जीवातुः । तथैव चमत्कारोदयात् । तेन सकृत्प्रश्नस्य सकृदुत्तरं नालंकारस्य भूमिः ।

न चोन्नीतप्रश्नोत्तरेऽव्याप्तिः, उन्नीतस्य प्रश्नस्यैकत्वादनुपनिबन्धाच्चोत्तरस्याप्येकत्वादिति वाच्यम् । प्रश्नगतमुन्नीतत्वमत्रोत्तरेणाऽऽक्षिप्तत्वं न विवक्षितम् । किं तु प्रश्नोत्तरपरम्परायां प्राचीनोत्तरश्रवणजन्यत्वमात्रम् । यथा—

'श्यामं यज्ञोपवीतं तव किमिति मषीसंगमात्कुत्र जातः
सोऽयं शीतांशुकन्यापयसि कथमभूत्तज्जलं कज्जलाक्तम् ।
व्याकुप्यन्नूरदीनक्षितिरमणरिपुक्षोणिभृत्पक्ष्मलाक्षी-
लक्षाक्षीणाश्रुधारासमुदितसरितां सर्वतः संगमेन ॥'

अत्र 'कुत्र जातः' इत्यादिप्रश्नो 'मषीसंगमात्' इत्याद्युत्तरश्रवणादुद्गत इत्युन्नीत उच्यते । आद्यप्रश्नस्त्वनुन्नीतोऽप्युत्तरोत्थापनार्थं निबद्ध इति । एवं चास्मिन्मते प्राग्दर्शितान्युन्नीतप्रश्नोदाहरणान्यनुदाहरणान्येव । अलंकारस्यास्य द्वैविध्यमपि न प्रश्नस्योन्नीतत्व–निबद्धत्वाभ्याम् । किं तून्नीतत्वानुन्नीतत्वाभ्यां ज्ञेयम् । वस्तुतस्तु—प्रश्नोत्तरयोराकूतगर्भत्वे तावतैव चमत्कारान्नासकृदुपादानापेक्षा । आकूतविरहे त्वसकृदुपादानकृतश्चमत्कारोऽपेक्ष्यते निबद्धप्रश्ने । आक्षिप्तप्रश्ने तु प्रश्नाक्षेपकृतं चमत्कारं यदि मन्यन्ते सहृदयास्तदा सकृदुपादानेऽप्यलंकारत्वमस्तु ।

प्रकारान्तरेणाप्यस्य भेदाः संभवन्ति । पद्यान्तर्वर्तित्वेन पद्यबहिर्वर्तित्वेन तावद्द्वैविध्यम् । तत्राद्यस्याभिन्नवाक्योद्गीर्णत्व–भिन्नवाक्योद्गीर्णत्वाभ्यां

---

नुषङ्गः । एवमग्रेऽपि । कृते तत्प्राप्त्यर्थम् । सुवर्णपदार्थमाह—**रूपमिति** । कातरादीनां प्रश्नगतमिति मत इत्यादि । आकूतमभिप्रायः । इति शिवम् ॥

---

१ अर्थात्प्रश्नस्तत्र उपनिबद्धो न भवति, अपि तून्नेयः । उन्नीतोपि च स एकः इति प्रश्नस्य असकृत्त्वाभावात् उपनिबद्धत्वाभावाच्च नायमलंकारः स्यादिति शङ्का ।

२ उत्तरेण प्रश्नस्यानुमानरूपमुन्नीतत्वं नेष्यते (यथा त्वमिव पथिकः० इत्यत्र) । अपि तु पूर्वप्रश्नोत्तरयोरनन्तरम् उत्तरं श्रुत्वा यो द्वितीयः प्रश्न उत्थितो भवति स उन्नीत उच्यते (यथा श्यामं यज्ञोपवीतम्० ) अत्र । ततश्च बहुषु प्रश्नोत्तरेष्वेव अस्यालंकारस्य प्रवृत्तिरित्याशयः ।

३ नर्मदा ।

४ 'नूरदीन' इत्यकबरसूनोर्जेहांगीरशाहस्य नामान्तरम् ।

५ पक्ष्मलाक्षीणां यल्लक्षं तस्य या अक्षीणा अश्रुधारा ।

पुनर्द्वैविध्यम् । पद्यान्तर्वर्ति–पद्यबहिर्वर्तिनोर्द्वयोरप्युत्तरयोः सकृच्छब्द[1]-श्रुतिपर्याप्तत्वेन शब्दावृत्तिपर्याप्तत्वेन, अनेकेषां प्रश्नानामेकपदनिवेदितोत्तरत्वेन प्रकारान्तरैश्च बहुप्रभेदत्वम् । दिङ्मात्रेणोदाह्रियते—

> किं [2]कुर्वते दरिद्राः कासारव[3]ती धरा मनोज्ञतरा ।
> [4]कोपावनस्त्रिलोक्यां........................[5] ॥

१ एकवारं शब्दश्रुतिरेव पर्याप्ता यत्र ।

२ 'दरिद्राः किं कुर्वते ?' इति प्रश्नः । तस्य पद्यान्तर्वर्ति अभिन्नवाक्योद्गीर्णम् (प्रश्नवाक्येनैवोत्पन्नम्) च उत्तरम्—"-'किम्' (भवदाज्ञप्तं किं कार्यं करोमि ?) इति कुर्वते" अर्थात् किंकरतां कुर्वते इति ।

३ का सारवती ? इति प्रश्नः । कासार(सरः)वतीत्युत्तरम् ।

४ कः अपावनः ? इति प्रश्नः । कोपावनः कोपरक्षक इत्युत्तरम् ।

५ हन्त ! एतावानेवायं ग्रन्थः समुपलभ्यते नागेशटीकाप्येतावतो ग्रन्थस्यैव प्राप्यते ।

---

> दौर्भाग्यादसमस्तोऽपि प्रशस्तोऽयं प्रबन्धराट् ।
> एष खण्डावशेषोपि राकेशो रमयेन्मनः ॥ १ ॥

> रसो यत्र व्यक्तो विलसति विविक्तो गुणगणो
> लभन्तेऽलंकारा अपि च विकलङ्कामिह रुचम् ।
> पटु-प्रौढ-स्फीताक्षरभरपरीता प्रतिपदं
> विमर्शव्यासङ्गाज्जयति रसगङ्गाधरगिरा ॥ २ ॥

> पुरा प्रविश्याऽत्र निजप्रसङ्गादन्ये व्यजृम्भन्त बुधाः कदाचित् ।
> अथाऽनया पण्डितराजशक्त्या स्वसाधि साहित्यमभेद्यदुर्गम् ॥ ३ ॥

> यत्र प्रसङ्गपतितान्यपि मान्यकाव्या-
> न्यालोचनानिकषमाप्य भवन्त्यसन्ति ।
> न ज्ञायते यदिह दोषनिरूपणे तु
> काः काः कवीन्द्रकृतयोऽश्रुतयोऽभविष्यन्[1] ॥ ४ ॥

> प्रागेव जिह्म-जटिलोऽप्यथ मुद्रणादि-
> दोषैरसौ विरलविद्वदुपासितोऽभूत् ।
> अथाऽनया सरलया तु निषेव्यमाणो
> विद्यार्थिनामपि भवेदवबोधगम्यः ॥ ५ ॥

1 नैषधीयचरितादीन्यपि आलोचनया 'असंष्ठुल'तां प्राप्नुवन्ति (पृ. ४५१) । यदि तु दोषप्रकरणमप्यत्र पूर्णमभविष्यत्तर्हि न ज्ञायते काः काः कविकृतयः अश्रुतयः (अशोभनाः) अभविष्यन् ? । इत्याशयः ।

## सरलानिर्मातुः परिचयः।

तैलङ्गपुङ्गवानामाङ्गिरसाऽऽयास्यगौतमेति सत्प्रवरः।
देवर्ष्यवटङ्कवहो वंशो भूपालपूजितो जयति ॥ ६ ॥
तस्मिन्वंशे श्रीमान् श्रीकृष्णः कविकलानिधिर्जातः।
बुधसिंहबुन्दिभर्तुर्निकटाद्योऽनीयताऽम्बरेशेन[1] ॥ ७ ॥
'वाणी'-'भारति'-बिरुदस्तत्तनयो द्वारकानाथः।
माधवसिंहमहीन्द्रादेष कवीन्द्राधिपो ययौ मानम् ॥ ८ ॥
तत्तनयो व्रजपालः प्रतापभूपालमाननीयो यः।
नवसंगीतग्रन्थं विधाय समियाय भूरिसंमानम् ॥ ९ ॥
तत्तनयानां ज्येष्ठो मण्डनमिव मण्डनो[2] बभूव विदाम्।
कवितातोषितनरेन्द्रा भूरिगजेन्द्रान्ददुर्यस्मै ॥ १० ॥
प्रज्ञाचक्षुर्लक्ष्मणभट्टोऽभूत्तत्सुतः सुदक्षतमः।
रामनरेन्द्राद्बुन्दीभर्तुर्योऽविन्दत ग्रामम् ॥ ११ ॥
जनितः श्रीमल्लक्ष्मीनाथसुत-द्वारकानाथैः।
मथुरानाथः सोयं दत्तकपौत्रोऽभवत्तस्य ॥ १२ ॥
येन हि 'जयपुरवैभव'[3]मथ किल 'साहित्यवैभवं' सृजता।
'कवितानिकुञ्ज'महिता नवछन्दोबन्धरीतिराकलिता ॥ १३ ॥
येन 'प्राकृतगाथा[4]सप्तशती' गुम्फिता निलिम्पगिरा।
तट्टीकापि च रचिता, सृजता 'संस्कृतसुबोधिनी'[5]प्रभृतीन् ॥ १४ ॥
यस्य कलानाथो ह्यथ कमलानाथेति तनयौ द्वौ।
यस्य 'ध्वन्यालोके' लोचनटीका 'कनीनिका' भाति ॥ १५ ॥
जयपुरसंस्कृतविद्यालये महाध्यापकत्वमावहता।
सुकविशिरोमणिपदकं दधता सन्मञ्जुनाथपरनाम्ना ॥ १६ ॥

---

1 आँबेराधीशेन जयसिंहभूपालेन।

2 श्रीकृष्णभट्टमण्डनप्रभृतीनामेषां कवितादिपरिचयस्तु 'साहित्यवैभव'तः प्राप्यः।

3 कवितानिकुञ्जस्य तदिदं भागद्वयम्। प्रथमे-जयपुरराजवंश-नगर-उद्यान-नागरिक-महोत्सवादिवर्णनं संस्कृतकवित्तादिछन्दस्सु नवीनरीत्या सचित्रमस्ति। द्वितीये-तैरेव छन्दोभिः ऋतु-नवरस-अन्योक्ति-समीक्षा-नीति-उर्दूप्रभृतिसर्वभाषाच्छन्दो-वर्तमानभारत-संस्कृतवद्धविहारिसप्तशतीप्रभृतयो नानाविषयाः सन्ति। सचित्रमिदं 'निर्णयसागरे' मुद्रितम्। 'मथुरानाथशास्त्री रेसिडेन्सीरोड, जयपुर'तः प्राप्यमिदम्।

4 व्यङ्ग्यसर्वङ्कषाख्यव्याख्यया सहिता संस्कृतगाथासप्तशती 'निर्णयसागर, मुंबई'तः प्राप्या।

5 भागद्वयात्मकं प्रारम्भिकसंस्कृतशिक्षापुस्तकमिदं जयपुरे ग्रन्थकारतः प्राप्यम्।

निगमनिधिनन्दचन्द्र ( १९९४ ) प्रमिते विक्रममहीपतेर्वर्षे ।
रसगङ्गाधरटीका प्रकटीकार्याऽभवत्तेन ॥ १७ ॥
'कादम्बरीचषक'[1] 'लिपिलललन्तिका'[2] 'प्राक्तनार्यगीर्गरिमा' ।
'भारतवैभव' 'निबन्धविद्या' 'कविताकला'दिरचयित्रा ॥ १८ ॥
संपादयता 'संस्कृतरत्नाकर' पत्रमत्र जयनगरे ।
शिक्षोपयोगिनूतन'कथानिकुञ्जा'दिनिर्मात्रा ॥ १९ ॥
मुद्रणदोषैर्दुर्ग्रहमथ मूलं यत्नतः सुपरिशोध्य ।
निजविस्तृतटीकातष्टीका संक्षिप्य कलितेयम् ॥ २० ॥
देवर्ष्युपाह्वभट्टश्रीमथुरानाथशर्मनिर्मितिषु ।
रसगङ्गाधरटीका सरला परिलाल्यतां विबुधैः ॥ २१ ॥

## षष्ठं संस्करणम्

तेन हि बाल्येऽप्यतिमतितनयकलानाथसाहाय्यात् ।
द्व्यधिकद्विसहस्राब्दे ( संव. २००२ ) षष्ठमिदं व्यरचि संस्करणम् ॥ २२ ॥

इति श्रीजयपुरमहाराजाधिराजसंमानित-तैलङ्गभट्टान्ववायसंभूत-मञ्जु-
नाथोपनामक-कविशिरोमणिसाहित्यवारिधिदेवर्षि-भट्टश्रीमथुरा-
नाथशास्त्रिसाहित्याचार्यनिर्मिता रसगङ्गाधरटीका
सरला समाप्तिमगात् ।

1 सिद्धचन्द्रभानुचन्द्रटीकोपरि दत्तमिदं टिप्पणं, कादम्बरीकथासारः, उपोद्घातश्च 'निर्णयसागर'तः प्राप्यः ।

2 वेदभाष्यनिर्मातृसायण-भोजतनयादिसामयिकशिलालेखकाव्यानां सटीक-संग्रहरूपा 'शिला-लेखललन्तिका' सेयं जयपुरसाहित्यशास्त्रिपरीक्षायां पाठ्यत्वेन नियता । 'निर्णयसागर, मुंबई' तः प्राप्या । मूल्यम्, अष्टाणकाः ॥



# रसगङ्गाधर उदाहृतश्लोकानां सूची ।